No. 11.] [Price Rupee One.

THE

# CHOWKHAMBÂ SANSKRIT SERIES

A

COLLECTION OF RARE & EXTRAORDINARY SANSKRIT WORKS.

# मीमांसाश्लोकवार्तिकम्

श्रीमत्कुमारिलभट्टपादविरचितम्

श्रीपार्थसारथिमिश्रप्रणीतया

न्यायरत्नाकराख्यया व्याख्यया

समलङ्कृतम् ।

# THE MÎMÂNSÂ-ŚLOKA-VÂRTIKA

OF

KUMÂRILA BHATTA

WITH THE COMMENTARY CALLED NYÂYARATNÂKARA

BY PÂRTHA SÂRATHI MIŚRA

EDITED BY

RÂMA ŚÂSTRÎ TAILAṄGA,

*Professor, Government Sanskrit-College, Benares.*

FASCICULAS I.

*PUBLISHED AND SOLD BY THE SECRETARY,*

CHOWKHAMBÂ SANSKRIT BOOK-DEPÔT:

BENARES.

AGENT:—OTTO HARRASSOWITZ, LEIPZIG:

PRINTED BY FREEMAN & CO., LTD., AT THE TARA PRINTING WORKS, BENARES

1898.

REGISTERED ACCORDING TO ACT XXV. OF 1867.

श्रीः ।

आनन्दवनविद्योतिसुमनोभिः सुसंस्कृता ।
सुवर्णाऽङ्कितभव्याभशतपत्त्रपरिष्कृता ॥ १ ॥
चौखम्बा-संस्कृतग्रन्थमाला मञ्जुलदर्शना ।
रसिकालिकुलं कुर्यादमन्दामोदमोहितम् ॥ २ ॥

स्तबकः—११

चौखम्बा-संस्कृत-ग्रन्थमाला।

( ग्रन्थसंख्या ३ )

# मीमांसाश्लोकवार्तिकम्

श्रीमत्कुमारिलभट्टपादविरचितम्

निखिलतन्त्राऽपरतन्त्रश्रीमत्पार्थसारथिमिश्रप्रणीतया

**न्यायरत्नाकराख्यया व्याख्यया ऽनुगतम्।**

वाराणसेयराजकीयप्रधानसंस्कृतपाठशालायां

साहित्यशास्त्राध्यापकेन मानवल्ल्युपाह्व-तैलङ्ग-

**रामशास्त्रिणा सपरिष्कारं परिशोधितम्।**

**काश्याम्**

तारा-यन्त्रालये श्री०-बा०-हरिदासगुप्तेन फ्रीमैन कम्पनी लिमिटेड् द्वारा मुद्रयित्वा प्रकाशितम्।

---

सन् १८९८ ईस्वी।

वैक्रमसम्वत् १९५५।

शुभम्।

श्रीः ।

# न्यायरत्नाकराख्यव्याख्यासहितस्य

## श्लोकवार्तिकस्य

# भूमिका ।

इह खलु संपादनीयेषु धर्मोऽर्थकाममोक्षाख्येषु चतुर्षु पुरुषार्थेषु प्रथमो धर्म एवेतरमूलस्तम्भतया समाद्रियते धार्मिकवरैः । सो ऽयं धर्मो वेदप्रतिपाद्य इति वेद एव सर्वस्वं नामास्तिकधुरन्धराणाम् । तस्य च भ्रमप्रमादादिदोषदूषितस्वान्तैरर्वाग्दृष्टिभिर्न याथार्थ्येनार्थो ऽवगन्तुं शक्य इति परमकारुणिको भगवान् ज्ञाननिधिर्महामुनिर्जैमिनि*स्तदर्थविचाराय द्वादशभिरध्यायैर्धर्ममीमांसाशास्त्रं प्रणिनाय । तस्यापि चाल्पाक्षरसूत्ररूपतया दुरूहार्थतामवधार्य विदितधर्मा तत्रभवान् शबरस्वामी तस्य भाष्यं† प्रणीयाऽनुजग्राह तादात्विकान् कुशाग्रबुद्धीन् विपश्चितः । अतिक्रामति च काले, बहुलीभूते च लोके लोकायते मते, दुर्दोषोद्भावनैर्दुर्व्याख्यानैश्च प्रतारयत्सु मन्दप्रज्ञान् जनान् बौद्धेषु, भाष्यस्याऽतिगभीरतया तद्याथार्थ्याऽनवगमादश्रद्दधानेष्विवोपक्तकेष्विव लोकेषु प्रतारकव्याख्यातृवचसि दुर्वादिवचने वा निहितविश्वासेषु, अपहारयत्स्विव वेदार्थरत्नानि, कृशमतीननुजिघृक्षुर्लोकोत्तरप्रतिभाशाली महनीयचरितस्तत्रभवान् कुमारिलभट्टो निखिलवादिदुरुक्तिसमुन्मूलनपुरस्सरं भाष्ये वार्तिकं प्राणैषीत् । यथाह तत्रारम्भे—

---

* अयं च जैमिनिमहामुनिः "परं जैमिनिर्मुख्यत्वात्" (व्या-सू-अ.४पा.३सू.१२) "बादरायणस्यानपेक्षत्वात्" (जै. सू. अ. १ पा. १ सू. ५) इत्यादिव्यासजैमिनिसूत्रेषु परस्परमुभयनामनिर्देशाद् व्याससमानकालिक इति भाति ।

† इदं च भाष्यं शाङ्करभाष्यात् प्राचीनमिति "एक आत्मनः शरीरेभावात्" (व्या-सू-अ.३पा.३सू५३)इति सूत्रभाष्ये "इत एवाकृष्याचार्येण शबरस्वामिना प्रमाणलक्षणे वर्णित"मिति भाष्यकारोक्तेरवधार्यते । आनन्दाश्रममुद्रिताधिकरणरत्नमालापुस्तके २ पृष्ठं द्रष्टव्यम् ।

प्रायेणैव हि मीमांसा लोके लोकायतीकृता ।
तामास्तिकपथे कर्तुमयं यत्नः कृतो मया ॥ इति ।

तदिदं वार्तिकं श्लोकैरेव निर्मित्सुर्भट्टपादः प्रथमाध्यायस्य प्रथमपादं तर्कपादाभिधं तथैव निर्मायाऽग्रे तृतीयाध्यायान्तं भागं श्लोकैर्वाक्यैश्च विस्तरेण व्याख्यायाऽवशिष्टं भागमतिसंक्षेपेण व्याचख्यौ । यन्मूलक एव मन्ये भागत्रयस्य नाम भेदः, प्रथमस्य श्लोकवार्तिकमिति, द्वितीयस्य तन्त्रवार्तिकमिति, तृतीयस्य च टुप्टीकेति*। एतैरेव च नामभिस्तत्तद्भागं व्यपदिशन्ति स्म निबन्धकाराः ।

तत्र प्रथमोऽयं भागः पुरा १८७७ ईशवीयवर्षे काशीविद्यासुधानिधिनामके पत्रे तादात्विकैः काशिकराजकीयसंस्कृतपाठालयाध्यापकैः पण्डितैः शोधयित्वा ऽमुद्यत । परमयं भागः श्लोकरूपतया ऽतिगभीरतया च न व्याख्यानमन्तरेण सुबोध इति सव्याख्यस्यास्य मुद्रणं भवेदतीवोपकारकमिति चिराय विदुषां स्पृहामपरिपूरितां पश्यन् दूयमानमानसः सांप्रतं वर्तमानेशवीय (१८९८) वत्सरारम्भात् प्राचीनदुर्लभग्रन्थावलीं "चौखम्बा-संस्कृतसीरिज्" नाम्नीं संमुद्य प्रकाशयितुं कृतोपक्रमेण श्रीयुत-बाबूहरिदासगुप्तेन तदुचितग्रन्थनिरूपणाय भूयो भूयो ऽभ्यर्थितो न्यरूपयममुं तदनुरूपम् । व्याख्यां चास्य गवेषयन् काशिकाख्यामेकां† मपरां च न्यायरत्नाकराख्यां समुपलभ्याऽन्तिमामेव सांप्रतं मुद्रणयोग्यां निरचैषम् ।

श्लोकवार्तिकस्य प्रणेता किल मीमांसामूर्तिः कुमारिलभट्टः श्रीमच्छङ्कराचार्यसमकालिकः कार्तिकेयाऽवतार इति माधवीयशङ्करदिग्विजये—

इत्यूचिवांसमथ भट्टकुमारिलं त-
मीषद्विकस्वरमुखाम्बुजमाह मौनी ।
श्रुत्यर्थकर्मविमुखान् सुगतान् निहन्तुं
जातं गुहं भुवि भवन्तमहं नु जाने ॥

इत्यादिसंवाददर्शनादवसीयते । शङ्करभगवत्पादाविर्भावसमयश्च १८८९ कलिवर्षेषु गतेषु वैक्रमसम्वत् ८४५ शाके ७१०

---

* एषु च त्रिषु भागेषु द्वितीयो मद्गुरुचरणमहामहोपाध्याय-श्रीदगङ्गाधरशास्त्रिणा संशोध्य बनारस-संस्कृत सीरीज्-नाम्न्यां संस्कृतपुस्तकमालायां मुद्रितः । तदवसनश्च तृतीयो भागो दुर्लभत्वाद्य यावदमुद्रित एवावतिष्ठते । † श्रीसुचरितमिश्रकृताम् ।

( A. D. 788 )* इति स एव चास्य स्थितिकाल इति सिध्यति ।

न्यायरत्नाकरकारश्च मीमांसाशास्त्रपारावारपारदृश्वा सुगृहीत-नामधेयो यज्ञात्मसूनुः† श्रीमान् पार्थसारथिमिश्रः कदा भूमण्डलं मण्डयामासेति विचारे प्रवर्तिते १६३९ ईशवीयवर्षे वर्तमान-निजस्थितिना श्रीमदप्पयदीक्षितेन‡ प्रणीतेषु तत्तद्ग्रन्थेषु तत्र तत्रैतत् ( पार्थसारथि ) कृतग्रन्थसंवाददर्शनात्§ ततो ऽयं पुरातन इति ज्ञा-तम् । अग्रे च गवेषणे क्रियमाणे श्रीमन्माधवाचार्यप्रणीते जैमिनी-यन्यायमालाविस्तरे शास्त्रदीपिकानामदर्शनात्|| माधवाचार्यस्य च १३१३ शके ( 1391 A. D. ) स्थित्यवगमात्¶ ततः ( १३१३ शकात् 1391 A. D. ) प्राचीनो, वार्तिके चानेन व्याख्याकरणाद् वार्तिक-कारसमयादुपरि निर्दिष्टात् (संवत् ८४५ A. D. 788) अर्वाचीनो ऽय-मिति निर्विवादं निर्णेतुं शक्यम् ।

यद्यपि वार्तिककारात् कियदनन्तरं, माधवाचार्याच्च कियत् पूर्वम् एतत्स्थितिरिति तु सांप्रतं यथावन्निर्णेतुं न सुकरं तथापि जीवति ग्रन्थकारे तदुक्तीनां स्वग्रन्थेषु प्रामाण्यविधया निर्देशो तद्ग्रन्थानां व्याख्याने वा पर्याप्ता प्रसिद्धिरादरो वा न सुखोपजनो विशेषतो ऽनाकलितमुद्रणादिकलाकौशले तदात्वे इति तत्पर्याप्तः कालो न्यूनान्न्यूनो ऽपि शतं वत्सरा अवश्यं कल्पनीयः । तथा च भट्टपादसमयात् शतमर्वाचीना वत्सराः संवत् ९४५ ( A. D. 888 ) माध-

---

*विजयनगरसंस्कृतपुस्तकमालायां मत्परिशोधितस्य मितभाषिणीसंवलितसप्तपदार्थीग्रन्थस्य भूमिका द्रष्टव्या ।

† आचार्यमतमाश्रित्य श्रीमद्यज्ञात्मसूनुना ।
पार्थसारथिमिश्रेण प्रयुक्तितिलकः कृतः ॥

इति अध्ययनविधिचर्चाप्रकरणसमाप्तौ न्यायरत्नमालायामेतदुपनिबद्धायां लेखदर्शनाद् यज्ञात्मसूरिसूनुरयमित्यवगम्यते ।

† विजयनगर-संस्कृत-पुस्तकावल्यां मद्भ्रातृचरण-म-म-श्रीगङ्गाधरशास्त्रिप्रणीता सिद्धान्तलेशसंग्रहभूमिका द्रष्टव्या ।

‡ विजयनगर-संस्कृतपुस्तकावल्यां मत्परिशोधिते परिमल-पुस्तके पृ. १७ प. १२ द्रष्टव्या । विधिरसायने ऽपि तत्र तत्र " तदुक्तं तन्त्ररत्ने " इत्यादिलेखो दृश्यते ।

§ आनन्दाश्रम-पुस्तकावलीमुद्रिते जैमिनीयन्यायमालाविस्तरपुस्तके पृ. ४ प. २ द्रष्टव्या ।

|| विजयनगर-संस्कृतपुस्तकावलीमुद्रित-मत्प्रणीत-वेदान्तकल्पतरुभूमिकायां पृ. १२ अन्तिमे पङ्क्तित्रये ऽस्य संक्षेपस्तत्रैव मुद्रिते विवरणप्रमेयसंग्रहे मत्प्रणीतभूमिकायां च विस्तरो द्रष्टव्यः ।

वाचार्यसमयाच्च पराचीनाः शतं वत्सराः शकः १२१३ (A. D. 1291) इत्येतत्कालमध्ये पार्थसारथिमिश्रस्थितिकाल इति सिध्यति। स एव चार्थाद् न्यायरत्नाकरनिर्माणसमयः स्थिरीभवति। एतावत्तु सांप्रतं निरूपयितुं पारयामि, अग्रे ऽपि गवेषयन्नमुं वृत्तान्तं याथातथ्येनोपलप्स्ये चेत् प्रकाशयिष्यामि सप्रमोदमेतद्ग्रन्थपरिसमाप्तावुपसंहारे, अभ्यर्थये च तज्ज्ञान् विपश्चितः कृपया मह्यं तन्निवेदनाय। एतद्ग्रन्थातिरिक्तास्त्रयो ग्रन्थास्तन्त्ररत्न *शास्त्रदीपिका † न्यायरत्नमाला‡ख्या अनेन विचक्षणचूडामणिना निर्मिताः। शास्त्रदीपिकायां तत्र तत्रैतद्ग्रन्थद्वयनामोल्लेखा§त्तस्या एतद्द्वयोत्तरनिर्मितत्वं, न्यायरत्नाकरस्य च तत्र तत्र प्रपञ्चितं चैतच्छास्त्रदीपिकायां न्यायरत्नमालायां चेति लेखदर्शना‖त्सर्वापेक्षया पश्चान्निर्माणं निश्चीयते। आस्तां तावदिदं प्रकृतमनुसरामः।

तदिदं श्लोकवार्तिकं न्यायरत्नाकराख्यव्याख्यासहितं संशोध्य मुद्रयितुं कृतमतिना मया ऽस्य शोधनसमये मूलग्रन्थस्य काशिकराजकीयपाठशालीयं प्राचीनमर्वाचीनं चेति पुस्तकद्वयं, काशीविद्यासुधानिधिमुद्रितं तृतीयं, श्रीयुतगोविन्ददासमहाशयोद्योगेन दरभङ्गाराजकीयपुस्तकालयाध्यक्षश्रीमद्गङ्गानाथझाशर्ममहाशयसकाशाल्लब्धं चतुर्थमिति पुस्तकचतुष्टयं, व्याख्यानस्य न्यायरत्नाकरस्य च तारकाश्रममठस्थमेकं, द्वितीयं च मैथिलकुलावतंसश्रीमन्मीमांसकवरचित्रधरमिश्रशर्मविद्वत्पुस्तकाधारेण लिखितं, तृतीयं च पूर्वोपवर्णितविद्यारसिकगोविन्ददासमहाशयेन नानापुस्तकाधारेण लेखितं, तुर्यं च तृतीयसूत्रान्तमिति पुस्तकचतुष्टय,मादर्शत्वेन परिगृह्य मूले व्याख्यायां च तत्र तत्रोपलब्धान् पाठभेदानधो निवेश्य, दिदृक्षुजनप्रयासपरिहाराय व्याख्यायां गृहीतान् प्रतीकान् स्थूलैरक्षरैर्मूल-

---

* अयं तावद् ग्रन्थो द्वादशाध्यायीव्याख्यारूपो कृच्छ्रलभ्यो ऽद्य यावदमुद्रितः।

† इयं काशीविद्यासुधानिधौ पृथक् च मुद्रिता प्रसिद्धतमा।

‡ अयं ग्रन्थः सहृदयहृदयाह्लादको नाद्यापि मुद्रितः प्रयत्नलभ्यो ऽवश्यं मुद्रणमर्हति। अस्य रामानुजाचार्यविरचितं नायकरत्नं नाम व्याख्यानं चास्ति। को ऽयं रामानुजाचार्य इति तु न विद्मः।

§ शास्त्रदीपिका पृ-४३४ प-६, पृ-१६ प-५, पृ-४५६ प-१६ द्रष्टव्याः।

‖ न्यायरत्नाकर पृ-६९ प-१५ द्रष्टव्या।

श्लोकाङ्कैश्चालङ्कृत्य, स्थलविशेषेषु व्याख्येयं भाष्यभागमप्यथ: सूक्ष्माक्षरैरुपन्यस्य प्रवर्तितशोधनकार्यो ऽस्मि ।

एवं भूयांसमायासमङ्गीकृत्य सविशेषावधानं संशोधिते ऽप्यत्र ग्रन्थे मदीयाल्पमतिदोषाद्, दृष्टिदोषात्, अक्षरयोजकमुद्रकादिदोषाद्वा यत्र क्व चिदुपलब्धा अशुद्धीरुपेक्षमाणा गुणैकपक्षपातिनो विपश्चिद्वर्या मात्सर्यमुत्सार्य स्वयमेवाऽत्र नयनार्पणायासमङ्गीकृत्य मीमांसासुधासौहित्यं भजन्तः करिष्यन्त्येव मामकीनं परिश्रमं फलेग्रहिमिति सुदृढमवधारयन् प्रसादयामि स्वतःप्रकाशं शाश्वतं वेदपुरुषमनेन व्यापारेणेति निवेदयति । शम् ।

वाराणस्याम्<br>
आश्विनसुदि १०<br>
संवत् १९५५

काशिकराजकीयप्रधानसंस्कृतपाठशालायां<br>
साहित्यशास्त्राध्यापको मानवल्ल्युपाख्यः,<br>
**तैलङ्ग-रामशास्त्री ।**

# सव्याख्यश्लोकवार्तिकपुस्तके सङ्केतविवरणम् ।

| | |
|---|---|
| अ० पा० | अध्याये । पादे । |
| का० पा० | काशीविद्यासुधानिधिमुद्रितपुस्तक-पाठः । |
| जै० सू० | जैमिनि-सूत्रम् । |
| पु० पा० | पुस्तक-पाठः । |
| पृ० प० | पृष्ठ-पङ्क्तौ । |
| शा० भा० | शाबर-भाष्यम् । |
| सु० | सुबोधिनी (जैमिनिसूत्रवृत्तिः) |

मूले एकविषयप्रतिपादकः एकश्लोकाधिकस्तन्न्यूनो वा भाग ‘ ’ एतच्चिन्हमध्ये स्थापितः ।

शाबरभाष्यपृष्ठपङ्क्त्यङ्काः एशियाटिक्सोसायटीमुद्रित-पुस्तकानुसारेण निर्दिष्टाः ।

श्रीगणेशाय नमः ।

# तन्त्रवार्तिके

## प्रथमाध्यायस्य प्रथमः पादः

( तर्कपादः )

## श्लोकवार्तिकाभिधः ।

विशुद्धज्ञानदेहाय त्रिवेदीदिव्यचक्षुषे ।
श्रेयःप्राप्तिनिमित्ताय नमः सोमार्धधारिणे ॥ १ ॥
अभिवन्द्य गुरूनादौ शिष्यधीपद्मिनीरवीन् ।

---

सरस्वत्यै नमः ।

## न्यायरत्नाकरः ।

श्लोकवार्तिकमारिप्सुस्तस्याऽविघ्नसमाप्तये ।
विश्वेश्वरं महादेवं स्तुतिपूर्वं नमस्यति ॥ १ ॥

विशुद्धेति[1] । विशुद्धं मीमांसया संशोधितं ज्ञानमेव देहो यस्य । त्रिवेद्येव दिव्यं चक्षुः प्रकाशकं यस्य । सोमस्य अर्धं स्थानं ग्रहचमसादि तद्धारिणे इति यज्ञपक्षेऽपि संगच्छते । विद्यागुरूणां स्तुतिनमस्कारौ कुर्वन् वार्तिकारम्भं प्रतिजानीते अभिवन्द्येति[2] ।

तत्प्रसादात् करिष्ये ऽहं मीमांसाश्लोकवार्तिकम् ॥२॥
तद्विद्वांसो ऽनुगृह्णन्तु चित्तश्रोत्रैः* प्रसादिभिः ।
सन्तः प्रणयिवाक्यानि गृह्णन्ति ह्यनसूयवः ॥ ३ ॥
न चात्रातीव कर्तव्यं दोषदृष्टिपरं मनः ।
दोषो ह्यविद्यमानो ऽपि तच्चित्तानां प्रकाशते ॥४॥
कुतो वा गृह्णते दोषं सूरयो मद्विधोक्तिषु ।
नेष्यते यः परस्थो ऽपि स स्वयं गृह्यते कथम् ॥५॥
निर्दोषत्वैकवाक्यत्वं क्व वा लोकस्य दृश्यते ।
सापवादा यतः के चिन्मोक्षस्वर्गावपि प्रति ॥६॥

---

संप्रति लोकयात्रामाद्रियमाणो विदुषामनुनयं करोति तदिति[३] ।
परीक्षकाणामिदानीं माध्यस्थ्यमर्थयते न चात्रेति[४] । दोषैकदृष्टि-
पराणामसन्नपि दोषः प्रकाशते अतो मध्यस्था भूत्वा† परीक्षध्वमिति।
दुर्जनानिदानीमुद्धतोक्त्या दमयति कुत इति[५] । परस्थानपि
दोषाननिच्छन्तस्तत्परिजिहीर्षायां यतमाना मद्विधाः कविप्रवराः
कथं स्वग्रन्थे दोषान् संगृह्णीयुः अविद्यमानांश्च दोषान् कथं सूरयो
गृह्णीयुः, मूर्खास्तु कामं गृह्णीयुरपीति । संप्रति शिष्यजनमनुशास्ति
निर्दोषत्वेति[६] । यद्यपीमं ग्रन्थं दुर्जनाः कतिपये दूषयिष्यन्ति
तथापि न दोषवत्त्वं मन्तव्यम् । न हि क्व चिदपि सर्वस्य लोकस्य
निर्दोषत्वसम्प्रतिपत्तिर्भवति। तथा हि। तिष्ठतु तावदन्यद् यावत्यन्त-
निर्दोषौ परमपुरुषार्थात्मकौ मोक्षस्वर्गौ तत्रापि नास्तिकाः साप-
वादाः, भीमः खल्वयमपवर्गः बह्वत्र भद्रकं लुप्यते वरं हि संसारः

---

* स्तोत्रैरिति का. पाठः । † मध्यस्थीभूत्वेति २पु० ।

आगमप्रवणश्चाहं* नापवाद्यः स्खलन्नपि ।
न हि सद्वर्त्मना गच्छन् स्खलितेष्वप्यपोद्यते ॥७॥
यथाकथं चिदारब्धा त्रयीमार्गोऽनुसारिणी ।
वाग्वृत्तिरल्पसारा ऽपि श्रद्दधानस्य शोभते ॥८॥
मीमांसाशास्त्रतेजोभिर्विशेषेणोज्ज्वलीकृते ।
वेदार्थज्ञानरत्ने मे तृष्णा ऽतीव विजृम्भते ॥९॥

---

यत्र कियानपि तावत्सुखलेशो ऽनुभूयते, इति मोक्षे ऽपवादः । तथा स्वर्गे ऽपि किं स्वर्गेण चिरसाध्येन मरणव्यवहितेन, वरमप्रत्यमेव भोजनशय्यादिसुखमिति। अतो न कैश्चिद् दूषितमिति मत्वा सदोषत्वं मन्तव्यमिति । संप्रति उपेत्यापि सदोषत्वं संग्राह्य एवायं ग्रन्थ इत्याह आगमेति[७] । सन्मार्गो ह्ययं वेदानुसारः सन्मार्गेण गामिनां च सत्यपि स्खलने नापवादो युक्तः। तेन वेदव्याख्यानात्मकस्य ग्रन्थस्य भूयिष्ठगुणस्याल्पो दोषः सन्नप्युपेक्षणीय इति । किञ्चाल्पसारा बहुदोषा यथा कथञ्चिदतिक्लेशेन समारब्धा वा वृत्तिस्त्रयीमार्गानुसारिणी चेच्छ्रद्दधानस्य शोभतएव किं पुनरस्मादृशानामत्यन्तनिर्दोषा वाग्वृत्तिरित्याह यथाकथञ्चिदिति[८] । ननु वेदं व्याचिख्यासोस्ते किं मीमांसाव्याख्यया वेद एवोपक्रमादारभ्य व्याख्यायतामत आह मीमांसेति[९]। वेदवाक्यानि मीमांसागतन्यायवशेन निरूपितानि मनोहराणि भवन्ति नोपदेशरूपेण व्याख्यातानि, तेन मीमांसाव्याख्यायामेव तृष्णा वर्धतइति । ननु मीमांसायाश्चिरन्तनानि भर्तृमित्रादिरचितानि व्याख्यानानि विद्यन्ते किमने-

---

* अयमिति का. पाठः ।

प्रायेणैव हि मीमांसा लोके लोकायतीकृता ।
तामास्तिकपथे कर्तुमयं यत्नः कृतो मया ॥१०॥

---

## अथाऽतो धर्मजिज्ञासा* ॥१॥

"अथातो धर्मजिज्ञासा" सूत्रमाद्यमिदं कृतम् ।
धर्माख्यं विषयं वक्तुं मीमांसायाः प्रयोजनम् ॥११॥
सर्वस्यैव हि शास्त्रस्य कर्मणो वा ऽपि कस्य चित् ।
यावत् प्रयोजनं नोक्तं तावत् तत् केन गृह्यते ॥१२॥

---

नेत्यत आह प्रायेणेति[१०] । मीमांसा हि भर्तृमित्रादिभिरलोकायतैव सती लोकायतीकृता नित्यनिषिद्धयोरिष्टाऽनिष्टं फलं नास्तीत्यादिबहुपसिद्धान्तपरिग्रहेणेति तामास्तिकपथे कर्तुं वार्तिकारम्भयत्नः कृतो मयेति ॥

एवं समर्थितारम्भं वार्तिकमारभमाणः सूत्रतात्पर्यं तावद्दर्शयति अथात इति[११] । धर्माख्यो यो ऽस्य शास्त्रस्य विषयः प्रतिपाद्यः तदेवास्य प्रयोजनमिति वक्तुं शास्त्रादौ इदं सूत्रं कृतम् । धर्मजिज्ञासायां हि कर्तव्यतामुक्त्वा ऽऽरभ्यमाणं शास्त्रं नूनं तत्प्रतिपादनार्थमिति गम्यते, अतस्तदर्थमिदं सूत्रम् । आद्यमिति प्रयोजनाभिधानस्यावसरं दर्शयति । किमर्थं पुनः प्रयोजनकथनमत आह सर्वस्येति[१२] ।

---

*अथ, गुरुकुलस्थितिपूर्वकवेदाध्ययनानन्तरम् । अतः, यतो ऽध्ययनस्य अर्थज्ञानं फलम् अतः । धर्मस्य, वक्ष्यमाणलक्षणस्य । जिज्ञासा, तत्साध्यो विचारः । कर्तव्य इति शेषः । इति सूत्रार्थः । सु० ।

मीमांसाख्या तु विद्येयं बहुविद्यान्तराश्रिता ।
न शुश्रूषयितुं शक्या प्रागनुक्त्वा प्रयोजनम् ॥१३॥
विद्यान्तरेषु नाप्येतद् यद्यभीष्टं प्रयोजनम् ।
अनर्थप्रापणं तावत्तेभ्यो नाशङ्क्यते क चित् ॥१४॥
मीमांसायां त्विहाऽज्ञाते दुर्ज्ञाते वा ऽविवेकतः ।
न्यायमार्गे महान् दोष इति यत्नोपचर्यता ॥१५॥
तस्मात्प्रयोजनं पूर्वमुक्तं सूत्रकृता स्वयम् ।
यत् स्वेनोक्तं वदेयु * स्तद् भाष्यकारादयः कथम् ॥१६॥

---

सर्वस्याऽल्पायाससाध्यस्यापि शास्त्रस्य कर्मणो वा प्रवृत्तिसिद्धये ऽवश्यं वक्तव्यमेव प्रयोजनं विशेषतो मीमांसाया बहुप्रयाससाध्यत्वादित्याह मीमांसेति[१३] । मीमांसा हि व्याकरणादिशास्त्रान्तरवशेन व्युत्पन्नपदपदार्थस्य वाक्यार्थसंदेहनिवृत्त्यर्था बहूनि विद्यान्तराणि उपायभूतान्याश्रिता बह्वायाससाध्या, नास्यां प्रयोजनमनुक्त्वा प्रवर्तयितुं शक्यमिति। अपरमपि मीमांसायां विद्यान्तरेभ्यः प्रयोजनाभिधानोपयोगं दर्शयति विद्यान्तरेष्विति[१४] । विद्यान्तरेष्वनुक्ते प्रयोजने यदि नाम न प्रवर्तेरन् तथाप्यल्प एव प्रत्यवायः तेषामल्पविषयत्वात्, मीमांसा तु सर्ववाक्यगतन्यायनिरूपणात्मिका तेनास्यां यो न्यायमार्गस्तस्मिन्नज्ञाते दुर्ज्ञाते वा विवेकाऽभावान्न किं चिज्ज्ञायेत अतो महान् दोष इति प्रयोजनदर्शनेन प्रयत्नेनोपचरितव्येति। उपसंहरति तस्मादिति[१६] । किमिति पुनः स्वयमुक्तं न भाष्यकारादिभिर्वक्ष्यमाणं प्रतीक्षितमत आह यत्स्वेनेति । स्वयमनुक्ते

---

* यत्तेनोक्तं गृहेयुस्तदिति पुस्तकान्तरे ।

सिद्धार्थं ज्ञातसंबन्धं श्रोतुं श्रोता प्रवर्तते ।
शास्त्रादौ तेन वक्तव्यः* सम्बन्धः सप्रयोजनः ॥१७॥
शास्त्रं प्रयोजनं चैव संबन्धस्याश्रयावुभौ ।
तदुक्त्यन्तर्गतस्तस्माद् भिन्नो नोक्तः प्रयोजनात् ॥१८॥
'सिद्धिः श्रोतृप्रवृत्तीनां संबन्धकथनाद्यतः ।
तस्मात् सर्वेषु शास्त्रेषु संबन्धः पूर्वमुच्यते ॥१९॥
यावत् प्रयोजनेनास्य संबन्धो नाभिधीयते ।

---

प्रयोजने प्रयोजनान्तरमपि भाष्यकाराद्यो वदेयुरिति सम्भावयन् स्वोक्तमेव कथं ते वदेयुरित्येवमर्थं स्वयमुक्तवान् । अत्र चोदयति सिद्धार्थमिति[१७] । ज्ञातप्रयोजनं ज्ञातसंबन्धं च शास्त्रं श्रोतुं श्रोतारः प्रवर्तन्ते तस्मात् प्रयोजनवदेव सम्बन्धो ऽपि शास्त्रावतारहेतुभूतः शास्त्रादावेव वक्तव्यः अनेन संबन्धेनेदं शास्त्रमायातमिति यथा शास्त्रान्तरेष्वथातो धर्मं व्याख्यास्याम इत्यादिषु शिष्यप्रश्नानन्तर्यरूपसम्बन्धो ऽभिधीयते अन्यथा ह्यसङ्गताभिधायितां सूत्रकारस्याशङ्क्य श्रोतारो नातीव तद्वचने श्रद्दधीरन्निति। परिहरति शास्त्रमिति[१८] । नात्र जैमिनेः शास्त्रारम्भे शिष्यप्रश्नानन्तर्यादिरूपः सम्बन्धो हेतुः किन्तु यो ऽयं पूर्वोक्तेन प्रयोजनेन सह शास्त्रस्य साध्यसाधनसम्बन्धः स एव शास्त्रारम्भहेतुरिति विनैव शिष्यप्रश्नादिना स्वयमेव भगवान् जैमिनिर्लोकहितार्थं धर्मज्ञानसाधनभूतं शास्त्रमारब्धवान्। स चायं सम्बन्धः सम्बन्धिनोरभिधानादेवार्थाज्ज्ञात इति न कण्ठेनोक्तः।पुनश्चोदयति सिद्धिरिति[१९] द्वयेन। अर्थोक्तो ऽयं सूत्रकारेण सम्बन्धो भवद्भिर्व्याख्यातृभिः कथनीय उपपादनीयः।

---

* कर्तव्य इति का. पा. ।

असंबद्धप्रलापित्वाद् भवेत् तावदसंगतिः' ॥२०॥
इह त्वाक्षिप्य संबन्धं भाष्यएवाऽभिधास्यते ।
धर्मप्रसिद्ध्यसिद्धिभ्यां, तस्मान्नान्यो ऽभिधीयते ॥२१॥
न चाप्यत्राऽथशब्देन शास्त्रसंबन्ध उच्यते ।
संबन्धं क्रिययोर्ह्येष ब्रूते शास्त्राच्च ते पृथक् ॥२२॥
यो ऽप्ययं शास्त्रसंबन्धो वर्ण्यते कैश्चिदादितः ।

---

अत एव हि शास्त्रान्तरेषु सम्बन्ध उपपाद्यते यावद्ध्ययं सम्बन्धः प्रयोजनेन सह साध्यसाधनरूपो नोपपाद्यते तावदस्याऽनुपपत्तिं मन्यमानाः श्रोतारो ऽसंबद्धप्रलापित्वं सूत्रकारस्य मन्यमानाः शास्त्रस्याऽसङ्गतिमेव मन्येरन् अतो ऽयं सम्बन्ध उपपादनीयः सम्बन्धान्तरं वा वक्तव्यमिति। परिहरति इह त्विति[२१]। भाष्यकारैरेवाऽयं सम्बन्धो धर्मप्रसिद्ध्यप्रसिद्धिभ्यामाक्षिप्य समाधास्यते अतो नेदानीमस्माभिरुपपाद्यते न च सम्बन्धान्तरमभिधीयते।

केचित्तु सौत्रेणैवाथशब्देनाध्ययनक्रियानन्तर्यरूपः शास्त्रसम्बन्ध उक्त इति मन्यन्ते तान्निराकरोति न चापीति[२२]। किमिति नोच्यते ऽत आह सम्बन्धमिति । अध्ययनजिज्ञासाक्रिययोर्हि सम्बन्धमथशब्दो ब्रूते, ते च क्रिये शास्त्रादत्यन्तभिन्ने। न हि जिज्ञासाशब्दो मीमांसापर्यायः येन शास्त्रसम्बन्ध उच्येत। सन्नन्तत्वसाम्यात्तु तयोरेकार्थत्वभ्रमो भवताम्। श्रोतृक्रिया हि ज्ञानेच्छा जिज्ञासा, वक्तृक्रिया तु विचारात्मिका मीमांसा, कुतस्तयोरैक्यम्। न चाध्ययनानन्तरं जैमिनिना शास्त्रं प्रणीतम् अतो नानेन शास्त्रसम्बन्ध उच्यतइति। मा भूदानन्तर्यं शिष्यप्रश्नदेवताराधनरसायनादिक्रियानन्तर्यरूपो गुरुपर्वक्रमात्मको वा सम्बन्धः शास्त्रस्योच्यतामिति चेत्, तदपि तावज्जिज्ञासाशब्दस्य शास्त्रवचनत्वाऽभावादवा-

क्रियाऽऽनन्तर्यरूपो वा गुरुपर्वक्रमो ऽपि वा ॥२३॥
तदतद्भावयोस्तस्य विशेषो नोपलभ्यते ।
श्रोतुर्विधौ निषेधे वा ज्ञाने वा शास्त्रगोचरे ॥२४॥
तस्माद् व्याख्याङ्गमिच्छद्भिः सहेतुः सप्रयोजनः ।
शास्त्रावतारसंबन्धो वाच्यो नान्यस्तु निष्फलः ॥२५॥
लोकइत्यादिभाष्यस्य* षडर्थान् संप्रचक्षते ।

---

युक्तम् । निष्प्रयोजनश्चायं पक्ष इत्याह यो ऽपीति[२३] । न ह्येवं सम्बन्धतद्भावाऽतद्भावयोः श्रोतॄणां शास्त्रश्रवणे प्रवृत्तौ निवृत्तौ वा शास्त्रगोचरे वा ज्ञाने कश्चिद्विशेषः । विधिनिषेधाभ्यां तत्कार्यभूते प्रवृत्तिनिवृत्ती लक्षयति । पर्वाऽवच्छेदः, गुरुपर्वणां क्रमो गुरुपर्वक्रमः । तद्यथा ब्रह्मा प्रजापतये मीमांसां प्रोवाच सो ऽपीन्द्राय सो ऽप्यादित्याय स च वसिष्ठाय सो ऽपि पराशराय पराशरः कृष्णद्वैपायनाय सो ऽपि जैमिनये स च स्वोपदेशानन्तरमिमं न्यायं ग्रन्थे निवद्धवानिति । सो ऽयमेवंविधः संबन्धो निष्फलो निर्हेतुकश्च । न ह्यस्मिन् सम्बन्धे किञ्चित् प्रमाणमस्तीति । उपसंहरति तस्मादिति[२५] । वेदव्याख्यात्मकस्य मीमांसाशास्त्रस्याऽङ्गभूतं सम्बन्धमिच्छद्भिः सप्रमाणकः सप्रयोजनकश्च सम्बन्धो वाच्यः । स च पूर्वोक्त एव अन्यस्तु निष्फलो न वाच्यः । शास्त्रमवतारयतीति शास्त्रावतारः ।

भाष्यमिदानीमनुसंधत्ते लोके इति[२६] । ननु यत्रैव भाष्यं सं-

---

*लोके येष्वर्थेषु प्रसिद्धानि पदानि तानि सति संभवे तदर्थान्येव सूत्रेष्वित्यवगन्तव्यम्, नाऽध्याहारादिभिरेषां परिकल्पनीयो ऽर्थः परिभाषितव्यो वा । एवं वेदवाक्यान्येव एभिर्व्याख्यायन्ते । शा. भा. पृ. १ प. २ ।

भाष्यकाराऽनुसारेण प्रयुक्तस्यादितः पृथक्* ॥२६॥
सर्वव्याख्यामुपालम्भं प्रत्याख्यानं तथा ऽपरे ।
परिसंख्यास्तुती केचिदथशब्दस्य दूषणम् ॥२७॥
साधारणी विशिष्टा च सूत्रव्याख्या द्विधा मता ।
विशिष्टा प्रतिसूत्रं या सर्वार्था त्वियमुच्यते ॥२८॥

---

गच्छते स एवार्थः कथं षडर्थत्वमत आह भाष्येति । सर्वत्रैव भाष्यं संगच्छतइति भावः। ननु सन्निधिविशेषादेतत्सूत्रगताऽथशब्द-दूषणमेवार्थो नार्थान्तरमत आह प्रयुक्तस्यादित इति । शास्त्रादौ प्रयुक्तमिदं भाष्यमतः सर्वव्याख्यादीनामेतदेव स्थानमिति न स्थानतो विशेषलाभः। तथापि सकृदुच्चरितस्य कथमनेकार्थत्वमत आह पृथगिति । नैते समुच्चीयन्ते ऽर्थाः किन्तु पृथक्पृथगेतानर्थान् व्याख्यातारः प्रचक्षते केचिदन्यं केचिदन्यमिति। किञ्चाऽनेकार्थत्वमपि पौरुषेयस्य सम्भवत्येव श्वेतो धावतीत्यादिवत् । तदिदं प्रयुक्तग्रहणेन सूचितं वेदितव्यमिति ।

तानेव षडर्थान् उपदर्शयति सर्वव्याख्यामिति[२७]। सर्वव्याख्यां विवृणोति साधारणीति[२८]। सर्वसूत्रसाधारणीयं व्याख्या लोकइत्यादिना क्रियते। अत्र भाष्ये सूत्रेषु पदानि प्रसिद्धार्थान्येवेत्यवगन्तव्यमिति प्रवृत्तिमुपदिश्य नाऽध्याहारादिभिरेषां कल्पनीयो ऽर्थ इति निवृत्तिरुपदिष्टा। तत्रैषामिति सर्वनाम्ना पूर्वप्रकृतप्रधानपरामर्शात् सूत्राणां च सप्तम्या पदविशेषणार्थत्वात् प्रधानभूतानां पदानामेव परामर्शात् प्रवृत्तिवन्निवृत्तिरपि पदविषयेति प्रतिभाति, तथा न मन्तव्यमित्याह

---

* प्रयुक्तः स्यादितः पृथक् इति का. पा. ।

प्रवृत्तिस्तु पदेष्वेव निवृत्तिः सूत्रसंश्रया ।
वेदवाक्याऽविरुद्धेषु न तु सर्वेषु केषु चित् ॥२९॥
अध्याहारस्य वाक्येषु व्यत्यासस्य च संभवात्* ।
तेनैषामिति सूत्राणां पारार्थ्ये सत्यपि ग्रहः ॥३०॥
एवशब्दो ऽल्पवाच्यत्वादस्याऽऽवृत्तौ तु गौरवम् ।
प्रसिद्धत्वादवाच्यं चेन्न दोषः पुङ्गिरामयम् ॥३१॥

---

प्रवृत्तिरिति[२९] । सति सम्भवे इत्यस्यार्थमाह वेदवाक्येति । यदेतत्प्रसिद्धार्थग्रहणम् अध्याहारादिवर्जनञ्च तन्न सर्वेषु किन्तु केषु चिदेव वेदवाक्याविरुद्धेष्वित्यन्वयः । किमिति पुनर्निवृत्तिः सूत्रसंश्रयेत्यत आह अध्याहारस्येति[३०] । प्राप्तिपूर्वको हि प्रतिषेधो न चाध्याहारव्यवहितकल्पनयोः पदे प्राप्तिः, न्यूनपदाप्रयोगात् नियतक्रमत्वाच्च प्रकृतिप्रत्यययोः । विपरिणामगुणकल्पने तु यद्यपि पदाधारे तथापि पदानामेव संहतानां वाक्यत्वाद्वाक्याधारतापि सम्भवति तेन निषेध्यानां सर्वेषां प्राप्तिः सूत्रेष्वेव सम्भवतीति परार्थानामपि तेषामेव परामर्श इति । एवं साधारणव्याख्यां कृत्वा किं पुनरस्याः प्रयोजनमित्याशङ्क्य भाष्यकारेणोक्तम् एवं वेदवाक्यान्येवैभिर्व्याख्यायन्तइति । अस्यायमर्थः । एवं साधारणव्याख्यायां कृतायामनयैव ज्ञातार्थैः सूत्रैर्वेदवाक्यान्येव व्याख्येयानि भविष्यन्ति न पुनः सूत्राण्यपीति । तत्र विशेषव्याख्यानस्यापि करिष्यमाणत्वात् कथमेवशब्द इत्याशङ्क्याह एवशब्द इति[३१] । अनयैव गतार्थप्रायेषु पश्चादल्पमेव वक्तव्यं भवतीति अल्पत्वादसत्त्वमुपचर्य एवशब्दः प्रयुक्त इति । इतर-

---

* संभव इति का. पा. ।

व्याख्याङ्गत्वाऽभिमानेन यो ऽध्याहाराद्यपेक्षते ।
स्वसंज्ञां वापि तस्येदं शास्त्ररूपं निरूप्यते ॥३२॥
वृत्त्यन्तरेषु केषांचिल्लौकिकाऽर्थव्यतिक्रमः ।
शब्दानां दृश्यते तेषामुपालम्भो ऽयमुच्यते ॥३३॥
अथात इत्ययं लोके नाऽऽनन्तर्ये प्रयुज्यते ।
तस्मात् तादर्थ्यमेतस्य परिभाषादिभिर्भवेत् ॥३४॥

---

थेत्यादि प्रसज्येतेत्यन्तं भाष्यं* तस्यार्थमाह अस्येति । भाष्ये व्याख्येयानीत्यत्र प्रकृतं व्याख्यानं परामृशति अस्येति । अस्य व्याख्यानस्य वेदे सूत्रे चावृत्तौ सत्यां यत्नगौरवं स्यादितीतरथेत्यादिना भाष्येणोक्तमिति । अत्र चोदयति प्रसिद्धत्वादिति । सति सम्भवे प्रसिद्धार्थग्रहणम् अध्याहारादिवर्जनञ्च प्रसिद्धमेवेति मन्दफलं साधारणं व्याख्यानमिति। परिहरति न दोष इति । प्रसिद्धवचनत्वं पुंवाक्यानां गुणो न दोष इति। अथैतेनाऽपरितोषस्तत एवं वक्तव्यमित्याह व्याख्येति । शास्त्रान्तरेषु सूत्राणामध्याहारपरिभाषादिभिर्व्याख्यानं दृष्ट्वा व्याख्यानस्यैवेदमङ्गमिति यो मन्यते तस्य, तं प्रतीदं शास्त्ररूपम् अनेन भाष्येण निरूप्यते अध्याहारादिकं नास्मिन्नपेक्ष्यतइति ।

उपालम्भपक्षं परिगृह्णाति वृत्त्यन्तरेष्विति[११]। केषाञ्चिद्भवदासादीनां वृत्त्यन्तरेषु। कीदृशः पुनरुपालम्भ इति तत्स्वयं दर्शयति अथात इति । पदद्वयमर्थद्वयवाचि लोकप्रसिद्धमपि भवदासेनैकपदीकृ-

---

* इतरथा वेदवाक्यानि व्याख्येयानि स्वपदार्थाश्च व्याख्येया इति प्रयत्नगौरवं प्रसज्येत । शा. भा. पृ. १ प. ४ ।

'प्रसिद्धहानिः शब्दानामप्रसिद्धे च कल्पना ।
न कार्या वृत्तिकारेण सति सिद्धार्थसंभवे ॥३५॥
सूत्रार्थे क्लिश्यतश्चैवं* दूरे वेदार्थनिर्णयः ।
तत्र यत्नस्य भारत्वं वक्तृश्रोत्रोः प्रसज्यते' ॥३६॥
न व्याख्यास्यति सूत्राणि चोदनार्थपरत्वतः ।
यत् तस्य परिहारो ऽयं प्रत्याख्यानेन चोच्यते† ॥३७॥
'प्रयासो वेदवाक्येषु कार्यः सूत्रेष्वनेन किम् ।
फलवत्त्वाऽफलत्वाभ्या'मेभिः करणसंमतैः ॥३८॥
चोदनार्थ उपेतव्यो नोभयं यत्नगौरवात् ।

---

त्यानन्तर्यमात्रार्थं व्याख्यातं तच्चायुक्तमित्युपालम्भ इति। अत्रैव भाष्यं योजयति प्रसिद्धहानिरिति[३५] द्वयेन।

प्रत्याख्यानपक्षं परिगृह्णाति न व्याख्यास्यतीति[३७] । भाष्यकारो हि सूत्राणि पठित्वा ऽनन्तरं वेदवाक्यान्युदाहृत्य तदर्थनिर्णये यत्नं करिष्यति न सूत्रव्याख्याने। तेनैवमाशङ्का भवति यदेतत्केवलं चोदनार्थपरो भूत्वा सूत्राणि न व्याख्यास्यति तत्किमनर्थत्वादेषा,माहो स्विदर्थापरिज्ञानाद्, उताऽव्याख्येयत्वादिति, तत्परिहारो ऽयं प्रत्याख्यानेनैवोच्यते न व्याख्येयानीति। प्रत्याख्याने कारणमाह प्रयास इति भ्या[३८]मन्तेन । फलवन्ति हि वेदवाक्यानि धर्मप्रमापणाद् अतस्तेषु सफलो व्याख्याप्रयासः, सूत्रेष्वफलत्वात्किं प्रयासेनेति । अतस्तैरुपायभूतैश्चोदनार्थ उपेतव्यः व्याख्येय इत्याह एभिरिति । तदिदमेवं वेदवाक्यान्येव एभिर्व्याख्यायन्ते इत्यादिना भाष्येणोक्तम्।

---

* क्लिश्यते चैवमिति का. पा. । † वोच्यते इति का. पा. ।

पदार्थानां प्रसिद्धत्वाद् व्याख्येयं नावशिष्यते ॥३९॥
एवंशब्दादिको ग्रन्थः पक्षे चास्मिन् समर्थ्यते ।
'पदच्छेदाद्यभावेन प्रत्याख्यानमतिस्त्वियम् ॥४०॥
ब्रवीत्येव हि सूत्रार्थ'मतिरिक्तादि चेष्यते* ।
नन्वशक्त†मिदं सूत्रं सम्यक् सूत्रितमित्यपि ॥४१॥

---

अथ मा नाम केवलानि सूत्राणि व्याख्यायन्तामुभयन्तु किमिति नोपेयतइत्याह नोभयमिति[३९]। तदिदमितरथेत्यादिना भाष्येणोक्तम्। ननूपायभूतानि सूत्राण्यविज्ञाय कथं तैर्वेदवाक्यान्युपेतुं शक्यन्ते ऽत आह पदार्थानामिति । सत्यं ज्ञातव्यार्थानि सूत्राणि न तु तान्यव्याख्यातदुर्ज्ञानानि । पदार्थास्तावल्लोकप्रसिद्धास्तत एव च वाक्यार्थो ऽपि प्रसिद्ध इति न किं चिद्व्याख्येयमवशिष्यते तदिदं लोके इत्यादिनोक्तम्। अस्मिश्च पक्षे सर्वथैव सूत्राणामव्याख्यानादेव यत्नगौरवशब्दौ समञ्जसावित्याह एवंशब्दादिक इति[४०] । प्रत्याख्यानपक्षं तावद्दूषयति पदच्छेदादीति पादत्रयेण। स्थूलदृशामेषां पदच्छेदाद्यकरणादव्याख्यानभ्रान्त्या प्रत्याख्यानमतिः । निपुणतस्तु निरूप्यमाणे ब्रवीत्येव सूत्राणां तात्पर्यतो ऽर्थमिति न प्रत्याख्यानोपपत्तिः। किञ्च न्यूनातिरिक्तं सूत्रेष्वपेक्षतइत्याह अतिरिक्तेति[४१] । अत्रैवोदाहरणान्याह नन्विति । चोदनासूत्रे नन्वशक्तमिदं सूत्रमिति न्यूनत्वं चोदयित्वा परिहरिष्यति तथा च 'अर्थैकत्वादेकं वाक्यं साकाङ्क्षं चेद्विभागे स्या'‡दित्यत्र किमर्थमुभयं सूत्रितमिति अतिरेकं चोदयित्वा परिहृत्य सम्यक् सूत्रितमिति वक्ष्यति । 'विशये

---

* चेक्षते इति का. पा. ।
† न त्वशक्तमिति का. पा. ।
‡ जै. सू. अ.२ पा.१ सू.१४ ।

सूत्रे चागमकत्वादि प्रत्याख्याने विरुध्यते ।
न चोपेयाऽनभिज्ञेन शक्योपेयाऽवधारणा ॥४२॥
नाऽन्यतो वेदविद्भ्यश्च सूत्रवृत्तिक्रियेष्यते ।
प्रत्याख्यानस्य हेतुश्च पदार्थानां प्रसिद्धता ॥४३॥
योक्ता सा वेदवाक्यानां तुल्यार्थत्वान्निवारयेत् ।
वाक्यार्थे तत्र संदेहाद् व्याख्यानं चेत् प्रवर्तते ॥४४॥
सूत्रेष्वपि समानत्वात् प्रात्याख्यानं न युज्यते ।
न व्याख्यातव्यमित्येवं प्रत्याख्याने च सिध्यति ॥४५॥
दुष्टव्याख्या निषेधेन तदपेता न वार्यते ।

---

प्रायदर्शना* दित्यत्रागमकं सूत्रमिति न्यूनतां चोदयित्वा परिहारं† च वक्ष्यति, तदिदं सर्वं प्रत्याख्याने विरुध्येतेति । किञ्चोपायभूतानि सूत्राण्यनभिज्ञाय कथं तैर्वेदवाक्यार्थो ज्ञायते अतस्तान्यपि व्याख्येयानीत्ययुक्तं प्रत्याख्यानमित्याह न चेति[४२] । मा नाम सूत्रैर्वेदार्थो ज्ञायताम्, अन्यतस्तु ज्ञास्यतइत्यत आह नान्यत इति[४३] । यत्तु ज्ञातव्य एव सत्यं सूत्रार्थः न तु व्याख्येयः प्रसिद्धत्वादिति, तदनुभाष्य परिहरति प्रत्याख्यानस्येति । अत्राशङ्कते‡ व्वाक्यार्थे इति[४४] । परिहरति सूत्रेष्वपीति[४५] । भाष्यमपीदं नातीव प्रत्याख्याने समर्थमित्याह न व्याख्यातव्यमिति । प्रत्याचिख्यासुर्न व्याख्यातव्यमित्येवावक्ष्यत, अध्याहारादिभिर्न कल्पनीयोऽर्थ इति दुष्टव्याख्याया एव निषेधाद्दोषापेता व्याख्या न वार्यतइति । तदेवमस्य प्रत्याख्यानपक्षस्य प्रत्यक्षदृष्टव्याख्याविरुद्ध-

---

* जै. सू. अ.२ पा.३ सू. १६ । † न्यूनताबोध्यं परिहारमिति २ पु. ।
‡ शङ्क्यते इति २ पु. पा. ।

अस्य दुष्टविरुद्धत्वान् फल्गुत्वाच्चापि पर्वयोः ॥४६॥
मध्यमे चातिदौर्जन्यात् परिसंख्यैव युज्यते ।
वैदिकं जैमिनीयं च यत्र वाक्यं विरुध्यते ॥४७॥
यथाश्रुतगृहीते ऽर्थे तत्रेदमुपदिश्यते ।
अध्याहारादिभिः सूत्रं वैदिकं तु* यथाश्रुतम् ॥४८॥
नेयं' विरोधे ऽन्योन्यस्य वैदिकानां भवन्तु ते ।
यथा धर्मावबोधस्य प्रमाणं वैदिकं वचः ॥४९॥

---

त्वात् पूर्वयोश्च सर्वव्याख्योपालम्भयोर्मन्दफलत्वेन फल्गुत्वान्मध्यमस्य चोपालम्भस्य दौर्जन्यापादकत्वाद् न्यायाभासप्राप्तवेदवाक्याऽन्यथाकरणनिवारणेन महाफला ऽनुक्तदुर्ज्ञाता च परिसंख्यैवास्य भाष्यस्यार्थ इत्याह अस्येति ।

परिसंख्याविषयं स्वरूपं चाह वैदिकमिति[४७] नेय[४९]मन्तेन । यत्र वेदसूत्रयोर्यथाश्रुतगृहीतार्थयोर्विरोधस्तत्र वेदं यथाश्रुतं व्याख्याय सूत्रमध्याहारादिभिर्नेयमिदमनेन भाष्येणोपदिश्यते इति । ननु सूत्रवशेन वेदाऽन्यथाकरणमपि दृश्यते 'वेदो वा प्रायदर्शना'†-दिति सूत्रे ऋगादिशब्दानां लक्षणया वेदपरत्वव्याख्यानादत आह विरोधे इति । नेदं सूत्रविरोधाद्वेदाऽन्यथाकरणं किन्तु वैदिकेनैवोपक्रमेण विरोधात् तेन वैदिकानामेव मिथो विरोधे भवन्तु दुर्बलस्य लक्षणादयो, वेदसूत्रविरोधे तु सूत्रस्यैवाऽन्यथाकरणमिति । ननु प्रधानभूतवेदविरोधे गुणभूतानां सूत्राणामन्यथाकरणं प्रसिद्धमिति मन्दफलैव परिसंख्या ऽत आह यथेति । सत्यमेवं

---

* व्याख्येयं चेति का॰ पा॰ । † जै. सू. अ.३ पा.३ सू.२ ।

तदर्थनिर्णये हेतुर्जैमिनीयं तथैव नः ।
वाक्यसामर्थ्यतुल्यत्वात् तथा पदतदर्थयोः ॥५०॥
अध्याहारादिभिर्मुक्ता व्याख्या सर्वत्र युज्यते ।
असंभवादवश्यं या विरोधे ऽन्यतरस्य तु ॥५१॥
अन्याय्यकल्पना* सापि विकल्पेन प्रसज्यते ।
प्राथम्येनावरुद्धत्वादुपायवशतो ऽथ† वा ॥५२॥
यथाश्रुतेन सूत्रेण न्याय्यां बाधेत चोदनाम् ।
तेन वेदाऽविरुद्धस्य‡ सति संभवइत्ययम् ॥५३॥

---

न्यायः, तथापि न्यायाभासात्सूत्रकारबहुमानाद्वैवं श्रोतारो भ्राम्येयुः नास्माकं वेदसूत्रयोः कश्चिद्विशेषः यथैव हि धर्मावबोधस्य वैदिकवाक्यं प्रमाणं तथैव वेदार्थनिर्णये सूत्रमेवास्माकं प्रमाणमिति । न चान्यो ऽपि कश्चिद्वेदसूत्रयोर्विशेषः, येन सूत्राणामध्याहारादिकं युज्येत न वेदानाम्, अतः सर्वत्र वेदे सूत्रे चाध्याहारादिनिर्मुक्तैव व्याख्या युज्यतइत्याह वाक्येति[५०] । ननु यत्रोभयोर्यथाश्रुतग्रहणाऽसम्भवस्तत्र गुणत्वात्सूत्राणामेवाऽन्यथाकरणमत आह असम्भवादिति[५१] । येयमुभयोर्यथाश्रुतार्थाऽसम्भवेनाऽन्यतरस्याऽन्याय्यकल्पना सा ऽप्यगृह्यमाणविशेषत्वादुभयोर्विकल्पेनैव प्रसज्यतइति । अथ वा सूत्राणि वेदार्थज्ञानोपायत्वात्प्रथमोपनिपातीन्यसञ्जातविरोधित्वाद् यथाश्रुतानि गृहीत्वा तद्वशेन चोदनामेव न्याय्यामबाध्यां बाधेत,अतस्तन्निवृत्तये ऽर्थवत्येव परिसंख्येत्याह प्राथम्येनेति[५२]। अत्रैव भाष्यं योजयति तेनेति[५३]। यदेतत्प्रसिद्धार्थग्रहणमध्याहारपरिभा-

---

* अन्यायकल्पनेति का. पा. । † वशग इति का. पा. ।
‡ वेदाविरोधस्येति का. पा. ।

विधीयतेऽर्थः, शेषं तु यथाप्राप्तमनूद्यते ।
शेषभाजां भवेल्लोप इत्यध्याहारकल्पना ॥५४॥
विप्रकर्षात् पशोश्चेति विभक्तिः परिणम्यते ।

---

षादिवर्जनं च यत्नगौरवभयादाश्रयणीयं प्राप्तमित्यनूद्य, तत्सर्वं वेदाऽविरोधसम्भवे सति नासतीत्ययमर्थो भाष्येण विधीयते । वेदग्रहणं न्यायस्याऽप्युपलक्षणार्थम् । सति सम्भवे कर्तव्यमित्येवं विधिरूपस्य वाक्यस्याऽसति सम्भवे नेत्येवं निषेधपरत्वात्परिसंख्यात्वमिति । क्व पुनरसम्भवादध्याहाराद्याश्रितमिति तदुदाहरणानि दर्शयन् अध्याहारोदाहरणं तावदाह शेषभाजामिति[५४] । दर्शपूर्णमासयोः प्रधानार्थस्याऽवदानस्य नाशदोषापहारेषु सत्सु शेषादवदानं पूर्वपक्षीकृत्य हविरन्तरोत्पादने सिद्धान्तिते शेषकार्यार्थे गृहीतस्याऽवदानस्य नाशादौ सति किं कर्तव्यमित्यपेक्षायां सूत्रम् 'अपि वा शेषभाजां स्या'* दिति । अत्र किं स्यादित्यस्याऽनिर्देशाद् अनन्तरोक्तं हविरन्तरोत्पादनं सम्बध्यते । तच्चाऽयुक्तम् । न हि प्रतिपत्तिर्द्रव्यं प्रयुङ्क्ते । अथ तद्व्यावृत्तिसमर्थादपिवाशब्दात्तत्रत्यपूर्वपक्षोक्तं शेषाऽवदानं सम्बध्यते । तदप्ययुक्तम् । शेषस्य प्रतिपत्त्यन्तरगृहीतस्य नष्टाऽवयवपूर्वप्रतिपत्तिसम्बन्धाऽभावात् । तस्माल्लोप एवास्यां दशायां युज्यते इति नोपपदाध्याहारः कल्पयिष्यते ।

विपरिणाममुदाहरति विप्रकर्षादिति[५५] । ज्योतिष्टोमे सौत्येऽहनि सवनीयः पशुः सवनीयाश्च पुरोडाशाः । तत्र पशुतन्त्रस्य पुरोडाशेषु प्रसङ्गार्थं पशुतन्त्रमध्ये पुरोडाशानां विधानं प्रतिपादयितुं

---

* जै. सू. अ.६ पा.४ सू.२ ।

पदेन व्यवधानं तु लोके संनियमादिति ॥५५॥
सूत्रेण व्यवधानं तु पानव्यापदि कल्पितम् ।
पशुसामान्यविध्यादौ सूत्रमेवाऽन्यथा कृतम् ॥५६॥

---

सूत्रम् 'पशोश्च विप्रकर्षस्तन्त्रमध्ये विधानात्'* इति । अत्र तन्त्रमध्ये विधानं साध्यत्वात्प्रथमार्हं न पञ्चम्यर्हमिति पञ्चमी प्रथमया विपरिणम्यते । तथा विप्रकर्षो ऽपि वपायाः प्रातःसवनइत्यादिप्रत्यक्षवचनसिद्धत्वाद्धेतुत्वेन पञ्चमीमर्हति न प्रथमामिति पञ्चम्या विपरिणम्यते । तदयमर्थः । पशोश्च विप्रकर्षात्तन्त्रमध्ये पुरोडाशानां विधानमिति । अथ वा व्यवहितकल्पनामुदाहरन् पदव्यवधिं तावदुदाहरति पदेनेति । लौकिकवाक्यवद्वैदिकवाक्यमपि पौरुषेयमित्युक्ते वैषम्यप्रदर्शनार्थं सूत्रम् 'लोके सन्नियमात् प्रयोगसन्निकर्षः स्या'† दिति । अत्र लोकइत्यस्य पदस्य सन्नियमप्रयोगपदव्यवहितेन सन्निकर्षपदेन सम्बन्धः । लोके चक्षुरादिसन्निकर्षादर्थस्य तद्विषयः शब्दप्रयोगःसन्नियम उपपद्यते न तु वेदे अतीन्द्रियार्थत्वादर्थस्येति । तदिदं विपरिणामोदाहरणमपि सम्भवत्तस्योदाहृतत्वाद् व्यवहितकल्पनाया एवोदाहरणमिति ।

सूत्रव्यवधिमुदाहरति सूत्रेणेति[५६] । अश्वप्रतिग्रहेष्टिर्लौकिके अश्वप्रतिग्रहे वैदिके वेति संशये 'दोषात्त्विष्टिर्लौकिके स्या'‡ दिति पूर्वपक्षमुक्त्वा 'अर्थवादो वा ऽनुपपातात्तस्माद्यज्ञे प्रतीयेत'§ इति सिद्धान्तितम् । ततः सौमेन्द्रं चरुं निर्वपेदिति सोमपानव्यापदि विहितश्चरुर्लौकिके वैदिके वेति संशये 'पानव्यापच्च तद्व'||दिति सूत्रम् । तत्र सूत्रत्रयव्यवहितो लौकिकपक्षस्तद्वादिति प्रत्यवमृश्यते इति ।

---

* जै. सू. अ.१२ पा.२ सू.३२ । † जै. सू. अ.१ पा.१ सू.२६ ।
‡ जै. सू. अ.३ पा.४ सू.३४ । § जै. सू. अ.३ पा.४ सू.३५ ।
|| जै. सू. अ.३ पा.४ सू.३८ ।

'अग्नयश्च स्वकालत्वाद्देयधर्मोऽपयातनम्* ।
व्याख्यानं वाक्यभेदेन' 'गुणकल्पास्त्वमी कृताः ॥५७॥
औत्पत्तिकस्तु गव्यस्य तथोष्णिक्ककुभोरिति ।

---

सूत्राऽन्यथाकरणमुदाहरति पश्विति । ज्योतिष्टोमे पशुधर्मविधिः किं त्रयाणामपि पशूनां साधारणः, अथ वा सवनीयस्यैव, अथ वाऽग्नीषोमीयसवनीययो,रुताऽग्नीषोमीयस्यैवेति संशये 'तुल्यः सर्वेषां पशुविधिः प्रकरणाऽविशेषा'†दिति सूत्रम । तदिदं सर्वपशूनां समानो विधिरित्यस्याद्यपक्षस्य प्रतिपादकमपि स तु 'स्थानाच्च पूर्वस्ये'‡-त्यादिसूत्राऽसङ्गतिप्रसङ्गात्तत्संगतिसिद्ध्यर्थमाद्यपक्षमुत्सूत्रं कृत्वा§ सवनीयस्येत्यस्मिन् पक्षे ऽन्यथा कृत्वा योजितं तुल्यः सर्वेषां पशुविधिः स्याद्यदि प्रकरणविशेषो भवेत्, अस्ति तु प्रकरणविशेष इति ।

वाक्यभेदमुदाहरति अग्नय इति५७ पादत्रयेण । 'ते सर्वार्थाः प्रयुक्तत्वादग्नयश्च स्वकालत्वा'‖दित्येतत्सूत्रं वाक्यभेदमाश्रित्याऽधिकरणान्तरं व्याख्यातम । तथा 'अभ्युदये दोहापनयः स्वधर्मा स्यात्प्रवृत्तत्वा,¶च्छृतोपदेशाच्चे**'ति सूत्रद्वयेनाऽभ्युदितेष्टौ दधिशृतयोर्देयस्वधर्माः कर्तव्या इत्युक्त्वा 'अपनयो वा ऽर्थान्तरे विधानात् चरुपयोवत्'††'लक्षणार्था शृतश्रुति'‡‡रिति सूत्रद्वयेन देयधर्माणामपयातनमुक्तम । तदिदं पूर्वयोः सूत्रयोरनयोश्च वाक्यैकभावेनैकाधिकरण्यादभ्युदितेष्ट्यामेव देयधर्माऽपयातनमुच्यतइति प्रतिभासमानमपि ततो भित्त्वा ऽधिकरणान्तरं पशुकामेष्टिविषयं व्याख्यातम् ।

---

* धर्मावपातनमिति २ पु. पा. । † जै. सू. अ.३ पा.६ सू.१८ ।
‡ जै. सू. अ.३ पा.६ सू.१९ । § मुत्सृज्य सूत्रं कृत्वेति.२पु.पा. ।
‖ जै. सू. अ.३ पा.७ सू.३९ । ¶ जै. सू. अ.९ पा.४ सू.४१ ।
** जै. सू. अ.९ पा.४ सू.४२ । †† जै. सू. अ.९ पा.४ सू.४३ ।
‡‡ जै. सू. अ.९ पा.४ सू.४४ ।

दर्शनाच्च विशेषस्य तथा ऽभ्युदयइत्यपि' ॥५८॥
सूत्रकारप्रशंसा वा लोकइत्यादिनोच्यते ।
प्रसिद्धैरभिधानाद्धि न शिष्याः क्लेशिता यतः ॥५९॥

---

गुणकल्पनायामुदाहरणानि दर्शयति गुणकल्पास्त्विति सपादेन। औत्पत्तिकसूत्रे लक्षणयोत्पत्तिशब्देन स्वभावाभिधानम्। गव्यस्य च तदादिषु* इत्यत्र गव्यशब्देन गोविकारतदवयववाचिना गावो वा एतत्सत्रमासत, इत्यर्थवादोदितगोसम्बन्धमात्रेण गवामयनस्याभिधानम्। तदयमर्थः। गवामयनस्य विध्यन्तः संवत्सरसत्रेष्वतिदिश्यतइति। तथा सामिधेनीविवृद्धावागम्यमानानाम् ऋचां सर्वासां 'समिध्यमानवतीं समिद्धवतीं चान्तरा निवेश'†इति पूर्वपक्षमुक्त्वा या एव धाय्याशब्दितास्तासामेव तत्र निवेशो नाऽन्यासामागन्तूनामन्ते निवेश इति सिद्धान्तमुक्त्वा तल्लिङ्गमिदमुच्यते 'उष्णिक्ककुभोश्चान्ते दर्शना'‡दिति। अत्रोष्णिक्ककुप्शब्देन त्रिष्टुभो वा एतद्वीर्यं यदुष्णिक्ककुभावित्यर्थवादात्कारणे कार्यवदुपचारात् त्रिष्टुबुच्यते। तदेष सूत्रार्थः। त्रैधातव्यायामधाय्याशब्दिता अग्ने त्री ते वाजिना त्री षधस्थेति त्रिष्टुबन्ते दृश्यते त्रिष्टुभा परिदधातीति। तस्माद्धाय्याशब्दितानामन्ते निवेश इति। तथा दर्शनाच्च विशेषस्य तथाऽभ्युदये इत्यत्र अभ्युदयशब्देनाऽभ्युदयसाधनभूतो द्वादशाहो लक्ष्यते। तदयमर्थः। द्वादशाहे अर्द्धिनः पादिनस्तृतीयिन इति समाख्याविशेषदर्शनात्तदनुरूपः प्रकृते दक्षिणाविभागः सर्वर्त्विजां न समो न प्रयासानुरूप इति।

स्तुतिपक्षमिदानीं परिगृह्णाति सूत्रकारेति[५९]। कीदृशी पुनः प्रशं-

---

* जै. सू. अ ८ पा. १ सू. १८। † जै. सू. अ. ९ पा. ३ सू. ४।
‡ जै. सू. अ. ९ पा ३ सू. ६।

भवितव्यं तु तेनेति प्रागस्मादेकवाक्यता ।
वेदाध्ययनवाक्याद्वा तेनाथेत्यस्य दूषणम् ॥६०॥
प्रसिद्धार्थपदैः शक्यः सूत्रैर्वेदार्थनिर्णयः ।
न च सो ऽस्त्यथशब्दस्य विना ते पूर्वकर्मणा ॥६१॥
प्रसिद्धार्थं पदं युक्तं तच्च नास्तीति दूषणम् ।
प्रसिद्धो ऽप्यथशब्दादेः किंपदार्थो ऽत्र वर्ण्यते ॥६२॥
प्रदर्शनार्थमित्येके के चिन्नानार्थवाचिनः ।
समुदायादवच्छिद्य भवदासेन कल्पितात् ॥६३॥

---

सेति तां दर्शयन् भाष्यं योजयति प्रसिद्धैरिति । उपयोगमान्द्यात् स्तुतिपक्षमनादृत्य सम्प्रत्यथशब्ददूषणपक्षं परिगृह्णाति भवितव्यमिति[६०] । भवितव्यं तु तेनेत्यतस्तत्तु वेदाध्ययनमित्यतो वा प्रागेकवाक्यभूतेन लोकइत्यादिना भाष्येणाऽथशब्ददूषणमुच्यतइति । प्रथमावधिना भाष्यं योजयति । प्रसिद्धार्थैति[६१] । परावधिना योजयति प्रसिद्धार्थमिति[६२] । भवितव्यन्तु तेनेत्यस्याऽर्थकथनं प्रसिद्धार्थं पदं युक्तमिति तच्च नास्तीति चाभिप्रायपूरणमिति । अत्र चोदयति प्रसिद्धो ऽपीति । सर्वव्याख्यादिषु पञ्चस्वपि पक्षेषु प्रसिद्धार्थग्रहणस्योक्तत्वात् अथशब्दादीनां पदार्थकथनं किमर्थमिति ।

परिहरति प्रदर्शनार्थमिति[६३] परिहारान्तरमाह के चिदिति । नानार्थमपि पदद्वयमेकीकृत्यानन्तर्यमात्रार्थतया

शक्तितोऽवयवञ्चैव वर्णयन्त्यष्टमादिवत् ।
न चात्र चोदना व्याख्या गौरवं तत्र चोदितम् ॥६४॥
यद्वाऽऽक्षेपो यथोक्तस्य वृत्ताभावादसम्भवात् ।
यदि लोकप्रसिद्धार्थग्रहणं क्रियते पदे ॥६५॥
स नास्त्यत्राऽथशब्दस्येत्यध्याहारादिकल्पनम् ।
वेदाऽध्ययनवृत्तत्वं स्नानस्योत्कर्षकल्पना ॥६६॥
नाऽव्याख्याते ऽथशब्दार्थे ज्ञायते तेन वर्ण्यते ।

---

भवदासेन कल्पितं पृथक्कृत्याऽवयवस्यैवाथशब्दस्याऽष्टमाद्याथशाब्दवदानन्तर्यार्थत्वं स्वयुक्त्या वर्णयितुं पदार्थकथनमिति । परिहारान्तरमाह न चेति[६४] । उभयव्याख्यायां हि यत्नगौरवम् । न चात्र चोदना काचिदपि व्याख्यायते, सूत्रमपि चेन्न व्याख्यायेत निर्विषयमेव भाष्यं स्यादिति । परिहारान्तरमाह यद्वेति । यत्प्रसिद्धार्थग्रहणं तदेव तत्र लोकइत्यादिना भाष्येणाऽथशब्दस्य वृत्ताभावेनाऽऽनन्तर्यार्थत्वाऽसम्भवेनाक्षिप्यते । कृते चाक्षेपे तत्समाधानाय युक्तमेव पदार्थकथनमिति ।

आक्षेपभाष्यं तत्र लोकइत्यादिकं* व्याचष्टे यदि लोकेति[६५] । परिहारान्तरमाह वेदाध्ययनेति[६६] । नेदमथशब्दव्याख्यानं तत्स्वरूपपरं किन्तु अथशब्दव्याख्याने सति चोद्यपरिहारक्रमेण वेदाध्ययन-

---

* तत्र लोके ऽयमथशब्दो वृत्तादनन्तरस्य प्रक्रियार्थो दृष्टः, न चेह किं चिद् वृत्तमुपलभ्यते, भवितव्यन्तु तेन, यस्मिन् सति अनन्तरं धर्मजिज्ञासा ऽवकल्पते। तथा हि यः प्रसिद्धपदार्थकः स कल्पितो भवति, तत्तु वेदाऽध्ययनं, तस्मिन् हि सति सा ऽवकल्पते। शा. भा. पृ. १ प. ५ ।

अनर्थके ऽथ वा ऽन्यार्थे प्रसिद्धिर्बाध्यते ध्रुवम् ॥६७॥
तस्माच्छ्रुताऽर्थसिद्ध्यर्थं वृत्तं किमपि गम्यते ।
विशिष्टलिङ्गविज्ञानाद्विशिष्टे लिङ्गिनीक्षिते ॥६८॥
सूत्रेणाऽसम्भवं मत्वा नैतदित्यब्रवीत्परः ।
आनन्तर्योपदेशेन तद्दृष्टार्थतया ऽपि च ॥६९॥

---

नवृत्तत्वं स्नानस्योत्कर्षकल्पना च वक्तव्या भवति तदर्थमिदं व्याख्यानम्। अव्याख्याते ह्यथशब्दे विवक्षितमपि तदसङ्गतत्वान्न वक्तुं शक्येतेति। अत्र पञ्चसु पक्षेषु यत्नगौरवपर्यन्तं पृथग् वाक्यम्। तत्र लोक-इत्यादि तु वाक्यान्तरम् अथशब्ददूषणार्थं, तस्य चावधिद्वयं पूर्ववद् द्रष्टव्यम्। तत्र भवितव्यमित्यादेः पूर्वेण दूषणग्रन्थेनैकवाक्यभूतस्य यो ऽर्थः स व्याख्यातः। प्रथमावधिपक्षे तु भवितव्यमित्यादिः परिहारग्रन्थः। तस्यार्थमाह अनर्थके इति[६७]। अथशब्दस्यानर्थक्ये ऽर्थान्तरवाचित्वे वा प्रसिद्धिबाधादानन्तर्यार्थत्वे स्थिते तद्बलेनैव किमप्युपपादकं कल्पनीयमिति सामान्योत्तरम् तत्तु वेदाध्ययनमिति विशेषो दर्शितः। यदा तु भवितव्यमिति दूषणभाष्यं तदा तु वेदाध्ययनमित्येवोत्तरमिति ।

अपरमप्यन्यस्यापीति चोद्यभाष्यं* तदयुक्तं, धर्मजिज्ञासात्मकलिङ्गबलेनैव वेदाध्ययनस्यैव लिङ्गिनो वृत्तत्वनिर्णयादत आह विशिष्टेति[६८]। सत्यमेवं तथापि सूत्रेणाऽस्यार्थस्याऽसंभवं मत्वा चोदितवानिति। एतदेव विवदितुं पृच्छति आनन्तर्येति[६९]। सूत्रेणैवानन्तर्यो-

---

* नैतदेवम् । अन्यस्यापि कर्मणो ऽनन्तरं धर्मजिज्ञासा युक्ता प्रागपि च वेदाऽध्ययनात् । शा. भा. पृ. १ प. ९ ।

वेदाध्ययनमाक्षिप्तं किमसूत्रितचोदना ।
येन वृत्तेन जिज्ञासा विना नैवोपपद्यते ॥७०॥
तदानन्तर्यमुक्तं हि दृष्टार्थमवकल्पते ।
क्रियमाणा च जिज्ञासा नियमाद्यस्य कस्य चित् ॥७१॥
क्रियेताऽनन्तरैवेति व्यर्थं तदुपदेशनम् ।
संकल्पादिभिरप्येषा विना सत्यं न सिध्यति ॥७२॥
साधारण्यात्तु ते ऽप्यत्र नोपदेश्याः कथं चन ।
तस्माद्धर्मबुभुत्सायामसाधारणकारणम् ॥७३॥
निर्वृत्तं सूत्रकारेष्टं तच्च नाध्ययनादृते ।
अन्यस्यापीत्यनेनैव वेदपाठे प्रबाधिते ॥७४॥

---

पदेशात्तस्य च दृष्टार्थत्वाद् वेदाध्ययनमाक्षिप्तमेवेति असूत्रितत्वोपालम्भो न युक्त इति । यथा च दृष्टार्थतया वेदाध्ययनाक्षेपस्तथा दर्शयति येनेति[७०] । यथा चानन्तर्योपदेशेन तदाक्षेपः तथा तमुपदर्शयति क्रियमाणेति[७१] । यत्किञ्चिदानन्तर्यं तावद्धर्मजिज्ञासायाः स्वभावत्वादनुपदेश्यम् अतस्तदुपदेशे तावत्क्रियाविशेषानन्तर्यमेव विवक्षितमिति निश्चिते दृष्टार्थतया वेदाध्ययनानन्तर्यं निश्चीयतइति । ननु संकल्पो ऽपि दृष्टोपकार्येव तदानन्तर्यमिदं कस्मान्न भवति अत आह संकल्पादिभिरिति[७२] । सर्वक्रियासाधारणत्वात्ते नोपदेश्या इति । उपसंहरति तस्मादिति[७३] ।

अपरमपि "प्रागपि च वेदाध्ययना"दिति चोद्यभाष्यं, तदाक्षिपति अन्यस्यापीति[७४] । यदैव ह्यन्यस्यापीति वेदाध्ययनमतन्त्रीकृतं

प्रागपीति न वक्तव्यं तत्राऽप्यन्यस्य संभवात् ।
पूर्वेणैव हि लब्धार्थे तादृशीं त्वित्यनेन किम् ॥७५॥
वक्ष्यमाणमनालोच्य संभवेत्परिचोदना ।
'न तावत्साध्यते ऽद्यापि चोदना धर्मसाधनम् ॥७६॥
इह वा कानि वाक्यानि विवरिष्यति जैमिनिः ।
धर्ममात्राभिधानाद्धि बुद्धादिवचनान्यपि ॥७७॥

---

तदेवाविशेषेण प्रागपि प्रसक्तिरुक्तैवेति प्रागपीति पुनरुक्तमिति । तथा न शिष्म इत्यादि*परिहारभाष्यं च, तत्तु वेदाध्ययनमित्यनेन पुनरुक्तमित्याह पूर्वेणेति[७५]। तत्रापि हि "तस्मिन्सति सा ऽवकल्पते" इति जिज्ञासाऽनुपपत्त्यैव वेदाध्ययनाक्षेप उक्तः, अत्रापि वेदाध्ययनमन्तरेण न संभवतीति तावन्मात्रमेवोच्यते अतः पुनरुक्तमिति । एवमाक्षेपे सति चोद्यं तावत्समाधत्ते वक्ष्यमाणमिति[७६]। एतदेव विवृणोति न तावदिति द्वयेन । न हि यद्यपि वेदार्थ एव धर्म इति ज्ञातं नापि वेदवाक्यान्येव जैमिनिर्विचारयिष्यतीति एतदपि ज्ञायते, धर्ममात्रं तु श्रुत्वा चैत्यवन्दनादीनामपि धर्मत्वं भगवांश्चोदितवान् अन्यस्यापि बुद्धवाक्याऽध्ययनादेरनन्तरं धर्मजिज्ञासा युक्तेति नैकान्ततो वेदाध्ययनानन्तर्यं तस्या इति । अत्र च पक्षे "प्रागपि च वेदाध्ययना"दिति भाष्यं भिन्नक्रमं योजनीयम् । अपि च प्राग्वेदाध्ययनात् धर्मजिज्ञासा कर्त्तव्या अतो नाऽध्ययनानन्तर्यं तस्या इति । तथा हि । हानोपादानार्थं जिज्ञासा प्रागेव हानोपादानाभ्यां कर्त्तव्या अतो धर्मं जिज्ञासित्वा वेदार्थ एव

---

* तदानीं त्वित्यादीति २ पु. पा. ।

पठित्वा धर्मजिज्ञासेत्यन्यस्यापीति चोदना' ।
'यद्वा भवतु नामेदृक् सूत्रं वेदमधीत्य तु ॥७८॥
जिज्ञासानन्तरं कार्येत्यत्रापि द्वयमीप्सितम् ।
नाऽनधीत्य न चाप्यन्यत्कृत्वेत्येतन्न लभ्यते ॥७९॥
वक्ष्यमाणवचोभङ्ग्योर्वाक्यभेदप्रसङ्गतः ।
अधीत्यैवेति हि विधौ स्नानादेरप्यनन्तरा ॥८०॥
भवेद्धर्मस्य जिज्ञासा नाऽनन्तर्यविधिस्तदा ।
आनन्तर्यविधाने तु या वेदाध्ययने कृते ॥८१॥
इत्येवमनुवादत्वात्प्रागप्येषा प्रसज्यते' ।

---

धर्म इति ज्ञात्वा पश्चाद्धर्मोऽवबोधाय वेदो ऽध्येय इति वक्ष्यमाणाऽऽलोचने ऽपि संभवत्येव चोद्यमित्याह यद्वेति[७८] चतुर्भिः । वेदमधीत्याथाऽतो धर्मजिज्ञासा इतीदृशम इदं सूत्रमङ्गीकृत्यैव चोद्यम । अत्र हि द्वयमीप्सितम अधीत्यैव नाऽनधीत्येति, तथा ऽनन्तरमेव नान्यत्कृत्वेति । तच्चैकस्मिन् वाक्ये न लभ्यते वेदं नाऽनधीत्येत्येकस्यां विधीयते ऽनूद्यानन्तर्यं, विपरीतमन्यस्यामिति वक्ष्यमाणभाष्योक्तवचोभङ्गिद्वयप्रसङ्गेन वाक्यभेदप्रसङ्गात् । अत एकस्मिन्नेव विधातव्ये यद्यधीत्यैवेति विधीयते तत्रेदं चोद्यम । अन्यस्यापि स्नानादेरनन्तरं धर्मजिज्ञासा युक्ता न हि तदानीमानन्तर्यस्य विधिरिति । अथ त्वनन्तरमेवेति विधिः ततो या वेदमधीत्य जिज्ञासेत्येवमध्ययनपश्चाद्भाविनीं जिज्ञासामनूद्य तस्या एवानन्तर्यं विधीयते । ततश्च प्राग्वेदाध्ययनाद् धर्मजिज्ञासा न केन चिद्वारितेति प्रागपि वेदाध्ययनात्स्यादिति चोद्यम ।

बुद्धवाक्यादिपाठस्य तादृशीं त्वित्यपाक्रिया ॥८२॥
प्रागपीति च चोद्यस्य सामर्थ्याद्वेदलाभतः ।
'नैवैतयोर्वचोभङ्ग्योरेको ऽप्यर्थो विधीयते ॥८३॥
अपि चेत्यादिकेनोक्तं' किं त्वित्येतद्विधीयते ।

---

एवं चोद्याभिप्रायं व्याख्याय तादृशीं त्वित्यादि *परिहाराभिप्रायमाह बुद्धेति[८२]। यत्तावद्वक्ष्यमाणाऽनालोचनेनाऽन्यस्यापि बुद्धवाक्यादिपाठस्याऽनन्तरं धर्मजिज्ञासेति चोद्यं तस्य तादृशीमित्यनेन वेदवाक्यानामनेकविधो विचार इह वर्त्तितव्य इति वक्ष्यमाणप्रदर्शनेनोत्तरम् । यदपि हानोपादानार्थे जिज्ञासा प्रागेवाध्ययनात्कर्त्तव्येति चोद्यं तस्याप्येतदेवोत्तरम् । अनेकविधवेदवाक्यविचारार्था जिज्ञासा न प्रागध्ययनात्संभवतीति । नन्वनवगते वेदार्थस्य धर्मत्वे कथं तदर्थं वेदाध्ययने प्रवर्त्तन्ते, हितकारिभिः पित्रादिभिः प्रवर्त्तिताः प्रवर्त्तन्तइत्यदोषः । यदपि वचोव्यक्तिद्वयाऽसंभवादन्यतरग्रहणे वेतरस्याऽविधानाच्चोद्यं तत्रानन्तर्यविधानं परिगृह्णीतां तत्परिग्रहाच्चान्यस्यापीति चोद्यं नावतरति । यत्तु तथा सत्यधीत्यैवेत्यविधानात्प्रागपि स्यादिति चोद्यं तस्यापि तादृशीमित्येतदेवोत्तरमित्याह प्रागपीति[८३] । कथमित्याह सामर्थ्यादिति । वेदवाक्यविचारो हि नाऽनधीतवेदस्य संभवति अतः सामर्थ्यसिद्धत्वादध्ययनस्याधीत्यैवेत्यविधावपि न प्राक् प्रसक्तिः ।

---

* तादृशीं तु धर्मजिज्ञासामधिकृत्याऽथशब्दं प्रयुक्तवानाचार्यः, या वेदाऽध्ययनमन्तरेण न संभवति । कथम्? वेदवाक्यानामनेकविधो विचार इह वर्तिष्यते । शा· भा· पृ· १ प· ११ ।

आनन्तर्यं पुरस्ताच्च नापि शिष्म इतीह तु ॥८४॥
के चिदध्याहरन्त्यस्य सूत्रस्याऽन्यपरत्वतः ।

---

अत्राऽपरमपि चेत्यादि भाष्यं* तस्यार्थमाह नैवे[८३]त्युक्त[८४]मन्तेन। एते वचोव्यक्ती तयोरेको ऽपि श्रौतो ऽर्थो न विधीयते। तदिदमपि चेत्यादिना वक्ष्यतीत्यन्तेन भाष्येणोक्तमिति। किं तर्हि विधीयते तत्राह किं त्विति। किं त्वधीते वेदे इत्यादिना एवमर्थ उपदेश† इत्यन्तेनोक्तं, गुरुकुलवासाऽवसानस्य स्मार्त्तस्य निवारणमस्मिन्सूत्रे विधीयतइति। अस्मिंश्च वाक्ये के चिदध्याहारन्तीत्याह आनन्तर्यमिति। "नैव वयमिह वेदाध्ययनात्पूर्वं धर्मजिज्ञासायाः प्रतिषेधं शिष्म" इत्यस्यानन्तरं नापि परस्तादानन्तर्यं शिष्म इत्यध्याहरन्ति। अध्याहारे कारणमाह अस्य सूत्रस्येति[८५]। गुरुकुलवासनिवृत्ति-

---

* अपि च नैव वयमिह वेदाऽध्ययनात् पूर्वं धर्मजिज्ञासायाः प्रतिषेधं शिष्मः; परस्ताच्चानन्तर्यम् । न ह्येतदेकं वाक्यं पुरस्ताच्च वेदाध्ययनाद्धर्मजिज्ञासां प्रतिषेधिष्यति, परस्ताच्चानन्तर्यं प्रकरिष्यति, भिद्येत हि तथा वाक्यम् । अन्या हि वचनव्यक्तिरस्य पुरस्ताद् वेदाध्ययनाद्धर्मजिज्ञासां प्रतिषेधेत, अन्या च परस्तादानन्तर्यमुपदिशेत, वेदमधीत्येत्येकस्यां विधीयते अनूद्यानन्तर्यं विपरीतमन्यस्याम् । अथैकत्वाच्चैकवाक्यतां वक्ष्यति । शा. भा. पृ. २ प. १३ ।

† किं (च) तु अधीते वेदे द्वयमापतति-गुरुकुलाच्च समावर्तितव्यं, वेदवाक्यानि च विचारयितव्यानि, तत्र गुरुकुलान्मा समावर्तिष्ट, कथं तु वेदवाक्यानि विचारयेदित्येवमर्थो ऽयमुपदेशः । शा. भा. पृ. २ प. ७ ।

न वार्यते ऽनधीतत्वं नाऽनन्तर्यं विधीयते ॥८५॥
सामर्थ्याऽसिद्ध्यदृष्टार्थप्रसङ्गात्तेन लक्षणा ।
आनन्तर्यवचोव्यक्तिराश्रितैवात्र लक्ष्यते ॥८६॥
श्रुतार्थं त्वपरित्यज्य* लक्षणार्थो विधीयते ।
प्रतीता धर्मजिज्ञासा वेदाध्यायादनन्तरा ॥८७॥
तत्कालस्याऽवरुद्धत्वात्स्नानाभावं हि लक्षयेत् ।

---

व्यावृत्तिपरत्वात्सूत्रस्य तत्परत्वमेव कुतः कथं चेदं सूत्रं गुरुकुलनिवासनिवृत्तिव्यावृत्तिं दर्शयति, न हि तदनुरूपाणि सूत्रे पदानीत्यत आह न वार्यतइति । न तावदधीत्यैवेत्येतद्विधातव्यं सामर्थ्यसिद्धत्वादित्युक्तम् आनन्तर्यस्वरूपमप्यदृष्टार्थत्वान्न विधेयं, न हि न्यायशास्त्रे युक्तमदृष्टार्थविधानम्, अतो ऽन्यपरत्वमेव, लक्षणया च तत्परत्वं सिद्ध्यतीति । तमिममध्याहारपक्षं दूषयति आनन्तर्येति[८६]। भाष्ये तावदानन्तर्यवचनव्यक्तिरत्राश्रितैव निषेधस्य श्रुतत्वाद्गम्यते न चैवमदृष्टार्थत्वमित्याह श्रुतार्थं त्विति[८७]। एतदुक्तं भवति । श्रुतार्थद्वारा हि लक्षणा अजहत्स्वार्था तस्मादानन्तर्यवचनव्यक्तिमाश्रित्यैव श्रौततदर्थपरिग्रहे सत्यदृष्टार्थत्वापाताल्लक्षणागम्यो गुरुकुलवासनिवृत्तिव्यावृत्तिरूपो ऽर्थो विधीयतइति । केन पुनः संबन्धेन तद्व्यावृत्तिर्लक्ष्यते ऽत आह प्रतीतेति । स्नानजिज्ञासे हि मिथो विरुद्धे । स्नानशब्देन ह्यत्र सकलब्रह्मचारिधर्मनिवृत्तिर्लक्ष्यते अतो गुरुकुलवासस्याऽपि निवृत्तिः स्यात्सा च विचारविरोधिनी विचारस्याप्यध्ययनवद्गुर्वधीनत्वादविरोधिसत्ता च विरोध्यन्तरा-

---

* श्रुतार्थं तु परित्यज्येति का. पा. ।

विरोधो युगपत्प्राप्तेर्दौर्बल्यं वेदबाधनात् ॥८८॥
स्नानस्य तेन बाधः स्याद्धर्मजिज्ञासया बलात् ।

---

ऽभावव्याप्ता तेनाध्ययनानन्तरकाले जिज्ञासा प्रतीता सती तस्य कालस्य स्वेनाऽवरुद्धत्वात् स्वविरुद्धस्य स्नानस्याभावं लक्षयतीति ।

ननु विरोधे सति लक्षयेन्न त्वत्रास्ति विरोधः पर्यायेणोभयसंभवात्, अत आह विरोध इति८८ ।सत्यं पर्याये न विरोधः युगपत्तु प्राप्तौ विरोधो ऽस्ति, स्नानं हि वेदाध्ययनानन्तरमेव प्रतीयमानमुत्कर्षकारणाभावादनन्तरमेव प्राप्तं, धर्मजिज्ञासा ऽप्यथशब्देन तस्मिन्नेव काले प्रतीयमाना तेन विरुध्यते । ननु सत्यपि विरोधे वाचिकत्वेन स्नानस्य बलीयस्त्वान्न बाधो युक्तः, धर्मजिज्ञासैव तु न्यायप्राप्ता दुर्बलत्वात्तु बाधितव्या ।तदिदं यद्येवमित्यादिना न चाम्नायो नामातिक्रमितव्य इत्यनेन भाष्येण* चोदितम् ।

तत्परिहारभाष्यम् अतिक्रमिष्याम इत्याद्यर्थवादतां वक्ष्यती†त्यन्तं तस्यार्थमाह दौर्बल्यमिति । स्नानस्यैवात्र दौर्बल्यं तदाश्रयणे समस्तस्यैव वेदस्याऽर्थावबोधार्थतया ऽध्ययनोपात्तस्य तदसाध-

---

* यद्येवं न तर्हि वेदाध्ययनं पूर्वं गम्यते, एवं हि समामनन्ति-वेदमधीत्य स्नायात् इति । इह च वेदमधीत्य स्नास्यन् धर्मं जिज्ञासमानः इममाम्नायमतिक्रामेत् । न चाऽऽम्नायो नामाऽतिक्रमितव्यः । शा·भा. पृ. २ प. १० ।

† तदुच्यते, अतिक्रमिष्याम इममाम्नायम् अनतिक्रामन्तो वेदमर्थवन्तं सन्तमनर्थकमवकल्पयेम, दृष्टो हि तस्यार्थः कर्माऽवबोधनं नाम । न च तस्याऽध्ययनमात्रात् तत्रभवन्तो याज्ञिकाः फलं समामनन्ति । समामनन्ति च तत्रापि 'द्रव्यसंस्कारकर्मसु परार्थत्वात् फलश्रुतिरर्थवादः स्यात्' इत्यर्थवादतां वक्ष्यति । शा. भा. पृ. २ प. १४ ।

'दृष्टार्थत्वादिसंयुक्तं वाक्यं लक्षणया त्विति ॥८९॥
पुनरुक्त्या गतार्थत्वात्त्यक्तं कैश्चि'त्तदुच्यते ।

---

नत्वेनानर्थक्यापत्तेः । तदिदमुक्तं "वेदमर्थवन्तं प्रयोजनवन्तं सन्तमनर्थकमवकल्पयेमेति । नन्वदृष्टार्थता भविष्यति, कथमानर्थक्यमित्यत उक्तं "दृष्टो हि तस्यार्थः कर्मावबोधनं नामे"ति । किं च एकस्यापि वेदवाक्यस्य बाधे स्मृतिरप्रमाणं भवति किं पुनः समस्तस्यैवानर्थक्यापत्तौ । तस्मात्स्नानस्यैव स्मार्त्तस्य धर्मजिज्ञासया बलवत्त्वाद्बाधः । स्वाध्यायविधिना ह्यर्थावबोधायाऽध्येतव्यो विहितो वेदो विचारमन्तरेण तादर्थ्याऽसंभवाद्विचारमाक्षिप्य तद्विरुद्धं स्नानं बाधते इति । एवं स्मृतिविरोधाद्विचारो न कर्त्तव्य इति ।

एतच्चोद्यं विचार एव स्मृतिं बाधतइत्येवं परिहृतम्, । इदानीं विरोधाभावादपि न स्मृतिर्विचारं बाधते इति दर्शयितुं भाष्यं न चाधीतवेदस्येत्यादि नानन्तर्य*इत्येतदन्तम् । तस्यार्थः । स्नानस्याध्ययनोत्तरकालमात्र स्मृतावुक्तम्, उत्कर्षकारणाभावे त्वनन्तरं स्याद् वेदविरोधेन त्वानन्तर्ये बाधिते ऽपि न स्मृतेर्विरोध इति । अपरमपि दृष्टार्थता चाध्ययनस्यानन्तर्ये व्याहन्येत लक्षणया त्वेषो ऽर्थः स्या-† दिति भाष्यद्वयं, तत्र प्रथमं दृष्टो हि तस्यार्थ इत्यनेन पुनरुक्तत्वाद्

---

* न चाऽधीतवेदस्य स्नानानन्तर्यमेतद् विधीयते । न ह्यत्रानन्तर्यस्य वक्ता कश्चिच्छब्दो ऽस्ति, पूर्वकालतायां क्त्वा स्मर्यते नानन्तर्ये । शा. भा. पृ. २ प. १९ ।

† शा. भा. पृ. २ प. २१ ।

यद्यप्यस्य भवेद्वाच्यमानन्तर्यमसंशयम् ॥ १० ॥
तथापि पूर्वतामात्रं लक्षयेदविरोधतः ।
ग्रन्थग्रहणमात्रे च कृते स्नानं विरुध्यते ॥ ११ ॥
अधीत्येत्यधिगम्येति व्याख्याने त्वविरोधिता ।
यस्त्वेवमविरोधित्वं कुर्वन्नाप्लवनं वदेत् ॥ १२ ॥
अदृष्टायाऽथ वा ऽप्यन्यः संस्कारस्तस्य चोत्तरम् ।
इहाऽस्नानादिनियमो यः कृतो ब्रह्मचारिणः ॥ १३ ॥

---

लक्षणयेति वा ज्ञातार्थत्वात् कैश्चिद्व्याख्यातृभिः परित्यक्तं, तत्तावदु-पन्यस्यति दृष्टार्थत्वादीति[९] कैश्चि[१०]दन्तेन । स्वयं तु समर्थयते तदुच्यतइति । पूर्वभाष्ये आनन्तर्यं क्त्वाशब्दस्य न वाच्यमित्यु-क्तम्, । इदनीं तु तस्यानन्तर्यं वाच्यं यद्यपि तथापि श्रौतार्थपरिग्रहे ऽध्ययनस्य दृष्टार्थता व्याहन्येतेति तदविरोधाय पूर्वकालतामात्रमे-वार्थो लक्षणया ग्रहीतव्य इत्युच्यतइति । अपरमप्यविरोधकारण-माह ग्रन्थेति[११] । इण् गतावित्यस्येदं रूपमित्यर्थः । एतच्चैवमपि संभवतीत्येतावन्मात्रेणोक्तम् । परमार्थतस्त्वध्ययनप्रकरणात्समुदा-यप्रसिद्धेर्बलीयस्त्वाच्चाध्ययनमेवार्थो नाऽधिगतिः ।

न चेदं स्नानमित्यादिभाष्या*ऽर्थमाह यस्त्वेवमिति[१२] एवं वक्ष्य-माणप्रकारेणाऽविरोधस्मृतेर्दुर्बलाप्लवनमात्रं ज्योतिष्टोमादिवत्फलार्थं दीक्षितस्नानवत् संस्काररूपं वा स्नानं स्मृत्यर्थं यो मन्यते तस्योत्तरमिदं भाष्यमिति । तदेवोत्तरं दर्शयति इहेति[१३]द्वयेन । ब्रह्मचारिधर्मस्या-

---

* न चेदं स्नानमदृष्टार्थं विधीयते, किं तु लक्षणया ऽस्नानादिनियमस्य पर्यवसानं वेदाऽध्ययनसमकालमाहुः । शा. भा. पृ. २ प. २२ ।

अवधित्वमनाश्रित्य सो ऽवसानमपेक्षते ।
ततो ऽपेक्षावशात्स्नानमस्नानादिनिवर्तनम् ॥ १४ ॥
विरोधसाहचर्याभ्यां दृष्टार्थत्वेन लक्षयेत् ।
तस्मादध्ययनस्नानजिज्ञासाक्रमवाचिनाम् ॥ १५ ॥
दृष्टार्थत्वाय* शब्दानामेवं व्याख्येयमाश्रिता ।
स्नात्वा जिज्ञासमानोपि ननु वेदं न बाधते ॥ १६ ॥
तेनाऽविरोधिता तस्ये'त्येवं वदत उत्तरम् ।
यथैवाऽध्ययनात्स्नानं स्मर्यते समनन्तरम् ॥ १७ ॥
तथा ततः परो ऽप्यन्यः पदार्थो ऽन्यः परस्ततः ।

---

ऽस्नानादिनियमस्याऽनिर्दिष्टावधेरवधिमपेक्षमाणस्याऽवधिविधिरयमपेक्षितत्वात्, नाऽऽप्लवनमात्रविधान,मनपेक्षितत्वात् । अतः स्नानशब्देन स्वविरुद्धस्याऽस्नानस्य तत्सहचारिणां च धर्माणां निवृत्तिर्लक्ष्यते वेदमधीत्य स्नायात्, अस्नानादिकं वर्जयेत्, अध्ययनसमाप्तिरेव तस्याऽवधिरिति । सर्वधर्माणां चाध्ययनाङ्गत्वात्तत्समाप्तौ निवृत्तिर्न्यायप्राप्तैव, न्यायमूलत्वाच्च स्मृतेर्लक्षणार्थत्वमदोष इति ।

प्रकरणार्थमुपसंहरति तस्मादिति[१५]। स्वाध्यायो ऽध्येतव्य इत्यध्ययनवाचिनः शब्दस्यार्थावबोधनार्थत्वं यद्व्याख्यातं, यच्च स्नानशब्दस्याऽस्नानादिनिवृत्तिपरत्वं, यच्च जिज्ञासाक्रमवाचिनो ऽथशब्दस्य गुरुकुलनिवृत्तिव्यावृत्तिपरत्वं, तत्र सर्वत्र दृष्टार्थत्वं कारणमिति। अत्र चोदयति स्नात्वेति[१६] । स्नात्वापि ह्यर्थे जिज्ञास्यमाने वेदस्याऽऽनर्थक्यं न भवति, अतः स्मृत्यविरोधार्थमेवं क्रियताम् इति।

---

* दृष्टार्थत्वेनेति २ पु. पा. ।

ततश्चावश्यकर्तव्ये बाधे स्मार्तस्य कस्य चित् ॥ ९८ ॥
योग्यत्वादागते काले प्राथम्यात्स्नानबाधनम्' ।
सो ऽयं पाठक्रमस्यार्थाद्बाध इत्यवगम्यते ॥ ९९ ॥
गुणप्रधानयोर्वापि विरोधाद् गुणबाधनम् ।
स्नानोपलक्षिता चात्र निवृत्तिर्गुरुवेश्मनः ॥ १०० ॥

---

परिहरति एवं वदत इति[९७] बाधन[९९]मन्तेन । भवेदप्येवं यद्यविरोधो भवेत्, एवमप्यस्ति विरोधः स्नात्वा भार्याम् उपगच्छे-दिति स्नानानन्तरं गार्हस्थ्यविधानात् । ततः परमपि कृष्णकेशो ऽग्नी-नादधीतेत्यादिश्रुतेराधानादि कर्त्तव्यं, तदवश्यकर्त्तव्ये कस्य चिद्बा-धे ऽध्ययनानन्तरमुपनिपतितो विचारस्तत्कालवर्त्ति स्नानमेव बाधते। किं चाऽविदुषो ऽधिकाराभावात्प्रागेव कर्मभ्यो विद्या ऽर्ज्जयितव्या, न चान्तरेण विचारं तदर्ज्जनं संभवति, अतः स्नानात्प्रागेव विचारः कर्त्तव्य इति । एवं स्नानस्याध्ययनानन्तर्यबाधमुक्त्वा ऽत्रैवाधिकर-णमुदाहरति सो ऽयमिति । स्नानस्याध्ययनानन्तर्यं पाठप्राप्त,म-र्थक्रमेणाध्ययनप्रयोजननिबन्धनेन जिज्ञासानन्तर्येण बाध्यते पाकहो-मयोरिव, अर्थक्रमो हि पाठक्रमस्य बाधक इति पञ्चमे वक्ष्यते । ननु क्त्वाप्रत्ययात् श्रुतिक्रमो ऽयं न पाठक्रमः । सत्यम् । श्रुतिक्रमो ऽपि भवन् स्मृतिगतत्वेन विप्रकृष्टार्थत्वात् पाठक्रमतुल्य इति पाठक्रम उच्यते । अथ वा क्त्वाप्रत्ययस्य पूर्वकालवाचित्वात्तत्परश्रुत्यभावा-भिप्रायेणोक्तमिति । अधिकरणान्तरमुदाहरति गुणेति[१००] । क्रमो हि पदार्थानामङ्गं तदिहाध्ययनस्नानयोरानन्तर्ये समाश्रीयमाणे प्र-धानभूतमध्ययनमेव प्रयोजनाभावाद् बाधितं स्यात् , अतस्तदनुरो-धेन क्रमस्यैव बाध इति । एवं स्मार्त्तस्य क्रमस्याऽविशेषेण बाधम-

विरोधित्वेन बाध्येत न तु मध्वादिभक्षणम् ।
तस्माद् गुरुकुले तिष्ठन्मधुमांसाद्यवर्जयन् ॥ १०१ ॥
जिज्ञासेताऽविरुद्धत्वाद्धर्ममित्यवगम्यते ।
गुरुगेहनिवृत्त्यंशो यावच्च न समाप्यते ॥ १०२ ॥
तावत्सकलवाचित्वान्न स्नानं पर्यवस्यति ।
गुरुगेहादनावृत्तः स्नातको हि न कथ्यते ॥१०३॥
तत्परत्वविधानाच्च न तावद्दारसङ्ग्रहः ।
व्याख्याय कीर्तिता चात्र स्नानादिति पुनः स्मृतिः॥१०४॥

---

भिधाय सम्प्रति क्रमं विशिनष्टि स्नानेति । स्नानलक्षिताया गुरुकुलनिवृत्तेरेवाध्ययनानन्तर्यं बाध्यते तस्या एव विचारविरोधित्वान्न तु मध्वादिभक्षणस्य, अविरोधित्वादिति । ततश्चैवमनुष्ठातव्यमित्याह तस्मादिति[१०१] । किमेवं सति दारसंग्रहोपि कर्त्तव्यः, नेत्याह गुरुगेहेति[१०२] । गुरुगेहनिवृत्तिर्यावन्न भवति तावत्स्नानम् अस्नानादिनिवर्त्तनं स्मृत्युक्तं न पर्यवस्यति तदपर्यवसानेष्वस्नातको न भवति। एतदेव वृद्धप्रयोगे दर्शयति गुरुगेहादिति[१०३] । ततः किमित्यत आह तत्परत्वेति[१०४]। स्नातकस्य हि भार्याधिगतिः स्मर्यते न चाऽसमाप्तब्रह्मचारिधर्मः स्नातको भवति, अतो न दारसंग्रह इति । अत्र भाष्यं "वेदमधीत्य स्नायाद् गुरुकुलान्मा समावर्त्तिष्टेत्यदृष्टार्थतापरिहारायैवे"ति* तदसंगतार्थं मत्वा भित्त्वा व्याचष्टे व्याख्यायेति। पूर्वमधीत्य स्नायात् इति अस्नानादिनियमपर्यवसानार्थतां स्मृतेर्व्याख्याय तामेवानुकीर्त्तितवान् । अयमेवार्थो ऽस्याः स्मृतेरिति भाष्या-

---

* शा. भा. पृ. ३ प. ११ ।

समावर्तिष्ट मेत्यादि स्मृतेर्यद्यप्यनन्तरम् ।
विपरीतार्थमित्यस्मात्तद्वाक्यादपनीयते ॥१०५॥
अथशब्देन यो बाधः पुरस्तादुपवर्णितः ।
तन्मात्रस्यैव बाधो ऽत्र दृष्टार्थत्वात्प्रदर्शितः ॥१०६॥
स्मृतिप्राप्तमिदानीं तु मधुमांसाद्यवर्जनम् ।
प्रतिषेधन्नदृष्टार्थं सूत्रकारो न शोभते ॥१०७॥
निवृत्त्य गुरुगेहाच्च जिज्ञासार्थः पुनर्भवेत् ।
प्रवेशः सोप्यदृष्टार्थ इति नैवेह सूत्रितः ॥१०८॥

---

र्थं इत्यर्थः । गुरुकुलान्मा समावर्त्तिष्टेत्येतत्तु स्मृतिविपरीतार्थत्वात् ततो ऽपनेतव्यमित्याह समावर्त्तिष्टेति[१०५] । अपनीतस्यार्थमाह अथेति[१०६] । स्मृतेर्लक्षणार्थतामुक्त्वा तत्प्रसङ्गादथशब्दस्यानन्तर्यस्वरूपपरत्वं हित्वा गुरुकुलान्मा समावर्त्तिष्टेत्येवंपरत्वं यदुक्तं तत्रापि दृष्टार्थत्वमेव कारणम् इत्येतदनेनोच्यते, न हि भाष्यकारेणेदमुक्तम् इति । अथ वा न सर्वस्य स्मृत्यर्थस्य बाधः किं तु गुरुकुलनिवृत्तिव्यावृत्तिमात्रस्येत्यत्रेदं दृष्टार्थत्वं कारणम् इत्याह तन्मात्रस्येति । एतदेव विवृणोति स्मृतीति[१०७] । इदानीमधीते वेदे स्मृतिप्राप्तं मधुमांसाद्यवर्ज्जनं धर्मजिज्ञासायामविरोधि प्रतिषेधन्नदृष्टार्थत्वेन प्रतिषेधेन्न चैतद्युक्तमिति। ननु स्मृतिबलेन गुरुगेहान्निवृत्तिः, पुनः प्रवेशो धर्मजिज्ञासायाः को विरोधः, अत आह निवृत्त्येति[१०८] । इदं चोद्यं प्रागन्यथा परिहृतम्, इदानीं त्वदृष्टार्थतया परिह्रियतइत्यपौनरुक्त्यम्। गुरुगेहावस्थितस्यैव ह्यकृतार्थस्य यद् गुरुगेहान्निवर्त्तनं प्रवेशश्च तदु-

निर्गमो हि कृतार्थस्य दृष्टार्थो गुरुवेश्मनः ।
स्मर्यते तस्य नार्थः स्यादकृतार्थस्य निर्गमे ॥ १०९ ॥
अथशब्दप्रसिद्ध्यैव वेदग्रहणहेतुता ।
आनन्तर्योपदेशित्वादतःशब्देन किं पुनः ॥ ११० ॥
योग्यत्वमथशब्देन यद्यपि प्रतिपादितम् ।
तदेव हेतुरत्रेति नातःशब्दाद्विना भवेत् ॥ १११ ॥
लक्षणं पुरुषस्यैव तदा तद्धि प्रसज्यते ।
जिज्ञासायाश्च हेतुत्वे फलार्थत्वादि संभवेत् ॥११२॥

---

अथमदृष्टार्थं स्यात् । ननु वेदमधीत्य स्नायादिति वाचनिकं निष्क्रमणमदृष्टार्थतयापि क्रियमाणं न दुष्यति इत्यत आह निर्गम इति[१०९] । सत्यं यद्यदृष्टार्थो निर्गमः स्या,दयन्तु कृतार्थस्याश्रमान्तरनिवेशाय गुरुगेहान्निर्गमो दृष्टार्थः स्मर्यते, अतो ऽकृतार्थस्य निर्गमो ऽनर्थक इति ।

अतःशब्दमिदानीं व्याचिख्यासुस्तावदाक्षिपति अथशब्देति[११०] । दृष्टार्थं ह्यध्ययनानन्तर्यं, यदि चाध्ययनं जिज्ञासायां हेतुः स्यात्ततस्तदानन्तर्यं दृष्टार्थं भवति नान्यथा । अतो ऽथशब्देनैवाध्ययनहेतुता सिद्धेति किमतःशब्देनेति । परिहरति योग्यत्वमिति[१११] । अध्ययनेन धर्मजिज्ञासाया योग्यत्वं भवतीत्येतादृशं हेतुत्वं यद्यप्यथशब्देन सिद्धं तथापि तस्यैवानुष्ठानहेतुत्वं वक्तुमतःशब्द इति । एतदेव विवृणोति लक्षणमिति[११२] । एवंविधः पुरुषो धर्मजिज्ञासाऽधिकारीत्येतावदथशब्देन सिद्ध्यति, जिज्ञासाहेतुश्च फलार्थित्वाद् यद्यपि संभवति । फलार्थित्वशब्देन कामश्रुतयो ऽभिधीयन्ते । कामश्रुतयो हि विद्यार्थित्वात्तत्सिद्ध्यर्थं विचारमाक्षिपेयुरिति संभाव्यते, ताश्चेद्विद्यां प्रयुञ्जीरँस्ततः शूद्रमधिकृत्य शूद्रस्यापि प्रयुञ्जीरन्, ततो ऽध्ययन-

अतःशब्दगृहीतं वा तत्राऽध्ययनमाश्रितम् ।
हेतावकथ्यमाने हि मङ्गलाद्यप्यसौ वदेत्* ॥११३॥
स्नानबाधस्य वा हेतुरत इत्युच्यते पुनः ।
योग्यस्याऽधीतवेदत्वान्नावस्थातुं हि लभ्यते† ॥११४॥

---

विधिरेव विचारस्य प्रयोजक इति वक्तुमतःशब्द इति । एतदुक्तं भवति । वेदाध्ययनानन्तरमत एवाधीतवेदत्वात्कारणात् तदर्थं धर्मजिज्ञासा कर्त्तव्येति । अध्ययनविधिर्हि अर्थज्ञानार्थतया अध्ययनं विदधद्विचारमन्तरेण तदसंभवाद्विचारमाक्षिपतीति । अधीते वेदे तूष्णीमवस्थातुं न लभ्यते । अध्ययनविधिश्च त्रयाणामेव वर्णानां प्रकृतानामुपनयनसंस्कृतानामध्ययनं विचारं च विधत्ते, तेषु च विद्वत्सु लब्धेषु कामश्रुतयो नाऽविद्वांसमधिकृत्य तस्य विधां प्रयुञ्जते ततः शूद्राधिकारो निवर्त्तते । ततः प्रयोजनवानतःशब्द इति । परिहारान्तरमाह अतःशब्देति[११३]। कथमित्याह हेताविति । वृत्तस्य हि हेतुत्वमतःशब्दो वदति तेन यस्य वृत्तस्य हेतुत्वं तदतःशब्देनाऽपेक्षितमिति प्रत्ययादध्ययनानन्तर्यसिद्धिः । अन्यथा मङ्गलार्थताऽप्यथशब्दस्याशङ्क्येत । यद्यपि माङ्गल्यमन्यार्थनीयमानोदकुम्भादिवत् अथशब्दस्यानन्तर्यवाचिनः प्रासङ्गिकं प्रयोजनं नाभिधेयं तथापि यत्किंचिक्रियानन्तर्यमर्थप्राप्तमनुवदन्मङ्गलार्थतया प्रयुक्त इति संभाव्येतेति। परिहारान्तरमाह स्नानेति[११४]। जिज्ञासाहेतुत्वेऽध्ययनस्याथशब्देन प्रतिपादितेऽपि तस्यैव स्नानबाधहेतुत्वमभिधातुमतःशब्द इति । स्नानबाधहेतुत्वमेव विवृणोति योग्यस्येति । अ-

---

* मङ्गलाद्यर्थतां वदेदिति २ पु. पा. ।

† शक्यते इति का. पु. पा. ।

सन्वाच्येच्छान्तरं कर्म ज्ञानं व्याप्नोति तावता ।
ज्ञानोपसर्जना सैव न तु विध्यादि गम्यते ॥ ११५ ॥
इषेस्तु कर्म बाह्यः स्याद्धर्मः सा वा ऽथ वा द्वयम् ।
समानकर्तृकत्वं तु तुमुनोक्तं लिङा विधिः ॥११६॥
एवं विषयनानात्वान्न का चि*त्पुनरुक्तता ।
सूत्रितेच्छाभिनिर्वृत्त्यै द्वितीयेच्छा ऽत्र सूत्रिता ॥११७॥

---

धीतवेदतया विचारयोग्येन क्षिप्रमेव कर्माधिकाराय विद्वत्तायै यतितव्यं न स्नातव्यम् ।

अत्र भाष्यं "धर्मं जिज्ञासितुमिच्छेत् † इति । तत्र सनादीनामपौनरुक्त्यमाह सन्वाच्येति[११५] सार्द्धद्वयेन । सन्वाच्या तावदिच्छा आन्तरं समानपदोपात्तं ज्ञानाख्यं कर्म आप्नोति तत्कर्मिकेत्यर्थः । तेन तावता सन्प्रत्ययपर्यन्तेन भागेन सैव ज्ञानेच्छैव गम्यते न तु विध्यादिकम् । इषेस्त्विषिधातुवाच्याया इच्छाया बाह्यः पदान्तरोपात्तो धर्मः कर्म सैव ज्ञानेच्छैव वा द्वयं वा धर्मश्च ज्ञानेच्छा चाऽतो भिन्नविषयेच्छावचनत्वात्सन्निच्छत्योरपौनरुक्त्यं, लिङ्तुमुनोस्त्वर्थान्तरवाचित्वात्स्पष्टमेवाऽपौनरुक्त्यमिति। नन्वेकैव ज्ञानेच्छा सूत्रिता तत्कथमिच्छाद्वयोपादानं भाष्ये ऽत आह सूत्रितेति[११७]। सूत्रितामेवेच्छामभिनिर्वर्तयितुमिच्छान्तरमुक्तमिति न दोषः । न चेच्छाविषयमिच्छान्तरं नेष्यतइति वाच्यम् । मन्दाग्नीनां भोजनेच्छायामिच्छादर्शनात् ।

---

* क चिदिति २ पु. पा. ।

† शा. भा. पृ. ३ प. ९ ।

प्रकृत्या विकृतिर्यस्माच्चतुर्थ्यन्ता समस्यते ।
तादर्थ्ये* यूपदार्वादौ तेनास्मिन्नसमासता ॥११८॥
सा हि तस्येत्यनेनोक्तो धर्मस्येत्येष विग्रहः ।
धर्मायेति तु तादर्थ्ये षष्ठी वृत्तेति कथ्यते ॥११९॥
प्राप्नोत्यत्र चतुर्थ्येव विशेषश्चेद्विवक्षितः ।
सामान्यस्य विवक्षायां तादृशं कथ्यते कथम् ॥१२०॥
सम्बन्धमात्रएवैषा षष्ठ्युत्पन्ना तथापि तु ।
विशेषनिष्ठता तस्या भाष्यकारेण वर्ण्यते ॥ १२१ ॥

---

"धर्माय जिज्ञासा धर्मजिज्ञासे"ति भाष्यं* तदाक्षिपति प्रकृत्येति[११८] । यत्र हि तादर्थ्ये चतुर्थी समस्यते तत्र विकृतिरेव चतुर्थ्यन्ता प्रकृत्या समस्यते यूपदार्वादौ दर्शनात् । तथा च वार्त्तिककारेणोक्तं 'चतुर्थीतदर्थे प्रकृतिविकृतिग्रहणं कर्त्तव्य'मिति । न च सामर्थ्यप्रदर्शनार्थं तदिति वाच्यम् । तथा सति 'समर्थः पदविधि'रित्यनेनैव सिद्धे तद्ग्रहणस्याऽकर्त्तव्यत्वात् । अतो वाचनिकमेवेदम् । न च धर्मो जिज्ञासाविकार,स्तस्मादसमास इति । परिहरति सा हि तस्येति[११९]। "सा हितस्ये"†त्यनेन भाष्येण दर्शितो धर्मजिज्ञासेत्ययमत्र विग्रहः, तेन षष्ठीसमासो ऽयं न चतुर्थीसमास इति । कथं तर्हि धर्मायेति भाष्यमत आह धर्मायेति । ननु तादर्थ्यविवक्षायां चतुर्थ्येव प्राप्नोति न षष्ठी, ततश्च समासाऽनुपपत्तिः, संबन्धसामान्यविवक्षायां तु तादर्थ्ये षष्ठीत्ययुक्तमिति चोदयति प्राप्नोतीति[१२०]। परिहरति संबन्धेति[१२१] । न षष्ठी तादर्थ्यमभिधत्ते इति ब्रूमः किं

---

* तादृशे इति का. पु. पा. ।

† सा हि तस्य ज्ञातुमिच्छा । शा. भा. पृ. ३ प. ११ ।

साधनाभासता चात्र पूर्वपक्षार्थगोचरा ।
अन्यसाधनमन्यस्य साधनाभास उच्यते ॥ १२२ ॥
क्रत्वर्थं पुरुषार्थस्य तदर्थं च क्रतोरिति ।
शेषलक्षणशब्दश्च कृत्स्नशास्त्रविवक्षया ॥ १२३ ॥

---

तु संबन्धसामान्यमेव, तस्य तु निर्विशेषस्याऽनुपपत्तेः तादर्थ्यरूपविशेषनिष्ठता धर्मायेति भाष्येण दर्शितेति ।

अत्र समस्तस्य वक्ष्यमाणस्याऽर्थस्याऽस्यां प्रतिज्ञायामन्तर्भावं कथयता भाष्यकारेणोक्तं स कथं जिज्ञासितव्य इत्यादि* तत्र साधनाभासपदं तावद्व्याचष्टे साधनाभासता चेति[१२२] । कथमेतदित्याह अन्यसाधनमिति । एतदेवोदाहरणेन दर्शयति क्रत्वर्थमिति[१२३] । क्रत्वर्थं पर्णमयीत्वादि पुरुषार्थस्य अपापश्लोकश्रवणादेः फलस्य साधनाभासं पुरुषार्थं च गोदोहनादि क्रतोः साधनाभासमिति । एतासां प्रतिज्ञानां व्याख्याप्रदेशं दर्शयता भाष्यकारेण को धर्मः कथंलक्षण इति द्वयं चोदनासूत्रेण व्याख्यातमित्युक्त्वा अवशिष्टं शेषलक्षणेन व्याख्यात†मित्युक्तम् । शेषलक्षणशब्दश्च तृतीये

---

* स कथं जिज्ञासितव्यः ? को धर्मः, कथंलक्षणः, कान्यस्य साधनानि, कानि साधनाभासानि, किंपरश्चेति । शा. भा. पृ. ३ प. १२ ।

† तत्र को धर्मः कथंलक्षण इति एकेनैव सूत्रेण व्याख्यातं चोदनालक्षणोऽर्थो धर्म इति । कान्यस्य साधनानि, कानि साधनाभासानि, किंपरश्चेति शेषलक्षणेन व्याख्यातम् । क्व पुरुषपरत्वं, क्व वा पुरुषो गुणीभूतः, एतासां प्रतिज्ञानां पिण्डितस्य एतत् सूत्रम् 'अथातो धर्मजिज्ञासेति । शा. भा. पृ. ३ प. १३ ।

प्रसिद्धः शक्यते ज्ञातुं प्रसिद्धत्वात्तु* नेष्यते ।
अप्रसिद्धस्त्वशक्यत्वान्नतरामित्यतो ऽब्रवीत् ॥१२४॥
जिज्ञास्यः संशयाद्धर्मः श्रेयस्करतया ऽपि च ।
असंदिग्धो ह्यजिज्ञास्यो यो वा स्यान्निष्प्रयोजनः॥१२५॥

---

प्रसिद्धः । न च तत्र सर्वं व्याख्यायते अतः कथमिदम् इत्याशङ्क्याह शेषलक्षणेति । शेषं च तल्लक्षणं चेति ।

अत्र भाष्यकारेण शास्त्रसंबन्धमाक्षिपतोक्तं "धर्मः प्रसिद्धो वा स्यादप्रसिद्धो वा । स चेत्प्रसिद्धः न जिज्ञासितव्यो ऽथाऽप्रसिद्धो नतरा"†मिति । तस्याऽर्थः । धर्मो ऽस्य शास्त्रस्य प्रतिपाद्यमानतया प्रयोजनमिति वदता सूत्रकारेण यस्तेन प्रयोजनेन सह प्रतिपाद्यप्रतिपादकभावः संबन्धः सो ऽस्य शास्त्रस्याऽवतारहेतुः संबन्ध इति सूचितम् । तदुक्तं शास्त्रं प्रयोजनं चैवेति वार्त्तिके । स चायं संबन्धो न शास्त्रावतारहेतुः संभवति धर्मस्याऽजिज्ञास्यत्वात् । न ह्यजिज्ञासितप्रतिपादकतया शास्त्रारम्भः संभवति न तदर्थकं धर्मजिज्ञासाप्रकरणं धर्मजिज्ञासारम्भः शास्त्रमित्यर्थः । अत्र चाथाऽप्रसिद्धो नतरामित्यतिशयो दर्शितः । तं दर्शयति प्रसिद्ध इति[१२४] । जिज्ञासाशब्देन प्रकृत्या ज्ञानं प्रत्ययेन चेच्छोच्यते । तत्र प्रसिद्धे ज्ञानमस्ति इच्छामात्रं तु तत्र नास्ति अप्रसिद्धेतु ज्ञानमिच्छा चोभयमपि नास्तीति अतिशयोपपत्तिरिति ।

---

* प्रसिद्धत्वाच्चेति २ पु. पा. ।

† शा. भा. पृ. ३ प. १८ ।

स्वरूपादिषु धर्मस्य द्विधा विप्रतिपद्यते ।
पूर्वं प्रमाणरूपाभ्यां पादेनाद्यस्य निर्णयः ॥ १२६ ॥
'स्थिते वेदप्रमाणत्वे पुनर्वाक्यार्थनिर्णये ।
मतिर्बहुविदां पुंसां संशयान्नोपजायते ॥ १२७ ॥

---

धर्मं प्रति इत्यादि*परिहारभाष्यम्। तत्र धर्मस्य जिज्ञास्यत्वे कारणद्वयमुक्तं विप्रतिपत्त्या सांशयिकत्वं स हि पुरुषमित्यनेन प्रयोजनवत्त्वं च। तदुभयमपि दर्शयति **जिज्ञास्य इति**[१२५]। एतदेव व्यतिरेकमुखेन विवृणोति **असंदिग्ध इति** । सन्देहहेतु विप्रतिपत्तिं विवृणोति **स्वरूपादिष्विति**[२६]। धर्मस्वरूपादीनां मध्ये पूर्वं तावद् द्विधा विप्रतिपत्तिः क्रियते, किंप्रमाणको धर्मः किंस्वरूप इति च । तदस्याद्यस्य विप्रतिपत्तिद्वयस्यानेन पादेन निर्णयः क्रियतइत्याह **पादेनेति** । अत्र हि प्रत्यक्षादिनिराकरणेन चोदनाप्रामाण्यं साध्यते तत्साधनादेव च तद्गम्यो ऽग्निहोत्रादिः धर्मो न चैत्यवन्दनादिरिति स्वरूपमपि सविशेषं कथितं भवति। एतच्च निरपेक्षप्रामाण्याभिप्रायेणोक्तम्। चोदनैव हि निरपेक्षं प्रमाणं तत्प्रामाण्यं चेहैव पादे सिद्धम्। उपरितने तु पादत्रये तदेकवाक्यतया तन्मूलतया चाऽर्थवादादीनां प्रामाण्यं साध्यते, अतः समस्तो ऽध्यायः प्रमाणलक्षणमेव, चोदनायास्त्विहैव सिद्धमित्यभिप्रायः । तथा भाष्यमप्येकेनैव सूत्रेण व्याख्यातमिति स्वतन्त्रप्रामाण्याभिप्रायमेवेति ।

---

* धर्मं प्रति विप्रतिपन्ना बहुविदः, केचिदन्यं धर्ममाहुः केचिदन्यम् । सो ऽयमविचार्य्य प्रवर्तमानः कंचिदेवोपाददानो विहन्येत अनर्थं च ऋच्छेत्, तस्माद्धर्मो जिज्ञासितव्य इति । स हि निःश्रेयसेन पुरुषं संयुनक्तीति प्रतिजानीमहे । तदभिधीयते चोदनालक्षणो ऽर्थो धर्म इति । शा. भा. पृ. ३ प. २० ।

के चिदाहुरसावर्थः के चिन्नाऽसावयं त्विति ।
तन्निर्णयार्थमप्येतत्परं शास्त्रं प्रणीयते' ॥ १२८ ॥

इति प्रतिज्ञासूत्रं प्रथमं समाप्तम् ॥

## चोदनालक्षणो ऽर्थो धर्मः* ॥ २ ॥

धर्मे सामान्यतः सिद्धे प्रमाणं चोदनोच्यते ।
स्वरूपादेस्ततः सिद्धिः स्वरूपं चेह सूत्र्यते ॥१॥

---

एवमाद्यविप्रतिपत्तिं निर्णयस्थानं चोक्त्वा विप्रतिपत्त्यन्तरं निर्णयस्थानं च दर्शयति स्थित इति[१२७] द्वयेन । एकमार्गदर्शिनामज्ञानां च संशयाऽनुत्पत्तेर्बहुविदामित्युक्तम् ॥

इति श्रीपार्थसारथिमिश्रविरचिते न्यायरत्नाकरे प्रथमं प्रतिज्ञासूत्रम् ॥

इदानीं शास्त्रमारभते चोदनालक्षणो ऽर्थो धर्म इति । तद्व्याचष्टे धर्मे इति[१] । यो ऽयं निष्प्रमाणकप्रत्यक्षादिप्रमाणकचोदनाप्रमाणकत्वादीनां विप्रतिपत्तिविशेषाणां विषयभूतः साधारणात्मा धर्मपदार्थः स चोदनाप्रमाणकः, चोदनैव तस्य प्रमाणं न प्रत्यक्षादि, चोदना च तत्र प्रमाणमेव नाऽप्रमाण,मित्येवं धर्मानुवादेन प्रमाणविधिरिति । कथं तर्हि तत्स्वरूपविशेषयोः सिद्धिरत आह स्वरूपादेरिति । आदिशब्देन विशेषोपादानं प्रमाणमेवेति प्रमाणविधेरे-

---

* चोदनेति प्रवर्तकशब्दनाम । लक्ष्यते ज्ञायते ऽनेनेति लक्षणम् । इत्थं च चोदनैव लक्षणं, करणं यद्विषयकज्ञानस्य तत्त्वे सति अर्थत्वं धर्मस्य लक्षणम् । अर्थत्वं च सुखाधिकदुःखाऽजनकत्वम् । सु० ।

द्वयमेकेन सूत्रेण श्रुत्यर्थाभ्यां निरूप्यते ।
स्वरूपे ऽपि हि तस्योक्ते प्रमाणं कथ्यते ऽर्थतः ॥२॥
किमाद्यपेक्षितैः पूर्णः समर्थः प्रत्ययो विधौ ।
तेन प्रवर्तकं वाक्यं शास्त्रे ऽस्मिन् चोदनोच्यते ॥३॥

---

वाऽर्थात्तद्गम्यस्याग्निहोत्रादेर्धर्मत्वमस्त्येव न तु नास्तीति धर्मस्वरूपसिद्धिः। सैव प्रमाणमित्यवधारणा च तद्गम्यस्याग्निहोत्रादेर्धर्मत्वं न चैत्यवन्दनादेरतद्गम्यत्वादिति धर्मविशेषसिद्धिरिति। विपरीता वा वचनव्यक्तिरित्याह स्वरूपं चेति । यश्चोदनालक्षणो ऽग्निहोत्रादिः स धर्म एव नाऽधर्मः स एव च धर्मो न चैत्यवन्दनादिरित्येवं धर्मस्वरूपतद्विशेषसिद्धिरिति ।

ननु को धर्म इति कथंलक्षण इति द्वयमपि चोदनालक्षणसूत्रेण व्याख्यातमिति भाष्यकारेणोक्तं*तत्कथमेकस्यैव सूत्रस्यार्थद्वयमुच्यते ऽत आह द्वयमिति[२] । सत्यं द्वयमुच्यते किं तु श्रुत्यर्थाभ्यां न श्रुत्यैव, न ह्येकस्यैव वाक्यस्य सति संभवे वचनव्यक्तिद्वयं युक्तमिति। तत्र यथा प्रमाणविधौ स्वरूपसिद्धिस्तथा दर्शितम् । स्वरूपविधावपि प्रमाणसिद्धिमर्थाद्दर्शयति स्वरूपे इति। यदा हि चोदनागम्यस्य धर्मत्वमितरस्य च धर्मत्वाभाव उक्तस्तदा ऽर्थाच्चोदनायाः प्रामाण्यं प्रत्यक्षादेश्चाऽप्रामाण्यं सिद्ध्यतीति ।

"चोदनेति क्रियायाः प्रवर्त्तकं वचनमाहु"†रिति भाष्यं तत्र प्रवर्त्तकं वचनमिति किं प्रत्ययमात्रं विध्यभिधायित्वादुच्यते, यद्वा तन्मात्रस्याऽप्रत्यायकत्वात्पदम्, अथ वा वाक्य,मिति बुभुत्सायामाह किमादीति[३] । किं केन कथमित्यपेक्षितैः साध्यसाधनेतिकर्त्तव्य-

---

* शा. भा. पृ. ३ प. २६ ।

† विधायित्वात्तदुच्यते इति ३ पु. पा. ।

चोदनैव प्रमाणं चेत्येतद्द्वयं ऽवधारितम् ।
साकाङ्क्षमिति मन्वानो युक्तिलेशं द्वये ऽस्पृशत् ॥४॥
संभाव्यते प्रमाणत्वं शब्दस्यैवंविधेष्वपि ।
इन्द्रियादेरसामर्थ्यं वक्ष्यमाणमदीदिशत् ॥ ५ ॥
अत्यन्ताऽसत्यपि ज्ञानमर्थे शब्दः करोति हि ।
तेनोत्सर्गे स्थिते तस्य दोषाभावात्प्रमाणता ॥६॥

---

तादृशः पूर्णः प्रत्ययो विधौ पुरुषप्रवर्त्तने समर्थो भवति तत्पूरणं च वाक्येन, अतो वाक्यमेव प्रवर्त्तकं चोदनोच्यते ।

चोदना हि भूतं भवन्तं भविष्यन्तमर्थमित्यादिभाष्यं नान्यत्किंचनेन्द्रियमिति च * चोदनायाः प्रामाण्ये तदन्येषां चाऽप्रामाण्ये युक्तिकथनार्थं, तत्प्रतिज्ञासूत्रे ऽसङ्गतमित्याशङ्क्याह चोदनैवेति[४] । संभावितो हि प्रतिज्ञातो ऽर्थो हेतुना साध्यते शब्दस्य च नित्यं प्रमाणान्तरपरतन्त्रस्य स्वातन्त्र्येण प्रामाण्यं प्रत्यक्षादेश्च स्वतन्त्रस्याऽप्रामाण्यमित्यत्र प्रतिज्ञातं चोदनैव प्रमाणमेवेति ।

तदिदमवधारणद्वयमसंभावितार्थं युक्तिसाकाङ्क्षमिति मन्वानः संभावनापदलाभार्थं प्रतिज्ञाद्वये ऽपि युक्तिलेशमस्पृशदिति । युक्तिलेशमेव दर्शयति संभाव्यते इति[५] । एवंविधेषु भूतादिष्विन्द्रियादेरसामर्थ्यं प्रत्यक्षसूत्रे वक्ष्यमाणमेवाऽत्र दर्शितमिति कथं संभाव्यते ऽत आह अत्यन्तेति[६] । ज्ञानोत्पादहेतुत्वं प्रामाण्यहेतुः सति त-

---

* चोदना हि भूतं, भवन्तं, भविष्यन्तं, सूक्ष्मं, व्यवहितं, विप्रकृष्ट,-मित्येवंजातीयकमर्थं शक्नोत्यवगमयितुं, नाऽन्यत् किंचनेन्द्रियम् । शा. भा. पृ. ४ प. ३ ।

चोदनेत्यब्रवीच्चात्र शब्दमात्रविवक्षया ।
न हि भूतादिविषयः कश्चिदस्ति विधायकः ॥७॥
इन्द्रियादिव्युदासेन शब्दो यावन्न साध्यते ।
तावच्च तद्विशेषस्य कुतो वा ऽवसरो भवेत् ॥ ८ ॥
निमित्तमात्रं वोच्येत प्रमाणं चेह लक्षणम् ।
प्रमाणं त्वपि शब्दो वा* तज्ज्ञाने वा निरूप्यते ॥९॥

---

स्मिन्प्रामाण्यस्यौत्सर्गिकत्वात् शब्दश्चात्यन्ताऽसत्यपि शशविषाणादौ ज्ञानमुत्पादयति । तदिह चोदनाया धर्मज्ञानजनकत्वादुत्सर्गतः प्राप्तं प्रामाण्यमपवादभूतदोषाभावादनपोदितं भवति ।

भाष्ये चोदनापदं शब्दविशेषस्य विधायकस्य वाचकमपि लक्षणया शब्दमात्रपरं व्याख्येयमित्याह चोदनेति[७] । तत्र कारणमाह न हीति । इतश्चैवमित्याह इन्द्रियादीति[८] । प्रमाणविशेषस्य हि प्रत्यक्षादेः सामर्थ्ये व्युदस्ते तद्विशेषान्तरस्यैव शब्दस्य भूतादिषु सामर्थ्यं दर्शयितव्यं, न शब्दविशेषस्य चोदनायाः । किं च शब्दसामान्यप्रयुक्तमिदं यद् भूताऽनागतादिषु सामर्थ्यं न चोदनात्वप्रयुक्तम्, अतः सामान्यमुखेनैव तत्सामर्थ्यं वक्तव्यम् । तेनैवं भाष्यार्थः । चोदनायाः प्रामाण्यं धर्मे । कुतः । शब्दस्य हि सर्वस्यैव ज्ञानजनकत्वेन प्रामाण्यं संभवति शब्दश्चोदना, तेनाऽस्याः संभवत्यतीन्द्रियेऽपि धर्मे प्रामाण्यमिति ।

लक्षणपदं व्याचष्टे निमित्तमात्रमिति[९] । निमित्तं प्रमितेः कारणमात्रं प्रमाणं तत्तद्विशेषः करणमिति । करणत्वं च साधकतम-

---

* वापि शब्दोवेति २ पु. पा. ।

पदार्थस्तन्मतिर्वा स्याद्वाक्यार्थाधिगमोऽपि वा ।
पूर्वेषान्तु प्रमाणत्वे फलत्वं तस्य गम्यते ॥१०॥
ज्ञाने लक्षणशब्दोऽयं यदि नाम प्रयुज्यते ।
चोदनोक्तिस्तदा कार्ये तत्कार्ये चाऽपि लक्षयेत् ॥११॥
निमित्तमात्रे शब्दे च प्रमाणे मुख्यवृत्तयोः ।
सामानाधिकरण्यं स्याच्चोदनालक्षणत्वयोः ॥१२॥

---

त्वमापेक्षिकं विवक्षाधीनमिति । विवक्षाभेदेन प्रमाणभेदानाह प्रमाणं चेति । प्रमाणं चेत्यस्मिन्पक्षे इत्यर्थः । प्रमाणप्रसङ्गात्फलं दर्शयति पूर्वेषामिति[१०] । शब्दादीनां प्रामाण्ये वाक्यार्थाधिगमः फलं तत्प्रामाण्ये हानादिबुद्धिः फलमिति । शब्दव्यतिरिक्तेषु तज्ज्ञानादिषु यदा लक्षणशब्दस्तदा शब्दवाचिना चोदनादिशब्देन कथं सामानाधिकरण्यमत आह ज्ञाने इति[११] । ज्ञानादिष्वित्यर्थः । शब्दकार्ये तज्ज्ञाने तत्कार्येषु च पदार्थज्ञानादिषु लक्षणया वर्त्ततइति निमित्तमात्रलक्षणपक्षे शब्दप्रामाण्यपक्षे च मुख्यमेव सामानाधिकरण्यमित्याह निमित्तमात्रे इति[१२] ।

एतच्च भाष्यानुसारेण वाक्यमेव चोदनेत्यङ्गीकृत्योक्तं, भवत्येव तु सर्वेषु पक्षेषु मुख्यमेव सामानाधिकरण्यं चोदनापदस्यापि लक्षणपदस्येव चोद्यते ऽनयेति व्युत्पत्त्या ज्ञानादिषु मुख्यत्वसंभवात् । तथा चोक्तम् ।

प्रवर्त्ते ऽहमिति ज्ञानं येन शब्देन जन्यते ।
स चोदनोच्यते यद्वा प्रवर्त्तनफला मतिः ॥ इति ।

ननु गोदोहनादि द्रव्यं नीचैस्त्वादिगुणो यागादिक्रिया च फलसाधनत्वाद्धर्मो नाऽपूर्वादिरिति श्रेयस्करभाष्ये वक्ष्यते द्रव्यादिव-

द्रव्यक्रियागुणादीनां धर्मत्वं स्थापयिष्यते ।
तेषामैन्द्रियकत्वे ऽपि न ताद्रूप्येण धर्मता ॥१३॥
श्रेयःसाधनता ह्येषां नित्यं वेदात्प्रतीयते ।
ताद्रूप्येण च धर्मत्वं तस्मान्नेन्द्रियगोचरः ॥१४॥
प्रदर्शनार्थमत्रोक्तमिन्द्रियं सूत्रकारवत् ।
नान्यत्किं चेति वा च्छेदः सामान्यार्थः प्रयुज्यते ॥१५॥
तदसामर्थ्यसिद्ध्यै च पुनरिन्द्रियकीर्तनम् ।
किं चेति मध्यमच्छेदो हेतुप्रश्ने प्रयुज्यते ॥१६॥
यद्यपि त्वनुमानस्याऽप्येवमादौ समर्थता ।

---

त्प्रत्यक्षमिति कथं चोदनैवेत्यवधारितमत आह द्रव्येति[१३] । नैन्द्रियकेण रूपेण धर्मतेति । किं पुनरेषां रूपान्तरं यच्चोदनागम्यं येन चैषां धर्मत्वमिति दर्शयति श्रेय इति[१४] ।

ननु नान्यत्किं चनेन्द्रियमितीन्द्रियमात्रं प्रतिषिद्धं न च तावता चोदनैवेत्यवधारणं सिद्ध्यतीत्यत आह प्रदर्शनार्थमिति[१५] । यथा प्रत्यक्षसूत्रे प्रत्यक्षग्रहणं प्रदर्शनार्थमेवमिदमपीति । यद्वा एवं व्याख्येयमित्याह नान्यदिति । नेन्द्रियमिति तु तस्यैव हेतुरित्याह तदसामर्थ्येति[१६] । अन्यत्सर्वमसमर्थमिन्द्रियस्याऽसमर्थत्वात्तत्पूर्वकत्वाच्चेतरस्येति । व्याख्यानान्तरमाह किं चेति । नान्यत्समर्थं, किं चात्र कारणम् , इन्द्रियस्याऽसामर्थ्यादिति ।

नन्वनुमानं भूतादौ समर्थमेव, भूता, व्यवहिता, विप्रकृष्टा, च वृष्टिर्नदीपूरेणाऽनुमीयते, मेघोत्पत्त्या च भविष्यति वृष्टिः, सूक्ष्मं च द्रव्यं गन्धात्, अतो न सर्वनिषेधोपपत्तिरत आह यद्यपीति[१७] । ततः

विना सम्बन्धबाधेन न तु तस्योद्भवः क चित् ॥१७॥
न सामान्यविशेषाभ्यां धर्मसम्बन्धदर्शनम् ।
लिङ्गस्य कस्य चित्सिद्धं येन स्यादनुमानता ॥१८॥
ननु शब्दोऽपि सम्बन्धबोधान्नर्ते प्रवर्त्तते ।
पदं तन्न च तद्वाच्यो धर्मो वाक्यार्थ एव सः ॥१९॥
वाक्यस्याऽवाचकत्वं च पदार्थानां च हेतुता ।
सम्बन्धस्याऽनपेक्षाणां वाक्यार्थे स्थापयिष्यते ॥२०॥

---

किमित्याह न सामान्येति[१८] । धर्मसामान्येन वा धर्मविशेषेण वा न कस्य चिल्लिङ्गस्य संबन्धग्रहणमस्ति, येन धर्मो ऽस्तीति वा ऽग्निहोत्रादेर्वा धर्मत्वमनुमीयेत ; अतो नाऽनुमानं संभवतीति । अत्र चोदयति नन्विति[१९] । परिहरति पदमिति । पदं हि संबन्धग्रहणापेक्षमिति । ततः किमित्याह न चेति । किं तर्हीत्याह वाक्यार्थ इति ।

ननु वाक्यस्यापि संबन्धग्रहणाऽपेक्षमेव वाचकत्व,मन्यथा प्रथमश्रवणे ऽपि प्रतीतिप्रसङ्गादत आह वाक्यस्येति[२०] । सत्यं यदि वाक्यं वाचकं स्यान्न तु तद्वाचकं, कस्तर्हि वाक्यार्थावगतौ हेतुरित्याह पदार्थानां चेति । किं संबन्धग्रहणापेक्षाणामेव, नेत्याह संबन्धस्येति । तदेत्सर्वं तद्भूताधिकरणे* वक्ष्यतइति ।

"नन्वतथाभूतमप्यर्थं ब्रूयाच्चोदना यथा यत्किं चन लौकिकं व-

---

* जै. सू. अ. १ पा. १ सू. २५ ।

नित्यत्वादेरसिद्धत्वादभ्युपेत्योच्यते ऽथ वा ।
सुतरामप्रमाणत्वं वक्तृप्रामाण्यवर्जनात् ॥२१॥
प्रमाणान्तरदृष्टं हि शब्दो ऽर्थं प्रापयेत्सदा ।
स्मृतिवच्च स्वयं तस्य प्रामाण्यं नोपपद्यते ॥२२॥
नूनं तत्राऽनुभूतो ऽसावित्याप्तोक्तिनिबन्धना ।
बुद्धिः साक्षाददृष्टे ऽपि युक्ता ऽर्थे पुरुषोक्तितः ॥२३॥

---

चनं नद्यास्तीरे पञ्च फलानि सन्तीति, तत्तथ्यमपि भवति वितथमपि भवती"*ति भाष्यं, तदनुपपन्नम् । कथं हि संभवद्दोषलौकिकवचनदृष्टान्तेन नित्यनिर्दोषचोदनाया अप्रामाण्यं संभाव्येताऽत आह नित्यत्वादेरिति[२१] । बाह्यानां हि वेदनित्यत्वमसिद्ध,मतश्चोदनामपि पौरुषेयीं मन्यमानाः पौरुषेयस्यैतादृशो प्रामाण्याऽसंभवाल्लौकिकवचनसाम्येनाऽप्रामाण्यमापादयन्तीति ।

नित्यत्वाद्यभ्युपगमेन वा चोद्यमित्याह अभ्युपेत्येति । कथं नित्यत्वे चोद्यमित्याह सुतरामिति । वक्तृप्रत्ययाऽधीनं हि शब्दस्य प्रामाण्य,मसति वक्तरि दूराऽपास्तं स्यादिति । वक्तृप्रामाण्याऽभावे ऽपि स्वमहिम्नैव शब्दः किं प्रमाणं न भवत्यत आह प्रमाणान्तरेति[२२] । लौकिकी हि प्रमाणगतिः परीक्षकैरनुसरणीया, लोके च प्रमाणान्तरप्राप्ताऽर्थप्रापक एव शब्दः, अतो ऽस्य स्मृतिवन्न स्वमहिम्ना प्रामाण्यमिति ।

नन्वदृष्टो ऽपि स्वयमर्थः पुरुषवचनात्प्रतीयते दूरदेशादिवार्त्तास्विव कथमस्य प्राप्तप्रापकत्वमत आह नूनमिति[२३] । येयं

---

* शा. भा. पृ. ४ प. ९ ।

नात्मीयादन्यदीयाद्वा प्रत्यक्षादेर्विना क्वचित् ।
वचसः सत्यता दृष्टा तथा स्याच्चोदनास्वपि ॥२४॥
तेन सत्यपि विज्ञाने प्रतिभादेर्यथैव हि ।
स्वातन्त्र्यान्न प्रमाणत्वं तथा वेदे ऽपि दृश्यताम् ॥२५॥
स्वर्गयागादिसम्बन्धविषया चोदना मृषा ।
प्रत्यक्षाद्यगतार्थत्वादीदृग्बुद्धादिवाक्यवत् ॥२६॥
यद्वा ऽऽप्तेनाऽप्रणीतत्वाद्बालोन्मत्तादिवाक्यवत् ।

---

साक्षात्स्वयमदृष्टे ऽप्यर्थे पुरुषोक्तितो बुद्धिः सा युक्ता, सा हि नूनं वक्त्रा ऽनुभूतो ऽसावर्थ इत्येवं वक्त्रनुभवकल्पनापुरःसरा, तेन तत्रापि वक्तृप्रमाणप्राप्तस्यैवा ऽर्थस्य शब्दः प्रापको न स्वतन्त्रः । कुतः पुनर्वक्त्रनुभवकल्पना ऽऽप्तोक्तिनिबन्धना, उक्तिरुच्चारणं तन्निबन्धना, आप्तो ना ऽननुभूतार्थं वाक्यं रचयति, तेनाप्तोच्चारणानिबन्धनवक्त्रनुभवाऽनुमानद्वारा पुरुषवचनार्थे बुद्धिर्युक्तेति । यत्र त्वात्मीयमन्यदीयं वा प्रत्यक्षादिकं नास्ति तत्र वाक्यप्रामाण्यं लोके न दृष्टमिति वेदे ऽपि तथैव युक्तमित्याह नात्मीयादिति[२४] । ननु वेदादपि ज्ञानं तावदुत्पद्यते किमित्यप्रमाणमत आह तेनेति[२५] । शब्दो हि यत्रैव उच्यते तत्रैव ज्ञानं जनयति नाऽर्थसदसद्भावावपेक्षते, यश्चैवमर्थसदसद्भावाऽनपेक्षमत्यन्तस्वतन्त्रं ज्ञानं तस्य प्रतिज्ञाज्ञानवत्प्रामाण्यं न संभवति, प्रत्यक्षादिरहितत्वं वा स्वातन्त्र्यम् । तदेवं प्रयोगः, वेदो न प्रमाणं स्वातन्त्र्यात्प्रतिज्ञावदिति । प्रयोगान्तरमाह स्वर्गयागादीति[२६] । बुद्धादिवचनमपि किं चित्सत्यमस्तीति साध्यवैकल्यं मा भूदिति ईदृग्ग्रहणम् । ईदृशं यत्प्रत्यक्षाद्यनधिगतार्थं चैत्यवन्दनादिवाक्यं

व्योमादिवच्च नित्यत्वात्प्रामाण्यस्य निराकृतिः ॥२७॥
यदि वा पुरुषाधीनप्रामाण्याः सर्वचोदनाः ।
स्वतो वा न प्रमाणं स्युर्वाक्यत्वात्पुरुषोक्तिवत् ॥२८॥
प्रामाण्यं वा नरापेक्षं सर्वशब्देषु गम्यताम् ।
शब्दैः सम्बध्यमानत्वादप्रामाण्यं यथैव हि ॥२९॥
न स्याद्वक्तृगुणानां चेद्वचःप्रामाण्यहेतुता ।
तद्दोषैरप्रमाणत्वं किमित्यस्य भविष्यति ॥३०॥
एवं स्थिते तु वेदस्य सति वा ऽसति वा नरे ।

---

तद्वदिति। अत्रैव हेतुदृष्टान्तान्तरमाह यद्वेति[२७] । प्रयोगान्तरमाह व्योमादीति । नित्यत्वाभ्युपगमेन प्रसङ्गापादनान्न हेतोः प्रतिवाद्यसिद्धिरुद्भावनीयेति। प्रयोगान्तरमाह यदि वेति[२८] । प्रामाण्ये गुणघन्तं पुरुषमपेक्षन्तइत्यर्थः । ततश्च पुरुषस्य गुणसद्भावे प्रमाणाभावादनायासेनाऽप्रामाण्यं सिद्ध्यतीति अभिप्रायः । प्रयोगान्तरमाह स्वत इति। प्रयोगान्तरमाह प्रामाण्यमिति[२९] । नरगुणापेक्षमित्यर्थः। तदपेक्षं च प्रामाण्यं वेदस्याऽपौरुषेयत्वा,त्पौरुषेयत्वे वा गुणसद्भावे प्रमाणाभावान्न सिद्ध्यतीत्यभिप्रायः। अवश्यं च वक्तृगुणाधीनं शब्दस्य प्रामाण्यमङ्गीकर्तव्यं तदन्वयव्यतिरेकानुविधानात् । यदि तथा सत्यपि तदधीनं न स्यात्ततो ऽप्रामाण्यमपि दोषाधीनं न स्यादित्याह न स्यादिति[३०] । उपसंहरति एवमिति[३१] । सति नरइति नित्यत्वादेरसिद्धत्वादित्यस्योपसंहारः, असतीत्यभ्युपेत्योच्यतइत्यस्येति ।

प्रामाण्यं दुर्लभं मत्वा नन्वित्येतदचूचुदत् ॥३१॥
तत्र विप्रतिषिद्धत्वं बुद्धवाक्ये ऽपि युज्यते ।
ततो ऽपि प्रत्ययोत्पत्तेस्तस्माज्जात्युत्तरं त्विदम् ॥३२॥
सर्वविज्ञानविषयमिदं तावत्प्रतीक्ष्यताम् ।
प्रमाणत्वाऽप्रमाणत्वे स्वतः किं परतो ऽथ वा ॥३३॥
स्वतो ऽसतामसाध्यत्वात्केचिदाहुर्द्वयं स्वतः ।
अपरे कारणोत्पन्नगुणदोषाऽवधारणात् ॥३४॥

---

अत्र परिहारभाष्यं "विप्रतिषिद्धमिदमभिधीयते ब्रवीति वितथं चे"*ति । तदाक्षिपति तत्रेति[३२] । जात्युत्तरमुत्तराभासमिति ।

एवमाक्षिप्य तत्समाधित्सयैव तावदुपोद्घातचिन्तामवतारयति सर्वविज्ञानेति[३३] । तदिहैवं चिन्ता, किं ज्ञानस्य प्रामाण्यमप्रामाण्यं च स्वत एव निर्णीयते किं वोभयमपि कारणगुणदोषादिना निरूपयितव्यम्,उताऽप्रामाण्यं स्वतः प्रामाण्यं परतो, विपरीतं वेति । तत्र प्रथमपक्षमुदाहरति स्वत इति[३४] । यस्य हि यत्र स्वाभाविकं सामर्थ्यं नास्ति न तत्तस्याऽन्येन साधयितुं शक्यते, अतो ज्ञानानामप्रामाण्यं प्रामाण्यं च स्वत एव साधयतीति । पक्षान्तरमाह अपरे इति । ज्ञानं हि प्रामाण्याऽप्रामाण्ययोः साधारण्यान्न स्वतः किंचिदवधारयितुं क्षमते, अतो गुणवता दोषवता च कारणेनोत्पन्नौ यौ ज्ञानस्य गुणदोषौ तद्वशेन यथार्थत्वरूपं प्रामाण्यमयथार्थत्वरूपं चाऽप्रामाण्यं निर्णेतव्यम्, अतो द्वयमपि परत इति ।

---

* शा. भा. पृ. ४ प. ८ ।

स्वतस्तावद्द्वयं नास्ति विरोधात्परतो न च ।
निःस्वभावत्वमेवं हि ज्ञानरूपे प्रसज्यते ॥३५॥
कथं ह्यन्याऽनपेक्षस्य विपरीतात्मसंभवः ।
किमात्मकं भवेत्तच्च स्वभावद्वयवर्जितम् ॥३६॥

---

स्वतो द्वयमिति तावन्निराकरोति स्वतस्तावदिति[३५] । प्रामाण्याऽप्रामाण्यशक्ती हि मिथो विरुद्धे, ते कथमेकस्मिन् ज्ञाने स्वाभाविक्यौ स्याताम् । एवं हि ज्ञानोत्पत्तिवेलायामेव प्रामाण्यमप्रामाण्यं च निर्णेतव्यं स्या,त्तच्चाशक्यं, तन्न तावद् द्वयं स्वत इति ।

नापि परत इत्याह परत इति । द्वयमित्यनुषङ्गः । कारणमाह निःस्वभावत्वमिति । उत्पन्नं हि ज्ञानं गुणदोषावधारणात्प्रागर्थमवधारयति चेत्स्वत एव प्रामाण्यं नो चेदप्रामाण्यम् । उभयस्य तु पराधीनत्वे प्राक्तदवधारणादुभयरूपरहितं निःस्वभावं विज्ञानं स्यात्, न ह्यर्थं नावधारयति न च नावधारयतीति संभवति । किं च गुणदोषावधारणगम्यत्वं प्रामाण्याऽप्रामाण्ययोर्वदता गुणजन्यं प्रामाण्यं दोषजन्यं चाऽप्रामाण्यमित्यङ्गीकर्त्तव्यं, तज्जन्यत्वे हि तयोः कारणभूताभ्यां ताभ्यां काष्ठाऽग्निसंयोगादिव धूमस्यावधारणं संभवति नान्यथा । तज्जन्यत्वे च गुणदोषादिरहिताच्चक्षुरादेरुत्पन्नस्य प्रामाण्यमप्रामाण्यं चोभयं नास्तीत्यापद्यते, तच्चायुक्तं, निःस्वभावत्वप्रसङ्गादिति ।

स्वतो न द्वयं विरोधादिति यदुक्तं तद्विवृणोति कथमिति[३६] । एकस्य ज्ञानस्य कारणान्तराऽनपेक्षस्य स्वत एव प्रामाण्यमप्रामाण्यं चात्यन्तविपरीतरूपं न संभवति । परतो न द्वयमित्येतद्विवृणोति किमात्मकमिति । सर्वं हि ज्ञानं राशिद्वये शक्यमन्तर्भावयितुं प्रमाणमप्रमाणं वेति, तदुभयरहितं ज्ञानं किमात्मकं स्यादिति । स्वतो

विज्ञानव्यक्तिभेदेन भवेच्चेदविरुद्धता ।
तथाप्यन्याऽनपेक्षत्वे किं क्वेति न निरूप्यते ॥३७॥
'तस्मात्स्वाभाविकं तेषामप्रमाणत्वमिष्यताम् ।
प्रामाण्यञ्च परापेक्षं,'मत्र न्यायो ऽभिधीयते ॥३८॥
अप्रामाण्यमवस्तुत्वान्न स्यात्कारणदोषतः ।
वस्तुत्वात्तु गुणैस्तेषां प्रामाण्यमुपजन्यते' ॥३९॥

---

न द्वयं विरोधादित्यत्र किं चिदाशङ्कते विज्ञानेति[३७] । एकस्य हि विरुद्धरूपाऽसंभवो विज्ञानव्यक्तिभेदात्तु विरोध इति। परिहरति तथापीति । न तावज्ज्ञानत्वाऽतिरिक्तं किं चिच्चिह्नमस्ति ईदृशं प्रमाणमीदृशमप्रमाणमिति, तत्सद्भावे वा तदधीननिरूपणात्स्वाभाविकत्वहानिः। अतो ज्ञानस्वभावत्वे यस्यामेव ज्ञानव्यक्तौ प्रामाण्यं तस्यामेवाऽप्रामाण्यमपि भवत्येव, अतो ऽस्त्येव विरोधः । अथापि ज्ञानव्यक्तिभेदः स्यात्तथा ऽप्यन्यस्य चिन्हस्याऽनाश्रयणात्किं क्वेति निरूपणाऽशक्तेः प्रमाणाऽप्रमाणसंकरः स्यादिति ।

एवमनयोरुक्तं दूषणमुपसंहरन् पक्षान्तरं परिगृह्णाति तस्मादिति[३८] पादत्रयेण । कुत इत्याह अत्रेति सपादेन । अप्रामाण्यं हि प्रामाण्याऽभावः, अभावश्चाऽवस्तुत्वान्न केन चिज्जन्यते अतो नाऽप्रामाण्यं दोषैर्जन्यते, अतज्जन्यं च न ततो ऽवधारयितुं शक्यं, प्रामाण्यं तु वस्तुत्वाद्गुणजन्यं सत्तदवधारणाधीननिर्णयमिति युक्तम । किं च घटादघटाच्च घटज्ञानदर्शनात्कथं तन्मात्रेण घटनिश्चयः, अतो ऽवश्यं गुणसंवादार्थक्रियाज्ञानानामन्यतमेनैव घटज्ञानस्य यथार्थतालक्षणं प्रामाण्यं निर्णेतव्यमिति ।

प्रामाण्यं हि यदोत्सर्गात्तदभावोथ कृत्रिमः ।
तदा स्वप्नादिबोधे ऽपि प्रामाण्यं केन वार्यते ॥४०॥
मत्पक्षे कारणाभावात्प्रामाण्यं नोपजायते ।
हेतुमत्त्वप्रसङ्गो ऽतो न भविष्यत्यवस्तुनः ॥४१॥
इन्द्रियादिगुणाश्चास्य कारणं तदसद् द्विधा ।
दुष्टत्वादिन्द्रियादीनामभावे ऽन्यतरस्य वा ॥४२॥

---

परत एव प्रामाण्यम्, स्वतः प्रामाण्ये च सर्वेषां स्वप्नादिज्ञानाना-मपि प्रामाण्यं स्यादित्याह प्रामाण्यमिति[४०] । तेषामपि तावदु-त्सर्गतः प्राप्तं प्रामाण्यं, न च दोषाधीनेनाप्रामाण्येनापवादः संभवति, अप्रामाण्यस्याऽवस्तुत्वेन दोषाधीनत्वाऽसंभवादित्युक्तमिति । त्वत्पक्षे कथमप्रामाण्यं, दोषादिति चेत्, तदवस्थं तर्ह्यवस्तुनो हेतुमत्त्व,मत आह मत्पक्षे इति[४१] । मम हि स्वाभाविकमप्रामाण्य,मपवादकं तु प्रामाण्यं, तच्चेह कारणाभावादनुपजातम्, अतः स्वाभाविकमप्रामा-ण्यमननपोदितं तिष्ठति न तद्दोषैर्जन्यते, अतो न भविष्यत्यवस्तुनो हेतुमत्त्वप्रसङ्ग इति ।

किं पुनः प्रामाण्यस्य कारणं यदभावादिह प्रामाण्याऽनुपजनो ऽत आह इन्द्रियादीति[४२] । ज्ञानकारणभूतेन्द्रियादिगता गुणाः प्रामाण्यस्य कारणम्,अतस्तदभावे तस्याऽनुपजन इति । केन पुनः प्र-कारेण तस्याऽभावो ऽत आह तदसदिति । तावेव प्रकारौ दर्शयति दुष्टत्वादिति । शुक्तिरजतसंवेदने सतामेवेन्द्रियाणां दुष्टत्वाद्दोष-निराकृतत्वाद् गुणानामभावः स्वप्नादिष्विन्द्रियादीनां ज्ञानकारणाना-मन्यतमस्येन्द्रियस्य लिङ्गस्य वा ऽन्यस्य वा ऽभावान्निराश्रयतया गुणानामभाव इति ।

अत एव वचोऽभ्रान्तिदोषैर्मिथ्यात्वधीरिति ।
तद्व्याप्तेस्तु गुणाभावस्तत्कृता ह्यप्रमाणता ॥४३॥
तस्मात्कारणशुद्धत्वं ज्ञानप्रामाण्यकारणम् ।
स्वभावतो ऽप्रमाणत्वं तदभावेन लक्ष्यते ॥४४॥
अन्वयव्यतिरेकाभ्यामप्रामाण्यं न दोषतः ।
नाऽज्ञाने दृश्यते ह्येतत्कारणाभावहेतुके ॥४५॥

---

ननु ज्ञायमानेषु सत्सु दोषेष्वप्रामाण्यं गम्यते, तत्कथं न दोषनिमित्तमत आह अत एवेति[४३] । यत एव दोषनिराकृतगुणेषु शुक्तिरजतवेदनादिष्वप्रामाण्यमत एव वो मीमांसकानामियं भ्रान्तिर्दोषैर्मिथ्यात्वधीर्ज्ञानस्य मिथ्यात्वावगम इति तद्भावभावभ्रमात् । परमार्थतस्तु तद्व्याप्तेर्दोषव्याप्तेरिन्द्रियादीनां गुणाभावो ऽवगम्यते तदभावाच्च तदधीनं प्रामाण्यमनवगम्यमानं न स्वाभाविकस्याऽप्रामाण्यस्याऽपवादकं भवतीत्यनपोदितैवाऽप्रमाणता ऽवतिष्ठते । तत्कृता, गुणाभावकृता । तत्कृतत्वं चापवादाऽभावस्य तदधीनत्वादिति । एतदेवोपसंहरति तस्मादिति[४४] ।

एवं तावद्दोषान्वयव्यतिरेकावप्रामाण्यस्याङ्गीकृत्याऽन्यथासिद्धिरुक्ता, संप्रत्यन्वयव्यतिरेकावपि न स्त इत्याह अन्वयेति[४५] । अन्वयव्यतिरेकाभ्यामप्रामाण्यं दोषत इति यदुच्यते तन्नेत्यन्वयः । कथमित्याह नाज्ञाने इति । त्रिविधमप्रामाण्यं संशयाऽज्ञानविपर्ययैस्तत्राऽज्ञानलक्षणस्याऽप्रामाण्यस्य दोषाधीनत्वं नास्ति ज्ञानकारणाभावादेव तत्सिद्धेरिति । केचित्त्वज्ञाने दोषव्यतिरेके ऽप्यप्रामाण्याऽन्वयान्न दोषो निमित्तमित्येवं व्याचक्षते ।

ततश्च पुरुषाभावात्सति वा शुद्ध्यसंभवात् ।
निर्मूलत्वात्प्रमाणत्वं चोदनायां न युज्यते ॥ ४६ ॥
स्वतः सर्वप्रमाणानां प्रामाण्यमिति गम्यताम् ।
न हि स्वतो ऽसती शक्तिः कर्तुमन्येन शक्यते ॥ ४७ ॥

---

आक्षेपमुपसंहरति ततश्चेति[४६] । यदा हि गुणापेक्षं प्रामाण्यं तदा शब्दस्य पुरुषशुद्ध्यधीनं प्रामाण्यं वेदस्य चाऽपौरुषेयत्वे निराश्रयत्वादेव शुद्ध्यभावः । पौरुषेयत्वे पुरुषस्याऽतीन्द्रियार्थे नैव शुद्धिः संभवतीत्यप्रामाण्यं वेदस्य । स्वतो द्वयमित्यत्रापि सांकर्यादेव प्रामाण्यानिर्णयात्फलतो ऽप्रामाण्यमेव, परतो द्वयमित्यत्रापि गुणाभावादेवाऽप्रामाण्यमिति ।

अत्र प्रतिविधत्ते स्वत इति[४७] । कारणमाह न हीति । यदि ज्ञानस्य स्वविषयतथात्वावधारणे स्वतः शक्तिर्न स्यात्तदा नान्येनापि शक्यते संपादयितुम, अतो न कदा चित्कस्य चित्कश्चिदप्यर्थो ऽवधार्येतेत्यान्ध्यमेवाऽशेषस्य जगतः प्रसज्येत । कुतश्चास्य परतः सिद्धिः । गुणावधारणादिति चेत् । के पुनर्गुणा नाम, न हि चक्षुरादिषु गुणा नाम के चिदुपलभ्यन्ते । वैमल्यं गुण इति चेत्, नन्वेवं दोषाभावो गुणः, तथा चेद्वेदस्याऽपि तत्संभवाद् गुणाधीने ऽपि प्रामाण्ये नास्माकं का चित्क्षतिः । कथं च गुणात्तत्सिद्धिः, गुणनिमित्तं विज्ञानस्य यथार्थविषयत्व,मतः कारणभूतगुणावगमेन विषयस्यार्थस्य तथात्वमवगम्यते । विषयतथात्वमेव च ज्ञानस्य प्रामाण्यमतो ऽस्य गुणावगम्यत्वमिति चेत् । स्यादेवं यदि गुणनिमित्तं यथार्थत्वं स्यान्न तु तदस्ति । यदि हि तन्निमित्तं स्यात्ततो गुणरहिताद्दोषयुक्ताच्च चक्षुरादेरुपजाते पीतशङ्खादिज्ञाने न किं चित्सत्यं गम्येत, गम्यते

आत्मलाभे च भावानां कारणापेक्षता भवेत् ।
लब्धात्मनां स्वकार्येषु प्रवृत्तिः स्वयमेव तु ॥४८॥
'जाते ऽपि यदि विज्ञाने तवान्नार्थो ऽवधार्यते ।
यावत्कारणशुद्धत्वं न प्रमाणान्तराद्भवेत् ॥४९॥
तत्र ज्ञानान्तरोत्पादः प्रतीक्ष्यः कारणान्तरात् ।

---

तु तत्राऽपि शङ्खरूपादिकं सत्यम्, अतः स्वकारणनिमित्तमेव ज्ञानस्य यथार्थत्वं तद्दोषनिमित्तं चाऽयथार्थत्वम् । तथा हि सति पीतशङ्खादिज्ञानस्य स्वकारणतः सत्यविषयत्वं तद्दोषतश्चाऽसत्यविषयत्वं युक्तं भविष्यति ।

अभ्युपेत्यापि प्रमाणज्ञानस्य गुणवत्कारणजन्यत्वं विषयाऽवधारणस्य तदधीनत्वं नास्तीत्याह आत्मेति[४८] । सर्वे हि भावाः स्वात्मलाभायैव स्वकारणमपेक्षन्ते, घटो हि मृत्पिण्डादिकं स्वजन्मन्येवाऽपेक्षते नोदकाहरणे ऽपि । तथा ज्ञानमपि स्वोत्पत्तौ गुणवदितरद्वा कारणमपेक्षतां नाम, स्वकार्ये तु विषयनिश्चये ऽनपेक्षमेवेति ।

यदुक्तं 'न हि स्वतो ऽसती शक्तिः कर्तुमन्येन शक्यते' इति तद्विवृणोति जाते ऽपीति[४९] त्रयेण । यद्युपजातमपि ज्ञानं स्वविषयाऽवधारणाय स्वकारणगतगुणावधारणमपेक्षते ततो गुणावधारणाय प्रमाणान्तराज्ज्ञानोत्पादः प्रतीक्षितव्यः । न ह्यपरिच्छिन्नो गुणः प्रामाण्यं गमयति असत्समत्वात्, तदपि ज्ञानं विषयज्ञानवदेव स्वविषयाऽवधारणाय स्वकारणगुणावधारकं ज्ञानान्तरमपेक्षते तदपि तथेति जन्मसहस्रेणापि न कश्चिदर्थो ऽवधार्येतेति प्रामाण्यमेव सर्वत्रोच्छिद्येत । अतः प्रामाण्यं चेदस्ति स्वत एवाङ्गीकर्त्तव्यमिति ।

यावद्धि न परिच्छिन्ना शुद्धिस्तावदसत्समा ॥५०॥
तस्यापि कारणे शुद्धे तज्ज्ञाने स्यात्प्रमाणता ।
तस्याप्येवमितीच्छँश्च न क चिद्व्यवतिष्ठते ॥५१॥
यदा स्वतः प्रमाणत्वं तदा ऽन्यन्नैव गृह्यते ।
निवर्त्तते हि मिथ्यात्वं दोषाऽज्ञानादयत्नतः ॥५२॥
तस्माद्बोधात्मकत्वेन प्राप्ता बुद्धेः प्रमाणता ।
अर्थान्यथात्वहेतूत्थदोषज्ञानादपोद्यते ॥ ५३ ॥
अप्रामाण्यं त्रिधा भिन्नं मिथ्यात्वाऽज्ञानसंशयैः ।
वस्तुत्वाद् द्विविधस्यात्र संभवो दुष्टकारणात् ॥५४॥

---

ननु स्वतः प्रामाण्ये ऽप्यपवादकदोषाऽभावग्रहणं ऽस्त्येवाऽनवस्था ऽत आह यदेति[५२] । स्यादेवं यद्यपवादकाऽभावाय दोषाऽभावो ग्रहीतव्यः, न त्वेवं, ज्ञायमाना हि दोषाः प्रामाण्यं विघ्नन्तीति तदज्ञानादेव तदपवादकं मिथ्यात्वं निवर्त्तते तदज्ञानं वा यत्र सिद्धमिति न का चिदनवस्थेति । उपसंहरति तस्मादिति[५३] । प्राप्ता ऽवगता प्रमाणता विषयतथात्वम् अर्थाऽन्यथात्वकारणगतदोषज्ञानाभ्यामवगतेनाऽप्रामाण्येनापोद्यते नैवमयमर्थ इति ।

नन्वप्रामाण्यमवस्तुत्वान्न दोषजन्य,मतज्जन्यं च कथं ततो ऽवगम्यते ऽत आह अप्रामाण्यमिति[५४] । ततः किमित्याह वस्तुत्वादिति । संशयो नाम स्थाणुर्वा पुरुषो वेत्यनवधारणात्मकः प्रत्ययः, विपर्ययो ऽप्यतथाभूतार्थे तथाभावनिश्चायकं ज्ञानमेव,अतस्तयोर्वस्तुत्वात्संभवति दोषजन्यत्वम् । दोषनिमित्तं हि ज्ञानस्यायथार्थत्वं, दोषान्वयव्यतिरेकानुविधानात् । अतो दुष्टकारणजन्येन ज्ञानेनात्मनः प्रा-

अविज्ञाने तु दोषाणां व्यापारो नैव कल्प्यते ।
कारणाभावतस्त्वेव तत्सिद्धं नस्त्वदुक्तिवत् ॥५५॥
दोषतश्चाऽप्रमाणत्वे स्वतःप्रामाण्यवादिनाम् ।
गुणज्ञानाऽनवस्थावन्न दोषेषु प्रसज्यते ॥५६॥
साक्षाद्विपर्ययज्ञानाल्लघ्व्येव त्वप्रमाणता ।
पूर्वाऽबाधेन नोत्पत्तिरुत्तरस्य हि सिध्यति ॥५७॥

---

माण्यं विषयस्यार्थस्याऽतथाभूतस्यापि तथात्वमवगतमप्यर्थान्यथात्वज्ञानेन दोषज्ञानेन वा ऽपोद्यते। यत्त्वज्ञानरूपमप्रामाण्यं तत्र दोषाणां व्यापारो नैवास्माकमपि विद्यते ज्ञानकारणाभावादेव तद्भवतामिवास्माकमपि सिद्धमित्याह अविज्ञाने इति[५५] ।

ननु प्रामाण्यवदप्रामाण्ये ऽपि परायत्ते किमित्यनवस्था न भवत्यत आह दोषत इति[५६] । स्वतःप्रामाण्यवादिनामिति वा ऽनवस्थाभावे हेतुः । न हि पराधीनत्वमात्रेणाऽनवस्था भवति । सजातीयापेक्षायां ह्यनवस्था भवति, तेन यदि प्रमाणान्तरायत्तप्रामाण्यवदप्रमाणान्तरायत्तमप्रामाण्यं स्यात्ततः स्यादनवस्था, तत्तु प्रमाणभूतार्थान्यथात्वदोषज्ञानाधीनं, प्रामाण्यं च स्वत इति नाऽनवस्था । एतदेव विवृणोति साक्षादिति[५७] । यत्र तावत्साक्षादेकस्मिन्विषये विपर्ययज्ञानं विपरीतरूपज्ञानं नेदं रजतमिति तत्र तेनैव स्वतः प्रमाणेनार्थोऽन्यत्वरूपा लघ्वी शीघ्रगम्यैवाऽप्रमाणतेति नानवस्थाशङ्केति। किमिति पुनस्तद्वशेन पूर्वस्याऽप्रामाण्यं, विपरीतं कस्मान्न भवतीत्यत आह पूर्वेति । पूर्वं हि परमबाधित्वोत्पद्यते परस्य तदानीमनुत्पन्नत्वात्,उपजाते तु तस्मिन्नुपजायमानेनैव तेन बाधितं पूर्वमसत्त्वान्न परस्य बाधकं भवति, परं तु पूर्वस्मिन्नुपजाते तद्विरुद्धा-

दुष्टकारणबोधे तु सिद्धे ऽपि विषयान्तरे ।
अर्थात्तुल्यार्थतां प्राप्य बाधो गोदोहनादिवत् ॥५८॥
तत्र दोषान्तरज्ञानं बाधधीर्वा परा न चेत् ।
तदुद्भूतौ द्वितीयस्य मिथ्यात्वादाद्यमानता ॥५९॥

---

र्थोपस्थापकमुपजायमानमेव तस्य बाधकं भवतीति । कथं वा लघ्वी-त्याह पूर्वेति । ततश्च पूर्वाऽबाधेनोत्पत्तिमेवाऽनासादयतो ऽन्तरेणो-त्पत्त्यवस्थायामेवार्थाऽन्यथात्वरूपाऽप्रामाण्यबोधनाल्लाघवमिति ।

भवत्वेवं, समानविशेषणार्थान्यथात्वज्ञानेन पूर्वस्य बाधः संभव-त्यत आह दुष्टकारणेति[५८] । यद्यप्यत्र साक्षाद्विपर्ययज्ञानाभावान्न पूर्ववदप्रमाणता लघ्वी भवति तथापि कारणदोषाऽवगमप्रणाड्या ऽर्थात्तुल्यार्थतां प्राप्य कियता विलम्बेनास्त्येव बाधः, यथा गोदोहनेन पशुकामस्य प्रणयेदिति पुरुषार्थेनापि गोदोहनेन चमसस्य क्रत्वर्थ-स्याप्यार्थिकतुल्यविषयतया भवति बाधो, द्वयोरपि प्रणयनद्वारत्वा-त्तत्र गोदोहनेन प्रणयने साधिते, दोषज्ञानेन तु भिन्नविषयेण कथं पीतशङ्खज्ञानं बाध्यते, पीतशङ्खज्ञानं हि शङ्खे पीतिमानमवगमयति दो-षज्ञानं तु नेत्रे पित्तदोष,मतो नात्र बाधः, चमसस्यार्थाभावान्निवृत्तिः, एवमत्राप्यस्त्येवार्थतस्तुल्यविषयत्वम् । पीतज्ञानं हि पित्तं गृह्णाति तच्च श्वेते पीतभ्रमस्य कारणतया ऽवगते चक्षुषि दृश्यमानं स्वकार्यस्य पीतज्ञानस्य भ्रान्तत्वमवगमयति तद्भ्रान्तत्वेन चार्थान्यथात्वमिति बाधसिद्धिः ।

किमेष एवोत्सर्गः यत्सर्वस्याद्यस्य द्वितीयेन बाध इति, नेत्याह तत्रेति[५९] । तत्र द्वितीये बाधकज्ञाने तृतीयं दोषान्तरज्ञानं बाधधी-र्वा यदि नोद्भवति तत्तस्याद्यबाधकत्वं तद्भूतौ तु द्वितीयस्य मिथ्या-

स्वत एव हि तत्रापि दोषाऽज्ञानात्प्रमाणता ।
दोषज्ञाने त्वनुत्पन्ने न शङ्क्या निष्प्रमाणता ॥६०॥
एवं त्रिचतुरज्ञानजन्मनो नाधिका मतिः ।

---

त्वादाद्यस्य प्रामाण्यं भवतीति । नन्वेवं तृतीयाधीनमाद्यस्य प्रामाण्यं परत एव स्यादत आह स्वत एवेति[६०] । तत्खलूत्पत्तित एवार्थं परिच्छिन्दत्स्वत एव प्रमाणं, द्वितीयेन तु दोषज्ञानेन भ्रान्त्या प्रसक्तबाधनं, तृतीयेन तु द्वितीये बाधिते सत्यज्ञातदोषत्वान्निरपवादं भवति ।

ननु यथा ऽऽद्यस्य द्वितीयेन दोषो ऽवगतस्तस्यापि तृतीयेन, तथा तृतीयस्याऽपि दोषाशङ्का भवत्येव, तथा सर्वत्रेति न क्व चिदाश्वासः स्यादत आह दोषज्ञाने इति । दिक्कालावस्थेन्द्रियविषयदोषा हि मिथ्यात्वहेतवो लोकप्रसिद्धा यत्र नैव संभवन्ति, यथा जागर्यायामालोके स्वस्थेन्द्रियमनस्कस्य सन्निहितघटज्ञाने, तत्र नैव दोषाशङ्का तदभावाच्चाप्रामाण्यशङ्कापि नैव भवति । यथाविधेषु ह्यप्रामाण्यसंभवस्तथाविधेष्वेव तदाशङ्का भवति, संभावितदोषेषु च तत्संभव इति कथमन्यत्र शङ्क्यते, न हि ज्ञानत्वमात्रेण संशयो युक्तः संशयस्य साधारणधर्मादिनिश्चयाधीनत्वात् । तदवश्यं कानि चिज्ज्ञानान्यसंदिग्धप्रामाण्यान्येवोत्पद्यन्ते । तस्मान्न सर्वत्राशङ्का । यत्रापि दूरत्वादिदोषसंभवादप्रामाण्यशङ्का तत्रापि प्रत्यासत्तिगमनादिना ऽन्यतरपदार्थनिर्णयान्नातिदूरगमनामिति । एवं च तृतीयज्ञाने दोषो यदि न संभावितस्ततस्तदवधिरेव निर्णयः । अथ तु संभावितस्ततस्तन्निराकरणप्रयत्नेन चतुर्थज्ञानावसानो निर्णय इति नाधिकज्ञानाऽपेक्षा । तावतैव तृतीयेन चतुर्थेन वा द्वितीयस्य तृतीयस्य बाधे सति

प्रार्थ्यते तावतैवैकं* स्वतः प्रामाण्यमश्नुते ॥६१॥
शब्दे दोषोद्भवस्तावद्वक्त्रधीन इति स्थितिः ।
तदभावः क चित्तावद् गुणवद्वक्तृकत्वतः ॥६२॥
तद्गुणैरपकृष्टानां शब्दे संक्रान्त्यसंभवात् ।
यदा वक्तुरभावेन न स्युर्दोषा निराश्रयाः ॥६३॥
पौरुषेये द्वयं दृष्टं दोषाभावो गुणास्तथा ।
प्रामाण्यं तत्र गुणतो नैव स्यादित्युदाहृतम् ॥६४॥

---

यस्यैवाद्यस्य द्वितीयस्य वा ऽप्रामाण्यं समर्थ्यते तस्य स्वाभाविकं प्रामाण्यमनपोदितं भवति, इतरच्चापवादादप्रमाणमिति नाऽनवस्था । तदिदमाह एवमिति[६१] ।

एवं सामान्येन स्वतः प्रामाण्यं परतश्चाऽप्रामाण्यमुपपाद्याऽधुना प्रकृतवेदप्रामाण्यसिद्धये शब्दस्वभावमनुसंधत्ते शब्दे इति[६२]। वक्तृदोषाधीने इत्यर्थः । तदभावस्तर्हि कथमित्यत आह तदभाव इति । क चित्,पौरुषेयवाक्ये । कथमेतदित्याह तद्गुणैरिति[६३]। वेदे तु पुरुषाभावादेव निराश्रयत्वाद्दोषाणामभाव इत्याह यदेति । दोषाभावाच्च वेदस्यौत्सर्गिकं प्रामाण्यमनपोदितं भवति ।

ननु वक्तृगुणान्वयव्यतिरेकानुविधायित्वाच्छब्दस्य प्रामाण्यं तदधीनमेव युक्तं, तदभावाच्च वेदस्याऽप्रामाण्यमेव युक्तमत आह पौरुषेये इति[६४]। सर्वत्र प्रमाणभूतपौरुषेयवचसि न केवलं गुणा एव, दोषाभावो ऽपि दृष्ट,स्तत्र गुणनिबन्धनत्वं प्रामाण्यस्य प्रागेव निरस्तम्, अतो दोषाऽभावनिबन्धनमेव तदतो वेदस्यापि सिध्यती-

---

* एके इति का. पा. ।

तस्माद् गुणेभ्यो दोषाणामभावस्तदभावतः ।
अप्रामाण्यद्वयासत्त्वं* तेनोत्सर्गोऽनपोदितः ॥६५॥
प्रत्ययोत्पत्तिहेतुत्वात्प्रामाण्यं नापनीयते ।
दोषाभावो गुणेभ्यश्चेन्ननु सैवाऽस्थितिर्भवेत् ॥६६॥
तदा न व्याप्रियन्ते हि ज्ञानमानतया गुणाः ।
दोषाभावे तु विज्ञेये सत्तामात्रोपकारिणः ॥६७॥
तत्राऽपवादनिर्मुक्तिर्वक्त्रभावाल्लघीयसी ।

---

ति । ननु दोषाभावनिबन्धनमपि परत एव स्यादितीमामाशङ्कामपनुदन्नुपसंहरति तस्मादिति[६५]। दोषाभावो ऽपवादाभाव एको युज्यते न साक्षात्प्रामाण्ये अप्रामाण्यद्वयाऽसत्त्वमिति। यत्रापि साक्षाद्विपर्ययज्ञानादर्थान्यथात्वमवगम्यते† यत्रापि दोषज्ञानेन, तत्रोभयत्रापि ज्ञानस्याऽयथार्थविषयत्वे दोषा एव कारणमतो दोषाभावे द्वयाऽसत्त्वादुत्सर्गस्याऽनपवाद इति । असति चापवादे यत्प्रत्ययोत्पत्तिहेतुत्वात्प्रत्यक्षादिवत्पुरुषवाक्यस्यापि प्राप्तं प्रामाण्यं तन्नापनीयतइत्याह प्रत्ययेति[६६] । तेन लोके ऽपि शब्दस्य स्वत एव प्रामाण्याद्वेदस्यापि तत्सिद्धिरिति ।

अत्र गुणेभ्यो दोषाभावः पौरुषेयेष्वित्येतच्छ्रुत्वा कश्चिच्चोदयति दोषाभाव इति । परिहरति तदेति[६७] । प्रामाण्यावधारणे हि ज्ञायमानतया गुणाः कारणमिति स्यादनवस्था, दोषाऽभावे तु सत्तामात्रोपकारिणस्ते, तन्निराकृतास्तु दोषा नौत्सर्गिकं प्रामाण्यमपवदन्तीति । स्यात्तावदेवं गुणनिराकृतदोषेष्वाप्तवाक्येष्वपवादनिर्मु-

---

* सत्त्वादिति पाठान्तरम् । † गम्यते इति २ पु. पा.

वेदे तेनाऽप्रमाणत्वं नाशङ्कामपि गच्छति ॥६८॥
अतो वक्तॄनधीनत्वात्प्रामाण्ये तदुपासनम् ।
न युक्तमप्रमाणत्वे कल्प्ये तत्प्रार्थना* भवेत् ॥६९॥
ततश्चाप्ताऽप्रणीतत्वं न दोषायात्र जायते ।
प्रयोगाणां तु सर्वेषां वक्ष्यामः प्रतिसाधनम् ॥७०॥
पौरुषेये तु वचने प्रमाणान्तरमूलता ।
तदभावे हि तद् दुष्येदितरन्न कदा चन ॥७१॥

---

क्तिः, वेदे तु गुणरहिते कथमत आह तत्रेति[६८] ।

एवं लोके ऽपि शब्दप्रामाण्यस्य वक्त्रपेक्षाऽभावाद्वेदस्य प्रामाण्यसिद्ध्यर्थं नैयायिकादिभिः कर्त्तुरुपासनमुपपादनं कृतं तदनर्थकमित्याह अत इति[६९] युक्तमन्तेन । यदि तु शाक्यादिवदप्रामाण्यमेव वेदस्य कल्पयितव्यं ततो ऽर्थवती कर्त्तृप्रार्थनेति सोपहासमाह अप्रमाणत्वे इति। ततश्च यदुक्तं 'सुतरामप्रमाणत्वं वक्तृप्रामाण्यवर्जना'दिति तदयुक्तमित्याह ततश्चेति[७०] । ये तु स्वर्गयागादिसंबन्धविषया इत्यादयः प्रयोगास्ते सप्रतिसाधनत्वान्न वेदाऽप्रामाण्यमापादयन्तीत्याह प्रयोगाणामिति । 'चोदनाजनिता बुद्धि'रित्यादिना वक्ष्यतइति ।

ननु पौरुषेयमपि चेत्स्वतः प्रमाणं, किं तस्यापि मूलप्रमाणेनाऽत आह पौरुषेये इति[७१]। प्रमाणान्तरमूलता ऽपेक्षणीयैवेति । कथमित्याह तदभावे इति । प्रमाणाभावे हि तदर्थादप्रमाणमूलतया दुष्टं भवति दोषाच्च प्रामाण्यापवाद इत्यनपवादाय प्रमाणान्तरमपेक्षते इ-

---

* कल्प्ये नात्मार्थता भवेत्, इति २ पु. पा. ।

तेनेतरैः प्रमाणैर्या चोदनानामसङ्गतिः ।
तयैव स्यात्प्रमाणत्वमनुवादत्वमन्यथा ॥७२॥
अन्यस्यापि प्रमाणत्वे सङ्गतिर्नैव कारणम् ।
तुल्यार्थानां विकल्प्यत्वादेकं तत्र हि बोधकम् ॥७३॥
यत्रापि स्यात्परिच्छेदः प्रमाणैरुत्तरैः पुनः ।
नूनं तत्रापि पूर्वेण सो ऽर्थो नाऽवधृतस्तथा ॥७४॥
सङ्गत्या यदि चेष्येत पूर्वपूर्वप्रमाणता ।

---

तत्तु वैदिकं तदभावे ऽपि न दुष्यतीति नाऽप्रमाणं भवतीति । न केवलं दोषाभावः किं तु गुण एव मूलप्रमाणाभावे वेदस्येत्याह ते-नेति[७२] । तेन मूलप्रमाणाभावेनाऽजाता येयं प्रमाणान्तरसंगतिस्त-यैव प्रामाण्य,मन्यथा ऽनुवादत्वापत्तेरिति । ननु संवादनिबन्धनमेव स-र्वेषां प्रत्यक्षादीनां पौरुषेयवाक्यानां च प्रामाण्यं, न चासौ वेदस्या-स्तीति कथं प्रामाण्यमत आह अन्यस्यापीति[७३] । पूर्वत्र गुण-निबन्धनत्वं निराकृत,मधुना संवादाधीनत्वमिति वेदितव्यम् ।

संगतिर्न कारणं किन्तु विरोधिन्येवेति कथमित्याह तुल्यार्थो-नामिति । यत्रैकस्मिन्विषये ऽनेकविज्ञानसन्निपातस्तत्र तेषामन्यो-न्यनिरपेक्षाऽर्थपरिच्छेदहेतुत्वेन तुल्यानामेव प्रामाण्यं न समुच्चिता-नाम् । अतो न संवादाधीनं प्रामाण्यमिति । नन्वेकमेवार्थं दूराद् दृष्टा ऽपि पुनः प्रमित्सयैव प्रत्यासीदन्तो दृश्यन्ते तत्पूर्वस्य नैरपेक्ष्ये नोप-पद्यते ऽतः संवादापेक्षमेव प्रामाण्यमत आह यत्रापीति[७४] । अप्र-मितविशेषप्रमित्सया तत्र प्रत्यासत्तिर्न पुनः प्रमितस्य संवादायेति । संगतिनिबन्धनं च प्रामाण्यं गुणनिबन्धनवदेव न क्व 'चक्षिवातञ्चित-

प्रमाणान्तरमिच्छन्तो न व्यवस्थां लभेमहि ॥७५॥
कस्य चित्तु यदीष्येत स्वत एव प्रमाणता ।
प्रथमस्य तथाभावे प्रद्वेषः किंनिबन्धनः ॥७६॥
श्रोत्रधीश्चाप्रमाणं स्यादितराभिरसङ्गतेः ।
स्याच्चेत्तज्जनितेनैव ज्ञानेनान्येन सङ्गतिः ॥७७॥
वेदेऽपि शतकृत्वः स्याद्बुद्धिरुच्चारणाऽनुगा ।
साधनान्तरजन्या तु बुद्धिर्नास्ति द्वयोरपि ॥७८॥
यथा त्वेकेन्द्रियाधीनज्ञानान्तरनिबन्धना ।

---

इत्याह संगत्येति[७५] । ननु विषयज्ञानस्याऽर्थक्रियाज्ञानाधीनं प्रामाण्यं तच्च स्वतः प्रमाणमिति नाऽनवस्था । यथा ऽऽह धर्मकीर्त्तिः 'प्रमाणमविसंवादि ज्ञानमर्थक्रियास्थितिः, अविसंवादन'मिति । न्यायविदो ऽप्याहुः 'प्रमाणतो ऽर्थप्रतिपत्तौ प्रवृत्तिसामर्थ्यादर्थवत्प्रमाण'मिति । तदिदमाशङ्कते कस्य चिदिति[७६] । परिहरति प्रथमस्येति । न विषयज्ञानार्थक्रियाज्ञानयोः कश्चिद्विशेष इति दर्शितं न्यायरत्नमालायां शास्त्रदीपिकायां च ।

इतश्च न संवादाधीनं प्रामाण्यमित्याह श्रोत्रधीरिति[७७] । इतराभि,र्नेत्रादिधीभिरित्यर्थः । शङ्कते स्याच्चेदिति । परिहरति वेदे ऽपीति[७८] । अथ वेदस्य विजातीयसंवादाभावादप्रामाण्यं तच्छ्रोत्रबुद्धेरपि स्यादित्याह साधनान्तरेति । ततश्च संवादकारणवादिना सजातीयसंवादो ऽपि कारणमिति वदितव्यं, ततश्च सिद्ध्यति वेदस्याऽपि प्रामाण्यमित्याह यथेति[७९] । यत एवं गुणसंवादार्थक्रि-

सङ्गतिः कारणं प्राप्य तथा वेदे ऽपि कल्प्यताम्॥७९॥
तस्माद् दृढं यदुत्पन्नं नापि संवादमृच्छति ।
ज्ञानान्तरेण विज्ञानं तत्प्रमाणं प्रतीयताम् ॥८०॥
न चाऽनुमानतः साध्या शब्दादीनां प्रमाणता ।
सर्वस्यैव हि मा प्राप्तप्रमाणान्तरसाध्यता ॥८१॥
ननु प्रमाणमित्येवं प्रत्यक्षादि न गृह्यते ।
न चेत्थमगृहीतेन व्यवहारो ऽवकल्पते ॥८२॥
प्रमाणं ग्रहणात्पूर्वं स्वरूपेणैव संस्थितम् ।
निरपेक्षं स्वकार्येषु गृह्यते प्रत्ययान्तरैः ॥८३॥

---

यादीनामपेक्षा नास्ति तस्मादीदृशं ज्ञानं प्रमाणमित्याह तस्मादिति[८०]।

ननु न क्व चिदप्याप्ताऽप्रणीतस्य वाक्यस्य प्रामाण्यं दृष्टं तत्कथं वेदस्य स्यादत्राह न चेति[८१]। अनुमानसाध्ये हि प्रामाण्ये दृष्टान्तापेक्षा न तु तत्तथेति। कस्मादित्याह सर्वस्येति। अनुमानापेक्षत्वे सत्यनुमानस्याऽप्यनुमानान्तराऽपेक्षत्वात्सैवाऽनवस्था स्यादिति। चोदयति नन्विति[८२]। नान्यापेक्षं प्रामाण्यं किन्तु स्वतःसिद्धमित्युक्तम। न च प्रत्यक्षादिज्ञानमुत्पद्यमानमेव प्रमाणमित्येवं गृह्यते, न हि तदात्मानं गृह्णाति कथं तद्धर्मत्वेन प्रामाण्यं गृह्णीयात्न चाऽगृहीतप्रामाण्येन व्यवहारसिद्धिरिति।

परिहरति प्रामाण्यमिति[८३]। विनैवात्मग्रहणेन प्रमाणं स्वसत्तामात्रेणैव संस्थितं कृतकार्यं भवति अर्थपरिच्छेदकरणात्परिच्छिन्ने चार्थे तन्मात्रनिबन्धनत्वात्कार्यस्य व्यवहारस्य तत्रापि नाऽन्यापेक्षा। एवं कृतकार्ये पश्चात्संजातायां जिज्ञासायामानुमानिकैः प्रत्ययान्तरै-

तेनास्य ज्ञायमानत्वं* प्रामाण्ये नोपयुज्यते ।
विषयानुभवो ह्यत्र पूर्वस्मादेव लभ्यते ॥८४॥
अप्रमाणं पुनः स्वार्थग्राहकं स्यात्स्वरूपतः ।
निवृत्तिस्तस्य मिथ्यात्वे नागृहीते परैर्भवेत् ॥८५॥
न ह्यर्थस्याऽतथाभावः पूर्वेणातस्तथात्ववत् ।
तत्राप्यर्थोऽन्यथाभावे धीर्यद्वा दुष्टकारणे ॥८६॥

---

गृह्यते । यथा वक्ष्यति ज्ञाते त्वनुमानादवगच्छाम इति । तेनाऽस्य ज्ञानस्य ज्ञायमानत्वमात्मीयप्रामाण्ये ग्रहीतव्ये नोपयोग्येवेत्याह तेनेति[८४] । कथं तदज्ञानेन तत्प्रामाण्यग्रहणमित्याह विषयानुभव इति । न ज्ञानसम्बन्धित्वेन प्रामाण्यं गृह्यतइति ब्रूमः किं तु विषयतथात्वं तद्धिज्ञानस्य प्रामाण्यं तन्निबन्धनत्वाज्ज्ञाने प्रमाणबुद्धिशब्दयोः, तच्चाऽज्ञातादेव ज्ञानात्स्वत एव गृहीतमित्यनर्थकं प्रमाणान्तरमिति । अप्रमाणं तु न स्वीयमप्रामाण्यं स्वतो गमयति तदपि हि स्वरूपेणैवार्थं गृह्णाति स्वानुरूपमिति यावत् । रजतज्ञानं हि शुक्तिकाशकलं रजतमित्येव गृह्णाति न पुनर्नेदं रजतमिति । तेनाऽप्रमाणज्ञानमपि स्वतःप्रामाण्यमेवात्मनो ऽविद्यमानमपि गृह्णत्तन्निबन्धनं व्यवहारं प्रवर्त्तयति । तत्राऽप्रामाण्यग्रहणाय व्यवहारनिवृत्तये वाऽस्ति परापेक्षेत्याह अप्रमाणमिति[८५] । तदेव व्यनक्ति न हीति[८६] । अर्थान्यथात्वं हि ज्ञानस्याप्रामाण्यं न च तत्तथात्ववत्स्वतो गृहीतमिति युक्ता परापेक्षेति ।

यद्येवं वेदस्यापि परत एवाऽप्रामाण्यमिति ब्रूमः, अस्ति हि बाधः पूर्वोक्तादनुमानगुणादित्यत आह तत्रापीति । तत्राप्यप्रामा-

---

* तेनास्याज्ञायमानत्वे, इति का. पा. ।

तावतैव च मिथ्यात्वं गृह्यते नान्यहेतुकम् ।
उत्पत्त्यवस्थं चैवेदं प्रमाणमिति मीयते ॥८७॥
अतो यत्रापि मिथ्यात्वं परेभ्यः प्रतिपाद्यते ।
तत्राप्येतद् द्वयं वाच्यं न तु साधर्म्यमात्रकम् ॥८८॥
चोदनार्थोऽन्यथाभावं कुर्वतश्चाऽनुमानतः ।
तज्ज्ञानेनैव यो बाधः स कथं विनिवार्यते ॥८९॥
तन्मिथ्यात्वादबाधश्चेत् प्राप्तमन्योन्यसंश्रयम् ।
नानुमानादतो ऽन्यद्धि बाधकं किं चिदस्ति ते ॥९०॥
न चान्यैरग्रहे ऽर्थस्य स्यादभावो रसादिवत् ।

---

ण्ये ऽर्थान्यथात्वे वा दुष्टकारणे वा ऽऽत्मनो या धीः सैव कारणं नाऽनुमानगुण इति । किमियं राजाज्ञा, नेत्याह तावतेति[८७] । तावतैव कारणद्वयेन लोके ज्ञानानामप्रामाण्यं गृह्यते नाऽन्यथेति सर्वजनस्वसंवेद्यमिति । ननु प्रमाणं सद्बाधकं पूर्वस्य मिथ्यात्वं करोति, तस्य तु कुतः प्रामाण्यमत आह उत्पत्तीति । स्वतस्तस्याप्रामाण्यमिति वर्णितमिति । यत एवैवं कारणद्वयादेकमिथ्यात्वं स्वयमवगतमत एव परेभ्यो मिथ्यात्वं प्रतिपादयता एतदेष द्वयं वक्तव्यं न यत्किं चित्साधर्म्यमात्रं प्रत्यक्षाद्यगतार्थत्वादित्यादिकमित्याह अत इति[८८] । आगमविरुद्धं चाऽनुमानमित्याह चोदनेति[८९] । शङ्कते तन्मिथ्यात्वादिति[९०] । परिहरति प्राप्तमिति । कथमित्याह नाऽनुमानादिति । तेनैवानुमानेन बाधान्मिथ्यात्वं सिद्धे च मिथ्यात्वेऽनुमानमितीतरेतराश्रयत्वमिति ।

ननु यथा ऽनुमानादन्यद्बाधकं नास्ति तथा साधकमप्यागमाद-

तेषां जिह्वादिभिर्यस्मान्नियमो ग्रहणे ऽस्ति हि ॥९१॥
तद्धियैवाऽर्थबोधश्चेत्तादृग्धर्मे भविष्यति ।
ममाऽसिद्धमिदं किं तु वेदाज्ञाने ऽवबोधने ॥९२॥
वक्तुं न द्वेषमात्रेण युज्यते सत्यवादिना* ।

---

न्यस्मास्ति तेन सद्भावो ऽपि वेदार्थस्य दुर्लभ एवात आह न चेति[११] । न हि वयमनुमानसद्भावमङ्गीकृत्यैव बाधकान्तराऽभावान्मिथ्यात्वस्याऽसिद्धिं ब्रूमः, किं त्वमनुमानमेव नोदेतीति साधकस्त्वागमो विद्यतएवेति । नन्वेकेन गृहीतस्याऽर्थस्यान्यैरगृहीतस्याऽभावो भवति रसादीनामिव, अन्यथा तेषामपि जिह्वादिगृहीतानां नेत्राद्यगृहीतानामभावः स्यादिति शङ्कते तद्धियेति†[१२] । परिहरति तादृगिति । पूर्वं प्रमाणस्य प्रामाण्यं न प्रमाणान्तरापेक्षमित्युक्तम्, इदानीं तु प्रमेयो ऽप्यर्थः एकेनैव सिध्यन्न स्वसिद्धये प्रमाणान्तरमपेक्षतइत्युच्यतइत्यपौनरुक्त्यम् ।

नन्वसिद्धं‡ नश्चोदनाप्रामाण्यं कथं तद्बाधो ऽनुमानदूषणम् । अत्र तावदिदमेव वक्तव्यं यद्यपि तवाऽसिद्धं तथाप्यस्माकं तावत्सिद्धमस्मत्प्रतिपाद्मार्थं च साधनवचनं, न च वयमागमबाधितमर्थमनुमानेन प्रतिपादयितुं शक्याः§ । तेन भवत्येवागमबाधो ऽनुमानस्य दूषणम् । न च तवाऽप्यसिद्धिः शक्यते वक्तुमित्याह ममेति । तवापि हि वेदादसंदिग्धा ऽविपर्यस्ता ऽर्थबुद्धिर्जायते अतः सिद्धमेव प्रामाण्यम्, असिद्धाभिधानं तु द्वेषमात्रेणाऽसत्यमेवोच्यतइति । न च द्वेषादसंप्रतिपत्तेर्वा भवत्यप्रामाण्यं नापीच्छानुज्ञाभ्यां प्रामाण्य-

---

* सत्यवादिनाम्, इति २पु. पा. । † न द्वितीयेति २ पु. ।
‡ सिद्धमिति २ पु. पा. । § शक्ता इति ३ पु. पा. ।

द्वेषादसंमतत्वाद्वा न च स्यादप्रमाणता ॥९३॥
न चात्मेच्छाऽभ्यनुज्ञाभ्यां प्रामाण्यमवकल्पते ।
अग्निदाहादिदुःखस्य न ह्यप्रत्यक्षतेष्यते ॥९४॥
न चाभिलापिकं ज्ञानं प्रामाण्येनावधार्यते* ।
'तस्मादालोकवद्वेदे सर्वसाधारणे सति ॥९५॥
नैवं विप्रतिपत्तव्यं' बौद्धादेर्वक्ष्यते ऽन्तरम् ।
पुरुषाऽशक्तितस्तत्र सापवादत्वसंभवः ॥ ९६ ॥
वेदस्याऽपौरुषेयत्वे सिद्धा त्वेवं प्रमाणता ।

---

मित्याह द्वेषादिति[९३] । अत्रैवोदाहरणमाह अग्नीति[९४] । उपसंहरति तस्मादिति[९५] पादत्रयेण ।

नन्वेवं बौद्धादिवाक्यादपि ज्ञानोत्पत्तेस्तस्यापि वेदवत्प्रामाण्यं स्यादत आह बौद्धादेरिति[९६] । "अशक्यं हि तत्पुरुषेण ज्ञातुमृते वचना"†दित्यत्र वक्ष्यतइति । एतदेव दर्शयति पुरुषेति । न ह्यतीन्द्रियार्थे पुरुषस्य दर्शनशक्तिः संभवति प्रत्यक्षाद्यसंभवात्, तेन भ्रान्तिविप्रलम्भमूलतया तद्वाक्यस्य दुष्टत्वादौत्सर्गिकमपि प्रामाण्यमपोद्यते । वेदस्य त्वपौरुषेयत्वेन निर्दोषत्वादनपोदिता प्रमाणता सिद्धा भवतीत्याह वेदस्येति[९७] ।

किमिति पुनर्वेदस्य कर्ता नाङ्गीक्रियते कल्पनागौरवात्तदाह

---

* प्रामाण्येनावकल्पते, इति २ पु. पा. ।

† शा. भा. पृ. ४ प. २१ ।

'कर्तृमत्त्वे* तु वेदस्य सम्यङ्मिथ्यात्ववादिभिः ॥९७॥
कर्ता गुणाश्च दोषाश्च महाजनपरिग्रहः ।
एवमादि विना युक्त्या कल्प्यं' मीमांसकैः पुनः ॥९८॥
इदानीमिव सर्वत्र दृष्टान्नाऽधिकमिष्यते ।
एवंभूतस्य वेदस्य ज्ञानोत्पत्तिं प्रकुर्वतः ॥९९॥
स्वरूपविपरीतत्वसंशयौ भाष्यवारितौ ।
निवारयिष्यते चापि दुष्टकारणकल्पना ॥१००॥

---

कर्तृमत्त्वे इति कल्प्य[९८]मन्तेन । महाजनपरिग्रह इति ।सम्यक्त्ववादिनो वेदानां महाजनपरिग्रहं प्रामाण्याय वर्णयन्ति इतरे स्वागमानां, तदिदं सर्वमप्रमाणकमिति । मीमांसकैस्तु न किं चिददृष्टं कल्पनीयमित्याह मीमांसकैरिति ।

तदेवं नित्यनिर्दोषस्य वेदस्य ज्ञानं चोत्पादयतो यदि परसंशयविपर्ययनिमित्तमप्रामाण्यं स्यात्तद् द्वयमपि न चाग्निहोत्रं जुहुयादित्यादिना न चैष दोषान्तरइत्यादिना† च भाष्येण निराकृतमित्याह एवंभूतस्येति[९९] । एवंभूतशब्देन नित्यनिर्दोषत्वमुक्तम् । तद्दर्शयति निवारयिष्यते इति[१००] । दोषसंशयात्प्रामाण्यसंशयः दोषनिश्चयाच्च तद्विपर्ययः, तदुभयं दोषनिवारणेन निवारितं भवति ।

---

* कर्तृसत्त्वे, इति पाठान्तरम् ।

† न च स्वर्गकामो यजेतेत्यतो वचनात् संदिग्धमवगम्यते, भवति वा स्वर्गो न वा भवतीति । न च निश्चितमवगम्यमानमिदं मिथ्या स्यात्, यो हि जनित्वा प्रध्वंसते नैतदेवमिति स मिथ्याप्रत्ययः, न चैष कालान्तरे, पुरुषान्तरे, अवस्थान्तरे, देशान्तरे, वा विपर्येति तस्मादवितथः । शा. भा. पृ. ४ पं. १४। अत्र मुद्रितभाष्यपुस्तके किंचित्पाठो विपर्यस्त इति भाति ।

पुरुषाभावतस्तेन तद्द्वारेणाप्यशङ्कितौ ।
तथा सत्यतथाभावो बुद्ध्यनुत्पत्तिमाश्रितः ॥१०१॥
तत्र विप्रतिषिद्धत्वं ब्रवीतीत्येवमादिना ।
यथादृष्टार्थवादित्वं तच्चेत्प्रत्ययितादिति ॥१०२॥
इन्द्रियेति तु मूलं चेदस्यास्तीत्येवमब्रवीत्* ।
दृष्टत्वसत्यवादित्वे तच्चेत्प्रत्ययितादिति ॥१०३॥

---

संप्रत्याक्षिप्तं भाष्यं समाधत्ते तथा सतीति[१०१] । यदा हि संशयविपर्ययौ निराकरिष्येते तदा ज्ञानाऽनुत्पत्तिविषयमेवाऽतथाभावचोद्यं भवतीति । तत्रेदमुत्तरं, "विप्रतिषिद्धमिदमुच्यते ब्रवीति वितथं चेति" । बोधयति न बोधयतीति विप्रतिषिद्धमित्यर्थः । "यत्तु लौकिकं वचनं तच्चेत्प्रत्ययितात्पुरुषादिन्द्रियविषयं वा ऽवितथमेव तत् । अथाऽप्रत्ययितात्पुरुषादनिन्द्रियविषयं वा तत्पुरुषबुद्धिप्रभवमप्रमाणम् । अशक्यं हि तत्पुरुषेण ज्ञातुमृते वचना"† दिति भाष्यं, तत्र प्रत्ययितशब्दस्यार्थमाह यथेति[१०२] । तथाभूतमतथाभूतं वा यथादृष्टार्थं यो वदति स प्रत्ययित इति । इन्द्रियविषयमित्यपि तस्यैव विशेषणमित्याह इन्द्रियेति[१०३] । इन्द्रियग्रहणमनुमानादीनामपि मूलप्रमाणान्तराणामुपलक्षणम् । तदयं भाष्यार्थः, संभवत्प्रमाणमूलं यत्प्रत्ययितवाक्यं तत्प्रमाणमेव, अतो यदि तदभिप्रायं यथा यत्किंचनेति दृष्टान्तवचनं ततः साध्यवैकल्यमिति । यत्त्वप्रत्ययितवचनं यच्चाऽसंभवन्मूलप्रमाणं तत्पुरुषबुद्धिप्रभवं मूलदोषेण दुष्टत्वादप्रमाणं नैतद्दृष्टान्तेनाऽदुष्टस्यापि वेदवचसो ऽप्रामाण्यमिति ।

---

* एतदब्रवीदिति २ पु. पा. ।

† शा. भा. पृ. ४ पं. १८ ।

दृश्यमानार्थवादित्वे स्यादनाप्तोक्तिसत्यता ।
एवं त्वेकाङ्गवैकल्यात्प्रत्युदाहरणास्थितिः ॥१०४॥
एकैकाभावमात्रे स्यादाप्तत्वैन्द्रियकत्वयोः ।
'अप्रत्यायितपक्षे स्यादैन्द्रियस्याप्यसत्यता ॥१०५॥
अनिन्द्रियत्वपक्षे वा सत्प्रत्यायितभाषितम् ।

---

केचित्तु यथावस्थितार्थदर्शित्वं यथादृष्टार्थवादित्वं च द्वयं प्रत्यायितशब्दार्थमाहुरित्याह द्रष्टृत्वेति । द्रष्टृत्वं यथावस्थितार्थदर्शित्वं सत्यवादित्वं यथादृष्टार्थवादित्वमिति । इन्द्रियविषयं वेत्यनेन त्वनाप्तवाक्यमपि श्रोतुरिन्द्रियविषयभूतमवितथमित्युच्यते इत्याह दृश्यमानेति[१०४] ।

एतद्व्याख्यानं दूषयति एवं त्विति । एकाङ्गविकलं हि प्रत्युदाहरणं न द्व्यङ्गविकलम्, अत्र त्वाप्तत्वैन्द्रियकत्वयोरेकैकमेव प्रामाण्यकारणमाश्रितम्, अनयोरेकैकस्याभावे प्रत्युदाहरणं स्यात् । ततः किं जातमत आह अप्रत्यायितेति[१०५] सपादेन । प्रत्ययितप्रत्युदाहरणे हि अथाऽप्रत्ययितादित्युच्यमाने प्रत्ययिताऽभावमात्रेणाऽप्रामाण्यात् श्रोतुरिन्द्रियविषयं यदप्रत्ययितवाक्यं प्रमाणत्वेनोदाहृतं तदेवेदानीमप्रमाणत्वेन प्रत्युदाहरणं स्यात्, इन्द्रियविषयं वेत्यस्य* प्रत्युदाहरणे त्वनिन्द्रियविषयं वेत्युच्यमाने यदाप्तवाक्यमपि श्रोतुरनिन्द्रियविषयं प्रमाणत्वेनाभ्युपगतं तदेवाऽप्रमाणत्वेन प्रत्युदाहरणं स्यादिति ग्रन्थव्याघातः स्यादिति । किं च यदीन्द्रियविषयमित्यनेन दृश्यमानार्थविषयमनाप्तवचनमुच्यते ततो ऽनिन्द्रियविषयमित्यनेना-

---

* अथेन्द्रियाविषयं चेत्तस्येति २ पु. पा. ।

व्याहतग्रन्थतैवं स्यात् तस्मात्पूर्वेण सत्यता ॥१०६॥
परेण मूलसद्भाव इन्द्रियेण तु दर्शितः ।
अप्रामाण्यनिवृत्त्यर्थं दोषाभावोपवर्णनम् ॥१०७॥
गुणात्प्रामाण्यमित्येवं तत्पूर्वं सुनिराकृतम् ।
पूर्वत्र प्रतिषिद्धत्वान्नैतत्प्रामाण्यकारणम्॥१०८॥
'समुच्चयार्थो वाशब्दः पूर्वस्मि'न्नुत्तरत्र च ।

---

पि श्रोत्रा यन्नोपलभ्यते तद्वक्तव्यं, ततश्चा 'ऽशक्यं हि तत्पुरुषेण ज्ञातुमृते वचना'"दिति भाष्यं नोपपद्येत, न हि यत् श्रोत्रा नोपलभ्यते तज्ज्ञातुमशक्यं भवति । तस्मादिन्द्रियविषयमित्यनेन संभवन्मूलप्रमाणमुच्यते ऽनिन्द्रियविषयमित्यनेन चाऽसंभवन्मूलप्रमाणम् । एवं चा'ऽशक्यं हि त'"दिति भाष्यमुपपन्नं भवति। प्रत्ययितशब्दश्चायमितजन्तः प्रत्ययो ऽस्य संजात इत्येतावद्वदति, प्रत्ययश्चायथार्थो ऽपि संभवतीति न यथार्थदर्शी प्रत्ययितः किं तु यथादृष्टार्थवाद्येव । तस्मात्पूर्वव्याख्यैव ज्यायसीत्याह तस्मादिति[१०६] । सत्यता यथादृष्टार्थवादिता पूर्वेण प्रत्ययितशब्देन दर्शिता परेण त्विन्द्रियविषयमित्यनेन तस्यैव मूलसद्भावो विशेषणमुच्यतइति ।

नन्वेवं सम्यङ्मूलापेक्षं गुणत एव प्रामाण्यं स्यादत आह अप्रामाण्येति[१०७] । अपवादभूताऽप्रामाण्यनिवृत्त्यर्थमेव दोषाऽभावोपवर्णनमिदं गुणद्वारेण, न तु गुणस्वरूपमेव प्रामाण्यायोच्यतइति । किमित्येवं वर्ण्यतइत्याशङ्क्याह गुणादिति[१०८] । निराकृतमिदं निराकृतत्वाच्च नेदं प्रामाण्यकारणमिति । यदि प्रत्ययितत्वमैन्द्रियकत्वं च समुच्चितं लक्षणं कथं वाशब्दो ऽत आह समुच्चयार्थ इति ।स्मि[१०९]*-

---

* इत्यस्मिन्, इति ३ पु. पा. । इति तास्मिन्, इति २ पु. पा. ।

विकल्पेनोभयोराह प्रत्युदाहरणे पृथक् ॥१०९॥
शक्ये ऽप्यसत्ये मिथ्यात्वं दृष्टं सत्ये ऽप्यशक्तिके ।
नानेन वचनेनेह सर्वज्ञत्वनिराक्रिया ॥११०॥
वचनादृतइत्येवमपवादो हि संश्रितः ।
यदि षड्भिः प्रमाणैः स्यात्सर्वज्ञः केन वार्यते ॥१११॥

---

न्तेन । निपातानामनेकार्थत्वादित्यर्थः । प्रत्युदाहरणे तु विकल्पार्थ एव । द्वयोरपि सत्यपि प्रत्यायितत्वैन्द्रियकत्वयोः पृथक् पृथक्प्रत्युदाहरणार्थं इत्याह उत्तरत्रेति । ते एव प्रत्युदाहरणे दर्शयति शक्ये इति[११०] । असत्ये ऽनृतवादिनि पुरुषे सति शक्ये ऽप्यर्थे यद्यप्यर्थः प्रमातुं शक्य*स्तथाप्यप्रामाण्यमनाश्वासाद् दृष्टं सत्ये प्रत्यायिते ऽपि वक्तर्यशक्तिके यद्यस्योच्यमानमर्थं द्रष्टुं शक्तिर्नास्ति प्रत्यक्षाद्यसंभवात्, अत्राप्यप्रामाण्यं मूलदोषात् । न ह्यतीन्द्रियार्थे वचनमन्तरेणावगतिः संभवति, तदिदमुक्तम "अशक्यं हि तत्पुरुषेण ज्ञातुमृते वचना"दिति ।

इदं तु भाष्यं केचित्सर्वज्ञनिराकरणपरं व्याचक्षते, तन्निराकरोति नानेनेति । कारणमाह वचनादिति[१११] । वचनादृते ज्ञातुमशक्यमिति वदन् वाचनिके ऽतीन्द्रिये ज्ञानशक्तिं निराकरोति न सर्वत्र प्रकृतत्वाच्चातीन्द्रियमेव तच्छब्देन परामृश्यते न सर्वमिति । किं चाऽनिराकरणीयत्वादपि सर्वज्ञस्य न तन्निराकरणपरं भाष्यमित्याह यदीति । यो हि षड्भिः प्रमाणैः सर्वं जानाति स धर्माऽधर्मावपि वेदेन जानन् चोदनैवेत्यवधारणं विरुणद्धीति न निराकर्त्तव्य इति ।

---

* प्रत्यासत्तिशक्य इति २ पु. पा. ।

एकेन तु प्रमाणेन सर्वज्ञो येन कल्प्यते ।
नूनं स चक्षुषा सर्वान् रसादीन्प्रतिपद्यते ॥११२॥
यज्जातीयैः प्रमाणैस्तु यज्जातीयाऽर्थदर्शनम् ।
भवेदिदानीं लोकस्य तथा कालान्तरे ऽप्यभूत् ॥११३॥
यत्राप्यतिशयो दृष्टः स स्वार्थाऽनतिलङ्घनात् ।
दूरसूक्ष्मादिदृष्टौ स्यान्न रूपे श्रोत्रवृत्तिता ॥११४॥
'भविष्यति न दृष्टं च प्रत्यक्षस्य मनागपि ।
सामर्थ्यं' नानुमानादेर्लिङ्गादिरहिते क्व चित् ॥११५॥

---

यस्त्वेकेनैव सर्वं जानातीति कश्चित्कल्पितः सो ऽतितुच्छत्वादेव न निराकार्य इत्याह एकेनेति[११२] । यो ह्येवंविधं सर्वज्ञं कल्पयति स स्वयं तावच्चक्षुषा नूनं रसादीन् जानाति, इतरथा कथं स्वभावनियमं जानन्नविषये सर्वार्थे प्रत्यक्षस्यान्यस्य वा प्रवृत्तिमध्यवस्येदिति ।

ननु यद्यप्यर्वाचीनानां प्रत्यक्षं न सर्वविषयं तथापि बुद्धप्रत्यक्षं दिव्यचक्षुर्जनितं सर्वविषयं भविष्यत्यत आह यज्जातीयैरिति[११३] । अद्यत्ववदेव कालान्तरे ऽपि प्रमाणस्वभावो नान्यादृश इति । नन्वद्यत्वे ऽपि तावत्प्रमातृभेदेन सातिशयं प्रत्यक्षमुपलभ्यते के चिदतिदूरमतिसूक्ष्मं च पश्यन्ति, तथा ज्ञानमपि सातिशयं लौकिके च शास्त्रार्थे च दृश्यते, तत्कस्य चित्पुरुषवर्यस्य ज्ञानमत्यन्तातिशयितं सर्वविषयं भविष्यत्यत आह यत्रापीति[११४] । सत्यमतिशयो दृष्टः स स्वविषयएव दूरसूक्ष्मादिदर्शने न तदतिक्रमेण । न ह्यतिशयितमपि श्रोत्रं रूपे प्रवर्त्तते नेत्रादयो वा शब्दादिषु, अतो न सर्वविषयत्वमिति ।

ननु प्रत्यक्षस्य न कश्चिद्विषयनियमो ऽस्ति रूपवतामरूपवतां दूराणां सूक्ष्माणां च प्रत्यक्षावगमदर्शनात् । अतो ऽस्य संभवत्येव स-

सर्वज्ञकल्पनाद्यैस्तु वेदे चाऽपौरुषेयता ।
तुल्यता कल्पिता येन तेनेदं सम्प्रधार्यताम् ॥११६॥
सर्वज्ञो दृश्यते तावन्नेदानीमस्मदादिभिः ।
निराकरणवच्छक्या न चासीदिति कल्पना ॥११७॥

— —

र्घविषयत्व,मत आह भविष्यतीति सामर्थ्य[११५]मन्तेन । वर्तमानविषयमेव प्रत्यक्षमित्यस्ति नियमः । अतो न तस्य भविष्यति धर्म्मे सामर्थ्यं नतरां सर्वार्थेषु। ज्ञानस्याप्यस्ति विषयनियमो यत्रास्य कारणं संभवति तत्रैव प्रवर्त्तते नान्यत्र। षड्विधं च तत्कारणमिन्द्रियलिङ्गादि, तत्रेन्द्रियं तावद्वर्त्तमानविषय,मतस्तज्जनितं ज्ञानमपि तत्रैव प्रवर्त्तते न धर्माऽधर्मयोर्नापि सर्वार्थेष्विति । नाप्यनुमानादिना धर्मस्य सर्वस्य वा ज्ञानं संभवतीत्याह नानुमानादेरिति । यथैव हि प्रत्यक्षस्य वर्त्तमानादिविषयत्वनियमस्तथा ऽनुमानादेरपि यत्र लिङ्गादिसंभवः स एव विषयः न सर्वार्थेषु धर्मे वा लिङ्गादिसंभवः, अतो नानुमानादेरपि सर्वत्र सामर्थ्यमस्तीति ।

कश्चिदत्र लौकायतिकः प्राह । अन्यैः शाक्यैः सर्वज्ञकल्पना निष्प्रमाणिका ऽऽश्रिता, मीमांसकैस्तु वेदस्याऽपौरुषेयत्वकल्पनात् तदुभयस्यापि कल्पना तुल्या न कश्चिद्विशेष इति, तं प्रत्याह सर्वज्ञेति[११६] ।

एवंवादिना वक्ष्यमाणमनन्तरं संप्रधार्यते येन* सर्वज्ञो निष्प्रमाणको नाऽपौरुषेयत्वमिति, तत्र सर्वज्ञकल्पनायास्तावदप्रमाणत्वं दर्शयति सर्वज्ञ इति[११७]। तेन प्रत्यक्षं तावन्नास्ति तत्सद्भावे प्रमाणमिति। नाप्यनुमानेनासावासीदिति शक्यते कल्पयितुं विपरीतस्यैवा-

* संप्रधार्य येन, इति ३ पु. पा. ।

न चागमेन सर्वज्ञस्तदीये ऽन्योन्यसंश्रयात् ।
नरान्तरप्रणीतस्य प्रामाण्यं गम्यते कथम् ॥११८॥
न चाप्येवंपरो नित्यः शक्यो लब्धुमिहागमः ।
नित्यश्चेदर्थवादत्वं* तत्परे स्यादनित्यता ॥११९॥
आगमस्य च नित्यत्वे सिद्धे तत्कल्पना वृथा ।
यतस्तं प्रतिपद्यन्ते धर्ममेव ततो नराः† ॥१२०॥

---

ऽनुमानादित्याह निराकरणवदिति । न हि सद्भावस्याऽनुमापकं लिङ्गमस्ति, निराकरणस्य त्वस्ति लिङ्गम्, अतीतः कालः सर्वज्ञशून्यः कालत्वादद्यत्ववदिति, बुद्धो वा न सर्वज्ञः पुरुषत्वादस्मदादिवदिति । नाप्यागमगम्यत्वं सर्वज्ञस्येत्याह न चागमेनेति[११८] कथमित्याह तदीये इति । सिद्धे हि सर्वज्ञे तदीयस्याऽऽगमस्य प्रामाण्यं तत्प्रामाण्ये च तत्सिद्धिरिति।

नरान्तरप्रणीतस्य तु मूलान्तराऽसंभवान्न सर्वज्ञसद्भावे प्रामाण्यं संभवतीत्याह नरान्तरेति । नापि नित्यागमगम्यत्वं तदभावादित्याह न चेति[११९]। नन्वस्त्येव सर्वज्ञः सर्वविदित्यादिरत आह नित्यश्चेदिति। किमित्यर्थवादत्वमत आह तत्परे इति। अनित्यस्य विग्रहवतः पुरुषस्य सर्वज्ञत्वं प्रतिपादयन्नागमो ऽप्यनित्यः स्यादिति। किं चागमनित्यत्वे ऽङ्गीकृते वृथैव सर्वज्ञकल्पनेत्याह आगमस्येति[१२०] । कथमित्याह यतस्तमिति । येनैवागमेन सर्वज्ञत्वं प्रतिपाद्यं तेन धर्म एव‡ प्रतिपाद्यतां किमन्तर्गडुना सर्वज्ञेनेति।

---

* तत्परश्चेदनित्यत्वम्, इति २ पु. पा. ।

† अयं श्लोकस्त्रुटितः २ पु. ।

‡ सर्वज्ञं प्रतिपाद्यते तेन धर्ममेव, इति २ पु. पा. ।

यो ऽपीन्द्रियार्थसम्बन्धविषये सत्यवादिताम् ।
दृष्ट्वा तद्वचनत्वेन श्रद्धेये ऽर्थे ऽपि कल्पयेत् ॥१२१॥
तेनापि पारतन्त्र्येण बाधिता स्यात् प्रमाणता ।
प्रामाण्यं चेत्स्वयं तस्य का ऽपेक्षा ऽन्येन्द्रियादिषु ॥१२२॥
यथैवात्रेन्द्रियादिभ्यः परिच्छेदात्प्रमाणता ।
श्रद्धेये ऽपि तथैव स्यान्न स्वातन्त्र्येण लभ्यते ॥१२३॥
यथा च तेषां सत्यत्वं सिध्यत्येतेन हेतुना ।
तथा ऽन्या ऽनवबुद्धार्थप्रामाण्या ऽभावसाधनम् ॥१२४॥

---

अत्र कश्चिदाह मा भूत्सर्वज्ञः धर्मज्ञस्तु भविष्यति, तदुक्तम्—

कीटसंख्यापरिज्ञानं तस्य नः क्वोपयुज्यते ।
दूरं पश्यतु मा वा ऽसौ तत्त्वमिष्टं तु पश्यति ॥ इति ।

धर्मज्ञत्वे चास्ति प्रमाणम् । अस्मदादिप्रमाणगोचरार्थे क्षणिकं सर्वसंस्कृतमित्यादिबुद्धवाक्यं सत्यं प्रमाणमूलं दृष्टमतः श्रद्धेये ऽर्थे धर्म्मे यच्चैत्यवन्दनादिवाक्यं तदपि प्रमाणमूलं तद्वचनत्वात् अनुमीयते। तदुपन्यस्यति यो ऽपीति[१२१]। इन्द्रियादिसंबन्धविषये, प्रत्यक्षादिविषये इत्यर्थः। दूषयति तेनापीति[१२२] । कथमित्याह प्रामाण्यमिति । यदि हि क्षणिकादिवाक्यस्या ऽस्मदादिप्रमाणा ऽनादरेण स्वातन्त्र्यं स्यादस्मदादीन्द्रियोपन्यासो ऽनर्थकः स्या,दतस्तद्वदेव श्रद्धेयार्थस्याऽप्यस्मदादिपरतन्त्रमेव प्रामाण्यं व्याप्तिबलेन हेतुः साधयेन्न स्वतन्त्रमिति । तदेव विवृणोति यथेति[१२३] । सो ऽयं धर्मविशेषविपर्ययसाधनाद्विरुद्धो हेतुरिति । विरुद्धाव्यभिचारी चायं हेतुरित्याह यथा चेति[१२४] । सो ऽयमेक एव हेतुः स-

अश्रद्धेयार्थसत्यत्वं श्रद्धेये चाऽप्यसत्यता ।
पूर्वज्ञानानुवादित्वं दृष्टान्तवदिहेष्यताम् ॥१२५॥
अपि चालौकिकार्थत्वे सति पुंवाक्यहेतुकम् ।
मिथ्यात्वं वेदवाक्यानां स्यादन्योन्यं सपक्षतः* ॥१२६॥
धर्मोऽधर्मातिरिक्तार्थे प्रामाण्यञ्च प्रसज्यते ।
सांख्यादिषु च जीवत्सु दृष्टान्तो दुर्लभो ऽस्य च ॥१२७॥
अलौकिकार्थवाचित्वं नृवाक्यत्वे सतीति च ।
परस्परमपेक्ष्यैव बौद्धादेः स्यान्मृषार्थता ॥१२८॥
वदेदेवं च यो नाम वादी प्रथमसङ्गतः ।

---

त्यत्वमसत्यत्वं च मिथो विरुद्धमव्यभिचारात्साधयन्विरुद्धाऽव्यभिचारीति। विरोधान्तराणि दर्शयति अश्रद्धेयेति[१२५] । सप्रतिसाधनश्चायं हेतुरित्याह अपि चेति[१२६] । अविशेषितेनैव वा पुंवाक्यत्वेन धर्मोऽधर्मातिरिक्ते ऽप्रामाण्यमन्योन्यदृष्टान्तेनैव साधयितव्यमित्याह धर्मेति[१२७] । दृष्टान्तो ऽपि साध्यविकल इत्याह सांख्यादिष्विति । पूर्वोक्तमेव प्रतिसाधनं विशेषणविशेष्यभावव्यत्ययेन वाच्यमित्याह अलौकिकार्थेति[१२८] ।

सप्रतिसाधनप्रसङ्गेनेदानीं सर्वज्ञदूषणमेवोपक्रम्य† सर्वज्ञो ऽस्मीति बुद्धेन यदुक्तं तत्सत्यं तदुक्तत्वाज्ज्योतिरूष्मण्यौष्ण्यादूव इतिवदित्यस्य परोक्तस्य सर्वज्ञसाधनस्य प्रतिसाधनं दर्शयति वदेदेव-

---

* अन्योन्यसपक्षता, इति पाठान्तरम् ।

† उपसंक्रम्येति २ पु. ।

तस्यापि हेतुः स्यादेष भवन्तं प्रत्यसंशयम् ॥१२९॥
बुद्धादीनामसार्वज्ञ्यमिति सत्यं वचो मम ।
मदुक्तत्वाद्यथैवाग्निरुष्णो भास्वर इत्यपि ॥१३०॥
प्रत्यक्षं च मदुक्तत्वं त्वया साध्या तदुक्तता ।
तेन हेतुर्मदीयः स्यात्सन्दिग्धाऽसिद्धता तव ॥१३१॥
प्रत्यक्षाद्यविसंवादि प्रमेयत्वादि यस्य च ।
सद्भाववारणे शक्तं को नु तं कल्पयिष्यति ॥१३२॥
न चापि स्मृत्यविच्छेदात्सर्वज्ञः परिकल्प्यते ।
विगानाच्छिन्नमूलत्वात्कैश्चिदेव परिग्रहात् ॥१३३॥

---

मिति[१२९] । एवमिति चैष इति च वक्ष्यमाणप्रतिसाधनपरामर्शनम् । तदेव दर्शयति बुद्धादीनामिति[१३०] । इदमेव साधनं न त्वदीयमित्याह प्रत्यक्षमिति[१३१] । असर्वज्ञत्ववचनस्य मदुक्तत्वं प्रत्यक्षसिद्धं सर्वज्ञो ऽस्मीत्यस्य बुद्धोक्तत्वमसिद्धं न ह्यत्यन्ताऽनृतमुद्धतं च बुद्धो वदतीति संभावयामः, असिद्धश्च न हेतुर्भवतीति । अतितुच्छश्चायं सर्वज्ञवादो यस्य सर्वसाधारणैरपि प्रमेयत्वादिभिः प्रमाणान्तराऽविरोधेनैव निराकरणं संभवतीत्याह प्रत्यक्षादीति[१३२] ।

ननु बुद्धः सर्वज्ञ इत्यस्ति लौकिकानामविच्छिन्ना स्मृतिः, अतो ऽस्ति बुद्धस्य सर्वज्ञत्वं तदानीन्तनैश्च प्रमितमिति कल्पयामो ऽत आह न चापीति[१३३] । कारणमाह विगानादिति । विप्रलिप्सुना बुद्धेनागमः प्रणीत इत्यपि स्मृतिरस्तीति । असंभवन्मूलं च सर्वज्ञत्वस्मरणमित्याह छिन्नमूलत्वादिति । विगानं विवृणोति कैश्चि-

सर्वज्ञो ऽसाविति ह्येवं तत्काले तु बुभुत्सुभिः ।
तज्ज्ञानज्ञेयविज्ञानरहितैर्गम्यते कथम् ॥१३४॥
कल्पनीयाश्च सर्वज्ञा भवेयुर्बहवस्तव ।
य एव स्यादसर्वज्ञः स सर्वज्ञं न बुध्यते ॥१३५॥
सर्वज्ञो ऽनवबुद्धश्च येनैव स्यान्न तं प्रति ।
तद्वाक्यानां प्रमाणत्वं मूलाज्ञाने ऽन्यवाक्यवत् ॥१३६॥
रागादिरहिते चास्मिन् नुर्व्यापारे व्यवस्थिते ।
देशना ऽन्यप्रणीतैव स्यादृते प्रत्यवेक्षणात् ॥१३७॥

---

दिति । छिन्नमूलतां विवृणोति सर्वज्ञ इति[१३४] । तज्ज्ञानज्ञेयं यत्सर्वं तद्विषयज्ञानरहितैर्नरैः कथं सर्वज्ञो ज्ञायताम् अतो न सर्वज्ञे कस्य चित्कि चित्प्रमाणं संभवतीति निर्मूलैव स्मृतिरिति । यदि त्वन्यो ऽपि कश्चित्सर्वज्ञ इष्यते बुद्धस्य सर्वज्ञत्वज्ञानार्थं ततस्तेनैव प्रकारेणाऽन्यस्याऽन्यस्य कल्पनायां बहुसर्वज्ञापत्तिरित्याह कल्पनीया इति[१३५] । कथमित्याह य एव स्यादिति ।

एवं सर्वज्ञो न केन चित्प्रमातुं शक्यतइत्युक्तम्, एवं च सम्यङ्मूलत्वाऽज्ञानात्तदागमस्याऽपि रथ्यापुरुषवाक्यवन्न प्रामाण्यं सिध्यतीत्याह सर्वज्ञ इति[१३६] । इतश्च तदागमस्याऽप्रामाण्यमित्याह रागादीति[१३७] । लाभपूजाख्यातिरागनिमित्तं हि आगमप्रणयनं स्वयूथ्यस्पर्द्धानिमित्तं वा प्रक्षीणरागादिदोषस्य बुद्धस्य न संभवति निर्व्यापारश्चायं नासावर्थप्रतिपादनाय शब्दं समुच्चारयितुं शक्नोति । कथं, प्रत्यवेक्षणपर्यायस्य विकल्पस्याऽसंभवादस्येदं साधनमनेन च

'सान्निध्यमात्रतस्तस्य पुंसश्चिन्तामणेरिव ।
निःसरन्ति यथाकामं कुड्यादिभ्यो ऽपि देशनाः १३८॥
एवमाद्युच्यमानन्तु श्रद्दधानस्य शोभते' ।
'कुड्यादिनिःसृतत्वाच्च नाश्वासो देशनासु नः ॥१३९॥
किन्तु बुद्धप्रणीताः स्युः किमु कैश्चिद्दुरात्मभिः ।
अदृश्यैर्विप्रलम्भार्थं पिशाचादिभिरीरिताः' ॥१४०॥
एवं यैः केवलं ज्ञानमिन्द्रियाद्यनपेक्षिणः ।
सूक्ष्माऽतीतादिविषयं जीवस्य परिकल्पितम् ॥१४१॥

---

शब्देनेदं प्रतिपादयितुं शक्यमिति यावन्न विकल्प्यते न तावद्वाक्यप्रणयनं संभवति, न चायं विकल्पो निर्विकल्पकेन प्रत्यक्षेणाऽखिलं जगदध्यक्षयतो बुद्धस्यास्ति, तस्मादन्येन केन चित्प्रणीतो देशनाधर्मोपदेश*इत्यप्रामाण्यमिति।तस्मिन्निर्व्यापारे ऽपि तत्सांनिधिमात्रेणैव कुड्यादिभ्योपि देशना निःसरन्तीति चेत्, श्रद्धानस्योच्यमानमिदं शोभते नास्माकमित्याह सांनिध्येति[१३८] सार्द्धेन । श्रद्दधानं प्रत्युच्यमानमित्यर्थः। कुड्यादिनिःसृतासु च बुद्धप्रभावकृतत्वं न निर्णेतुं शक्यमन्यथापि संभवादित्याह कुड्यादीति[१३९] सार्द्धेन । ततश्च न प्रामाण्याऽध्यवसायः संभवतीति । एवं तावच्छाक्यसर्वज्ञो निराकृतः ।

अन्यन्मतं स्वभावादेवायमिन्द्रियाद्यनपेक्ष्यैव पुरुषः सर्वं जानाति, देहावृतस्त्विन्द्रियादिद्वारेण किं चिदेव वेत्ति, विगलितदेहस्य तु स्वाभाविकं सर्वज्ञत्वमाविर्भवतीति, तदुपन्यस्यति एवमिति[१४१] । केव-

---

* प्रणीताद्धर्मोपदेश इति २ पु. पा. ।

नर्ते तदागमात्सिध्येन्न च तेनागमो विना ।
दृष्टान्तोपि न तस्यान्यो नृषु कश्चित्प्रवर्तते ॥१४२॥
नित्यागमाववोधोपि प्रत्याख्येयो ऽनया दिशा ।
न हि तत्रापि विस्रम्भो दृष्टो ऽनेन कृतो ऽथ वा ॥१४३॥
सर्वदा चापि पुरुषाः प्रायेणाऽनृतवादिनः ।
यथा ऽद्यत्वे न विस्रम्भ स्तथा ऽतीतार्थकीर्तने*॥१४४॥

---

त्वमिन्द्रियादिकारणाऽनपेक्षमेवेति । तद्दूषयति नन्विति[१४२] । न हि मुक्तस्य सर्वज्ञत्वे तदागममन्तरेणाऽन्यत्प्रमाणमस्ति, अतः सर्वज्ञप्रणीतत्वे सिद्धे तदागमस्य प्रमाणत्वं तत्प्रामाण्ये च तत्सिद्धिरितीतरेतराश्रयम् । अशरीरस्य च ताल्वादिरहितस्यागमप्रणयनमपि कथमिति न विद्मः । शरीरयुक्तेन त्वसर्वज्ञेन प्रणीतस्य न प्रामाण्यं स्यादिति । यदि त्वद्यत्वे ऽपि कश्चिन्मुक्तः सर्वज्ञो दृश्येत ततो ऽर्हन्नपि मुक्तः सर्वज्ञ इति युज्यते न तु तदस्तीत्याह दृष्टान्त इति ।

यत्तु वेदवादिभिरेव कैश्चिदुक्तं नित्य एवाऽयं वेदः प्रजापतेः प्रथममार्षज्ञानेनाऽवबुद्धो भवतीति तदपि सर्वज्ञवदेव निराकार्यमित्याह नित्येति[१४३] । अनुच्चरितशब्दज्ञानमपि सर्वज्ञज्ञानवद्धर्माऽधर्मज्ञानवच्चाकारणकमेवेति । नन्वेतस्मिन्पक्षे वेदस्यैव धर्मे प्रामाण्याच्चोदनैवेत्यस्याऽविरोधात् किमिति तन्निराकरणमत आह न हीति । कृतकत्वाशङ्कया प्रामाण्योच्छेदनान्निराकार्यो ऽयं पक्ष इति। न च तद्वचनाद्विस्रम्भसंभवः । अद्यत्ववत्तदानीन्तने ऽपि काले पुरुषाणां प्रायेणाऽनृतवादित्वसंभवादित्याह सर्वदेति[१४४] । किं चा-

---

* तथा कालान्तरे ऽप्यभूत, इति २ पु. पा. ।

स्वप्नादिज्ञानवच्चापि प्रत्ययो ऽस्यागमार्थयोः ।
भवेदिति सशङ्कानां प्रामाण्यं गम्यते कथम् ॥१४५॥
पुरुषातिशयश्चेष्टः सैव चाऽऽगमनित्यता ।
कल्पितं स्मरणं चास्य जन्मान्तरनिबन्धनम् ॥१४६॥
ग्राह्यत्वे चागमस्यैवं द्वेषो ऽर्थग्रहणे वृथा ।
यो ह्यनुच्चारितं शब्दं गृह्णात्यर्थे ऽस्य का कथा ॥१४७॥

---

यमस्याऽऽगमप्रतिभासः स्वप्नादिवद्यादृच्छिको निर्निमित्तो ऽप्रमाणं स्यादित्यपि शङ्कासंभवान्न प्रामाण्यसिद्धिरित्याह स्वप्नादीति[१४५] । अर्थग्रहणं तुल्यन्यायतया तस्यापि शङ्क्यमानत्वात् । तस्मान्निराकार्यो ऽयं पक्ष इति । निराकरणं चानया दिशेति सर्वज्ञनिराकरणमार्गेण दर्शितं, तद्विवृणोति पुरुषेति[१४६] । अद्यतनानामदृष्टो ऽतिशयः प्रजापतेः कल्पितः, अनुच्चरितशब्दाऽङ्गीकारात् । तं च कल्पयित्वा पुनरागमनित्यता वृथैवाऽङ्गीकृतेति । यदि तु स्मृतिर्वेदस्य न ग्रहणं तत्राह*कल्पितमिति।जन्मान्तराऽनुभवनिबन्धनं स्मरणं निमित्ताऽसंभवादेव कल्पितं, कथं हि द्विपरार्द्धसंख्याकं प्रलयकालमतीत्यैतावान् ग्रन्थराशिर्मात्रया ऽप्यन्यूनाऽनतिरिक्तः स्मर्येतेति ।

पुनरपि ग्रहणपक्षमेव दूषयति ग्राह्यत्वे इति[१४७] । ग्राह्यत्वमागमस्येच्छतां शाक्यादिसमाश्रिते धर्मोऽधर्मग्रहणे वृथैव प्रद्वेष इति । नन्वैन्द्रियकः शब्दः, धर्मस्त्वतीन्द्रियः, इति कथं तुल्यत्वमत आह यो हीति । शब्दो ऽप्यनुच्चरितो ऽतीन्द्रिय एवेति शाक्यादि-

---

* प्रजापतेरित्यग्रे एतत्पर्यन्तं ग्रन्थस्त्रुटितः १ – २ पु. ।

पुमांस्तावत्स्वतन्त्रः स्यादर्थग्रहणवादिनाम् ।
आगमप्रतिभाने* तु पारतन्त्र्यं द्वयोरपि ॥१४८॥
अनेकपुरुषस्थत्वादेकत्रैव च जन्मनि ।
ग्रहणस्मरणाद्वेदे न स्वातन्त्र्यं विहन्यते ॥१४९॥
अन्यथाकरणे चास्य बहुभ्यः स्यान्निवारणम् ।
एकस्य प्रतिभानं तु कृतकान्न विशिष्यते ॥१५०॥

---

पक्षादपि पापीयानयं पक्ष इत्याह पुमानिति[१४८] । तन्मते हि पुरुषस्य स्वातन्त्र्यात्तत्प्रत्ययादर्थनिश्चयो युक्तः, अस्मिंस्तु पक्षे पुरुषो ऽप्यर्थनिश्चये वेदपरतन्त्रः सो ऽपि स्वरूपसिद्धये तत्तन्त्र इति न कस्य चित्स्वातन्त्र्यमिति ।

ननु तवाऽपि पूर्वपूर्वपुरुषाऽधीनमुत्तरोत्तरेषां वेदस्य स्वरूपाऽवधारणमिति तुल्यं पारतन्त्र्यमत आह अनेकेति[१४९]। एकपुरुषाधीनत्वे हि पारतन्त्र्यं भवति तत्र हि कृतकत्वाशङ्कया दृष्टत्वे ऽपि यथावद् दृष्टो विप्लवो वा जात इति संशयान्न स्वातन्त्र्येण प्रामाण्यं सिध्यति, अनेकपुरुषस्थे तु वेदे नैष दोषो भवति। किं च जन्मान्तरानुभूतमतिदीर्घकालव्यवहितं स्मर्त्तुमशक्यं मन्यमाना नूनमयं कृत्वैव वेदं श्रद्धार्थं स्मृतमुपदिशतीति शङ्कमाना न विश्वस्युः, एकस्मिन्नेव तु जन्मनि बहुशो ऽनुभूय स्मर्यमाणे ऽयमपि दोषो न भवतीति न स्वातन्त्र्यहानिरिति। अनेकपुरुषस्थत्वे को गुणो ऽत आह अन्यथेति[१५०]। एकेन विनाशितस्याऽन्यैर्बहुभिर्निवारणात्तत्पारतन्त्र्यं निवर्त्तत इति। एकस्य तु प्रतिभानं कृतकादविशिष्टमिति स्यादेव पारतन्त्र्यमित्याह

---

* प्रतिभावे तु, इति २ पु. पा. ।

अतश्च संप्रदाये च नैकः पुरुष इष्यते ।
बहवः परतन्त्राः स्युः सर्वे ह्यद्यत्ववन्नराः ॥१५१॥
एवं च कल्पयन्त्यन्ये यावदागमसिद्धये ।
तावन्न कल्पयत्येतत् समत्वं जैमिनेः* परैः ॥१५२॥
न हि दृष्टाधिकं किञ्चित्प्रामाण्ये तेन कल्प्यते ।
अप्रामाण्यनिमित्तेषु परस्याऽदृष्टकल्पना ॥१५३॥
दृष्टप्रामाण्यबाधश्च नास्तिकस्य प्रसज्यते ।

---

एकस्येति । उपसंहरति अतश्चेति[१५१]। पूर्वस्मिन् काले यथैकः कर्त्ता वेदानां नास्ति तथा संप्रदायप्रवर्त्तको ऽपि नैकः किं त्वद्यत्ववदेव बहवः परतन्त्रा एवेति । एवं तावत्सर्वज्ञकल्पना निष्प्रमाणिका प्रमाणविरुद्धा चेत्युक्तम् । एवं च यल्लौकायतिकैस्तेषामस्माकं च कल्पनातुल्यत्वमुक्तं तदनेककल्पनीयहानोपादानाभ्यामुक्तमिति सोपहासमाह एवमिति[१५२] ।

ननु जैमिनेरपि निष्प्रमाणिका प्रमाणविरुद्धा वा ऽपौरुषेयत्वकल्पना ऽस्त्येवेति कथमतुल्यता ऽत आह न हीति[१५३] । दृष्टा ह्यद्यत्वे सर्वे पुरुषाः पूर्वपूर्वेभ्यो वेदमवधारयन्तः, न तु कर्त्तारः । अतः कालान्तरे ऽपीदृगेवेत्यङ्गीकुर्वता न किं चिददृष्टं विरुद्धं वा कल्पितमिति । परेषां च स्वागमप्रामाण्यवद्वेदाऽप्रामाण्यार्थमप्यस्त्येवाऽदृष्टकल्पना दृष्टहानिश्च कर्त्तुस्तद्दोषाणां च कल्पनादवगतप्रामाण्यबाधाश्चेत्याह अप्रामाण्येति । नन्वस्त्येवाऽत्र पूर्वोक्तेनाऽनुमानगणेन बाध इति तदा-

---

* जैमिनिः परैरिति २ पु. पा. ।

उत्पन्ने सति विज्ञाने बलाद्बाधप्रकल्पना ॥१५४॥
साधिते पुरुषाभावे निर्दोषज्ञानजन्मनः ।
प्रत्यक्षान्नास्तिकैर्वाच्यो विशेषश्चोदनाधियः ॥१५५॥
उपदेशो ऽन्यथा न स्यादतीन्द्रियनिबन्धनः ॥
तस्य कर्ता न चेद् दृष्टः सो ऽर्थ इत्यर्थकल्पना ॥१५६॥
'यद्वा ऽनुमानमेवेदमुपदेशित्वमुच्यते ।
दृष्टार्थपूर्वताव्याप्तं' व्यतिरेको ऽस्य नन्विति ॥१५७॥
अन्यथा ऽप्युपपन्नत्वं व्यामोहादिति कथ्यते ।

---

श्रयणमदोषो ऽत आह उत्पन्ने इति[१५४]। प्रामाण्यं तावदौत्सर्गिकप्राप्तम्, अनुमानं तु तद्विरोधात्सप्रतिसाधनत्वाच्च न समर्थं तद्बाधितुम्, अतो विनैव प्रमाणेन स्वाच्छन्द्येन बाधः कल्प्यत इति । यत्तूक्तं प्रमाणान्तरदृष्टं हि शब्द इति नात्मीयादन्यदीयाद्वेति च तत्राह साधिते इति[१५५] । प्रमाणान्तरैरविशेषादस्य न तत्तन्त्रत्वामिति ।

"न च विदुषामुपदेशो नावकल्पते"इति भाष्यं* तस्यार्थमाह उपदेश इति[१५६]। अर्थकल्पनार्थापत्तिरियं धर्मज्ञत्वे मनुबुद्धादीनां प्रमाणमुपन्यस्तमिति। अनु मानं चेदमित्याह यद्वेति[१५७] पादत्रयेण । अनुमीयते अमुनेत्यनुमानं लिङ्गमुपदेशित्वं, तद्धि वैद्योपदेशादौ दृष्टार्थपूर्वतया व्याप्तमिति । नन्वविदुषामुपदेशाऽनुपपत्तिस्तत्रोक्ता नोपदेशस्य विद्वत्तया व्याप्तिः, अतः कथमिदमनुमानमत आह व्यतिरेक इति। व्यतिरेकमुखेनेदमनुमानमुपन्यस्तमिति ।"उपदेशा हि व्यामोहादपि

---

* शा. भा. पृ. ४ प. २४ ।

लिङ्गस्य व्यभिचारो वा बालवाक्यनिदर्शनात्* ॥१५८॥
'वेदाज् ज्ञात्वोपदिष्टं चेदित्येवं सिद्धसाधनम् ।
वेदादपीत्यनेनोक्तं' मन्वादेश्चैतदिष्यते ॥१५९॥
अन्यथा संविदानोपि विवक्षत्यन्यथा यतः ।

---

भवन्ती"ति परिहारभाष्यं† तस्यार्थमाह अन्यथेति[१५८]। अर्थापत्तिपक्षे अन्यथाऽप्युपपत्तिः अनुमाने त्वनैकान्तिकत्वं हेतोर्दूषणमुच्यते, बालोन्मत्तादीनामनवगतार्थे ऽप्युपदेशदर्शनादिति ।

"असति व्यामोहे वेदादपि भवन्ती"ति भाष्यं तस्यार्थमाह वेदादिति[१५९] पादत्रयेण । यदेतदुपदशान्मूलं कल्पितं तत्तावत्प्रत्यक्षादिकं न संभवतीत्युक्तं, यदि तु वेदाज्ज्ञात्वोपदिष्टमिति कल्प्यते ततः सिद्धसाधनम्। न ह्येवं चोदनैवेत्यस्य विरोध इति। किमिदानीं बुद्धाद्यागमानामपि वेदमूलत्वमङ्गीक्रियते, नेत्याह मन्वादेरिति। उपदिष्टवन्तश्च मन्वादय इति बौद्धवादिनोक्तं ततस्तदभिप्रायमिदं सिद्धसाधनमिति ।

एवं तावत्पुरुषवचनादर्थे निश्चयो जातः प्रतिष्ठितश्च प्रत्यक्षादिनिश्चयवत्पश्चान्मूलदोषावगमेन बाध्यतइत्येवं बुद्धादिवचसामप्रामाण्यमुक्तम्, इदानीं मूलावधारणद्वारैव निश्चयप्रतिष्ठेति मूलाऽसंभवे झटिति जातो ऽपि निश्चयो द्रागेव विलीनो ऽनुत्पन्नसमो भवति । अतो बुद्धादिवचसामसंभवन्मूलानां प्रामाण्यसंभावना ऽपि नैव भवति। वेदस्य तु मूलाऽनपेक्षित्वात्प्रतिष्ठितं प्रामाण्यमित्येतदुपपादयितुं भाष्यम्—"अपि च पौरुषेयाद्वचनादेवमयं पुरुषो वेदेति भव-

---

* बाल्वाक्ये निदर्शनात्, इति का. पा. । निदर्शना, इति पाठान्तरम् ।
† शा. भा. पृ. ४ प. २७ । ‡ शा. भा. पृ. ४ प. २७ ।

तस्मादेकान्ततो नास्ति पुंवाक्यात्तद्धियां गतिः॥ १६०॥
भ्रान्तस्याऽन्यविवक्षायामन्यद्वाक्यं च दृश्यते ।
यथाविवक्षमप्येतत्तस्मान्नैव प्रवर्तते ॥१६१॥
वक्तृधीराप्तवाक्येषु गम्यते ऽन्यत्र विप्लुतिः ।
तेनोत्सर्गापवादाभ्यां वचसः शक्तिरुच्यते ॥१६२॥
पदार्थरचनाऽऽयत्तो वाक्यार्थप्रत्ययोद्भवः ।

---

ति प्रत्ययो नैवमयमर्थ*" इति। प्रत्ययो ऽर्थे न प्रतितिष्ठतीति यावत्। तदिह पुरुषवचनाद्यन्मूलज्ञानावधारणमुक्तं तदाक्षिपति अन्यथेति[१६०] । अनैकान्तिकत्वान्न वाक्येन तद्विषयज्ञानावधारणं युक्तमिति। किं च ज्ञानादपि वाक्यरचनस्य प्रत्यासन्ना विवक्षा, न च तन्मात्रमपि वाक्यात्कल्पयितुं शक्यते किमुत ज्ञानमित्याह भ्रान्तस्येति[१६१] । समाधत्ते वक्तृधीरिति[१६२] । सामान्येनोक्तमप्येतद्वक्तृज्ञानावधारणमाप्तवाक्यविषयमेवेति । विप्लवते खल्वपीत्यादि† त्वनाप्तवाक्यविषयमित्याह अन्यत्रेति । विप्लुतिर्भ्रान्तिः संशयो वा। एवमाक्षेपं समाधाय भाष्यतात्पर्यं दर्शयति तेनेति । सामान्येन मूलज्ञानावधारणशक्तिमनाप्तवाक्ये चापवादं वदता पुरुषवचसां द्वेधा शक्तिर्दर्शिता ज्ञानद्वारेणाऽर्थे प्रामाण्यमप्रामाण्यं वेति ।

कथं पुनरवाचकादेव वाक्याज्ज्ञानमवगम्यते ऽत आह पदार्थेति[१६३]। नेदं शाब्दं ज्ञानावधारणं किं त्वानुमानिकं वाक्यार्थप्रत्ययो

---

* शा. भा. पृ ९ प. १। † विप्लवते हि खल्वपि कश्चित् पुरुषकृताद् वचनात् प्रत्ययः। शा. भा. पृ. ९ प. २।

विवक्षापूर्वविज्ञानवशाच्च रचनाकृतिः ॥१६३॥
विवक्षान्तरयुक्ता हि कुर्वाणा रचनान्तरम् ।
आवापोद्वाप*भेदेन दृश्यन्ते ऽर्थेषु मानवाः ॥१६४॥
तेनाऽर्थप्रत्ययोत्पादे श्रोतुर्जाते ऽपि वाक्यतः ।
ज्ञातो नूनमनेनेति वक्तुर्ज्ञाने मतिर्भवेत् ॥१६५॥
आप्तोक्तिकारणं कं चिदनुयुङ्क्ते† नरं यदा ।
तदा च निर्दिशत्याप्तं स जानात्येतदित्यसौ ॥१६६॥
तज्ज्ञानान्तरितत्वाच्च शब्दास्तावदुदासते ।

---

हि पदपदार्थरचनाधीनः, रचना च विवक्षाधीना, सा च ज्ञानाऽधीनेति । कथं पुनरवगम्यते विवक्षाधीना रचनेति, अन्वयव्यतिरेकाभ्यामित्याह विवक्षान्तरेति[१६४] । विवक्षान्तरयुक्ता हि रचनान्तरं कुर्वन्तो दृश्यन्ते, अतो विवक्षाधीना रचनेति । एवं परम्परया मूलज्ञानकार्यभूतं वाक्यरचनमिति । ततस्तस्मिन्नानुमानिकी मतिर्युक्तेत्याह तेनेति[१६५] ।

कथं पुनरवगम्यते वक्तृज्ञानमुखेनार्थनिश्चयो न साक्षादित्यत आह आप्तोक्तीति[१६६] । यदा ह्याप्तोक्तमनुतिष्ठन् कश्चित्केन चिदनुयुज्यते किमत्र ते प्रमाणमिति तदा ऽसावाप्तमेव निर्दिशति स तज्जानाति नाहमिति, तेनाऽवगच्छामो नूनमस्य तज्ज्ञानद्वारा ऽर्थनिश्चय इति। नन्वेवमर्थमनवबोधयतः शब्दस्य वाचकत्वमेव न स्यात्, न चानवगतवाचकत्वानां लोके वेदे ऽपि बोधकत्वं संभवतीति दूरापास्तं

---

* आवापोद्वारेति का. पा. । † अनुयक्ते, इति २ पु. ।

प्रामाण्यस्थापनं तु स्याद्वक्तृधीहेतुसंभवात् ॥१६७॥
अर्थे पूर्वप्रतीते ऽपि निश्चयो हि तदाश्रयः ।
तेनार्थज्ञानगम्यापि प्रामाण्ये सैव पूर्वभाक् ॥१६८॥
अतो ऽत्र पुंनिमित्तत्वादुपपन्ना मृषार्थता ।

---

चेदप्रामाण्यं स्यात् । कथं चानवगते ऽर्थे तद्विषयज्ञानानुमानमत आह तज्ज्ञानेति[१६७] ।

स्यादेवं यदि शब्दा नाऽर्थं प्रत्याययेयुः ते तु श्रुतमात्रा एवार्थे प्रतीतिमाधायाऽपि तत्प्रतिष्ठाया वक्तृज्ञानान्तरितत्वाद्यावद्वक्तृज्ञानं नावगतं तावदुपजातस्याऽपि निश्चयस्याऽसत्समत्वादुदासीना इव भवन्ति । यदा तु वक्तृधीहेतुः संभावितो निश्चितश्च भवति तदा पूर्वसंजातमप्यर्थे प्रामाण्यं पुनः प्रतिष्ठाप्यते, तस्माददोषः । किं पुनः कारणमुपजाते ऽप्यर्थनिश्चये वक्तृज्ञानप्रणाडी समाश्रीयते ऽत आह अर्थे इति[१६८] । प्रथममुपजाते ऽपि वाक्यार्थप्रत्यये तस्य वाक्यस्य पुरुषबुद्धिप्रभवत्वात्तद्दोषेण दोषसंभवात्पुनर्विचिकित्सा जायते, मूलज्ञानस्य तु सम्यक्त्वे निश्चिते विचिकित्सानिवृत्तौ निश्चयः प्रतिष्ठितो भवतीति युक्तं निश्चयस्य वक्तृज्ञानाश्रयत्वम् । एवं च यदुक्तमनवगते ऽर्थे कथं तद्विषयज्ञानानुमानमिति तदपि परिहृतं भवतीति दर्शयति तेनेति । विशिष्टाऽर्थविषया वक्तृधीर्यद्यप्यर्थज्ञानगम्या ऽर्थमवगम्यैवावगन्तव्येत्यर्थ एव पूर्वं गम्यते * तथापि प्रामाण्यनिश्चये सैव पूर्वभाक्, अर्थनिश्चयः पश्चादेव प्रतितिष्ठतीति । तेन पुरुषवाक्येषु निमित्तपुरुषबुद्ध्यधीनं प्रामाण्यमिति । तदसंभवाद्बुद्धादिवचसां मृषात्वमुपपन्नमित्याह अत इति[१६९] ।

---

* अवगन्तव्येत्यर्थ एवं गम्यते, इति २ पु. पा. ।

न तु स्यात्तत्स्वभावत्वं वेदे वक्तुरभावतः ॥१६९॥
तद्बुद्ध्यन्तरयोर्नास्तीत्यर्थो ऽर्थैश्च प्रतीयते* ।
अतो न ज्ञानपूर्वत्वमपेक्ष्यं नो यथार्थता† ॥१७०॥
अप्रमाणत्वसिद्धौ वा दृष्टान्तो य उदाहृतः ।
बुद्धादिवचनं तस्य साध्येनासङ्गतोच्यते ॥१७१॥
तेषामपि हि यत्कार्यं पूर्वत्र प्रतिपादितम् ।
तत्र सम्यक्त्वमर्थे तु व्यापारो नैव विद्यते ॥१७२॥

---

वेदस्य तु वक्तुरभावान्नायं स्वभाव इत्याह न त्विति । कस्तर्हि तस्य स्वभाव इत्याह तद्बुद्धीति[१७०] । वक्तृबुद्ध्यन्तरायाऽभावात्पदार्थैरेव साक्षाद्वाक्यार्थः प्रतीयतइति‡। प्रकरणार्थमुपसंहरति अत इति । न वक्तृज्ञानपूर्वकत्वापेक्षं वेदप्रामाण्यं तदनपेक्षत्वादेव च न तदभावादयथार्थता। तदेवं न च तथाभूतमित्यत्र यत्पुंवचनसाधर्म्यादप्रामाण्यमुक्तं तदेवंपर्यन्तेन परिहृतमिति यथार्थत्वमिति । तदिदं "न तु वेदवचनस्ये§"त्यनेन भाष्येणोक्तमिति ।

अन्यथा भाष्यार्थमाह अप्रमाणत्वेति[१७१] । ये वक्तृज्ञानएव वाक्यस्य प्रामाण्यं नार्थे इति मन्यन्ते तन्मतेनेदं भाष्यं प्रमाणत्वसिद्धौ दृष्टान्तस्य बुद्धादिवाक्यस्य साध्यवैकल्यं प्रतिपादयति । साध्यवैकल्यमेव दर्शयति तेषामिति[१७२] । पदार्थरचनायत्त इत्यादिना। यत् पुंवचसां कार्यमनुमेयं वक्तृज्ञानं प्रतिपादितं तत्र बुद्धादिवचनानामपि

---

* प्रमीयते इति १ पु. पा. ।

† विधीयते, इति २ पु. पा. । ‡ नायथार्थता, इति का. पा. ।

§ न तु वेदवचनस्य मिथ्यात्वे किं चित् प्रमाणमस्ति । शा. भा. पृ. ६ प. ४ ।

स्वव्यापारातिरिक्ते ऽर्थे वेदस्यापि मृषार्थता ।
पूर्वपक्षार्थवत्त्वेन प्रसक्ता सिद्धसाध्यता ॥१७३॥
'अज्ञात्वैवमभिप्रायं कृतकाऽकृतकत्वयोः ।
सत्यमिथ्यात्वहेतूक्तिमात्रज्ञानात्परो ऽब्रवीत् ॥१७४॥
ननु सामान्यतोदृष्टं' 'नान्यत्वादित्यदूषणम् ।
एतस्मादेव दृष्टान्तो न हि पक्षे सपक्षता' ॥१७५॥

---

प्रामाण्यमस्त्येवेति साध्यवैकल्यम्, अर्थे तु तेषां नास्त्यव व्यापार इति। यदि तु यत्र व्यापारो नास्ति तत्रैवाऽप्रामाण्यं वेदस्यापि साध्यते तेन न भविष्यति साध्यवैकल्यमिति। ततः सिद्धसाधनमित्याह स्वव्यापारेति[१७३] ।

ननु सामान्यतोदृष्टमित्यादिभाष्य*मयुक्तं तत्पुरुषबुद्धिप्रभवमप्रमाणमिति वदता दोषनिमित्तं लौकिकस्याप्रामाण्यं न वाक्यत्वप्रयुक्तं दर्शितमत आह अज्ञात्वेति[१७४] सपादेन। पुरुषदोषो मिथ्यात्वे तदभावश्च सम्यक्त्वे हेतुरनेनोक्त इत्येतावन्मात्रं ज्ञात्वा वाक्यत्वस्याऽप्रयोजकत्वाभिप्रायमजानन् भवतु तावद् येन केन चिद्धेतुना लौकिकस्याप्रामाण्यं तावता ऽपि तत्प्रतिबद्धं वाक्यत्वं वेदस्यापि मिथ्यात्वमनुमापयतीति चोदयति। इतिशब्दश्चात्र द्रष्टव्यः सामान्यतो दृष्टमित्यत्राऽब्रवीदिति। कृतकाकृतकत्वयोरिति स्वार्थे भावप्रत्यय इति। "नाऽन्यत्वा†"दिति परिहारभाष्यमाक्षिपति नाऽन्यत्वादिति[१७५] पा-

---

* ननु सामान्यतोदृष्टं पौरुषेयं वचनं वितथमुपलभ्य वचनसाम्यादिदमपि वितथमवगम्यते । शा. भा. पृ. ५ प. ४ ।

† शा. भा. पृ. ५ प. ६ ।

तस्मादयमभिप्रायो भाष्यकारस्य वर्ण्यते ।
'अभ्युपेत्यार्थविषयं वाक्यव्यापारमुच्यते ॥१७६॥
यदि स्याद् व्यवधाने ऽपि वाक्यार्थापेक्षया* ऽनृतम् ।
दृष्टान्तो नृवचोऽत्रापि हेतुः साधारणो† भवेत्॥१७७॥
सत्येष्वपि हि दृष्टैव पौरुषेयेषु वाक्यता' ।
अतीन्द्रिये ऽपि किञ्चिद्धि सत्यं दृष्टं यदृच्छया॥१७८॥
नान्यत्वादिति चानेन परोक्तादन्यतोच्यते ।

---

दत्रयेण । गुण एव हि पक्षसपक्षयोरन्यत्वं न दोष इति । यस्मादेवं यथाश्रुतं भाष्यमनुपपन्नं तस्मादयं वक्ष्यमाणो भाष्याभिप्राय इत्याह तस्मादिति[१७६] । तमेव दर्शयति अभ्युपेत्येति द्वयेन । ज्ञाने एव पुंवचसां प्रामाण्यं नार्थे तेषां व्यापारः, अतः साध्यविकलो दृष्टान्त इति तावदुक्तम् । अभ्युपेत्याप्यर्थविषयं व्यापारं दूषणान्तरमुच्यते । यदि ज्ञानव्यवधाने सत्यर्थापेक्षयैव दृष्टान्तस्तथा ऽपि हेतोर्वाक्यत्वस्य सत्येष्वपि वैद्योपदेशेषु दृष्टत्वादनैकान्तिकत्वमिति । यदि त्वतीन्द्रियविषयत्वे सति वाक्यत्वादित्युच्यते तथाप्यनैकान्तिकत्वमित्याह अतीन्द्रिये इति[१७८]। केन चिदतीन्द्रियविषयमेव वाक्यमिन्द्रो ऽस्तीति प्रयुक्त,मपरेण नास्तीति, तयोरन्यतरदवश्यमस्ति सत्यमिति । एतच्च सत्यत्वमात्राभिप्रायेणोक्तं न तु प्रामाण्याभिप्रायेण द्वयोरपि मूलाभावेनाऽनिर्णायकत्वादप्रामाण्ये साध्ये नास्त्यनैकान्तिकत्वं तत्र तु वक्ष्यमाणान्येवाऽप्रयोजकत्वसप्रतिसाधनत्वागमवि-

---

* वाह्यार्थापेक्षयेति २ पु. पा. ।

† हेतुसाधारण इति २ पु. पा. ।

अन्यो ह्येष तदाभासो' विपक्षं वान्य*मब्रवीत् ॥१७९॥
यद्वा ऽन्यस्माद्विसंवादान्मिथ्यात्वं तत्र न त्विह ।
विषयस्यापि चान्यत्वा†त्साधनासङ्गतैव सा ॥१८०॥
न ह्यन्यस्येति नैकस्मिन्मृषार्थे ऽन्यमृषार्थता ।
विवक्षाया मृषार्थत्वे न च वाक्ये मृषार्थता ॥१८१॥

---

रुद्धत्वान्येव दूषणानीति। वर्णिते ऽभिप्राये भाष्यं प्रयोजयति नान्यत्वादिति[१७९] पादत्रयेण। परेण हि सामान्यतोदृष्टं वक्तव्यत्वेन प्रतिज्ञातं ततो ऽन्यदिदं तदाभासमनैकान्तिकहेतुत्वादिति।

अस्मिन्नेव दूषणे भाष्यमन्यथा प्रयोजयति विपक्षमिति। सामान्यतोदृष्टस्य हि विपक्षो हेतुशून्यो भवति अस्य विपक्षः सत्यवाक्यं हेतुयुक्तो ऽन्य इति। अस्मिँश्च व्याख्याने न ह्यन्यस्येत्यादिभाष्यं‡ सुगमम्। न ह्यनाप्तवाक्यस्य वैतथ्ये सत्याप्तवाक्यस्यापि वैतथ्यम्, अतो ऽनैकान्तिकत्वमिति योजना। व्याख्यान्तरमाह यद्वेति[१८०]। अन्यदेव लौकिकस्य मिथ्यात्वे प्रयोजकं दुष्टत्वं, दुष्टवाक्यं त्वप्रयोजकमिति। न ह्यन्यस्य दुष्टस्य मिथ्यात्वे सत्यदुष्टस्यापि मिथ्यात्वं, न हि श्यामत्वहेतुयुक्तस्य देवदत्तस्य श्यामत्वेन तद्रहितस्य यज्ञदत्तस्याऽपि तद्भवति। व्याख्यान्तरमाह विषयस्येति। लौकिकस्य हि वक्तृज्ञानं विषयो नार्थः। तत्र च प्रमाणमेव तदिति तदेव साध्यवैकल्यं दृष्टान्तस्येति। "न ह्यन्यस्ये"ति भाष्यमनुभाष्याऽस्मिन् पक्षे योजयति न ह्यन्यस्येति[१८१]। एतदेव विवृणोति विव-

---

* चान्यमिति पाठान्तरम्। † चाप्तत्वादिति पाठान्तरम्।

‡ न ह्यन्यस्य वितथभावे ऽन्यस्य वैतथ्यं भवितुमर्हति, अन्यत्वादेव। शा. भा. पृ. ५ प. ६

श्यामत्वे पुंस्त्ववच्चैतत्साधारण्ये निदर्शनम् ।
परोक्तेर्वापि दुष्टत्वाद्विकल्पसममुच्यते* ॥१८२॥
यद्वा प्रमाणमेवेदं सम्यक्त्वे ऽन्यत्वमुच्यते ।
विरुद्धाऽव्यभिचारित्वं बाधो वा ऽप्यनुमानतः ॥१८३॥

---

क्षाया इति । एकं वाक्यलिङ्गकं विवक्षाविषयं ज्ञानविषयं वा ऽनुमानं द्वितीयं तु विवक्षालिङ्गकमर्थविषयम् । तत्र द्वितीयस्य मिथ्यात्वे ऽन्यस्य प्रथमस्यापि न मिथ्यात्वसिद्धिरिति । "न हि देवदत्तस्ये"ति† सुगमम् ।

अनैकान्तिकपक्षे देवदत्तनिदर्शनस्यार्थमाह श्यामत्वे इति[१८२] । न हि देवदत्तस्य श्यामत्वे पुंस्त्वे ऽनैकान्तिकत्वेन यज्ञदत्तस्यापि तद्भवतीति । नान्यत्वादित्यस्य व्याख्यानान्तरमाह परोक्तेति । परोक्तं साधनमतिस्थूलदोषं न सम्यगुत्तरार्हमिति मत्वा विकल्पसमं जात्युत्तरमाह साधनधर्मयुक्ते धर्मिणि धर्मान्तरविकल्पात्साध्यधर्मविकल्पापादनं विकल्पसमं, वाक्यत्वे सत्यपि यथा किं चिल्लौकिकं किं चिच्च ततो ऽन्यद्वैदिकमित्येवं लौकिकवैदिकत्वे विकल्पेनावतिष्ठेते तथा किं चित्प्रमाणं किं चिच्चाऽप्रमाणं भविष्यति, न वाक्यत्वमनुसंहितमित्येतावता धर्मान्तराणामप्यनुसंधानं भवतीति । न ह्यन्यस्येत्यादि चास्मिन्पक्षे सुगमम् ।

व्याख्यानान्तरमाह यद्वेति[१८३] । सम्यक्त्वे प्रामाण्ये प्रमाणं लिङ्गमन्यत्वमुच्यते, तच्च यदि परोक्तेन साधनेन तुल्यबलं ततो ऽस्य

---

* सम उच्यते इति २ पु. पा. ।

† न हि देवदत्तस्य श्यामत्वे यज्ञदत्तस्यापि श्यामत्वं भवितुमर्हति । शा. भा. पृ. ९ प. ७ ।

चोदनाजनिता बुद्धिः प्रमाणं दोषवर्जितैः ।
कारणैर्जन्यमानत्वाल्लिङ्गाप्तोक्त्यक्षबुद्धिवत् ॥१८४॥
तथा ऽनाप्तप्रणीतोक्तिजन्यत्वाद्बाधवर्जनात् ।
देशकालादिभेदेन चाप्तोक्तिप्रत्ययो यथा ॥१८५॥
अकर्तृकत्व*सिद्ध्या च हेतुत्वं साधयिष्यते ।
एवमाद्यवबुध्यायं नान्यत्वादित्यवोचत ॥१८६॥

---

हेतोर्विरुद्धाऽव्यभिचारित्वम्, अथ प्रबलं ततो ऽनुमानविरोधः प्रतिज्ञाया इति । तदेव प्रमाणं प्रयोगेण दर्शयति चोदनेति[१८४] । प्रत्येकं लिङ्गादिभिर्बुद्धिशब्दः संबध्यते । अस्मिन्नेव साध्ये ऽन्ये द्वे प्रमाणे† दर्शयति तथेति[१८५] । देशान्तरादौ बाधवर्जनादित्यन्वयः । भाष्यस्य चायमर्थः । न वितथं वैदिकं किं तु तथ्यमेव कस्माद्दोषयुक्तं बाधयुक्तं च यज्ज्ञानकारणं ततो ऽन्यत्वात्प्रत्यक्षादिवदनाप्तवाक्यत्वाद्वाक्यान्तरत्वादाप्तवाक्यवदिति । न ह्यन्यस्य ज्ञानकारणस्य बाधितस्य दोषयुक्तस्य च वितथभावे ऽन्यस्य तद्रहितस्य वैतथ्यं भवति, अन्यत्वादेवेति । नन्वासिद्धमेवाऽनाप्ताप्रणीतत्वं दोषवर्जनं च वेदस्याऽनाप्तप्रणीतत्वादित्यत आह अकर्तृकत्वेति[१८६] ।

भाष्यार्थमुपसंहरति एवमिति । आदिशब्दश्चान्यस्यापि दोषस्योपसंग्रहार्थः । "अपि च पुरुषवचनसाधर्म्याद्वेदवचनं मिथ्येत्यनुमानं प्रत्यक्षस्तु वेदवचनेन प्रत्ययः । न च प्रत्यक्षविरुद्धमनुमानमात्मानं लभते" इति भाष्यं‡ तदयुक्तं, प्रत्यक्षशब्दो ह्यैन्द्रियकप्रत्ययवचनः। न च शाब्दस्यैन्द्रियकत्वमस्ति । यदि तु वचनविषयो यः श्रौत्रः प्र-

---

* अकृत्रिमत्वेति १—२ पु. पा. ।

† संबध्यते। प्रयोगान्तरे द्वे इति २ पु. पा. । ‡ शा. भा. पृ. ९ प. ८ ।

प्रत्यक्षस्त्विति दार्ढ्यं वा प्राथम्यं वापि लक्षयेत् ।
स्वरूपतः प्रमाणत्वं मिथ्यात्वं पररूपतः ॥१८७॥
ज्ञानाभावश्च मिथ्यात्वं द्वयस्याऽसंभवाद्यदि ।
प्रत्यक्षं तत्परेषां च सिद्धमस्याऽनुमानतः ॥१८८॥
यथा च तव मिथ्यात्वं साधनं साधयेदिदम् ।
तथा च बाधकाधीनं मिथ्यात्वमपि साधयेत् ॥१७९॥

---

त्ययः तस्य प्रत्यक्षत्वमुच्यते न च तद्वैतथ्यस्य बाधकं वन्ध्यासुतवचनस्यापि श्रौतत्वात् । अथ वाचनिकमेव ज्ञानं प्रत्यक्षगम्यत्वाभिप्रायेण प्रत्यक्षमुच्यते घटः प्रत्यक्ष इतिवत्, तदप्ययुक्तम् । ज्ञानस्यानुमेयत्वादित्यत आह प्रत्यक्ष इति[१८७] । ऐन्द्रियकज्ञानवचन एवायं प्रत्यक्षशब्दो वाचनिके ज्ञाने गुणवृत्त्या प्रयुक्तो ऽस्ति हि तस्य दार्ढ्यमनुमानाच्च प्राथम्यं स्वतश्च प्रामाण्यं परतश्चाप्रामाण्यमिति प्रत्यक्षसादृश्यम् । तदनेनागमविरोध एव पूर्वोक्तः प्रतिज्ञायाः कथ्यतइति । मुख्य एव वा प्रत्यक्षशब्द इत्याह ज्ञानाभाव इति[१८८] । परेण ह्यप्रामाण्यमुक्तं तच्च संशयविपर्ययात्मकं द्वयमपि नास्तीति प्रागेव स्थितं, तद्यदि ज्ञानाभावरूपमुच्यते ततो भवतां प्रत्यक्षविरुद्धा प्रतिज्ञा भवति, भवन्मते ज्ञानस्य प्रत्यक्षत्वात् । अस्यैव हि केवलं मीमांसकस्य तदनुमेयं परेषां तु प्रत्यक्षमेवेति । विशेषविरुद्धत्वं वा हेतोरनेन भाष्येणोच्यतइत्याह यथा चेति[१८९] । बाधकाधीनेन हि मिथ्यात्वेन व्याप्तं वाक्यत्वं तादृशमेव साधयेत् न च तद्वेदे शक्यं साधयितुं, प्रत्यक्षो हि वेदोत्थापितः प्रत्ययः तद्वदेव न कदा चिद्बाध्यतइति अस्मिन्पक्षे गौण एव प्रत्यक्षशब्द इति ।

धर्म इत्युपसंहार्ये यच्छ्रेयस्करभाषणम् ।
तद्धर्मपदवाच्यार्थनिरूपणविवक्षया ॥१९०॥
श्रेयो हि पुरुषप्रीतिः सा द्रव्यगुणकर्मभिः ।
चोदनालक्षणैः साध्या तस्मात्तेष्वेव धर्मता ॥१९१॥
अन्यत् साध्यमदृष्ट्वैव यागादीननुतिष्ठतः ।
धार्मिकत्वसमाख्यानं तद्योगादिति गम्यते ॥१९२॥

---

"तस्माच्चोदनालक्षणः श्रेयस्कर" इति भाष्ये*शब्दान्तरेणोपसंहारस्याभिप्रायमाह धर्म इति[१९०]। श्रेयस्करवाचित्वं धर्मशब्दस्य निरूपयितुम् एवमुपसंहृतमिति। "य एव श्रेयस्करः स एव धर्मशब्देनोच्यते" इति भाष्यं†तदनेन कस्य धर्म्मत्वमुक्तं तद्दर्शयति श्रेय इति[१९१]। द्रव्यादीनां धर्मत्वमुक्तमनेनेति। कथं पुनर्यागादीनामेव धर्मशब्दवाच्यत्वमित्याशङ्क्य लोकप्रयोगं प्रमाणमुपदर्शयता भाष्यकारेणोक्तं "यो हि यागमनुतिष्ठति तं धार्मिकं समाचक्षते‡" इति, तदयुक्तम्। यागानुष्ठाय्येव ह्यपूर्वान्तःकरणवृत्त्यादिकमप्यनुतिष्ठति अतो यागयोगादेवात्र किं धार्मिकशब्दो नापूर्वादियोगादिति कथं विविच्यतेऽत आह अन्यदिति[१९२]। लौकिका हि नापूर्वादिस्वरूपं जानन्ति कथं तन्निमित्तं धार्मिकशब्दं प्रयुञ्जीरन्, यागादीनामेव श्रेयःसाधनत्वं मत्वा तदभिप्रायेणैव तदनुष्ठायिनि धार्मिकशब्दं प्रयुञ्जते। अतो यागादीनामेव श्रेयःसाधनात्मनां धर्मशब्दाभिधेयत्वमिति निर्णीयते। न च

---

* शा. भा. पृ. ९ प. ११।
† शा. भा. पृ. ९ प. १२।
‡ शा. भा. पृ. ९ प. १३।

'पश्वादीनि च धर्मस्य फलानीति व्यवस्थितम् ।
चित्रागोदोहनादीनां तान्युक्तानि फलानि च ॥१९३॥
तस्मात्तेष्वेव धर्मत्वं'* धर्माणीति च दर्शनात् ।
लिङ्गसंख्याविनिर्मुक्तो धर्मशब्दो निदर्शनम् ॥१९४॥
'अन्तःकरणवृत्तौ वा वासनायां च चेतसः ।
पुष्कलेषु च पुण्येषु नृगुणैः† पूर्वजन्मनि ॥१९५॥

---

शूद्रकृतस्य धर्मत्वप्रसङ्गः श्रेयःसाधनत्वाऽभावादिति प्रसिद्ध्यन्तरमपि दर्शयति पश्वादीति[१९३] सपादेन। पश्वादीनि हि धर्मफलत्वेन प्रसिद्धानि तेन येषां तानि फलानि ते धर्मा इति गम्यते। तानि च चित्रादीनां फलत्वेन चोदनातो ऽवगतानीति चित्रादीनामेव धर्म्मत्वमिति।

वैदिकादपि सामानाधिकरण्याद्यागादेरेव धर्मत्वमिति वदता भाष्यकारेणोदाहृतं "यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन्"‡ इति तद्दर्शयति धर्माणीति[१९४]। कथं तर्हि पुलिङ्गैकवचनान्तेन यज्ञशब्देन नपुंसकबहुवचनान्तस्य धर्मशब्दस्य सामानाधिकरण्यमत आह लिङ्गेति। तानीत्यत्र प्रातिपदिकं तावद्यज्ञवाच्येवाऽन्यस्याऽप्रकृतत्वात्तत्समानाधिकरणश्च धर्मशब्दः ततः सो ऽपि यज्ञविषय एव लिङ्गसंख्ययोस्तु छान्दसत्वादसौ व्यत्यय इति।

एवं स्वमतेन धर्मपदस्यार्थमुक्त्वा मतान्तराणीदानीं दूषयति अन्तःकरणेति[१९५] दृष्टो[१९६]ऽन्तेन। सांख्या ह्यन्तःकरणस्य मनसो वृत्तिविशेषं यागाद्यनुष्ठानजन्यं धर्ममाहुः। शाक्यास्तु चेतसो ज्ञान-

---

* एतेषु धर्मत्वमिति २ पु. पा. । † नृगुणे इति का. पा. ।
‡ शा. भा. पृ. ९ प. १६ ।

प्रयोगो धर्मशब्दस्य न दृष्टो' 'न च साधनम् ।
पुरुषार्थस्य ते ज्ञातुं शक्यन्ते चोदनादिभिः' ॥१९६॥
न च वस्त्वन्तरं शक्यमपूर्वं स्वर्गयागयोः ।
ज्ञातुं साधनभूतं वा साध्यं वा नाप्यतो ऽन्यथा ॥१९७॥
श्रुतसाधनसाध्यत्वत्यागेनाऽश्रुतकल्पना ।
प्रसज्येतास्य ताद्रूप्ये व्यतिरेके त्वरूपता ॥१९८॥

---

स्य ज्ञानान्तरजन्यां वासनाम् । आर्हतास्तु कायारम्भकान् परमाणून् पुद्गलाख्यान् । वैशेषिकास्तु आत्मनो विशेषगुणम् । एकदेशिनस्त्व-पूर्वम् । सर्वेषु च तेषु लोके धर्मशब्दप्रयोगो न दृष्ट इति न तेषां धर्मत्वमिति यागाद्यनुष्ठानात्पूर्वं जन्म यस्य नास्ति तदपूर्वजन्मेति । किं च श्रेयःसाधनवचनो धर्मशब्दो लोके प्रसिद्धः, न चान्तःकरणवृत्त्यादीनां तत्साधनत्वं चोदनादिभिरवगम्यते अतो न तेषां धर्मत्वमित्याह **न चेति भि**[१९६]**रन्तेन** । आदिशब्देन बाह्यागमादीनां ग्रहणम् । तेष्वपि चैत्यवन्दनादीनामेव श्रेयःसाधनता ऽवगम्यते न वासनादीनामिति ।

मा नामाऽन्तःकरणवृत्त्यादीनां श्रेयःसाधनत्वं विज्ञायि, अपूर्वस्य तु ज्ञायते तेनाऽपूर्वं कृत्वा नान्यथेति वक्ष्यति, तस्मात्तस्य धर्मत्वं युक्तमत आह **न चेति**[१९७] । नाऽपूर्वं नाम स्वतन्त्रं वस्त्वन्तरं स्वर्गयागयोः क्रमेण साधनभूतं साध्यभूतम् अन्यादृशं वा ज्ञायते । कथमित्याह **श्रुतेति**[१९८] । अस्याऽपूर्वस्य ताद्रूप्ये साध्यसाधनरूपत्वे श्रुतस्य स्वर्गसाध्यत्वस्य यागसाधनत्वस्य च हानिः, अश्रुतस्य चाऽपूर्वसाध्यसाधनभावस्य कल्पनम्, अताद्रूप्ये तु स्वरूपमेवाऽपूर्वस्य न स्यान्निष्प्रमाणकत्वादिति । किमिदानीं नास्त्येवाऽपूर्वमत

तस्मात्फले प्रवृत्तस्य यागादेः शक्तिमात्रकम् ।
उत्पत्तौ वापि पश्वादेरपूर्वं न ततः पृथक् ॥१९९॥
शक्तयः सर्वभावानां भावशब्दैर्विशेषतः ।
नोपाख्यायन्तइत्येवं नापूर्वे धर्मशब्दता ॥२००॥
पुरस्ताच्चोदनाशब्दो विधावेव व्यवस्थितः ।
न च तल्लक्षणा हिंसा प्रत्युदाहरणं कथम् ॥२०१॥

---

आह तस्मादिति[१९९] । फलं साधयितुमभिप्रवृत्तस्य यागादेः शक्तिमात्रमुत्पत्तौ वा प्रवृत्तस्य पश्वादेः फलस्य सूक्ष्मावस्था शक्तिरङ्कुरस्थानीया ऽपूर्वं न ततः पृथग्भूतं स्वतन्त्रं वस्त्वन्तरम् । एतच्चापूर्वाधिकरणे* स्पष्टं वक्ष्यति ।

तथापि किं धर्मशब्दवाच्यं न भवत्यत आह शक्तय इति[२००] । उक्तं तावल्लोकप्रयोगाभावान्न तस्य धर्मशब्दवाच्यत्वमिति । किं च सर्वपदार्थानामेव शक्तयः साधारणैरेव शक्तिसामर्थ्यादिपदैरभिधीयन्ते, न च धर्मशब्दः शक्तिमात्रवचनः अग्न्यादिशक्तावप्रयोगात्, अतो यागादेः श्रेयःसाधनस्य या शक्तिः सा तद्विशिष्टाभिधेया स्यात् । न च शक्तीनां भावविशिष्टानामभिधानं क्व चिद् दृष्टं, विशेषत इति विशेषणं कृत्वेति ल्यब्लोपे पञ्चमी । भावशब्दैर्विशेषिता इति क्व चित्पाठः । न चाऽनभिधाय श्रेयःसाधनं तद्विशिष्टा शक्तिरभिधातुं शक्यते तदाभिधाने च न शक्तिं यावदभिधा गन्तुमर्हति, तस्माद्यागादिरेव धर्मो नाऽपूर्वमिति ।

उभयमिह चोदनया लक्ष्यतइत्यादिभाष्य†मर्थशब्दप्रयोजनकथनार्थं, तदाक्षिपति पुरस्तादिति[२०१] । क्रियायाः प्रवर्तकं वचनं चोद-

---

* जै. सू. अ. २ पा. १ सू. ५ ।

† उभयमिह चोदनया लक्ष्यते ऽर्थो ऽनर्थश्च । कोऽर्थः ? यो निःश्रेयसाय, ज्योतिष्टोमादिः । शा. भा. पृ. ५ पं. १९ ।

चोदनालक्षणो यश्च श्येनादिरिह गम्यते ।
निषेधाभावतस्तस्य कथं ब्रूयादनर्थता ॥२०२॥
यद्यपि स्याद्विधिस्पृष्टे निषेधो नैव तादृशः ।
विज्ञायते ह्यनर्थत्वं षोडशिग्रहणादिवत् ॥२०३॥

---

नेति वदता क्रियाविधावेव चोदनाशब्दो व्यवस्थापितः, तेन नाऽनर्थस्य हिंसासुरापानादेश्चोदनालक्षणत्वं, निषेधेषु हि यदि तावन्निवारणं नाम विधेरर्थान्तरं वाक्यार्थः, यदि वा नञर्थविधिरुभयथा ऽपि क्रियाविधित्वाभावान्न निषेधलक्षणस्याऽनर्थस्य चोदनालक्षणत्वम्, अतल्लक्षणस्य च द्व्यङ्गविकलत्वाच्चोदनालक्षणशब्देनैव तद्व्यावृत्तिसिद्धेर्नार्थग्रहणप्रत्युदाहरणत्वम् । तस्मादुभयं चोदनालक्षणमित्येतत्तावदयुक्तम् । यदपि "को ऽनर्थ" इति पृष्ट्वा ऽनर्थोदाहरणत्वेन श्येनादिकमुपन्यस्तं* तदाक्षिपति चोदनेति[२०२] । विधेयत्वेन श्येनादेर्निषेधाभावान्नाऽनर्थत्वमिति । एवं वा श्लोकद्वयमिदं व्याख्येयम् । अनर्थः श्येनादिः चोदनालक्षण इत्यत्र विकल्प्य दूषणमुच्यते । श्येनग्रहणं यदि लक्षणया फलपरं ततस्तत्फलं हिंसा चोदनालक्षणत्वाभावादुभयाङ्गविकलं न प्रत्युदाहरणम् । अथ श्येनस्वरूपपरं तदप्यनर्थत्वाभावादुभयाङ्गयुक्तं न प्रत्युदाहरणमिति ।

ननु विधेयस्यापि श्येनादेः षोडशिग्रहणादिवत्संभवत्येव निषेधो ऽत आह यद्यपीति[२०३] । अनन्यगोचरो हि निषेधो विधिविषयमास्कन्दति, सामान्यविषयो हिंसानिषेधो विशेषविहिते श्येनादौ न

---

* को ऽनर्थः ? यः प्रत्यवायाय, श्येनो, वज्रः, इषुः, इत्येवमादिः । तत्र अनर्थो धर्म उक्तो मा भूदित्यर्थग्रहणम् । शा· भा· पृ. ५ प. २० ।

चोदनालक्षणं चोक्त्वा निषिद्धत्वाद्विरुध्यते ।
श्येनादावुपदिष्टे च हिंसा हीति न युज्यते ॥२०४॥
हिंसा हि फलमेतेषां भिन्ना तेभ्यः स्वरूपतः ।
सा हि प्राणवियोगात्मा श्येनस्तत्राऽसिवत्पृथक् ॥२०५॥
उपदेशाभिधानं च नाऽविधेये ऽवकल्पते ।
श्येनादेरविधाने च कस्यान्यस्य विधेयता ॥२०६॥

---

प्रवर्ततएव । अथापि प्रवर्तेत तथापि विहितनिषिद्धस्य षोडशिवदेव नाऽनर्थत्वमिति । यदपि "कथं पुनरसावनर्थ" इति पृष्ट्वा "हिंसा च प्रतिषिद्धे"*त्युक्तं तदप्याक्षिपति चोदनेति[२०४]। किमिति न युज्यते श्येन एव हि हिंसा ऽत आह हिंसेति[२०५]। कथं भिन्नेत्यत आह सा हीति । प्राणवियोगः प्राणानां वियोजनं प्राणवियोगभावनेति यावत् । तस्यां चासिवदेव श्येनयागो धात्वर्थः करणं तस्य तु फलं प्राणवियोगभावना हिंसा श्येनादेर्भिन्नैवेति । यदपि "कथं पुनरनर्थः कर्त्तव्यतयोपदिश्यत" इति पृष्ट्वा "नैव श्येनादयः कर्त्तव्यतया विज्ञायन्त" इति तेषामविधेयत्वमुक्त्वा पुन "र्यो हि हिंसितुमिच्छेत्तस्याऽयमभ्युपाय"† इति हि तेषामुपदेशः श्येनेनाभिचरन्यजेतेति, कर्मवाचिन्या षष्ठ्या तेषामुपदेश्यत्वं विधेयत्वमुक्तं तदपि व्याहतमित्याह उपदेशेति[२०६]। "नैव श्येनादय" इत्येतदपि विधेयत्वनिराकरणमयुक्तमित्याह श्येनादेरिति । फलं तावत्सर्वत्राऽविधेयं तद्यदि फलसाधनस्याऽपि

---

* कथं पुनरसावनर्थः ? हिंसा हि सा, हिंसा च प्रतिषिद्धेति । शा. भा. पृ. ९ प. २२ ।

† शा. भा. पृ. ९ प. २४ ।

'सर्वत्रावस्थितो* न्यायो भावनांशद्वये विधिः ।
स बाध्येतेह ये चामी ज्योतिष्टोमादयो मताः ॥२०७॥
धर्मत्वेन न ते ऽपि स्युर्हिंसासाधनका हि ते ।
न चाविधीयमानस्य फलतत्साधनाङ्गता ॥२०८॥

---

श्येनादेरविधेयत्वं तदा न किं चिद्विधेयमवशिष्येत । इतिकर्त्तव्यतांशो विधीयतइति चेत्, न । अविशेषात् । यथैव हि साधनं साधनत्वेनोपदिश्यमानमप्यविधेयं तथैवेतिकर्त्तव्यता करणोपकारकत्वेनोपदिश्यमाना ऽप्यविधेया स्यात् । यथा च साधने फलरागात्प्रवृत्तिः तथेतिकर्त्तव्यतायामपि तदभावे फलाऽनुत्पत्तेरित्यलम् ।

स्थितसिद्धान्तहानिश्च श्येनादीनामविधेयत्वे स्यादित्याह सर्वत्रेति[२०७] तान्तेन । "किं चैवं सति को ऽर्थो यो निःश्रेयसाय ज्योतिष्टोमादि"रिति भाष्ये ये धर्मत्वेन संमतास्ते ऽपि न धर्माः स्युः अधर्मत्वमेव तेषामपि स्यात् । ते ऽपि हि साधनत्वेनोपदिश्यमानत्वादविधेयाः । अग्नीषोमीयादिहिंसाङ्गत्वाच्च तेनांशेन निषेधावतारात् अधर्मत्वं स्यादित्याह इहेति । किं च विध्यभावे श्येनादीनां तदङ्गानां च फलाङ्गत्वं तत्साधनाङ्गत्वं च न स्यात् समानपदोपात्तधात्वर्थाऽवरुद्धाया भावनायाः समीहितसाध्यापेक्षत्वाभावादित्याह न चेति[२०८] ।

स्यादेतत् । नैव श्येनादयः कर्त्तव्यतया विज्ञायन्तइति कृत्यप्रत्ययोगात्साध्यतया विधानं वार्यते साधनतया तु विधानमनुज्ञायतएवाऽतो न विरोधो न च समीहितसाधनत्वहानिरिति, तत्राह सा-

---

* अवसित इति २ पु. पा. ।

साधनत्वेन* विहितं न चाऽविहितमुच्यते ।
साध्यत्वेन विधानन्तु नैवेष्टं लोकवेदयोः ॥२०९॥
तेनैवमर्थशब्दस्य प्रयोजनमिहोच्यते ।
प्रवृत्तौ वा निवृत्तौ वा या शब्दश्रवणेन धीः ॥२१०॥
सा चोदनेति सामान्यं लक्षणं हृदये स्थितम् ।
प्रवर्तकगृहीतैस्तु स्यादुदाहरणार्थता ॥२११॥
तात्पर्ये ह्यर्थशब्दस्य नेयं व्याख्योपपद्यते ।
अर्थग्रहणलभ्यं वा तत्प्रवर्तकभाषणम् ॥२१२॥

---

धनत्वेनेति[२०९] । एवमपि तावद्विहितमेव विहितं चेन्निषेधाऽगोचरत्वान्नार्थत्वेन प्रत्युदाहर्त्तुं युक्तमिति । किं च साधनत्वेनैव सर्वं विधेयं विधीयते । साध्यांशस्य क्वचिदपि विधानाऽभावादित्याह साध्यत्वेनेति । एवमाक्षिप्तं भाष्यं समाधत्ते तेनेति[२१०] । यस्मादेवं यथाश्रुतं भाष्यमनुपपन्नं तस्मादेवं वक्ष्यमाणप्रकारेणाऽर्थशब्दस्य प्रयोजनमिह भाष्ये कथितं न यथाश्रुतेनेति । तमेव प्रकारं दर्शयितुमुपक्रमते प्रवृत्ताविति । प्रवर्त्तकं निवर्तकं च वाक्यं चोदना न केवलं प्रवर्त्तकमेव धीग्रहणं ज्ञानस्याऽपि चोदनात्वसंभवात् । तच्च प्रागेवाऽस्माभिर्दर्शितमिति भवत्युभयं चोदना ।

कथं तर्हि प्रवर्त्तकं चोदनेति भाष्यमत आह प्रवर्त्तकेति[२११] । किमित्येवं भवतीत्याह तात्पर्ये हीति[२१२] । प्रवर्त्तकैकपरत्वे सति येयमर्थशब्दस्यानर्थनिवृत्तिपरत्वव्याख्या सा न युज्येतेति । अर्थशब्द-

---

* साधकत्वेनेति का. पा. ।

धर्मे प्रमाणभूतायास्तद्वा लक्षणमुक्तवान् ।
एवं सति विधिभ्यः स्याद्विधेयार्थावधारणम् ॥२१३॥
निषेधेभ्यो निषेध्यानामनर्थत्वेन निर्णयः ।
तेनार्थग्रहणेनोक्ता विधेयस्येह धर्मता ॥२१४॥
निषेध्यानामनर्थत्वमर्थसिद्धं न सूत्रितम् ।
तस्मादुभयमित्यत्र विधेयप्रतिषेधयोः ॥२१५॥
यागादिब्रह्महत्यादिवर्गयोः स्यान्निदर्शनम् ।
श्येनादीनां विधेयत्वादिष्टस्यापि च साधनात् ॥२१६॥

---

सहितस्य वा चोदनाशब्दस्य तत्प्रवर्त्तकवचनत्वमुक्तमित्याह अर्थेति । व्याख्यानान्तरमाह धर्मे इति[२१३] । यदा चोभयमपि चोदना तदा तयैव विधिरूपया विधेयानामर्थत्वं निषेधरूपया च निषेध्यानामनर्थत्वं लक्ष्यते ततो युक्तमर्थानर्थयोः चोदनालक्षणत्वमित्याह एवं सतीति । सति चोभयोस्तल्लक्षणत्वे निषेध्यस्याऽनर्थस्य धर्मत्वव्यावर्त्तनेन विधेयस्यैवार्थस्य धर्मत्वं वक्तुमर्थवदेवार्थग्रहणमित्याह तेनेति[२१४] ।

नन्वधर्मोऽपि हानाय जिज्ञासितव्यः अतस्तत्स्वरूपमपि वक्तव्यमत आह निषेध्यानामिति[२१५] । धर्मविपरीतो ह्यधर्मः । ततोऽर्थस्य धर्मत्वे सूत्रिते तद्विपरीतस्याऽनर्थस्य निषेध्यस्याऽधर्मत्वमर्थसिद्धत्वान्न सूत्रितमिति । एवं चोभयं चोदनालक्षणमिति भाष्यं विधेयनिषेध्याभिप्रायमित्याह तस्मादिति । यत्तु श्येनोदाहरणमयुक्तं विहितत्वेनार्थत्वाऽभावादित्युक्तं तत्राह श्येनादीनामिति[२१६]।

उपचारादनर्थत्वं फलद्वारेण वर्ण्यते ।
प्रतिषिद्धा हि सत्यत्र स्फुटमेतत्करिष्यते ॥२१७॥
हिंसा हीति च यच्चापि ब्रूते नाभिचरेदिति ।
श्येनादीनां स्वरूपे तु नोत्तरग्रन्थसङ्गतिः ॥२१८॥
विहितत्वान्निषेधस्य प्रवृत्तिस्तेषु दुर्लभा ।
यदा तु चोदनाशब्दो विधावेव व्यवस्थितः ॥२१९॥
तदोभयादिको ग्रन्थः साध्यसाधनसंश्रितः ।

---

विहितत्वादभिलषिततमस्य च शत्रुवधस्य साध्यमानत्वान्न स्वरूपेणानर्थत्वं श्येनादीनां सम्भवतीति फलगतमनर्थत्वं श्येनादावुपचर्यते, श्येनशब्देन वा फलं लक्षयित्वा मुख्यवधएवानर्थत्वमुच्यतइति ।

भाष्यकारेणैव श्येनफलाभिप्रायमेवेदमनर्थत्वं न श्येनस्वरूपाभिप्रायमिति विस्पष्टीकृतमित्याह प्रतिषिद्धा हीति[२१७] । कथमेभिर्भाष्यैरिदं विस्पष्टीकृतमित्याह श्येनादीनामिति[२१८] । कथमुत्तरेषां "हिंसा ही"त्यादिग्रन्थानामसंगतिरित्याह विहितत्वादिति[२१९] । निषेधग्रहणमुपलक्षणं विहिते श्येनादिस्वरूपे ऽनर्थत्वेन प्रतिज्ञाते निषिद्धत्वाऽनुपपत्तिः, यागस्वरूपे हिंसात्वानुपपत्तिः । नाभिचरितव्यमिति वा ऽभिचारस्य श्येनफलस्याऽविधेयत्वेन निषेधविषयत्वं समर्थयता फलमेव पूर्वमनर्थत्वेनोदाहृतमिति दर्शयति श्येनादिस्वरूपे तदपि न संगच्छेतेति ।

तदेवं निषेधस्यापि विधिवच्चोदनात्वादुभयं चोदनालक्षणमिति भाष्यं विधेयनिषेध्याभिप्रायं व्याख्यातम् । अस्तु वा विधिरेव चोदना तथापि शक्यमेव कथं चिद्भाष्यं नेतुमित्याह यदेति । ननु साध्य-

'साध्यसाधनसम्बन्धे विधिना प्रतिपादिते ॥२२०॥
लक्ष्यमाणत्वमुभयो'र्द्विविधं च फलं क्रतोः ।
'स्वर्गादि* प्राप्यते तत्र प्रतिषेधाऽनतिक्रमात् ॥२२१॥
अतिक्रमेण हिंसादि' शास्त्रान्तरनिरीक्षया† ।
फलांशे भावनायाश्च प्रत्ययो न विधायकः ॥२२२॥
वक्ष्यते जैमिनिश्चाह तस्य लिप्सार्थलक्षणा ।
तेन सामान्यतः प्राप्तो विधिना च निवारितः ॥२२३॥

---

स्याऽविधेयत्वात्कथं चोदनालक्षणत्वमत आह साध्येति[२२०] पादत्रयेण । यथैव हि हिंसासाधनं साधनरूपेण चोदनालक्षणं तथैव फलमपि स्वर्गादिसाध्यरूपेण चोदनालक्षणमेवेति । अर्थो ऽनर्थ इत्येतत्तु फलद्वैविध्याभिप्रायमित्याह द्विविधमिति । कथं द्विविधमित्याह स्वर्गादीति[२२१] पादत्रयेण । स्वर्गादिरनिषिद्धत्वादर्थो हिंसादिस्तु निषिद्धत्वादनर्थ इति । कथं निषेधो ऽत आह शास्त्रान्तरेति[२२२] । न हिंस्यादिति शास्त्रान्तरेण निषिद्धत्वादिति । ननु चाऽभिचारविधिना विहिता हिंसा कथं निषिध्येताऽत आह फलांशे इति । वक्ष्यति हि फलस्याऽविधेयत्व"मुद्देशाच्च फलत्वेने"त्यत्र श्लोके । तथा भाष्यकारो ऽपि "जानात्येवासौ मयैतत्कर्त्तव्यम उपायं तु न वेदे"ति । जैमिनिश्च "तस्य लिप्सार्थलक्षणे"ति । यत एवाविधेयं फलमत एव सामान्यतः प्राप्तो निषेधः फलांशे ऽभिचारविधिना न वार्यत इत्याह तेनेति[२२३] ।

---

* स्वर्गो हीति का. पा. । † विवक्षयेति का. पा. ।

फलांशोपनिपातिन्या हिंसायाः प्रतिषेधकः ।
अनर्थप्राप्तिहेतुत्वं बोध्यते तत्र यद्यपि ॥२२४॥
श्येनस्वरूपं नाऽनर्थस्तत्फलस्य त्वनर्थता ।
परस्तूभयमित्यादेः फलस्यापि विधेयताम् ॥२२५॥
भावनान्तर्गतत्वाद्वा मत्वा ऽनर्थत्वमाक्षिपत् ।
नैवेत्येतावता चास्य विधेयत्वनिराक्रिया ॥२२६॥

---

एवमभिचारविधिगोचरे प्रविशन्नपि निषेधो न श्येनस्वरूपस्याऽनर्थत्वं बोधयति किं तु तत्फलस्यैवेत्याह अनर्थेति[२२४] । भाष्यं चैवं योजनीयम् । उभयं चोदनया लक्ष्यते साध्यं साधनं च । साध्यमपि द्विविधमर्थो ऽनर्थश्च । को ऽर्थ इत्यत्राऽर्थशब्दः साधनलक्षणार्थः । अर्थात्मकस्य फलस्य साधकमित्यर्थः । यो ज्योतिष्टोमादिः । को ऽनर्थ इति फलस्वरूपाभिप्रायमेव । यः श्येनादिः फलमित्यर्थः । तत्राऽनर्थस्य हिंसादेर्धर्मत्वव्यावर्त्तनेन ज्योतिष्टोमादेर्धर्मत्वं वक्तुमर्थग्रहणमिति । एवं चार्थात्मकफलसाधनस्य धर्मत्वमनर्थस्य च हिंसादेरधर्मत्वमुक्तम । अनर्थात्मकफलसाधनस्य श्येनादेरुभयं नोक्तम । अतो ऽसौ न धर्मो नापि स्वरूपेणाऽधर्म इति सिद्धं भवति । तथा च वक्ष्यति "अतः स्वतो न धर्मत्वं श्येनादेर्नाप्यधर्मते"ति । "कथं पुनरनर्थः कर्तव्यतयोपदिश्यत" इति चोद्यमयुक्तं फलं ह्यनर्थत्वेनोदाहृतं तच्चाऽविधेयत्वान्नैव कर्त्तव्यतयोपदिश्यते ऽत आह पर इति[२२५]। फलस्याऽविधेयत्वमजानन्नुभयमित्यादिना फलस्याऽपि चोदनालक्षणत्वाभिधानात् भावनांशत्वाद्वा तद्विधाने इतरांशवत्फलस्यापि विधेयत्वादनर्थत्वमाक्षिपदिति ।

किं विधेयमिदानीं स्यादाह श्येनादयस्त्विति ।
'प्रश्नापाकरणे चात्र तव्यो विधिविवक्षया ॥२२७॥
प्रयुक्तो न तु साध्यर्थे' इये ऽप्यनुपयोगतः ।
अनर्थस्यापि साध्यत्वमविधेयस्य हीष्यते ॥२२८॥

---

"नैव श्येनादयः कर्त्तव्या" इति परिहारभाष्य*मनुपपन्नं फलस्य विधेयत्वे चोदिते श्येनस्य नियारणमसंगतमयुक्तं च श्येनस्य विधेयत्वाभिधानात्, अतो भित्त्वा व्याचष्टे नैवेति[२२६] । अस्याऽनर्थस्य विधेयत्वनिराक्रिया नैवानर्थः कर्त्तव्यतयोपदिश्यतइति भाष्यार्थः किं तर्हि विधेयमित्यत उत्तरं श्येनादय इति भाष्यमित्याह किमिति[२२७] । यश्चायं तव्यप्रत्ययः प्रश्नग्रन्थे पठितः परिहारग्रन्थे चाऽनुपक्तः स विधेयत्वाभिप्रायो न साध्यत्वाभिप्राय इत्याह प्रश्नेति पादत्रयेण । प्रश्नश्चापाकरणं च प्रश्नापाकरणं समाहारद्वन्द्व इति । कथं न साध्यार्थ इत्यत आह इये ऽपीति[२२८] । अनर्थत्वाक्षेपो हि चोद्यं, तत्समर्थनं च परिहारः, न चोभयत्रापि यथाक्रमं साध्यत्वं तन्निराकरणं चोपयुज्यतइति । कथं नोपयुज्यते ऽत आह अनर्थस्यापीति । सुरापानादेरनर्थस्यापि साध्यत्वदर्शनान्न साध्यत्वमनर्थत्वाक्षेपायोपयुज्यते, चोद्यवादिनो विधेयत्वमेव त्वनर्थविरोधित्वादुपयुज्यते । एवमसाध्यस्यापि गोदोहनादेर्विधेयस्याऽर्थत्वदर्शनाद्विधेयत्वनिराकरणमेवाऽनर्थत्वं समर्थयमानस्य परिहारवादिन उपयुज्यते न साध्यनिराकरणमिति ।

---

* शा. भा. पृ. ९ प. २४ ।

साध्यत्वरहिते चेष्टा विधेये नित्यमर्थता ।
शतुश्च लक्षणार्थत्वं तेषां चाप्युपदेशनम् ॥२२९॥
ब्रुवन् स्फुटीकरोतीष्टमुपदेशो हि नान्यथा ।
विधित्वमादिशब्दात्स्यादितिकर्तव्यतास्वपि ॥२३०॥
तस्मात्फलांशे या हिंसा वैदिकी सा निषिध्यते ।
अंशद्वये तु यां नाम तन्निषेधाभिधायिनाम् ॥२३१॥

---

यच्चेदं नैवेत्येतावता ऽनर्थस्य विधानं निराक्रियतइत्युक्तं तद्भाष्यकारेणैव स्फुटीकृतमित्याह शतुरिति[२२९] । श्येनेनाऽभिचरन्यजेतेति हि समामनन्तीति लक्षणं शतुर्वृत्तिं दर्शयल्लक्षणस्य प्रसिद्धत्वादविधेयत्वमभिचारस्य दर्शयति, तथा तेषामुपदेश इति श्येनादीनामुपदेश्यत्वं दर्शयति, तेन फलस्यैव पूर्वग्रन्थे विधेयत्वं निराकर्त्तुमिष्टं न श्येनादीनामिति स्फुटयति। न ह्यविधेयानामुपदेशोपपत्तिः, विध्युपदेशशब्दयोः पर्यायत्वादिति ।

श्येनादय इत्यादिशब्दार्थमाह विधित्वमिति[२३०] । विधिशक्तिरित्यर्थः । तेनांशद्वयगतैव हिंसा निषेधस्याऽविषयः । फलांशस्य त्वविधेयत्वान्निषेधगोचरो ऽनर्थ एवेत्युपपन्नं प्रत्युदाहरणमित्युपसंहरति तस्मादिति[२३१] ।

केचित्तु साधनेतिकर्त्तव्यतांशस्था ऽपि हिंसा निषिध्यते ऽतो ऽनर्थ इति मन्यन्ते तान्निराकरोति अंशद्वये इति । "अविशेषेण यच्छास्त्र"मित्यत्र "वचनाद्वा शिरोव"दित्यत्र च सामान्यस्याहवनीयविधेः श्वस्पर्शनिषेधस्य च विशेषेण वल्मेहोमविधिना पुरुषशीर्षोपधानविधिना च बाधो वक्ष्यते तद्वद्धिंसानिषेधो ऽपि सामान्यरूपत्वाद-

अविशेषेण यच्छास्त्रं शिरोवदिति चोत्तरम् ।
निषेधेनाऽनवष्टब्धे विषये न ह्यनर्थता ॥२३२॥
प्रत्यक्षादेरशक्यत्वात्कल्प्यते निष्प्रमाणिका ।
न हि हिंसाद्यनुष्ठाने तदानीं दोषदर्शनम् ॥२३३॥
बाह्येपि विचिकित्सा तु शास्त्रादेवोपजायते ।
'हिंस्यमानस्य दुःखित्वं दृश्यते यन्न तावता ॥२३४॥
कर्तुर्दुःखानुमानं स्या'त्तदानीं तद्विपर्ययः ।
विषयो ऽस्याः फलं यादृक् प्रेत्य कर्तुस्तथाविधम् ॥२३५॥
हिंसा क्रियाविशेषत्वात्सूते शास्त्रोक्तदानवत् ।

---

ग्नीषोमीयादिक्रत्वर्थहिंसाविधिना श्येनेनाऽभिचरन्यजेतेति पुरुषार्थहिंसाविधिना च बाध्यते ।

अथाऽसत्यपि निषेधे किमित्यनर्थो ऽग्नीषोमीयहिंसा न भवतीत्यत आह निषेधेनेति[२३२] । निषेध एव ह्यनर्थत्वे प्रमाणं प्रत्यक्षादीनामशक्तत्वादतो ऽप्रतिषिद्धे निष्प्रमाणिका ऽनर्थता कल्प्येतेति । प्रत्यक्षाद्यशक्तिं तावद्दर्शयति न हीति[२३३] । नन्वसत्यपि दोषदर्शने बाह्यहिंसावद्विचिकित्सा जायते ऽत आह बाह्ये ऽपीति[२३४] । तच्च शास्त्रमिह नास्तीति न तन्निबन्धना विचिकित्सेति । अथाऽनुमानेन कर्त्तुर्दुःखं भविष्यतीत्यनुमीयते हिंस्यमानस्य तदात्वे दुःखदर्शनादत आह हिंस्यमानेति पादत्रयेण । व्याप्त्यभावादित्यर्थः । प्रत्युत कर्त्तुस्तदात्वे सुखदर्शनात्कालान्तरे तदेवाऽनुमीयतइत्याह तदानीमिति[२३५] ।

य एवमाह तस्यापि गुरुस्त्रीगमनादिभिः ॥२३६॥
सुरापानादिभिश्चापि विपक्षैर्व्यभिचारिता ।
विरुद्धता च यादृग्घि दानैस्तादृक् फलं भवेत् ॥२३७॥
विधिगम्यफलावाप्तिरदुःखात्मकता तथा ।
न च या सम्प्रदानस्य प्रीतिस्तादृक् फलं श्रुतम् ॥२३८॥
दातुस्तेन हि दृष्टान्तः साध्यहीनः प्रतीयते ।
'सम्प्रदानं च दाने ते विषयः कर्म हिंसने ॥२३९॥

---

पूर्वशङ्कितमनुमानं दर्शयति विषय इति । हिंसेति[२३६] धर्मिनिर्देशः । अस्या हिंसाया विषये हिंस्यमाने यादृक् फलं दुःखं तादृगेव कालान्तरे कर्त्तुः प्रसूतइति प्रतिज्ञा*क्रियाविशेषत्वाच्छास्त्रोक्तदानवत् । तद्धि स्वविषये संप्रदाने यादृक् फलं सुखं तादृगेव कर्त्तुः प्रसूतइति । तद्दूषयति य एवमिति । दूषणान्तरमाह विरुद्धतेति[२३७] । कथमित्याह यादृगिति । तादृक्त्वमेव दर्शयति विधिगम्येति[२३८] । तथापि कथं विरोध इत्याह अदुःखेति । तथा सति विधिगम्यफलत्वे सत्यदुःखात्मकता फलस्य स्यात्, ततश्च दुःखविपरीतसुखसाधनत्वाद्विरुद्धतेति । दृष्टान्तश्च साध्यविकल इत्याह न चेति । संप्रदानस्य स्वल्पं सुखं कर्त्तुस्तु महत्, समद्धिगुणसहस्रानन्तानि फलानीति स्मृतेरिति । किं च सपक्षे येनैव हेतोर्व्याप्तिस्तदेव पक्षे ऽपि साधयितव्यम्, इह च संप्रदानतुल्यफलत्वं सपक्षे कर्मकारकतुल्यफलत्वं तु पक्षे विषयशब्दमात्रं त्वेक,मर्थस्तु विषय ए-

---

*प्रतिज्ञेति नास्ति २ पु. ।

वैषम्यं सम्प्रदाने तु पक्षस्त्वेतद्विरुद्धता ।
प्रीयते सम्प्रदानं हि देवतेति मतं तव ॥२४०॥
दृष्टान्ते कर्म दानं चेत्तस्य कीदृक् फलं भवेत् ।
जपहोमादिदृष्टान्तात्परपीडादिवर्जनात् ॥२४१॥
चोदितत्वस्य हेतुत्वाद्विरुद्धाऽव्यभिचारिता ।
विहितप्रतिषिद्धत्वे मुक्त्वा ऽन्यन्न च कारणम् ॥२४२॥
धर्मोऽधर्मोवबोधस्य तेनायुक्ता ऽनुमानगीः ।
अनुग्रहाच्चाऽधर्मत्वं पीडातश्चाप्यधर्मता ॥२४३॥
वदतो जपसीध्वादिपानादौ नोभयं भवेत् ।
क्रोशता हृदयेनापि गुरुदाराभिगामिनाम् ॥२४४॥

---

घेति नानुमानोपपत्तिरित्याह संप्रदानमिति वैषम्य[२४०]मन्तेन। यदि तु सपक्षवत्पक्षे ऽपि संप्रदानतुल्यफलत्वमेव साध्यते ततो विरुद्धता हेतोरित्याह संप्रदानइति। कथमित्याह प्रीयतइति। ततश्च दुःखफलत्वसाधनाय प्रयुक्तो हेतुः सुखफलत्वसाधनाद्विरुद्धः स्यादिति। शङ्कते दृष्टान्ते इति[२४१]। उभयत्र कर्मवचनत्वान्न वैषम्यमिति। दूषयति तस्येति। न हि हिरण्यादेर्देयस्य किं चिदपि फलमस्तीति। दूषणान्तरमाह जपेति। अग्नीषोमीयहिंसा सुखकरी चोदितत्वाज्जपादिवत्। किं चागमैकविषयो धर्माधर्मयोरनुमानोपन्यासो न युक्त इत्याह विहितेति[२४२]। किं च विषयानुरूपफलदायिवादिना परस्यात्मनो वा पीडाऽनुग्रहनिबन्धनं धर्मोऽधर्मत्वमाश्रितं, ततश्च जपे सुरापाने च परोपकाराऽपकाराऽभावाद्धर्मोऽधर्मत्वे न स्यातामित्याह अनुग्रहादिति[२४३]।

भूयान् धर्मः प्रसज्येत भूयसी ह्युपकारिता ।
अनुमानप्रधानस्य प्रतिषेधाऽनपेक्षिणः ॥२४५॥
हृदयक्रोशनं कस्माद्दृष्टां पीडामपश्यतः ।
पीडातश्चाप्यधर्मत्वं तथा पीडामधर्मतः ॥२४६॥
अन्योन्याश्रयमाप्नोति विना शास्त्रेण साधयन् ।
एवमादावशास्त्रज्ञो म्लेच्छो नोद्विजते क चित् ॥२४७॥
तस्य नाऽधर्मयोगः स्यात्पूर्वोक्ता यदि कल्पना ।
तस्मादनुग्रहं पीडां तदभावमपास्य च ॥२४८॥
धर्माऽधर्मार्थिभिर्नित्यं मृग्यौ विधिनिषेधकौ ।
'क चिदस्या निषिद्धत्वाच्छक्तिः शास्त्रेण बोधिता॥२४९॥

---

गुरुदाराऽभिगमश्च धर्मः स्यादित्याह क्रोशतेति[२४४] । यद्यपि गुरुदाराऽभिगामी हृदयक्रोशमल्पमात्मनो ऽपकारं करोति तथाऽप्युपकारभूयस्त्वाद्धर्म एव भूयान् स्यात्, किं चाऽनुमानप्रधानस्य भवतो मते हृदयक्रोशनमपि निर्निबन्धनमेव दृष्टपीडाऽभावात्तन्निबन्धनत्वाच्च क्रोशनस्येत्याह अनुमानेति[२४५] । यदि हृदयक्रोशरूपात्मपीडावशादेवाऽधर्मत्वमधर्मत्वाच्च हृदयक्रोशोपपत्तिरित्युच्यते तत इतरेतराश्रयमित्याह पीडात इति[२४६] । म्लेच्छादीनां च हृदयक्रोशाऽभावान्नाऽधर्मयोगः स्यादित्याह एवमादाविति[२४७] । उपसंहरति तस्मादिति[२४८] ।

क चित्तु निषेधप्रामाण्यादेव विहितानामपि हिंसानामधर्मत्वमिच्छन्ति, तन्मतमुपन्यस्यति क चिदिति[२४९] त्रयेण । एकैव हिं-

प्रत्यवायनिमित्तत्वं विधिना नापगच्छति ।
शास्त्रेण न हि शक्तीनामावापोद्वापनक्रियाः ॥२५०॥
विद्यमाना हि कथ्यन्ते शक्तयो द्रव्यकर्मणाम् ।
तदेव चेदं कर्मेति शास्त्रमेवाऽनुधावता ॥२५१॥
हिंसादीनामधर्मत्वं कथ्यते नाऽनुमानतः' ।
'एवं ये निपुणं प्राहुस्तैरप्येतत्परीक्ष्यताम् ॥२५२॥
सुरापानादिभिः शूद्रः किं याति नरकं कृतैः ।
वैश्यस्तोमेन वा किं स्याद्विप्रराजन्ययोः फलम् ॥२५३॥
पञ्चम्यामिष्टिकरणान्मध्यान्हे चाऽग्निहोत्रतः' ।
तस्माद्यद्यादृशं कर्म यत्फलोत्पत्तिशक्तिकम् ॥२५४॥
शास्त्रेण गम्यते तस्य तादृशस्यैव तत् फलम् ।

---

सा तस्याश्च क्व चिद् ब्राह्मणादिविषये प्रत्यवायनिमित्तत्वशक्तिर्निषेधेन बोधिता सा पुनर्विधानादपि नापगच्छति, न हि शास्त्रं शक्तीनामावापोद्वापौ करोति विद्यमानशक्तिकथनमात्रे व्यापारात्, अतः शास्त्रानुसारादेवाऽग्नीषोमीयहिंसाया अधर्मत्वं नानुमानत इति । आदिग्रहणमुपधानान्तरमित्याद्यभिप्रायम् । तदिदमतिप्रसङ्गापादनेन दूषयति एवमिति[२५२] द्वयेन । उपसंहरति तस्मादिति[२५४] । यादृशस्य यद्विशेषणविशिष्टस्य यत्फलं तादृशस्यैव तत्फलं न स्वरूपैक्यात्फलसंकर इति ।

ननु वैश्यस्तोमादेर्वैश्यादिविशिष्टस्य फलसाधनत्वावगमादन्यादृशस्य मा भूत्फलं, न हिंस्यादिति तु हिंसामात्रस्याऽनर्थफलत्वं ज्ञातं न हिंसाविशेषस्य, तत्स्वरूपं चाऽग्नीषोमीयादावप्यस्तीत्यत

'हिंसा चांशद्वयादन्या या तस्याः प्रतिषेधजम् ॥२५५॥
प्रत्यवायार्थताज्ञानं' विधिना ऽन्यत्र वार्यते ।
ज्ञानमेव च शक्तीनां नावापोद्वापनक्रियाः ॥२५६॥
ज्ञायन्ते शास्त्रतस्तास्तु क्रियाभेदव्यवस्थिताः ।
व्यवस्थाः शक्तिभेदानां दृष्टार्थेष्वपि कर्मसु ॥२५७॥
अभिन्नत्वेपि दृश्यन्ते भुजेः स्वस्थातुरेष्वपि ।
रूपाऽभेदे ऽपि हिंसादेर्भेदो ऽङ्गाऽनङ्गकारितः ॥२५८॥
तथाप्येकफलत्वं चेत् क्रियात्वात्सर्वसंकरः ।
यजित्वाद्यविशेषाच्च चित्रादिफलतुल्यता ॥२५९॥

---

आह हिंसेति[२५५] पादत्रयेण । कथमित्यत आह विधिनेति[२५६] । अन्यत्रांशद्वये विधिना वार्यते तेन तत उत्कालितो न हिंस्यादिति सामान्यनिषेधो हिंसान्तराण्यवलम्बतइति तेषामेवानर्थत्वमवगतं न हिंसामात्रस्येति । यत्तु ज्ञापकं शास्त्रं न कारकमित्युक्तं तदनुज्ञायतएव । तदेतद्व्यवस्थितविषयं नैकविधमित्याह ज्ञानमेवेति । दृष्टा च लोके ऽप्यभिन्नरूपस्यैव कर्मणः शक्तिभेदेन व्यवस्थेत्याह व्यवस्था इति[२५७] । अथ तत्र भोजनस्यैकत्वे ऽपि उपाधिकृतभेदादेव शक्तिव्यवस्था तथा हिंसाया अपि अङ्गाऽनङ्गत्वकृतभेदाश्रयणात्तुल्येत्याह रूपाऽभेदे इति[२५८] । तथा सत्यपि चेदेकफलत्वं हिंसायाः ततः क्रियात्वेनैकत्वात्सर्वासामश्वमेधब्रह्महत्यादिक्रियाणां फलसंकरः स्यादित्याह तथापीति[२५९] । यदि तु न क्रियात्वेनैकत्वं किं त्ववान्तररूपैकत्वमेवैकफलत्वे हेतुरित्युच्यते तथापि यजित्वाऽविशेषाच्चित्रासौर्यादीनां तुल्यफलत्वं स्यादित्याह यजित्वेति । अथ

भेदात्तत्र व्यवस्था चेदिहाप्येवं भविष्यति ।
विधीनां वापि सर्वेषां साक्षाद् व्यवहितोपि वा ॥२६०॥
पुरुषार्थः फलं तेन नाऽनर्थो ऽतः प्रतीयते ।
न चैषु श्रूयते ऽनर्थो निषेधान्न च कल्प्यते ॥२६१॥
न च प्रकरणस्थत्वात्पुरुषार्थः फलं भवेत् ।
कर्मोपकारः कल्प्यस्तु दृष्टो ऽदृष्टोथ वा पुनः ॥२६२॥
कल्पनावसरस्तत्र नाऽनर्थस्याऽनपेक्षणात् ।
क्रत्वर्थश्चापि संस्कारः पशोर्नाऽऽरादुपक्रिया ॥२६३॥
दृष्टैव त्ववदानानां निष्पत्तिः क्रत्वपेक्षिता ।

---

तत्र यागव्यक्तिभेदाद्व्यवस्था हिंसायामपि तुल्येत्याह भेदादिति[२६०] ।
ननु विहिता ऽपि हिंसा किं नाऽनर्थो भवत्यत आह विधीनामिति । दर्शादीनां साक्षात्प्रयाजादीनां व्यवहितः, तेन विधिरेवाऽनर्थत्वपरिपन्थीति । प्रमाणाभावादपि नानर्थत्वमित्याह न चैष्विति[२६१]। न च निषेधवशादपि कल्पयितुं शक्यते तदभावस्य दर्शितत्वादित्याह निषेधादिति । किं च पुरुषार्थपरत्वे सत्यनर्थो ऽपि कल्प्यतइति शङ्क्येत, न च तदस्ति प्रकरणस्थत्वादित्याह न चेति[२६२] । किं नाम तर्हि प्रकरणस्थस्य फलमत आह कर्मोपकार इति । क्रतावेवोपकारकल्पनाऽवसरो ऽनर्थस्य त्वनपेक्षितस्याऽवसर एव नास्तीत्याह कल्पनेति[२६३] । क्रत्वर्थो ऽप्यसौ संस्कारो नाऽऽरादुपकारक इत्याह क्रत्वर्थ इति । संस्कारो ऽपि हृदयाद्यवदाननिष्प-

अभिचारे ऽप्युपायस्था हिंसा नाऽधर्म उच्यते ॥२६४॥
तस्मादनङ्गभूतायां हिंसायामेतदुच्यते ।
उद्देशाच्च फलत्वेन श्येनादौ न विधीयते ॥२६५॥
भावनाविधिरप्येव फलांशाद्विनिवर्तते ।
अतः स्वतो न धर्मत्वं श्येनादेर्नाप्यधर्मता ॥२६६॥

---

त्या दृष्टार्थो न प्रोक्षणादिवददृष्टार्थ इत्याह दृष्टेति[२६४]। तदेवं निषेध्यत्वमङ्गीकुर्वता ऽर्थफलस्याऽनर्थफलत्वं, क्रत्वर्थस्य पुरुषार्थत्वं, संस्कारस्याऽर्थकर्मत्वं, दृष्टार्थस्याऽदृष्टार्थत्व मिति चतुष्टयं प्रमाणविपरीतं कल्पितमिति। एवं चाऽभिचारार्थे श्येनादावप्यङ्गभूता हिंसा नाऽधर्मः, किं त्वनङ्गभूतायां फलांशस्थायामेवाऽधर्मत्वमिति तल्लक्षणार्थमेव श्येनादिग्रहणं नाऽङ्गहिंसालक्षणार्थमित्याह अभिचारे इति। यत्तु फलांशस्यापि चोदनालक्षणत्वाद्भावनान्तर्गतत्वाद्वा विधेयैवेत्युक्तं तत्राह उद्देशादिति[२६५]। श्येनादौ हि विधीयमाने फलत्वेनोद्दिश्यते हिंसा, न तु सैव विधीयते, तावदेव च तस्याश्चोदनालक्षणत्वं तया हिंसा श्येनसाध्यतया लक्ष्यते। न चैतावता विधेयत्वम्। न हि यद्विधिप्रमेयं तद्विधेयमिति विधेयलक्षणं, किं तर्हि यत्राऽप्रवृत्तः पुरुषो विधिवशात्प्रवर्त्तते तद्विधेयम्। न च फलस्य तदस्ति, विधितः प्रागेव तत्र रागतः प्रवृत्तेरित्यविधेयत्वम्। तथा भावनाविधिरप्यर्थाद्विषयेष्ववतरन्नन्यतः प्राप्तात्फलांशाद्विनिवृत्तः साधनेतिकर्त्तव्यतांशयोरेवाऽवतरतीति तयोरेव विधेयत्वं न फलस्येति। यत एवं फलस्याऽनर्थत्वमतस्तद्द्वारेणाऽनर्थत्वात् श्येनत्वस्य न धर्मत्वं नाप्यधर्मत्वं स्वरूपेणाऽनर्थत्वाभावात्फलस्याऽनर्थानुबन्धित्वात्तद्द्वारेण श्येनो ऽप्यधर्म इत्युपचर्यतइत्याह अत इति[२६६]। नन्वनर्थानुबन्धित्वं चे-

फलाऽनर्थानुबन्धित्वात्तद्द्वारेणोपचर्यते ।
निराकाङ्क्षस्य चैकेन श्येनस्य न फलद्वयम् ॥२६७॥
तस्मात् क्रियान्तरादेर्वा हिंसा ऽतो नार्थ उच्यते ।
फलतोपि च यत्कर्म नाऽनर्थेनाऽनुबध्यते ॥२६८॥
केवलप्रीतिहेतुत्वात्तद्धर्मत्वेन हीष्यते ।
ननु चेष्टाभ्युपायत्वात् श्येनादेर्धर्मता भवेत् ॥२६९॥
फलं तावदधर्मोस्य श्येनादेः सम्प्रधार्यते ।
'यदि येनेष्टसिद्धिः स्यादनुष्ठानाऽनुबन्धिनी ॥२७०॥
तस्य धर्मत्वमुच्येत ततः श्येनादिवर्जनम् ।
यदा तु चोदनागम्यः कार्याऽकार्याऽनपेक्षया ॥२७१॥

---

च्छ्येनस्योच्यते साक्षादेव तदुच्यतां किमुपचाराश्रयणेनाऽत आह निराकाङ्क्षस्येति[२६७] । विहितस्य तावन्न प्रत्यवायफलत्वं युक्तम्, अभिचारेणैव श्रुतेन निराकाङ्क्षत्वादपि नानर्थकल्पनं, तस्माच्छ्येनसाध्याद्धिंसाख्यात् क्रियान्तरादे वाऽनर्थो न श्येनस्वरूपादिति । मा भूदधर्मत्वं, धर्मस्तर्हि किं न भवत्यत आह फलत इति[२६८] । तादृश्येव धर्मत्वप्रसिद्धेरिति । चोदयति नन्विति[२६९] । परिहरति फलमिति[२७०] । श्येनः समीहितस्य शत्रुवधस्य साधनं सो ऽपि प्रत्यवायस्येत्येषा तावदर्थस्थितिः । धर्मशब्दार्थत्वं तु श्येनादेः कीदृशमिति लोकाऽनुसारेण संप्रधार्य निर्णेतव्यं नात्राभिनिवेश इति । संप्रधारणमेव दर्शयति यदीति त्रयेण । कार्याऽकार्येति[२७१] । यत्केवलाऽभ्युदयनिमित्तं तत्कार्यं,मितरच्चाऽकार्यमिति ।

धर्मः प्रीतिनिमित्तं स्यात्तदा श्येनेपि धर्मता ।
यदि त्वप्रीतिहेतुर्यः साक्षाद् व्यवहितो ऽपि वा' ॥२७२॥
सो ऽधर्मश्चोदनार्थः स्यात्तदा श्येने ऽप्यधर्मता ।
यस्तु हिंसात्वसाधर्म्याद्बाह्यवच्चोदनास्वपि ॥२७३॥
वदेदनर्थहेतुत्वं तस्याप्यागमबाधनम् ।
तमनादृत्य यो ब्रूयाद्यागादेरप्यसौ वदेत् ॥२७४॥
स्वर्गादिसाधनाशक्तिं क्रियात्वाद्भोजनादिवत् ।
गीतामन्त्रार्थवादैर्या कल्प्यते ऽनर्थहेतुता ॥२७५॥
प्रत्यक्षश्रुतिबाध्यत्वात्सा ऽन्यार्थत्वेन नीयते ।

---

पुनरपि चोदितहिंसामेवोपक्रम्याऽधर्मत्वे ऽनुमानमुपन्यस्य दूषयति यस्त्विति[२७३]। आगमाऽनादरे चातिप्रसङ्ग इत्याह तमिति[२७४]। ननु विहिता ऽपि हिंसा ऽनर्थहेतुरिति मन्त्रार्थवादेतिहासपुराणेभ्यो ऽवगम्यते। तथा हि भगवद्गीतासु—

श्रेयान् द्रव्यमयाद्यज्ञाज्ज्ञानयज्ञः परन्तप ।
विधियज्ञाज्जपयज्ञो विशिष्टो दशभिर्गुणैः ॥

इति हिंसायोगादेव विधियज्ञस्य निन्दा। तथा मन्त्रवर्णोऽपि 'यत्पशुर्मायुमकृतोरो वा पद्भिराहते, अग्निर्मा तस्मादेनसो विश्वान्मुञ्चत्वंहस' इति संज्ञपनादेनो दर्शयति। तथा ऽन्यान्यपि वचनानि, अत आह गीतेति[२७५]। प्रत्यक्षया श्रुत्या हिंसाया विहितत्वात्तद्विरुद्धत्वादेषामर्थवादमात्रत्वमिति।

अत्र भाष्यकारेण "नन्वशक्तमिदं सूत्र"मित्यर्थद्वयविधौ वाक्यभे-

शिष्यान्प्रत्यविशिष्टत्वात्सूत्रवैदिकवाक्ययोः २७६॥
अशक्तेश्चोभयोः साम्यान्न सूत्रेष्वित्यनुत्तरम् ।
प्रागुक्तपरिसंख्यायाः फलमेतत्प्रकाश्यते ॥२७७॥
सूत्रेषु ह्यनया युक्त्या गतिरेषापि युज्यते ।
तस्मादावर्तते सूत्रं तन्त्रं वा शक्तिभेदतः ॥२७८॥

---

दादशक्तिमाशङ्क्य "तत्तु वैदिकेषु न सूत्रेष्विति" *परिहृतं, तदाक्षिपति शिष्यानिति[२७६] । एकस्य वाक्यस्याऽनेकार्थविधावशक्तिस्तावद्वेदसूत्रयोस्तुल्या । यदि परं सूत्राणां प्रमाणान्तरावगतार्थत्वात्तद्वशेन वाक्यभेदादिनापि व्याख्यानं न दुष्यतीत्युच्यते तदपि न युक्तं, सूत्राणामपि शिष्यान्प्रत्यनवगतार्थत्वादिति । समाधत्ते प्रागिति[२७७] । सत्यं, शिष्यान्प्रत्यविशेषः व्याख्यातृभिस्त्ववगतार्थैरनया युक्त्या प्रमाणान्तरावगतार्थतया वाक्यभेदगतिरपि कथं चिद्युज्यते कर्त्तुं, दर्शिता हि परिसंख्या सति संभवे वाक्यभेदादिदोषाणां वर्जनं नास्तीति तत्फलं प्रकाशितमिति । यत एवमतः सकलमेव सूत्रमर्थद्वयप्रतिपादनाय द्विरावर्त्तनीयमित्याह तस्मादिति[२७८] । अत्रैकं सूत्रं चोदनालक्षणो धर्म इत्येवंपरम्,इतरदर्थो धर्म इत्येवंपरम् । पूर्वत्राऽर्थग्रहणमुत्तरसूत्रसिद्धत्वादनुवादः । उत्तरत्र चोदनालक्षणशब्दः पूर्वसिद्धत्वादनुवादः । प्रकारान्तरमाह तन्त्रमिति । धर्मपदं तन्त्रो-

---

* ननु अशक्तमिदं सूत्रम् इमावर्थावभिधातुं, चोदनालक्षनो धर्मो नेन्द्रियादिलक्षणः, अर्थश्च धर्मो नाऽनर्थ इति । एकं हीदं वाक्यं, तदेवं सति भिद्येत । उच्यते । यत्र वाक्यादर्थो ऽवगम्यते तत्रैवम् । तत्तु वैदिकेषु न सूत्रेषु । शा. भा.पृ. ९. प. २७ ।

एकदेशाऽनुमानाद्वा द्वे सूत्रे परिकल्पिते ।
इतरेतरसामीप्यादेतावेव परस्परम् ॥२७९॥
कल्प्येते वाक्यदोषाय नाऽन्या ऽवयवकल्पना ।
विशिष्टार्थाऽनुवादित्वादथ वेत्यपि भाषिते ॥२८०॥

---

चरितमितराभ्यां प्रत्येकमभिसम्बध्यते, विध्यनुवादाश्रयणात् । एवं ह्यावृत्तिदोषो नातीव भविष्यति, सत्यप्यर्थद्वयानिमित्तवाक्यभेदे । तदयं सूत्रार्थः । यश्चोदनालक्षण इत्यनूद्य स धर्म इति विधीयते ततो यो ऽयं धर्मः सो ऽर्थ एव नाऽनर्थ इति ।

भाष्यकारेण "भिन्नयोरेव वाक्ययोरिमावेकदेशा*"विति वदता सूत्रद्वयमेव कल्पितं, तद्दर्शयति एकदेशेति[२७९] । अर्थो धर्म इत्येकं सूत्र,मपरं चोदनालक्षण इति । अस्य च साकाङ्क्षत्वादनन्तरसूत्रागतो धर्मशब्दो ऽनुषङ्गेण तदेकदेशतया ऽनुमीयते, चोदनालक्षणो धर्म इति । नन्वेवमर्थो धर्म इत्यत्राऽचोदनालक्षणस्यापि धर्मत्वं चोदनालक्षणो धर्म इत्यत्राऽनर्थस्यापि स्यादत आह इतरेतरेति । अर्थो धर्म इत्यतो धर्मशब्दो ऽनुषज्यमानो ऽन्तर्णीतार्थ एव चोदनालक्षणसूत्रे ऽनुषज्यते, न तदनादरेण स्वतन्त्रं धर्मपदमवयवत्वेन कल्प्यते, तादृशस्याऽसन्निहितत्वात्, तेनार्थत्वविशिष्ट एव चोदनालक्षणो धर्मो ऽर्थो ऽपि चोदनालक्षणत्वविशिष्ट एव धर्मो न त्वविशिष्ट इति न कश्चिद्दोषः ।

"अथ वा ऽर्थस्य सतश्चोदनालक्षणस्य धर्मत्वमुच्यते इति एकार्थमेवे"ति भाष्यं† तदाक्षिपति विशिष्टेति[२८०] । विशिष्टानुवादे ऽपि

---

* शा. भा. पृ. ६ प. ५ ।

† शा. भा. पृ. ६ प. ६ ।

वाक्यभेदः स एवेति संज्ञातन्त्रत्वमुत्तरम् ।
अर्थे वा प्रत्युपादानात् संज्ञालक्षणशब्दयोः ॥२८१॥
तन्त्रं लक्षणशब्दो वा वाच्यो धर्मोऽर्थशब्दयोः ।
धर्मे सामान्यतः सिद्धे प्रमाणं कथ्यते यदा ॥२८२॥
वृत्तमेव तदा ऽर्थत्वे किमर्थं पुनरुच्यते ।
चोदनालक्षणत्वस्य धर्मं प्रति विधेयता ॥२८३॥

---

हि वाक्यभेदो ऽस्त्येवेति। तस्मात्पूर्वोक्तमेव धर्मपदतन्त्रत्वं वाक्यभेदस्योत्तरमित्याह इतीति[२८१] । संज्ञाशब्देन धर्मपदमुच्यते। अर्थेचोदनालक्षणशब्दयोर्वेतराभ्यां तन्त्रसंबन्धो वाच्य इत्याह अर्थमिति । अर्थे प्रत्युपादानमित्यर्थः। पदेनोभयोः संबन्ध इत्यर्थः। सूत्रार्थश्च धर्मपदतन्त्रत्ववद्दर्शयितव्य इति। चोदयति धर्मे इति[२८२]। चोदनालक्षणाऽनुवादेन धर्मत्वविधावनर्थस्यापि चोदनालक्षणस्य सद्भावात्तद्व्यावृत्तये ऽर्थवदर्थग्रहणं, धर्माऽनुवादे तु चोदनालक्षणत्वविधौ धर्मस्याऽर्थाऽव्यभिचारादविशेषणमर्थग्रहणमनर्थकमिति ।

परिहरति चोदनेति[२८३] । सत्यमस्यां वचनव्यक्ता* वविशेषणमर्थपदं नित्याऽनुवादो ऽस्तु†, तथापि नाऽनर्थकम्। अर्थाऽनुवादबलेनैव हि धर्माऽनुवादेनैव चोदनालक्षणत्वविधिरितीयं वचनव्यक्तिर्लभ्यते, अन्यस्यां पूर्वोक्तवाक्यभेदप्रसङ्गान्नित्यप्राप्त्यभावाद्विध्यनुवादाऽनुपपत्तेः, तदभावे तु चोदनालक्षणो धर्म इत्येतावति सूत्रे द्वयोरपि सं-

---

* सत्यमस्यावचनमसत्यमस्यावचनं तद्व्यक्तौ इति २ पु. पा. ।
† नित्यानुवादस्तु इति ३ पु. पा. ।

लभ्यते ऽर्थानुवादेन संशयो ह्यन्यथा भवेत् ।
तथा च ये ऽप्यनर्थस्य साधनत्वेन कल्पिताः ॥२८४॥
निषेधैस्तेऽपि धर्माः स्युश्चोदनालक्षणत्वतः ।
तस्मादर्थाऽपरित्यागादेकार्थग्रहणं यथा ॥२८५॥
लभ्यते वचनव्यक्त्या सा स्यादर्थानुवादतः ।
विशेषणाद्विना चैतदर्थसामर्थ्यकारितम् ॥२८६॥

---

भवात्संशयः स्यात् । ततः को दोषो, ऽत आह तथा चेति[२८४] । द्वय-संभवे हि चोदनालक्षणाऽनुवादेन धर्मत्वविधिरपि परिगृह्येत, तथा च सत्यसति चार्थपदे ऽनर्थस्यापि धर्मत्वं स्यादिति । तस्माद्वचन-व्यक्त्यन्तरपरिग्रहेणाऽनर्थस्य धर्मत्वं परिहर्तुमर्थग्रहणमित्याह तस्मा-दिति[२८५] । अर्थानुवादेन हि सा वचनव्यक्तिः सिध्यति यथार्थशब्दा-ऽपरित्यागेनैकार्थं वाक्यं भवति, सा च धर्मानुवादेन लक्षणविधिरि-ति नियमे वा ऽन्यस्यां वाक्यभेदापत्तेः । तस्मात्तत्सिद्ध्यर्थमर्थशब्दो ऽनुवादभूतः प्रयुज्यत इति ।

यद्येवैवात्र वचनव्यक्तिः कथं तर्हि भाष्यकारो "ऽनर्थो धर्म उक्तो मा भूदित्येवमर्थग्रहण"मिति विशेषणत्वमर्थशब्दस्य दर्शयत्यत आह विशेषणादिति[२८६] । नेदं विशेषणत्वकथनं विनैव विशेषणादर्थ-शब्दसामर्थ्यकारितमिदं हिंसादिवर्जनं फलं भाष्यकारेण कथ्यते त-द्बलेनैव हि वचनव्यक्त्यन्तरपरिग्रहाद्धिंसादीनां धर्मत्वेन वर्जनं ल-भ्यते, तदभावे तु चोदनालक्षणाऽनुवादेन धर्मविधेरपि संभवाद्धिं-सादीनामपि धर्मत्वं स्यादिति ।

अथ वेत्यादि भाष्यं यदाक्षिप्तं तत्समाधानं चेदं विशेषणाद्विने-ति । अयमर्थः । नैवायं विशिष्टानुवाद उच्यते किं तर्हि विनैव वि-

कथ्यते भाष्यकारेण फलं हिंसादिवर्जनम् ॥

इति चोदनासूत्रं द्वितीयम् ॥

---

## तस्य निमित्तपरीष्टिः* ॥ ३ ॥

'प्रतिज्ञाव्यतिरेकेण भाष्यकारेण यद्यपि ।
वक्ष्यमाणा स्वपक्षस्य युक्तिः पूर्वं निदर्शिता ॥१॥

---

शेषणादर्थपदसामर्थ्यकारितं यत्फलं वचनव्यक्तिविशेषपरिग्रहद्वारेण हिंसादिवर्जनं तदेवेदमुच्यते। वचनव्यक्त्यन्तरपरिग्रहार्थमथ वेत्यादिभाष्यमिति यावत् । अयं च भाष्यार्थः । अर्थस्य सतो यद्धर्मत्वं तच्चोदनालक्षणस्येत्युच्यत इति। अर्थस्य सत इति नित्याऽनुवादतामर्थशब्दस्य दर्शयतीति ॥

इति श्रीपार्थसारथिमिश्रविरचिते न्यायरत्नाकरे द्वितीयं चोदनासूत्रम् ॥

---

तस्य निमित्तपरीष्टिः। "उक्तमिदमस्माभिश्चोदनानिमित्तं धर्मस्य ज्ञानमिति तत्प्रतिज्ञामात्रेणोक्त"मिति भाष्यं† तदयुक्तम् । चोदना हि भूतमित्यादिना युक्तेरपि दर्शितत्वादत आह प्रतिज्ञेति[१] सार्द्धेन ।

---

* तस्य, धर्मविषयकतत्त्वज्ञानस्य निमित्तं, कारणं तस्य परीष्टिः, परीक्षा युक्तिपूर्वकसाधकतर्ककलापैर्विचारः । कर्तव्य इति शेषः । सु० ।

† शा. भा पृ. ६ प. ९ ।

प्रतिज्ञामात्रमित्येतज्जैमिनेर्मतमुच्यते' ।
वृत्तिकारो ऽधिकं वा ऽपि भूतादि द्वारमब्रवीत् ॥२॥

इति निमित्तसूत्रं तृतीयम् ॥

सत्संप्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म तत्
प्रत्यक्षमनिमित्तं विद्यमानोपलम्भनत्वात्* ॥४॥

वर्ण्यते सूत्रभेदेन येन प्रत्यक्षलक्षणम् ।
तेन सूत्रस्य सम्बन्धो वाच्यः पूर्वप्रतिज्ञया ॥१॥

---

परिहारान्तरमाह वृत्तीति[२] । प्रतिज्ञाताऽर्थसाधनाय युक्तिरुपरिष्टादेव वक्ष्यते, पूर्वं तु भूतादौ सामर्थ्यकथनद्वारेण प्रतिज्ञातार्थस्य संभावनामात्रमधिकमुक्तं न साधनम्, अतः स्वाभिप्रायेणाऽभ्युपपन्नं प्रतिज्ञामात्राऽभिधानमिति ।

इति तृतीयं निमित्तसूत्रं पूर्णम् ॥

सत्संप्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म तत्प्रत्यक्षमनिमित्तं विद्यमानोपलम्भनत्वादिति ।

भवदासेनैतत्सूत्रं द्विधा कृत्वा सत्संप्रयोगे इत्येवमादि तत्प्रत्यक्षमित्येवमन्तं प्रत्यक्षलक्षणपरम्, अनिमित्तमित्यादि च तस्य धर्मे

---

* पुरुषस्येन्द्रियाणां सति, विद्यमाने विषये संप्रयोगे सति यद् बुद्ध्या ज्ञानस्य जन्म तत् प्रत्यक्षम् । ईदृशं यत् प्रत्यक्षं तद्धर्मज्ञाने ऽनिमित्तं, नोत्पादकम् । प्रत्यक्षप्रमासाधनीभूतानीन्द्रियाणि धर्मप्रमां न साधयन्तीति फलितम् । तत्र हेतुमाह — विद्यमानस्य, वर्तमानस्यैव वस्तुन इन्द्रियैरुपलम्भात् । धर्मस्य ज्ञानकाले ऽसत्त्वेन इन्द्रियाऽयोग्यत्वादिति भावः । सु० ।

लक्षणस्याऽभिधानं तु केनांशेनोपयुज्यते ।
'किमर्थं चाऽनुमानादेर्लक्षणं नात्र कथ्यते ॥२॥
न तावदप्रमाणत्वं तेषां नाप्यक्षबुद्धिषु ।
शक्यते ऽन्तर्गतिर्वक्तुं नच लक्षणतुल्यता' ॥३॥
न चापि सिद्धिरेषां स्यादर्थात्प्रत्यक्षलक्षणात् ।
न हि तत्पूर्वकं सर्वं प्रमाणमिति निश्चितम् ॥४॥
प्रत्यक्षलक्षणोक्तिश्च नाऽनुमानादिलक्षणात् ।
विना न सिध्यतीत्येवमर्थाक्षेपो न युज्यते ॥५॥

---

प्रत्यनिमित्तत्वपरं व्याख्यातं, तदुपन्यस्य दूषयति वर्ण्यत इति[१] । न केवलमसंगतिरनुपयोगो ऽपीत्याह लक्षणस्येति[२] ।

द्व्यंशा हि पूर्वप्रतिज्ञा चोदनैव, प्रमाणमेवेति च। तत्र कस्मिन्नंशे लक्षणोपयोगः शास्त्रे वा ऽस्मिन् क्वोपयोग इति लक्षणं च कथयन् किमित्यनुमानादेर्लक्षणं न कथयति, न हि तेषामप्रामाण्यं नापि प्रत्यक्षान्तर्भावः। तदनन्तर्भावादेव च न लक्षणमप्येकम्, अतस्तेषामपि पृथग्वक्तव्यं लक्षणमित्याह किमर्थमिति सार्द्धेन।

स्यादेतत्, प्रत्यक्षलक्षणोक्तावर्थादितरेषां तत्पूर्वकत्वमेव लक्षणमुक्तं भवतीति, तत्राह न चेति[४] । एषां न लक्षणस्य सिद्धिरित्यर्थ इति । कथं न सिद्धिरित्यत आह न हीति । अतिव्यापकमिदं लक्षणमप्रमाणे ऽपि स्मृत्यादौ भावादिति । न चाऽऽक्षेपो ऽपि संभवति, विना ऽपि तेन प्रत्यक्षलक्षणोपपत्तेरित्याह प्रत्यक्षेति[५] । किंच तत्पूर्वकत्वमपीति तेषां न प्रत्यक्षलक्षणेनाऽवगम्यते किमु तस्य

तदेतत्पूर्वकत्वे धीर्न च तल्लक्षणाद्भवेत् ।
तदुक्तेर्वाऽनुमानादि किं न स्यात्तदपूर्वकम् ॥६॥
न च लक्षणभेदस्य स्वरूपेयत्तयोरपि ।
प्रत्यक्षलक्षणादेषां कथं चिदवधारणा ॥७॥
प्रसिद्धत्वादवाच्यत्वं प्रत्यक्षेऽपि प्रसज्यते ।
तेनाऽन्यपरिसंख्यार्थं सूत्रं मूढेन वोच्यते ॥८॥
न त्वेकं लक्षयेदेषु बुद्धिपूर्वं कथञ्चन ।
संभवत्येकवाक्यत्वे वाक्यभेदश्च नेष्यते ॥९॥
'न चाप्येतेन सूत्रेण प्रत्यक्षं लक्ष्यते स्फुटम् ।
तदाभासेऽपि तुल्यत्वात्' स्वप्नज्ञानैकवर्जनात् ॥१०॥

---

लक्षणत्वमित्याह तदिति[६] । अनुपपत्त्यभावेऽपि तत्पूर्वकत्वमाक्षिप्येत । विपरीतमपि किं न स्यादित्याह तदिति । सिध्यतु वा तेषां सामान्यतस्तत्पूर्वकत्वं, यस्तु तेषामवान्तरलक्षणभेदः स्वरूपमियत्ता वा तत्सर्वं न प्रत्यक्षलक्षणेनाऽवधार्यत इति वक्तव्यमेव तेषां लक्षणमित्याह न चेति[७] ।

अथ लोकप्रसिद्धत्वात्तेषां लक्षणं न वक्तव्यं तत्प्रत्यक्षेऽपि स्यादित्याह प्रसिद्धत्वादिति[८] । तेन बहुप्रमाणेषु यदेकस्य लक्षणकरणं तदितरपरिसंख्यां वा मूढतां वा सूत्रकारस्य गमयति, न ह्यन्यथैकस्य लक्षणं युक्तमित्याह तेनेति । वाक्यभेदश्चैकवाक्यत्व-

---

* भ्रमज्ञानेति १ पु. पा. ।

तद्धीन्द्रियार्थसम्बन्धव्यापारेण* विना भवेत् ।
केन चित्संप्रयोगे तु भ्रान्त्यादि स्यान्नियोगतः ॥११॥
ग्राह्येणाऽन्येन वेत्येतत्कृतं नैव विशेषणम् ।
संप्रयोगस्य येन स्याद्विशेषो वक्ष्यमाणवत् ॥१२॥
असामर्थ्यं च मत्वा ऽस्य वृत्तिकारेण लक्षणे ।
तत्संप्रयोगइत्येवं पाठान्तरमुदाहृतम् ॥१३॥

---

संभवे न युक्त इत्याह संभवतीति[८] । लक्षणमपि चैतदाभाससंकरादयुक्तमित्याह न चेति पादत्रयेण । अत्यल्पं चैतदुच्यते तदाभासेषु तुल्यत्वादिति, स्वप्नज्ञानमेकं वर्जयित्वा सर्वेष्वाभासेष्वनुमानादिषु च तुल्यमिदं लक्षणमित्याह स्वप्नेति । कारणमाह तद्धीति[११] स्वप्नज्ञानमेव हीन्द्रियार्थसंबन्धाद्विना भवति, तदतिरिक्तं तु सर्वमेव भ्रान्त्यादि केन चिदर्थेनेन्द्रियस्य संप्रयोगे सत्येव भवतीत्यस्त्येवाऽतिव्याप्तिः । इन्द्रियाऽर्थसंबन्धराहित्यं बाह्येन्द्रियविषयम्, आत्मेन्द्रियसन्निकर्षस्य सर्वत्र सत्त्वादिति ।

ननु ग्राह्येण संप्रयोगो लक्षणं, तथा च वक्ष्यति वृत्तिकारः "यदाभासं विज्ञानं तेन संप्रयोग" इति । न चासावनुमानादिषु भ्रान्तौ वा ऽस्ति, धूमादिशुक्त्यादिसंयुक्तेन्द्रियवह्न्यादिरजतादिषु उपजायमानत्वादतो नाऽतिव्याप्तिरित्याह ग्राह्येणेति[१२] । संप्रयोगमात्रमिहोपात्तं न ग्राह्यविशेषणं वक्ष्यमाण इव वृत्तिकारमते व्यस्तेन तच्छब्देन, अतो ऽस्त्येवाऽतिव्याप्तिरिति । यत एव यथावस्थितं सूत्रं लक्षणायाऽसमर्थमत एव वृत्तिकारेण तत्संप्रयोग इति पाठान्तरमुदाहृतमित्याह

---

* संयोगव्यापारेणेति २ पु. पा. ।

तेनान्येनापि संयोगे चक्षुरादेर्यदुत्थितम् ।
विषयाऽन्तरविज्ञानं तत्प्रत्यक्षं प्रसज्यते ॥१४॥
सत्संप्रयोगनिर्देशो व्यर्थश्चेदेतदेव हि ।
प्रतिपाद्यं परस्यापि लक्षणाऽसिद्धिरेव च ॥१५॥
स्वप्नादीनां निवृत्तिर्वा फलं तस्य भविष्यति ।
तस्माद्विध्यनुवादित्वं नाऽनुक्ते लक्षणे भवेत् ॥१६॥
तेन नैषा वचोव्यक्तिर्यत्सतीन्द्रियसङ्गमे ।
विज्ञानं ज्ञायते तस्य प्रत्यक्षत्वं प्रतीयताम् ॥१७॥
प्रत्यक्षं यज्जने सिद्धं तस्यैवंधर्मकत्वतः ।
विद्यमानोपलम्भत्वं तेन धर्मे निमित्तता ॥१८॥

---

सामर्थ्यमिति[१३] । उपसंहरति तेनेति[१४] । ननु येन केन चित्संप्रयोगस्य सर्वज्ञानसाधारणत्वात्तदुपादानमनर्थकं,मतस्तदुपादानादेव ग्राह्यविशेषणसिद्धिरिति शङ्कते सत्संप्रयोगेति[१५] । दूषयति तदिति। परस्य लक्षणं दूषयतो ऽप्येतदेव प्रतिपाद्यमव्यभिचाराद्विशेषणोपादानमप्यनर्थकं लक्षणं चातिव्याप्तत्वान्न सिध्यतीति । न ह्यनर्थकत्वमात्रेण वाचकमन्तरेण ग्राह्यविशेषणसिद्धिरिति स्यादेव लक्षणस्याऽतिव्याप्तिरिति। स्वप्नादिव्यावृत्तिफलत्वाद्वा नाऽनर्थकमित्याह स्वप्नेति[१६] । आदिशब्देन भूतचिन्तादिकं गृह्यतइति । तस्मान्नास्मिन् सूत्रे लक्षणमनुपात्तत्वाद्विधातुमनुवदितुं वा शक्यमित्याह तस्मादिति। ये च लक्षणानुवादेनैवाऽनिमित्तपरं सूत्रमिति मन्यन्ते तन्निरासार्थमनुवादनिराकरणम्, न ह्यनुक्तस्याऽनुवादो ऽपि संभवतीति । तस्मान्नैषा वक्ष्यमाणा वचनव्यक्तिः सूत्रस्येत्युपसंहरति तेनेति[१७] । का तर्हीत्यत आह प्रत्यक्षमिति[१८] । यल्लोकप्रसिद्धं

एवं लक्षणकत्वं च न स्वरूपविवक्षया ।
एवंलिङ्गकमित्येतद्भाष्यकारेण वर्ण्यते ॥१९॥
यतो ऽस्ति तत्र धर्मो ऽयं विद्यमानोपलम्भनम् ।
तस्मात्तेन प्रसिद्धेन गम्यतामनिमित्तता ॥२०॥
प्रत्यक्षत्वमदो हेतुः शेषं हेतुप्रसिद्धये ।

---

प्रत्यक्षं तस्य सत्संप्रयोगजत्वधर्मयोगाद्विद्यमानोपलम्भनत्वं, तेन धर्मे भविष्यत्यस्या निमित्ततेति ।

ननु भाष्यकारेण "प्रत्यक्षमनिमित्तमेवंलक्षणकं हि त"*दिति वदता लक्षणाऽनुवादो दर्शितो, ऽतः कथमनुवादो न संभवतीत्युक्तमत आह एवमिति[१९] । न प्रत्यक्षस्वरूपापेक्षमेवंलक्षणकत्वं, न प्रत्यक्षस्वरूपं तेन लक्ष्यतइति लक्षणवाचोयुक्तिः, किं तु धर्मे प्रत्यानिमित्तत्वं येन लिङ्गेन लक्ष्यते तल्लक्षणकं प्रत्यक्षमित्यर्थ इति । किं तल्लिङ्गमत आह यत इति[२०] ।'तस्यैवंधर्मकत्वत' इत्युक्तेन सत्संप्रयोगजत्वेन हेतुना प्रसिद्धो विद्यमानोपलम्भनत्वं नाम प्रत्यक्षस्य धर्मो ऽस्ति, तस्मात्तेन प्रसिद्धेनाऽनिमित्तता गम्यतइति भाष्यार्थः ।

सत्संप्रयोगजत्वस्यैव कुतः सिद्धिरित्यत आह प्रत्यक्षत्वमिति[२१] । तदेते त्रयः प्रयोगाः, प्रत्यक्षमनिमित्तं विद्यमानोपलम्भनत्वाद्,विद्यमानोपलम्भनत्वं च सत्संप्रयोगजत्वात्,सत्संप्रयोगजत्वं च प्रत्यक्षत्वादिति । सत्संप्रयोगजत्वं भविष्यद्वृष्ट्यनुमाने मेघेन्द्रियसंयोगजे ऽपि संभवादनैकान्तिकं न विद्यमानोपलम्भनत्वं साधयितुमलमिति चेत्, न, असत्संप्रयोगजत्वात्; वर्त्तमानवचनो ह्ययं सच्छब्दः, स च संप्रयोगसमानाधिकरणः,तेन वर्त्तमानात्संप्रयोगाद्यज्ज्ञानं

---

* शा. भा. पृ. ६ प. १९ ।

अस्मदादौ प्रसिद्धत्वाद्योग्यर्थमभिधीयते ॥२१॥
प्रकृतेन च सम्बन्धः शेषाऽप्रामाण्यदर्शनात् ।
तदप्रामाण्यसिद्धिश्च सम्बन्धादेरनीक्षणात् ॥२२॥

---

जायते तत्सत्संप्रयोगजम् । न चैवंभावो ऽनुमानस्यास्ति, तद्धि संप्रयोगे लिङ्गज्ञानोत्पादनेन निवृत्तव्यापारे पश्चाल्लिङ्गज्ञानेन जायते, अतो न सत्संप्रयोगजमिति नास्ति व्यभिचारः । तर्हि भवद्दासपक्षे ऽपि लक्षणस्याऽनुमानादावतिव्याप्तिर्न स्यात् । स्यादिति ब्रूमः । तेन हि सच्छब्दः संप्रयुज्यमानवचनो व्याख्यातः, सता संप्रयोगः सत्संप्रयोग इति । अनुमानादिकमपि सतैव लिङ्गादिना इन्द्रियसंप्रयोगाज्जायतइति भवत्यतिव्याप्तिः । यदि तु सो ऽपि सच्छब्दं संप्रयोगविशेषणं व्याचक्षीत ततः पीतशङ्खादिविषयेषु प्रत्यक्षाभासेष्वतिव्याप्तिर्वक्तव्या नाऽनुमानादिष्विति ।

ननु प्रत्यक्षमनिमित्तं विद्यमानोपलम्भनत्वात्, विद्यमानोपलम्भनत्वं च सत्संप्रयोगजत्वात्, सत्संप्रयोगजत्वं च प्रत्यक्षत्वादित्युक्ते को दृष्टान्तः । न तावत् प्रत्यक्षं, पक्षसपक्षयोरेकत्वाऽयोगात् । नाप्यप्रत्यक्षं, तत्र प्रत्यक्षत्वस्य हेतोर्दर्शयितुमशक्यत्वात् । प्रसिद्धं चास्मदादिप्रत्यक्षस्य विद्यमानोपलम्भनत्वं सत्संप्रयोगजत्वं, धर्मं प्रति अनिमित्तत्वं च, अतोंशे सिद्धसाध्यता स्यादत आह अस्मदादाविति । यत एवास्मदादौ सिद्धं प्रत्यक्षस्य सत्संप्रयोगजत्वादिकम् अत एव सिद्धसाध्यतापरिहाराय योगिप्रत्यक्षार्थमेवेदमनुमानम् । अस्मिँश्च प्रत्यक्षविशेषे पक्षीकृते ऽस्मदादिप्रत्यक्षं दृष्टान्तः । तत्र हि प्रसिद्धा प्रत्यक्षत्वादेः सत्संप्रयोगजत्वादिना ऽव्याप्तिरिति । न च लक्षणपक्षवत् प्रकृताऽसंगतिरित्याह प्रकृतेनेति[२२] । शेषाणां शब्दातिरिक्तानाम् अप्रामाण्येन चोदनैवेत्यस्यांशस्य साधनादिति ।

शक्यमन्याप्रमाणत्वमिति सूत्रैर्न पठ्यते ।
न च पर्यनुयोगोऽत्र लक्षणाऽनुपयोगतः ॥२३॥
न च न्यूनाऽतिरेकादिप्रसङ्गो लक्षणं प्रति ।
सर्वथा लोकसिद्धत्वाद्धर्मोऽयं तावदिष्यते ॥२४॥
ततश्च मृगतृष्णादि न प्रत्यक्षं प्रसज्यते ।
अनिमित्तप्रसङ्गस्तु तस्यापि विनिवार्यते ॥२५॥

---

ननु प्रत्यक्षस्यैवाऽत्राऽप्रामाण्यमुच्यते नान्येषां, तत्कथं शेषाऽप्रामाण्यमत आह तदिति । प्रत्यक्षगृहीते हि धर्मे तत्संबन्धः सादृश्यं चार्थान्तरस्य शक्यते ग्रहीतुं नान्यथा, तेन प्रत्यक्षाऽनिमित्तत्वकथनादेव तन्मूले एवाऽप्रामाण्यसिद्धिरिति ।

ननु लक्षणपक्षे यथा तेषामपि लक्षणं वक्तव्यं तथा किमिति तेषामपि सूत्रेणेवाऽनिमित्तत्वं नोच्यतेऽत आह शक्यमिति[२३] । प्रत्यक्षाऽनिमित्ततयैव तेषामप्यनिमित्तत्वं शक्यमवगन्तुमिति न सूत्रे निबद्धं, लक्षणं तु प्रत्यक्षलक्षणादसिद्धत्वाद्वक्तव्यमिति। यश्च लक्षणानुपयोगे पर्यनुयोगः यश्च न्यूनाऽतिरेकादिदोषः स सर्वोऽपि लक्षणाऽनङ्गीकारादेव परिहृत इत्याह न चेति[२४] । नन्वनिमित्तत्वेऽपि सत्संप्रयोगजं प्रत्यक्षमित्येवोच्यतेऽतोऽस्त्येवाभासेष्वतिप्रसङ्गोऽत आह सर्वथेति । न हि यदेवंविधं तत् प्रत्यक्षमित्युच्यते किं तु यत्प्रत्यक्षं तदेवंरूपत्वादनिमित्तमिति । अस्ति चाऽस्यायं धर्मो लोकसिद्धो यद्यन्यदपि तथाविधमस्ति मृगतृष्णादिज्ञानं तदपि भवत्वनिमित्तं न तु तस्य प्रत्यक्षत्वापत्तिरिति ।

यदुक्तं 'योग्यर्थमभिधीयत'*इति, तत्रेयमाशङ्का भवति, योगिप्रत्यक्षस्य वा किं न सिद्धं विद्यमानोपलम्भनत्वं येन तत्साध्यते, ऽत

---

* श्लो. वा. सू. ४ श्लो. २७ ।

'अतीताऽनागते ऽप्यर्थे सूक्ष्मे व्यवहिते ऽपि च ।
प्रत्यक्षं योगिनामिष्टं कैश्चिन्मुक्तात्मनामपि ॥२६॥
विद्यमानोपलम्भत्वमसिद्धं तत्र तान्प्रति ।
भविष्यत्त्वस्य वा हेतोस्तद्ग्राह्यैर्व्यभिचारिता ॥२७॥
मा भूतामिति तेनाऽऽह लोकसिद्धं सदित्ययम्' ।
न लोकव्यतिरिक्तं हि प्रत्यक्षं योगिनामपि ॥२८॥

---

आह अतीतेति[२६] सार्द्धद्वयेन । योगिनां हि भावनाबलजं प्रत्यक्षं सकलाऽतीताऽनागतसूक्ष्मादिविषयं धर्माऽधर्मावपि गोचरयतीति शाक्यादयो मन्यन्ते; स्वभावत एवात्मानः सर्वज्ञाः, ते देहावरणेनावृतज्ञानाः किं चिदेवेन्द्रियादिवशेन जानन्ति, निर्मुक्तदेहावरणास्तु मुक्ताः सर्वमनागतादि जानन्तीत्यार्हताः* । तान् प्रत्यसिद्धं विद्यमानोपलम्भनत्वं तथाविद्यमानोपलम्भनं प्रत्यक्षमिति वदतः सूत्रकारस्य धर्मो न प्रत्यक्षः, भविष्यत्त्वादनागतवृष्टिवदिति हेतुः संमतः, तस्यापि योगिमुक्तात्मग्राह्यैरर्थान्तरैरनागतादिभिर्व्यभिचारितां मन्यन्ते तावुभावपि दोषौ मा भूतामिति लोकप्रसिद्धं सत्संप्रयोगजत्वं विद्यमानोपलम्भनत्वसाधनार्थमयं जैमिनिराहेति ।

ननु सत्संप्रयोगजत्वमेषां सिद्धं, यद्यपि लौकिकस्य प्रत्यक्षस्य तदस्ति तथापि योगिप्रत्यक्षस्य तदसिद्धमेव भावनाबलजत्वाभ्युपगमात्,तदसिद्धौ (च विद्यमानोपलम्भनत्वमपि सिद्धमेव, अत आह न लोकेति [२८] । लोके हि प्रत्यक्षं सत्संप्रयोगे)† विद्यमानोपलम्भनं च दृष्टम्, अतो योगिप्रत्यक्षमपि न तत्स्वभावमतिवर्त्तितुमर्ह-

*जानन्तीत्याहुरिति ३ पु. । † ( ) एतदन्तर्गतो ग्रन्थो नास्ति १–२ पु. ।

प्रत्यक्षत्वेन तस्यापि विद्यमानोपलम्भनम् ।
सत्संप्रयोगजत्वं वा ऽप्यस्मत्प्रत्यक्षवद्भवेत् ॥२९॥
'तेषामवर्तमाने ऽर्थे या नामोत्पद्यते मतिः ।
प्रत्यक्षं सा ततस्त्वेव नाभिलाषस्मृतादिवत् ॥३०॥
लोके चाप्यप्रसिद्धत्वात्प्रत्यक्षत्वप्रमाणतः ।
प्रतिभावद् द्वयासत्त्वं सदित्येतेन कथ्यते' ॥३१॥

---

तीति । कथमित्यत आह प्रत्यक्षत्वेनेति[२९] । प्रत्यक्षत्वेनाऽस्मदादिप्रत्यक्षवद्विद्यमानोपलम्भनत्वं साधयितुं शक्यं, पूर्वोक्तमार्गेण वा प्रत्यक्षत्वेन भावनाबलजत्वं निराकृत्य सत्संप्रयोगजत्वं साधयित्वा ततो विद्यमानोपलम्भनत्वं साधयितव्यम्, न हि भावनाबलजं प्रत्यक्षं नाम संभवति, भावना हि समानविषया विजातीयाऽव्यवहिता स्मृतिसंततिः, स्मृतिश्च पूर्वाऽनुभूतविषयिणी नाऽननुभूतं गोचरयति, तद्यदि धर्मः प्रमाणान्तरेणाऽनुभूतः किं भावनया । यदि नाऽनुभूतो भावयितुमपि न शक्यते, मुक्तात्मनां तु सर्वविषयं ज्ञानं प्रागेव निराकृतं प्रमाणाभावात्, केवलभावनाबलजप्रत्यक्षनिरासार्थो ऽयं प्रस्ताव इति ।

प्रत्यक्षं विद्यमानोपलम्भनमिति वदता यद्विद्यमानविषयं योगिज्ञानं तत्प्रत्यक्षं न भवतीति सूचितम्, तत्प्रयोगद्वयेन दर्शयति तेषामिति[३०] द्वयेन [।]ततस्त्वेवेति । वर्त्तमान*विषयत्वादेवेत्यर्थः। प्रमाणत्वनिराकरणं प्रमाणाभासमेव† भवति किं पुनः प्रत्यक्षमिति दर्शयितुमिति ।

---

* अविद्यमानेति २ पु. पा. । † प्रमाणामिति १ पु. पा. ।

लौकिकी प्रतिभा यद्वत्प्रत्यक्षाद्यनपेक्षिणी ।
न निश्चयाय पर्याप्ता तथा स्याद्योगिनामपि ॥३२॥
अविद्यमानसंयोगात् स्याच्चेत् प्रत्यक्षधीः क्व चित् ।
भविष्यत्यपि धर्मे स्याच्छक्तेत्याह सदित्ययम् ॥३३॥
प्रत्यक्षः प्रागनुष्ठानान्न धर्मो ऽनुष्ठितो ऽपि वा ।
फलसाधनरूपेण तदानीं येन नास्त्यसौ ॥३४॥

---

वैशेषिकादयस्तु प्रातिभाख्यप्रमाणान्तरगम्यत्वं धर्माऽधर्मयोर्मन्यन्ते, तच्च लोके ऽपि क्व चिदस्त्येव यथा श्वो मे भ्राता ऽऽगन्तेति, बाहुल्येन तद् ऋषीणामेवेत्यार्षमित्युच्यते,तान्निराकरोति लौकिकीति[३२]। अस्मदादिप्रतिभा तावल्लिङ्गाद्याभासजन्या प्रत्यक्षादिकमनपेक्ष्य स्वातन्त्र्येणाऽर्थमनिश्चाययन्ती नैव प्रमाणम्,अतस्तद्वदेव योगिनामपीति ।

तदेवं विद्यमानोपलम्भनत्वस्य हेतोरसिद्धिपरिहारार्थं सत्संप्रयोगजत्वाभिधानमिति यदुक्तं तद्विवृतम्, इदानीं भविष्यत्त्वस्य वा हेतोरनैकान्तिकत्वनिराकरणार्थमिति यदुक्तं तद्विवृणोति अविद्यमानेति[३३] । यद्यविद्यमानादपि संप्रयोगाद् योगिनां क्व चिदर्थे प्रत्यक्षा धीः स्यात्ततः तेनाऽनैकान्तिकत्वान्न भविष्यत्त्वेन धर्मस्याऽप्रत्यक्षत्वं सिध्येदिति तदर्थमयं जैमिनिः सदित्यादिकमाहेति ।

ननु भविष्यदवस्थायां मा भूद्धर्मः प्रत्यक्षो यदा त्वसौ निष्पन्नः तदा किं न प्रत्यक्षो ऽत आह प्रत्यक्ष इति[३४]। प्राक्तावदनुष्ठानाद् भविष्यत्त्वान्न प्रत्यक्षः, अनुष्ठितो ऽपि नैव प्रत्यक्ष इति । कस्मादित्यत आह फलेति । फलसाधनरूपेण हि यागादीनां धर्मत्वं, न च यागस्वरूपकाले तत्साधनत्वं वर्त्तते फलस्य चिरभाविनस्तदानीमक्रिय-

अस्मत्प्रत्यक्षवच्चापि विद्यमानोपलम्भनम् ।
प्रत्यक्षं ध्यायिनां धर्मे प्रत्यक्षत्वाच्च नेष्यते ॥३५॥
अविद्यमानसंयोगात् प्रत्यक्षत्वनिराकृतिः ।
योगिनां केन लभ्येत नेष्टं सद्ग्रहणं यदि ॥३६॥

---

माणत्वात्, यदा तु फलं निष्पद्यते तदा यागश्चिरविनष्टत्वान्न तत्साधनरूपेण शक्यते प्रत्यक्षयितुम्, अपूर्वं तु स्वभावादेवाऽप्रत्यक्षं यदि प्रत्यक्षं स्यात्ततो यागानन्तरं तदुत्पत्तिं कालान्तरे च ततः सिद्धिं फलस्य दृष्ट्वा यागस्य तद्द्वारं फलसाधनत्वं गम्यते, यापि यागस्याऽपूर्वं फलं वा प्रति शक्तिः सा यद्यपि यागकाले विद्यते तथापि न प्रत्यक्षा सर्वशक्तीनामतीन्द्रियत्वादिति ।

प्रकृतमिदानीं विद्यमानोपलम्भनत्वेनाऽनिमित्तत्वं धर्मे प्रत्यक्षस्योपसंहरन् प्रयोगान्तरं दर्शयति अस्मदिति[३५] । विद्यमानोपलम्भनमिति हेतुनिर्देशो, ध्यायिनां प्रत्यक्षं धर्मे नेष्यते विद्यमानोपलम्भनत्वादित्युपसंहारः, प्रत्यक्षत्वादिति प्रयोगान्तरमिति। एवं सूत्रतात्पर्यं व्याख्यायाऽवयवाननुसंधत्ते। तत्र भिक्षुणा सद्ग्रहणमनर्थकमसता संप्रयोगाऽसंभवादित्युक्तं, यथाह—

सदित्यसद्व्युदासाय न नियोगात्स गंस्यते ।
संप्रयोगो हि नियमात्सत एवोपपद्यते ॥ इति ।

तत्तावद्भाष्यकारेणैव "सतीन्द्रियार्थसंप्रयोग*" इति कर्मधारयं दर्शयता परिहृतम्। न च कर्मधारयपक्षेऽस्यानर्थक्यमित्याह अविद्यमानेति[३६] । अविद्यमानादतीतादनागताद्वा संप्रयोगादतीताऽनागताऽर्थविषयं योगिनां प्रत्यक्षम् असति सद्ग्रहणे कथं निराक्रियेतेति ।

---

* शा. भा. पृ. ६ प. २० ।

सप्तम्याऽपि तु लभ्येत सदर्थः, कल्पना पुनः ।
परेषां वारणीयेति यत्नो जैमिनिना कृतः ॥३७॥
सम्यगर्थे च संशब्दो दुष्प्रयोगनिवारणः ।
प्रयोग इन्द्रियाणां च व्यापारो ऽर्थेषु कथ्यते ॥३८॥
दुष्टत्वाच्छुक्तिकायोगो वार्यते रजतेक्षणात् ।
एवं सत्यनुवादत्वं लक्षणस्यापि संभवेत् ॥३९॥

---

ननु निमित्तसप्तम्यैवाऽयमर्थो लभ्यते, न ह्यतीतस्याऽनागस्य वा संप्रयोगस्य निमित्तत्वं संभवति। यद्यपि चाऽतीतस्य केन चिद् द्वारेण संभवेत्, न त्वनागतस्य कथं चिदपि संभवति, तदेव च भविष्यति धर्मे प्रत्यक्षस्याऽनिमित्तत्वं प्रतिपादयता निवारणीयं, तच्चैतत्सप्तम्यैव लब्धमिति किं सद्ग्रहणेनाऽत आह सप्तम्येति[३७] । सत्यं लभ्यते, तथापि योगिनो ऽनागतादेव संप्रयोगादनागते ऽप्यर्थे प्रत्यक्षमुत्पद्यत इति यत्परेषां कल्पनं तन्निराकरणार्थो ऽयं यत्नः, अन्यथा ऽतीते भाविनि वेत्यपि भ्रान्ताः कल्पयेयुरिति ।

संशब्दं व्याचष्टे सम्यगिति[३८] । कः पुनः प्रयोगो यस्य दुष्टत्वं वार्यते, तद् दर्शयति प्रयोग इति। कः पुनर्दुष्प्रयोगः, यन्निवारणः संशब्दस्तमाह दुष्टत्वादिति[३९] । कथं दुष्टत्वमत आह रजतेति । शुक्तौ हि रजतभ्रान्तिं कुर्वन् शुक्तीन्द्रियसंप्रयोगो दुष्टस्तन्निवारणेन सम्यग्ज्ञानजननो यः प्रयोगस्तत्परिहार्थः संशब्द इति। एवं चाऽवयवव्याख्यायां लक्षणाऽनुवादेनैवाऽनिमित्तता शक्या विधातुमित्याह एवमिति । भवदासेन हि सता संप्रयोग इति उक्तं, संप्रयोगशब्दश्च सकलसंबन्धवचनो व्याख्यातः, अतस्तस्याऽनुमानादिष्वाभासेषु चाऽतिव्याप्तिर्भवति नास्मद्व्याख्यानइति ।

'ततश्चाऽप्राप्यकारित्वाद् यद्बौद्धैः श्रोत्रचक्षुषोः ।
लक्षणव्याप्तिसिद्ध्यर्थं संयोगो नेति कीर्त्यते ॥४०॥
प्राप्यग्रहणपक्षे ऽपि सान्तराऽग्रहणं किल ।
अधिष्ठानाऽधिकश्चार्थो न गृह्येत त्वगादिवत् ॥४१॥
व्यापारमात्रवाचित्वा*दविरुद्धं तदत्र नः' ।
यदि वा ऽर्थार्जवस्थानं संप्रयोगो ऽत्र वर्ण्यते ॥४२॥
योग्यतालक्षणो वाच्यः† संयोगः कार्यलक्षितः ।
सांख्यादीन् वा विनिर्जित्य प्राप्तपक्षो ऽत्र दूष्यताम्॥४३॥

---

यदपि बौद्धैः प्राप्तिवचनं संप्रयोगशब्दं मत्वा श्रोत्रचक्षुषोरप्राप्य-कारित्वादव्यापकं लक्षणं, प्राप्यकारित्वे हि तयोर्यदिदं सान्तरग्र-हणं दूरे शब्दो‡ दूरे ऽर्थ इति, तन्न स्यात् प्राप्तौ दूरत्वाऽसंभवात्, न चात्मापेक्षया दूरत्वं, तस्य विभुत्वेनाऽभ्युपगमात्, तथा ऽधिष्ठानाऽधिक-परिमाणानां महीमहीधरादीनां ग्रहणं न स्यात्, न ह्यल्पेन महतां प्राप्तिः संभवतीत्युक्तं§ सान्तरग्रहणं न स्यात्, प्राप्तौ स्थानाधिकस्य चेति, तथा निरन्तरग्रहणं न स्यादित्युक्तं, तदपि व्यापारमात्रवाचि-त्वात्संप्रयोगशब्दस्य प्राप्तिवचनत्वाऽभावात्परिहृतमित्याह ततश्चे-ति[४०] सार्द्धद्वयेन । अर्थाऽऽर्जवेनाऽवस्थानं वा संप्रयोग इत्याह यदि वेति[४२] । शक्तिलक्षणो वा संबन्धः कार्यगम्यः शब्दार्थयोरिवेन्द्रिया-ऽर्थयोः संप्रयोग इत्याह योग्यतेति[४३] ।

---

* वाचित्वादिति का. पा. । † योग्यतालक्षणेनान्य इति का. पा. ।
‡ दूरशब्द इति २ पु. पा. । § इत्युक्तं तदुक्तमिति २ पु. पा. ।

तयोश्च प्राप्यकारित्वमिन्द्रियत्वात् त्वगादिवत् ।
के चित्तयोः शरीराच्च बहिर्वृत्तिं प्रचक्षते ॥४४॥
चिकित्सादिप्रयोगश्च यो ऽधिष्ठाने प्रयुज्यते ।
सो ऽपि तस्यैव संस्कार आधेयस्योपकारकः ॥४५॥
तद्देशश्चापि संस्कारः सर्वव्याप्त्यर्थ उच्यते* ।
चक्षुराद्युपकारश्च पादादावपि दृश्यते ॥४६॥
तस्मान्नैकान्ततः शक्यं संस्कारात्तत्र वर्तनम्† ।

---

भवतु वा सांख्यादिसिद्धान्तेन प्राप्यकारित्वमेव श्रोत्रचक्षुषोरित्याह सांख्येति । न च ते शक्यन्ते निर्जेतुमित्यभिप्राय इति । किं पुनः प्राप्यकारित्वे प्रमाणमत आह तयोरिति[४४] ।

ननु प्रत्यक्षविरुद्धमेवेदमनुमानं कर्णशष्कुल्याश्चक्षुर्गोलकस्य च शरीरस्थवोपलम्भादत आह के चिदिति । सांख्यास्तावदाहंकारिकयोः श्रोत्रचक्षुषोर्वृत्तिः शरीराद्विनिर्गत्याऽर्थं गृह्णाति इति मन्यन्ते, सा चाऽदृश्येति न प्रत्यक्षविरोध इति । नन्वधिष्ठानमेवेन्द्रियं, तत्र चिकित्सादिप्रयोगादत आह चिकित्सेति[४५] । अधिष्ठानाधारा वृत्तिस्तेन चिकित्सादिप्रयोगो ऽधिष्ठानसंस्कारो ऽपि तत्राऽऽधेयस्योपकरोतीति । नन्वधिष्ठानगतस्यैवोपकर्तुं शक्नोति, कथं बहिर्गतस्योपकरोत्यत आह तद्देश इति[४६] । अपरित्यक्ताऽधिष्ठानैव वृत्तिरर्थदेशं प्राप्नोति दीपप्रभावत्, अतो ऽधिष्ठानगतो ऽपि संस्कारो बहिर्गताया अप्युपकरोतीति । दृष्टं च देशान्तरगतस्याऽपि संस्कारस्य देशान्तरे ऽपि उपकारकत्वं, यथा पादादिगतस्य चक्षुरादाविति । तदाह चक्षुरादीति । एतदेवोपसंहरति तस्मादिति[४७] ।

---

* इष्यते इति पाठान्तरम् ।   † वर्जनमिति का. पा. ।

'बहिर्वृत्तिस्तयोश्चेष्टा पृथ्वग्रा* सन्तता ऽपि च ॥४७॥
अधिष्ठानाधिकं तेन गृह्यते यत्र यादृशम् ।
पार्थवं वृत्ति†भागे स्याद्' दूरे ऽपि ग्रहणं तथा ॥४८॥
दीपप्रभा यथा तस्मिन् विनश्यति विनश्यति ।
तथा बहिर्गता ऽप्येषा मूलच्छेदा‡द्विनश्यति ॥४९॥
अधिष्ठानपिधाने तु सत्यप्युच्छिन्नयत्नया ।
तया ऽर्थो ऽनुपनीतत्वादात्मना नाऽनुभूयते ॥५०॥

---

निरन्तरग्रहणमधिकग्रहणं चोपपादयति बहिरिति सपादेन । दीपप्रभैवाऽत्र दृष्टान्तः। तेन यत्र यादृशं पार्थवं पृथुत्वं तत्र तावदधिकं गृह्यतइति। न च वाच्यं यदि वृत्तिर्गत्वा ऽर्थं प्रकाशयति, किमति दूरं न गच्छतीति, कार्यगम्या हि तद्गतिः, अतो यथाकार्यमवतिष्ठतइति नातिदूरगमनं, तत्रापि दीपप्रभैव निदर्शनं, प्रत्युताऽप्राप्यकारित्ववादिनामेवाऽतिदूरव्यवहिताऽर्थग्रहणप्रसङ्ग इत्यभिप्रायेणाह दूरे ऽपीति[४८] ।

नन्वर्थगता वृत्तिरधिष्ठाननाशे ऽपि किमित्यर्थं न प्रकाशयति, अत आह दीपप्रभेति[४९] । यद्यपि वाचि नाशस्तथाप्यात्मप्रयत्नाऽनुगृहीता सा ऽर्थमात्मनउपनयति§ समर्पयति, नष्टे ऽप्यधिष्ठाने पिहिते ऽपि वा उच्छिन्नयत्नया तया ऽर्थो ऽनुपनीतत्वा‖दात्मन्यात्मना ऽनुभूयतइत्याह अधिष्ठानेति[५०] ।

---

* पृथ्व्यन्योति पाठान्तरम् । † पार्थिवो वृत्तीति पाठान्तरम् ।
‡ मूलभेदादिति का. पा. । § आत्मानमुपनमयतीति ३ पु. पा. ।
‖ अर्थोऽनुपनीतत्वादिति २ पु. पा. ।

विच्छिन्न इति बुद्धिः स्यादधिष्ठानमपेक्ष्य च ।
शब्दे त्वाधिक्यविच्छेदौ भ्रान्त्यैवोक्तावसंभवात् ॥५१॥

---

सान्तरग्रहणमुपपादयति विच्छिन्न इति[५१]। यथा सर्वगतमप्यात्मानं शरीरान्तर्गतमेव प्रतिपत्तारो मन्वते तथेन्द्रियमपि गोलकमेव, अतः शरीराऽपेक्षया गोलकाऽपेक्षया वा विच्छिन्ने विच्छेदबुद्धिः, शब्दे ऽप्ययमेव न्यायः सांख्यानामिति ।

स्वमते आह शब्दे इति। श्रोत्रदेशे एव शब्दो गृह्यते, अतो न विच्छेदः, अमूर्त्तद्रव्यत्वाच्च न वृद्धिह्रासाविति । तदेवं सांख्यानां मतेन प्राप्यकारित्वं समर्थितं, न त्वाहङ्कारिकत्वे ऽक्षाणां तत्त्वान्तरवृत्तिसद्भावे वा प्रमाणमस्ति, तेन भौतिकान्येवेन्द्रियाणि प्राप्यकारीणीति वक्तव्यम्। तथा हि चक्षुस्तावद् रूपप्रत्यक्षहेतुत्वादालोकवत्तैजसं*, तथा च सति दीपप्रभावदेव पृथुग्राहिकल्पनं सुकरमिति न किंचिच्चोद्यम्। यथा रूपवदेव तैजसं चक्षू रूपस्य विशेषगुणस्य प्रकाशकम्, एवं गन्धस्यापि विशेषगुणस्य गन्धवदेव प्रकाशकमिति घ्राणस्य पार्थिवत्वसिद्धिः। तच्च वायुप्रेरितेषु चम्पकादिसूक्ष्मद्रव्येषु घ्राणोदरप्रविष्टेषु तद्गतं गन्धं संयुक्तसमवायेन प्राप्यैव गृह्णातीति वाच्यं प्राप्यकारित्वम्, एवं रसनमपि रसग्राहि रसवदेवेति स्थिते पार्थिवमाप्यं वेति चिन्तायामाप्यत्वं युक्तम्, आर्द्रजिह्वो हि स्फुटतरं रसं गृह्णाति न शुष्कजिह्वः, तेन जिह्वागतानामपामेव रसग्राहकत्वमिति रसनस्याऽऽप्यत्वम्, तथा निमग्नोत्तीर्णानां वायुसंपर्काच्छीतस्पर्शोपलम्भात् शरीरे ऽपि वायोरेव स्पर्शोपलब्धिनिमित्तत्वमिति त्वगिन्द्रियस्य वायवीयत्वं, प्राप्यकारित्वं तु त्वग्रसनयोरविवादम्, श्रोत्रं तु दिङ्मयम् इति शब्दाधिकरणे† वक्ष्यतइत्यलमतिविस्तरेण ।

---

* आलोकौतैजसमिति १–२ पु. पा.। जै. सू. अ. १ पा. १ सू. ६–२३।

पुरुषेन्द्रियशब्दौ च व्यवधानेन कल्पितौ ।
पुरुषो लौकिको वा स्याद् यो वा ऽस्मिन् साधयिष्यते ॥५२॥
विक्रिया ज्ञानरूपा ऽस्य न नित्यत्वे विरोत्स्यते* ।
बुद्धिजन्मेति चाप्याह जायमानप्रमाणताम् ॥५३॥

---

अत्र सत्संप्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्मेति द्वयमप्ययुक्तं, सर्वमेव हि ज्ञानं पुरुषस्य संप्रयोगे सत्येव जायते, तस्य विभोर्नित्यस्य सर्वदा सर्वाऽर्थसंप्रयोगात्, अतो व्यभिचाराऽभावादविशेषणमिदम्, इन्द्रियाणां त्वचेतनत्वाद् बुद्धिजन्माऽनुपपत्तेरत आह पुरुषेति[५२]। "सतीन्द्रियाऽर्थसंप्रयोगे पुरुषस्य या बुद्धि"†रिति वदता भाष्यकारेण व्यवहितकल्पना दर्शितेति ।

कः पुनः पुरुषः, न तावल्लौकिकः कायः, तस्याऽचेतनत्वात्; अथ आत्मा, स यदि बुद्धिजन्मना विक्रियेत, क्षीरवदनित्यः स्यात्, अविक्रियत्वे वा पूर्ववदप्रमातृत्वादसत्तुल्यः स्यात्, यथा ऽऽह—

बुद्धिजन्मनि पुंसश्च विकृतिर्यद्यनित्यता ।
अथाऽविकृतिरात्मा ऽयं प्रमातेति न युज्यते ॥ तथा—
वर्षातपाभ्यां किं व्योम्नश्चर्मण्यस्ति‡ तयोः फलम् ।
चर्मोपमश्चेत्सो ऽनित्यः खतुल्यश्चेदसत्समः ॥ इति ।

अत आह पुरुष इति । अन्यपरत्वात्सूत्रस्य नात्र तात्पर्यं, परमार्थतस्तु साधयिष्यमाण एव पुरुषः, स च बुद्धिजन्मना विक्रियत एव, न किंचिद्विकारमात्रेण वस्तु नश्यति कुण्डलादिषु स्वर्णवदिति वक्ष्यते, तदाह विक्रियेति[५३] ।

---

* विरुध्यते इति का. पा. । † शा. भा. पृ. ६ प. १७ ।
‡ चर्मणो ऽस्तीति २ पु. पा. । चर्मण्येवेति पाठान्तरम् ।

व्यापारः कारकाणां हि दृष्टो जन्माऽतिरेकतः ।
प्रमाणे ऽपि तथा मा भूदिति जन्म विवक्ष्यते ॥५४॥
न हि तत् क्षणमप्यास्ते 'जायते वा ऽप्रमात्मकम् ।
येनाऽर्थग्रहणे पश्चाद् व्याप्रियेतेन्द्रियादिवत्' ॥५५॥
तेन जन्मैव विषये बुद्धेर्व्यापार इष्यते ।
तदेव च प्रमारूपं तद्वती करणं च धीः ॥५६॥

---

बुद्धिजन्मेति। यदि बुद्धेरर्थान्तरं जन्म, तत् किं वैशेषिकोक्तः कारणे कार्यस्य समवाय इति चेन्न, तस्य नित्यत्वेनाऽन्याऽनधीनत्वात् प्रत्यक्षत्वाऽनुपपत्तेः; अथ नाऽर्थान्तरं ततः पुनरुक्तमत आह बुद्धीति। कर्तृवचनो ऽयं जन्मशब्दो बुद्धिसमानाधिकरणः, जायमाना बुद्धिरित्यर्थः, कीदृशी पुनर्जननक्रिया यस्यां कर्तृत्वम् उपादानकारणदशाविशेषः, यदनन्तरं कार्यस्य सत्ता तस्यापि दशाविशेषस्य ततः प्राच्यवस्थैव ततः प्रागपि तथेत्यनादिरेषा ऽऽगन्तुककार्यकारणपरम्परा न तु समवायो जन्म, नाऽपि तस्य नित्यत्वमिति। जायमानाऽवस्थाविशेषोपादानस्य प्रयोजनमाह व्यापार इति[५४]। किमिति पुनः कारकान्तरवैधर्म्यं प्रमाणस्याऽत आह न हीति[५५]। अस्थायित्वादस्य जन्मनो ऽतिरिक्तव्यापाराऽसंभव इति। यद्यपि स्थायि, तथापि जायमानमेव तन्नाऽप्रमात्मकं*जायते, तेन पश्चादिन्द्रियवद् व्यापारान्तरमर्थप्रकाशने स्यात्, इत्याह जायतइति पादत्रयेण।

नन्वक्रियस्य कथं कारकवाचिभ्यां करणं प्रमाणमिति सामान्यविशेषशब्दाभ्यामभिधानमत आह तेनेति[५६]। जन्मैवास्य क्रियेति नाऽक्रियत्वं, तदेव चाऽर्थप्रकाशनफलविशेषात्प्रमा, तद्योगाद्धीः करणं,

* नामात्मकमिति २ पु. पा.

जन्म चाऽव्यतिरेकेण भाष्यकारेण वर्णितम् ।
तच्च भूतभविष्यत्त्वात् कृतं बुद्धेर्विशेषणम् ॥५७॥
यदा ऽप्यौलूक्यसिद्धान्तात् समवायस्य जन्मता ।
बुद्धिस्तत्रेन्द्रियाधीना* तेन प्रत्यक्षमश्नुते ॥५८॥
प्रमाणफलभावश्च यथेष्टं परिकल्प्यताम् ।
सर्वथा ऽप्यनिमित्तत्वं विद्यमानोपलम्भनात् ॥५९॥
यद्वेन्द्रियं प्रमाणं स्यात्तस्य वा ऽर्थेन सङ्गतिः ।
मनसो वेन्द्रियैर्योग आत्मना सर्वएव वा ॥६०॥
तदा ज्ञानं फलं तत्र व्यापाराच्च प्रमाणता ।

---

चशब्दात्प्रमाणं चोच्यतइति । इदं च बुद्धिजन्मनोरनतिरिक्तत्वं "या बुद्धिर्जायत"† इति वदता भाष्यकारेण दर्शितमित्याह जन्मेति[५७] । जायमानविशेषणस्याऽन्यदपि प्रयोजनमाह तच्चेति । तदभावे भूता भविष्यन्ती वेत्यपि शङ्क्येताऽतो ऽस्मात् द्वयाद् विशेषणं व्यवच्छेदकं जन्मग्रहणमिति । भवतु वा वैशेषिकसिद्धान्तात्समवायो जन्म स च नित्यः, तथापि तस्याऽक्षाधीना ऽभिव्यक्तिरित्युपपन्नं प्रत्यक्षत्वमित्याह यदेति[५८] ।

"बुद्धिर्वा जन्म वे"‡ति भाष्यार्थं दर्शयति प्रमाणेति[५९]। अनादरे कारणमाह सर्वथेति । यथेष्टकल्पनामेव प्रपञ्चयति यद्वेति[६०] । आत्मना मनसो योग इत्यनुषङ्गः, सर्वएव वा समुच्चिता इति । एषु प्रमाणेषु फलं दर्शयति तदेति[६१] । करणानां हि काष्ठादीनां पाका-

---

* व्यक्तिस्तस्येन्द्रियाऽधीनेति २ पु. वा. । बुद्धिस्तस्येत्यादि पाठान्तरम् ।
† शा. भा. पृ. ६ प. १७ । ‡ शा. भा. पृ. ६ प १९ ।

व्यापारो न यदा तेषां तदा नोत्पद्यते फलम् ॥६१॥
न च सर्वात्मनाऽक्षेण सम्बन्धोऽर्थस्य विद्यते ।
येन सर्वाऽर्थबोधः स्यात्तत्प्रमाणाऽभिधायिनाम् ॥६२॥
प्राप्तिमात्रं हि सम्बन्धो नेन्द्रियस्याऽभ्युपेयते ।
मा भूत्कारणमात्रेण त्वचा रूपाऽवधारणम् ॥६३॥
यथा प्रमाणनिष्पत्तौ योग्यत्वादिन्द्रियाऽर्थयोः ।

---

दिक्रिया, तत्साध्यं चौदनादि फलं, तदिहाऽपीन्द्रियादीनां ज्ञानं फलं प्रमेयज्ञानमित्यर्थः । कथं पुनरेतेषां प्रामाण्यमत आह तत्रेति । सर्वाणि तानि ज्ञानोत्पत्तौ व्याप्रियन्ते इति । व्यापार एव कुतोऽवगम्यते, ऽत आह व्यापार इति । स्वप्नादाविन्द्रियादिव्यापाराऽभावे ज्ञानाऽनुदयात्सति चोन्मीलनादिव्यापारे तदुदयात्तद्व्यापाराधीनता ज्ञानफलस्याऽवगम्यतइति ।

यत्त्विन्द्रियार्थसंगतिप्रमाणपक्षे त्वचा रूपादयोऽपि बुध्येरन्, तेषामपि स्पर्शवत्संयुक्तसमवायसद्भावादतो ज्ञानमेव प्रमाणम्, तस्य तु कारणमात्रमिन्द्रियार्थसंबन्ध (इति परैरुक्तं; तत्राह न चेति[६२] । कथं न विद्यतइत्यत आह प्राप्तीति[६३] । किमिति नाऽभ्युपेयते, ऽत आह मा भूदिति । प्रमाकरण*मिन्द्रियार्थसंबन्ध)† इत्यत्रापि पक्षे तुल्योऽयं दोषः, त्वचा रूपाऽवधारणं स्यादिति तत्रापि प्राप्तिसद्भावादिति, अतो यथा प्रमाणनिष्पत्तौ योग्यतासहितैव प्राप्तिः कारणं न

---

* प्रमाणकारणमिति ३ पु. पा. ।

† ( ) एतन्मध्यगो ग्रन्थो नेपलभ्यते २ पु. ।

नियता सङ्गतिर्हेतुः फले ऽप्येवं भविष्यति ॥६४॥
योगस्य द्व्याश्रयत्वे ऽपि भवत्यन्यतराश्रयः ।
व्यपदेशोऽथ वा ऽप्यक्षं तत्रा*ऽसाधारणं भवेत् ॥६५॥
संयोगे त्वात्ममनसोः स्याच्चेद्विषयभिन्नता ।

---

प्राप्तिमात्रम् एवं फलनिष्पत्तावपीति नाऽतिप्रसङ्ग इत्याह यथेति[६४]। योग्यत्वादिति । तत्रैव कार्यदर्शनेन योग्यत्वाऽवगमादिति ।

ननूभयाऽऽश्रितो योगः, (तस्य 'सत्संप्रयोगे' इत्यादिके सूत्रे प्रत्यक्षमिति यो व्यपदेशः सो ऽनुपपन्नः, इन्द्रियाऽर्थसंबन्धनिमित्तत्वाद्, व्यपदेशस्य चोभयाश्रितत्वात् प्रत्यर्थमिति व्यपदेशो ऽपि किं न स्यादत आह योगस्येति। अर्थसंबन्धस्य प्रमाणाऽन्तरसाधारणत्वाद् वा प्रत्यक्षमिति व्यपदेश इत्याह अथ वेति। यद्वा)† किमक्षेणैव व्यपदिश्यते प्रत्यक्षमिति ‡ न पुनरर्थेनापि, इत्यत आह योगस्येति[६५] । यथा लोके डित्थडपित्थमाता डित्थमातेति । परिहारान्तरमाह अथ वेति। विशिष्टज्ञानफलोपाधिर्ह्यत्र प्रत्यक्षशब्दः, तस्य चाऽक्षम् असाधारणमिति तेनैव व्यपदेशो नाऽर्थेन, तस्य ज्ञानान्तरकार्यान्तरसाधारणत्वात् । अत्र प्रमाणफलयोर्विषयैकत्वं विस्पष्टम्, इन्द्रियसंबन्धस्याऽर्थाश्रयत्वाज् ज्ञानस्यापि तद्विषयत्वादिति । आत्ममनःसंयोगप्रमाणपक्षे तस्यात्ममनोऽधिष्ठानत्वात् ज्ञानस्य त्वर्थविषयत्वाद्विषयभेदः स्यादिति । शङ्कते संयोगइति[६६]

---

* तस्येति पाठान्तरम् ।

† ( ) एतदन्तरालगतो ग्रन्थो नास्ति २ पु. ।

‡ अर्थेनापि प्रत्यक्षमिति २ पु. पा. ।

प्रमाणफलयोर्नाऽसावर्थे हि व्यापृतं द्वयम् ॥६६॥
अथाऽप्याश्रय इष्टस्ते न योगाद्विषयान्तरम् ।
आत्मस्थत्वेन विज्ञानं न भिन्न*विषयं ततः ॥६७॥
प्रकृष्टसाधनत्वाच्च प्रत्यासत्तेः स एव नः ।
करणं तेन नाऽन्यत्र कारके स्यात् प्रमाणता ॥६८॥
प्रमाणे सर्वसंयोगे दोषो नैकोऽपि विद्यते ।
प्रमाणं त्विन्द्रियं यस्य तस्यैको विषयः स्फुटः ॥६९॥

---

फलयोरन्तेन। निराकरोति नासाविति । कारणमाह अर्थइति । एतावदेव हि लोके क्रियाकारकयोरेकविषयं यत्, यत्र परश्वादिकं व्याप्रियते तत्रैव च्छिदेति, तदिहाप्यात्ममनःसंयोगस्याऽर्थे विषये व्यापारादस्ति ज्ञानसमानविषयतेति । यदि त्वाश्रयो विषयस्तदा ज्ञानस्याऽप्यात्माश्रयत्वादस्त्येव विषयैक्यमित्याह अथाऽपीति[६७] । अयमेव चात्ममनःसंयोगो ज्ञानस्यैकार्थसमवायित्वेन प्रत्यासन्नत्वात् प्रकृष्टं साधनं करणमिति तस्यैव प्रामाण्यं युक्तं न कारकान्तरस्येत्याह प्रकृष्टेति[६८] । सर्वसंयोगप्रमाणपक्षे ऽपि व्यापारतः समानविषयत्वं योग्यतावशेन चाऽतिप्रसङ्गपरिहार इति न कश्चिद्दोष इत्याह प्रमाणइति[६९] । सर्वसंयोगइति । आत्मा मनसा संयुज्यते मन इन्द्रियेण इन्द्रियमर्थेनेति हि सन्निकर्षत्रयं पक्षे न्यायविदः संगिरन्ते, तदस्य त्रयस्यापि तुल्यत्वविवक्षया यदा प्रामाण्यं तदा न कश्चिद्दोष इति । इन्द्रियप्रामाण्ये ऽपि तस्याऽर्थ-

---

* अभिन्नेति पाठान्तरम् ।

प्रमाणफलते बुद्ध्योर्विशेषणविशेष्ययोः ।
यदा तदापि पूर्वोक्ता भिन्नार्थत्वनिराक्रिया ॥७०॥
'विशेषणे तु बोद्धव्ये यदालोचनमात्रकम् ।
प्रसूते निश्चयं पश्चात्तस्य प्रामाण्यकल्पना ॥७१॥
निश्चयस्तु फलं तत्र' 'नाऽसावालोचितो यदा ।
तदा नैव प्रमाणत्वं स्यादर्थाऽनवधारणात्' ॥७२॥
हानादिबुद्धिफलता प्रमाणं चेद्विशेष्यधीः ।

---

प्राप्तस्य तद्विषयत्वादव्यक्तमेव विषयैक्यमित्याह प्रमाणमिति । मनइन्द्रियसंयोगप्रामाण्ये ऽप्यात्ममनःसंयोगवद् व्यापारतः समानविषयत्वमित्यूहनीयम् ।

एवं तावदिन्द्रियादिप्रामाण्यपक्षे फलं विषयसाम्यं चोक्तम्, इदानीं ज्ञानप्रामाण्ये ऽप्युभयं दर्शयति प्रमाणेति[७०] । विशेषणज्ञानपूर्वकं विशेष्यज्ञानं, तत्र विशेष्यज्ञानं फलं, विशेष्यज्ञानसिद्ध्यर्थत्वाच्च विशेषणज्ञानस्य व्यापारतः समानविषयत्वं पूर्ववदव्यक्तमेवेति । यदा तर्हि विशेषणपर्यन्तैव प्रमितिस्तदा किं फलमत आह विशेषणे इति[७१] सपादेन । सर्वत्रैव तावदिन्द्रियाऽर्थसंप्रयोगाऽनन्तरमनिश्चयात्मिका बुद्धिरालोचनमात्ररूपा जायते, सा च पश्चान्निश्चयं प्रसूते, तत्राऽऽलोचनं प्रमाणं, तस्य तु निश्चयः फलमिति । यदा पुनरालोचिते निश्चयो न जायते तदा ऽर्थाऽनवधारणात् उत्प्रेक्षाज्ञानवदर्थप्रकाशने सत्यपि नास्ति प्रामाण्यं नापि फलमित्याह नाऽसाविति[७२] पादत्रयेण । यदा तु विशेष्यबुद्धिरेव प्रमाणं तदा हानोपादा-

उपकारादिसंस्मृत्या व्यवायश्चेदियं* फलम् ॥७३॥
विषयैकत्वमिच्छंस्तु यः प्रमाणं फलं वदेत् ।
साध्यसाधनयोर्भेदो लौकिकस्तेन बाधितः ॥७४॥
छेदने खदिरप्राप्ते पलाशे न च्छिदा यथा ।
तथैव परशोर्लोके च्छिदया सह नैकता ॥७५॥
भवते भेद†हानेन रुचिता विषयैकता ।
तत्त्यागेन परेभ्यस्तु भेदो रुचिमुपागतः ॥७६॥

---

नोपेक्षा बुद्धयः फलमित्याह हानादीति[७२] । शङ्कते उपकारादीति परिहरति इयमिति । इयमेवोपकारादिस्मृतिरव्यवहिता फलमस्तु, नात्राऽभिनिवेश इति ।

यत्तु बौद्धैर्विषयैकत्वतृष्णया ज्ञानमेव प्रमाणं फलं चेत्युक्तं, तदलौकिकमित्याह विषयेति[७४] । कथं भेदस्य लौकिकत्वमित्याह च्छेदनइति[७५] । विषयैकत्ववत् क्रियाकारकयोः स्वरूपभेदोऽपि लोकसिद्ध एव च्छेदने परश्वादिवदिति । सत्यं, द्वयं दृष्टम्, इह तूभयाऽसंभवात् विषयैक्यमेव भेदहानेनाऽस्मभ्यं रोचत‡ इति चेत्, तर्हि परैर्नैयायिकादिभिरिन्द्रियादिप्रामाण्यवादिभिरपि विपरीतं वक्तुं शक्यमिति सोपहासमाह भवतइति[७६] । फलमेव ज्ञानं, तस्य चौ§पचारिकं प्रा-

---

* इदमिति १ पु. पा. ।

† भवत्यभेदेति का. पा. ।

‡ भेदज्ञानं नास्मभ्यो रोचते इति २ पु. पा. ।

§ तस्य तु इति १ पु. ।

करणत्वोपचारस्तु फलं चे*त्कल्प्यते त्वया ।
कथञ्चिद्विषयैकत्वं परैर्वा किं न कल्प्यते ॥७७॥
परिच्छेदफलत्वेन वृत्तस्याऽनन्तरस्य नः ।
प्रमाणत्वं भवेज्ज्ञाने प्रमाणे तु परं फलम् ॥७८॥
स्वसंवित्तिफलत्वं तु तन्निषेधान्न युज्यते ।
प्रमाणे विषयाऽऽकारे भिन्नार्थत्वान्न युज्यते ॥७९॥

——

माण्यमिति शङ्कते करणत्वेति[७७] । परिहरति कथं चिदिति । पूर्वोक्तेन मार्गेण व्यापारतः समानविषयत्वमस्माभिर्वा किं न कल्प्यते, तथा सत्युभयमपि सुस्थं भवति न किं चिदौपचारिकमिति । उपसंहरति परिच्छेदेति[७८] । परिच्छेदस्य ज्ञानस्य फलत्वेनाऽनन्तरवृत्तस्येन्द्रियादेः प्रामाण्यं, ज्ञानस्य तु प्रमाणत्वे परं विशेष्यादिज्ञानं फलमिति ।

यत्तु सौत्रान्तिकैरुक्तं, ज्ञानस्य विषयाकारो नीलपीतादिरूपाऽर्थेन ज्ञाने आहितः,स प्रमाणं,तन्निबन्धनत्वान्नीलपीतादिविषयव्यवस्थायाः, स्वसंवित्तिस्तु फलं, बाह्यार्थस्तु प्रमेय इति; यदाहुः–

विषयाकार एवास्य प्रमाणं तेन मीयते ।
स्वसंवित्तिः फलं चास्य तद्रूप्ये ह्यर्थनिश्चयः ॥ इति ।

तन्निराकरोति स्वसंवित्तीति[७९] । निषेत्स्यते शून्यवादे स्वसंवित्तिरिति । किं चैवं विषयभेदोऽपीत्याह प्रमाणइति । विषयाऽऽकारो हि प्रमाणं ते, प्रमाणं च प्रमेयविषयं,नीलादिकं च प्रमेयमिति विषयाकारो विषयविषयः, स्वसंवित्तिस्तु विज्ञानविषयेति विषयभेद इति ।

---

* फलं वेति १ पु. ।

स्वाऽऽकारश्च स्वसंवित्तिं मुक्त्वा नाऽन्यः प्रतीयते ।
प्रामाण्यं यस्य कल्प्येत स्वसंवित्तिफलं प्रति ॥८०॥
स्वाऽऽकारस्य परिच्छेदो न चाऽऽकारान्तराद्विना ।
तस्याप्येवं तथा च स्यान्नाऽऽकारान्तः कदा चन॥८१॥
न चाऽसंचेतितः सत्तां स्वाऽऽकारः प्रतिपद्यते ।
ग्राह्ये च विषयाऽऽकारे ग्राहको ऽन्यो न लभ्यते ॥८२॥

---

योगाचारास्तु वाह्यार्थमपलपन्तो ज्ञानस्यैवाऽनादिवासनोपप्लावितो नीलपीतादिविषयाकारः प्रमेयं, स्वाकारः प्रमाणं, स्वसंवित्तिः फलमिति मन्यन्ते ; यथाहुः—

यदाभासं प्रमेयं तत्प्रमाणफलते पुनः ।
ग्राहकाऽऽकारसंवित्त्योस्त्रयं नाऽतः पृथक् कृतम् ॥ इति ।

तान् दूषयति स्वाकार इति[८०]। स्वसंवित्तिस्तावन्निषेत्स्यतएव, यश्चाऽयं स्वाऽऽकारः प्रमाणत्वेन कल्पितः सो ऽपिस्वसंवित्तेरन्यो न गम्यते, स्वसंवित्तिरेव ज्ञानस्याकारः, न हि स्वस्य संवित्तिः स्वसंवित्तिरिति संभवति, संविदन्तराऽनभ्युपगमादिति । किं चाऽयं स्वाऽऽकारः परिच्छिन्नो वा प्रमाणमपरिच्छिन्नो वा; परिच्छेदस्तावत् स्वेनैव स्वस्य न संभवति विषयाकारस्य प्रमेयत्वहानात्, अत आकारान्तरमप्यङ्गीकर्त्तव्यम्, न च तदस्ति, भावे वा तस्याऽप्याकारान्तरकल्पनायाम् अनवस्थेत्याह स्वाऽऽकारस्येति[८१] ।

अपरिच्छिन्नस्तु सत्तामेव न लभते कुतस्तस्य प्रामाण्यमित्याह न चेति[८२]। न चाऽस्माकमिव ज्ञानस्य पश्चादन्येन ग्रहणं संभवति, सर्वसंविदां स्वांशपर्यवसायित्वादिति। यदा चैवं स्वाकारो ऽपलपितस्तदा तदधीनग्रहणस्य विषयाऽऽकारस्याऽप्यसिद्धिरेवेत्याह ग्राह्ये इति।

मनसस्त्विन्द्रियत्वेन प्रत्यक्षा धीः सुखादिषु ।
मनसा सम्प्रयुक्तो हि नाऽन्यात्मा प्रतिपद्यते ॥८३॥
सम्बद्धं वर्तमानं च गृह्यते चक्षुरादिना ।
सामान्यं वा विशेषो वा ग्राह्यं नाऽतो ऽत्र कल्प्यते॥८४॥
लक्षणं यच्च यैरुक्तं प्रत्यक्षे लौकिके सति ।
विद्यमानोपलम्भित्वात् सर्वस्यैवाऽनिमित्तता ॥८५॥

---

ननु भवता ऽपि सुखदुःखेच्छादीनां स्वसंवेद्यत्वमेष्टव्यम्, अन्यस्य चक्षुरादेस्तद्ग्राहकत्वाऽभावादत आह मनस इति । किमिन्द्रियं मन इत्येतावता तज्ज्ञानं प्रत्यक्षं, कः पुनर्मनसः सुखादिभिः संनिकर्षः, अत आह मनसेति । मनसा, मनःसंज्ञकेनेन्द्रियेण संयुक्त आत्मा स्वसमवेतान् सुखादीन् संयुक्तसमवायसंनिकर्षेण प्रतिपद्यतइति नास्ति तेषामपि स्वसंवित्तिरिति ।

ननु सौगतैर्विशेषविषयत्वं, वेदान्त्यादिभिः सामान्यविषयत्वं, प्रत्यक्षस्योक्तम; इदं तु ग्राह्याऽनुपादानात् न्यूनं लक्षणमत आह संबद्धमिति[८४] । यदेव योग्यं संवद्धं च सामान्यं विशेषो वा तत्सर्वं ग्राह्यमिति न विशेषकथनेन प्रयोजनमिति । ननु कल्पनापोढमभ्रान्तं प्रत्यक्षं, तच्चतुर्विधम, इन्द्रियजम, इन्द्रियजसमनन्तरप्रत्ययोद्भवं मानसं, सर्वचित्त*चैत्यानामात्मसंवेदनं, योगिज्ञानं च; योगिज्ञानमपि भावनाबलजम, अतीताऽनागतादिविषयमपि कल्पनाऽपोढत्वात्प्रत्यक्षमेव, तेन यद्यपि सत्संप्रयोगजस्य प्रत्यक्षस्य विद्यमानोपलम्भनत्वात् धर्मं प्रत्यनिमित्तत्ता, तथापि कल्पनापोढलक्षणस्य योगिज्ञानस्य तन्निमित्तता भविष्यतीत्यत आह लक्षणमिति[८५] । सर्वमेव प्रत्यक्षं

---

* चित्तशब्दो नास्ति ३ पु. पा. ।

निर्विकल्पकपक्षे तु सुतरामनिमित्तता ।
साध्यसाधनसम्बन्धो नाऽविकल्प्य हि गृह्यते ॥८६॥
कथं प्रत्यक्षपूर्वत्वमनुमानादिनो भवेत् ।
यदा स्मृत्यसमर्थत्वान्निर्विकल्पेन्द्रियस्य धीः ॥८७॥
न चाऽविकल्प्य लिङ्गस्य लिङ्गसम्बन्धयोस्तथा ।
गृहीतिरुपमाने ऽपि सादृश्यग्रहणात् स्मृतेः ॥८८॥

---

विद्यमानोपलम्भनं लोके, अतो यस्मिन्कस्मिंश्चिदपि लक्षणे सिध्यत्येवाऽनिमित्तता, भावनाबलजं तु ज्ञानं स्मृतिरेव, अनुभूतविषयत्वाद्भावनायाः; तेन प्रामाण्यमेव नास्ति नतरां प्रत्यक्षत्वमित्युक्तम् । कल्पनापोढपक्षे च सुतरामनिमित्ततेत्याह निर्विकल्पकेति[८६] । कारणमाह साध्येति । श्रेयःसाधनता हि धर्मता, सा चाऽवश्यमिदमस्य साधनमिति विकल्प्यैव ग्रहीतव्या, नाऽविकल्पितेन शक्या ग्रहीतुमिति ।

एवं प्रत्यक्षाऽनिमित्तत्वं प्रतिपाद्य प्रत्यक्षपूर्वकत्वादनुमानोपमानाऽर्थापत्तीनामकारणत्वमुक्तं भाष्यकारेण,*तदाक्षिपति कथमिति । कथं चानुभवति, अत आह यदेति । इन्द्रियार्थसामर्थ्यजं ज्ञानं प्रत्यक्षं, न चेन्द्रियस्याऽर्थस्य वा स्मर्तुं सामर्थ्यं, सविकल्पकं च स्मृत्याकृष्टं जात्यादियोजनयोपजायते, अतो निर्विकल्पकमेव प्रत्यक्षमिति । ततः किमित्याह न चेति[८८] गृहीतिरन्तेन । लिङ्गलिङ्गितत्संबन्धग्रहणपूर्वकं ह्यनुमानं, न च निर्विकल्पकेन तद्ग्रहणं संभवति, अतो न प्रत्यक्षपूर्वकमनुमानमिति ।

---

* प्रत्यक्षपूर्वकत्वाच्चाऽनुमानोपमानाऽर्थापत्तीनामप्यकारणत्वमिति । शा. भा. पृ. ६ प. २० ।

अर्थापत्तिः पुनः प्रायो नाऽन्यदृष्टे ऽर्थइष्यते ।
प्रवर्तते च यं दृष्ट्वा सो ऽप्यर्थः सविकल्पकः ॥८९॥
यत्र चानुमितं लिङ्गं सूर्यगत्यादि लिङ्गि च ।
तत्र प्रत्यक्षपूर्वत्वं कथमध्यवसीयते ॥९०॥
प्रत्यक्षाऽवगते चाऽर्थे कुतस्तेषां प्रमाणता ।
तैर्यदा स प्रतीयेत तदा नाऽक्षस्य गोचरः ॥९१॥

---

तथोपमाने ऽपि न तत्पूर्वकतेत्याह उपमानइति । गां दृष्ट्वा गवयं तत्सदृशतया विकल्प्य पश्चात्स्मृते गवि सादृश्यं तेन गृह्यते, अतो नाऽविकल्पकपूर्वकमिति । अर्थापत्तिस्त्वत्यन्ताऽतीन्द्रिये शक्त्यादौ प्रवर्त्तमाना कथं प्रत्यक्षपूर्विकेत्याह अर्थापत्तिरिति[९] । मा भूत्प्रमेय*प्रत्यक्षपूर्विका, अनुपपन्नं† तु प्रत्यक्षेण दृष्ट्वा प्रवर्ततइति तत्पूर्विका‡ भविष्यतीत्यत आह प्रवर्त्ततइति । दाहादिकं ह्यनेन विनेदं नोपपद्यतइति विकल्पितमेवाऽर्थापत्त्युदये निमित्तमिति । किं च यत्र देशान्तर§प्राप्त्यनुमितेन सूर्यगत्यादिना लिङ्गेन गतिकारणं लिङ्ग्यनुमीयते तत्र द्वितीयस्याऽनुमानस्य कथं प्रत्यक्षपूर्वकत्वमित्याह यत्रेति[१०] । तथा धर्मे ऽप्यप्रत्यक्षपूर्वकमनुमानं भविष्यतीति । किं च, विकल्पनीयमिदं प्रत्यक्षपूर्वकत्वं, यदि तावत् प्रमेयविषयं प्रत्यक्षमपेक्ष्यैषां प्रवृत्तिः, ततः प्रामाण्यमेव न स्यादित्याह प्रत्यक्षेति[११] ।

---

* प्रमेये इति २ पु. पा. ।

† अनुपपद्यमानमिति २ पु. पा. ।

‡ तत्पूर्वकतयेति २ पु. पा. ।

§ दिशान्तरेति २ पु. पा. ।

अथ कस्य चिदर्थस्य ज्ञानात् तत्पूर्वता भवेत् ।
तदा ऽर्थस्य भविष्यत्त्वं न स्यादज्ञानकारणम् ॥१२॥
वर्तमाने हि कस्मिंश्चिद्विज्ञाते ऽर्थे ऽक्षबुद्धिभिः ।
लिङ्गादविद्यमानो ऽपि धर्मो गम्येत तैस्तदा ॥१३॥
प्रत्यक्षेण गृहीत्वा च वर्णान् वेदे ऽपि* गृह्यते ।
प्रमेयमिति सोपि स्यात्तत्पूर्वत्वादकारणम् ॥१४॥
के चित् तत्पूर्वकत्वं तु हेतुर्नैवेति मन्वते ।
तत्पूर्वकत्वाद्यत्तावत् प्रामाण्यं तदसम्भवः ॥१५॥

---

कालभेदात्प्रामाण्यमिति चेत्, ततो ऽन्यगतविषयत्वान्न प्रत्यक्षपूर्वकतेत्याह तैरिति ।

अथ कस्मिँश्चिदर्थे प्रत्यक्षेण गृहीते अनुमानादीनां प्रवृत्तिरिति शङ्कते अथेति[१२] । दूषयति तदेति । अर्थस्य धर्मस्याऽनुमानादिभिरज्ञाने भविष्यत्त्वेन धर्मस्याऽप्रत्यक्षत्वं न कारणं स्यादिति । कथमित्याह वर्त्तमाने इति[१३] । तदा हि वर्त्तमानं किं चित्प्रत्यक्षेण गृहीत्वा भविष्यन्नपि धर्मो ऽनुमानादिभिर्गृह्येतेति । किं चेदृशं प्रत्यक्षपूर्वकत्वं शब्दस्याप्यस्त्येवेति सो ऽपि धर्मनिमित्तं न स्यादित्याह प्रत्यक्षेणेति[१४] ।

एवमाक्षिप्तं भाष्यम् एकेषां मतेन समाधत्ते के चिदिति[१५] । किं तर्हीत्याह तत्पूर्वकत्वादिति । प्रत्यक्षाऽगृहीते धर्मे यत्तत्पूर्वकतया† प्रामाण्यमन्येषां, तत्तावन्नास्तीत्येतावदुच्यत इति । एवं तु प्रमाणान्त-

---

* वर्णाद्वेदो ऽपीति १ पु. पा. ।

† यत् तावत् तत्पूर्वकतयेति ३ पु. पा. ।

प्रत्यक्षेण गृहीत्वा च लिङ्गाद्यन्यतमं* ध्रुवम् ।
प्रवृत्तिरनुमानादेर्न च धर्मे ऽस्ति तादृशम् ॥१६॥
अनुमानानुमानादेर्न चाप्यस्तीह संभवः ।
सम्बन्धलिङ्गिलिङ्गानां पूर्वसिद्धेरसंभवात् ॥१७॥
सत्ता च नाऽनुमानेन कस्य चित्प्रतिपद्यते ।
धर्मेणाऽन्यद्विशेष्यं चेत्पक्षो ऽसिद्धविशेषणः ॥१८॥

---

राणामनिमित्तत्वे हेत्वनभिधानान्मन्दफलं भाष्यं स्यादिति मत्वा स्वमतेन समाधत्ते प्रत्यक्षेणेति[१६] । सविकल्पकमपि प्रत्यक्षमित्युपपादयिष्यते, एवं च सामान्यतो वा विशेषतो वा प्रत्यक्षगृहीते पदार्थे ऽनुमानादिप्रवृत्तिः,संबन्धग्रहणाऽपेक्षत्वादगृहीते संबन्धिनि तद्ग्रहणाऽसंभवात् । लिङ्गादीति । लिङ्गत्वेन वा सदृशत्वेन वा धूमगवयादिकं गृहीत्वा ऽनुमानादेः प्रवृत्तिः, न चाऽगृहीते ऽग्नौ गवि वा तल्लिङ्गतया तत्सदृशतया वा धूमगवयादिग्रहणं संभवति, तदनेन प्रकारेणाऽनुमानादिप्रमेयस्यैव प्रत्यक्षग्रहणाऽपेक्षा दर्शिता भवति; धर्मस्य चाऽप्रत्यक्षत्वेन तल्लिङ्गं तत्सदृशं वा न शक्यं ग्रहीतुमिति नाऽनुमानादेर्धर्मे प्रति निमित्ततेति । न चाऽनुमिताऽनुमानमपि धर्मे संभवति, तस्यापि प्रत्यक्षपूर्वकत्वात्,यावद्धि न कार्यं कारणं तयोश्च संबन्धः प्रत्यक्षेण गृहीतः न तावदनुमितया ऽपि गत्या तत्कारणमनुमातुं शक्यं न च धर्मेणेति ।

परिहरति पक्ष इति[१८] । धर्मस्य क चिदपि प्रमाणेन सिद्ध्यभावात्; न ह्यप्रमितसद्भावेन वस्तुना शक्यमन्यद्विशेष्टुं; न तर्हि धर्माऽनुवादेन प्रमाणविधिः सिध्येत्, सत्यं, यदि विद्यमानो यो धर्म इत्यनूद्य-

---

* अन्यतमदिति १ – २ पु. पा. ।

'तस्माददृष्टपूर्वत्वात्केन चिद्वस्तुना सह ।
धर्मस्य नाऽनुमेयत्वमसाधारणवस्तुवत् ॥९९॥
अदृष्टसदृशत्वाच्च स्वयं चाऽनुपलम्भनात् ।
धर्मस्य नोपमेयत्वमसाधारणवद्भवेत्' ॥१००॥
नन्वर्थापत्तिरेवं स्याज्जगद्वैचित्र्यदर्शनात् ।
सुखिदुःख्यादिभेदो हि नाऽदृष्टात्कारणादृते ॥१०१॥
दृष्टस्य व्यभिचारित्वात्तदभावे ऽपि सम्भवात् ।
सेवाऽध्ययनतुल्यत्वे दृष्टा च फलभिन्नता ॥१०२॥

---

त, यदा तु यो ऽयं निष्प्रमाणत्वादिविवादास्पदीभूत इत्यनूद्यते तदा विवादास्पदीभूतस्याऽनूद्यमानरूपस्य प्रमाणसिद्धिरस्त्येव, अनूद्यमानसिद्धिरेव चानुवादस्याऽपेक्षिता न धर्मस्वरूपस्य । ये तु तस्यापि सामान्यतः सिद्धिमेव मन्यन्ते तेषां कुतः सिद्धिरिति वक्तव्यं, 'पक्षो ऽसिद्धविशेषण' इति च ग्रन्थविरोधः, तथा परीक्षाविशेषं दर्शयता न चाऽन्यत्राऽपि चोदनेत्ययमपि पक्षो दर्शितः, तस्मिंश्च पक्षे विद्यमाने कथं वा सामान्यसिद्धिरविवादा स्यात्, अभावनिराकरणं चा''ऽभावो ऽपि नास्ती"*ति भाष्यकारस्याऽसंगतं स्यादित्यास्तां तावत् ।

एवमुपपादितमनुमानाद्यविषयत्वं सौगतान् प्रति प्रयोगेण दर्शयति **तस्मादिति**[९९] द्वयेन । असाधारणं हि सौगतानामपि अविकल्पत्वान्नाऽनुमानादिगम्यमिति। चोदयति **नन्विति**[१०१]। **एवमिति**। प्रमाणं स्यादित्यर्थः । वैचित्र्यमेव दर्शयति **सुखीति** । कथमित्याह **दृष्टस्येति**[१०२] । कस्य चित्प्रयस्यतो ऽपि धनं न भवति, कस्य चिदप्रय-

---

* शा. भा. पृ. ६ प. २१ ।

स्यादेवं यदि शक्येत स्वाभाविकनिवारणा ।
कर्मशक्तेश्च वैचित्र्ये हेतुरन्यो भवेद्यदि ॥१०३॥
यथा च फलवैचित्र्ये कर्मणां शक्तता स्वतः ।
तथापि चित्रता लोके स्वभावादुपपत्स्यते ॥१०४॥
अधर्मे धर्मरूपे वा ह्यविभक्ते फलं प्रति ।
किमप्यस्तीति विज्ञानं नराणां क्वोपयुज्यते ॥१०५॥
किं नु यागादितो दुःखं हिंसादेः किं सुखोद्भवः ।
स्वर्गपुत्रादिभेदश्च कीदृशात् कर्मभेदतः ॥१०६॥

---

स्यतो ऽपि भवतीति। व्यभिचारमेवोदाहरणेन दर्शयति सेवेति। निराकरोति स्यादेवमिति[१०३]। न च सा शक्येत्याह कर्मेति।

यदि ब्रह्महत्याऽश्वमेधयोः शक्तिवैचित्र्ये स्वभावादन्यो हेतुः स्यात् ततो निवार्येत स्वाभाविकत्वं, न चाऽसावस्तीत्यतो यथा कर्मशक्तिवैचित्र्यं स्वाभाविकम् एवं जगद्वैचित्र्यमेवास्तु, किमन्तर्गडुना कर्मणेत्याह यथा चेति[१०४]। नन्वव्यभिचारात्कर्मशक्तीनां युक्तं स्वाभाविकत्वं, न चैवं जगद्वैचित्र्यस्य संभवति, एकस्यैव हि दारिद्र्यमैश्वर्यं च पर्यायेण दृश्यते, तत्स्वाभाविकत्वे ऽनुपपन्नम्; अतो ऽवश्यंभाविनि कारणे दृष्टस्य व्यभिचाराददृष्टं कल्प्यम्; अत आह अधर्मइति[१०५]। भवत्वेवं, तथापि दुःखफलसाधनमधर्मो ब्रह्महत्यादिः सुखफलहेतुश्च धर्मो ऽग्निहोत्रादिः, सुखे ऽपीदं स्वर्गस्य साधनमिदं पशोरिति यावत्फलविशेषं प्रति धर्माऽधर्मौ न विभज्येते तावत्किमप्यदृष्टमस्तीति एतावदर्थापत्तिज्ञानम् अनुपयोगीति। एतदेव

इति यावदविज्ञानं तावन्नैव प्रवर्तते' ।
प्रवृत्त्यङ्गं च यज्ज्ञानं तस्य मूलं प्रतीक्ष्यते ॥१०७॥
तस्मात्सिद्धे ऽपि सामान्ये विशेषो नाऽऽगमादृते ।
विशेषस्य तु जिज्ञासा सूत्रकारेण सूत्रिता ॥१०८॥
गम्यमाने विशेषे च तदन्तर्भावकारितः ।
सामान्यप्रत्ययो ऽपि स्याच्छास्त्रादेवेत्यकारणम् ॥१०९॥
यथा ऽर्थापत्तिरेवं च नाऽनुमानोपमेष्यते ।

---

विवृणोति किं न्विति[१०६] सार्द्धेन । मा प्रवर्तिष्ट, सिद्धं तावदर्थापत्तिरपि धर्मे प्रमाणमिति, तथा च चोदनैवेत्यवधारणाऽसंभवः, अत आह प्रवृत्त्यङ्गमिति[१०७] । प्रवृत्यङ्गं यत् ज्ञानं तत्र चोदनैव कारणमिति नात्राऽर्थापत्तिर्मूलं विवक्षितमित्यर्थः । अतो ऽर्थापत्तेः सामान्ये मानत्वे ऽपि विशेषे चोदनैवेति प्रतिज्ञासिद्धिरित्युपसंहरति तस्मादिति[१०८] । सूत्रकारेणाऽपि न सामान्यमात्रजिज्ञासा सूत्रिता तन्मात्रस्याऽप्रयोजनत्वात् किं तु विशेषपर्यन्तैवेत्याह विशेषस्येति। न सामान्यस्यैव किं तु विशेषस्यापीत्यर्थः, विशेषपर्यन्तेति यावदिति। नन्वर्थापत्तेः सामान्यस्य विशेषस्य चाऽऽगमात् सिद्धेः समुच्चितयोः प्रामाण्येन चोदनैवेत्यवधारणाऽसिद्धिरत आह गम्यमानइति[१०९] । सामान्यं हि साधयन्ती अर्थापत्तिः न विशेषं निर्धारयितुमलं, विशेषं तु साधयच्छास्त्रम् अन्तर्णीतसामान्यमेव साधयतीति किं प्रमाणान्तरेणेति ।

शास्त्रं चेत्तदपेक्षेत तस्यैव स्यात्प्रमाणता ॥११०॥
प्रत्यक्षाऽग्रहणं यत्तु लिङ्गादेरविकल्पनात् ।
तन्नेष्टत्वाद्विकल्पस्याप्यर्थरूपोपकारिणः ॥१११॥
अस्ति ह्यालोचना ज्ञानं* प्रथमं निर्विकल्पकम् ।
बालमूकादिविज्ञानसदृशं शुद्धवस्तुजम् ॥११२॥

---

(केचिदिमामेव वैचित्र्यार्थापत्तिम् अनुमामेव कार्यात्कारणगोचरां मन्यन्ते सा ह्यर्थापत्तिवदेव निराकार्येत्याह)† यथेति[११०] । सापि‡ सामान्यमात्रसाधनात् अनुपयोगिन्येव उपमाग्रहणं दृष्टान्त इति । अथ तदेव शास्त्र§मनुमा ऽप्यपेक्षते, ततस्तदेवास्तु प्रमाणं, किमनुपयोगिन्या ऽनुमयेत्याह शास्त्रमिति ।

यत्तु लिङ्गादि न प्रत्यक्षग्राह्यं निर्विकल्पकत्वात् प्रत्यक्षस्येत्युक्तं तदनुभाषते प्रत्यक्षेति[१११] । निराकरोति तन्नेति । कारणमाह इष्टत्वादिति । 'अर्थरूपोपकारिण' इति यो विकल्पः||स्वेनैव रूपेणाऽर्थं विकल्पयति नान्यरूपेण शुक्तिरजतवत्, तस्यापि प्रत्यक्षत्वेनेष्टत्वात् अस्ति प्रत्यक्षलक्षणं¶ लिङ्गादेरिति। यस्त्वपिशब्दमसहमानः सर्वमेव ज्ञानं शब्दाऽनुविद्धत्वात्सविकल्पकमेव न किं चिन्निर्विकल्पकमस्तीति मन्यते, तं प्रत्याह अस्तीति[११२]। बालानामिवाऽव्युत्पन्नानाम-

---

* आलेचनं ज्ञानमिति पाठान्तरम् ।

† ( ) एतन्मध्यस्थो ग्रन्थो नास्ति ३ पु. ।

‡ सो ऽपि इति ३ पु. पा. ।

§ तदेव भाष्यमिति २ पु. पा. ।

|| अर्थरूपोपकारी यो विकल्पस्तेनैवेति ३ पु. पा. ।

¶ प्रत्यक्षमिति २ पु. पा. । प्रत्यक्षग्रहणमिति ३ पु. ।

न विशेषो न सामान्यं तदानीमनुभूयते ।
तयोराधारभूता तु व्यक्तिरेवाऽवसीयते ॥११३॥
महासामान्यमन्यैस्तु द्रव्यं* सदिति चोच्यते ।
सामान्यविषयत्वं च प्रत्यक्षस्यैवमाश्रितम् ॥११४॥
विशेषास्तु प्रतीयन्ते सविकल्पकबुद्धिभिः ।

---

स्माकमपि चक्षुःसन्निपाताऽनन्तरं सविकल्पकात्प्रथममस्ति निर्विकल्पकं प्रतीतिसिद्धमालोचनविज्ञानं शुद्धवस्तुविषयं, तदभावे हि निर्निमित्तं शब्दस्मरणं स्यात्, अस्मृतशब्दस्य च शब्दाऽनुविद्धो विकल्पः† संभवतीति। शुद्धवस्तुजमित्येतद्विवृणोति न विशेष इति[११३]। विशेषो व्यवच्छेदो व्यावृत्तिः, सामान्यं समानत्वम्, अनुवृत्तिरिति यावत्। अनुवृत्तिव्यावृत्ती न निर्विकल्पके प्रकाशेते, तयोस्त्वाधारभूतमनुवृत्तं व्यावृत्तं च यज्जातिव्यक्त्याद्यनेकाकारं वस्तु तत्तदाकारसंयुक्तं संमुग्धं सर्वमवसीयते, तत् शुद्धवस्त्वित्युच्यते। व्यक्तिरिति। वस्त्वित्यर्थः।

वेदान्तिनस्तु महासामान्यमेव सत्ताद्रव्यशब्दाऽभिलप्यनिर्विकल्पकस्य विषयमाहुरित्याह महासामान्यमिति[११४]। एवं च सर्वमेव प्रत्यक्षं सामान्यविषयमाश्रितं भवतीत्याह सामान्येति। निर्विकल्पकमेव चेत्प्रत्यक्षं, कथं तर्हि विशेषप्रतिपत्तिरत आह विशेषा-

---

* स्तद्द्रव्यमिति २ पु. पा.।

† अस्मतशब्दस्य वनशब्दस्य वनशब्दाऽनुविद्धविकल्प इति ३ पु. पा.।

ते च केचित् प्रतिद्रव्यं केचिद्बहुषु संश्रिताः ॥११५॥
तानकल्पयदुत्पन्नं व्यावृत्ताऽनुगतात्मना ।
गव्यश्वे चोपजातं तु प्रत्यक्षं न विशिष्यते ॥११६॥
तदयुक्तं, प्रतिद्रव्यं भिन्नरूपोपलम्भनात् ।
न ह्याख्यातुमशक्यत्वाद्भेदो नास्तीति गम्यते ॥११७॥

---

स्त्विति[११५]। तानेव द्विविधान् विभजते ते चेति। प्रतिद्रव्यवृत्तयः खण्डादिव्यक्तयो, गोत्वादयस्तु बहुष्वनुगताः, ते च सत्तादिमहासामान्यापेक्षया विशेषा इति। तांश्च द्वयानपि विशेषान् व्यावृत्त्यनुगमात्मना स्थितानकल्पयत्* प्रत्यक्षं सन्मात्रविषयमुपजायमानं गवि चाऽश्वे चैकरूपमेव भवतीत्याह तानिति[११६]।

किमिति विशेषान् न कल्पयति, भेदाऽवभासाऽधीनत्वाद्विशेषाऽवभासस्य, तस्य चेतरेतराऽभावरूपस्य प्रत्यक्षेण ग्रहणाऽसंभवात्। अपि चाऽभावपूर्वको वा विशेषाऽवभासो विपरीतं वा, न तावदभावपूर्वकत्वमभावस्य प्रतियोग्याश्रयग्रहणाधीनत्वात्। न हि सद्रूपमेकमेवेतरेतराऽभावस्य प्रतियोगि चाश्रयश्चेति संभवति, नापि विशेषाऽवभासपूर्वको भेदाऽवभासः, भेदाऽनवभासे विशेषाऽनवभासात्। तस्मादनाद्यविद्यानिबन्धनविकल्पविलसिता एव विशेषाः न परमार्थतः सन्ति। एवं चाऽद्वितीयमेकं संविद्रूपमक्षर†मित्यद्वैतश्रुतिः प्रत्यक्षाऽनुगुणैव न प्रत्यक्षविरोधिनी। तदेतद् दूषयति तदयुक्तमिति[११७]। किं खलु भवतो नीलपीतयोस्तिक्तमधुरयोः शीतोष्णयो-

---

* अधिकल्पयदिति २ पु. पा.।
† प्रत्यक्षमिति ३ पु. पा.।

निर्विकल्पकबोधे ऽपि द्व्यात्मकस्यापि वस्तुनः ।
ग्रहणं लक्षणाख्येयं ज्ञात्रा शुद्धं तु गृह्यते ॥११८॥

---

गैवाश्वयोश्चाक्षुषप्रयोगानन्तरम उपजायमानं विज्ञानम् एकरूपमेव, सत्यमिति ब्रुवाणस्य नोत्तरं वाच्यम। यत्त्वितरेतराऽभावो भेद इति, तदस्तु, न त्वत्र भेदग्रहणेन कार्यं, यद्धि नीलाद्भिन्नं पीतं तत्स्वरूपमेव गृह्यते न तु भिन्नतया. येन भेदग्रहणाऽपेक्षा भवेत्; तेन नीलपीतादीनां भिन्नरूपाणां प्रत्यक्षग्रहणे सति पश्चादभावेनेतरेतराऽभावः प्रतीयतइति न कश्चिद्दोषः। अन्यथा सविकल्पकबुद्धिरपि * उपपादयितुं न शक्यते; सत्यं न शक्यते, अत एवाऽविद्येत्युच्यतइति चेत्, नन्वविद्यया ऽप्यशक्यमेव विशेषग्रहणाधीनं भेदग्रहणं तदधीनं च विशेषग्रहणं कथमविद्यया ऽपि निर्णीयेत, न चाऽनादितया बीजाङ्कुरवत् परिहा(रेणाऽपि विशेषो ग्रहीतुं शक्यतइति)रसंभवः † स्वापादुत्थितस्याद्यं विशेषज्ञानं भेदज्ञानं चान्योन्याश्रयत्वान्नालमुत्पत्तुम्; अथ भेदग्रहणमन्तरेणाऽप्यविद्यामात्रेण विशेषग्रहणं, तदिन्द्रियमात्रमेवाऽनपेक्षमस्तु किम् अविद्याग्रहणेनेत्यास्तां तावत् ।

ननु निर्विकल्पकदशायां तावदीदृशमिति भिन्नरूपं नोपाख्यातुं शक्यते, तत् कथं तस्य ग्रहणमत आह न हीति। किमिदानीं भिन्नरूपमेव निर्विकल्पकग्राह्यं, नेत्याह निर्विकल्पकेति[११८] ग्रहणमन्तेन। द्व्यात्मकस्य, सामान्यविशेषात्मकस्येत्यर्थः। सामान्याऽवभासो ऽपि प्रतीतिसिद्ध एव, न हि निर्विकल्पकेनाऽगृहीतस्य सविकल्पकेनापि ग्रहणं संभवति, न वा ऽगृहीते सामान्ये व्यक्त्यन्तरे प्रत्यभिज्ञा

---

* अपिशब्दो नास्ति ३ पु. पा. ।

† ( )एतन्मध्यस्थो ग्रन्थः ३ पु. एव दृश्यते ।

न चाऽसाधारणत्वेन परव्यावृत्त्यकल्पनात् ।
विशेषाऽनुगमाऽक्लृप्तेः सामान्यमिति नापि तत् ॥११९॥
ततः परं पुनर्वस्तुधर्मैर्जात्यादिभिर्यया ।
बुद्ध्या ऽवसीयते सा ऽपि प्रत्यक्षत्वेन संमता ॥१२०॥
करणं चेन्द्रियं बुद्धेर्न तत्र ज्ञानमाहितम् ।
ततः स्मृत्यसमर्थत्वाद्विकल्पो ऽतो न वार्यते ॥१२१॥
आत्मन्येव स्थितं ज्ञानं स हि बोद्धा ऽत्र गम्यते ।

---

संभवति । तस्मात्सामान्यं विशेषश्च निर्विकल्पके ऽपि प्रकाशतएव । ननु 'न विशेषो न सामान्यं तदानीमनुभूयत' इत्युक्तं तत्कथं तयोर्ग्रहणमुच्यते, अत आह लक्षणेति नापि त[११९]दित्यन्तेन । न हीदानीमप्यनुवृत्तिव्यावृत्त्योर्ग्रहणमुच्यते, या त्वियं गृह्यमाणस्य द्व्यात्मकत्वाख्या सा लक्षणाख्या गृह्यमाणस्य वस्तुनो लक्षणमाख्यायते सामान्यविशेषात्मकं तद्वस्त्विति; ज्ञात्रा पुनः शुद्धमेवाऽनुवृत्तिव्यावृत्तिरहितं गृह्यते, न त्वसाधारणत्वेन, परेभ्यो व्यक्त्यन्तरेभ्यो व्यावृत्तेरकल्पनात्, तथा व्यक्त्यन्तराऽनुवृत्तेरकल्पनात् न सामान्यमपि गृह्यते, अतो न विरोध इति ।

एवं निर्विकल्पकं तद्विषयं च व्याख्याय सविकल्पकस्य प्रत्यक्षत्वं पूर्वोक्तं प्रपञ्चयति ततः परमिति[१२०] । ततो निर्विकल्पकादुत्तरकालं जात्यादिभिर्विकल्प्य वस्तु यया बुद्ध्या गृह्यते सा ऽपि प्रत्यक्षमेवेति । यत्तु सविकल्पकस्य स्मृत्यनुविद्धत्वादिन्द्रियस्य स्मृतावसामर्थ्यान्नेन्द्रियजत्वमित्युक्तं, तत्राह करणमिति[१२१] । क तर्हि ज्ञानमाहितमत आह आत्मनीति[१२२] । तत्र कारणमाह स

---

* न स्थिति का. पा. ।

स्मरणे चास्य सामर्थ्ये सन्धानादौ च विद्यते ॥१२२॥
तेनेन्द्रियार्थसम्बन्धे विद्यमाने स्मरन्नपि ।
विकल्पयन् स्वधर्मेण वस्तु प्रत्यक्षवान् नरः ॥१२३॥
तच्चैतदिन्द्रियाऽधीनमिति तैर्व्यपदिश्यते ।
तदसम्बन्धजातं तु नैव प्रत्यक्षमिष्यते ॥१२४॥
पुनः पुनर्विकल्पे ऽपि सती जातिः प्रतीयते ।
तत्संबन्धाऽनुसारेण सर्वं प्रत्यक्षमिष्यते* ॥१२५॥

---

हीति । ततः किमित्याह स्मरणइति । तथापि कथं स्मरणोपेताऽक्षव्यापारजन्यस्य सविकल्पकस्य प्रत्यक्षत्वमत आह तेनेति[१२३]। पुरुषो हि पूर्वदृष्टं जात्यादि कालान्तरे चक्षुरादिभिर्गृहीत्वा तस्य पूर्वदर्शनं मनसा स्मृत्वा तदिदमित्यनुसंधायाऽनुपरतेन्द्रियव्यापारः पुरः स्थितम् अर्थं विकल्पयन् प्रत्यक्षवानेव, तदानीमपीन्द्रियव्यापारस्याऽविरमादिति ।

नन्विन्द्रियमात्रजं प्रत्यक्षम्, इदं तु स्मरणसहितेन्द्रियजं, कथमिन्द्रियव्यपदेश्यमत आह तच्चैतदिति[१२४] । इन्द्रियजं प्रत्यक्षं न तन्मात्रमिति । अक्षाऽसंबद्धाऽर्थविषयकस्या† ऽस्माभिरपि नैव प्रत्यक्षत्वमिष्यतइत्याह तदिति । तत्संबन्धाऽनुसारिणस्तु बहवो विकल्पाः पुनः पुन‡रपि जायमाना न प्रत्यक्षतामतिवर्तन्तइत्याह पुनः पुनरिति[१२५] । नन्वक्षतश्चेद्विकल्पः किमिति प्रथमाऽक्षसंनिपात-

---

* इदमर्धं नास्ति का. पु. ।

† विषयविकल्पस्येति ३ पु. पा. ।

‡ पुनरिति सकृत् ३पु. ।

न हि प्रविष्टमात्राणामुष्णाद् गर्भगृहादिषु ।
अर्था न प्रतिभान्तीति गृह्यन्ते नेन्द्रियैः पुनः ॥१२६॥
यथा त्वाभासमात्रेण पूर्वं ज्ञात्वा स्वरूपतः ।
पश्चात्तत्राऽवबुध्यन्ते तथा जात्यादिधर्मतः ॥१२७॥
यदि त्वालोच्य संमील्य नेत्रे कश्चिद्विकल्पयेत् ।
न स्यात् प्रत्यक्षता तस्य सम्बन्धाऽननुसारतः ॥१२८॥
असम्बन्धविकल्पे ऽपि तुल्यमात्मादि कारणम् ।
तेन साधारणत्वं स्यादत्राऽक्षस्यैव कल्पने* ॥१२९॥
निर्विकल्पकबोधे ऽपि नाऽक्षं केवलकारणम् ।

---

पत्र न जायते, ऽतो नाऽक्षज इत्यत आह न हीति[१२६] । यदि तु तत्र प्रथममेवाऽस्फुटाऽवभासं विज्ञानमस्तीत्युच्यते, तदिहापि समानमित्याह यथा त्विति[१२७] । यदा चैवं स्मृत्युत्तरकालम इन्द्रियव्यापाराऽनुपरमात्प्रत्यक्षत्वं तदा यत्परैरुक्तं, स्मरणव्यवहितस्यापि सविकल्पकस्येन्द्रियव्यापारसंनिधिमात्रेण प्रत्यक्षत्वे सत्यालोच्य निमील्याऽवस्थितस्य विकल्पयतो विकल्पः प्रत्यक्षं स्यादिति, तत्र प्रसज्यतइत्याह यदि त्विति[१२८] । नन्वनेककारणकं सविकल्पकं किमक्षेणैव व्यपदिश्यतइत्यत आह असंबद्धेति[१२९] । अक्षाऽसंबद्धविषये अनुमानादिविकल्पे† ऽप्यात्मादेः साधारणत्वादपरोक्षविकल्पे ऽक्षस्याऽसाधारणत्वात्तेनैव व्यपदेश इति । तुल्यं चेदं निर्वि-

---

* कल्पते इति पाठान्तरम् ।

† विषयेष्वनुमानादिविकल्पेष्विति ३ पु. पा. ।

तत्पारम्पर्यजाते वा रूढिः स्यात् पङ्कजादिवत् ॥१३०॥
अनिमित्तैव वा रूढिः सुतरां सविकल्पकम् ।
प्रत्यक्षं संमतं लोके न तथा निर्विकल्पकम् ॥१३१॥
वृद्धप्रयोगगम्याश्च शब्दार्थाः सर्वएव नः ।
तेन यत्र प्रयुक्तो ऽयं न तस्मादपनीयते ॥१३२॥
सिद्धाऽनुगममात्रं हि कर्तुं युक्तं परीक्षकैः ।
न सर्वलोकसिद्धस्य लक्षणेन निवर्तनम् ॥१३३॥
कल्पनायाः स्वसंवित्तात्विन्द्रियाधीनता कथम् ।

---

कल्पके ऽपीत्याह निर्विकल्पेति[१३०] ।

एवमक्षव्यापाराऽनुपरमात् प्रत्यक्षत्वमुक्तम् । अस्तु वा निर्विकल्पकोत्पत्तौ* निवृत्तव्यापारत्वमक्षस्य, तथापि परंपरया तावदक्षजत्वं, तावतापि प्रत्यक्षत्वोपपत्तिः । किं चैवमनुमानादीनामपि प्रत्यक्षत्वं स्यादिति तन्निवृत्त्यर्थं रूढिरभ्युपगम्यते, यथा परंपरया पङ्काज्जननम्† उत्पलादिसाधारणमिति तन्निवृत्तये पद्मविषये पङ्कजशब्दस्य; तदिदमाह तत्पारंपर्येति । अनिमित्तैव वा सविकल्पे रूढिरस्तु, वृद्धव्यवहारे सुतरां तत्रैव प्रयोगादिति आह अनिमित्तैवेति[१३१] । ननु सत्यपि वृद्धप्रयोगे तन्निवृत्त्या परीक्षकैर्निर्विकल्पकमेव प्रत्यक्षमाश्रीयते, ऽत आह वृद्धेति[१३२] । किमिति नाऽपनीयते ऽत आह सिद्धेति[१३३] । यदि नाऽक्षजं सविकल्पकं ततः कल्पना ऽपि स्वसंवित्तौ दृष्टा नार्थे विकल्पनादिति यदस्यां स्वसंवित्तौ

---

* निर्विकल्पकं जनित्वा सविकल्पकोत्पत्ताविति २ पु. पा. ।

† जातत्वमिति २ पु. पा. ।

मनस्तत्रेन्द्रियं चेत् स्याद्गोत्वादावपि तत्समम् ॥१३४॥
स्वसंवित्तौ तदिष्टं चेल्लोको न ह्येवमिच्छति ।
तस्माद्रूढित्वमेष्टव्यं पारिभाषिकता ऽपि वा ॥१३५॥
मनसस्त्विन्द्रियत्वेन सुखदुःखादिबुद्धिषु ।
यथा प्रत्यक्षतैवं नस्तदधीना भविष्यति ॥१३६॥

---

प्रत्यक्षत्वमिष्टं तदपि न स्यादित्याह कल्पनाया इति[१३४] ।

अथेन्द्रियजनिर्विकल्पकसमनन्तरप्रत्ययाख्यमनोजन्यतया तत्र प्रत्यक्षं ततो गोत्वादिविषये ऽपि तस्याः प्रत्यक्षत्वं मनोजन्यतयैव भविष्यति, मनःस्वरूपं तदुक्तमन्यद्वेत्यन्यदेतदित्याह मन इति । बाह्ये मनसः प्रवृत्त्ययोगात्स्वसंविद्रूपस्यैव मानसप्रत्यक्षत्वमिति शङ्कते स्वसंवित्ताविति[१३५]। दूषयति लोक इति । लोको हि गोत्वादिविषये ऽपि मनसः प्रत्यक्षहेतुत्वमिच्छति, संविदश्च बहिर्विषयत्वं मन्यते न स्वसंवित्तिप्रत्यक्षत्वम, अतो बहिरेव सविकल्पस्य प्रत्यक्षत्वमङ्गीकर्त्तव्यं, तत्र यदि मनो न बहिर्वर्त्तते चक्षुर्व्यापारस्य च व्यवहितत्वं, तथा च रूढिर्वा परिभाषा वा ऽङ्गीक्रियतां न त्वप्रत्यक्षत्वं, लोकविरोधादित्याह तस्मादिति । अथ वा निर्विकल्पकसहायं मनो बहिः प्रवर्त्स्यति, तथापि च मनोजन्यता ऽस्त्येवेति तदधीनसुखादिबुद्धिवत् प्रत्यक्षता भविष्यतीत्याह मनसस्त्विति[१३६] ।

नन्वन्यसहितमनोजन्यत्वमनुमादीनामप्यस्त्येवेति तेषामपि प्रत्यक्षत्वं स्यादित्यत आह तदधीनेति । यथा मनोजन्यत्वे समाने ऽपि सविकल्पकस्य कल्पनाऽपोढलक्षणाश्रयणेन किं चिदेव स्वसंवेदनं प्रत्यक्षमिष्टं न गोत्वादिसंवेदनं, तथा ऽस्माकमपि मनो-

तदधीनत्वसाम्ये ऽपि कल्पनाऽपोढशब्दनात् ।
प्रत्यक्षं किञ्चिदेवेष्टं यथा तत्र तथैव नः ॥१३७॥
लिङ्गाद्यभावतश्चापि नाऽनुमानादिधीरियम् ।
बाधकप्रत्ययाऽसत्त्वान्नाऽप्रामाण्यं च युज्यते ॥१३८॥
न च पर्वमदृष्टत्वात् स्मृतित्वमुपपद्यते ।
तस्मात् प्रत्यक्षमेवेदं व्यवहारस्तथैव च ॥१३९॥
जात्याद्यर्थान्तरं यस्मादतद्रूपे ऽपि वस्तुनि ।

---

जन्यत्वे समाने ऽप्यपरोक्षावभासमेव ज्ञानं प्रत्यक्षं नाऽन्यदिति । पारिशेष्यादपि सविकल्पकस्य प्रत्यक्षत्वं बाधाऽभावाच्च नाऽप्रामाण्यमित्याह लिङ्गादीति[१३८] । अथ निर्विकल्पकस्य प्राप्तप्रापकत्वात् स्मृतिरियमुच्यते, ऽत आह न चेति[१३९] । भवन्मते तावन्निर्विकल्पकेनाऽगृहीतमेव सामान्यम्, अस्माकमपि क्षणान्तरसंबन्धस्याऽगृहीतस्य ग्रहणान्न स्मृतित्वमिति । पारिशेष्यात्प्रत्यक्षत्वमेवेत्युपसंहरति तस्मादिति ।

भवतामपि यो ऽनुमानस्य प्रत्यक्षविरोधादिव्यवहारः स तथैव सविकल्पकस्य सामान्यग्राहिणः प्रत्यक्षत्वे सत्येवाऽवकल्पते नाऽन्यथेत्याह व्यवहार इति । स्वलक्षणमात्रं हि सर्वसामान्यसहम्, अतो यत्तद्विषयं प्रत्यक्षं तद्यत्किंचिदपि सामान्यमनुमादिगम्यं न बाधते, यथा संतमसे गोः स्वलक्षणमेव गृह्णदपि प्रत्यक्षं गोत्वाऽनवधारणात् नाऽश्वत्वाऽनुमानस्य बाधकम्, एवमालोके ऽपि प्रत्यक्षं तन्मात्रमेवाऽनधिकं गृह्णदश्वत्वं तस्मिन्नेव स्वलक्षणे ऽनुमीयमानं बाधेतेति ।

यदुक्तं नेदमनुमानं न स्मृतिरिति, तत्सत्यं, नाऽप्रमाणमिति यदुक्तं तन्न मृष्यामहे, इति चोदयति जात्यादीति[१४०] । जातिगुणक्रिया-

भवत्यध्यस्य धीस्तस्मान्मृगतृष्णादिभिः समा ॥१४०॥
नैतदश्वादिबुद्धीनामध्यारोपाद्यसंभवात् ।
स्थितं नैव हि जात्यादेः परत्वं व्यक्तितो हि नः ॥१४१॥
यदि ह्येकान्ततो भिन्नं विशेष्यात् स्याद्विशेषणम् ।
स्वाऽनुरूपां सदा बुद्धिं विशेष्ये जनयेत् कथम् ॥१४२॥
स्फटिकादौ तु लाक्षादिस्वरूपा या मतिर्भवेत् ।
अव्युत्पन्नस्य सा मिथ्या व्युत्पन्नानां हि भेदधीः ॥१४३॥

---

नामधेयानि व्यक्तेरर्थान्तरभूतानि, अनर्थान्तरत्वे व्यक्तिमात्रत्वापरो- जात्यादीनामभावप्रसङ्गात्तानि व्यक्त्यात्मतया सविकल्पकेन गृह्यन्ते, गौरयं दण्ड्ययं शुक्लो ऽयं गच्छत्यपण्डितो ऽयमिति। तेनाऽर्थान्तरमर्थान्तरात्मतया ऽध्यवस्यदूषरमिव सलिलतया मिथ्यैव सविकल्पक मिति । परिहरति नैतदिति[१४१]। कथमसंभवो, ऽत आह स्थितमिति। नामधेयेनैव तावत्ताद्रूप्यप्रतीतिरिस्तीति वक्ष्यामः, जात्यादित्रयस्याऽनर्थान्तरत्वमेकान्ततो जात्यादेः स्यात्, सर्वदैव सर्वेषामियं गौरिति गोत्वात्मिकैव व्यक्तिः प्रतीयते, न चेयं प्रतीतिरैकान्तिके भेदे ऽवकल्पते, इयमेव च प्रतीतिर्जातौ प्रमाणं नाऽन्यत्, इयं च जात्यात्मिकामेव व्यक्तिं गमयति, न चास्याः किं चिद्बाधकमस्तीति पारमार्थिकमेव तादात्म्यमिति नाऽप्रामाण्यमिति ।

ननु भिन्नमेव लाक्षादिकं स्वाऽनुरूपां बुद्धिं मिथ्याभूतां स्फटिके जनयति, तथा जात्यादिकमपि किं न स्यादित्यत उक्तं सदेति[१४२]। तद्विवृणोति स्फटिकादाविति[१४३]। कदा चिदेव तद्रूपं स्फटिकमजा-

न तु* जात्यादिनिर्मुक्तं वस्तु दृष्टं कदा चन ।
तद्विमोकेन वा तानि लाक्षादिस्फटिकादिवत् ॥१४४॥
तत्रापि† चेन्न दृश्येत भेदः कैश्चित् कदा चन ।
रक्तादिबुद्धिसम्यक्त्वं विनिवार्येत केन वा ॥१४५॥

---

तद्विवेकैर्गृह्यते न सर्वदा, व्युत्पन्नानां भेदावगमादिति; गोत्वानुरूपां तु व्यक्तिं सर्वदाऽवगच्छन्ति, न हि जात्यादिरूपत्वं व्यक्तेः व्यक्तिरूपत्वं वा जात्यादीनां कदा चिद्बाध्यते, लाक्षास्फटिकयोरिवेतरेतरात्मकत्वमित्याह न त्विति[१४४] । ननु वस्तुविमोकेन व्यक्त्यन्तरेऽपि जात्यादीनि दृश्यन्ते, वस्त्वपि बदरादिफलं श्यामत्वनिर्मुक्तं पकावस्थायां रक्तगुणं दृश्यते; सत्यम्, अत एव जात्यादीनां द्रव्याद्भेदो ऽभ्युपगम्यते । कथं तर्हि न विमोको दृष्ट इत्यत आह तद्विमोकेनेति । तादात्म्यप्रत्ययस्य बाधो न दृष्ट इत्यर्थः । न हि व्यक्त्यन्तरेऽपि गोत्वं पश्यन् पूर्वव्यक्तेर्गवात्मकत्वं मिथ्या मन्यते, सोऽपि गौरयमपि गौरिति प्रतिभासात्, तथा फलेऽपि रक्तप्रत्ययो न पूर्वसंजातं श्यामप्रत्ययं बाधते, पूर्वं श्याममेवेदानीं रक्तमित्यवगमात्; लाक्षास्फटिकयोस्तु तादात्म्यं बाधतएवेति । बाधाऽभावे तु तत्रापि नाऽप्रामाण्यमित्याह तत्रापीति[१४५] ।

वैशेषिकास्तु जात्यादीनां व्यक्तेश्चैकान्तभेदमेवाऽङ्गीकृत्य समवायसंबन्धं मन्यन्ते, यथोक्तम् 'अयुतसिद्धानामाधार्याधारभूतानामिहप्रत्ययहेतुर्यः संबन्धः स समवाय' इति, युतसिद्धिः पृथक्सिद्धिः,

---

* न हीति २ पु. ।

† अत्रापीति का. पा. ।

न चाऽप्ययुतसिद्धानां सम्बन्धित्वेन कल्पना ।
नाऽनिष्पन्नस्य सम्बन्धो निष्पत्तौ युतसिद्धता॥१४६॥
तथा च सति* सम्बन्धे हेतुः कश्चिन्न विद्यते ।
षण्णामपि† न सम्बन्धः पदार्थानां प्रतीयते ॥१४७॥
समवायवियोगाच्च विश्लेषः स्यात् परस्परम् ।
तत्क्लृप्ताव्यवस्था स्यात् तस्य तस्याऽन्यसङ्गतेः॥१४८॥

---

न युतसिद्धिरयुतसिद्धिः; तान्निराकरोति न चापीति[१४६]। किमिति न कल्पनेत्यत आह नेति । न तावदनिष्पन्नस्य सामान्येन संबन्धः संभवति संबन्ध्याधारत्वात्संबन्धस्य तदभावे ऽनुपपत्तेरिति। निष्पत्तौ वा पृथक्सिद्धेः अयुतसिद्धेरनुपपत्तिरित्याह निष्पत्ताविति । युतसिद्धत्वे वा को दोषो ऽत आह तथा चेति[१४७]। न ह्यसंबद्धायां व्यक्तौ निष्पन्नायां पश्चात्समवायाख्यसंबन्धलाभे कश्चिद्धेतुरस्तीति ।

यदा चैवं धर्मधर्मिणोः संबन्धो न लब्धः तदा धर्माणामपि तन्निबन्धनस्यैकार्थसमवायसंबन्धस्याऽभावात् षण्णामपि द्रव्यादिविशेषपर्यन्तानामसंबन्ध एवाऽऽपन्न इत्याह षण्णामपीति । किं चाऽस्य समवायस्य धर्मधर्मिभ्यां वियोगादसंबन्धान्न तद्वशेन धर्मधर्मिणोः संश्लेषः स्यादित्याह समवायेति[१४८]। यदि त्वस्त्येव समवायस्य समवायिभ्यां धर्मधर्मिभावः संबन्धः, ततस्तस्यापि संबन्धस्य संब-

---

* तथा सति चेति २ पु. पा. ।

† तस्माच्चापीति पाठान्तरम् ।

अथ तस्याऽऽत्मरूपत्वान्नाऽन्यसम्बन्धकल्पना ।
अभेदात्समवायो ऽस्तु स्वरूपं धर्मधर्मिणोः ॥१४९॥
न हि स व्यतिरिक्तः सन् सम्बन्धं प्रतिपद्यते ।
तस्मिंस्ताभ्यामभिन्ने तु न नानात्वं तयोर्भवेत् ॥१५०॥
ननु धर्माऽतिरेकेण धर्मिणो ऽनुपलम्भनात् ।
तत्सङ्घमात्र एवायं गवादिः स्याद्वनादिवत् ॥१५१॥
आविर्भावतिरोभावधर्मकेष्वनुयायि यत् ।

---

न्धान्तरकल्पनादनवस्थेत्याह तत्क्लृप्ताविति । शङ्कते अथेति[१४९] । धर्मधर्मिरूपत्वात्ताभ्यां समवायस्याऽभिन्नत्वान्न संवन्धान्तरकल्पनेति । दूषयति अभेदादिति । एवं तर्ह्यभेदस्याऽङ्गीकृतत्वाद्धर्मधर्मिणोरेवाऽभेदमङ्गीकृत्य तयोरेव समवायसंज्ञा ऽङ्गीक्रियतां यद्यवश्यं तया प्रयोजनं, न तु तद्व्यतिरिक्तसमवायाङ्गीकरणं युक्तं, यच्चाऽपृथग्गतिमत्त्वादिकं समवायात्मकतया कथितं, तत् शास्त्रदीपिकायामाकृतिग्रन्थे दूषितमिति । कारणमाह न हीति[१५०] । पूर्वोक्तमेवैतदनवस्थापत्तिरिति । अभेदपक्षे चाऽभिन्नेनाऽभेदाद्धर्मधर्मिणोरभेदापत्तिरित्याह तस्मिन्निति ।

यदुक्तं 'ततः परं पुनर्वस्त्वि'ति, तदाक्षिपति नन्विति[१५१] । न हि रूपादिधर्मेभ्यो ऽन्यो धर्मी विद्यते, यो जात्यादिभिर्विशिष्टो गृह्येत, रूपादिसंघातमात्रमेव गवादिकं वृक्षसंघातमात्रमिव वनं नाऽन्यत्, अनुपलम्भादुपलम्भकारणाऽसंभवाच्च; यथाहुः—

> घ्राणादीनि चक्षुरादीनि रूपादिष्वेव पञ्चसु ।
> न षष्ठमिन्द्रियं तस्य ग्राहकं विद्यते बहिः ॥ इति ।

न चाऽसत्यपि बहिरिन्द्रिये ऽन्तःकरणेन गृह्यतामिति वाच्यम् । तस्य बहिरस्वातन्त्र्यादिति । परिहरति आविरिति[१५२] । रक्तत्वह-

तद्धर्मि यत्र वा ज्ञानं प्रागधर्मग्रहणाद्भवेत् ॥१५२॥
अतो जात्यादिरूपेण धर्मि यद्गृह्यते नरैः ।
पाररूप्यं न तस्यास्तीत्यप्रामाण्यं न युज्यते ॥१५३॥
'यस्यापि व्यतिरेकः स्याद्धर्मेभ्यो धर्मिणः स्फुटः ।
नित्यं तस्यापि ताद्रूप्यान्न मिथ्यात्वं प्रसज्यते ॥१५४॥
स मिथ्या न तु तेनैव यो नित्यमवगम्यते ॥१५५॥

---

रितत्वादिधर्मेष्वाविर्भावतिरोभावधर्मकेषु यद्वदरफलमवस्थाद्वयाऽनुयायि प्रत्यभिज्ञायते,यद्वा पिण्डघटकपालाद्यवस्थास्वनुगतमवस्थावत्, यद्वा सन्तमसे बलाकापङ्क्तौ प्रागेव शुक्लरूपग्रहणाद् गृह्यते, तद्धर्मि; न हि तदभावे प्रत्यभिज्ञा संभवति, धर्माणां भिन्नत्वाद्दर्शनस्पर्शनाभ्यां च ग्रहणमिति न ग्राहकाभाव इति । प्रकृतं सविकल्पकस्य प्रामाण्यमुपसंहरति अत इति[१५३] । भवतु वा ऽत्यन्तभेदो धर्मधर्मिणोः, तथापि नाऽप्रामाण्यमित्याह यस्यापीति[१५४] द्वयेन। नित्यं ताद्रूप्याद्बाधकाऽभावात्संवेद्येताऽन्यथा पुनरिति बाध्येतेत्यर्थः । कथं पुनर्भिन्नयोरभेदप्रतीतिरमिथ्या स्यात्, सत्यं, न त्वयं गौरिति प्रतीतिरभेदप्रतीतिः, न ह्ययं गौरिति च गौरेवायमिति च बुद्धिद्वयं पर्यायरूपं गम्यते; अतः समवाय एवायमेवं प्रतीयते, येनेत्थंभावेन धर्मिणो धर्मः प्रतीयतइति भेदवादिनो मतिरिति ।

ननु दर्शनस्पर्शनाभ्यां गृह्यमाणं द्रव्यं ग्राहकभेदाद् रूपादिवद्भिद्येत, यदि सत्यपि ग्राहकभेदे न भिद्यते, रूपादयो ऽपि न तद्वदेव मिथो भिद्येरन् । पञ्चभिरक्षैर्ग्राह्यं सत्तासामान्यम एकं दृष्टमिति चेत्, न, तस्याऽनैन्द्रियकत्वात्, सर्वसामान्यानां सविकल्पकविलसितत्वात् ।

न चा*ऽनेकेन्द्रियग्राह्यं भिन्नतां प्रतिपद्यते' ।
मा भूद्भिन्नशरीरस्य ग्राह्यत्वाद्भिन्नरूपता ॥१५६॥
जात्यभेदादभेदश्चेदिन्द्रियत्वेन तत्समम् ।
तुल्यबुद्धेरतो भिन्ना न सत्तेन्द्रियभेदतः ॥१५७॥
बुद्धिभेदाच्च नैकत्वं रूपादीनां प्रसज्यते ।
एकाऽनेकत्वमिष्टं वा सत्तारूपादिरूपतः ॥१५८॥

---

इन्द्रियसंकरे वा ऽनेकत्ववैयर्थ्यं स्यात् । एकमेव त्वगिन्द्रियं भिन्नेष्वपि विषयेषु पञ्चसु शक्तिमदङ्गीक्रियताम् । तदुक्तम्—

नैकं रूपाद्यभेदो वा दृष्टं चेन्नेन्द्रियेण तत् ।
अक्षाऽनेकत्ववैयर्थ्यं स्वार्थे भिन्ने ऽपि शक्तिमत् ॥ इति ।

अत आह न चेति[१५६] । अनैकान्तिको हेतुरित्याह मा भूदिति । नाऽनैकान्तिको हेतुरिति शङ्कते जात्यभेदादिति[१५७] । चक्षुष्ट्वजातेरेकत्वान्न रूपस्याऽनेकेन्द्रियग्राह्यतेति । परिहरति (इन्द्रियत्वेनेति । यथा रूपगोचराणां चक्षुष्ट्वेन एकत्वं तथा दर्शनस्पर्शनयो रपि) † इन्द्रियत्वेनैकत्वाद्द्रव्यस्यापि नाऽनेकेन्द्रिय (ग्राह्यत्वम् इति असिद्धो हेतुः स्यात्, तेनैकबुद्धिग्राह्यत्वात् एकमेव द्रव्यं ग्राहकभेदस्वतन्त्रमिति । अत एव पञ्चेन्द्रिय) ‡ गोचरो ऽपि सत्ता तुल्यबुद्धिगम्यत्वाद्भिन्ना भवति, अन्यथा सा ऽपि भिद्येतेत्याह तुल्यबुद्धेरिति । यत्तु 'नेन्द्रियेण त'दित्युक्तं, तदयुक्तम्, ऐन्द्रियकं हि सामान्यं स्थापितमिति ।

'रूपाद्यभेदो वे'ति यदुक्तं, तत्राह बुद्धिभेदादिति[१५८] । 'नैकं रूपाद्यभेदो वे'त्यत्रोभयत्रापि सिद्धसाध्यता शक्या वक्तुमित्याह एके-

---

* न देति का. पा. । † ( ) एतन्मध्यगो ग्रन्थो नास्ति २ पु. ।
‡ ( ) एतन्मध्यस्थो ग्रन्थो न दृश्यते ३ पु. ।

क्व चिच्च सङ्करान्नाऽक्षमेकमित्यवसीयते ।
दार्ढ्यदौर्बल्यभेदेन व्यस्था ऽपि यतः क्व चित् ॥१५९॥
'यथा हि मनसः सार्धं रूपादौ चक्षुरादिना ।
प्रवृत्तिः सुखदुःखादौ केवलस्यैव दृश्यते* ॥१६०॥
न क्व चित्सङ्कराऽभावात्सर्वत्रैव निवर्तते ।
क्व चिच्च† सङ्करं दृष्ट्वा सङ्करो ऽन्यत्र कल्प्यते' ॥१६१॥

---

ति । रूपादीनां सद्रूपतयैकत्वं, द्रव्यस्यापि रूपाद्यात्मना ऽनेकत्वमिष्टमेवेति ।

अक्षाऽनेकत्ववैयर्थ्यं परिहरति क्व चिदिति[१५९] । कारणमाह दार्ढ्येति । प्रबलचक्षुर्दुर्बलश्रोत्रो रूपं गृह्णाति न शब्दं, विपरीतस्तु विपरीतं, सेयं व्यवस्था ऽक्षैकत्वे ऽनुपपन्नेति सत्यपि द्रव्यविषये संकरे नाऽक्षाऽनेकत्ववैयर्थ्यमिति । नन्वक्षाणां संकरे द्रव्यइव रूपादिष्वपि संकरः स्यात्तत्राह यथा हीति[१६०] द्वयेन । न हि यदेकत्र दृष्टं तदन्यत्राऽदृष्टमपि भवति, यथा तावन्मनसो रूपादिग्रहणे चक्षुरादिसहायस्य प्रवृत्तिः स्मृतिसुखादौ केवलस्य, तथा चक्षुरादेरपि रूपादिष्वसंकरो द्रव्ये च संकरो भविष्यति, न सर्वत्रैकरूप्यमिति ।

कथं पुनर्मनस एव रूपादिग्रहणे चक्षुरादिसहायस्य प्रवृत्तिः

---

* गम्यते इति का. पा. ।

† क्व चिद्वेति २ पु. पा. ।

श्रोत्रादेरुपघाते ऽपि शब्दादिस्मृतिदर्शनात् ।
वर्तमानस्य चाऽज्ञाना*द्व्यवस्था संप्रतीयते ॥१६२॥
एकं यदि भवेदक्षं सर्वं†गृह्येत वा न वा ।
कल्प्यते शक्तिभेदश्चेच्छक्तिरेवेन्द्रियं भवेत् ॥१६३॥
शृणुयाद्बधिरः शब्दं सङ्करे चक्षुरादिना ।

---

स्मृतिसुखादौ केवलस्येति व्यवस्था गम्यते, ऽत आह श्रोत्रादेरिति[१६२] । श्रोत्रादिरहितस्याऽपि बधिरादेः शब्दादिस्मरणं सुखाद्युपलब्धिश्च दृश्यतइति तत्र श्रोत्राद्यनपेक्षत्वं, वर्त्तमानस्य च शब्दादेरग्रहणात्तत्र श्रोत्रादिसापेक्षत्वं मनसो ऽवगम्यतइति । एवं दार्ढ्यदौर्बल्यवशाद्रूपाद्युपलब्धिव्यवस्था दर्शिता, यथा तु तया ऽक्षानेकत्वं सिध्यति तथा दर्शयति एकमिति[१६३] ।

यत्तूक्तं 'स्वार्थभिन्ने ऽपि शक्तिम'दिति, तदाशङ्कते कल्प्यतइति । परिहरति शक्तिरेवेति । शक्तिपञ्चकं तावत्कल्पनीयमिन्द्रियस्थानीयं तत्र तद्वा कल्पनीयमिन्द्रियपञ्चकं वेति न विशेषः । ननु धर्मिकल्पनाद्धर्मकल्पना लघीयसी, सत्यम्, इह तु क्लृप्तमेव पृथिव्यादिपञ्चकं तत्र पञ्चानां शक्तिपञ्चककल्पने दृष्टानुगुण्यं प्रागेव दर्शितम्, एकस्य तु वायवीयस्य त्वगिन्द्रियस्य शक्तिपञ्चककल्पनं दृष्टाऽननुगुणत्वादयुक्तमिति । यदुक्तं 'क्व चिद्वा संकरं दृष्ट्वा रूपादावपि संकरो न युक्तो व्यवस्थादर्शना'दिति, तस्य व्यतिरेकमाह शृणुयादिति[१६४] । संकरे व्यवस्था न स्यादिति ।

---

* वा ज्ञानादिति का. पा. ।

† सर्वमिति २ पु. पा. ।

मनसो वा स्वतन्त्रत्वे वर्तमानाऽर्थबुद्धिषु ॥१६४॥
न स्मरेद्बधिरः शब्दं श्रोत्रं चेत्स्मृतिकारणम् ।
स्मृतिवद्वा भवेदस्य वर्तमानाऽर्थधीरपि ॥१६५॥
'स्मृतिश्च न भवेत्पश्चाद् गृह्णीयात्तन्न चेन्मनः ।
श्रोत्रग्रहणवेलायां' न च सर्वा स्मृतिर्भवेत् ॥१६६॥

---

यत्तु वर्त्तमानस्याऽज्ञानान्मनसो बहिरस्वातन्त्र्यमुक्तं, तस्य व्यतिरेकमाह मनस इति । शृणुयाद्बधिरः शब्दमित्यनुषङ्गः, तस्यापि मनो ऽस्तीति ।

यत्तु श्रोत्रादेरुपघाते ऽपि शब्दादिस्मृतिदर्शनात्तत्र श्रोत्राद्यनपेक्षं मनः स्वतन्त्रमित्युक्तं, तस्य व्यतिरेकमाह न स्मरेदिति[१६५]। अथाऽसत्यपि कारणे स्मृतिः स्याद्, वर्त्तमानोपलब्धिरपि स्यादित्याह स्मृतिवदिति ।

ननु वर्त्तमानः शब्दादिः श्रोत्रादिभिरेव गृह्यतां, किं तत्र मनसा, ऽत आह स्मृतिश्चेति[१६६] पादत्रयेण । यत् खलु मनसा स्मर्यते तद्ग्रहणे ऽपि मनोव्यापारो दृष्टः, यथा सुखादेः, शब्दादिकमपि मनसैव स्मर्यते, सर्वस्मरणानां मानसत्वात् अत शब्दादिग्रहणे ऽपि मनोव्यापारो ऽनुमीयते, तत्र च स्वातन्त्र्ये बधिरादरपि शब्दादिग्रहणप्रसङ्गात् श्रोत्राद्यपेक्षैव मनःप्रवृत्तिरवधार्यते; किं च, विषयाऽन्तरव्याक्षिप्तमनस्कस्य चक्षुरादिसंयुक्तेष्वपि रूपादिषु ज्ञानाऽनुदयादस्ति तत्रापि मनोव्यापार इति निश्चीयते; तथा शब्दादिषु गृह्यमाणेषु तद्व्यतिरिक्तेष्वर्थान्तरेषु सर्वेषु स्मरणं न जायते, तदवगम्यते नूनं तद्ग्रहणे मनो व्यापृतमिति; इतरथा त्वव्यापृतं मनो ऽर्थान्तरेष्वपि सर्वेषु स्मृतिमा-

बोधात्मकतया पुंसः सर्वत्र ग्रहणं भवेत् ।
युगपद्विषये ऽप्यस्य करणाऽपेक्षिता न चेत् ॥१६७॥
तस्माज्ज्ञानाऽनुसारेण व्यवस्थासङ्करौ क चित् ।
ग्राह्यग्राहकशक्तिभ्यः कार्यद्वारेण कल्पितौ ॥१६८॥
चक्षूरूपादिभेदस्तु पञ्चधैव व्यवस्थितः ।

---

दधीतेति न सर्वा स्मृतिः सिध्ये*दित्याह न चेति । श्रोत्रग्रहण-वेलाया†मित्यनुषङ्ग इति ।

ननु बोधस्वभावः पुरुषो ऽन्याऽनपेक्ष एव विषया‡नान्तरान् बाह्यांश्च जानाति, किमस्यान्तःकरणेन बहिःकरणेन वा, तत्राह बोधेति[१६७]। यदि बोधस्वभावतया पुरुषो विषयेषु बोद्धव्येषु करणं नाऽपेक्षते ततः सर्वदा सर्वं जानीयात्, ततो ऽस्त्यन्यापेक्षा, ततश्च बाह्येषु रूपादिषु चक्षुरादीनां करणत्वमन्वयव्यतिरेकाभ्यामनुमीयते, सुखादिवेदनस्य तु किं चित्करणमनुमीयते, तत्र लिङ्गादीनामसंभवात्तज्जन्यत्वे चाऽपरोक्षत्वानुपपत्तेरिन्द्रियमेवेति निश्चीयते, तत्तु मन उच्यते। ननु शरीरमेव मनो ऽस्तु, न, इन्द्रियत्वेन नेत्रादिवत् तद्व्यतिरेकानुमानादिति ।

प्रकृतमुपसंहरति तस्मादिति[१६८] । ज्ञानाख्यकार्यद्वारेण ग्राह्यग्राहकशक्तयः, ताभ्यः क चिद्रूपादावसंकरः क चिद् द्रव्यादौ च संकर इति । किमिति तर्हि रूपादीनामिव रूपविशेषाणामपि नीलपीतादीनामिन्द्रियभेदो न कल्प्यते, अत आह चक्षूरूपादीति[१६९]।

---

* साध्येदिति २पु. पा. ।

† वेलामिति २ पु. पा. ।

‡ एकविषयानिति २ पु. पा ।

तेन नीलादिभेदे ऽपि नेन्द्रियाऽऽनन्त्यकल्पना ॥१६९॥
तस्मात् पञ्चभिरप्यक्षैर्बोधः सत्तागुणत्वयोः ।
द्रव्यमूर्तौ पुनर्द्वाभ्यां रूपादावेकशः स्थितिः ॥१७०॥
ननु जात्यादिरूपे ऽपि शब्दाऽभेदोपचारतः ।
प्रवर्तमाना मिथ्या स्याद्बुद्धी रूपेषु बुद्धिवत् ॥१७१॥
न शब्दाऽभेदरूपेण बुद्धिरर्थेषु जायते ।
प्राक् शब्दाद् यादृशी बुद्धिः शब्दादपि हि तादृशी॥१७२॥

---

न हि रूपरसादिवत् रूपविशेषोपलब्धिव्यवस्था ऽस्ति यत इन्द्रियभेदः कल्प्येत, अतः पञ्चधैव चक्षुरादिभेदः, तथा रूपादीनामपि चाक्षुषत्वं श्रौत्रत्वम् इत्येवं पञ्चधैव भेदो व्यवस्थित इति न नीलाविशेषेनाऽनन्तेन्द्रियकल्पनेति ।

क पुनरेषामिन्द्रियाणां संकरः क वा व्यवस्थितत्वं, तत्संक्षिप्य दर्शयति तस्मादिति[१७०] । मूर्त्तिः परिमाणं, तच्च द्रव्यं च, द्वाभ्यां दर्शनस्पर्शनाभ्यामिति । शब्दविकल्पमिदानीमनुसंधत्ते; तत्र चोदयति नन्विति[१७१] । जात्यादिरूपत्वाद्वस्तुनस्तद्रूपप्रतीतेरस्तु नामाऽमिथ्यात्वं, शब्दस्य त्वर्थान्तरत्वात् तद्रूपा बुद्धिर्मिथ्यैव, तत्र ये जातिगुणक्रियावाचिनो गवादिशब्दाः ते प्रथमं स्वाऽभिधेयं जात्यादिकं स्वात्मतया विकल्प्य पश्चात् तादृशेन जात्यादिना द्रव्यं विकल्पयन्ति; तत्र यद्यपि द्रव्यस्य जात्याद्यात्मना न मिथ्यात्वं तथापि जात्यादेः शब्दात्मता मिथ्यैव । ये तु डित्थादिशब्दा द्रव्यवाचिनः ते ऽपि द्रव्यमेव साक्षाच्छब्दाऽभेदेन विकल्पयन्तीति मिथ्यात्वमिति । परिहरति न शब्देति[१७२] । बुद्धिरेवाऽत्र शब्दाकारा नास्तीति भावः ।

'ननु गोत्वादिरूपेण गवाकारादिबुद्धयः ।
न प्राक् शब्दाऽर्थसम्बन्धज्ञानात्सन्ति कदा चन॥१७३॥
जात्यादेस्तत्स्वरूपं चेदशब्दज्ञो ऽपि लक्षयेत् ।
अन्वयव्यतिरेकाभ्यां शब्दरूपत्वनिश्चयः' ॥१७४॥
यथा रूपादयो भिन्नाः प्राक् शब्दात्स्वात्मनैव तु ।
गम्यन्ते तद्वदेवैतत्संज्ञित्वं केवलं परम् ॥१७५॥
न चाऽविकल्पितः शब्दादिति वाच्यो न गृह्यते ।
तेनाऽगृहीतशब्दो ऽपि गोत्वादीन् प्रतिपद्यते ॥१७६॥
श्रुतिसंस्पर्शबोधे ऽपि नैवाऽभेदोपचारता ।

---

पुनश्चोदयति नन्विति[१७३] द्वयेन । गवाकारादिषु गोत्वजात्यादिषु गोत्वशुक्लत्वादिरूपेण बुद्धयो न शब्दाऽर्थसंबन्धज्ञानात्प्राग्जायन्ते, तद्यदि जात्यादेरेव रूपं तत् स्या,दशब्दज्ञो ऽपि तद्रूपं लक्षयेत्, न तु तदस्ति; तस्माच्छब्दरूपमेव तदिति । परिहरति यथेति[१७५] । रूपादिस्वलक्षणवदेव जात्यादिकमपि प्रागेव शब्दाऽर्थसंबन्धज्ञानात् स्वेनैव रूपेण गम्यते न शब्दरूपेण, शब्दज्ञस्तु संज्ञित्वं केवलमधिकं स्मृत्वा ऽनुसंधत्ते नाऽन्यत्किं चिदिति। अथाऽशब्दज्ञस्य नैव गोत्वादिप्रतीतिरस्ति,शब्दाऽनुवेधस्य तदानीमभावात्, अशब्दाऽनुविद्धस्य च प्रत्ययस्याऽभावादित्युच्यते; यथाह—

न सो ऽस्ति प्रत्ययो लोके यः शब्दाऽनुगमादृते ।
अनुविद्धमिव ज्ञानं सर्वं शब्देन गृह्यते ॥ इति ।

अत आह न चेति[१७६] । उक्तमशब्दानुविद्धमपि ज्ञानमस्तीति, तेनाऽशब्दज्ञो ऽपि प्रत्येत्येव गोत्वादिकमिति । एवं च शब्दसंस्पृष्टबोधे ऽपि संज्ञित्वमेवाऽधिकं न ताद्रूप्यप्रतीतिरित्याह श्रुतीति[१७७] ।

विवेकादर्थशब्दानां चक्षुःश्रोत्रधिया कृतात् ॥१७७॥
अनन्तधर्मके धर्मिण्येकधर्मोऽवधारणे ।
शब्दोऽभ्युपायमात्रं स्यान्नाऽऽत्माऽध्यारोपकारणम् ॥१७८
न चोपेये ऽभ्युपायस्य रूपाऽध्यासः प्रसज्यते ।
न हि दीपेन्द्रियादीनां रूपाऽध्यारोप* इष्यते ॥१७९॥
नित्यं यदि च गोत्वादि शब्दरूपेण गृह्यते ।
रूपान्तरं न दृष्टं चेद् भेदाऽध्यासौ कुतो न्विमौ ॥१८०॥
यद्यभेदो न मिथ्यात्वं भेदश्चेत्स्यात्स्वरूपतः ।
नाऽध्यारोपप्रसङ्गः स्याद्भ्रान्त्या त्वध्यासकल्पना ॥१८१॥
शब्देनैव च निर्देशो गृहीते ऽर्थे ऽवकल्पते ।
गौरित्येव च निर्देशो वाच्यतद्बुद्धिवादिनाम् ॥१८२॥

---

कस्मादित्याह विवेकादिति । यदि न शब्दः स्वात्मानमर्थे ऽध्यारोपयति, किं तर्हि करोत्यत आह अनन्तेति[१७८]। यद्युपायः शब्दो, व्यक्तमसौ रूपमर्थे ऽध्यारोपयति दर्पण इव मुखे, ऽत आह न चेति[१७९] । किं च, यदि व्यक्तिरिव जातिरूपेण जातिरपि शब्दरूपेण गृह्यते न च बाध्यते, तथा सत्यभेद एव स्यात् न त्वध्यास इत्याह नित्यमिति[१८०]। सति चाऽभेदे तदनुविद्धस्य बोधस्य न मिथ्यात्वमित्याह यदीति[१८१]। भेदे वा नाऽध्यारोपो भ्रान्त्या तु भवतामध्यारोपकल्पनेत्याह भेदश्चेदिति । भ्रान्तिकारणमाह शब्देनेति[१८२] । सर्वमेव वस्तु शब्देन

---

* रूपे ऽध्यारोप इति २ पु. पा. ।

निर्देशतुल्यतायां च* श्रोत्रा वक्तृ†स्वरूपता ।
शब्दज्ञानप्रमेयेषु विज्ञानस्याऽवसीयते ॥१८३॥
भ्रान्तिहेतुसमानत्वे ऽप्युपायत्वान्मतिश्रुती ।
मन्यतेऽर्थे समध्यस्ते नाऽर्थाध्यासं तयोः पुनः ॥१८४॥
गोत्वे सास्नादिमद्रूपा गादिरूपा‡ ऽभिधायके ।
निराकारोभयज्ञाने संवित्तिः परमार्थतः ॥१८५॥
यदि चाऽभेदरूपेण शब्देनाऽर्थः प्रतीयते ।

---

परस्मै निर्दिश्यतइति । ततः किमित्याह गौरिति । वाच्यं च, तच्च,वचनं, बुद्धिश्च, वाच्यतद्वुद्धयः; तद्वादिनां पुंसां गौरित्येव निर्देशः,गौरित्यर्थो, गौरिति शब्दो, गौरिति ज्ञानमिति । तथापि किमित्यत आह निर्देशेति[१८३] । वक्तुस्त्रिष्वपि निर्देशं तुल्यं दृष्ट्वा श्रोत्रादिष्वपि ज्ञानस्य वक्तुः सरूपतां कल्पयति, तत्कृतनिर्देशसरूपताम् एकसरूपतामिति यावत् ।

ननु निर्देशतुल्यतयाऽध्यासं मन्यमानः किं शब्दज्ञानयोरेवार्थेऽध्यारोपं मन्यते न त्वर्थस्य तयो,रत आह भ्रान्तीति[१८४] । ज्ञानाऽऽरोपश्च कैश्चिज्ज्ञात्यादीनामाश्रितः, स शब्दाऽध्यासनिरासेनैव तुल्यन्यायतया निरस्तो भवतीति इह नोपन्यस्त इति । तदेवं भ्रान्तिरेवारोपः,परमार्थतस्तु त्रिष्वपि विलक्षणैव संविदित्याह गोत्वइति[१८५] ।

केचित्तु जात्यादीनपह्नुत्य स्वरूपमेव शब्दानामभिधेयं मत्वा तस्यैव व्यक्तावारोपं मन्यन्ते, शब्दैक्यादेव च खण्डमुण्डादिष्वेकरूपताऽवगमो न जातिनिबन्धन इति मन्यन्ते, तान् प्रत्याह यदि चेति[१८६]।

---

* तुल्यतायाश्चेति २ पु. पा. ।

† श्रोतृवक्त्रिति का. पा. । ‡ रूपाङ्गादीति २ पु. पा. ।

एकरूपत्वमक्षादौ देवनादेः प्रसज्यते ॥१८६॥
स्यादनक्षनिवृत्त्या चेत्, न प्राक् शब्दात् प्रतीयते* ।
गवादिष्वपि तुल्यं चेन्नैकरूपस्य दर्शनात् ॥१८७॥
त्रये बिभीतकादीनां नैकधर्मान्वयोऽस्ति हि ।
शब्दः साधारणस्तेषां जातिशब्दाद्विलक्षणः ॥१८८॥
परस्परविभिन्नं तु ज्ञायतेऽत्राऽऽकृतित्रयम् ।
तदध्यासे न युज्येत तद्रूपस्याऽविभागतः । ॥१८९॥
भिन्नाः स्युरक्षशब्दाश्चेन्नाऽर्थे संशयदर्शनात् ।
न सामान्यादृते स स्याद्रूपाऽभेदश्च गम्यते ॥१९०॥

---

शब्देन सहाऽभेदेनेत्यर्थः । नन्वनक्षव्यावृत्ति† रूपेणाऽस्त्येव त्रयाणामेकत्वमिति शङ्कते स्यादिति[१८७] । दूषयति नेति । अध्यासवादिनोऽभिप्रायं शङ्कते गवादिष्विति । परिहरति नैकरूपस्येति । अक्षादिषु नैवमस्तीत्याह त्रये इति[१८८] । कस्य तर्हि तत्राऽन्वयो, ऽत आह शब्द इति । शब्द एवात्र साधारणो न तु गवादिवदर्थैक्यमिति । कस्मादित्याह परस्परेति[१८९] । तच्च वैलक्षण्यमध्यासपक्षे न युज्यते, शब्दरूपस्याऽविलक्षणत्वादित्याह तदिति । शङ्कते भिन्नाः स्युरिति[१९०] । दूषयति नार्थे इति । ततः किमित्याह न सामान्यादिति । साधारणधर्मदर्शननिबन्धनो हि संशयो न शब्दभेदेऽवकल्पतइति । प्रत्यभिज्ञानाच्च न शब्दभेद इत्याह रूपेति । दोषा-

---

* एतत्पूर्वमर्द्धमेतदर्धं च त्रुटितं का. पु. ।
† अलक्षव्यावृत्तीति २ पु. पा.

भवत्यादौ च भिन्ने ऽपि नामाख्यातत्वसंज्ञया ।
रूपैकत्वेन चाऽध्यासे तुल्यार्थत्वं प्रसज्यते ॥१९१॥
शब्दनिष्पत्त्यभेदाच्च तिङन्ताऽर्थस्य साध्यता ।
कथं, कथञ्च मूर्ताऽर्थो वाचके मूर्तिवर्जिते ॥१९२॥
गवाऽश्वशुक्लशब्दादेर्वाच्यरूपाऽनपेक्षणे ।
वाचकत्वव्यवस्थानं कथं जातिगुणादिषु ॥१९३॥
वृक्षप्लक्षादिशब्दानां तुल्ये भेदे घटादिभिः ।
विशेषणविशेष्यत्वं कथमर्थाऽनपेक्षया ॥१९४॥

---

न्तरमप्यध्यासे दर्शयति भवतीति[191] । इदमपरमध्यासे ऽनुपपन्नं स्यादित्याह शब्देति कथ[192]मन्तेन । शब्दस्य हि निष्पन्नरूपता आख्यातेष्वपि न भिद्यते, ऽतस्तस्मिन् सिद्धरूपे ऽध्यस्यमाने तिङन्तार्थस्य पूर्वापरीभूतता न स्यादिति ।

केचित् शब्दपरिणामं रूपमाहुः, अपरे तु शब्दविवर्त्तनं, तान् प्रत्याह कथमिति । मूर्त्तानामेव हि क्षीरादीनां चन्द्रादीनां च मूर्त्तरूपो दध्यात्मकः परिणामः प्रतिविम्बरूपो वा विवर्त्तो दृश्यते, शब्दस्य त्वमूर्त्तस्य मूर्त्तो ऽर्थः कथं परिणामो विवर्त्तो वा स्यादिति, जातिगुणाद्यपह्नवेन च शब्दरूपपदार्थे ऽध्यस्यमाने ऽयं जातिशब्दो ऽयं गुणशब्द इत्यपि व्यवस्था न स्यादित्याह गवाश्वेति[193]। जात्याद्यनपेक्षया शब्दस्वरूपे ऽध्यस्यमाने विशेषणविशेष्यता ऽपि न व्यवतिष्ठतइत्याह वृक्षेति[194] । सामानाधिकरण्ये च नीलोत्पलादिषु वाचकबुद्ध्योरिवाऽर्थबुद्ध्योरपि न स्यात्, वाचकस्यैव वाच्यत्वात्, तयोश्च भेदादेक-

सामानाधिकरण्यं च न स्याद्वाचकबुद्धिवत् ।
एकत्र चोपसंहारो न बुद्ध्योर्निर्विकल्पके ॥१९५॥
वस्तुमात्रे स चेदेवं सर्वेषामेकवाच्यता ।
भवेद्गवादिशब्दानां सर्वैर्वस्तु हि गम्यते ॥१९६॥
न चाऽसाधारणे भेदे नीलोत्पलमितीष्यते ।
न हि शब्दप्रवृत्तिः स्यादन्यत्राऽन्यत्र चेष्यते ॥१९७॥
न च नीलोत्पलं नाम वस्त्वेकं किंचिदिष्यते ।
शब्दाऽर्थयोर्यतो भेदो गम्यते ऽवयवाऽनुगः ॥१९८॥

---

विषयत्वाऽभावादेकविषयत्वाऽधीनत्वाच्च सामानाधिकरण्यस्येत्याह सामानाधिकरण्यं चेति [१९५] ।

ननु जात्यादिवादिनामिवैकस्वलक्षणविषयबुद्धिजनकतया सामानाधिकरण्यं स्यादत आह एकत्रेति । स्वलक्षणे प्रवर्त्तमानयोर्नीलोत्पलशब्दयोर्न किंचिद्व्यवस्थापकमस्ति, अस्मिन् स्वलक्षणे वृत्तिर्नास्मिन्निति, जातिगुणादेरभावादिति । यदि च वस्तुमात्रे प्रयोगस्ततः सर्वेषां गवादिशब्दानां वस्तुविषयत्वात्सामानाधिकरण्यं स्यादित्याह वस्त्विति[१९६] । एकवाच्यतेति । सामानाधिकरण्यमित्यर्थः । यदि यत्राऽसाधारणे नीलोत्पलादिशब्दयोः प्रयोगो दृष्टः तत्र तयोः प्रयोगस्तथा सत्यस्मिन्नदृष्टप्रयोगे प्रथमप्रयोगो न स्यादित्याह न चेति[१९७] । न च नीलोत्पलं नाम जातिर्भवतेष्यते, यन्निबन्धनः प्रयोग इत्याह न चेति[१९८] । न परं नेष्यते, निष्प्रमाणकं चेत्याह शब्देति । शब्दयोरर्थयोश्च जातिगुणयोर्भेदाऽवगमादिति । किं च, नीलोत्पलवदेव करहस्तशब्दयोरपि भिन्नयोरेकत्राऽध्यासादपौनरुक्त्यं च न सामानाधि-

शब्दद्वयस्य चाऽध्यासः पर्यायेष्वपि दृश्यते ।
एकाऽधिकरणास्तेन स्युस्ते नीलोत्पलादिवत् ॥१९९॥
न चाऽनवगते पूर्वं पदमर्थे प्रयुज्यते ।
तत्र सम्बन्धवेलायां कीदृशो ऽर्थः* प्रतीयते ॥२००॥
तदानीं नाऽर्थरूपे हि शब्दरूपस्य संभवः ।
न चाऽसाधारणांशेन सम्बन्धाऽनुगमः क्व चित् ॥२०१॥
तत्र पूर्वाऽनपेक्षत्वे यद्यात्माऽध्यासशक्तता ।
शब्दस्य प्रथमे ऽपि स्याच्छ्रवणे ऽध्यस्तरूपता ॥२०२॥
मम वाच्याऽनभिज्ञत्वान्न भवेत्स्मरणं ततः ।
भवतस्त्वर्थरूपस्य वाचकेष्वपि दर्शनात् ॥२०३॥

---

करण्यं स्यादित्याह शब्देति[१९९]। किं च, संबन्धग्रहणाऽपेक्षः शब्दः, तत्र संबन्धग्रहणकाले कीदृगर्थः प्रतीयतइति निरूपणमशक्यमित्याह न चेति[२००]। कथं न शक्यमित्याह तदानीमिति[२०१]। गृहीते संबन्धे शब्दात्मकता ऽर्थस्य गम्यते न प्रागिति। यत्त्वसाधारणं तदा प्रतीतं तेन न संबन्धानुभवस्तस्याऽऽनन्त्यादित्याह न चेति । तत्र यद्यगृहीतसंबन्ध एवात्मानं शब्दो ऽर्थे ऽध्यस्येत्, प्रथमश्रवणे ऽप्यध्यस्येदित्याह तत्रेति[२०२] । ननु तवापि नित्यत्वात्संबन्धस्य तुल्यमेतदत आह ममेति[२०३]। गृहीतसंबन्धो हि प्रत्यायको ऽयम्, अतो यो ऽस्येदं वाच्यमिति न जानाति न तस्य शब्दादर्थस्य स्मरणं संभवतीति। भवतस्तु भवेदेव

---

* कीदृगर्थ इति २ पु. पा. ।

यथा त्वज्ञातशब्दानां वाच्ये तद्धीर्न जायते ।
तथैवाऽज्ञातवाच्यानामुपलब्धे ऽपि वाचके ॥२०४॥
तस्मान्नाऽतीव वाच्यानां वाचकाऽधीनता भवेत् ।
स्मारकत्वाच्च तेष्वेव पारतन्त्र्यं प्रतीयते ॥२०५॥
तेन सम्बन्धवेलायामर्थात्मा यो ऽवसीयते ।
शब्दादपि स एवेति नाऽर्थरूपं प्रणश्यति ॥२०६॥
प्रवृत्तौ वा निवृत्तौ वा यां शब्दः कुरुते मतिम्* ।
तादात्म्यं तस्य† शब्दस्य न कथं चित्प्रतीयते ॥२०७॥
करहस्तादिशब्देभ्यः शब्दरूपस्य भेदतः ।
भिन्नो ऽर्थः संप्रतीयेत तदध्यारोपकल्पने ॥२०८॥

---

स्मरणं, संबन्धग्रहणाऽनपेक्षेषु वाचकेषु गृहीतेष्वेवाऽर्थज्ञानाऽभ्युपगमादित्याह भवत इति। न त्वेतदस्तीत्याह यथेति[२०४] । उपसंहरति तस्मादिति[२०५] । न शब्दरूपेणाऽर्थो ऽवगम्यते यथाऽवस्थितमेव त्वर्थरूपं शब्दः स्मारयति इति । एवं च सविकल्पकस्य न मिथ्यात्वमित्याह तेनेति[२०६] । न प्रणश्यति, नान्यरूपं गम्यत इत्यर्थः ।

इतश्च न शब्दाऽध्यास इत्याह प्रवृत्ताविति[२०७] । दोषाऽन्तरमाह करेति[२०८] । किं चाऽध्यासः सादृश्यादनुरागाद्वा भवति, शुक्ताविव रजतस्य मणाविव लाक्षायाः, न चेह सादृश्यमस्ति, दूरस्थत्वाच्च

---

* यः शब्दः सकृदुच्यते इति का. पा. ।

† तत्रेति पाठान्तरम् ।

आत्माऽध्यासस्तु सादृश्यादुपरागाच्च दृश्यते ।
न तावदर्थसादृश्यं शब्दस्येह प्रतीयते ॥२०९॥
न चाऽनुरागः शब्देन भिन्नदेशस्य युज्यते ।
दूरस्थप्रतिबिम्बं च नाऽरूपस्य प्रतीयते ॥२१०॥
शब्दसर्वगतत्वेन यद्यर्थप्राप्तिरुच्यते ।
सर्वाऽर्थानां भवेच्छब्दैः सर्वैरेवाऽनुरञ्जनम् ॥२११॥
न च भिन्नेन्द्रियग्राह्यं किं चिदस्त्यनुरागकृत् ।
न हि लाक्षाऽनुरक्तेऽपि स्फटिके धीस्त्वगादिभिः* ॥२१२॥
अनुमानाऽऽगमौ मिथ्या स्यातामध्यासकल्पने ।
निरूपणस्य मिथ्यात्वात् सर्वाऽभावः प्रसज्यते ॥२१३॥
तथाऽस्त्विति यदि ब्रूयान्मिथ्या स्ववचने सति ।

---

नाऽनुराग इत्याह आत्मेति[२०९] सार्द्धेन । अथ दूरस्थोऽपि शब्दोऽर्थे चन्द्र इव जले प्रतिबिम्बितो गृह्यते, ऽत आह दूरस्थेति[२१०] । रूपवतामेव प्रतिबिम्बमिति, चक्षुर्ग्राह्याणामेवेत्यर्थः ।

यदुक्तं दूरस्थत्वान्नाऽनुराग इति, तत्र शङ्कते शब्देति[२११] । दूषयति सर्वेति । इतश्च नाऽनुराग इत्याह न चेति[२१२] । कारणमाह न हीति । किं चाऽध्यासवादिनामनुमानाऽऽगमयोः प्रामाण्यं न स्यादित्याह अनुमानेति[२१३] । अत्यल्पमिदमुच्यते, सर्वस्य निरूपणस्य सविकल्पकस्य मिथ्यात्वात्तन्निबन्धनत्वाच्च सर्वलोकव्यवहाराणामुच्छित्तिरेव स्यादित्याह निरूपणस्येति । इतरस्त्वाह तथेति[२१४] ।

---

* धीस्त्वगाद्विभिरिति २ पु.

कथमेवं वदेदर्थो नाऽनृताद्धि प्रतीयते ॥२१४॥
शून्यवादोत्तराच्चापि यथाऽर्थं बुद्धिशब्दयोः ।
प्रवृत्तिर्न तु तत्तन्त्रमर्थरूपं* कदा चन ॥२१५॥
तस्मात्प्रागपि ये शब्दाद्भिन्नैकत्वादि†बुद्धिभिः ।
गृह्यन्ते सर्वदा तेषां परमार्थोऽस्तिता भवेत् ॥२१६॥
शब्दाऽभ्युपायके ऽप्यर्थे तदभावे च यद्यपि ।
अर्थबुद्धिर्न जायेत नाऽर्थे रूपं प्रणश्यति ॥२१७॥
चक्षुरादेरभावे हि रूपाद्यात्मा न गृह्यते ।

---

इष्टमेव नः सर्वाऽप्रामाण्यमिति। दूषयति मिथ्येति । सर्वं मिथ्येत्येतदपि भवद्वाक्यं मिथ्या स्यात्, तन्मिथ्यात्वे चेतरेषाममिथ्यात्वमिति ।

किं चाऽयमध्यासः शून्यवादनिरासेनैव निरस्त इत्याह शून्यवादेति[२१५] । बुद्धिवदेव शब्दस्यापि नित्यं परविषयत्वान्न स्वात्मग्रहणसामर्थ्यमित्युपसंहरति तस्मादिति[२१६] । सर्वदेति । परस्तादपि पूर्वाऽवगतेनैव रूपेणाऽवगमात् मिथ्यात्वमिति। प्रागपि शब्दादित्यतिशयार्थमुक्तं, शब्दैकगम्यत्वे ऽपि ताद्रूप्यस्याऽनवगमान्नाऽर्थस्य स्वरूपहानिरित्याह शब्देति[२१७] । अत्रैव दृष्टान्तमाह चक्षुरादेरिति[२१८] । चक्षुराद्यभावे रूपादिर्न प्रकाशतइति चक्षुरादिपिधानेन रूपस्य तिरोभावः न तु स्वरूपविनाश इति ।

---

* अर्थतत्त्वमिति का. पा. ।

† शब्दादन्यैकत्वादीति २ पु. पा. ।

स्वरूपनाशो* रूपादेस्तावन्मात्रेण नेष्यते ॥२१८॥
सम्बन्धस्य च नित्यत्वान्नाऽर्थस्य स्यादरूपता ।
युगपन्न हि सर्वेषामन्याकाराऽर्थवेदनम्† ॥२१९॥
तदाकारे ऽपि तद्वचेद् द्वये सति परीक्ष्यताम् ।
किं न्वर्थस्याऽतथाभावो ग्रहीतुः किं न्वशक्तता ॥२२०॥
सदसद्भावयोरर्थे विरोधित्वादसंभवः ।
ग्रहीतृभेदाच्छक्तत्वमशक्तत्वं च युज्यते ॥२११॥
यथा ऽन्धाऽनन्धयोः पार्श्वे रूपस्येत्यभिधास्यते ।

---

भवतु वा ताद्रूप्यप्रतीतिः तथापि न मिथ्यात्वं नित्यं ताद्रूप्याद-र्थस्येत्याह संबन्धस्येति[२१९] । संबन्धस्तावन्नित्यः, तादात्म्यमेव च भवतां शब्दार्थयोः संबन्ध इति तादात्म्यमेव नित्यं भवति। अरूपत्व-मशव्दरूपत्वं नित्यम।'यदि च गोत्वादी'त्यत्र गोत्वादिजातीनां शब्द-रूपत्वाऽङ्गीकारेण मिथ्यात्वं परिहृतम, इदानीं तु व्यक्तेरिति न पौनरु-क्त्यम। ननु न प्राक्संबन्धज्ञानात्ताद्रूप्यं प्रतीयतइति कथं ताद्रूप्य-स्य नित्यत्वमत आह युगपदिति ।तदापि कैश्चित्ताद्रूप्यं प्रतीयते न तु कदा चिदपि सर्वेषामन्यरूपप्रतीतिरिति ।शङ्कते तदाकारइति[२२०] । परिहरति द्वये सतीति ।तत्र निर्णयमाह सदसद्भावयोरिति[२२१]। अत्रैव दृष्टान्तमाह यथेति[२२२] । संबन्धपरिहारे ऽभिधास्यतइति । उपसंहरति तेनेति। विद्यमानमेव शब्दसंबन्धित्वं शब्दात्मकत्व-मर्थस्य येन वृद्धव्यवहारे ऽवगतं स ध्वन्युपायः शब्दोपायस्तस्यैव तदात्मकत्वधीर्नाऽन्यस्येति ।

---

* स्वभावनाश इति पाठान्तरम् ।

† अर्थदर्शनमिति २ पु. पा. ।

तेनाऽर्थे ध्वन्युपायस्य तद्धीर्नोऽन्यस्य जायते ॥२२२॥
देवदत्तादिशब्दे तु सम्बन्धाद्यत्वदर्शनात् ।
अर्थस्याऽनित्यतायां च ताद्रूप्यस्याप्यनित्यता ॥२२३॥
तत्राप्यौत्पत्तिकी शक्तिस्तद्रूपप्रत्ययं प्रति ।
ग्राह्यग्राहकयोरिष्टा नियोगस्य त्वनित्यता ॥२२४॥
तत्र सर्वैरताद्रूप्यं* प्राङ्नियोगात्प्रतीयते ।
तेनेष्टमेव मिथ्यात्वं कैश्चिदध्यासकल्पने ॥२२५॥
यदा तु† यादृशः पिण्डः पूर्वं शब्दात्प्रतीयते ।

---

चोदयति देवदत्तेति[२२३]। तेन तत्राऽतदात्मकस्य तादात्म्यप्रतीतेर्मिथ्यात्वमिति । तदेतत्केषांचिन्मतेन परिहरति तत्रापीति[२२४]। तत्राप्यर्थस्य यावत्सद्भावं ताद्रूप्यमस्त्येव, ततस्तद्ग्राहकशक्तिः शब्दस्याऽर्थस्य च तद्रूपग्राह्यताशक्तिर्नित्यैव। यस्तु तत्र पिण्डशब्दप्रयोगस्तन्मात्रं समवायाऽपेक्षत्वादनित्यमिति ।

अन्येषां मतमाह तत्रेति[२२५] । अविद्यमानमेव ताद्रूप्यं समयवशात्पश्चात्प्रतीयते, न तु प्रागस्ति, प्रमाणाभावादत एव पश्चादपि नास्त्येवेति मिथ्यैव तत्र शब्दविकल्पो ऽध्यासपक्षइति ।

परमार्थतस्त्वध्यासाऽभावान्नास्त्येव मिथ्यात्वमित्याह यदा त्विति[२२६] । संबन्धाऽवगमवेलायां ततः प्राक्काले च यादृशमर्थरूपं तादृशमेव शब्दः स्मारयति न त्वात्मानमर्थे ऽध्यस्यतीति। कथं तर्हि गौरयं शुक्लो गच्छतीति डित्थो ऽयमिति च सामानाधिकरण्यं, जाति-

---

* न ताद्रूप्यमिति २ पु. पा. । † यदा चेति का. पा. ।

तादृशस्मरणे हेतुशब्दस्तत्र यथार्थता ॥२२६॥
नियोगात्परतो वापि शब्देन व्यज्यतामियम्* ।
तद्ग्राह्यशक्तिरर्थस्य, पारूप्यं न तावता ॥२२७॥

---

शब्दस्तावज्जातिं स्मारयित्वा तया तादात्म्येन व्यक्तिं बोधयन्नुपस्थितव्यक्तिबोधकेनाऽयमित्यनेन सामानाधिकरण्यं भजते, तथा गुणशब्दः क्रियाशब्दश्च, डित्थशब्दोऽपि यस्य पिण्डस्य वाचकत्वेन प्रागवगतस्तं स्मारयित्वा तत्तादात्म्येन पुरःस्थितं पिण्डं विकल्पयति न तु स्वात्मना, न हि डित्थोऽयमित्यस्याऽयमर्थः डित्थशब्दोऽयमिति, किं तर्हि डित्थ इति नामास्येत्यर्थः, यो ऽसौ चैत्रे मास्यस्माभिरुज्जयिन्यामुपलब्धो डित्थः सोऽयमिति; तेनात्रापि न शब्दस्वरूपमर्थस्य विशेषणं किं तु पूर्वाऽनुभूतार्थस्मरणोपयोग्येव, तत्रापि शब्देन पूर्वाऽवगतव्यक्तितादात्म्येन पुरःस्थिता व्यक्तिर्विशेष्यतइति विनैवाऽध्यासेन सामानाधिकरण्यं विशेषणविशेष्यभावश्चाऽर्थमुखेनैव संभवतीति निष्प्रमाणको ऽध्यास इति ।

ननु स्मार्यत्वशक्ति†रेवार्थस्य डित्थादौ नास्ति समयात्प्रागदर्शनात्, तत्कथं तेनार्थः स्मार्यते ऽत आह नियोगादिति[२२७]। स्मार्यत्वशक्तिरर्थस्य प्रागपि विद्यमानैव नियोगेन समयेन व्यज्यते वा, शब्दात् क्रियते वा, न तु तद्रूपता ऽर्थस्य‡ यतो ऽयं न स्मार्येत,§ नियोगशब्देन प्रयोगवाचिना तत्कारणं समयो लक्ष्यतइति । ननु यस्यैव कस्य चि-

---

* व्यज्यतां मिथ इति का. पा. ।

† स्मार्यशक्तिरिति २ पु. पा. ।

‡ तद्रूपता क्रियते ऽर्थस्येति २ पु. पा. ।

§ न स्मार्यते इति २ पु. पा. ।

सर्वाऽऽकारपरिच्छेद्यशक्तः ऽर्थे वाचके ऽपि वा ।
सर्वाऽऽकाराऽर्थविज्ञानसमर्थे नियमः कृतः ॥२२८॥
तत्र शब्दार्थसम्बन्धं प्रमातुः स्मरतो ऽपि या* ।
बुद्धिः पूर्वगृहीताऽर्थसन्धानादुपजायते ॥२२९॥
चक्षुषा सन्निकृष्टे ऽर्थे नाऽप्रत्यक्षमसौ भवेत् ।
विविक्ता एव ते ऽप्यर्थाः स्मृतिप्रत्यक्षगोचराः ॥२३०॥
स्मर्येते शब्दसम्बन्धौ मा भूत् प्रत्यक्षता तयोः ।
तदप्रत्यक्षभावेन न त्वर्थस्यापि वार्यते ॥२३१॥
गृहीतमपि गोत्वादि स्मृतिस्पृष्टं च यद्यपि ।
तथापि व्यतिरेकेण पूर्वबोधात् प्रतीयते ॥२३२॥

---

च्छब्दस्य यस्मिन्नेवाऽर्थे समयः क्रियते स एव तं स्मारयति, तत्कथं प्रागपि विद्यते शक्तिरित्युच्यते,ऽत आह सर्वेति[२२८] । सर्वाः शक्तयो विद्यन्त एवेति न कश्चिद्दोषः ।

विद्यमानास्वेव सर्वासु नियता का चिदेव व्यवहारनियमार्थं समयेनाऽभिव्यज्यते इत्येवं जात्यादिविकल्पानां मिथ्यात्वं निरस्तम्, इदानीं स्मृतिसंभेदे कथं प्रत्यक्षत्वमित्याशङ्क्याह तत्रेति[२२९] सार्द्धेन । शब्दार्थसंबन्धं स्मरतो ऽपि प्रमातुरित्यन्वयः । कथं नाऽप्रत्यक्षमत आह विविक्ता इति[२३०] । विविक्तत्वमेव द-र्शयति स्मर्येते इति[२३१] । एकमेव ज्ञानं संस्कारेन्द्रियाभ्यां जाय-मानं शब्दतत्संबन्धयोः स्मरणम्, अर्थरूपे त्विन्द्रियसंनिकृष्टे प्रत्यक्षमिति । नन्वर्थो ऽपि गोत्वादिः पूर्वगृहीत एव स्मर्यतइति कथं

---

* वा, इति का. पा. ।

व्यक्तिकालादिभेदेन तत्राऽस्त्यवसरो मितेः* ।
यः पूर्वावगतोंशो ऽत्र स न नाम प्रतीयते ॥२३३॥
इदानीन्तनमस्तित्वं न हि पूर्वधिया गतम् ।
न हि स्मरणतो यत्प्राक्तत्प्रत्यक्षमितीदृशम् ॥२३४॥
वचनं राजकीयं वा वैदिकं वा ऽपि विद्यते ।
न चापि स्मरणात्पश्चादिन्द्रियस्य प्रवर्तनम् ॥२३५॥
वार्यते केन चिन्नाऽतस्तत्तदानीं प्रदुष्यति ।
तेनेन्द्रियार्थसम्बन्धात्प्रागूर्ध्वं वा ऽपि यत्स्मृतेः ॥२३६॥
विज्ञानं जायते सर्वं प्रत्यक्षमिति गम्यताम् ।
'विमनस्का यदा के चित्सम्बद्धमपि चेन्द्रियैः ॥२३७॥

---

प्रत्यक्षत्वप्रामाण्यसिद्धिरिति। किं पुनरधिकं तद्दर्शयति व्यक्तीति[२३३]। व्यक्त्यन्तरे ऽवगतं सामान्यं व्यक्त्यन्तरसंबन्धितया ऽवगम्यते, पूर्वेद्युरवगतो देवदत्तः परेद्युः प्रथमक्षणे निर्विकल्पकेनाऽवगतः स द्वितीयक्षणे सविकल्पकेनाऽवगम्यतइति सिध्यति प्रामाण्यमिति।

ननु गृहीतमपि गृह्यतइति कथं प्रामाण्यमत आह य इति। तस्मिन्नंशे मा भूत्प्रामाण्यम्, अगृहीतकालान्तरसंबन्धाऽपेक्षमेव तु प्रामाण्यमिति। कथं पुनः स्मरणोत्तरकालं भवत्सविकल्पके प्रत्यक्षं, न हि निर्विकल्पकस्य तथात्वं दृष्टमत आह न हीति[२३४]। स्यादप्येवं यदि स्मरणेनेन्द्रियव्यापारो दूष्यते बाध्यते वा, न तु तदस्तीत्याह न चेति[२३५]। उपसंहरति तेनेति[२३६]।

ननु यदि जात्याद्याकाराः परमार्थतो ऽर्थे सन्ति, ततः सर्वे ऽप्य-व्यवहितसंबन्धाः, किमिति न तैरर्थं विकल्पयति, तेन वासनामात्रनि-बन्धना भ्रान्तिरेवेयमत आह विमनस्का इति[२३७] द्वयेन। विमनस्क-

---

* तत्राऽस्त्यभ्यधिका मितेरिति का. पा.।

न बुध्यन्ते तथा चाऽन्ये सादृश्यादिविमोहिताः ।
तत्र यो ऽर्थं विवेकेन कौशलात्सदृशेष्वपि ॥२३८॥
सूक्ष्मं वा ऽपि प्रपद्येत तस्य भ्रान्ति र्न तावता' ।
यथा* षड्जादिभेदेन गाने लौकिकवैदिके ॥२३९॥
विवेकेनावगच्छन्ति येषां तत्संस्कृता मतिः ।
गानमात्रं विजानन्ति तत्राऽनधिकृतास्तु ये ॥२४०॥
तदज्ञानान्न मिथ्यात्वं वक्तुं शक्यं विवेकिनाम् ।
'ते हि षड्जादिशब्देभ्यो विना ऽप्येषां विविक्तताम्॥२४१॥
यथावदधिगच्छन्ति' तद्वद्गोत्वादिवस्त्वपि ।
संकीर्णमर्थमात्रं तु बुध्यन्ते ऽभ्यासवर्जिता: ॥२४२॥

---

तया स्थूलदर्शितया वा सादृश्यादिविमोहिता यदि न जानन्ति, तावता नैव प्रणिहितचेतसां सूक्ष्मग्रहणशक्तिशालिनां वा ऽवगतिर्भ्रान्तिर्भवतीति । अत्रैव दृष्टान्तमाह यथेति[२३९] द्वयेन । यद्यप्यसंस्कृता गानमात्रं प्रतिपद्यन्ते तथापि विश्वावसुशास्त्रसंस्कृतानां विवेकप्रतिपत्तिर्न मिथ्येत्यर्थः। ननु वास्तवो भेदो ऽप्यस्तीति वक्तुं न शक्यते, न हि षड्जादिशब्दभेदं मुक्त्वा गानस्य कश्चित्स्वगतो विवेको ऽस्त्यत आह ते हीति[२४१] पादत्रयेण। दार्ष्टान्तिके योजयति तद्वदिति । एतदेव विवृणोति संकीर्णमिति[२४१] । अभ्यासः शब्दस्मरणमिति ।

किमिति पुनर्विकल्पयन्तो ऽपि कदा चित् केन चिद्विकल्पयन्ति

---

* तथेति का. पा. ।

विवेकं प्रतिपद्यन्ते ये शब्दस्मृतिसंस्कृताः ।
'यथा रूपादिमत्यर्थे यस्यैवाऽस्ति यदिन्द्रियम् ॥२४३॥
स तन्मात्रं गृहीत्वा ऽन्यन्न गृह्णात्यनुमानतः ।
तथा विवेकहेतूनां यदा यं प्रतिपद्यते ॥२४४॥
तदुपेये तदा ज्ञानं वर्तते तदनुग्रहात्' ।
तेन यावत्प्रमातॄणां विवेकोपायदर्शनम् ॥२४५॥
न स्यात्तावद्भवेत्तेषां विज्ञानं निर्विकल्पकम् ।
तस्माद्यत्र प्रकल्प्येत वस्तु वस्त्वन्तरात्मना ॥२४६॥
प्रमाणाभासता तत्र न स्वधर्मविकल्पने ।
प्रत्यक्षत्वमतः सिद्धं सामान्यस्य तथैव च ॥२४७॥
संबन्धस्येति तत्पूर्वमनुमानादि जायते ।
सर्वं चाप्यनुमानादि प्रत्यक्षे निर्विकल्पके ॥२४८॥

---

न सर्वैः सर्वदा, ऽत आह यथेति[२४३] द्वयेन । विवेकहेतूनां शब्दानामित्यर्थः । तेन शब्दस्मरणव्यवस्थया व्यवस्थेति । यस्तु न कं चिदपि शब्दं स्मरति तस्य निर्विकल्पकमेव भवतीत्याह तेनेति[२४५] । प्रकृतं सविकल्पकस्य प्रामाण्यमुपसंहरति तस्मादिति[२४६] । सति चैवं लिङ्गलिङ्गिसामान्ययोः तत्संबन्धस्य च प्रत्यक्षत्वादुपपन्नं प्रत्यक्षपूर्वकत्वमनुमानादीनामित्याह प्रत्यक्षत्वमिति[२४७] ।

ये तु शाक्याः सविकल्पकस्य प्रत्यक्षत्वं नेच्छन्ति, तेषामनुमानादेरुत्पत्तिर्न सिध्यति, इत्यनुमानवादे वक्ष्यतइत्याह सर्वमिति[२४८] ।

न प्रवर्तत इत्येतदनुमानेऽभिधास्यते* ।
नन्वेवं सति याऽप्यग्नेर्दूरादप्यौष्ण्यकल्पना ॥२४९॥
साऽपि प्रत्यक्षमेव स्याद्यथा गोत्वादिबुद्धयः† ।
प्रत्यासन्नतरं गोत्वे प्रत्यक्षत्वेन संमतम् ॥२५०॥
विज्ञानं नाऽन्यदस्तीति प्रत्यक्षमिदमेव नः ।
तत्राऽप्यक्षैरसंबन्धं मन्वानस्योपजायते ॥२५१॥
यदा बुद्धिस्तदा नैव प्रत्यक्षत्वेन कल्प्यते ।
स्पर्शनेन तु संबन्धे प्रत्यक्षत्वेन जायते ॥५१॥
मतिरौष्ण्ये, परोक्षेयं चक्षुषाऽग्नौ प्रकाशिते ।

---

यदुक्तमिन्द्रियव्यापाराऽनुपरमात् सविकल्पकमपि प्रत्यक्षमिति, अत्र चोदयति नन्वेवमिति[२४९] । परिहरति प्रत्यासन्नेति[२५०] । अत्राऽग्नित्वेन प्रत्यक्षेणौष्ण्यमनुमीयते, न तु तदेव प्रत्यक्षं गोत्वे तु वस्त्वन्तरम् इन्द्रियव्यापारात्प्रत्यासन्नं प्रत्यक्षं नास्ति यतो गोत्वमनुमीयेत, गोत्वमेव प्रत्यक्षम् इति । यदा तु गोत्वेऽप्यपरोक्षाभावात् अक्षैरसंबन्धं मन्वानस्य शब्दविशेष्यादिना गोत्वबुद्धिस्तदा नैव प्रत्यक्षमित्याह तत्रेति[२५१] ।

कस्मात्पुनरनुपरतेन्द्रियव्यापारस्यैव जायमानम् औष्ण्यज्ञानं प्रत्यक्षं भवत्यत आह स्पर्शनेनेति[२५१] । न हि दूरादग्निमध्यक्षयतो यदौष्ण्यज्ञानं तत्स्पर्शनवेलायामिवाऽपरोक्षमतो नेन्द्रियव्यापारजं गृहीतसंबन्धस्यैव जायते नान्यस्येत्यानुमानिकमेव न प्रत्यक्षमिति । तेनाऽऽत्मीयेन्द्रियाऽनुपरम एव प्रत्यक्षत्वं नेन्द्रियान्तराऽनुपरम इत्याह

---

* अनुमाने हि साध्यते इति का. पा. । † गोत्वादिमतयो यथेति का. पा. ।

तस्माद्यदिन्द्रियं यस्य ग्राहकत्वेन कल्पितम् ।
तेनैव सति संबन्धे प्रत्यक्षं नाऽन्यथा भवेत् ॥२५३॥

एवं समाने ऽपि विकल्पमार्गे
यत्राऽक्षसम्बन्धफलाऽनुसारः ।
प्रत्यक्षता तस्य तथा च लोके
विनाऽप्यदो* लक्षणतः प्रसिद्धम् ॥२५४॥

इति प्रत्यक्षसूत्रं चतुर्थम् ॥

तस्मादिति[२५३] । तदेव च तस्यात्मीयं यतो यस्यापरोक्ष्यं, न हि चक्षुषा स्पर्शनस्यापरोक्ष्यं भवत्यतो नौष्ण्यस्य चक्षुरात्मीयमिति । उपसंहरति एवमिति[२५४] । गोत्वोष्णत्वयोर्विकल्पगम्यत्वे तुल्ये ऽपि यत्र गोत्वे अक्षसंबन्धफलमापरोक्ष्यं तत्प्रत्यक्षं, नेतरत आपरोक्ष्यम्, एवं हि प्रत्यक्षं लक्षणमनपेक्ष्यैव लौकिका मन्यन्तइति ॥

इति श्रीपार्थसारथिमिश्रविरचिते न्यायरत्नाकरे चतुर्थम् प्रत्यक्षसूत्रं संपूर्णम् ॥

---

* अत इति का. पा. ।

**औत्पत्तिकस्तु शब्दस्याऽर्थेन संबन्धस्तस्य ज्ञानमुपदेशो ऽव्यतिरेकश्चाऽर्थे ऽनपलब्धे तत्प्रमाणं बादरायणस्याऽनपेक्षत्वात् ॥५॥**

प्रत्यक्षादौ निषिद्धे ऽपि ननु लोकप्रसिद्धितः ।
धर्माऽधर्मौ प्रमास्येते ब्राह्मणादिविवेकवत् ॥१॥
'धार्मिकाऽधार्मिकत्वाभ्यां पीडाऽनुग्रहकारिणौ ।
प्रसिद्धौ हि' तथा चाह पाराशर्यो ऽत्र वस्तुनि ॥२॥

---

औत्पत्तिकस्तु शब्दस्याऽर्थेन संबन्धस्तस्य ज्ञानमुपदेशो ऽव्यतिरेकश्चाऽर्थे ऽनुपलब्धे तत्प्रमाणं बादरायणस्याऽनपेक्षत्वात् ॥

एवं प्रत्यक्षाद्यनिमित्तत्वं प्रतिपाद्याऽभावगम्यत्वं धर्मस्याशङ्क्य तन्निराकरणपरतया औत्पत्तिकसूत्रं भाष्यकारेणाऽवतारितम् "अभावो ऽपि नास्ति, यत औत्पत्तिक" *इत्यादिना, एतदाक्षिपति प्रत्यक्षादाविति[१]। शब्दाऽतिरिक्तसमस्तसदुपलम्भकप्रमाणास्तमये † ह्यत्राऽभावशङ्कानिराकरणाय शब्दप्रामाण्यावतारणं युक्तं, न चेह तथा ऽस्ति, ब्राह्मणादिविवेकइव लोकप्रसिद्धेः सद्भावादिति । तामेव दर्शयति धार्मिकेति ह्य[२]न्तेन ।

---

* शा. भा. पृ. ६ प. २६ ।

† प्रमाणप्रत्यक्षसमये इति २ पु. पा. । प्रमाणमन्यस्तमये इति ३ पु. पा. ।

‡ उपकाराय विषये इति १ पु. प. २६ ।

इदं पुण्यमिदं पापमित्येतस्मिन् पदद्वये ।
आचण्डालं मनुष्याणामल्पं शास्त्रप्रयोजनम् ॥३॥
'निर्मूलाऽसंभवादत्र प्रमाणैः सैव मृग्यते ।
कुतः पुनः प्रवृत्तेति' प्रत्यक्षादि तु वारितम् ॥४॥
न चैतानि परित्यज्य पृथग् लोके प्रमाणता ।
'संसारमोचकादेश्च हिंसा पुण्यत्वसंमता ॥५॥
न पश्चा*त्पुण्यमिच्छन्ति केचिदेवं विगानतः ।
म्लेच्छाऽऽर्याणां प्रसिद्धत्वं न धर्मस्योपपद्यते' ॥६॥

---

लोकप्रसिद्धिगम्यत्वं धर्माऽधर्मयोर्भगवता व्यासेनाऽपि दर्शितमित्याह तथा चेति । व्यासवचनमुदाहरति इदमिति[३] । इदं प्रपातडागादिकं पुण्यम्, इदमगारदहनादिकमपुण्यमित्येवमुपकाराऽपकारविषये धर्माऽधर्मपदद्वये यावच्चाण्डालप्रसिद्धे सत्यल्पं शास्त्रप्रयोजनमिति । परिहरति निर्मूलेति[४] पादत्रयेण । प्रसिद्धिर्हि प्रज्ञानं, न सा निर्मूला संभवतीति तस्या मूलं निरूप्यते, किं भ्रान्तिमूलेयम्, उत प्रत्यक्षादिमूला, किं वा चोदनामूलेति ।

ननु यत्किं चन मूलं समीचीनमेव कल्प्यं कथमिवाऽभावाशङ्का, ऽत आह प्रत्यक्षेति । न चाऽसंभावितमूलं शक्यते कल्पयितुं, तदिह प्रत्यक्षादिचतुष्टये निराकृते द्वयमेवाऽवशिष्यते, अतो युक्तमभावनिराकरणाय शब्दप्रामाण्यावतारणमिति । न च प्रत्यक्षादिपरित्यागेन स्वयमेव प्रसिद्धेः प्रामाण्यं भवतीत्याह न चेति[५] । ब्राह्मणादिविवेक-

---

* तत्पश्चादिति २ पु. पा. ।

न चाऽऽर्याणां विशेषो ऽस्ति यावच्छास्त्रमनाश्रितम् ।
तन्मलाऽर्थप्रसिद्धिस्तु तत्प्रामाण्ये स्थिते भवेत् ॥७॥
तस्मादभाववक्तृस्थौ धर्माऽधर्मौ न शक्नुयात् ।
चोदना चेत्समुद्धर्तुं ग्रस्तौ तेनैव पश्यताम् ॥८॥
उपदेशो हि भवात ज्ञानं तस्येति योज्यते ।
ज्ञायते येन तज्ज्ञानमेकाधिकरणत्वतः ॥९॥
औत्पत्तिकगिरा दोषः कारणस्य निवार्यते ।
अबाधो ऽव्यतिरेकेण, स्वतस्तेन प्रमाणता ॥१०॥

---

स्तु प्रत्यक्ष एवेति वक्ष्यते इति । अव्यवस्था च प्रसिद्धिरिति न तन्नि-मित्तत्वं धर्मस्य संभवतीत्याह संसारेति सार्द्धेन । ननु 'शास्त्रस्था वा तन्निमित्तत्वा'*दित्येवं व्यवस्था सिध्यत्यत आह तन्मूलेति[७] । उ-पसंहरति तस्मादिति[८] । पश्यतामित्यनादरे षष्ठी । "औत्पत्तिकः संबन्धो नित्यो निमित्तम" इत्युक्त्वा "उपदेशो हि भवती"†ति हेतु-रुक्तः, स चायं सौत्रेण ज्ञानपदेनोपस्कृत्य व्याख्यातव्य इत्याह उपदेश इति[९] । शब्दवाचकस्योपदेशशब्दस्य ज्ञानशब्देन कथं सा-मानाधिकरण्यम, इत्यत आह ज्ञायते इति । तदनेनाऽज्ञानरूपम-प्रामाण्यं निरस्तमिति । कारणदोषाऽधीनं चाऽप्रामाण्यमौत्पत्तिक-शब्दान्निरस्तमित्याह औत्पत्तिकेति[१०] । बाधाऽभावस्त्वव्यतिरेक-शब्देनेत्याह अबाध इति । एवं चाऽनपोदितं स्वारसिकं प्रामाण्य-मित्याह स्वत इति । तदिदं तत्प्रमाणमित्यनेन सूत्रावयवेनोक्त-मिति ।

---

* जै. स. अ. १ पा. ३ सू. ९ । † शा. भा. पृ. ७ प. ८ ।

सर्वस्याऽनुपलब्धेऽर्थे प्रामाण्यं स्मृतिरन्यथा ।
चोदना चोपदेशश्च विधिश्चैकार्थवाचिनः ॥११॥
वाक्यान्तरे समर्थेऽपि किमर्थं विधिराश्रितः ।
साध्यसाधनसंबन्धः सर्वाख्यातेषु विद्यते* ॥१२॥
सर्ववाक्येषु चाख्यातं तेनाकाङ्क्षानिवर्तनात् ।
प्रवृत्तिसिद्धिरिच्छातः प्रतिषेधात्तु वर्जनम् ॥१३॥
विधावनाश्रिते साध्यः पुरुषार्थो न लभ्यते ।
श्रुतस्वर्गा†दिबाधेन धात्वर्थः साध्यतां व्रजेत् ॥१४॥

---

अर्थे उपलब्धइत्यस्य प्रयोजनमाह सर्वस्येति[११] । ननु चोदनायाः प्रामाण्यं प्रतिज्ञातं, तत्कथमुपदेशस्य साध्यते, ऽत आह चोदनेति । अत्र चोदयति वाक्यान्तरे इति[१२]। वाक्यान्तरसामर्थ्यमेव दर्शयति साध्येति। श्रेयःसाधनं हि धर्मः, तच्च भावनाद्वारं, सर्वाऽऽख्यातेषु च भावना विद्यते, सर्ववाक्येषु चाऽऽख्यातमस्ति, तदधीनत्वादाकाङ्क्षापूरणस्य,अतो विनाऽपि विधेः स्वर्गयज्ञादीनां साध्यसाधनसंबन्धसिद्धेर्विध्याश्रयणमनर्थकमिति। सिध्यत्यपि साध्यसाधनसंबन्धे पुरुषप्रवृत्तये विधिरिति चेत्तत्राह प्रवृत्तिसिद्धिरिति[१३]। विधिरपि हि न बलात्प्रवर्त्तयति, किं तु श्रेयःसाधनत्वं गमयति, अत एव स्वेच्छया प्रवृत्तिः, सा च विनाऽपि विधिना सिध्यतीति ।

स्यादेतन्न ब्राह्मणं हन्यादित्यादिषु निवृत्तिसिद्धये विधिरिति, तत्राह प्रतिषेधादिति। नञ इत्यर्थ इति। परिहरति विधाविति[१४]।

---

* गम्यते इति १ पु. पा. ।

† श्रुतः स्वर्गेति २ पु. पा. ।

विधौ तु तमतिक्रम्य स्वर्गादेः साध्यतेष्यते ।
तत्साधनस्य धर्मत्वमेवं सति च लभ्यते ॥१५॥
स्वप्रत्ययान्तरापेक्षा स्यादनाप्तनरोक्तिषु ।
आप्तोक्तिषु नरापेक्षा* नोभयं चोदनासु नः ॥१६॥

इति औत्पत्तिकसूत्रं पञ्चमं पूर्णम् ॥

---

अथ वृत्तिकारग्रन्थः ।

आदिशब्दो मकारान्तो लुकि क्लेशेन संगतिः ।
नञध्याह्रियते सूत्रे 'संकरात् परिचोदना ॥१७॥

---

कथं न लभ्यते ऽत आह श्रुतेति । असति विधौ समानपदश्रुत्या धात्वर्थ एव भावनांशे निपतेत्, विप्रकृष्टस्वर्गादिबाधेन, अतो न यागादेः समीहितसाधनत्वं स्यादिति । विधौ तु सति तेन पुरुषप्रवर्त्तनात्मकेन समानप्रत्ययोपात्तेन धात्वर्थादपि संनिकृष्टतरेणाऽवरुद्धा भावना धात्वर्थं†मुल्लङ्घ्य विप्रकृष्टमपि स्वर्गादिकमेव भाव्यतया गृह्णाति, साधनतया च यागादिकामिति सिध्यति यागादेः श्रेयःसाधनतया धर्मत्वमित्याह विधाविति[१५] । अनपेक्षत्वादिति सूत्रपदं व्याचष्टे स्वप्रत्ययेति[१६] ॥

इति न्यायरत्नाकरे औत्पत्तिकसूत्रं पञ्चमं संपूर्णम् ॥

---

अथ वृत्तिकारग्रन्थः ।

"वृत्तिकारस्त्वन्यथेमं ग्रन्थं वर्णयां चकार, तस्य निमित्तपरीष्टिरित्येवमादि"मिति भाष्यं तत्रादिशब्दं केचित् लुप्तमकारं पठन्ति, तत् दूषयति आदिशब्द इति[१७] । कारणमाह लुकीति । सामान्य-

---

* परापेक्षेति २ पु. पा. ।

† संनिकृष्टतरेणा विरुद्धा भावना धात्वर्थमिति २ पु. पा. । अवरुद्धा भावना धात्वर्थमिति १ पु. पा. । ‡ शा. भा. पृ. ७ प. ८ ।

प्रमाणलक्षणाऽज्ञानाद् व्यभिचारात्परीक्षणम्' ।
नैतत्प्रत्यक्ष*मित्येवमपरीक्षोपसंहृता† ॥१८॥
तत्राऽन्यस्याऽयथार्थत्वं प्रत्यक्षे तु यथार्थता ।
यदाभासं हि विज्ञानं तत्संयोगे तदिष्यते ॥१९॥

---

विवक्षायां हि नपुंसकता वक्तव्या, ग्रन्थात्मके तूपात्ते विशेष्ये सामान्यविवक्षा क्लिष्टेति। "न परीक्षितव्यं निमित्त"‡मिति निमित्तसूत्रव्याख्यानपरं भाष्यमयुक्तं, सूत्रे नञो ऽश्रुतत्वादत आह नञिति ।

ननु "व्यभिचारात्परीक्षितव्यं निमित्तं शुक्तिका हि रजतवत्प्रकाशते यतस्तेन प्रत्यक्षं व्यभिचरती"§ति चोद्यभाष्यमयुक्तम्, आभासस्य ह्यत्राऽयथार्थत्वलक्षणो व्यभिचारो न प्रत्यक्षस्येति, अत आह संकरादिति पादत्रयेण । प्रत्यक्षस्याऽभासाद् विविक्तलक्षणमजानन् उभयोरक्षजत्वेन संकीर्णत्वादाभासस्य व्यभिचारे ऽपि प्रत्यक्षस्य व्यभिचारं मत्वा सति व्यभिचारात्परीक्षणं चोदितवानिति ।

"यत्प्रत्यक्षं न तद्व्यभिचरति यद्व्यभिचरति न तत्प्रत्यक्ष"‖मिति परिहारभाष्यं, तत्पूर्वया परीक्षया संबन्धव्यमित्याह नैतदिति[१८] ।

भाष्यार्थं दर्शयति तत्रेति[१९] । अतः शुक्तिरजतप्रकाशने ऽन्यस्याऽऽभासस्याऽयथार्थत्वं न प्रत्यक्षस्येति पुनः प्रत्यक्षस्याभासाऽसंकीर्णं लक्षणं तत्कथनार्थं सूत्रं सत्संप्रयोगे पुरुषस्येन्द्रियाणामिति । तस्यार्थमाह यदाभासमिति । ननु लक्षणपरत्वं सूत्रस्य ग्राह्यविशेष-

---

* न तत्प्रत्यक्षमिति २ पु. पा. । † उपसंहृतमिति पाठान्तरम् ।
‡ शा. भा. पृ. ७ प. १९ । § शा. भा. पृ. ७ प. २१ ।
‖ शा. भा. पृ. ७ प. २४ ।

संपूर्णं लक्षणं ह्येतत् तत्सतोर्व्यत्ययः कृतः ।
शोभनार्थस्तु सच्छब्दो यद्वा ऽध्याहारकल्पना ॥२०॥
अर्थापत्त्येतरेषां च प्रत्यक्षाऽऽभासलक्षणम् ।
बाधकज्ञानलाभो हि पूर्वाऽबाधे न संभवेत् ॥२१॥
स चाऽस्तीत्यवबोधत्वे सति नाऽन्योन्यसंश्रयम् ।
न चाऽनागतबाधे च पूर्वेणात्मा हि लभ्यते ॥२२॥

---

णाऽनुपादानादतिव्याप्तिनिरस्तं, तत्कथं तदधिक्रियते, ऽत आह संपूर्णमिति[२०] । कथमिति आह तत्सतोरिति । प्रत्यक्षविशेषण-स्यार्थमाह शोभनेति । यद्वा यथावस्थितावेव सत्तच्छब्दावविचाल्यैव तच्छब्दान्तरग्राह्यविशेषणोपादानायैवाऽध्याहर्त्तव्यमिति आह यद्वेति ।

नन्वाभासस्यापि लक्षणं वक्तव्यं, न हि तस्मिन्नज्ञाते तद्विविक्तं प्रत्यक्षं ज्ञायते, ऽत आह अर्थापत्त्येति[२१] । "तत्संप्रयोगजं प्रत्यक्षाभासं ज्ञायते एवेति कथमन्यसंप्रयोगजत्वं ज्ञायत" इत्याशङ्क्य "बाधकज्ञाना"*दित्युक्तं भाष्ये, तदयुक्तं, केन हि विशेषेणोत्तरस्य बाधकत्वं न पूर्वस्याऽत आह बाधकेति । अस्ति च तस्यात्मलाभ इत्याह स चेति[२२] । इतिहेतोरुत्तरस्य बाधकत्वमिति । ननु मिथ्यासतः पूर्वस्योत्तरेण बाधः, बाधाच्च मिथ्यात्वमितीतरेतराश्रयम, अत आह अवबोधत्वइति । अवबोधकं हि मिथ्यात्वस्योत्तरं न जनकं, येनेतरेतराश्रयं स्यात्, तेन दुष्टकारणादेव भूतस्य मिथ्यात्वस्योत्तरेणाऽवबोधान्नेतरेतराश्रयं, न च पूर्वमिथ्यात्वावगमापेक्षमुत्तरस्य जननम्, अतो नेतरेतराश्रयमिति ।

---

* शा. भा. पृ. ८ प. ८ ।

निमित्तदोषभेदेन पश्चाद्यत्राप्यबाधनम् ।
भवत्येव हि तत्रापि नरान्तराविपर्ययः ॥२३॥

---

यत्तु पूर्वमेव किं न बाधकमित्युक्तं, तत्राह **न चेति** । पूर्वोत्पत्तिवेलायामनागतमुत्तरम् असत्त्वादशक्यं बाधितुं, जाते तूत्तरे जायमानेनैव तेन पूर्वं बाधितम् असत्त्वात्कथमुत्तरस्य बाधकं स्यात्, उत्तरं तु पूर्वस्मिन्नुपजायते तद्बाधेन जायतइति युक्तम् इति ।

"प्राग् बाधकज्ञानोत्पत्तेः कथ मिथ्यात्वमवगम्यत"इति चोदयित्वा "यदा चक्षुरादिभि"रित्यादिना भाष्येण*तत्रापि कारणदोषज्ञानाऽवगम्यं मिथ्यात्वमित्युक्त,तद्दर्शयति **निमित्तेति**[२३] । पश्चाद्यत्राप्यबाधनं तत्रापि निमित्तदोषबोधेन मिथ्यात्वं गम्यतइति। यदि त्ववश्यं विपर्ययेण प्रयोजनं सो ऽप्यस्त्येव दिङ्मोहादौ नरान्तराणामित्याह **भवत्येवेति** । एतच्चाऽभ्युच्चयमात्रं न त्ववश्यमेतदादर्त्तव्यं, विना ऽपि विपर्ययेण कारणदोषज्ञानमात्रेणैव शक्यं मिथ्यात्वमवगन्तुं, यादृशस्य ज्ञानस्य व्यभिचारो दृष्टः तादृशे ज्ञाने निश्चयरूपे ज्ञाते ऽपि विना ऽपि बाधकेन विचिकित्सा जायते, यथा दूराद्देवदत्तो ऽयमिति सहसा निश्चित्य पुनः संशेते संशयाच्च निश्चये प्रतिबद्धे सति मिथ्यात्वं, तन्नियतदोषदर्शनादनुमीयमानं निश्चयेन न प्रतिबध्यते, एवं च शाक्याद्यागमानां कारणदोषादेवाऽप्रामाण्यसिद्धिरिति ।

---

* प्राग् ज्ञानोत्पत्तेः कथमवगम्यते? यदा न तत्काले सम्यग्ज्ञानस्य मिथ्याज्ञानस्य वा कश्चिद्विशेषः । यदा हि चक्षुरादिभिरुपहतं मनो भवति, इन्द्रियं वा तिमिरादिभिः, सौक्ष्म्यादिभिर्बाह्यो वा विषयः, ततो मिथ्याज्ञानम् अनुपहतेषु हि सम्यग्ज्ञानम्, इन्द्रियमनोऽर्थसंनिकर्षो हि सम्यग्ज्ञानस्य हेतुः, असति तस्मिन् मिथ्याज्ञानम्, तदुभयगतो दोषो मिथ्याज्ञानस्य हेतुः, दुष्टेषु हि मिथ्याज्ञानं भवति । शा. भा. पृ. ८ प. १६ ।

सर्वेषां सर्वदा यत्र धीः स्यात्तत्र न बाधनम् ।
न हि कारणदुष्टत्वबुद्धिस्तत्र बलीयसी ॥२४॥
जात्यादिषु यदा जाता बुद्धिः पश्चादसंभवात् ।
नाश्यते युक्तिभिस्तत्र व्यक्तमन्योन्यसंश्रयम् ॥२५॥
स्वतःप्रामाण्यतश्चात्र निर्णयो ऽस्तित्वबोधनात् ।
तद्रूपप्रत्ययोत्पत्तेस्तदसद्वादिनामपि ॥२६॥

वृत्तिकारग्रन्थः समाप्तः ॥

---

यदि साक्षाद्विपर्ययाऽभावेनाऽऽनुमानिकबाधात् प्रत्यक्षाऽऽभासत्वं भवति ततो जात्यादिज्ञानानामपि व्यतिरेकादिविकल्पाऽक्षमतया बाधादाभासता स्यादत आह सर्वेषामिति[२४] । अथ न बाधः, अत आह न हीति । यादृशस्य व्यभिचारो दृष्टः तादृशे विचिकित्सा भवति, न चालोके जाग्रतः प्रत्यासन्नविषयं गोत्वादिजातिज्ञानं कदा चिदपि दृष्टव्यभिचारम्, अतस्तस्मिन् दृढरूपे जायमाने तद्विरुद्धं यौक्तिकं कारणदोषज्ञानं नात्मानं लभते दुर्बलत्वादिति ।

सोऽयमितरेतराश्रयस्य व्यक्तो विषय इत्याह जात्यादिष्विति[२५]। मिथ्यात्वे ह्यवगते ऽवगतिबाधः, ततश्च तदवगम इति । नन्वमिथ्यात्वे ऽपि तुल्यमितरेतराश्रयं, बाधाभावाधीनममिथ्यात्वं, तदधीनश्च बाधाऽभाव इत्यत आह स्वत इति[२६]। सद्भावबोधस्तावज्जात्यादिषु जायते, तस्य च स्वतःप्रामाण्यन्यायादेवाऽमिथ्यात्वं निर्णीयते न बाधाभावमपेक्षते, निर्णीते चाऽमिथ्यात्वे तद्विरोधादेव न बाधोत्पत्तिः संभवति, निर्विगानं च सद्भावबोधनं तदपलापवादिनामप्युत्पद्यमानत्वादिति ॥

इति न्यायरत्नाकरे वृत्तिकारमतम् ॥

# अथ निरालम्बनवादः ।

प्रमाणत्वाऽप्रमाणत्वे पुण्यपापादि तत्फलम् ।
विध्यर्थवादमन्त्राऽर्थनामधेयादिकल्पना ॥१॥
सर्वेषु लक्षणेष्वेवं स्वप्रमाणगणैः स्थितिः ।
वचनव्यक्तिभेदेन पूर्वसिद्धान्तपक्षता ॥२॥
कर्मभ्यः* फलसम्बन्धः पारलौक्यैहलौकिके† ।
सर्वमित्याद्ययुक्तं स्यादर्थशून्यासु बुद्धिषु ॥३॥
तस्माद्धर्मार्थिभिः पूर्वं प्रमाणैर्लोकसंमतैः ।
अर्थस्य सदसद्भावे यत्नः कार्यः क्रियां प्रति[१] ॥४॥

---

अथ निरालम्बनवादः ।

"ननु सर्व एव निरालम्बनः स्वप्नवत् प्रत्यय"‡ इत्यादिना बाह्यार्थसद्भावं प्रतिपादयति भाष्यकारः, तस्य स्वतन्त्रोपयोगं§ दर्शयति प्रमाणत्वेति[१] चतुर्भिः । यदि सर्वा बुद्धयो बाह्यार्थशून्याः स्वांशपर्यवसायिन्यो भवेयुः, ततो यो ऽयं चोदना धर्मे प्रमाणम् अन्यदप्रमाणं, तत्संयोगजं प्रत्यक्षम् अतत्संयोगजमाभासं, ज्योतिष्टोमादि पुण्यं ब्रह्महत्यादि पापं, तदुभयविलक्षणमभ्युदयप्रत्यवायात्मकं तेषां फलं, विधेरर्थः प्रवर्त्तनं, मर्थवादस्य प्ररोचनमर्थो, मन्त्राणामनुष्ठेयप्रकाशनं,

---

* कर्मिभ्य इति पाठान्तरम् । धर्मेभ्य इत्यपि क्व चित् ।

† लौकिकः इति पाठान्तरम् ।

‡ ननु सर्व एव निरालम्बनः स्वप्नवत् प्रत्ययः, प्रत्ययस्य हि निरालम्बनता स्वभाव इव लक्षितः स्वप्ने, जाग्रतो ऽपि स्तम्भ इति वा कुड्य इति वा प्रत्यय एव भवति, तस्मात् सो ऽपि निरालम्बनः । शा. भा. पृ. ८ प. २१ ।

§ स्वशास्त्रोपयोगमिति पाठान्तरम् ।

यदा संवृतिसत्येन सर्वमेतत् प्रकल्प्यते ।
ज्ञानमात्रे ऽपि कस्माद्वो वृथा ऽऽग्रहो* ऽर्थकल्पने ॥५॥
संवृतेर्न तु सत्यत्वं सत्यभेदः कुतो ऽन्वयम् ।
सत्यं चेत् संवृतिः केयं मृषा चेत् सत्यता कथम् ॥६॥

---

नामधेयानां गुणफलविधानार्थत्वविचार, आदिशब्दोपात्तश्च स्मृत्याचारप्रामाण्याऽप्रामाण्यविचारः, तथा शब्दान्तरश्रुतिलिङ्गश्रुत्यर्थादिभिः कर्मभेदशेषत्वक्रमनियमाः, वचनव्यक्तिभेदेन वाक्यार्थचिन्ता, कर्माणि कानि चिदामुष्मिकस्वर्गफलानि, कानि चिदनियतफलानि, कानि चिदैहिकवृष्ट्यादिफलानीत्यादिव्यवहारः, स सर्वश्चोदनादीनामभावादयुक्तः स्यात्; अतो ऽवश्यं धर्मार्थिभिः पुरुषैः सुगताऽऽशीविषोपसृष्टमाहामानिकविषचिकित्सया बाह्यार्थसद्भावे लोकसंमतप्रमाणादौ बाधनेन यत्नः कर्त्तव्यः क्रियां प्रति, क्रिया ऽनुष्ठानं, तत्सिद्ध्यर्थमित्यर्थः। चोदयति यदेति[५] । शाक्याः प्राहुः ।

द्वे सत्ये समुपाश्रित्य बुद्धानां धर्मदेशना ।
लोके संवृतिसत्यं च सत्यं च परमार्थतः ॥ इति ।

तेन तद्वदेव भवतामपि संवृतिसत्येन बाधेन पूर्वोक्तसमस्तव्यवहारासिद्धेः पारमार्थिकार्थसद्भावकल्पने वृथैवाऽभिनिवेश इति। परिहरति संवृतेरिति[६] । मिथ्यापर्यायस्य संवृतिशब्दस्य न सत्यशब्देन सामानाधिकरण्यं, न हि सत्यस्य मिथ्यात्वपरमार्थरूपेण भेदो ऽस्ति, परमार्थस्य हि सत्यशब्दो वाचकः, न त्वक्षादिशब्दवदनेकार्थ इति। एतदेव विवृणोति सत्येति । सत्यं नाऽनेकार्थः सत्यत्वमेव वदति, तत्तु मृषात्वे ऽप्यनुगतमिति तद्वचनेन संवृतिशब्देन सामाना-

---

* वृथाग्राह इति पाठान्तरम् ।

सत्यत्वं न च सामान्यं मृषार्थपरमार्थयोः ।
विरोधान्न हि वृक्षत्वं सामान्यं वृक्षसिंहयोः ॥७॥
तुल्यार्थत्वे ऽपि तेनैषां मिथ्यासंवृतिशब्दयोः ।
वञ्चनार्थ उपन्यासो लालावक्त्राऽऽसवादिवत् ॥८॥
नास्तिक्यपरिहारार्थं* संवृतिः, कल्पनेति च ।
कल्पना ऽपि त्वभिन्नस्य नैव निर्वस्तुके भवेत् ॥९॥
तस्माद्यन्नास्ति नास्त्येव यत्त्वस्ति परमार्थतः ।
तत्सत्यमन्यन्मिथ्येति† न सत्यद्वयकल्पना ॥१०॥

---

धिकरण्यं सिध्यति, अत आह सत्यत्वमिति[७] । कारणमाह विरोधादिति । मृषात्वविपरीतं सत्यत्वं कथं तत्राऽनुवर्त्तेतेति । अत्रैव दृष्टान्तमाह न हीति । तेन मिथ्यावचनो ऽप्ययं संवृतिशब्दो बौद्धैः स्वनास्तिक्यपरिहाराय लोकं वञ्चयितुं प्रयुक्तो लालायामिव वक्त्रासवशब्द इत्याह तुल्यार्थत्वे ऽपीति[८] संवृति[९]रन्तेन ।

काल्पनिकेनैव वाह्येन सर्वव्यवहारसिद्धिरित्यपि बौद्धानां कल्पनावाचोयुक्तिः संवृतिवाचोयुक्तिवद्वञ्चनार्थैव, न हि निर्वस्तुके जगति अभिन्नस्य चिन्मात्रस्य विचित्रव्यवहाराय भेदकल्पना सम्भवतीत्याह कल्पनेति । उपसंहरति तस्मादिति[१०] । यत्खलु परमार्थतो नास्ति तन्नास्त्येव, न तु सत्यं, यदेव परमार्थतोस्ति तदेव सत्यं

---

* परिहासार्थमिति क्व चित् ।

† मिथ्येवेति पाठान्तरम् ।

स्वप्नादिभोगवच्चापि योपभोगत्वकल्पना ।
तन्निवृत्त्यर्थमेवेह परमार्थे प्रयत्यते ॥११॥
न हि स्वप्नसुखाद्यर्थं धर्मे कश्चित्प्रवर्तते ।
यादृच्छिकत्वात्स्वप्नस्य तूष्णीमास्येत पण्डितैः ॥१२॥
परमार्थफलाऽवाप्तिमिच्छद्भिस्तेन यत्नतः ।
प्रतिपत्तिर्विधातव्या युक्तिभिर्बाह्यवस्तुषु ॥१३॥
'तत्राऽर्थशून्यं विज्ञानं योगाचाराः समाश्रिताः ।
तस्याप्यभावमिच्छन्ति ये माध्यमिकवादिनः ॥१४॥
तत्र बाह्यार्थशून्यत्वं तुल्यं तावद् द्वयोरपि ।
निवृत्त्या ऽस्य* ततो ज्ञाने तद्वत्संवृतिकल्पना ॥१५॥

---

नाऽन्यत्तद्धि मिथ्यैव कथं सत्यं स्यान्न तु सत्यद्वयमस्तीति । किं च, संवृतित्वे प्रपञ्चस्य स्वप्नसुखोपभोगवत् स्वर्गाद्युपभोगो ऽपीत्याश्रीयेताऽतस्तन्निराकरणाय परमार्थे प्रयतितव्यमित्याह स्वप्नादीति[११] । तत्तुल्यत्वे वा को दोषो ऽत आह न हीति[१२] । किमिति न प्रवर्त्तेते, ऽत आह यादृच्छिकत्वादिति । अनिरूपितनिमित्तं हि स्वप्नसुखं, न तदभिसंधाय प्रवृत्तिः सम्भवतीति । तेनाऽर्थस्य पारमार्थिकत्वसिद्ध्यर्थं बाह्यविषयत्वं प्रतीतेः साधयितव्यमित्याह परमार्थेति[१३]।

किमु पुनर्बाह्यस्यैव सद्भावः प्रतिपाद्यते न ज्ञानस्य, तदपि कैश्चिदपह्नुतम्, अत आह तत्रेति[१४] त्रयेण । ज्ञानापह्नववादिनो ऽपि प्रथममर्थमपह्नुत्य निर्विषयज्ञानाऽनुपपत्तेः ज्ञानमपह्नुवते, तेनार्थापह्नवो द्वय-

---

* निवृत्त्यर्थमिति २ पु. पा. ।

तस्मात्साधारणत्वेन तन्मूलत्वेन चाप्ययम् ।
'बाह्यार्थसदसद्भावे यत्नो भाष्यकृता कृतः ॥१६॥
बाह्यार्थाऽपन्हवे ऽद्वैतमेकार्थस्य* परीक्षणात् ।
प्रमाणमाश्रितश्चैकस्तत्रास्तां यः प्रमेयतः' ॥१७॥
प्रमाणस्थस्तु मूलत्वादिहेदानीं परीक्ष्यते ।
प्रस्तुतः स द्विधा चात्र प्रथमं त्वनुमानतः ॥१८॥
प्रत्यक्षबाधने चोक्ते पश्चात्तच्छक्त्यवेक्षणात् ।
तत्राऽनुमानमाहेदं नन्वित्यस्य च संगतिः ॥१९॥
तत्संप्रयोगजं नाम† प्रत्यक्षमिति भाषितम् ।
तत्रेन्द्रियार्थसंबन्धभेदो न परमार्थतः ॥२०॥

---

साधारणत्वात्, ज्ञानाऽपह्नवस्य च तन्मूलस्य तन्निराकरणेनैव निराकरणसिद्धेस्तदेव निराक्रियतइति ।

भाष्यकारेण प्रमाणशक्तिपरीक्षाद्वारेण बाह्याऽपह्नवो निराकृतः न तु प्रमेयपरीक्षाद्वारा, तत्र कारणमाह बाह्यार्थेति[१६] सार्द्धेन। प्रमाणबलेनैव बाह्यार्थे व्यवस्थापिते यदिदमवयविनो ऽवयवातिरेकेणाऽनुपलब्धेः परमाणूनां चाऽतीन्द्रियत्त्वान्न बाह्यं ग्राह्यं संभवतीति चोद्यं तत् प्रमाणबलेनैव निरस्तं भवतीति प्रमाणबलेनैव परीक्षितुं युक्तमिति । प्रमाणस्थो ऽप्यपह्नवो द्विविध इत्याह प्रस्तुत इति[१८] ।

भाष्यतात्पर्यमाह तत्रेती[१९] त्यन्तेन । का पुनरस्य संगतिः, तां

---

* बाह्यार्थापह्नवो द्वैधमेको ऽर्थस्येति २ पु. पा. ।

† नान्यदिति पाठान्तरम् ।

कल्पितः संप्रयोगस्तु स्वप्नादावपि विद्यते ।
तदतद्योगजन्यस्य* विभागस्तेन दुर्लभः ॥२१॥
मिथ्यात्वं यद् द्विधैवोक्तं नान्यथेत्यत्र चोच्यते ।
सर्वस्यैव च मिथ्यात्वे किं विशिष्याऽभिधीयते† ॥२२॥
स्तम्भादिप्रत्ययो मिथ्या प्रत्ययत्वात्तथा हि यः ।
प्रत्ययः स मृषा दृष्टः स्वप्नादिप्रत्ययो यथा ॥२३॥
'सिद्धसाधनभावांशे दृष्टान्ताभाव एव च ।
मा भूतामेवशब्दश्च व्यर्थो ऽशेषप्रसाधने ॥२४॥

---

द्वेधा दर्शयति अस्ये[२१]त्यभिधीयते[२२]ऽन्तेन। पारमार्थिकं तत्संप्रयोगजत्वं न क्वचिदस्ति, काल्पनिकं त्वाभासे ऽपि विद्यते, तदपि नाऽतत्संप्रयोगजं स्यात्, तथा सत्यमिथ्याविभागो ऽप्ययुक्तः, सर्वस्य मिथ्यात्वादिति पूर्वोक्ताक्षेपेण सङ्गतिरिति ।

भाष्योक्तमनुमानमुपन्यस्यति स्तम्भादीति[२३] । भाष्ये सर्वशब्दः स्वप्नादिप्रत्ययानपि पक्षीकरोतीति लक्ष्यते, तत्कथं स्तम्भादिप्रत्यय इत्युच्यते, तत्राह सिद्धसाधनेति[२४] सार्द्धेन । तेष्वपि हि पक्षीकृतेषु तस्मिन्नंशे सिद्धसाधनता दृष्टान्ताभावश्च स्याताम्, एवशब्दश्च नोपपद्येत, स हि येन संबध्यते तत्प्रतियोगिनं व्यवच्छिनत्ति, साकल्यवचनश्च सर्वशब्द इति तत्सम्बन्ध्येवशब्दो वैकल्यव्यवच्छेदार्थः, तेन जाग्रद्बुद्धिपरिग्रहार्थ एव शब्दः, न कश्चिदेव प्रत्ययो निरालम्बनः किं तु सर्व एवेति ।

---

* योगजत्वस्येति २ पु. पा. ।

† विशेष्येति १ पु. पा. ।

सर्व एवेति तेनात्र जाग्रद्बुद्धिपरिग्रहः' ।
स्वांशाभ्युपगमाच्चापि बाह्यग्राह्यनिवारणम् ॥२५॥
प्रत्ययस्येति साध्यांशव्याप्तहेतुनिदर्शनम् ।
हेतुश्चोपनयेनात्र जाग्रतो ऽपीति दर्शितः ॥२६॥
विपक्षाभावतश्चात्र व्यतिरेको न कथ्यते ।
सामान्यस्य च हेतुत्वात्कस्मात्पक्षैकदेशता ॥२७॥

इति पूर्वपक्षभाष्यव्याख्या * ।

---

एवं सर्वशब्दं विशेषपरं व्यवस्थाप्य धर्मवचनमपि निरालम्बनपदं बाह्याऽनालम्बनत्वेन व्यवस्थापनीयम्, अन्यथा बौद्धस्य स्वाऽभ्युपगतस्वांशालम्बनत्वविघातादिति आह स्वांशेति[25] । प्रत्ययस्येति। भाष्यार्थमाह प्रत्ययस्येति[26] ।

ननु भाष्ये न कश्चिद्धेतुरुक्तः, यस्य प्राप्तिर्निर्दिश्येतेत्यत आह हेतुरिति । उपनयो नामोदाहरणोपदर्शितसाध्यनियमस्य हेतोः साध्यधर्मिण्युपसंहारः, तदिह "प्रत्ययस्य ही"त्यादिनोदाहरणीयस्य प्रत्ययस्य निरालम्बनत्वेन नियमं दर्शयित्वा "जाग्रतो ऽपी"त्यादिना जाग्रद्बुद्धावुपसंहारः कृतः, तदेव प्रत्ययत्वं हेतुरुक्तं भवति । नावश्यं पञ्चम्यैव हेतुर्निर्देष्टव्यः, उदाहरणोपनयनिगमनैरपि ह्यविकलमेव साधनं निगमनं च "तस्मात्सो ऽपी"त्यनेन दर्शितमिति ।

ननु यन्निरालम्बनं न भवति तत्प्रत्ययो न भवतीति विपक्षाद्व्यतिरेकः किं नोक्तः,अत आह विपक्षेति[27] । न हि निरालम्बनः प्रत्ययत्वादित्युक्ते प्रतिज्ञार्थैकदेशता हेतोः स्यादत आह सामान्यस्येति। निरालम्बनज्ञानमात्रवादिनां तदतिरिक्तमस्ति तत्त्वं तदभावादेव तत्र हेतोरप्रवृत्तेः किं व्यतिरेककथनेनेति ।

---

* इदं नास्ति १ पु. ।

'जाग्रज्ज्ञाने* विशेषो ऽयं यतः सुपरिनिश्चयः ।
बाह्यालम्बनसंबन्धो न प्रसिद्धः परं प्रति ॥२८॥
तस्माद्यद्भाष्यकारेण दत्तमुत्तरमत्र तु ।
विकल्पसमता वा स्याद्वैधर्म्यसमता ऽपि वा' ॥२९॥
दुष्टत्वात्पूर्वपक्षस्य जात्युक्तिः कैश्चिदाश्रिता ।
प्रतिज्ञादोषमेवाहुः के चित्प्रत्यक्षबाधनम् ॥३०॥

---

ननु "प्रत्यये जाग्रतो बुद्धिः सुपरिनिश्चिता कथं विपर्येष्यती"ति† सिद्धान्तभाष्यं, तदाक्षिपति जाग्रज्ज्ञानइति[२८] द्वयेन । यो ऽयं स्वप्नादिभ्यो जाग्रज्ज्ञानस्य सालम्बनत्वसाधनाय सुपरिनिश्चयरूपो विशेषो ऽभिहितः, स यस्मात्सालम्बनत्वव्याप्ततया परेषामसिद्धः, तस्माद्विकल्पसमा वैधर्म्यसमा वा जातिरियं, प्रत्ययत्वे तुल्ये ऽपि यथा किं चित्सुपरिनिश्चितं किं चिन्न, तथा किं चिन्निरालम्बनं किं चित्सालम्बनं भविष्यतीति विकल्पसमा, यदि प्रत्ययत्वेन साधर्म्यान्निरालम्बनत्वं सुपरिनिश्चितत्वेन वैधर्म्यान्निरालम्बनत्वं न स्यादिति वैधर्म्यसमा, तदेव तज्जात्युत्तरं साधनमिति ।

तत्र केषां चिन्मतेन समाधत्ते दुष्टत्वादिति[३०] । स्वमतआह प्रतिज्ञेति । नेदं सुपरिनिश्चितत्वं लिङ्गत्वेनोच्यते, किं तु सुपरिनिश्चितरूपा जाग्रतः प्रत्यक्षादिरूपा बुद्धिर्बाह्यं सुपरिनिश्चितं व्यवस्थापयन्ती तदभावप्रतिज्ञां बाधतइति। प्रत्यक्षग्रहणं सर्वप्रमाणोपलक्षणार्थं, सर्वाणि हि बाह्यं व्यवस्थापयन्तीति । ननु नीलादिमात्रं प्रत्यक्षेण

---

* जाग्रद्भावे इति १ पु. पा. ।
† शा. भा. पृ. ८ प. २४ ।

शक्ष्यामो यदि विस्पष्टं स्वांशग्राह्यनिवारणम् ।
तदा ते शुद्ध एव स्यात्पक्षो ग्राह्यनिवारणः ॥३१॥
प्रत्याक्षादेश्च विषयो बाह्य एवाऽवतिष्ठते* ।
तन्निषेधकृतस्तस्य तैर्भवेत् पक्षबाधनम् ॥३२॥
सुनिश्चयेन चैतेषां बाधकप्रत्ययादृते ।
प्रमाणाभासता नास्तीत्येतस्मात्कथ्यते बलम् ॥३३॥
दुष्टज्ञानगृहीतार्थप्रतिषेधो हि युज्यते ।
गृहीतमात्रबाधे तु स्वपक्षो ऽपि न सिध्यति ॥३४॥
अग्राह्यत्वाच्च भेदेन विशेषणविशेष्ययोः ।
अप्रसिद्धोभयत्वं वा वाच्यमन्यतरस्य वा ॥३५॥

---

गृह्यते, तच्च ज्ञानरूपमपि सम्भवतीति नावश्यं बाह्यमेवेति । कथं बाह्याऽभावस्य प्रत्यक्षबाधः, अत आह शक्ष्याम इति[३१] । स्वांशस्य ग्राह्यत्वाऽसम्भवे सिद्धे बाह्यग्राह्यनिवारणो ऽपि पक्षः फलतः शुद्ध एव ग्राह्यमात्रनिवारणः स्यादित्यस्ति तदुपस्थापकप्रत्यक्षविरोध इति । यद्वा यदा स्वांशस्य ग्राह्यत्वं निरस्तं तदा बाह्यस्यैव प्रत्यक्षादिग्रहणाद्बाह्याऽभावप्रत्यक्षस्याप्यस्त्येव प्रत्यक्षादिविरोध इत्याह प्रत्यक्षादेरिति[३२] ।

सुपरिनिश्चितत्वं च भाष्ये प्रत्यक्षादीनां निरालम्बनाऽनुमानाद् बलीयस्त्वं कथयितुं न तु लिङ्गत्वेनेत्याह सुनिश्चयेनेति[३३] । एतदेव विवृणोति दुष्टेति[३४] । स्वपक्षाऽसिद्धिमेव प्रपञ्चयितुमारभते अग्राह्यत्वादिति[३५] । प्रत्ययरूपधर्मिग्राहकस्य निरालम्बनरूपध-

---

* अत्रशिष्यते इति २ पु. पा. ।

वक्तृश्रोत्रोश्च यज्ज्ञानं विशेषणविशेष्ययोः ।
तन्निरालम्बनत्वेन स्ववाग्बाधो द्वयोरपि ॥३६॥
संभवो न च भेदस्य* विशेषणविशेष्ययोः ।
तस्मान्निरूपणं नास्ति प्रतिज्ञार्थस्य शोभनम् ॥३७॥
निरालम्बनता नाम न किञ्चिद्वस्तु गम्यते ।
तेन तद्व्यतिरेकादौ प्रश्नो नैवोपपद्यते ॥३८॥
'यद्यवस्तु कथं त्वस्माँस्त्वं बोधयितुमिच्छसि ।
बुध्यसे वा स्वबुद्ध्या त्वं, कल्पिता त्वथ साध्यते† ॥३९॥
असतः कल्पना कीदृक् क्लृप्तौ वस्तु प्रसज्यते ।
कथमिष्टमभावे चेद्वस्तु सो ऽपीति वक्ष्यते ॥४०॥

---

ग्राहकस्य च प्रत्ययस्य निरालम्बनत्वात् अप्रसिद्धविशेष्यत्वम, अप्रसिद्धविशेषणत्वम्, अप्रसिद्धोभयरूपत्वं वा पक्षदोषः स्यादिति ।

स्ववचनविरुद्धश्चाऽयं पक्ष इत्याह वक्तृश्रोत्रोरिति[३६] । धर्मधर्मिविषयस्यापि वक्तृश्रोत्रोः प्रत्ययस्य निरालम्बनत्वेनाऽङ्गीकृतस्यैव धर्मस्य धर्मिणश्च बाधादुभयोः स्यात् स्ववाग्विरोध इति। किं च विशेष्यात्प्रत्ययाद्विशेषणस्य निरालम्बनत्वस्याऽभेदे विशेषणत्वाऽनुपपत्तिः, भेदस्तु न सम्भवति, भेदग्राहिणः प्रत्ययस्य निरालम्बनत्वादित्याह सम्भव इति[३७]। उपसंहरति तस्मादिति। चोदयति निरालम्बनतेति[३८] । परिहरति यदीति[३९] पादत्रयेण । शङ्कते कल्पितेति । दूषयति असत इति[४०] । कल्पना हि ज्ञानं, न च तुच्छस्य तद्विष-

---

* बोधस्येति पाठान्तरम् ।

† कल्पयित्वा ऽथ साध्यते इति पाठान्तरम् ।

तथा प्रत्यय इत्येष कर्म भावादि वा भवेत् ।
भावादिषु विरोधः स्यात्कर्म चेत्सिद्धसाधनम् ॥४१॥
प्रत्याय्यस्य हि रूपादेर्निरालम्बनतेष्यते ।
अविज्ञानात्मकत्वेन किञ्चिन्नालम्बते ह्यसौ ॥४२॥
कर्तृत्वे करणत्वे वा पक्षत्वं शब्दयोरपि ।
तन्निरालम्बनत्वेन पक्षाऽभावः प्रसज्यते ॥४३॥
प्रत्याय्येन च भिन्नेन विना कर्त्राद्यसम्भवः ।
प्रत्यये तन्निमित्ते वा बाधः स्ववचनेन ते ॥४४॥

---

यत्वं सम्भवतीति। तद्विषयत्वे चाऽर्थक्रियालक्षणत्वात्सत्त्वस्य तुच्छत्वाऽनुपपत्तिरित्याह क्लृप्ताविति । चोदयति कथमिति। अभावस्याऽवस्तुनो ऽपि ज्ञानविषयत्वं दृष्टमिति। परिहरति वस्त्विति।

यश्चायं धर्मिवचनः प्रत्ययशब्दः स भावकर्मकर्तृकरणानामन्यतमं वदेत्, कर्तृभावादिषु स्ववाग्विरोधः, कर्मणि सिद्धसाधनमित्याह तथेति[४१] । सिद्धसाधनमेव विवृणोति प्रत्याय्यस्येति[४२] । कथमिष्यते,ऽत आह अविज्ञानेति । कर्तृकरणवचनत्वे तु धर्मधर्मिप्रतिपादकयोरपि शब्दयोर्विवक्षावशेन प्रतीतौ करणत्वसम्भवात्तयोरपि निरालम्बनत्वं स्यात्, शब्दस्य च निरालम्बनत्वमभिधेयशून्यत्वं नान्यत्; अतश्च पक्षस्यैवाऽभावः प्रतिज्ञातः स्यादित्याह कर्तृत्वइति[४३]।

'भावादिषु विरोधः स्या'दिति यदुक्तं तद्विवृणोति प्रत्याय्येनेति[४४]। भावे तावत् प्रतीतिः प्रत्ययः, सा च वस्त्वन्तरप्रकाशस्वभावेति उद्दिष्टमात्रैव सालम्बना प्रतीतेति तन्निमित्तप्रत्ययशब्दे धर्म्युक्त्यैव निरालम्बनत्वस्य बाधः, तत्सालम्बनतयैव कर्तृकरणयोरपि

अथापि रूढिरूपेण प्रत्ययः स्यात्तथापि तु ।
ग्राहकं वस्तु सिद्धं नः प्रत्ययो ऽन्यस्य वस्तुनः ॥४५॥
तमभ्युपेत्य पक्षश्चेदभ्युपेतं विरुध्यते ।
विशेष्यस्याऽप्रासिद्धिश्च तवाऽस्माकमतादृशे ॥४६॥
आत्मधर्मस्वतन्त्रत्वकल्पने ऽपि तथा भवेत् ।
न च प्रत्ययमात्रत्वं किञ्चिदस्त्यनिरूपणात् ॥४७॥
शब्दाऽर्थमात्ररूपेण यथा ऽन्येषां निरूपणम् ।
तथा च भवतो न स्याद्वाच्यभेदमनिच्छतः ॥४८॥

---

तद्द्वारेण सालम्बनत्वात् स एव दोष इति । यदि तु रूढ एव प्रत्ययशब्दः, तथापि स्ववाग्विरोध इत्याह अथापीति[४५]। कारणमाह ग्राहकमिति । प्रत्ययशब्दस्याऽर्थान्तरग्राहकवस्तुवचनता लोकसिद्धेति। तादृशं च प्रत्ययमभ्युपेत्य निरालम्बनत्वसाधने ऽभ्युपगमविरोधो ऽपीत्याह तमिति[४६] । ईदृशश्च प्रत्ययस्तवाऽसिद्ध इत्यप्रसिद्धविशेष्यता पक्षस्येत्याह विशेष्यस्येति तवाऽन्तेन। अतादृशे तु पक्षीकृते ऽस्माकमत्राऽप्रसिद्धविशेष्यत्वमित्याह अस्माकमिति । किं चात्मधर्मो वा प्रत्ययः पक्षीक्रियते, स्वतन्त्रो वा, पूर्वत्र तवाऽप्रसिद्धविशेष्यत्वम्, उत्तरत्र ममेत्याह आत्मधर्मेति[४७] । न चाऽनिर्धारितविशेषं प्रत्ययमात्रं पक्षः, तस्याऽनिरूपणादित्याह न चेति ।

नन्विदं सर्वसाधनेषु शक्यं वक्तुम्, नित्यः शब्द इति किमाकाशगुणः शब्दः, किं वा वायवीय, इत्यपि सम्भवात् । अथ तत्र शब्दशब्दवाच्यं पक्षः, तदिहाऽपि प्रत्ययशब्दवाच्यमात्रं सम्भवत्येवाऽत आह शब्दार्थेति[४८] । न ह्यसाधारणाद् भिन्नं शब्दार्थमात्रं सामान्यं भवतामस्तीति ।

निरालम्बनता चापि* सर्वथा यदि साध्यते ।
विशेषणाऽप्रसिद्धिश्च दृष्टान्तश्च न विद्यते ॥४९॥
केन चिच्चेत्प्रकारेण निरालम्बनतोच्यते ।
रसज्ञानस्य रूपादिशून्यत्वात्सिद्धसाधनम् ॥५०॥
अथ बुद्धिर्यदाकारा तदालम्बनवारणम् ।
स्वाकारस्याऽभ्युपेतत्वात्तदभावो विरुध्यते ॥५१॥
बाह्याऽनालम्बनत्वे ऽपि बाह्य इत्यग्रहो† यदि ।
स्तम्भादौ नैव तद्बुद्धिरित्येवं सिद्धसाधनम् ॥५२॥

---

एवं धर्मी विकल्प्य दूषितः, धर्ममपि निरालम्बनत्वं विकल्प्य दूषयति निरालम्बनतेति[४९] । स्वभादावपि देशकालान्तराऽवस्थितमस्त्येव बाह्यं, सन्निहिततद्देशकालसंसर्गमात्रं तु नास्ति, तेनात्यन्तं निरालम्बनं न किं चिदप्यस्तीत्यप्रसिद्धविशेषणता पक्षस्य, दृष्टान्तस्य च साध्यविकलतेति । कथं चिन्निरालम्बनत्वे तु सिद्धसाधनमित्याह केन चिदिति[५०] । रसज्ञानं रसालम्बनं रूपस्वरूपात्मना न विद्यतएवेति तदालम्बनत्वं तज्ज्ञानस्य नास्त्येवेति सिद्धसाधनमिति। अथ यदाभासा बुद्धिस्तस्याऽसत्त्वमुच्यते, ततः स्वांशस्य बोधाऽनभ्युपगमात् तदसत्त्वे ऽभ्युपगमविरोध इत्याह अथेति[५१] । यदि तु बाह्याऽनालम्बनत्वं साध्यते बाह्यं स्वातिरिक्तं नालम्बते बुद्धिरिति, तत्रापि यदि बाह्य इत्येवमग्रहणं साध्यते, ततः सिद्धसाधनमित्याह बाह्येति[५२] । स्तम्भादिरूपेण त्वनालम्बनत्वे संविद्विरोध इत्याह

---

* चेहेति पाठान्तरम् ।

† आग्रह इति क्व चित् ।

अथ स्तम्भादिरूपेण निरालम्बनतोच्यते ।
संवेदनस्य दृष्टत्वात्तद्विरोधः प्रसज्यते ॥५३॥
द्विचन्द्रादिषु तुल्यश्चेन्नेन्द्रियाऽप्राप्तितो हि नः ।
तत्राऽनालम्बनोक्तिः स्यान्नाऽर्थसंवित्त्यभावतः ॥५४॥
सर्वत्रार्थेन्द्रियाणां नः संयोगः सदसत्तया ।
संवित्तौ विद्यमानायां सदसद्ग्राहिका स्थितिः ॥५५॥
भवतस्त्विन्द्रियादीनामभावाद् ग्रहणादृते ।
नालम्बनत्वे* हेतुः स्यान्निषेधो ऽतो न युज्यते ॥५६॥
बहिर्भावाऽप्रसिद्धत्वात्तेनाऽनालम्बना मतिः ।

---

अथेति[५३]। शङ्कते द्विचन्द्रादिष्विति[५४]। तुल्यो ऽयमनालम्बनत्वाभिमतेष्वपि द्विचन्द्रादिज्ञानेषु संविद्विरोध इति । परिहरति नेति । द्विचन्द्रबुद्धिरिन्द्रियाऽप्राप्तमर्थमविद्यमानमेव चन्द्रद्वित्वं गृह्णातीति कृत्वा ऽनालम्बना, न तु संवित्त्यभावादिति। पूर्वत्र शुक्तिरजतसंवेदने ऽपीदृशमेवाऽनालम्बनत्वं न संविदभावादित्याह सर्वत्रेति[५५]। भवन्मते त्विन्द्रियादीनामभावात्तद्रूपग्रहणमेव तदालम्बनत्वं, तन्निषेधे च स्फुट एव तद्विरोध इत्याह भवत इति[५६] । बाह्याऽनालम्बनत्वे बाह्य इत्यग्रहणे सिद्धसाधनमुक्तम, अथ यद्वस्तुतो बाह्यं तदनालम्बनत्वं साध्यते, ततो ऽप्रसिद्धविशेषणः पक्षः स्याद्, बहिर्भावरूपस्याऽर्थस्य भवतामप्रसिद्धत्वात्तद्विशिष्टेन निरालम्बनत्वेन विशिष्टः प्रत्ययो न साधयितुं शक्यत इत्याह बहिर्भावेति[५७] ।

---

* नालम्बनत्वहेतुरिति का. पा. ।

कथञ्चिच्च*त्साध्यते नैष पक्षो हि ज्ञायते तदा† ॥५७॥
यथा ऽन्यबोधनाशक्तेर्नाप्रसिद्धे विशेषणे ।
पक्षसिद्धिस्तथैव स्या‡द्विशेषणविशेषणे§ ॥५८॥
नाऽप्रसिद्धे पदार्थे हि वाक्यार्थः संप्रतीयते ।
तत्पूर्वकत्वात्पक्षश्च वाक्यार्थः स्थापयिष्यते ॥५९॥
पर्युदासे निषेधे वा व्यतिरिक्तस्य वस्तुनः ।
प्रमेयत्वाद्यभेदेन जगतः सिद्धसाधनम् ॥६०॥

---

ननु विशेषणाऽप्रसिद्धिर्दोषः, न तु विशेषणविशेषणाऽप्रसिद्धिरत आह यथेति[५८] । कथमन्यबोधनाऽशक्ति,रत आह नाऽप्रसिद्ध-इति[५९] । वह्निर्भावादिपदार्थविशिष्टो हि पक्षः, स वाक्यार्थरूपत्वादप्रसिद्धेषु पदार्थेषु न ज्ञायतइति । व्यतिरिक्ताऽनालम्बनत्वं च साधयता यदि पर्युदासाऽङ्गीकरणेनाऽव्यतिरिक्तमालम्बतइति साध्यते, यदि वा प्रतिषेधाऽङ्गीकरणेन व्यतिरिक्तं नालम्बते इति साध्यते, ‖ द्वेधाऽपि सिद्धसाधनं, प्रमेयत्वरूपेण सर्वस्य सर्वस्मादव्यतिरेकादित्याह पर्युदासे इति[६०] । व्यतिरिक्तत्वं च यद्यात्यन्तिकं, तथापि तस्य क

---

* कथं चेति २ पु. पा. ।

† यदेति २ पु. पा. ।

‡ तत्रेह स्यादिति पाठान्तरम् ।

§ विशेषेण विशेषणे इति क्वचित् ।

‖ साध्यते इति नास्ति १ पु. ।

यदि चाऽत्यन्तभेदेन* निरालम्बनतोच्यते ।
कथञ्चिच्चेद्विरुध्येत प्राक्पक्षः कल्पितेन ते ॥६१॥
वस्त्वाद्याकारतश्चापि धीर्निरालम्बनेष्यते ।
ग्राहकाच्चेदभिन्नत्वं शक्तिभेदो विरुध्यते ॥६२॥
निरालम्बनबुद्धेश्च यद्युत्पत्तिः प्रसाध्यते ।
दृष्टत्वात्सेष्यते ऽस्माभिर्बाह्यग्राह्यविवर्जिता ॥६३॥
सम्यक्त्वं पुनरेतस्यास्त्वं नेच्छसि कथञ्चन ।

---

चिदप्यभावात् तदनालम्बनत्वे सिद्धसाधनमेवेत्याह यदि चेति[६१]। सिद्धसाधनमित्यतीतेनाऽन्वय इति । यदि तु कथं चिद्भिन्नं नालम्बनमित्युच्यते, ततः प्रमेयाकारस्य नीलादेः प्रमाणाकारस्य च संविद्रूपस्य कालपनिकभेदाऽभ्युपगमात्तद्विरुद्धः पक्ष इत्याह कथं चिदिति।

अन्यथा सिद्धसाधनं दर्शयति वस्त्विति[६२]। बुद्धिर्ह्यसाधारणेन संविद्रूपेणाऽर्थमालम्बते, व्योमादिसाधारणेन तु जडरूपेण वस्त्वाकारेणाऽनालम्बनैवेति। यदि तु ग्राह्यमेव पक्षीकृत्य ग्राहकादभिन्नमिति साध्यते, तथापि कालपनिकशक्तिभेदाऽभ्युपगमेन विरोधः, प्रमेयत्वाद्यभेदाच्च सिद्धसाधनमित्यभिप्रायेणाह ग्राहकादिति । यदि तु सर्वप्रकाराऽसंभवान्निरालम्बनबुद्ध्युत्पत्तिमात्रमेव चिकीर्षितं, तदस्तु नाम, सा तु बुद्धिर्बाह्यग्राह्यवर्जिता मिथ्याभूतेत्येतावदस्माभिरुच्यतइति आह निरालम्बनेति[६३]। त्वया ऽपि नाऽस्याः सम्यक्त्वमर्थान्तरालम्बनत्वमिष्यते, बुद्ध्यन्तरवदियमपि स्वांशपर्यवसायिन्येव, (अन्यथा तत्रैव हेतुरनैकान्तिकः स्यादित्याह सम्यक्त्वमिति[६४] । किं च,

---

* अत्यन्तभिन्नेनेति २ पु. पा. ।

आत्मांशे ऽवसिता ह्येषा मृगतृष्णादिबुद्धिवत् ॥६४॥
'चैत्रादिप्रत्ययानां च निरालम्बनता यदि ।
धर्मभूता न गृह्येत साधनोत्थितया* धिया ॥६५॥
ततो विषयनानात्वात् प्रतियोग्यनिराकृता ।
रूपात् सालम्बनप्राप्तिः सती केन निवार्यते' ॥६६॥
यदि प्रत्ययशब्दो ऽपि प्रत्ययत्वेन गृह्यते ।
संवित्त्यालम्बनत्वेन वार्यते, सिद्धसाधनम् ॥६७॥
बुद्ध्युत्पादनशक्तिश्चेद्वार्या, साध्यं न सिध्यति ।
साधनस्य प्रयोगो ऽत्र बोधकत्वाद्विना न ते ॥६८॥

---

भवदीयसाधनोत्थिता ऽनुमानबुद्धिरियं, सा ऽप्यात्मांशपर्यवसायिन्ये-वेति )† तया प्रत्ययान्तराणां धर्मतया निरालम्बनत्वं न गृहीतमिति प्रतियोगिभूतेन निरालम्बनत्वेनाऽनिराकृता सती स्वरसप्राप्ता साल-म्बनता न केन चिद्वारिता स्यादित्याह चैत्रेति[६५] द्वयेन ।

यदि धर्मिवचनेन प्रत्ययशब्देन स्वरूपपरेण प्रत्ययशब्दमेव पक्षी-कृत्य तत्संवित्त्यालम्बनत्वं स्तम्भादीनां वार्यते, प्रत्ययशब्दो निराल-म्बनः न किं चिदवलम्बते, न किं चिज्जानाति, ततः सिद्धसाधनम्, अचेतनत्वात्तस्येत्याह यदीति[६७] । यदि तु बुद्ध्यनुत्पादकत्वं निरा-लम्बनत्ववचनत्वं, तथा सत्यज्ञानात्सिद्धिः साध्यधर्मिणोर्न स्यादि-त्याह बुद्धीति[६८] । कारणमाह साधनस्येति । न हि धर्मिनिर्देश-कस्य प्रत्ययशब्दस्याऽवबोधकत्वे साधनप्रयोगः संभवतीति ।

---

* साधनोज्झितयेति १ पु. पा. ।

† ( ) एतन्मध्यस्थो ग्रन्थो नास्ति २ पु. ।

न चाऽभिधा ऽस्त्यसंबन्धादृते भेदाच्च नास्त्यसौ ।
न चासौ तद्गतं भेदं बोधयन्त्या धिया विना ॥६९॥
प्राश्निकैर्नोऽगृहीते च वाक्यस्यावयवे पृथक् ।
पक्षे हेतौ च दृष्टान्ते वादिनि प्रतिवादिनि ॥७०॥
साधनस्याऽप्रयोगः स्यादभ्युपेत्योच्यते यदि ।
पूर्वाऽभ्युपगमेनैव प्रतिज्ञा साध्यते ततः ॥७१॥
धर्माऽधर्मादिभेदे च नाऽसिद्धे परमार्थतः ।
शिष्यात्मनोश्च धर्मादेरुपदेशो ऽवकल्पते ॥ ७२ ॥
तदनुष्ठानतो बुद्धेरिष्टो भेदः, स्फुटं च तैः ।
सूत्रान्तरे ऽभ्युपेतत्वाद्धेदागमबाधनम् ॥ ७३ ॥
सर्वलोकप्रसिद्ध्या च पक्षबाधो ऽत्र ते ध्रुवम् ।

---

पूर्वाऽभ्युपगमविरुद्धश्चाऽयं पक्ष इत्याह न चेति[६९] त्रयेण । साधनवाक्यगतानां शब्दानां तद्वाच्यानां च मिथो भेदं संबन्धं, तथा प्राश्निकानां च साधनाऽवयवतद्वाच्यपक्षादिवादिप्रतिवादिविषयं यज्ज्ञानं, तस्य सालम्बनत्वमङ्गीकृत्य साधनं प्रयोक्तव्यं, तदङ्गीकरणे च तेनैव प्रतिज्ञा बाध्येतेति। किं च, धर्माऽधर्मोपदेशानुमितबुद्धाऽभिप्रायविरुद्धो ऽयं बाह्यापह्नवः, न ह्यनभिप्रेते धर्मादिभेदे तदुपदेशाऽनुष्ठानमवकल्पतइत्याह धर्माऽधर्मेति[७२] भेदो[७३]ऽन्तेन। शिष्यात्मनोश्च असिद्धे भेदइत्यनुषङ्गः। साक्षादेव बाह्यसद्भावः, स धर्मसमाख्याते सूत्रे बुद्धेनोक्तः, तेनापि बाधः पक्षस्येत्याह स्फुटमिति ।

सर्वलोकप्रसिद्धस्य बाह्यस्याऽपह्नवस्तेनैव साध्यतइत्याह सर्वेति[७४] । किं च, त्वदीयसाधनगतपदार्थवाक्यार्थज्ञानानां सर्वेषां

कृत्स्नसाधनबुद्धिश्च यदि मिथ्येष्यते ततः ॥७४॥
सर्वाऽभावो यथेष्टं वा न्यूनता वा ऽभिधीयते* ।
तेषां सालम्बनत्वे वा तैरनैकान्तिको भवेत्† ॥७५॥
तदन्यस्य प्रतिज्ञा चेत्तदन्यप्रत्ययो मृषा ।
तन्मिथ्यात्वप्रसङ्गे च सर्वं पूर्वं न सिध्यति ॥७६॥
स्तम्भादिसाधनज्ञानभेदो न हि यथा भवेत् ।
यावद्यावत्प्रतिज्ञेयं तदन्यस्य प्रतीयते‡ ॥७७॥

---

मिथ्यात्वे सर्वस्य साधनस्याऽभावो यथेष्टं पक्षादिन्यूनत्वं वा शक्यं वक्तुमित्याह कृत्स्नेति । अमिथ्यात्वे तैरेव हेतुरनैकान्तिकः स्यादित्याह तेषामिति[७५] । शङ्कते तदन्यस्येति[७६] । दूषयति तदन्येति । ततः किमित्याह तन्मिथ्यात्वेति । अन्यत्वग्राहिप्रत्ययमिथ्यात्वे हि सर्वं साधनं न सिध्यतीति । कथं न सिध्यतीत्यत आह स्तम्भेति[७७] । अन्यत्वज्ञानमिथ्यात्वे हि अन्यत्वं न स्यात्, तदभावे च स्तम्भादिज्ञानवदेव साधनत्वज्ञानस्यापि मिथ्यात्वात्साधनाऽसिद्धिरिति । यदि तु तदन्यत्वग्राहिप्रत्ययव्यतिरिक्तः प्रत्ययः पक्षीक्रियते, ततस्तद्व्यतिरेकग्राहिप्रत्ययस्य मिथ्यात्वात्सर्वस्य पूर्वस्याऽसिद्धिः, एवं ततः परमपि वक्तव्यमित्याह यावदिति ।

ये चेमे प्रथमपक्षात्प्रभृति तदन्यप्रतिज्ञादिभिः पक्षा दर्शिताः, तेषु सर्वेषु विरुद्धाऽव्यभिचारित्वं हेतोरनुमानबाधा वा प्रतिज्ञायाः स्या-

---

* न्यूनत्वाद्यभिधीयते इति २ पु. पा. ।

† अनैकान्तिका भवेदिति २ पु. पा. ।

‡ प्रणीयते इति १ पु. पा. ।

तावत्तावत्परेषां स्यान्मिथ्यात्वादन्यबाधनम् ।
विरुद्धाऽव्यभिचारित्वं बाधो वा ऽप्यनुमानतः ॥७८॥
इत्थं सर्वेषु पक्षेषु वक्तव्यं प्रतिसाधनम् ।
बाह्याऽर्थालम्बना बुद्धिरिति सम्यक् च धीरियम्॥७९॥
बाधकाऽपेतबुद्धित्वाद्यथा स्वप्नादिबाधधीः ।
सा ऽपि मिथ्येति चेद् ब्रूयात् 'स्वप्नादीनामबाधनात्॥८०॥
तस्मात् साधर्म्यदृष्टान्तो भवतः साधने ऽधुना' ।
विज्ञानाऽस्तित्वभिन्नत्वक्षणिकत्वादिधीस्तथा ॥८१॥
सम्यक् चेदभ्युपेयेत तदा ऽनैकान्तिको भवेत् ।
तन्मिथ्याऽभ्युपपत्तौ च पक्षबाधः प्रसज्यते ॥८२॥
तथा च बद्धमुक्तादिव्यवस्था न प्रकल्पते ।
ततश्च मोक्षयत्नस्य वैफल्यं वः प्रसज्यते ॥८३॥

---

दित्याह विरुद्धेति[७८] । कथमित्याह इत्थमिति[७९] । तदेव दर्शयति बाह्याऽर्थेति । 'बाह्यार्थालम्बना बुद्धि'रित्यस्माद्वाक्याद्या बुद्धिः, सा समीचीना बाधकाऽपेतत्वात्, स्वप्नादीनां या बाधिका धीर्जाग्रद्धीस्तद्वदिति । शङ्कते सा ऽपीति[८०] । ततश्च साध्यवैकल्यमिति । दूषयति स्वप्नादीनामिति पादत्रयेण । दोषान्तरमाह विज्ञानेति[८१] । अथ सा ऽपि मिथ्येत्युच्यते, ततः पक्षीकृतस्य ज्ञानस्य तद्विशेषणानां च भेदादीनामभावः स्यादित्याह तन्मिथ्येति[८२] । भेदाऽभावे च नित्यैकज्ञानवादिनामिव भवतामपि बद्धमुक्तव्यवस्थाऽनुपपत्तिरित्याह तथा चेति[८३] । एवं च मुक्तस्यापि बद्धादभिन्नस्य तद्वदेव बन्धाऽपरित्यागान्मोक्षयत्नो ऽपि विफलः स्यादित्याह ततश्चेति ।

'विकल्पोत्पद्यमाना च ज्ञानास्तित्वादिधीर्यदि ।
मृषेष्टा, न च दृष्टाऽत्र प्रमाणान्तरतो गतिः ॥८४॥
प्रमाणाऽभावतस्तेन ज्ञानाऽस्तित्वादि दुर्लभम्' ।
'सर्वं चाप्यस्मदादीनां मिथ्या ज्ञानं विकल्पनात् ॥८५॥
सान्निध्यविप्रकृष्टत्वे सत्त्वासत्त्वे* च दुर्लभे ।
मिथ्याज्ञानाऽविशेषे ऽपि सांख्यादिपरिवर्जनात् ॥८६॥
बौद्धदर्शनएकस्मिन् पक्षपातो न युज्यते' ।
मृषात्वं यदि बुद्धेः स्याद्बाधः किं नोपलभ्यते ॥८७॥
बाधाद्विनाऽपि तच्चेत्स्याद्व्यवस्था न प्रकल्पते ।
प्रतियोगिनि दृष्टे च जाग्रज्ज्ञाने मृषा भवेत् ॥८८॥

---

यदि तु न ज्ञानानां मिथ्यात्वं किं तु विकल्पकज्ञानानामेव, तेन ज्ञानास्तित्वादिधीरपि यदि विकल्पः स्यात्ततो मिथ्या स्यात्, सा तु निर्विकल्पिकेति,तत्राह विकल्पेति[८४] सार्द्धेन । सविकल्पकात्प्रमाणान्तरं निर्विकल्पकं, न तेन क्षणिकत्वाद्यवगन्तुं शक्यमिति । किं च, सर्वेष्वेषु तन्त्रार्थेषु सविकल्पकत्वादस्माकं ज्ञानं मिथ्यैव, न चेन्द्रियसंनिध्यसंनिधिकृतो ऽर्थसदसत्त्वकृतो वा विशेषो ऽस्ति, सर्वस्य मिथ्यात्वात् ।

एवं सांख्यादितन्त्रसिद्धान्तपरित्यागेन बौद्धसिद्धान्ते पक्षपातो न युक्त इत्याह सर्वमिति[८५] द्वयेन । स्वप्नादिषु मिथ्यात्वं बाधनियतं दृष्टं, तदभावान्न जाग्रज्ज्ञानेषु तत्स्यादित्याह मृषात्वमिति । तदभावे ऽपि चेन्मिथ्यात्वं स्यात्ततः क्षणिकत्वादिज्ञानानामपि मिथ्या-

---

* सत्ताऽसत्ते इति २ पु. पा. ।

स्वप्नादिबुद्धिरस्माकं तव भेदो ऽपि किङ्कृतः ।
न चान्यत् प्रतियोग्यस्ति जाग्रज्ज्ञानस्य शोभनम् ॥८९॥
यद्दर्शनेन मिथ्यात्वं स्तम्भादिप्रत्ययो व्रजेत् ।
स्वप्नादिप्रतियोगित्वं सर्वलोकप्रसिद्धितः ॥९०॥
तदीयधर्मवैधर्म्याद्बाधकप्रत्ययो यथा ।
योगिनां जायते बुद्धिर्बाधिका प्रतियोगिनी ॥९१॥
जाग्रत्स्तम्भादिबुद्धीनां ततः स्वप्नादितुल्यता ।

---

स्वात्स एव दोष इत्याह बाधादिति[८८] । किं च, स्वतः प्रामाणस्य प्रमाणभूतप्रतियोगिज्ञानाधीनं मृषात्वं, तव तु सर्वमिथ्यात्वादिदं बाधकमिदं बाध्यमिति भेदः किंकृतः, तदभावाच्च न स्वप्नप्रत्ययस्य मिथ्यात्वं स्यादित्याह प्रतियोगिनीति ।

ननु मा तावत्सिध्यतु स्वप्नप्रत्ययस्य मिथ्यात्वं, जाग्रज्ज्ञानस्य किं न भवत्यत आह न चान्य इति[८९] । शोभनम्, प्रमाणमित्यर्थः । तदभावान्न मिथ्यात्वमिति । सम्यक्त्वं वा कथं, येन मिथ्यात्वं न स्या*-दत आह स्वप्नादीति[९०] । स्वप्नादिप्रतियोगित्वं जाग्रज्ज्ञानस्य सर्वलोकप्रसिद्धं, तदीयधर्मवैधर्म्याद्बाध्यत्वादित्यर्थः । न ह्यबाध्यस्य मिथ्यात्वं भवति, यथा स्वापादुत्थितस्य साक्षाद्बाधकं नैतदेवमिति ज्ञानं, तथा ऽन्या अपि जाग्रद्धियः स्वप्नगृहीतार्थविपरीतं गृह्णन्त्यः स्वप्नप्रतियोगिन्यो भवन्तीति ।

चोदयति योगिनामिति[९१] । योगिज्ञानेनैव जाग्रज्ज्ञानानां बाध्यत्वात् अबाध्यत्वहेतुरसिद्ध इति । ननु कतिपयानां योगिनां ज्ञाने

---

* येन प्रतियोगित्वं न स्यादिति २ पु. पा. ।

प्राप्तानां तामवस्थां च सर्वप्राणभृतामपि ॥९२॥
बाधो ऽयं भविता तेन सिद्धा सप्रतियोगिता ।
इह जन्मनि केषाञ्चिन्न तावदुपलभ्यते ॥९३॥
योग्यवस्थागतानां तु न विद्मः किं भविष्यति ।
योगिनां चाऽस्मदीयानां* त्वदुक्तप्रतियोगिनी ॥९४॥
त्वदुक्तिविपरीता वा बाधबुद्धिर्भविष्यति ।
ईदृक्त्वे योगिबुद्धीनां दृष्टान्तो न तवाऽस्ति च† ॥९५॥
दृष्टान्तस्त्वस्मदादीनां यो गृहीतः स विद्यते ।
अथ स्तम्भादिबुद्धीनां वदेत् सप्रतियोगिताम् ॥९६॥

---

कथं लोकसिद्धस्य जाग्रज्ज्ञानस्य बाध्यत्वम्, अत आह प्राप्ताना-मिति[९२] । परिहरति इहेति[९३] । नास्त्यत्र प्रमाणमित्यर्थः । तद-भावे ऽपि चेदुच्येत, तदस्माकमपि शक्यं, स्वाच्छन्द्यनियामकाऽभावा-दित्याह योगिनामिति[९४] । प्रतियोगिनी शुक्तिरियमिति, विपरीता नेदं रजतमिति, तदनयोरन्यतरविधोपनिपातिनी त्वदुक्तबाह्याऽपह्नव-बाधिका ऽस्मद्योगिनामस्ति बुद्धिरिति । यद्वा, नाऽवयोस्तुल्यत्वं भव-ति, योगिनां बाधकज्ञानसद्भावे तव दृष्टान्तो नास्ति, मम तु बाह्यत्वे योगिनां रथ्यापुरुषस्यैव दृष्टान्तस्य लाभात्सम्भवत्यनुमानमित्याह ईदृक्त्वे इति[९५] । शङ्कते अथेति[९६] । ममाऽप्यस्त्येवाऽनुमानमिति ।

---

* अस्मदादीनामिति २पु. पा. ।

† ह्येति पाठान्तरम् ।

बाध्यत्वं चाऽपि* बुद्धित्वान्मृगतृष्णादिबुद्धिवत् ।
इष्टं सप्रतियोगित्वं मृगतृष्णादिबुद्धिभिः ॥९७॥
तदात्मना च† बाध्यत्वं ग्राह्याऽन्तरतया ऽपि च ।
बाधकैश्चाप्यनेकान्तस्तदन्यत्वे च पूर्ववत् ॥९८॥
'मिथ्याधीप्रतियोगित्वं स्वप्नादाविव ते भवेत् ।
रागादिक्षययोगित्वनिमित्ताऽधिगतिस्तथा ॥९९॥
यावान्विशेष इष्टश्चेत् सर्वोऽभावाद्विरुद्धता' ।
महाजनस्य वा बाधादिदानींबाधबुद्धिवत् ॥१००॥

---

निराकरोति इष्टमिति[९७] । सत्यबुद्धीनामपि मिथ्याबुद्धिभिः सप्रतियोगित्वमात्रमस्त्येव, मिथ्याज्ञानतद्ग्राह्ययोश्च बाध्ये सम्यग्ज्ञानतद्ग्राह्ययोरपि ज्ञानत्वेन ग्राह्यत्वेन च ताभ्यामभेदात्तेनात्मना ऽस्त्येव बाध्यत्वमिति । बाधकाभिमतैश्च योगिज्ञानैरनैकान्तिको हेतुरित्याह बाधकैरिति[९८] । तदन्यविशेषणे च पूर्ववद्दोष इत्याह तदन्यत्वे इति । विशेषविरुद्धश्चाऽयं हेतुः, तद्धर्मविशेषविपर्ययसाधनत्वादित्याह मिथ्याधीति[९९] सार्द्धेन । स्वप्नबुद्धेर्मिथ्याभूतया रागद्वेषयुक्तया योगिजाग्रद्बुद्ध्या सप्रतियोगित्वं दृष्टमिति जाग्रद्बुद्धीनामपि तादृश्यैव बुद्ध्या सप्रतियोगित्वं साधनीयमिति प्रतियोगिनी योगिनामधिगतिरमिथ्या, रागादिक्षयनिमित्ता, योगित्वनिमित्तेति यावान्विशेषो दृष्टस्तस्य सर्वस्य बाधाद्विशेषविरुद्धो हेतुरिति । सप्रतिसाधनश्चाऽयं हेतुः प्रतिज्ञा वा ऽनुमानविरुद्धेत्याह महाजनस्येति[१००] ।

---

* बाह्यत्वं चापीति १ पु. पा. ।

† तद्रूपेण चेति २ पु. पा. ।

वाच्यो ऽनुमानबाधो वा यदि वा प्रतिसाधनम् ।
पर्वसाधनदोषाश्च सन्धेया,स्तस्य चाऽधुना ॥१०१॥
साध्याऽभेदादवाच्यत्वाद्धेतोर्नोभयसिद्धता ।
प्रत्ययत्वं च सामान्यं भिन्नाऽभिन्नं न विद्यते॥१०२॥
भवतो ऽत्यन्तभिन्नं च मत्पक्षे ऽपि* कथञ्चन ।
सारूप्याऽन्यनिवृत्ती च नेत्येतत् साधयिष्यते† ॥१०३॥
तस्माद्धेतुर्न सामान्यमस्ति सिद्धं द्वयोरपि ।
विशेषयोश्च हेतुत्वं पक्षतत्तुल्यसंस्थयोः ॥१०४॥

---

निरालम्बनाऽनुमानदोषाश्च सर्वे ऽस्याऽनुसन्धेया इत्याह पूर्वेति[१०१]।

तस्य पूर्वं धर्मधर्मिविकल्पेन दूषणमुक्तम्, अधुना दोषान्तरमुच्यतइत्याह तस्य चेति । कथमुच्यतइत्याह साध्याऽभेदादिति[१०२] । यदि जाग्रत्प्रत्ययत्वं हेतुः, ततस्तस्य साध्यधर्मिणो ऽनतिरेकात्स्वप्नज्ञानेष्वननुवृत्तेर्न निरालम्बनत्वेनाऽन्वयः शक्यते दर्शयितुं, स्वप्नप्रत्ययत्वं च जाग्रद्बुद्धिस्वभावादसिद्धत्वादेवाऽवाच्यम्, अनुगतं तु प्रत्ययत्वसामान्यम् उभयसिद्धं नास्तीति । सामान्याऽसिद्धिं प्रपञ्चयति सामान्यमिति । भिन्नाऽभिन्नं भवतो ऽसिद्धम्, अत्यन्तभिन्नं तव मम चोभयोरसिद्धमिति ।

ननु जातिरूपं सामान्यमस्माभिर्नेष्यते, सादृश्याऽन्यनिवृत्तिरूपं तु किं न भवतीत्यत आह सारूप्येति[१०३] । जात्यभावे सादृश्याऽभावादुभयोरनुपपत्तिर्वक्ष्यतइति । उपसंहरति तस्मादिति[१०४] ।

---

* तु इति १ पु. पा. ।

† गमयिष्यते इति पाठान्तरम् ।

न स्यादन्वयहीनत्वादतद्धर्मतया ऽपि च ।
न चाऽर्थहीना तद्बुद्धिर्हेतुत्वेन भविष्यति ॥१०५॥
आश्रयासिद्धिता चोक्ता विशेष्यस्याऽप्रसिद्धितः ।
तथा हेतोर्विरुद्धत्वं दृष्टान्ते साध्यहीनता ॥१०६॥
विशेषणाऽप्रसिद्धत्व*विकल्पेनैव बोधिते ।
स्वप्नादिप्रत्यये बाह्यं सर्वथा न हि नेष्यते ॥१०७॥
सर्वत्रालम्बनं बाह्यं देशकालाऽन्यथात्मकम् ।

---

विशेषयोस्तु जाग्रत्प्रत्ययत्वस्वप्नप्रत्ययत्वयोः पक्षसपक्षगतयोरन्वयहीनत्वादपक्षधर्मत्वाच्चाऽहेतुत्वं पूर्वसंक्षिप्तं प्रपञ्चयति विशेषयोरिति । ननु प्रत्ययत्वादित्युक्ते अर्थशून्या ऽपि तावदुत्पद्यते बुद्धिः, सैव हेतुर्भवत्वत आह न चेति[१०५] । न ह्यर्थशून्या लिङ्गबुद्धिर्लिङ्गिज्ञानाय कल्पतइति । विशेष्याऽसिद्धिकथनेनैव हेतोराश्रयाऽसिद्धिरुक्तैवेत्याह आश्रयेति[१०६] ।

यच्च पूर्वं विशेषणाऽसिद्ध्यर्थेन विकल्पेन सर्वथा निरालम्बनत्वं क चिदप्यप्रसिद्धमित्युक्तं, तेनैव स्वप्नप्रत्ययस्या ऽपि तदभावात्साध्यवैकल्यं, तद्वदेव जाग्रद्धियामपि सर्वथा निरालम्बनत्वाऽभावसाधनाद्धेतोश्च विरुद्धत्वं युक्तमेवेत्याह तथेति । साध्यवैकल्यसाधनादेव हेतोर्विरुद्धता, विशेषणस्य चाऽप्रसिद्धिः साधिता भवतीति मत्वा साध्यवैकल्यमेव प्रपञ्चयति स्वप्नेति[१०७]। किमिति नेष्यते,ऽत आह सर्वत्रेति[१०८] । बाह्यमेव देशान्तरे कालान्तरे वा ऽनुभूतमेव स्वप्ने स्म-

---

* विशेपणाऽप्रसिद्ध्यर्थेति पाठान्तरम् ।

जन्मन्येकत्र भिन्ने वा तथा कालान्तरेऽपि वा॥१०८॥
तद्देशो वाऽन्यदेशो वा स्वप्नज्ञानस्य गोचरः ।
अलातचक्रेऽलातं स्याच्छीघ्रभ्रमणसंस्कृतम् ॥१०९॥
गन्धर्वनगरेऽभ्राणि पूर्वदृष्टं गृहादि च* ।
पूर्वाऽनुभूततोयं च रश्मितप्तोषरं तथा ॥११०॥
मृगतोयस्य विज्ञाने कारणत्वेन† कल्प्यते ।
द्रव्यान्तरे विषाणं च शशस्यात्मा च कारणम् ॥१११॥
शशशृङ्गधियो मौण्ड्यं निषेधे शिरसोऽस्य च ।
वस्त्वन्तरैकसंसृष्टः पदार्थः शून्यताधियः ॥११२॥

---

येमाणं दोषवशात्संनिहितदेशकालवत्तया ऽवगम्यते, अतोऽत्रापि न बाह्याऽभाव इति । नन्वननुभूतमपि क्वचित्स्वप्ने ऽवगम्यते, ऽत आह जन्मनीति । अनन्तरदिवसाऽनुभूतस्य स्वप्ने वर्त्तमानवदवगमात् स्मृतिरेव तावत् स्वप्नज्ञानमिति निश्चीयते, अन्यत्रापि स्मृतित्वमेव युक्तं, ततश्चाऽस्मिन् जन्मनि अननुभूतस्यापि स्वप्ने दृश्यमानस्य जन्मान्तरादावनुभवः कल्प्यतइति ।

एवं स्वप्नप्रत्ययस्य बाह्यालम्बनत्वं दर्शयित्वा जाग्रद्भिभ्रमाणां बाह्यालम्बनत्वं दर्शयति अलातेति[१०९] धियो[११२]ऽन्तेन । अन्यत्र विद्यमानेनैव चक्रादिरूपेण विद्यमानमेवाऽलातादिकं शीघ्रभ्रमणादिदोषवशात्संसृष्टमवगम्यतइति । ननु शशविषाणं नास्तीति बुद्धेरभावाऽवभासिन्याः किं बाह्यमालम्बनं, न तावदभावः, तस्य स्वातन्त्र्या-

---

* वा इति २ पु. पा. ।

† करणत्वेनेति १ पु. पा. ।

कारणत्वं पदार्थानामसद्वाक्यार्थकल्पने ।
अत्यन्ताऽननुभूतोऽपि बुद्ध्या योऽर्थः प्रकल्प्यते* ११३॥
तस्योत्पत्तौ कथञ्चित्स्युः पृथिव्यादीनि कारणम् ।
एष प्रत्यक्षधर्मश्च वर्तमानार्थतैव या ॥११४॥

---

ऽभावात्, भावान्तराश्रितो हि सर्वोऽभावः, न च शशविषाणं नास्तीत्यत्र कचिद्देशे कालाऽभावोऽवगम्यते, अतोऽवश्यमत्र ज्ञानरूपस्यैव भावस्यालम्बनत्वमङ्गीकर्त्तव्यमत आह मौण्ड्यमिति । अस्य शृङ्गनिषेधे शृङ्गाऽभावज्ञाने शिरसो मौण्ड्यमालम्बनं, शिरोवर्त्तिन एवाऽवयवाः शृङ्गरूपेण परिणताः शृङ्गाऽभावात्मना ज्ञायन्ते, ततस्तदाश्रयोऽभावो न स्वतन्त्र इति । अतोऽत्रापि बाह्याऽभावालम्बनत्वान्न स्वांशालम्बनत्वमिति । चैत्रशून्यं गृहमिति शून्यबुद्धेस्तर्हि किमालम्बन,मत आह वस्त्वन्तरैरिति । अङ्गुल्यग्रादिवाक्यार्थज्ञानेऽप्यङ्गुल्यग्रादिपदार्था विद्यमाना एव पदसंनिधिदोषवशात्परस्परसंसृष्टतयाऽवगम्यमाना आलम्बनमित्याह कारणत्वमिति[११३] ।

यत्तर्ह्यत्यन्ताऽविद्यमानाऽननुभूतप्रकृत्याद्यालम्बनं सांख्यादीनां ज्ञानं, तस्याऽनालम्बनत्वमेव स्याद्, बाह्याऽभावादत आह अत्यन्तेति । पृथिव्यादिस्थूलप्रपञ्चस्य हेतुभूता सूक्ष्माऽवस्थैव तैः प्रकृतिरुच्यते, तेन तदवस्थाविशिष्टाः पृथिव्यादय एतद्बुद्धेरालम्बनं, सूक्ष्मत्वेन तु परमाणूनजानन्तस्तद्व्यतिरेकेण सूक्ष्मत्वात्तत्रैव प्रकृत्यादिशब्दमुपचरन्तीति । ननु देशान्तरे कालान्तरे वा विद्यमानमपि बाह्यमत्र तावन्न विद्यते, अतः कथमालम्बनत्वमत आह एष इति[११४] ।

---

* प्रकाश्यते इति २ पु. पा. ।

सन्निकृष्टार्थवृत्तिश्च न तु ज्ञानान्तरेष्वियम् ।
कथमुत्पादयेज् ज्ञानं तत्राऽसंश्चेत्कुतो न्वियम् ॥११५॥
अर्थस्याऽविद्यमानस्य विज्ञानोत्पत्त्यशक्तता ।
बाह्यालम्बनतायां नौ विवादो, ऽर्थस्य संनिधिः॥११६॥
यदि नास्ति, किमेवं स्यादस्मत्पक्षनिवर्तनम् ।
'तस्माद्यदन्यथासन्तमन्यथा प्रतिपद्यते ॥११७॥
तन्निरालम्बनं ज्ञान'मभावालम्बनं च तत् ।
भावान्तरमभावो ऽन्यो न कश्चिदनिरूपणात् ॥११८॥

---

संनिहितवर्त्तमानविषयत्वनियमो हि प्रत्यक्षस्य धर्मः, न त्वाभासानामिति शङ्कते कथमिति[११५] चेदन्तेन । उत्पादकस्यैवालम्बनत्वं तत्राऽसतः संभवतीति । परिहरति कुत इति । न तावदुत्पादकत्वमेवालम्बनत्वं, यद्यपि तथा स्यात्तथाप्यालम्बनहेतुत्वमसतो ऽपि ज्ञानं प्रति सम्भवतीति दर्शनबलादङ्गीक्रियतइति । नन्वेवमपि सन्निहितं बाह्यमालम्बनभूतं नास्त्येव, सत्यं, स त्वदोषः, असन्निहितस्यापि बाह्यस्यालम्बनत्वात्, तन्मात्रविषयत्वाच्चाऽऽवयोर्विवादस्येत्याह बाह्येति[११६] ।

किमिदानीं निरालम्बनं ज्ञानं नास्त्येव, तथा चेल्लोकविरुद्धः स्यादत आह तस्मादिति[११७] पादत्रयेण । यस्मादेवं सर्वत्र बाह्यमस्ति, तस्माद्यदेव विज्ञानम,अन्यथा शुक्तिकादिरूपेण (सन्तमर्थमन्यथा रजतादिरूपेण)* गृह्णाति, तदेव निरालम्बनं ज्ञानं, न तु यदात्मालम्बनमिति । यत्तर्हि इह घटो नास्ति इदं रजतं न भवतीत्यादिकमभावज्ञानं, तस्य किमालम्बनं, न ह्यभावाख्यमस्तीत्यत आह अभावेति[११८] । यदे-

---

* ( ) एतन्मध्यगो ग्रन्थो नास्ति २ पु. ।

भवता द्वयमप्येतद्दुर्निरूपं सहेतुकम् ।
प्रतिज्ञादोषवच्चापि योज्या हेतोर्विरुद्धता ॥११९॥

---

चाऽन्यथासन्तमन्यथा प्रतिपद्यते तन्निरालम्बनं, तदेव भावावलम्बनं, तदुक्तं भवति, सर्वं हि वस्तु सदसदात्मकं, तत्र शुक्तिकारजतादिज्ञानं शुक्तिकाख्यं भावं शुक्तिकारूपेण सद्रूपं भावान्तरस्य रजतस्य यत्सद्रूपं रजतरूपं तेन रूपेण गृह्णदभ्रान्तं भवति, नेदं रजतमिति त्वभावज्ञानं शुक्तिरूपेण सन्तमेव भावं रजतस्य यदसद्रूपं तेनात्मना गृह्णदभावावलम्बनमभ्रान्तं भवति; तेन भ्रान्तिज्ञानमभावज्ञानं चोभयमन्यथासन्तमर्थमन्यथारूपेण प्रतिपद्यते, तत्र भ्रान्तिरन्यस्य सद्रूपेणाऽन्यत्प्रतिपद्यते, अभावज्ञानं त्वन्यस्याऽसद्रूपेणाऽन्यत्प्रतिपद्यत इत्येव विशेष इति ।

नन्वभावमात्रमेवाऽभावज्ञानस्यालम्बनं न भावान्तरमत आह भावान्तरमिति । रजतादेर्भावस्य यदभावाख्यं रूपं तन्न स्वतन्त्रमनिरूपणात्, किं तु भावान्तरमेव तत्तद्धर्म इत्यर्थः । तेनाऽभावज्ञानस्यापि शुक्तिकादिभावान्तरं बाह्यमेवालम्बनमिति न स्वांशालम्बनमिति । यद्वा 'अभावालम्बनं च त'दित्यत्र तच्छब्देनैतदेव परामृश्यते, अभावालम्बनमपि ज्ञानं तादृशमेव बाह्यभावालम्बनमेवेति । नन्वभावावभासिनः कथं भावालम्बनत्वमित्यत उक्तं भावान्तरमिति । सर्वमिथ्यात्ववादिनां तु निरालम्बनत्वम् अभावालम्बनत्वं च द्वयमपि दुर्निरूपं हेत्वभावाद्, बाधकसत्यत्वे हि बाध्यमिथ्यात्वं, तस्यापि मिथ्यात्वे कुतस्तद्बाध्यस्य मिथ्यात्वं, ज्ञानरूपस्य च स्वरूपमेवावलम्बमानस्य कथमभावालम्बनत्वं, तदिदमाह भवतामिति[११९] ।

हेतोरिदानीं पूर्वोक्तादन्येन कारणेन विरुद्धतामाह प्रतिज्ञादो-

समस्तव्यस्तधर्मादिस्वरूपादिविपर्ययात्* ।
दृष्टान्तदोषाः सर्वे च योज्या न ह्येकवस्तुनि ॥१२०॥
तत्र साध्यांशहेत्वंशव्याप्तधर्मादि†संभवः ।
केचिद्वैधर्म्यदृष्टान्तो नास्तीत्यप्यनुयुञ्जते ॥१२१॥
तदभावादवृत्तेश्च नास्त्यत्राऽवसरस्तव ।
विधिरूपप्रतिज्ञायामेतद्वक्तुं हि शक्यते ॥१२२॥

---

षवदिति । यथा ह्यप्रसिद्धविशेष्यत्वादिः प्रतिज्ञादोषो दर्शितस्तथैव हेतोरपि विरुद्धता दर्शयितव्या, हेतुर्हि सर्वप्रत्ययानां मिथ्यात्वं साधयन् धर्मधर्मितद्विशेषग्राहिप्रत्ययमिथ्यात्वसाधनेन तेषां विपर्ययं साधयन् विरुद्धः स्यादिति । दृष्टान्तस्यापि न केवलं साध्यविकलत्वं, किं तु सर्वे एव साध्यसाधनोभयव्याप्तिशून्यत्वादिदोषा वक्तव्या इत्याह दृष्टान्तेति[120] । कथमित्याह न हीति । न हि ज्ञानस्वलक्षणव्यतिरेकेण प्रत्ययत्वं, निरालम्बनत्वं, तयोश्च धर्मरूपा व्याप्तिरस्तीति ।

केचित्तु वैधर्म्योदाहरणमपि साध्यस्यावश्यंभावीति मन्वानास्तदभावाद् न्यूनं निरालम्बनसाधनमित्याहुः, तदुपन्यस्यति केचिदिति[121] । ननु विपक्षाऽभावादेव हेतोरवृत्तिसिद्धेर्न वैधर्म्येण प्रयोजनमित्युक्तं, परैरप्युक्तं तदभावात्तत्रावृत्तेर्नायं दोष इति, तत्राह तदभावादिति[122] । कथं नास्तीत्यत आह विधिरूपेति । वस्तुरूपे

---

* स्वस्वरूपाविपर्ययादिति २ पु. पा. ।
† व्याप्तिधर्मादीति २ पु. पा. ।

तत्राऽवस्तुविपक्षे ऽपि प्रयोगस्य हि सम्भवः ।
यस्मिन्ननित्यता नास्ति कार्यता ऽपि न विद्यते ॥१२३॥
तस्मिन्, यथा खपुष्पादाविति शक्यं हि भाषितुम् ।
अत्र त्ववस्तुसाध्यत्वं* वस्तुनश्च विपक्षता ॥१२४॥
तेन स्याद्व्यतिरेको ऽस्य वाच्यो, यश्चाऽपि दर्शयेत् ।
प्रतिषेधद्वयात्तेन विधिरेव प्रदर्शितः ॥१२५॥
न च शक्यो विधिर्वक्तुं वस्तुन्यसति केन चित् ।
एवं स्थिते च सर्वज्ञनिषेधादावियं गतिः ॥१२६॥

---

साध्ये सत्यवस्तुनो विपक्षत्वादवस्तुनि च हेतोर्व्यतिरेकसिद्धेर्वैधर्म्यवचनं निष्फलं स्यात्, अवस्तुरूपे तु निरालम्बनत्वे साध्ये वस्तुरूपसालम्बनत्वस्य विपक्षत्वात्तत्र हेतोर्वृत्तिसंभवात् तद्व्यतिरेको वक्तव्य, एतदवचने वैक्लव्यमेवेति । किं च, विधिरूपप्रतिज्ञायामपि वैधर्म्यप्रयोजनाऽभावमात्रं, शक्यं तु तत्राप्यवस्तुन्यपि विपक्षे वैधर्म्यं प्रयोक्तुमित्याह तत्रेति[१२३] । प्रयोगमेव दर्शयति यस्मिन्निति । अनित्यः शब्द इति प्रतिज्ञायामिदं वैधर्म्यम्, अनित्यत्वं च न नित्यत्वाऽभावमात्रं, किं तु कादाचित्कत्वं विधिरूपमेवेति। प्रकृते तु निरालम्बनसाधने वस्तुनि विपक्षे सुतरां वैधर्म्यं वक्तव्यमेवेत्याह अत्र त्विति[१२४]वाच्योऽन्तेन[१२५]। यश्चापि वैयात्यात्प्रतिषेधद्वयाश्रयणेन वैधर्म्यं वदेत् यन्निरालम्बनं न भवति तत्प्रत्ययो ऽपि न भवतीति, तेन प्रतिषेधप्रतिषेधात् सालम्बनविधिरेव दर्शितो भवति, न च प्रत्ययातिरिक्ते वस्तुनि कस्मिँश्चिदसति तद्विधिः शक्यो दर्शयितुम्, अतो न्यूनमेवेदं साधनमित्याह यश्चापीति केन चिदन्तेन[१२६] ।

---

* साध्यत्वादिति का. पा. ।

प्रत्यक्षादेरसामर्थ्यं तदीयस्याऽस्मदादिवत् ।
वैधर्म्याऽसंभवे ऽप्येतदन्ये त्वाहुरदूषणम् ॥१२७॥
विनैव तत्प्रयोगेण हेतुरैकान्तिको यतः ।
सर्वथा सदुपायानां वादमार्गः* प्रवर्तते ॥१२८॥
अधिकारो ऽनुपायत्वान्न वादे शून्यवादिनः ।
ननु सर्वं भवत्सिद्धं मयेदं साधनं कृतम् ॥१२९॥
किमर्थं तदसिद्ध्या त्वं† विकल्प्याऽत्राऽऽस्थ‡ दूषणम् ।

---

नन्वेवं सर्वज्ञाऽभावसाधने ऽपि वस्तुस्वरूपस्य सर्वज्ञस्य विपक्षत्वात्तद्व्यतिरेको हेतोः पुरुषत्वादेर्वाच्यः, यः सर्वज्ञः स पुरुषो ऽपि न भवतीति, न चैवं शक्यं, सर्वज्ञस्य क्व चिदप्यभावादत आह एवमिति । बुद्धप्रत्यक्षमनागतादिविषयं न भवति, प्रत्यक्षत्वादस्मदादिप्रत्यक्षवदिति । यस्त्वनागतादिविषयं तत्प्रत्यक्षमेव न भवति यथा शब्द इति, अन्ये तु वैधर्म्याऽवचने निरालम्बनसाधनमविद्यमानदूषणमित्याहुरित्याह वैधर्म्येति[127] । कथमदूषणमत आह विनैवेति[128] । किं च, विद्यमानोपायानामेव वादादिषु त्रिष्वपि कथास्वधिकारः, शून्यवादी तु सर्वोपायरहितः कथमिहाऽधिक्रियेत, यो हि जात्यैवाऽन्धो बधिरो मूकश्च पङ्गुश्च भवति स कथं ज्योतिष्टोमे ऽधिक्रियेतेत्याह सर्वथेति । चोदयति नन्विति[129] । यदिदं मया साधनमुक्तं, तत्सर्वं भवतस्तावत्सिद्धं तत्किमर्थं मदसिद्ध्या बहुभिर्विकल्पैर्दूषणमुच्यत इति ।

---

* वादसार्थ इति २ पु. पा. ।

† तदसिद्ध्यर्थमिति २ पु. पा. ।

‡ अत्राथेति का. पु. ।

विप्रलिप्सुरिवाऽऽहैवं किमर्थं न्यायविद्भवान् ॥१३०॥
नाऽश्रौषीः साधनत्वं किं प्रसिद्धस्य द्वयोरपि ।
यो ऽपि तावत्पराऽसिद्धः स्वयं सिद्धो ऽभिधीयते॥१३१॥
भवेत्तत्र प्रतीकारः स्वतो ऽसिद्धे तु का क्रिया ।
तं साधयन् विरुन्ध्याद्धि पूर्वाऽभ्युपगतं नरः ॥१३२॥
आसाधिते तु साध्याऽर्थो न तेन प्रतिपद्यते ।
पराऽसिद्धो न पर्याप्तः परेषां प्रतिपत्तये ॥१३३॥
तेनाऽसाधनता युक्ता, स्वतो ऽसिद्धे तु किङ्कृता ।
द्वयोः सिद्धस्य हेतुत्वं नाऽदृष्टायोपदिश्यते ॥१३४॥
प्रत्येष्यन्ति स्वसिद्धेन साधनेन स्वयं यतः ।
वदेत् कथमसिद्धं चेदित्यनेनापि किं तव ॥१३५॥

---

सिद्धान्तवादी चैवंवादिनमुपालभते विप्रलिप्सुरिति[130] । कथं विप्रलिप्सा, अत आह नाऽश्रौषीरिति[131] । भवद्भिरेव हि दिङ्नागाचार्यैर्यो वादिप्रतिवादिनिश्चितो हेतुः स साधनमित्युक्तं, तच्छ्रुत्वा कथमविप्रलिप्सुरेवं वदेदिति । किं च, प्रतिवाद्यसिद्धस्य वादिना साध्यमानस्य स्यादपि साधनता, वाद्यसिद्धस्य तु प्रतीकाराऽभावात्कथं स्यादित्याह यो ऽपीति । प्रतीकाराऽसम्भवमेव दर्शयति तं साधयन्निति[132] ।

पुनश्चोदयति पराऽसिद्ध इति[133] । परप्रतिपत्त्यर्थं हि साधनं, तदस्य पराऽसिद्धिर्दोषो, न स्वाऽसिद्धिरिति ।

दिङ्नागवचनमपि न्यायमूलत्वात्प्रतिवादिसिद्धिपरमेव व्याख्येयमित्याह द्वयोरिति[134] । शङ्कते वदेदिति[135] । निराकरोति इतीति ।

गृहीतमगृहीतं वा साध्यं वा साधना ऽपि वा ।
मयोच्यते चेत्त्वसिद्धं* किं त्वं न प्रतिपद्यसे ॥१३६॥
यत्र स्यात् पुरुषाऽधीना बुद्धिस्तत्रेदमुच्यते ।
कुतो ऽस्य पूर्वविज्ञानमित्यत्रैतन्न युज्यते ॥१३७॥
यदि चैवं भवेदत्र प्रतिज्ञामात्रएव हि ।
मद्दोषाऽज्ञानमात्रेण प्रतिपत्तिर्भवेत्तव ॥१३८॥
यतस्तु साधनाऽपेक्षा तेनाऽस्यैव प्रमाणता ।
तत्स्मृत्युत्पत्तिमात्रे तु वाक्यव्यापार इष्यते ॥१३९॥
तस्माद्यथैव साध्यांशव्याप्तहेतुनिदर्शनात् ।
साध्यं गृह्णन्न वक्तारमपेक्षेत यथा भवान् ॥१४०॥

---

एतदेवं विवृणोति गृहीतमिति[१३६]। ननु पौरुषं साधनवाक्यं कथं वक्तुरप्रतिपन्नमेवाऽर्थं साधयति, अत आह यत्रेति[१३७] । यत्र हि पुंवाक्यादर्थबुद्धिः तत्रैव वक्तुः पूर्वज्ञानहेत्वन्वेषणं न त्वत्रेति। भवत्वत्रापि वाक्याऽधीनैव बुद्धिरिति चेत्तत्राह यदि चेति[१३८]। यतस्तु प्रतिज्ञाव्यतिरेके सा हेतुमपेक्षते, अतो ऽस्यैवात्र प्रमाणता न वाक्यस्येत्याह यतस्त्विति[१३९] । कथं तर्हि वाक्यमत आह तदिति । यस्मादेव साधनस्य साध्यनियमस्मरणमात्रोपयोगि वाक्यं, तस्माद्यथैव स्वयमेव नियतहेतुदर्शनेन साध्यमनुमिमानो न वक्तृप्रामाण्यमपेक्षते, तथा ऽत्रापि नापेक्षितव्यम् इत्याह तस्मादिति[१४०]। एवं सत्यपि म-

---

* क चित् सिद्धमिति पाठान्तरम् ।

यच्चापि भवतो ज्ञानं प्रत्यक्षादिः* किमत्र ते ।
मत्प्रसिद्धा ऽस्ति युक्तिर्वा साध्यं वा ऽत्र यथेच्छसि॥१४१॥
तस्मान्न विदुषामेतदुत्तरं युज्यते यतः ।
तव हेतुरसिद्धो ऽयं मम तेन न साधनम् ॥१४२॥
'सत्यं यदि ममैवाऽत्र प्रतिपत्तिः फलं भवेत् ।
तदा त्वदप्रसिद्धे ऽपि हेतौ मां प्रति हेतुता ॥१४३॥
यदा तु ज्ञानमात्रत्वप्रतिपत्तौ† भवान् मया ।
पृष्टः को हेतुरत्रेति तदैवं‡ नोपपद्यते' ॥१४४॥
स्वयं न ह्यगृहीतेन§ मत्प्रसिद्धेन वा भवान् ।
हेतुना साध्यमेतत्तु प्रतिपन्नः कथञ्चन ॥१४५॥

---

त्प्रसिद्धिमपेक्षमाणः प्रत्यक्षेणाऽप्यर्थं प्रतिपद्यमानो ऽपेक्षेतैवेत्याह यच्चेति[१४१] । तस्माद्वाद्यप्रसिद्ध्युपालम्भ उपहासास्पदमित्युपसंहरति तस्मादिति[१४२] ।

अत्र परिहारमाह सत्यमिति[१४३] द्वयेन । मत्प्रतिपत्तिमात्रफलत्वे साधनस्य स्यादेवं, भवतां त्वयं सिद्धान्तो ज्ञानमात्रं सर्वमिति, तत्र को हेतुरिति पृष्टे नाऽहं जानामीत्युत्तरं बालभाषितं स्यादिति । कथमित्याह स्वयमिति[१४५] । भवदीयेनाऽपि 'परार्थमनुमानं तु स्वदृष्टा-

---

* प्रत्यक्षादेरिति २ पु. पा. ।

† ज्ञानमात्रत्वं प्रतिपन्न इति २ पु. पा. ।

‡ तदैतदिति २ पु. पा. ।

§ स्वयं यन्न गृहीतेनेति क्वचित् ।

न च व्याप्रियते ऽन्यत्र वचनं प्राश्निकान् प्रति ।
स्वनिश्चयाय यो हेतुस्तस्यैव प्रतिपादनात् ॥१४६॥
मत्प्रसिद्धत्वमेतस्य कुतश्चाऽवगतं त्वया ।
कथं चेत्थं विवक्षा ते स्वयमर्थमजानतः ॥१४७॥
मयि जिज्ञासमाने ऽपि बुद्धिपूर्वोऽभिधायिनः ।
इति ज्ञात्वा च वो वृद्धैर्भाषितोभयसिद्धता ॥१४८॥
तेन यद्वन्ममैतेन त्वमाधित्ससि हेतुना ।
साध्यज्ञानं, तथैवाहमज्ञानं तव दूषणैः ॥१४९॥
'यथैव च भवानीदृक् साध्यमुक्त्वा ऽस्य साधनम् ।

---

र्थप्रकाशक'मिति लक्षणेन स्वप्रतिपन्नमेव प्राश्निकेभ्यः प्रतिपादनीय-मित्याह न चेति[१४६] । प्रतिपादनादन्यत्रेत्यन्वयः । किं च, मत्प्रसिद्धिरपि साधनस्य निरुपायेन भवता कथमवगम्यत इत्याह मत्प्रसिद्धत्वमिति[१४७] । किं चाऽप्रतिपत्त्या ऽर्थस्य भवतो विवक्षा ऽपि निर्निबन्धनैव, तदभावाच्च साधनरचना दूरे निरस्तेत्याह कथमिति । जिज्ञासमाने ऽपीति[१४८] । यद्यप्यहं जिज्ञासुर्न निग्रहपरः, तथापीति । अत एव दिङ्नागाचार्यैरप्युभयसिद्धिरादृतेत्याह इतीति । यथा च तवाऽसिद्धेनापि मत्प्रसिद्धेन साधनेन साध्यज्ञानं ममाऽऽधातुमिच्छसि, तथा दूषणैरपि मत्प्रसिद्धैरेव साध्याऽज्ञानमाधास्यामीत्याह तेनेति[१४९] । किं च, तवेव ममाऽपि सर्वमिथ्यात्वं प्रतिपाद्यमानस्य साधनाऽसिद्धिरेव स्यात्, तत्सद्भावे वा न सर्वमिथ्यात्वं वोढुं शक्यमित्याह यथै-

साध्याऽनुरूपमज्ञात्वा विहतः प्रतिपादनात् ॥१५०॥
तथैव प्रतिपाद्यो ऽपि तादृक्साध्यबुभुत्सया ।
मन्वानः साधनं दुष्टं ततः साध्यं न बुध्यते ॥१५१॥
संवित्त्या साधनं* मत्या तत्सद्भावे दृढे स्थिते ।
साध्यस्याऽसंभवादेव त्वदुक्तं नाऽवबुध्यते' ॥१५२॥
तेनाऽऽशेयं न कर्तव्या मोहादपि मयेरिते ।
साधने साधनं ज्ञात्वा पर एवाऽवभोत्स्यते ॥१५३॥
विस्पष्टश्चाऽक्षपादोक्तो विरोधो हेतुसाध्ययोः ।
यमदृष्ट्वा परैरुक्तमदूषणमिदं किल ॥१५४॥

---

वेति[१५०] त्रिभिः[५०] । उपसंहरति तेनेति[१५३] ।

हेतुप्रतिज्ञाविरोधाख्यस्य निग्रहस्थानस्य इदं निरालम्बनानुमानम् उदाहरणं, यद्दर्शनेन शाक्यैर्दूषणत्वमस्य निरस्तमित्याह विस्पष्ट- इति[१५४]। 'प्रतिज्ञाहेत्वोर्विरोधः प्रतिज्ञाविरोध' इत्यक्षपादेनोक्तं, तत्र चोदाहरणं, नित्यः शब्दः सर्वस्याऽनित्यत्वादिति सांख्योक्तमनुमानं, सर्वस्य ह्यनित्यत्वे तदन्तर्गतत्वात्तस्याऽप्यनित्यता स्यात्, तन्नित्यत्वे वा न सर्वस्याऽनित्यत्वमिति; तदिदं शाक्यैर्दूषितम्, न हि सर्वस्याऽनित्यत्वं सांख्यैर्हेतुत्वेनोक्तं, येन हेतुप्रतिज्ञाविरोधः स्याद्, वैधर्म्यदृष्टान्तस्त्वयं, सर्वत्वं च सावयवत्वमभिमतं, तत्र हेत्वभावेन साध्याऽभावस्य नियमो वक्तव्यः, अनित्यस्य सर्वत्वादिति, असुशिक्षितवैधर्म्यवचनत्वात्तु विपर्ययेणोक्तमिति; तदुक्तं 'दृष्टान्तो ऽभिहितो ह्येष वैधर्म्येणाऽसुशिक्षितैरिति; तदिदमुदाहरणं दूषणमात्रेण प्रतिज्ञाविरोधस्य

---

* सम्यक् चेति २ पु. पा. ।

ननु लोकप्रसिद्धेन पूर्वमेतेन हेतुना ।
साध्यसिद्धिर्मिमाप्यासीत्परमार्थो ऽस्य नास्तिता ॥१५५॥
'यो ऽधुना परमार्थेन नास्तीत्येवं प्रकाशते* ।
कथं पूर्वमसावासीदसंश्चेत्साधनं कथम् ॥१५६॥
साधनं चेदवश्यं च परमार्थोऽस्तिता भवेत् ।
सिद्धिर्नाऽपरमार्थेन परमार्थस्य युज्यते ॥१५७॥
न दृष्टा शशशृङ्गादेः सम्यग्ज्ञानादिहेतुता ।

---

निग्रहस्थानत्वं न दूषितं भवतीति किलशब्देन दर्शितम्। यद्यपि तदु-दाहरणं न भवति तथापि भवदीयमेव निरालम्बनाऽनुमानमुदाहरणं भवति, सर्वनिरालम्बनत्वे हि प्रत्ययत्वग्राहिज्ञानस्यापि निरालम्बन-त्वात्प्रत्ययत्वं न सिध्येत्, तत्सिद्धौ वा न सर्वनिरालम्बनत्वम् ।

चोदयति नन्विति[१५५]। तव हि प्रत्ययत्वग्राहिज्ञानस्यापि निरा-लम्बनत्वात्प्रत्ययत्वं न सिध्येत्, तत्सिद्धौ वा न प्रागस्मान्निरालम्बना-ऽनुमानाल्लोकसिद्धा हेत्वादयः सद्रूपा एव, अतस्तैः सद्भिः पारमार्थिकं निरालम्बनत्वं साध्यते, तस्मिंश्च साधिते पश्चाद्धेत्वादीनामसत्त्वं भव-दपि न साध्यसिद्धिं विहन्ति, तस्य प्रागेव सिद्धत्वादिति। परिहरति यो ऽधुनेति[१५६] सार्धेन। न हि प्राक्सदेव हेत्वादिकं निरालम्ब-नाऽनुमानेन विनाश्यते, किं तर्हि प्रागप्यसदेव पश्चात्तु तदवगम्यते, शुक्तेरिव रजतत्वम्; अतः पूर्वमसदेव,असत्त्वाच्च न परमार्थस्य सा-ध्यस्य साधनमिति। कथमित्यत आह सिद्धिरिति[१५७]। कथं न युज्यते,

---

* प्रतीयते इति २ पु. पा. ।

बाष्पादिना ऽप्यधूमेन मिथ्या वन्ह्यादिबोधनम् ॥१५८॥
तस्मादसत्यहेतोर्या परमार्थे मतिस्तव ।
सा ऽप्यसत्या न सत्यं हि सत्याऽऽभासेन गम्यते॥१५९॥
ये ऽपि रेखादयो दृष्टा वर्णानां प्रतिपादकाः ।
न ते स्वेनाऽपि रूपेण परमार्थत्ववर्जिताः ॥१६०॥
वर्णात्मना न सत्याश्चेत् सर्वभावेष्वयं विधिः ।
पदार्थान्तररूपेण न सत्यं किञ्चिदिष्यते ॥१६१॥

---

ऽत आह न दृष्टेति[१५८]। किं च, विद्यमानादपि वाष्पाद् भ्रान्त्या धूमतया ऽवगतान्न परमार्थोऽग्निसिद्धिः, किमु अत्यन्ताऽविद्यमानादित्याह बाष्पादिनेति । उपसंहरति तस्मादिति[१५९] । असत्येन हेत्वादिना परमार्थत्वसंमते निरालम्बनत्वे या मतिः सा मिथ्येति । ननु वर्णस्वरूपेणाऽपरमार्थैरपि रेखादिभिः परमार्थवर्णज्ञानं दृष्टमत आह ये ऽपीति[१६०] । शङ्कते वर्णात्मनेति[१६१] । परिहरति सर्वभावेष्विति ।

एतदेव विवृणोति पदार्थान्तरेति । एतदुक्तं भवति, यद्यपि रेखासु मकारो ऽयमिति वर्णात्मकत्वं भ्रान्तं, तथापि न तेन रूपेण वर्णज्ञानोपायत्वं, यतो वर्णज्ञानं मिथ्या स्यात्, वर्णात्मके हि तदवगमे जाते पश्चान्न किंचिज् ज्ञातव्यमस्ति, यदसत्योपायतया पश्चान्मिथ्या स्यात्, अतः स्वरूपेणैव गमकता, तच्च सत्यमेवेति नोपायाऽसत्यत्वं, रेखास्वरूपेण तु वर्णस्वरूपमवगम्यमानं सम्बन्धग्रहणसमयवर्त्तिताऽऽदात्म्यशिक्षाबलेन भ्रान्त्या तद्रूपतया ऽवगम्यतइति नाऽसत्यात्सत्यसिद्धिः । किं च, यदपि बाष्परेखादिकं, तदपि स्वरूपेण सत्यभूतेन प-

स्वरूपे विद्यमाने तु यदप्येवं प्रकाशते ।
स्वरूपाऽभावक्लृप्तौ तु न सत्यं नाऽप्यसत्यता ॥१६२॥
हेत्वादीनां तु भवतः स्वरूपेणाऽप्यसत्यता ।
तेन बाष्पादिवत्तेषामुपायत्वं, न लेख्यवत् ॥१६३॥
उपायानां स्वरूपं हि संवृत्त्यात्मकमेव नः ।
तथा च सत्यतेष्टैव स्वरूपाऽसत्यता कथम् ॥१६४॥
संवृत्या यत् स्वरूपं हि तद्वाङ्मात्रनिबन्धनम् ।
हेतुत्वं परमार्थस्य प्रतिपत्तुं न शक्नुयात् ॥१६५॥
परमार्थाच्च लोकस्य न भेदे हेतुरस्ति ते ।

---

स्वरूपेण वा धूमादिरूपेणाऽसत्येनाऽवगम्यते, यत्तु स्वरूपेणैवाऽत्यन्ताऽविद्यमानं न तत्स्वरूपेण प्रमाणं, ततः पररूपेण वा भ्रान्त्या गम्यते, बुद्ध्यारोह एव तस्य न सम्भवतीत्याह स्वरूपे इति । ततः किमित्याह हेत्वादीनामिति[१६३] । उपसंहरति तेनेति । नेत्युभयत्र सम्बध्यते । बाष्पादिवत् तेषां भ्रान्तिज्ञानहेतुत्वमपि न सम्भवति, नाऽपि लेख्यवत्सम्यग्ज्ञानहेतुत्वमिति । चोदयति उपायानामिति[१६४] । यद्यत्यन्ताऽसन्तो हेत्वादयः स्युर्न स्युरुपायाः, ते तु सांवृतेन रूपेण सत्या एवेति । परिहरति संवृत्येति[१६५] । सांवृतं रूपं वाङ्मात्रनिबन्धनम्, असत्याऽपरपर्यायत्वात्संवृतेः, अतो नैवंविधेन हेत्वादिना परमार्थसाध्यसिद्धिः । पूर्वं धर्मधर्म्यादिव्यवहारः सांवृतेन बाह्येन सिध्यतीत्युपन्यस्य तन्निरस्तम्, इदानीं साधनव्यवहारौपयिकत्वमुपन्यस्यते निरस्यते चेति विषयभेदादपौनरुक्त्यमिति ।

किं च, लोकपरमार्थयोर्भेदो ऽपि तव न सिध्यति, तद्ग्राहिज्ञानमिथ्यात्वादित्याह परमार्थाच्चेति[१६६] । लोकशब्देन संवृतिरुच्यते

लौकिकोपायगम्यस्य केन स्यात् परमार्थता ॥१६६॥
नन्वसत्यपि बाह्ये ऽर्थे बुद्ध्यारूढे न सिध्यति ।
वासनाशब्दभेदात्थविकल्पप्रविभागतः ॥१६७॥
न्यायविद्भिरिदं चोक्तं धर्मादौ बुद्धिमाश्रिते ।
व्यवहारो ऽनुमानादेः कल्प्यते न बहिःस्थिते ॥१६८॥
अस्तीदं वचनं तेषामिदं तत्र परीक्ष्यताम् ।
भेदो ऽसतः कथं हि स्याद्बुद्धिशब्दप्रकल्पनात् ॥१६९॥

---

इति । किं च सांवृतोपायगम्यस्य बाष्पावगताऽग्निवन्न परमार्थता स्यादित्याह लौकिकेति । संप्रति सर्वपूर्वोक्तपरिहारेण परः प्रत्यवतिष्ठते नन्विति[१६७] । यथैव विद्यमानैरेव बुद्ध्यारूढैर्घटादिभिरुदकाहरणादिव्यवहारः सुखोपभोगश्च स्वप्ने सिद्ध्यति, तथैव बुद्ध्याऽऽरूढेन धर्मधर्मिहेत्वादिविभागेनाऽनुमानाऽनुमेयव्यवहारः सेत्स्यतीति किं बाह्येनेति ।

किंनिबन्धनो बुद्धिभेदो यतो हेत्वादिविभागः, अत आह वासनेति । वासनाभेदाच्छब्दभेदाच्च हेत्वाद्याभासविकल्पविभागाः सम्भवन्ति, ततश्च हेत्वादिविभाग इति । शब्दग्रहणं चाऽर्थनिराकरणपरतया ऽनास्थयोक्तं, परमार्थतस्तु ज्ञानमात्रवादिनां शब्दो ऽपि नास्त्येव, वासनाभेदनिबन्धन एव तु विकल्पभेद इति । वृद्धानामप्यस्मदीयानामिदमेवाऽभिमतमित्याह न्यायविद्भिरिति[१६८] । सर्व एवाऽयमनुमानाऽनुमेयव्यवहारो बुद्ध्यारूढेन धर्मधर्मिन्यायेन न बहिःसत्तामपेक्षत इति दिङ्नागेनोक्तमिति । दूषयति अस्तीति[१६९] । न हि

निर्वस्तुके कथञ्चित्स्यात्प्रसवो बुद्धिशब्दयोः ।
शब्दभेदोऽपि भवतस्तदभावान्न सिध्यति* ॥१७०॥
'यदि वा विद्यमानोऽपि भेदो बुद्धिप्रकल्पितः ।
साध्यसाधनधर्मादेर्व्यवहाराय कल्प्यते ॥१७१॥
ततो भवत्प्रयुक्तेऽस्मिन् साधने यावदुच्यते ।
सर्वत्रोत्पद्यते बुद्धिरिति दूषणता भवेत्'† ॥१७२॥
यश्च मन्त्रस्त्वयोक्तोऽयं धर्म्यादौ बुद्धिमाश्रिते ।
न बाह्याऽपेक्षया स स्यादसिद्ध्यादौ मयेरिते ॥१७३॥
बुद्धिप्रक्लृप्तिसिद्धिश्च भवतां व्यवहारिणाम् ।
मदुक्तं दूषणं सिद्धं त्वदुक्तं तु न साधनम् ॥१७४॥

---

शशविषाणादेर्बुद्धिनिबन्धनो भेदो दृष्ट इति । निर्वस्तुके च जगति बुद्धिशब्दविभाग एव निर्निबन्धन इत्याह निर्वस्तुके इति[१७०] । ज्ञानमात्रवादिनश्च शब्दाऽभावात् तद्भेदो बुद्धिभेदकारणं न सम्भवतीत्याह शब्दभेद इति । बुद्धिमात्रनिबन्धनत्वे च साधनस्य दूषणमप्यस्मदीयं तावन्मात्रेण सिध्यतीत्याह यदि वेति[१७१] द्वयेन । यावदुच्यते, दूषणमिति शेषः । दिङ्नागवचनमपि सर्व एवाऽयं दूष्यदूषणव्यवहार इत्येवमूहेन प्रकल्पितव्यमित्याह यश्चेति[१७३] । न चैवमावयोस्तुल्यत्वमित्याह बुद्धीति । कथं न साधनमत आह बा-

---

* न विद्यते इति २ पु. पा. ।

† दूषणभाग् भवेदिति २ पु. पा. ।

बाह्याऽर्थव्यवहारित्वाज्ज्ञानोत्पादे स्थिते ऽपि नः।
कथञ्चिन्न हि कल्प्येत व्यवहारो ऽर्थवर्जितः ॥१७५॥
ननु यद्वन्मया हेतुर्नेष्यते दूषणं तथा।
तेन मे दूषणाऽभावाददुष्टं साधनं भवेत् ॥१७६॥
नेदानीं दूषणैः कार्यं, साधनाऽभावतो यदि।
त्वयैवाऽस्मदभिप्रेता स्वपक्षाऽसिद्धिराश्रिता ॥१७७॥
न चास्ति वासनाभेदो निमित्ताऽसम्भवात्तव।
ज्ञानभेदो निमित्तं चेत् तस्य भेदः कथं पुनः ॥१७८॥
वासनाभेदतश्चेत् स्यात् प्राप्तमन्योन्यसंश्रयम्।
स्वच्छस्य ज्ञानरूपस्य न हि भेदः स्वतो ऽस्ति ते ॥१७९॥
प्रमाणं वासनाऽस्तित्वे भेदे वा ऽपि न विद्यते।
कुर्याद् ग्राहकभेदं सा ग्राह्यभेदस्तु किङ्कृतः ॥१८०॥

---

ह्याऽर्थेति[१७५] चोदयति नन्विति[१७६]। परिहरति नेदानीमिति[१७७]।

यश्च वासनाभेदो बुद्धिभेदनिबन्धनत्वेनोक्तः, सो ऽपि निर्निबन्धन इत्याह न चेति[१७८]। शङ्कते ज्ञानभेद इति। दूषयति तस्येति। पुनः शङ्कते वासनेति[१७९]। दूषयति प्राप्तमिति। स्वाभाविको ज्ञानभेदो न वासनानिबन्धन इति चेत्तत्राह स्वच्छस्येति। स्वभावतः स्वच्छं चिन्मात्ररूपमविलक्षणमेव ज्ञानं, वासनानिबन्धनस्तु तस्य नीलादिरूपो भेदः, अत एव हि तुरीये सकलवासनोच्छेदात्सच्चिन्मात्ररूपेण ज्ञानमवतिष्ठत इति।

प्रमाणमपि वासनातद्भेदयोर्नास्तीत्याह प्रमाणमिति[१८०]। विद्यमाना ऽपि वासना पूर्वगृहीते ऽर्थे ग्राहकभेदं ज्ञानान्तरमेव कुर्यान्न तु

संवित्त्या जायमाना हि स्मृतिमात्रं करोत्यसौ ।
क्षणिकेषु च चित्तेषु विनाशे च निरन्वये ॥१८१॥
वास्यवासकयोश्चैवमसाहित्यान्न वासना ।
पूर्वक्षणैरनुत्पन्नो वास्यते नोत्तरः क्षणः ॥१८२॥
उत्तरेण विनष्टत्वान्न च पूर्वस्य वासना ।
साहित्ये ऽपि तयोर्नैव सम्बन्धो ऽस्तीत्यवासना ॥१८३॥
क्षणिकत्वाद् द्वयस्यापि* व्यापारो न परस्परम् ।
विनश्यच्च कथं वस्तु वास्यते ऽन्येन नश्यता ॥१८४॥

---

नीलादिकं ग्राह्यमाविर्भावयितुमलमित्याह कुर्यादिति । कथं न ग्राह्यभेदं करोतीति, तत्राह संवित्त्येति[१८१]। पूर्वाऽनुभवजनितसंस्कारो वासना, अतो ऽसौ स्मृतिमेवानुभूते करोति न सांवृतं घटादिकमत्यन्ताऽगृहीतं ग्राहयतीति । इतश्चाऽनुपपन्ना वासनेत्याह क्षणिकेष्विति । कारणत्रयं वासनाभावउक्तं, तत्राऽसाहित्यं विवृणोति पूर्वक्षणैरिति[१८२] । न हि युगपदविद्यमानयोरेकेन इतरस्य वासना सम्भवति,सहभुवामेवाऽङ्गाराऽगुरुधूमादीनां वास्यवासकभावदर्शनादिति। साहित्याऽभ्युपगमे ऽपि ज्ञानानां मिथः सम्बन्धाऽभावान्न वासना सम्भवति, न वा ऽनन्तरक्षणवर्त्तित्वमेककालत्वं वा सम्बन्धः, तस्य सन्तानाऽन्तरेषु ज्ञानाऽन्तरेषु च साधारणत्वादित्याह साहित्ये ऽपीति[१८३]। 'क्षणिकत्वान्न वासने'त्येतद्विवृणोति क्षणिकत्वादिति[१८४]। संयोगसमवायादिव्यापारनिबन्धना वासना दृष्टेति । 'निरन्वयविनाशित्वान्न वासने'त्येतद्विवृणोति विनश्यदिति । सावयवानां स्व-

---

* द्वयोश्चाऽपीति २ पु. पा. ।

अवस्थिता हि वास्यन्ते भावाऽभावैरवस्थितैः ।
अवस्थितो हि* पूर्वस्माद्भिद्यते नोत्तरो यदि ॥१८५॥
पूर्ववद्वासना तत्र न स्यादेवाऽविशेषतः ।
भङ्गुरे पर्वसादृश्याद् भिन्नत्वाच्चाऽस्ति वासना॥१८६॥

---

रूपेण सतामेव वास्यवासकभावः, यथा धूमाऽवयवानां सूक्ष्माणामगारे, चम्पकाऽवयवानां च तैले संक्रान्तिरिति। किमिति न वास्यते, ऽत आह अवस्थिता इति[१८५]। अवस्थितानां ह्यवस्थितैः संक्रान्तिर्वासना, न च निरन्वयविनष्टस्य पूर्वोत्तरेषु केन चिदंशेन संक्रान्तिः सम्भवति, अस्मत्पक्षे तु आत्मनः स्थिरत्वाद् द्वित्रिक्षणवर्तिना ज्ञानेन सम्भवति वासनेति ।

चोदयति अवस्थित इति। यदुक्तम, 'अवस्थिता हि वास्यन्त'-इति, तदयुक्तम, अवस्थितत्वे हि पूर्वाऽपरकालयोरेकरूपत्वमङ्गीकरणीयम, इतरथा ऽवस्थितत्वानुपपत्तेः, ततश्च प्रागवस्थितरूपस्य पश्चादपि तद्रूपत्वाद्वासनाऽनुपपत्तिरविशेषात् । अथ विशेषान्तरं वासनाख्यम् अवस्थितएव धर्मिणि जायतइत्युच्यते, स खलु विशेषो धर्मिणो भिन्नश्चेद्धर्मिणस्तादवस्थ्यम, अभिन्नत्वे तज्जनने धर्मिणोऽपि तदभिन्नस्य जननापत्तेरवस्थितत्वाऽनुपपत्तिरिति । क्षणभङ्गुरत्वे तु सम्भवति वासनेत्याह भङ्गुरे इति[१८६] । अवस्थिते पूर्वाऽपरकालयोरेकरूपस्य रूपान्तरजननाऽनुपपत्तिः स्यात्, अस्मत्पक्षे तु पूर्वस्माज् ज्ञानक्षणादुत्तरक्षणस्य भिन्नत्वात्सादृश्याच्च युक्तैव वासना; ताद्रूप्यमेव च वासना, यथा लाक्षारसोपसिक्ताद्बीजपूरकुसुमात् तद्रूपं जायमानं फलं तद्वासितमित्युच्यते, तेन पूर्वमु-

---

* अपीति २ पु. पा. ।

नैतदस्त्यनुरूपं तु क्षणिकस्त्वे धियां तव ।
'पूर्वज्ञानं त्वनुत्पन्नं कार्यं नारभते क चित् ॥१८७॥
न विनष्टं, न तस्याऽस्ति निष्पन्नस्य क्षणं स्थितिः ।
तेनोत्पन्नविनष्टत्वान्नास्त्यारम्भक्षणो ऽपि हि' ॥१८८॥
निरन्वयविशिष्टत्वादानुरूप्यं कुतः पुनः ।
न तदीयो ऽस्ति कश्चिच्च धर्म उत्तरबुद्धिषु ॥१८९॥
समानधर्मतां मुक्त्वा नाऽऽनुरूप्यं च विद्यते ।
'यदि स्यादानुरूप्याच्च वासना गोधियो यदा ॥१९०॥

---

त्तरमात्मसरूपं जनयद्वासयतीत्युच्यते, उत्तरं च वास्यते इति, न पुनर्व्यापाराऽपेक्षा वासना, येन क्षणिकस्य न स्यात्, कार्यकारणत्वं च वास्यवासकयोः सम्बन्ध इति नाऽसम्बन्धदोष इति, परिहरति नैतदिति[१८७]। क्षणिकानां हि जनकत्वमेव सम्भवति नतरां सदृशजनकत्वमिति । यथा तावन्न जनकत्वं तथा तद्दर्शयति पूर्वेति सार्धेन ।

न तावदनुत्पन्नं विनष्टं वा जनकम् असत्त्वात्तस्य, न वोत्पन्नस्य क्षणिकत्वात्, क्षणान्तरावस्थानं कदा कार्यमारभते; पूर्वक्षणवर्त्तित्वमेव कारणत्वमिति चेन्न, गवाऽश्वयोरपि यादृच्छिकपौर्वापर्ये तत्प्रसङ्गात्, पौर्वापर्यनियमस्तु भूयोदर्शनगम्यः, न च क्षणिकानां निरन्वयविनाशिनां च विशेषतः सामान्यतो वा भूयोदर्शनं सम्भवतीति न कार्यकारणभाव इति । सादृश्यं तु सुतरां न सम्भवतीत्याह निरन्वयेति[१८९] । कथं निरन्वयविनाशे सारूप्याऽनुपपत्तिरत आह न तदीय इति । यतापि कथमित्याह समानेति[१९०]। अवयवादिसामान्याऽनुगमनि-

हस्तिबुद्धिर्भवेत्तत्र वैलक्षण्यान्न वासना ।
ततः परं च गोज्ञानं निर्मूलत्वान्न सम्भवेत् ॥१९१॥
सर्वं विलक्षणं ज्ञानं न स्यादेव विलक्षणात्* ।
बाह्यार्थाऽनुग्रहाऽभावात्पारार्थ्येनाऽवशीकृताः ॥१९२॥

---

धन्धर्न हि सादृश्यम् इति । न च सरूपजनकत्वेन वासकत्वे विलक्षणाद्विलक्षणोत्पत्तिः स्यादित्याह यदीति द्वयेन ।

ननु सरूपमपि जनयता नाऽवश्यमनन्तरमेव जनयितव्यं, परंपरया ऽपि तज्जननाऽविरोधात्, तेन गवाकारं ज्ञानम् अश्वाकारविज्ञानमपि जनयत्ताद‍ृश्या वासनया कार्यं करोति, यथा च सह जनयति तथा पश्चात्तस्यां सन्ततौ कदा चिदपि गोज्ञानं जन्यते, सा ह्युत्तरोत्तरज्ञानसंक्रान्त्यैव शक्नोत्येव कालान्तरे ऽपि स्वोत्पादकसरूपं ज्ञानमुत्पादयितुम्, एवं नीलपीतादिज्ञानानि सर्वाण्येव स्वाऽनुरूपज्ञानजननसमर्थानि विचित्रवासनां कुर्वन्ति; तदेवं सर्वाणि ज्ञानानि सर्वाऽऽकारवासनायुक्तानि; कदा चित्तु कानि चित्,वासना स्वकार्यं करोति, यथा भवन्मते बहुष्वर्थेषु पूर्वाऽनुभूतेषु तद्विषयका वासनाः सहस्रशः पुरुषे व्यवस्थिता अपि स्वप्ने जागर्यायां च कदा चित् कां चित्स्मृतिं जनयन्ति तथा ऽस्माकमपि भविष्यतीत्यत आह बाह्यार्थेति[१९२] । सत्यपक्षे हि स्थायिन्यः सर्वा वासनाः पुरुषे अवस्थिता अपि बाह्यार्थाऽनुग्रहात् सदृशदर्शनाऽदृष्टदेशकालाद्युद्बोधकक्रमात्पारार्थ्येनात्मार्थत्वेन च वशीकृतास्तदीयमनःप्रणिधानक्रमाद्युक्तं क्रमेण कार्यं कुर्वन्ति, भवतस्तु ज्ञानवासनाऽतिरिक्तस्य कस्य चिदभावात् निरन्वयविनाशित्वाच्च वासनानां कथं किमपेक्षया क्रमारम्भः स्यादिति।

---

* निर्बीजत्वादिति २ पु॰ पा॰ ।

निरन्वयाविनाशिन्यः कुर्युः कार्यं कथं क्रमात् ।
विनाशे कारणस्येष्टः कार्यारम्भश्च नाऽन्यथा ॥१९३॥
'तत्रैव ज्ञाननाशेन विनष्टाः सर्ववासनाः ।
तेन सर्वाभ्य एताभ्यः सर्वाकारं यदुत्थितम्* ॥१९४॥
ज्ञानमेकक्षणेनैव विनाशं गन्तुमर्हति' ।
यद्याश्रयविनाशे ऽपि शक्त्यनाशो ऽभ्युपेयते ॥१९५॥
क्षणिकत्वं च हीयेत न चारम्भो ऽन्यथा भवेत् ।
वासनानां प्रवाहो ऽपि यदि ज्ञानप्रवाहवत् ॥१९६॥
वासनातस्ततो ज्ञानं न स्यात्तस्माच्च वासना ।
कुर्यातां तुल्यमेवैते† नाऽन्योन्यं तु कदा चन ॥१९७॥

---

इतश्च न क्रमारम्भ इत्याह विनाशे इति[१९३]। कारणविनाशाऽनन्तरमेव कार्यमिति भवतां दर्शनमिति। ततः किमित्याह तत्रेति[१९४] सार्द्धेन। ज्ञानाधारा हि सर्वा वासना ज्ञाननाशेन नश्यन्ति, अतः सर्वाकारमेकं ज्ञानं युगपज्जनयेयुरिति न क्रमारम्भसिद्धिरिति। अथ ज्ञाननाशे ऽपि शक्तिपर्याया वासना न नश्येयुः, ततः क्षणिकसिद्धान्तहानिः, अक्षणिकस्य च कार्याऽऽरम्भाऽनुपपत्तिरित्याह यदीति[१९५]।

शङ्कते वासनानामिति[१९६]। क्षणिकानामपि वासनानां ज्ञानानामिव प्रवाहाऽङ्गीकरणात् कार्यारम्भः क्रमारम्भश्च युक्त इति। दूषयति वासनात इति[१९७]। सर्वं हि कारणं सजातीयाऽऽरम्भक-

---

* समुच्छ्रितम् इति का. पा. ।

† सदृशे चैते इति २ पु. पा. ।

नाऽन्यो विलक्षणो हेतुर्येनाऽन्यादृक् फलं भवेत् ।
तस्मात्संवृतिसत्यैषा कल्पिता नास्ति तत्त्वतः ॥१९८॥
न चेदृशेन भावेन कार्यमुत्पद्यते क चित् ।
यस्य त्ववस्थितो ज्ञाता ज्ञानाऽभ्यासेन युज्यते ॥१९९॥

---

मिति वः सिद्धान्तः, घटो घटं पटः पटमित्यङ्गीकरणात्; ततश्च वासना वासनामेव कुर्याज् ज्ञानं च ज्ञानं, न तु वासनातो ज्ञानं ज्ञानाच्च वासनेति सिद्ध्येत्, ततश्च गवाकाराज् ज्ञानादुत्पन्नया वासनया परंपरया कालान्तरे गवाकारज्ञानसिद्धिरनुपपन्ना, ज्ञानमेव गवाकारं गवाकारज्ञानस्योत्पादकमिति उपपद्यते, ततो गोज्ञानादश्वज्ञानं न स्यादिति । न चौत्सर्गिकं कारणस्य सजातीयारम्भकत्वं, विलक्षणसहकारिसमवधाने तु विजातीयमपि करोति,* यथा मुद्गराऽभिघातसमवधाने घटः कपालम्, अतो ज्ञानमपि वासनां, वासना च ज्ञानं कुर्यादित्यत आह नान्य इति[१९८] । ज्ञानातिरिक्तस्याऽभावादिति । उपसंहरति तस्मादिति ।

भवत्विति चेत्तत्राह न चेति[१९९] । उक्तमिदं न सांवृतं कार्यक्षममिति । यत्त्ववस्थितस्य भिन्नाऽभिन्ना वासना न संभवन्तीत्युक्तं, तत्राह यस्य त्विति । यस्य मे ऽवस्थितपुरुषो ज्ञानाऽभ्यासपाटवादिना युज्यते संबध्यते तस्याऽसौ भिन्नाया एव वासनायाः समवायित्वेनाधारो भवतु, तत्समवायाच्च पूर्वाऽवासितस्यापि वासितत्वोपपत्तिरभेदेन वा, स एव तावद्वासना भवतु, तदाकारेण च तस्योत्पत्तिविनाशयोरपि सतो रूपान्तरेणाऽवस्थानाञ्च नित्यत्वहानिरिति ।

---

* करोतीति नास्ति २ पु. ।

स तस्य वासनाऽऽधारो वासना ऽपि स एव वा ।
कुसुमे बीजपूरादेर्यल्लाक्षाद्युपसिच्यते ॥
तद्रूपस्यैव संक्रान्तिः फले तस्येत्यवासना ॥२००॥

युक्त्या ऽनुपेतामसतीं प्रकल्प्य
यद्वासनामर्थनिराक्रियेयम् ।
आस्थानिवृत्त्यर्थमवादि बौद्धै*-
र्ग्राहं गतास्तत्र कथं चिदन्ये ॥२०१॥

इति निरालम्बनवादः ॥

---

यत्तु निदर्शितं लाक्षाऽवसिक्तं कुसुमसरूपं फलं जनयतीति, तद्द्युक्तम, तत्र हि लाक्षाऽवयवानां सूक्ष्माणां कुसुमात्फले सक्रान्ति,र्न तु पूर्वज्ञानस्यांशः कश्चिदुत्तरेषु ज्ञानेषु अनुवर्त्ततेइत्युक्तो विशेषः । तदाह कुसुमे[२००]इति वासनाऽन्तेन । प्रकरणार्थमुपसंहरति इतीति । बौद्धमपि दर्शनं तात्पर्यतो नैवाऽवगतमेवंवादिभिरित्याह युक्त्या ऽनुपेतामिति[२०१] ।

इति श्रीपार्थसारथिमिश्रविरचिते न्यायरत्नाकरे निरालम्बनवादः ॥

---

* बुद्धैरिति १ पु. पा.

अथ शून्यवादः ।

एवमुक्ते ऽनुमानस्य ज्ञानमाश्रित्य दूषणे ।
ज्ञानप्रवृत्त्यशक्त्या तु परः प्रत्यवतिष्ठते ॥१॥
'यत्तावन्मन्यमानेन प्रत्यक्षं भवतोच्यते ।
दूषणं तद्विरोधादि तदिदानीं परीक्ष्यताम् ॥२॥

---

अथ शून्यवादः ।

अत्र भाष्यं "शून्यस्तु कथमर्थज्ञानयोराकारभेदं नोपलभामहे, प्रत्यक्षा च नो बुद्धि,रतस्तद्भिन्नमर्थरूपं नाम न किं चिदस्तीति पश्याम इति, तदयुक्तम्, अत्र प्रकृतप्रत्ययशब्दाऽनुवृत्त्या प्रत्ययः शून्य इति*" उच्यते, किं चेदं प्रत्ययशून्यत्वमन्यतो ऽर्थविरहात् तथा समाप्तावुपसंगृहीतमर्थरूपं न पश्याम इति, तेनाऽर्थानालम्बनत्वमेवेदमुच्यते, तच्च निरस्त,मतः केन हेतुना पुनः प्रत्यवस्थानमत आह एवमिति[१]। प्रत्यक्षादिज्ञानविरोधेन हि प्रागनुमानं निरस्तं, तस्य च बहिः प्रवर्त्तितु†मशक्तेर्न तद्विरोधो ऽनुमानस्य संभवतीति पूर्वोक्तविरोधपरिहारेण प्रत्यवस्थानमिति ।

प्रत्यक्षाऽशक्तिमेव दर्शयितुं परीक्षामवतारयति यत्तावदिति[२] द्वयेन । यादृशं बाह्याऽर्थग्राहि प्रत्यक्षं मन्यमानेन मीमांसकेन तद्विरोधो ऽनुमानस्योच्यते, तदेव किं बहिः प्रवर्त्तितुं‡ शक्तं, किं वा ऽऽत्मांशपर्यवसायित्वान्न बहिर्वस्तुनि प्रवर्ततइति परीक्षितव्यमिति ।

---

* शा. भा. पृ. ९ प. १२ ।
† प्रवर्तयितुमिति २ पु. पा. ।
‡ प्रवर्तयितुमिति २ पु. पा. ।

प्रवर्तितुं हि किं शक्तं स्तम्भाद्यर्थे बहिः स्थिते ।
अथ वाऽऽत्मांश एवैतद् ग्राह्ये क्षीणं न वस्तुनि'॥३॥
तद्यद्येतेन बाह्यो ऽर्थो गृह्यते दूषणं ततः ।
त्वदुक्तं सर्वमात्मांशे ग्राह्ये तन्नोपपद्यते ॥४॥
तत्र तावदिदं सिद्धं सर्वप्राणभृतामपि ।
ग्राह्यत्वं नीलपीतादिदीर्घाद्याकारवस्तुनः ॥५॥
न चाऽप्याकारभेदेन ज्ञानज्ञेयाऽवधारणा ।
न चाऽन्यतरधर्मत्वं विस्पष्टं तत्र* गृह्यते ॥६॥

---

किमर्था पुनरियं परीक्षा, ऽत आह तद्यदिति[४] । बाह्यग्राहिणा हि प्रत्यक्षेण तदपह्नवाऽनुमानं बाध्यते नाऽऽत्मांशपर्यवसायिना, तत्र यदि गृह्यमाणो नीलादिर्बाह्याकारः, ततो बहिः प्रवृत्तिशक्तं प्रत्यक्षम्, अथ ज्ञानस्य, ततः स्वांशपर्यवसायि, तेन कस्याऽयमाकार इति परीक्षणीयमिति। ननु सिद्धे ग्राह्यसद्भावे तस्याऽर्थाकारत्वं ज्ञानाकारत्वं वा परीक्षितुं शक्यं, तत्सिद्धिरेव तु कुतः, तत्राह तत्रेति[५] ।

सर्वप्राणभृतामविवादसिद्धमिदं यन्नीलाद्याकारं किंचिद् वस्तु प्रकाशतइति, तथापि ज्ञानज्ञेययोरपि प्रकाशनादुभयमप्यङ्गीक्रियतां, किं परीक्ष्यते, ऽत आह न चेति[६] । एकमेव नीलाकारं वस्तु प्रकाशते न द्वयमिति। तथापि यस्यैव प्रकाशने ऽर्थस्य ज्ञानस्य वा ऽयमाकारः तस्यैवायमाकारो ऽस्तु, कः परीक्षावसरः, अत आह न चेति । नाऽयमाकारो ऽर्थज्ञानयोरन्यतरधर्मतया निर्धारितो भासयते, यतः प-

---

* तस्येति २ पु. पा. ।

गृह्यमाणस्य चाऽस्तित्वं नाऽग्राह्यस्याऽप्रमाणकम् ।
तस्मादाकारवद् वस्तु ग्राह्यत्वाद्विद्यते ध्रुवम् ॥७॥
'अतः परीक्षमाणानां ज्ञानमाकारवद्यदि ।
तन्मात्रे च प्रमा क्षीणा ततो नास्त्यर्थकल्पना ॥८॥
यदि वा ऽऽकारवत्ता स्याद्ग्राह्यस्यैवेह वस्तुनः ।
तदस्ति गृह्यमाणत्वात्तत्सिद्धैवा*ऽस्ति धीरपि' ॥९॥
किं तावदत्र युक्तं स्याज्ज्ञानमाकारवत्कुतः ।
एकमाकारवद्वस्तु ग्राह्यमित्यध्यगीष्महि ॥१०॥

---

रीक्षावसरो न स्यादिति । नन्वेकस्मिन्नपि प्रकाशमाने ऽन्यदप्रकाशमानमेव सिध्यति, तथा च सिध्यत्येव द्वैतमत आह गृह्यमाणस्येति[७]। तस्मादेकस्यैव ध्रुवमस्तित्वं, द्वितीयं त्वस्ति नास्तीति परीक्षितव्यमित्याह तस्मादिति ।

तेन यदि परीक्षमाणा ज्ञानमेवाऽऽकारवद्व्यवस्यामः, ततस्तन्मात्र एव प्रत्यक्षप्रमा क्षीणेत्यर्थकल्पनां विजिहीमः, ज्ञानस्य स्वयं प्रकाशमानस्य नाऽर्थमन्तरेणाऽनुपपत्तिरिति सिध्यत्यद्वैतम; अथ तु बाह्यस्यैवाऽयमाकारवत्तया प्रकाशस्तावत्प्रकाशमानत्वादस्ति, तस्य च जडत्वेन पराऽधीनप्रकाशत्वात्तत्प्रकाशोपपत्तये ज्ञानमपि कल्पयितव्यमिति सिध्यति द्वैतम; तदिदमाह अत इति[८] द्वयेन । पूर्वपक्षं गृह्णाति किं तावदिति[१०]। ननु बहिरवभासमानस्य कथं ज्ञानाकारत्वमिति पृच्छति कुत इति । उत्तरमाह एकमिति । एकमेव हि नीलाद्याकारं वस्तु प्रकाशते न द्वयमित्येतावदधिगतवन्तो वय-

---

* तस्येति २ पु. पा. ।

तद्यथाऽऽकारवानर्थो बाह्यः कल्प्येत तस्य च ।
ग्राह्यत्वमन्यथा न स्यादिति ग्राहककल्पना ॥११॥
तेनाऽऽकारवतः क्लृप्ताद् ग्राह्यादाकारवर्जितम् ।
वस्त्वन्तरं प्रकल्प्यं स्याद् ग्राहकं निष्प्रमाणकम् ॥१२॥
तस्याऽकल्पनमिच्छंश्चेदर्थे ग्राहकतां वदेः ।
संज्ञामात्रे विसंवादः सिद्धा त्वेकाऽर्थकल्पना ॥१३॥
ग्राह्यग्राहकयोरैक्यं सर्वथा प्रतिपाद्यते ।
बाह्याभ्यन्तररूपश्च परिकल्प्यो मृषेष्यते ॥१४॥

---

म, अतस्तन्मात्रमेवाश्रयितव्यं न द्वयमिति। तथापि कथं ज्ञानाकारते-त्याह तद्यदीति[११] । अर्थस्य बाह्याकारत्वे तस्य जडस्य ग्राह्यत्व-सिद्धये ग्राहकं ज्ञानमङ्गीकर्त्तव्यमिति । तत्र को दोषो, ऽत आह तेनेति[१२] । न हि क्लृप्तेनैवोपपत्तौ विना प्रमाणेनाऽक्लृप्तकल्पनं युक्तमिति । शङ्कते तस्येति[१३] ।ज्ञानवदर्थ एव स्वयंप्रकाशो ऽस्त्विव-ति। दूषयति संज्ञामात्रइति। एकमेव स्वयंप्रकाशं वस्त्विति मे मतं, तस्यार्थ इति संज्ञामात्रं भवतोच्यते, नाऽर्थे विशेषः कश्चिदिति । एतदेव विवृणोति ग्राह्येति[१४] । ज्ञानं वा भवत्वर्थो वा, सर्वथा सिद्धं तावद्ग्राह्यग्राहकयोरेकत्वं, तावदेव चाऽस्माभिः प्रतिपाद्यते नाऽन्यदिति ।

नन्वर्थो बाह्यः, विज्ञानं त्वान्तरं क्षणिकं, तत्कथं न वस्तुनि विशेषो, ऽत आह बाह्येति । एकमपेक्ष्येतरद् बाह्यं, तदपेक्ष्य चाऽन्यदान्तरम्, अद्वितीये तु वस्तुनि मृषैवाऽयं विभागः, स्वयंप्रकाशत्वं त्वर्थस्यापि क्षणिकत्वमेव, स्थायिनः सुषुप्त्यादावप्रकाशमानस्य स्वप्रकाशत्वा-ऽनुपपत्तेः, अतो वस्तुनि विशेषाऽभावात्संज्ञामात्रे विवाद इति ।

'मत्पक्षे यद्यपि स्वच्छो* ज्ञानात्मा परमार्थतः ।
तथाऽप्यनादौ संसारे पूर्वज्ञानप्रसूतिभिः ॥१५॥
चित्राभिश्चित्रहेतुत्वाद्वासनाभिरुपप्लवात् ।
स्वानुरूप्येण नीलादि ग्राह्यग्राहकदूषितम्† ॥१६॥
प्रविभक्तमिवोत्पन्नं नाऽन्यमर्थमपेक्षते' ।
अन्योन्यहेतुता चैव ज्ञानशक्त्योरनादिका ॥१७॥

---

यदि विज्ञानमात्रमेव तत्त्वं ततस्तस्य सच्चिन्मात्ररूपत्वान्नीलादेर्ग्राह्याकारस्य कथमाभासो नीलमिदमिति, कदा चिच्चाऽस्मदर्थस्य ग्राहकाकारस्याऽहमिति, अत आह मत्पक्षइति[15] सार्द्धद्वयेन । अनादौ संसारे विचित्रग्राह्यग्राहकाकारबुद्धिजन्याभिर्विचित्राभिर्वासनाभिर्जन्यमानस्य स्वहेत्वानुरूप्येण विचित्रग्राह्यग्राहकाकारशवलस्य विभक्तस्य विचित्रस्योत्पत्तिसिद्धेर्न वैचित्र्यसिद्धये ऽर्थापेक्षा संभवति । यथा ऽऽहुः—

अविभागो ऽपि बुद्ध्यात्मा विपर्यासितदर्शनैः ।
ग्राह्यग्राहकसंवित्तिभेदवानिव लक्ष्यते ॥ इति ।

तथा—

परिच्छेदान्तराद्यायं भावो बहिरवस्थितः ।
ज्ञानस्याऽभेदिनो भेदप्रतिभासो ऽप्युपप्लवः ॥ इति ।

उपप्लवाद्भ्रान्त्याकारसमारोपादित्यर्थः । ननु ज्ञानवैचित्र्याद्वासनावैचित्र्यं ततश्च तद्वैचित्र्यम्, इतीतरेतराश्रयः स्यादित्युक्तं निरालम्बनवादे, अत उक्तमनादौ संसारइति । तद्विवृणोति अन्योन्यइति[17] । शक्तिरिति वासनोच्यतइति । एकया वासनयैकं ज्ञानं

---

* स्वस्थ इति पाठान्तरम् ।

† रूषितामिति २ पु. पा. ।

अनेककल्पनायाश्च ज्यायसी ह्येककल्पना ।
शक्तिमात्रस्य भेदश्च वस्तुभेदाद्विशिष्यते ॥१८॥
तस्मादुभयसिद्धत्वाज् ज्ञानस्याऽऽकारकल्पना ।
ज्यायसी भवतस्त्वर्थं कल्पयित्वा भवेदियम् ॥१९॥
तदसिद्धावशक्तत्वात् तेनैवं विप्रकृष्टता ।
प्रत्यासन्नं च संबद्धं* ग्राह्यं मम भविष्यति ॥२०॥

---

जन्यते, तेनाऽप्यन्या वासना, तया ऽप्यन्यज् ज्ञानमिति नेतरेतराश्रयम्। न च सर्वाद्यस्य कथं सिद्धिरिति वक्तव्यम्, अनादित्वात्संसारस्येति। कल्पनालाघवादपि ज्ञानाकारतैव नीलादेर्युक्तेत्याह अनेकेति[१८] ।

ननु भवतामपि ज्ञानवासनयोः कल्पनाभेदादस्त्येवाऽनेककल्पना, ऽत आह शक्तीति। ज्ञानस्यैव हि शक्तिमात्रं वासना, तन्मात्रकल्पना वस्तुभेदकल्पनाल्लघीयसी, ज्ञानशक्तिरूपस्य संस्कारस्याऽर्थवादिना ऽप्यभ्युपगमात्। सर्वं चेदं ज्ञानाऽतिरिक्तवासनाऽभ्युपगमेनोक्तम्। परमार्थतस्तु न ज्ञानातिरिक्तं किं चिदस्ति बौद्धानां, ज्ञानान्येव तु समनन्तरप्रत्ययवशेन विचित्रनीलपीतादिरूपाणि जायमानानि कार्यकारणरूपाणि अनादिसंतानरूपेण प्रवहन्ति, नाऽर्थरूपमपेक्षन्तइति ।

उभयवादिसिद्धत्वाच्च ज्ञानस्य तदाकारकल्पनैवाऽर्थाकारकल्पनातो ज्यायसीत्याह तस्मादिति[१९] सीत्यन्तेन । तस्मादर्थाकारकल्पनादित्यर्थः । भवतस्त्वर्थं कल्पयित्वा ऽपि गरीयसीयं ज्ञानाकारकल्पना ऽवश्यमङ्गीकर्त्तव्येत्याह भवत इति ।

कारणमाह तदसिद्धाविति[२०] । नीलाद्याकाराऽसिद्धौ हि संविन्मात्ररूपं ज्ञानं नीलादिकमर्थविशेषमुपस्थापयितुं न शक्नुयात्, न

---

* संविद्धमिति पाठान्तरम् ।

ह्यसति संविद्भेदे संवेद्यभेदः संभवति, नीलाद्याकाराऽभावे च संविदामभेदः* स्यात्, संविद्रूपस्य सर्वत्र समानत्वात्, नीलादिरूपेण त्वर्थे समानं ज्ञानं सरूपाऽर्थविषयं भवतीति युक्तम्, यदाहुः "न हि संवित्तिसत्तयैव तद्वेदना युक्ता, तस्याः सर्वत्राऽविशेषादविशेषप्रसङ्गात्, तां सारूप्यमाविशत्सरूपयितुं घटये"दिति। तथा—

तत्राऽनुभवमात्रेण ज्ञानस्य सदृशात्मनः।
भाव्यन्ते नाऽऽत्मना येन प्रतिकर्म विभज्यते ॥ इति।

तत्राऽवश्यमर्थविशेषविषयत्वसिद्धये ज्ञानानामपि नीलाद्याकारवत्त्वम् अङ्गीकर्त्तव्यम्, यद्यपि स्वभावत एव संविदो व्यतिभिद्येरन्, तथाप्यसौ भेदो न नीलाद्युपरागमन्तरेण शक्यते निरूपयितुं, न चाऽनिरूपितभेदाः संवेद्यभेदमलमुपस्थापयितुम्, न हि संविदस्तीत्येतावता नीलाऽवधारणं संभवति, तद्रूपस्य पीतादिसाधारणत्वात्, तस्माज् ज्ञानाकारो नीलादिर्नाऽर्थाकार इति।

किं चैवमर्थाकारत्वे नीलस्य तेन ज्ञानेन विप्रकृष्टता भिन्नता स्यात्, ततश्च तेनाऽस्य प्रकाशो न स्यादित्याह तेनेति। मत्पक्षे तु संभवति ग्राह्यत्वमित्याह प्रत्यासन्नमिति। प्रत्यासत्तिस्तादात्म्यं, ग्राह्यं मम भविष्यतीति वक्ष्यमाणेन संबन्धः। तदेवं प्रयोगः, नीलरूपं नीलवेदनादभिन्नं, तदुत्पत्तौ संवेद्यमानत्वात्तत्स्वरूपवत्तद्भिन्नत्वेनाऽसंवेद्यमानत्वाद्वा, तत्स्वरूपवदभिन्नत्वे वा संवेद्यता न स्यात् पीतवदिति। तदनेन संवेदनादिति बौद्धोक्तो हेतुर्दर्शित इति।

अपरमपि ग्राह्यलक्षणयोगादिति तदुक्तमेव हेतुं दर्शयति संबद्धमिति। मम विज्ञानसम्बद्धमेव नीलं तदात्मत्वात्, ततश्च युक्तं तस्य ग्राह्यत्वम्, इदमेव हि ग्राह्यलक्षणं यत्तादात्म्यं, तव त्वर्थान्तरत्वान्न तावत्तादात्म्यं, न चाऽन्यो ऽपि कश्चिज् ज्ञानाऽर्थयोः सम्बन्धो

---

* संविदो न भेद इति २ पु. पा.।

इतश्चाऽऽकारवज्ज्ञानं यस्मात्तद्वत्प्रकाशकम् ।
स्वयं प्रकाशहीनस्य बाह्यस्योपासनं मतम्* ॥२१॥

---

ऽस्ति, यद्वशादर्थो ग्राह्यलक्षणमनुवसत, तत्राऽसम्बन्धे ग्राह्यत्वाऽभ्युपगमे सर्वसंविदां सर्वविषयता स्यात्, तत्सर्वः सर्ववित् स्यात्; हेतुत्वं ग्राह्यलक्षणमिति चेन्न, नेत्रादेरपि प्रसङ्गात्; ज्ञानाकाराऽर्पणक्षमत्वं हेतुत्वमिति चेन्न, प्रमाणाभावात्, न हि नीलो ऽर्थो ज्ञाने नीलाकारमर्पयतीति । किं च, न प्रमाणमस्ति, ज्ञानवैचित्र्यस्य समनन्तरप्रत्ययादेवोपपत्तेरिति वक्ष्यामः। सारूप्यं ग्राह्यत्वमिति चेत्, असन्निहितो ऽपि नीलो ऽर्थो नीलज्ञानस्य ग्राह्यः स्यात् । किं च, कथं चित्सारूप्यं सर्वज्ञानानां सर्वार्थैरविशिष्टं, सर्वेषां क्षणिकत्वात्, ततश्च सैव सर्वज्ञतापत्तिः । सर्वात्मना तु सारूप्ये ऽर्थवज्ज्ञानस्यापि जडत्वं स्यात् । यथा ऽऽहुः—

एकदेशेन सारूप्ये सर्वः स्यात् सर्ववेदकः ।
सर्वात्मना तु सारूप्ये ज्ञानमज्ञानतां व्रजेत् ॥ इति ।

सारूप्यतदुत्पत्तिभ्यां ग्राह्यत्वमिति चेत्, धारावाहिकेषु पूर्वमुत्तरस्य ग्राह्यं स्यात्, तस्मात्सर्वा बुद्धयः स्वात्मानमेवानुभवन्ति नान्यत्, स्वयमेव चाऽनुभूयन्ते न बुद्ध्यन्तरेण, तस्यापि बुद्ध्यन्तरस्य स्वात्मपर्यवसायित्वात् । तथा ऽऽहुः—

नान्यो ऽनुभाव्यो बुद्ध्या ऽस्ति तस्या नाऽनुभवो ऽपरः ।
ग्राह्यग्राहकवैधुर्यात् स्वयं सैव प्रकाशते ॥ इति ।

इतश्च ज्ञानाकारो नीलादिक इत्याह इतश्चेति[21] । इदमेव साधयितुमुत्पत्त्यवस्थायामेव ज्ञानं गृह्यतइत्येतत्तावत्साधयति यस्मादि-

---

* उपायसंमतमिति पाठान्तरम् ।

न चाऽगृहीते ज्ञानाख्ये* प्रकाश्यो ऽर्थो ऽवधार्यते ।
तदधीनप्रकाशत्वाद्दीपाऽऽभासे† यथा घटः ॥२२॥
उत्पन्नेष्वपि चाऽर्थेषु प्रकाशाऽभावतः‡ क्व चित् ।
प्रतिबन्धकयोगाद्वा संवित्तिर्नोपजायते ॥२३॥
ज्ञानस्योत्पद्यमानस्य प्रतिबन्धो न कश्चन ।
न चाऽप्रकाशरूपत्वं येनास्याऽग्रहणं भवेत् ॥२४॥
प्राक् चाऽर्थग्रहणादिष्टा तस्योत्पत्तिस्तदैव च ।
संवेदनं भवेदस्य न चेत् कालान्तरे ऽपि न ॥२५॥

---

ति । भवतामपि हि ज्ञानं प्रकाशकमिति । कस्य प्रकाशकमिति तद्द-र्शयति स्वयमिति । ततः किमित्याह न चेति[२२] । न ह्यगृहीतं प्रकाशकं प्रकाश्यं प्रकाशयति दीपप्रभावदिति । तदाहुः 'अप्रत्यक्षो-पलम्भस्य नाऽर्थदृष्टिः प्रसिध्यती'ति ।

इतश्चोत्पत्तावेव गृह्यतइत्याह उत्पन्नेष्विति[२३] स्या[२४]ऽन्तेन । प्रागेव तावदर्थग्रहणाज् ज्ञानोत्पत्तिर्भवतामिष्टा, अनुत्पन्नस्य ग्राहक-त्वाऽयोगात्; उत्पन्नाश्च भावा क्वचिदेव न गृह्यन्ते, प्रकाशकाऽभावात्, प्रतिबन्धकसद्भावाद्वा, यथा सन्तमसे कुड्यव्यवाये परः । न च ज्ञानस्य प्रतिबन्धकमस्ति, न चाऽप्रकाशभावः, स्वयं प्रकाशत्वात्; अतो ऽवश्यमुत्पत्तावेव ग्रहीतव्यमिति । यदि चैवमपि न गृह्येत, काला-न्तरे ऽपि न गृह्येताऽविशेषादित्याह न चेदिति[२५]। अविशेषमेव द-

---

* ज्ञानांशे इति २ पु. पा. ।

† अभ्यासे इति पाठान्तरम् ।

‡ प्रकाशाऽभावनामिति २ पु. पा.

किं हि तस्य भवेदूर्ध्वं प्राक् च नासीन्न येन तत् ।
पूर्वं गृहीतं पश्चाच्च गृहीतमिति भाष्यते ॥२६॥
ज्ञानान्तरस्य चोत्पत्तिं प्रकाशो न प्रतीक्षते ।
तस्य तस्यापि चाऽन्येन संवित्तावस्थितिर्भवेत् ॥२७॥
'ज्ञानपृष्टेन यो ऽप्यूर्ध्वमर्थाऽभावे ऽपि दृश्यते ।
परामर्शो ऽर्थरूपस्य स कथं वोपपद्यते ॥२८॥
तद्रूपमार्थमालिख्य* यदि धीर्नोपजायते ।
भूतकाले च यद्यर्थस्तत्पूर्वं नोपलक्षितः' ॥२९॥

---

शंयति किं हीति[२६]। ज्ञानान्तरमिति चेत्, तत्राह ज्ञानान्तरस्येति[२७]। घटादीनामप्रकाशात्मनां हि प्रकाशाय प्रकाशाऽपेक्षा युक्ता, न तु प्रकाशात्मनो ज्ञानस्येति । सजातीयाऽपेक्षायामनवस्थेत्याह तस्येति । मा नाम संवेदि ज्ञानमिति चेन्न, उत्तरकाले स्मृतिदर्शनात्; एवं चैकविषयज्ञानप्रवाहे एवाऽऽयुषः पर्यवसानाद्विषयान्तरसंचारो न स्यात् । यथाहुः—

> ज्ञानान्तरेणाऽनुभवे दीष्टा तत्रापि च स्मृतिः ।
> विषयान्तरसंचारस्तथा न स्यात् स चेष्यते ॥ इति ।

इतश्च ज्ञानपुरस्सर एवार्थोऽनुभवो ज्ञानाकारश्च नीलादिरित्याह ज्ञानपृष्टेनेति[२८] द्वयेन। ज्ञातमर्थमुत्तरकालं परस्मै कथयन् ज्ञानपुरस्सरमेव स्मृत्या परामृश्य कथयति, ज्ञातो ऽयं मया घट इति, यथाऽनुभवं च कथनम्, तथा ऽतीते ऽनागते चाऽर्थे ऽर्थाकारस्य नीलादेः परामर्शो ऽसति ज्ञानाकारत्वे नोपपद्यते, न ह्यसता धीरनुरज्यते, अतो ज्ञानपुरस्सरमेवाऽर्थग्रहणं ज्ञानाकारश्च नीलादिः, ज्ञानपृष्टेन यो-

---

* आलिङ्ग्येति २ पु. पा.

वक्तारश्चापि दृश्यन्ते वर्त्तमानाऽर्थबुद्धिषु ।
नीलो ऽर्थो ऽयं यतो मे ऽत्र तद्रूपा जायते मतिः ॥३०॥
तस्मात् पूर्वगृहीतासु बुद्धिष्वर्थोपलम्भनम् ।
न चोपलब्धिरस्तीह निराकारासु बुद्धिषु ॥३१॥
विवेकबुद्ध्यभावाच्च साकारस्य च दर्शनात् ।
आकारवत्तया* बोधो ज्ञानस्यैव प्रसज्यते ॥३२॥
न ह्येवं कल्पना शक्या निराकारा ऽऽदितो मतिः ।
गृह्यते ऽर्थस्ततः पश्चात् साकारः संप्रतीयते ॥३३॥

---

ऽप्यूर्ध्वं परामर्शो ऽर्थरूपस्य स कथमुपपद्यते । भूतकाले यद्यर्थः । तत्पूर्वं नोपलक्षित इत्यन्वयः । तथा ऽर्थाभावे यः परामर्शो ऽर्थरूपस्य स कथमुपपद्यते तद्रूपमर्थमालिख्य यदि धीर्नोपजायतइति । न केवलमनुभूतार्थकथनम्, अनुभूयमानकथनमप्येवमेवेत्याह वक्तार इति[३०] । उपसंहरति तस्मादिति[३१] ।

भवतु ज्ञानपुरस्सरमर्थग्रहणं, तथापि कथं नीलादेर्ज्ञानाकारत्वमित्यत आह न चेति । नीलमिदमिति नीलाकारमेव वस्तु प्रथते न निराकारमिति, एवमर्थो ऽपि साकारः स्यात्, यद्याकारद्वयं दृश्येत, न तु तदस्तीत्याह विवेकेति[३२] । यदि न किं चिदपि साकारं वस्तु दृश्येत ततो ऽर्थवज् ज्ञानमपि साकारं न स्यात्, दृश्यते तु किं चित्साकारं वस्त्वित्याह साकारस्येति । तदस्माद्धेतुत्रयाज् ज्ञानं साकारं नार्थ इत्याह आकारेति । प्रथमं हेतुं विवृणोति न

---

* स्वाकारवत्तयेति पाठः १ पु. ।

आकारवत्त्वभेदो हि* ज्ञात्वा शक्येत भाषितुम् ।
प्राग्बुद्धिग्रहणादर्थे संवित्तिर्नेति साधितम् ॥३४॥
न चाऽर्थाकार एवाऽयं ज्ञानारूढः प्रतीयते ।
न हि सो ऽन्तःप्रवेशाय पर्याप्तो नाऽर्थहानये ॥३५॥
इत्थंभावे प्रमाणं च तस्य वक्तुं न शक्यते ।
तदीयप्रतिबिम्बत्वमेतस्मादेव नेष्यते ॥३६॥
निश्चन्द्रे बिम्बरूपं हि दृष्टं येन दिवा जलम् ।
स रात्रौ खे च तं दृष्ट्वा जानाति प्रतिबिम्बताम् ॥३७॥
विज्ञाने न कदा चित्तु प्राङ्निराकारदर्शनम् ।

---

हीति[३३] । द्वितीयं विवृणोति आकारवत्त्वेति[३४] । यदि त्वगृहीतैव बुद्धिरर्थं गृह्णीयात्, ततस्तस्या निराकारत्वमर्थस्यापि च साकारत्वं सिद्ध्येत्, न तु तदस्तीत्युक्तमित्याह प्रागिति ।

केचिदाहुः, सत्यं, नीलाकारतया ज्ञानं गृह्यते न त्वसावाकारस्तस्यैव, किं त्वर्थाकार एवायं ज्ञानं समारूढो दृश्यतइति; तान् निराकरोति न चेति[३५] । कारणमाह न हीति । कथं खल्वर्थधर्मः सन् स्वाश्रयं हि वस्त्वन्तरं ज्ञानं प्रविशेदिति। ज्ञानधर्मतया च गृह्यमाणस्य निष्प्रमाणकमर्थधर्मत्वमित्याह इत्थमिति[३६] । मा नामाऽर्थं विहासीदर्थस्थस्यैव प्रतिबिम्बमिदं नीलरूपस्यादर्शसंकाशे ज्ञाने प्रकाशतइत्यतआह तदीयेति। एतस्मादिति। प्रमाणाऽभावादित्यर्थः। एवं हि प्रतिबिम्बता प्रमाणवती भवतीत्याह निश्चन्द्रइति[३७] । खे च

---

* भेदो ऽत्रेति पाठान्तरम् ।

ग्राह्ये वा ऽऽकारवत्ताधीर्येनैवं कल्पना भवेत् ॥३८॥
शब्दगन्धरसानां च कीदृशी प्रतिबिम्बता ।
ज्ञाने च गृह्यमाणस्य कथं स्यादर्थधर्मता ॥३९॥
बाह्याभ्यन्तरदेशत्वान्न चाऽर्थज्ञानयोर्मिथः ।
सम्पर्को ऽस्ति यतो मोहादविवेकमतिर्भवेत् ॥४०॥
असंमूढस्य चाऽदृष्टे न संमोहप्रकल्पना ।
कल्प्यमाने ऽथ वा ऽप्येवं न द्वयोरवतिष्ठते ॥४१॥
संसर्गधर्म आकारस्तस्मादेव न युज्यते ।
देशभेदादसंसर्गो मूर्ताऽमूर्ततया तथा ॥४२॥

---

जले चेत्यर्थः । न त्वेवमर्थो ऽस्तीत्याह शब्देति[३९] ।

न केवलं प्रतिबिम्बत्वमप्रमाणम्, अर्थधर्मत्वमप्यप्रमाणकमित्याह ज्ञाने चेति । मा भूत्प्रतिबिम्बं, ज्ञानार्थौ तु संसृष्टौ संमोहादविविञ्चन्नर्थधर्ममेव नीलं ज्ञाने ऽध्यवस्यतीत्यत आह बाह्येति[४०] । किं च, सर्वस्य जगतः संमोहकल्पनमतिसाहसं, न कश्चिदप्यसंमूढो दृश्यतइत्याह असंमूढस्येति[४१] । तदेवं सत्यपि संमोहकल्पनायां तद्द्वयोरेवावतिष्ठते अर्थसहस्रस्याऽयमाकारः संसर्गात्संमूढानाम् एकवदवभासतइति किं न कल्प्यते इत्याह कल्प्यमानइति ।

केचित्त्वाहुः, न ज्ञानधर्मो नीलादिः, न चार्थस्य निराकारयोः संसृष्टयोराकारो निष्पद्यते, चूर्णहारिद्रयोरिवाऽरुणिमेति; तान् निराकरोति संसर्गेति[४२] । तस्मादित्येतद्विवृणोति देशभेदादिति । किं च, मूर्त्तयोरेव संसर्गादाकारो निष्पद्यते, न मूर्त्ताऽमूर्त्तयोर्नाप्यमूर्त्तयोः, तदिह ज्ञानं तावदमूर्त्तम्, अर्थस्तु यदि मूर्त्तो यदि वा ऽमूर्त्तः द्वेधा

त्रैलोक्येन प्रसङ्गाच्च संसर्गो नैककालता ।
न चाऽप्यार्जवतः स्थानं ज्ञाने नाऽर्थस्य विद्यते ॥४३॥
सर्वथा कल्पनायां च चक्षुषा ऽपि रसादयः ।
गृह्येरन् सर्वभावानामण्वाकाराश्च तद्गताः ॥४४॥
न चाऽपि विषयत्वेन स्थाने संसर्गकल्पना ।
विषयत्वं हि* कीदृक् स्यात् प्रागाकारोपलम्भनात् ॥४५॥
न ह्यसंचेतितो भावो विषयत्वेन कल्प्यते ।
विषयत्वात् तदाकार आकाराद्विषयश्च सः ॥४६॥

---

ऽपि नाऽनयोराकारो निष्पद्यतइत्याह मूर्त्तेति । ननु सत्यपि देशभेदे कालैक्यात्संसर्गो भविष्यतीत्यत आह त्रैलोक्येनेति[४३] । ज्ञानसमयवर्त्तिनां सर्वेषाम् ईदृशसंसर्गसंभवात् सर्वेषामाकारा ज्ञानएकस्मिन्नुपलभ्येरन्निति । यदि ज्ञानाऽऽर्जवेनाऽऽभिमुख्येनाऽर्थस्याऽवस्थानं संसर्गः, तत्राह न चेति । ज्ञानस्य मुखाऽभावादिति ।

किं च, येनैवाऽर्थेन ज्ञानं संसृज्यते तेनैव सर्वात्मना संसर्गं† प्राप्नोति, न हि संसर्गे कश्चिदंशः परिहर्त्तुं शक्यते, ततश्चैकस्मिन् घटादौ भावे चक्षुषा ऽनुभूयमाने तद्गता रसादयः परमाणवश्चाऽनुभूयेरन्नित्याह सर्वथेति[४४] । विषयतया ऽवस्थानमर्थस्य संसर्गो, न चातिप्रसङ्ग इति चेत्, तत्राह न चेति[४५] । कारणमाह विषयत्वमिति । किमिति विषयत्वं न भवत्यत आह न हीति[४६] । एवं चेतरेतराश्रयं

---

* विषयश्चेति १ पु. पा. ।

† संसर्गमिति नास्ति ३ पु. ।

द्वयोराकारनिर्मुक्तं सत्त्वं संसृष्टता तथा ।
स्वरूपतः परिच्छिद्य वक्तुमित्यादि युज्यते ॥४७॥
न चाऽप्यस्येह सद्भावः प्राग् गृहीतो न चोपरि ।
न ह्याकारविनिर्मुक्तं ग्राह्यमस्तीति भाषितम् ॥४८॥
तस्मादर्थेन संसर्गो निष्प्रमाणक एव ते ।
ज्ञानवैचित्र्यसिद्ध्यर्थं न चाऽस्त्यर्थस्य कल्पना ॥४९॥
तदधीनं हि वैचित्र्यं क दृष्टं येन* कल्प्यते ।
निराकारेण चोत्पत्तिर्वैचित्र्याऽऽकारयोः कथम् ॥५०॥

---

स्यादित्याह विषयत्वादिति । विषयत्वरूपादेव हि संसर्गादाकारनिष्पत्तिः, आकारनिष्पत्तौ चोपलभ्यमानलक्षणत्वं विषयत्वं, निराकारोपलम्भाऽभावादतो ऽन्योन्याश्रयमिति। किं चैवं संसर्गधर्मत्वमाकारस्य युक्तमित्याह द्वयोरिति[४७]। न त्वेवमत्राऽस्तीत्याह न चेति[४८]। कथमित्याह न हीति । उपसंहरति तस्मादिति[४९] ।

नन्वसत्यर्थसंसर्गे यदिदं नीलपीतादिरूपेण ज्ञानानां वैचित्र्यं तन्नोपपद्यते, न हि समनन्तरप्रत्ययमात्रादस्योत्पत्तिः संभवति, तस्य सर्वत्राऽविशिष्टत्वात्, अविलक्षणेन च विलक्षणकार्यनिष्पत्त्ययोगात्। एवमालोकेन्द्रियमनःकारणानामपि साधारण्यादेव न वैचित्र्यनिमित्तत्वं, तदिदं नीलरूपमन्येषु हेतुषु सत्स्वपि कदा चिदुत्पद्यमानकारणभूतमर्थसंसर्गं कल्पयत्यत आह ज्ञानेति । कारणमाह तदधीनमिति[५०]। न ह्यर्थसंसर्गकृतं वैचित्र्यं क चिद् दृष्टं, यतस्तद्दर्शनादर्थसंसर्गः कल्प्यतइति। किं च, संसर्गधर्माऽऽकारवादिनां प्राक्संसर्गा-

---

* केनेति का. पु. ।

निराकाराच्च विषयाद्बुद्ध्याकारो ऽतिविस्मयः ।
'स्मृतिस्वप्नादिबोधेन स्यादनाकारता तव ॥५१॥

---

निराकारो ऽर्थो ज्ञानं च, तत्कथं तत्संसर्गादाकारो निष्पद्यते, कथंतरां च तद्वैचित्र्यमित्याह निराकारेणेति । साकाराणामेव चूर्णादीनां संसर्गादाकारनिष्पत्तिर्दृष्टा, सर्वेषां च निराकाराणाम् अविलक्षणत्वात्कथं विचित्राऽऽकारनिष्पत्तिः, अथाऽविलक्षणादपि कारणाद्विलक्षणकार्यनिष्पत्तिरुपेयते, सा समन्तरप्रत्ययादेवाऽस्तु, किमर्थसंसर्गग्रहणेनेति । यदप्याहुः,नाऽयमाकारः संसृष्टयोरुभयोः सर्वदैवाऽर्थो निराकारः, ज्ञानमेव साकारं, स चाकारो ऽर्थसंसर्गकृत इति; तदपि पूर्ववन्निराकर्त्तव्यम् । न हि निराकरणार्थाद्बुद्धावाकारवैचित्र्ययोरापादनं संभवतीत्याह निराकारादिति[११] । संसर्गधर्मत्वे वा ऽऽकारस्याऽयमपरो दोष इत्याह स्मृतीति सार्द्धेन । न ह्यतीतस्मृतावनागताऽनुमाने स्वप्ने कृष्णविषाणाद्यवभासे वा ऽर्थसंसर्गो ऽस्ति, यन्निमित्तोऽयमाकारः स्यात्, अविद्यमानेन संसर्गाऽयोगात्; तदवश्यं वासनापर्यायसमनन्तरप्रत्ययकृतैवेयमाकारतद्वैचित्र्योत्पत्तिरङ्गीकर्त्तव्या; तथा जाग्रद्धियामप्यस्तु, किमर्थसंसर्गेणेति ।

सौत्रान्तिकास्तु, ज्ञानवैचित्र्यसिद्ध्यर्थमर्थमपि नीलपीतादिविचित्राकारमेव कल्पयन्ति न निराकारम्, यदेव चाकारसमर्पणक्षमं हेतुत्वं तदेवाऽर्थस्य ग्राह्यमिति न ग्राह्यलक्षणाऽयोगः । यथा ऽऽहुः—

भिन्नकालं कथं ग्राह्यमिति चेद्ग्राह्यतां विदुः ।
हेतुत्वमेव तद्युक्तं ज्ञानाऽऽकाराऽर्पणक्षमम् ॥ इति ।

नन्वेवं जन्यज्ञानसमये जनकस्याऽर्थस्याऽतीतत्वात् कथं वर्तमानाऽवभासः, ज्ञानाकारो ह्ययं वर्तमानः प्रथते, अर्थस्तु तत्समर्पकतया ऽतीत एव कल्प्यते, अतो न दोषः । कथं पुनः प्रत्यक्षज्ञानेनाऽवभास-

न हि तत्राऽर्थसंसर्गः केवला वासनैव तु ।
हेतुत्वेनोपपन्नेति सैव जाग्रद्धियामपि' ॥५२॥
अन्वयव्यतिरेकाभ्यामेव ज्ञानस्य गम्यते ।
आकारो, न हि बाह्यस्य ज्ञानाऽपेतो निदर्श्यते*॥५३॥
बाह्याऽपेतो मया यद्वत्, तस्मात् संसर्गवागियम् ।
निराकारे ऽपि विज्ञाने वासनास्वेव युज्यते ॥५४॥

---

मानस्य प्रत्यक्षत्वम्, इदमेव प्रत्यक्षत्वमर्थस्य, यत्साक्षात्साकारविज्ञानजननम्, यस्तु परम्परया साकारं विज्ञानं जनयति सो ऽनुमेयः, यथा वन्हिस्वलक्षणं धूमस्वलक्षणं तद्दर्शनतद्विकल्पप्रणाडिकया ऽग्निज्ञानं जनयदनुमेयम्; अत एव प्रत्यक्षमनुमानं च द्वे एव प्रमाणे, साक्षाज्जनकस्य प्रत्यक्षत्वात्, परम्परया जनकस्य चाऽनुमेयत्वात्, अजनकस्य चाऽग्राह्यत्वान्नाऽतो द्वयादन्यत्संभवतीति; तेषामपीदं तुल्यं निराकरणम्, 'तदधीनं हि वैचित्र्यं क्व दृष्ट'मिति, 'स्मृतिस्वप्नादिबोधे च स्यादनाकारता तवे'ति च ।

इतश्च ज्ञानाऽऽकारो नीलादिरित्याह अन्वयेति आकारो[५३]ऽन्तेन। एवंशब्दो युक्त्यन्तरोपन्यासे। तावेव दर्शयति न हीति व[५४]दन्तेन। स्वप्नादावसत्यप्यर्थे ज्ञाऽनान्वयादेवाऽऽकाराऽन्वयो दृश्यते,ज्ञानाऽभावे तु न क्व चिद्दृश्यतइति। उपसंहरति तस्मादिति । स्वभावतः स्वच्छमेव ज्ञानं समनन्तरप्रत्ययाख्यवासनासंसर्गाद् विचित्रनीलपीताद्याकारमुपजायतइति ।

---

* निदृश्यते इति २ पु. पा. ।

द्वयोरप्येक आकार इत्येतस्याऽप्रमाणता* ।
देशभेदादसंसर्गो द्वयोश्चाऽनवधारणात् ॥५५॥
एवमेवाऽर्थबुद्ध्योः स्यात् सादृश्यान्नाऽविभक्तता ।
भेदे ज्ञाते हि सादृश्यं नाऽज्ञाते स्यात् खपुष्पवत् ॥५६॥
तथा द्विचन्द्रमायादावन्यथाऽर्थे व्यवस्थिते ।
या स्यादाकारसंवित्तिर्नाऽसावर्थनिबन्धना ॥५७॥
नक्षत्रं तारका तिष्यो दारा इत्येवमादिषु ।
नैकत्राऽर्थे विरुद्धत्वाल्लिङ्गाऽनेकत्वसम्भवः ॥५८॥

---

अपरे त्वाहुः, एक एवाऽयमाकारः द्वाभ्यामर्थज्ञानाभ्यां साधारण्येनाऽनुभूयते लाक्षासंनिहितेनेव मणिद्वयेन लाक्षारूपमिति; तत्राह द्वयोरिति[55] । कारणमाह देशभेदादिति । आन्तरं हि ज्ञानमतिदूरे चाऽर्थः, कथमाभ्यामसंसृष्टाभ्यामसंनिहिताभ्यामेकस्याऽनुभव इति । द्वयसद्भावस्य चाऽसिद्धत्वान्नाऽऽकारसाधारण्यमित्याह- द्वयोरिति ।

ये त्वाहुः, द्वावपि ज्ञानाऽर्थौ पृथगेवाऽऽकारवन्तौ, तथापि त्वत्यन्तसादृश्यादाकारविवेको नाऽवभासत इति; तान् प्रत्याह एवमिति[56]। 'सादृश्यादविभक्तते'त्येतदप्येवमेव, द्वयोरनवधारणादेव नया† दिति। एतदेव विवृणोति भेदे इति । इतश्च ज्ञानाऽऽकारत्वमित्याह तथेति[57] । सर्वेष्वेव विभ्रमेष्वसत्येवाऽर्थे भासमानो नीलादिः कथमर्थधर्मः स्यादिति। इतश्चैवमित्याह नक्षत्रमिति[58] । अर्थध-

---

* इत्येतच्चाऽप्रमाणकम् इति २ पु. पा. ।

† न यायादिति २ पु. पा. । एव न स्यादिति ३ पु. पा. ।

परिव्राट्कामुकशुनां कुणपादिमतिस्तथा ।
'दीर्घह्रस्वत्वबुद्धिश्च ह्येकस्मिन्नप्यपेक्षया ॥५९॥
घटत्वात् पार्थिवद्रव्यसंज्ञेयादि*मतिस्तथा ।
युगपद्ग्राहकाणाञ्च न स्यादैकात्म्यवत्तया'† ॥६०॥

---

भेत्वे हि तस्यैकत्वान्न विरुद्धलिङ्गसमावेशो घटतइति । यच्चेदमेक-स्यामेव प्रमदातनौ परिव्राजकादीनां कुणपं कामिनी, भक्ष्य, इति व्यव-स्थितोपजनं विकल्पत्रयं तदपि न स्यात्, बाह्यार्थो यद्येकाकारः तथैव सर्वैः प्रत्येतव्यः, अथ त्र्याकारः, तत्र त्रयाणामपि विकल्पत्रयं स्यात्, तदवश्यमात्मीयवासनानिर्मितैवैषा विकल्पव्यवस्था ऽऽश्रयितव्या । तथा सर्वत्राऽस्त्वित्याह परिव्राडिति[५९] । इतश्च नाऽर्थाकार इत्याह दीर्घेति सार्द्धेन । अपेक्षाभेदादविरोधं ब्रुवाणस्योत्तरमप्यपेक्षयेति । सत्यप्यपेक्षाभेदे धर्मिण एकत्वान्नाऽनेकाऽऽकारसमावेशः संभवति, एकात्मकत्वादेकात्मकमेव ह्येकम्, अन्यथैकत्वहानान्नानात्वैकत्वयो-र्विरोधात् । यथा ऽऽहुः—

अन्यथैकत्वभावः स्याज्ज्ञानाऽऽकाराऽवभासिनः ।
सत्त्वे कथं स्युराकारास्तथैकत्वस्य हानितः ॥ इति ।

तेन युगपद्ग्राहकाणां पुरुषाणां नैकत्र दीर्घह्रस्ववृत्तत्वाद्यनेकाका-रमतिः स्यात्, नानाकारत्वे च सर्वेषां सर्वप्रतीतिः स्यात्; न च देश-कालापेक्षोद्भववशात्प्रभारूपस्पर्शयोरिव नक्तंदिवं ग्रहणाऽग्रहणव्यव-स्था संभवति, युगपद् ग्राहकाणामेव कस्य चित् किं चिदाकाराऽवभा-

---

* घटत्वपार्थिवद्रव्यप्रमेयादीति २ पु. पा. ।
† एकार्थवत्तयेति २ पु. पा. ।

नाऽर्थे ह्येकत्र युगपद्विरुद्धाकारसम्भवः ।
प्रत्ययानां तु भिन्नत्वाद्भवेच्छक्त्यनुसारतः ॥६१॥
निरपेक्षं स्वरूपेण तस्माज् ज्ञानं यदाकृति ।
तथाऽर्थो न यथार्थं तु ज्ञानमुत्पद्यते क्वचित् ॥६२॥
इत्थं विज्ञानतन्त्रत्वे को न्वर्थं कल्पयिष्यति ।
धीरनारोपिताऽऽकारा स्वात्मन्येवोपयोक्ष्यते ॥६३॥
नैतदस्ति, त्वयैकं हि ग्राह्यं ग्राहकमिष्यते ।
न चैकस्यैवमात्मत्वे दृष्टान्तः कश्चिदस्ति ते ॥६४॥

---

सादिति । ह्रस्वादीनां तु विरोधादप्यसमावेश इति आह नार्थइति[61]। मत्पक्षे तु भिन्नाः प्रत्ययाः, युक्तं यद्वासनाशक्त्यनुसारेण विरुद्धान-विरुद्धांश्च बहूनाकारान् भजन्तइत्याह प्रत्ययानामिति । तस्माद-र्थोऽनपेक्षमेव यादृशं नीलाऽऽकारं पीताकारं वा ज्ञानमुत्पन्नं यदि तद-नुसारेणाऽर्थोऽभ्युपगन्तुं शक्यते, ततोऽस्तु नाम न त्वर्थोऽनुसारि ज्ञानं नीलाद्याकारत्वं ज्ञानस्य नार्थोऽधीनमिति यावत् । तदाह निरपेक्ष-मिति[62] । भवतु तर्हि तदनुसार्येवाऽर्थः, अत आह इत्थमिति[63] । नीलाद्याकारे ह्यर्थाऽधीने स्यादर्थसिद्धिः, स्वतन्त्रे तु ज्ञाने को नामाऽर्थं कल्पयेदर्थोऽनारोपिताऽऽकारैव धीरद्वितीयाऽर्थशून्या स्वात्मन्येव पर्यवस्यतीति ।

अत्र प्रतिविधत्ते नैतदस्तीति[64] । यदेतद्भवतोक्तम्, एकमेव ज्ञानं ग्राह्यं ग्राहकं चेति, तत्किं क्रियाकर्मत्वाभिप्रायम्, उत करणकर्म-त्वाऽभिप्रायम्, आहो स्वित् कर्तृकर्मत्वाभिप्रायम्; सर्वथा न संभवति; न तावत्क्रियाया एव कर्मत्वं संभवति, न हि पाकः पच्यते, छिदा वा

अग्न्यादयो घटादीनां प्रसिद्धा ये प्रकाशकाः ।
न ते प्रकाश्यरूपा हि प्रकाशस्याऽनपेक्षणात् ॥६५॥
ग्राह्यत्वं तु यदा तेषां तदा ऽक्षं ग्राहकं मतम् ।
अक्षग्रहणकाले तु ग्राहिका धीर्भविष्यति ॥६६॥
तस्यां तु गृह्यमाणायामन्या धीर्ग्राहिकेष्यते ।
नन्वात्मा ग्राहको ग्राह्यो भवता ऽभ्युपगम्यते ॥६७॥

---

छिद्यते; नापि करणकर्मत्वं कर्तृकर्मत्वं वा एकस्य संभवति, न ह्य-ङ्गुल्यग्रेणैवाऽङ्गुल्यग्रं स्पृश्यते, नाऽप्यङ्गुल्यग्रमात्मानं स्पृशति,तेनाऽऽसां विधानां दृष्टान्ते क्वचिदप्यदर्शनाज् ज्ञाने ऽपि नास्ति संभवः। अथ प्रकाशत्वमनेन प्रकारेणोच्यते, ज्ञानं हि स्वयमेव प्रकाशते नाऽन्यमपेक्षतइति न पुनः कर्मत्वमपीति; कस्य प्रकाशते, न तावदन्यः पुमानस्ति, तत्र स्वयमेव प्रकाशमानमहं नीलमिति प्रत्यगात्मवृत्ति स्यात्, इदं नीलमिति तु पराग्वृत्ति ज्ञानमुत्पद्यते; अतो नैकस्य ग्राह्यग्राहकतेति।

ननु अग्न्यादीनां स्वयमेव प्रकाश्यप्रकाशकता दृष्टा, ऽत आह अग्न्यादय इति[६५] स्याऽन्तेन। ये ऽग्न्यादयः प्रकाशकाः प्रसिद्धाः, ते घटादीनां न प्रकाशात्मनः स्वरूपस्य प्रकाशकाः, न प्रकाश्या इत्यर्थः। कथमित्याह अनपेक्षणादिति। यद् घटादीनामेवाऽऽलोकापेक्षा नालोकस्येति। केन तर्हि ते गृह्यन्ते, ऽत आह ग्राह्यत्वमिति[६६]। तस्य तर्हि केन ग्रहणम्, अत आह अक्षेति। अर्थापत्तिरूपा अनुमानरूपा वा धीस्तस्य ग्राहिकेति।तस्य तर्हि केन ग्रहणम्, अत आह तस्यामिति[६७]। सा ऽपि ह्यर्थापत्त्या ऽनुमानेन वा गृह्यते, यथा वक्ष्यति 'नाऽन्यथा ह्यर्थसद्भाव' इति। भाष्यकारो ऽपि ज्ञाने "त्वनुमाना-

कथं चिद्धर्मरूपेण भिन्नत्वात् प्रत्ययस्य तत्।
ग्राहकत्वं भवेत्तत्र ग्राह्यं द्रव्यादि चात्मनः ॥६८॥
यस्तु नाऽत्यन्तभेदो ऽत्र क्व वा ऽसाविष्यते मया।
प्रत्यासत्तिनिमित्ता तु प्रत्यगात्मप्रवर्त्तिता* ॥६९॥
अस्मत्प्रयोगसम्भिन्ना ज्ञानस्यैव तु कर्तरि।
भवन्ती तत्र संवित्तिर्युज्येताऽप्यात्मकर्तृका ॥७०॥

---

दवगच्छती"†ति। चोदयति नन्विति। कर्तृकर्मत्वं भवता ऽप्येकस्याऽभ्युपगतमिति परिहरति कथं चिदिति[६८]। ज्ञानस्य ज्ञेयान्न कथं चिद्भेदो ऽस्ति तव, मम तु स्वरूपेणैको ऽप्यात्मा धर्मरूपेण कथं चिद्भिन्नः, तदस्य ज्ञानरूपेण ग्राहकत्वं द्रव्यादिरूपेण ग्राह्यत्वमिति न ग्राह्यग्राहकयोरेकत्वमिति।

नन्वेवमप्यत्यन्तभेदो ग्राह्यग्राहकयोर्न स्याद्धर्मिरूपस्यैकत्वादत आह यस्त्विति[६९]। न क्व चिदप्यत्यन्तभेदो ऽस्ति, सर्वत्र प्रमेयत्वाद्यभेदादिति। यद्यत्रापि ग्राह्यग्राहकयोर्भेदः, कथं तर्ह्यात्मवादे भाष्यकारेण "प्रत्यगात्मनि चैतद्भवती"‡ति प्रत्यग्वृत्तित्वमहंप्रत्ययस्योक्तम, अत आह प्रत्यासत्तीति। न हि ज्ञानमात्रं ग्राहकं, किं तु तद्विशिष्टो धर्मी, स एवाहंबुद्ध्या द्रव्यादिरूपेण गृह्यते न द्रव्यादिमात्रम; तेनोपाधिभेदे ऽप्युपहितस्य कर्त्तुः कर्मणश्च प्रत्यासत्तेरेकत्वाद् युक्तं प्रत्यगात्मवृत्तित्वं, भेदश्च कियानप्यस्ति न सर्वात्मनैकत्वमिति। यद्यपि सर्वात्मनैक्यं तथापि न दोष इत्याह अस्मत्प्रयोगेति[७०]। अस्मत्प्र-

---

* प्रवृत्तितेति २ पु. पा.।

† शा. भा. पृ. ९ प. २०।

‡ शा. भा. पृ. २१ प. १०।

न चाऽत्र करणज्ञानग्राहकाऽऽकारवेदनम् ।
ग्राह्यत्वं येन बुद्धेः स्यादभिन्नत्वे ऽपि पूर्ववत् ॥७१॥
अन्यरूपा ऽपि संवित्तिर्यद्यन्यविषयेष्यते ।
ज्ञानाकारा ऽपि संवित्तिः कस्मान्नाऽर्थस्य* कल्प्यते ॥७२॥
अभिन्नत्वं यदा चेष्टं ग्राह्यग्राहकवस्तुनोः ।
तदा ऽन्यतरसंवित्तौ द्व्याकारं ग्रहणं भवेत् ॥७३॥

---

योगसंभिन्ना ऽहमिति संवित् स्वयमात्मकर्तृका ऽपि सती ज्ञानकर्तर्यात्मन्येव भवतीति तत्र युज्यते प्रतिभासबलादस्मदर्थ एव हि ज्ञाता तत्र प्रतिभासते नान्य इति ।

ज्ञानस्य तु नाऽवभासो ऽस्तीत्याह **न चेति**[७१] । ज्ञानं हि करणं, क्रिया, कर्ता वा, न च नीलमित्यत्र त्रयाणामन्यतमदपि प्रकाशते, ग्राह्यरूपस्य नीलमात्रस्य वेदनात्, अतो न पूर्ववदात्मज्ञानस्य ग्राह्यत्वम्, ज्ञानशब्देन च क्रियारूपमुच्यते इति । यदि तु ग्राह्यमात्राऽवभासा ऽपि संवित्तिर्ज्ञानगोचरेत्युच्यते ततो यथेष्टकल्पनायां ज्ञानाभासा ऽप्यर्थगोचरा शक्या कल्पयितुमित्याह **अन्येति**[७२]। यदा च ग्राह्यमात्रमेव भासते न क्रिया कर्ता वा तदा ये सर्ववित्तिषु त्रितयप्रतिभासमाहुः ते निरस्ताः । यस्तु नीलमहं जानामीति प्रतिभासः स नीले ज्ञाते पश्चादानुमानिकः, न तु नीलवित्तिरेवैवंविधेति विभ्रमितव्यम्; एवं च सहोपलम्भस्यैवाऽभावात्तन्नियमो दुरुपपादः। 'सहोपलम्भनियमादभेदो नीलतद्धियो'रित्येतदपि परोक्तं निरस्तम् । तस्माद्भिन्नमेव ग्राह्यं ग्राहकादिति । इतश्चैवमित्याह **अभिन्नत्वमिति**[७३] । न त्वेतदस्तीति व्यतिरेकेण दर्शयन् ग्राह्यसंवित्तौ तावद्ग्रा-

---

* अर्थेष्विति २ पु. पा. ।

यदा तु ग्राह्यमाकारं नीलादि प्रतिपद्यते ।
न तदा ग्राहकाऽऽकारा संवित्तिर्दृश्यते क चित् ॥७४॥
तस्मादभिन्नता चेत् स्यात् तस्याऽप्यनुभवो भवेत् ।
ग्राह्यो वा नाऽनुभूयेत ग्राहकाऽननुभूतिवत् ॥७५॥
ग्राहकग्रहणे ऽप्येवं ग्राह्यसंवेदनं भवेत् ।
शुद्धमेव निराकारं ग्राहकं संविदस्ति हि ॥७६॥
ग्राह्यादभिन्नतायां च सा संवित्तिर्न युज्यते ।
ग्राहको वा न गृह्येत तद्ग्राह्याऽननुभूतिवत् ॥७७॥
यथावद् ग्राह्यसंवित्तौ ग्राहकग्रहणे ऽपि वा ।
ग्राह्यग्राहकसंवित्तिर्नास्त्येव स्याद् द्वयोरपि ॥७८॥
स बहिर्देशसंबद्ध इत्यनेन निरूप्यते ।
ग्राह्याऽऽकारस्य संवित्तिर्ग्राहकाऽनुभवादृते ॥७९॥

---

हकसंवित्तिर्नास्तीत्याह यदा त्विति[७४] । ग्राहकादभिन्नत्वे च ग्राह्यस्य तदनुभववेलायां ग्राहको ऽप्यनुभूयेत, तद्वदेव वा ग्राह्यो ऽपि नानुभूयेत, न ह्येकस्य युगपद्ग्रहणमग्रहणं च संभवतीत्याह तस्मादिति[७५]। एवं ग्राहकसंवित्तावपि ग्राह्यसंवित्तिः स्यान्न तु तथाप्यस्तीत्याह ग्राहकेति[७६] । ग्राह्यादभिन्नत्वे च तद्रहिता संवित्तिर्न स्यात्, ग्राह्यमपि संवेद्येत, तद्वदेव वा ग्राहको ऽपि न संवेद्येतेत्याह ग्राह्यादिति[७७]। एवं प्रत्येकमेकाऽग्रहणे परस्याऽप्यग्रहणमापाद्य द्वयोरपि समाहृत्य दर्शयति यथेति। उक्ते ऽर्थे भाष्यं*योजयति स बहिर्देशेति[७९]।

---

* शा. भा. पृ. ९ प. १९ ।

परं प्रति न साध्यत्वादर्थस्याऽऽकारसिद्धये ।
बहिर्देशेन सम्बन्धो न हेतुत्वाय कल्पते ॥८०॥
तस्माद्बहिरितीहेदं निष्कृष्टं ग्राहकांशतः ।
संवेद्यं नीलपीतादि* प्रत्यक्षादेरुदाहृतम् ॥८१॥
न पूर्वं ज्ञायते बुद्धिरित्यत्रैतद्वदिष्यते ।
ग्राहकस्यैव संवित्तिर्लक्ष्यते ग्रहणे क्व चित् ॥८२॥
न स्मरामि मया को ऽपि गृहीतो ऽर्थस्तदेति हि ।
स्मरन्ति ग्राहकोत्पादग्राह्यरूपविवर्जितम् ॥८३॥

---

केचित्त्वर्थाकारत्वे नीलादेर्बहिर्देशसंबन्धित्वं हेतुरुच्यतइति व्याचक्षते, बहिर्देशसंबद्धो ह्याकारः कथमान्तरस्य ज्ञानस्य स्यादिति; तत्तु न युक्तमित्याह परं प्रतीति[८०] । न बहिर्देशस्तत्संबन्धो वा परस्य सिद्धः कथमसौ हेतुरिति । तस्मात्पूर्वोक्त एव भाष्यार्थ इत्याह तस्मादिति[८१] ।

बहिरित्यत्र भाष्ये इदमित्येवम् इदंकारेण ग्राहकान्निष्कृष्टमेव प्रत्यक्षादेः प्रमाणस्य ग्राह्यं नीलपीताद्युदाहृतम् । अयं च भाष्यार्थः । स एव हि नीलाद्याकारो बहिर्देशसंबद्धो ग्राहकान्निष्कृष्टः प्रतीयते न बुद्धिरिति । ग्राह्यनिर्मुक्तस्य ग्राहकस्य संवित्तिः "सत्यं, पूर्वं बुद्धिरुत्पद्यते न तु पूर्वं ज्ञायते, भवति हि कदा चिदेतत् यज् ज्ञातो ऽप्यर्थः सन्न ज्ञात इति उच्यत"†इत्यत्र भाष्ये वक्ष्यते इत्याह न सर्वमिति[८२] । क्व लक्ष्यते ऽत आह न स्मरामीति[८३] । ज्ञातो मया वसन्ते ऽस्मिन् देशे को ऽपि पुरुषः संप्रति विस्मृतवानस्मीति पूर्वज्ञाऽग्राह्ये देवदत्ते स्मृतावप्रतिभासमाने ऽपि तद्गोचरं ज्ञानं प्रतिभासत-

---

* नीलमित्यादीति २ पु. पा. । † शा. भा. पृ. ९ प. २२ ।

तस्मादभिन्नतायां च ग्राह्ये ऽपि स्मरणं भवेत् ।
ग्राहकस्मृतिनिर्भासात् तत्राऽप्येषैव गृह्यते ॥८४॥
तदत्यन्ताऽविनाभावान्नैकाऽऽकारं हि जायते ।
अन्वयव्यतिरेकाभ्यां सिद्धैवं भिन्नता तयोः ॥८५॥
ग्राह्यांशो ग्राहकांशेन गृह्यते ग्राहकः पुनः ।
गृह्येतेति न वक्तव्यं ग्राहकान्तरवर्जनात् ॥८६॥
ग्राह्यांशेनाऽप्यशक्तत्वान्न तस्य ग्रहणं भवेत्* ।
ग्राहकत्वेन चैतस्य हीयेतैव द्विरूपता ॥८७॥

---

इति । ग्राहकादभिन्नत्वे च ग्राह्यस्य तत्रापि स्मरणं स्यादित्याह तस्मादिति[८४] । न तु भवतीत्याह ग्राहकेति । एषैव ग्राहकस्मृतिरेव दृश्यते ग्राहकस्यैव स्मृतौ निर्भासादिति । तेन ग्राहकेण ग्राह्यस्याऽत्यन्ताऽविनाभावान्न स्मरणमेकाऽऽकारं जायेतेत्याह तदत्यन्तेति[८५] । तदेवमेकस्य ग्रहणाऽन्वये ऽप्यन्यस्य व्यतिरेकात् सिद्धं भिन्नत्वमिति । उपसंहरति अन्वयेति ।

चोदयति ग्राह्यांश इति[८६] । यदुक्तमेकस्य ग्रहणे परस्यापि ग्रहणं स्यादिति, तदयुक्तम, ग्राह्यांशो हि ग्राहकांशेन गृह्यते ग्राहकस्य तु न ग्राहकान्तरमस्तीति कथं गृह्येतेति । ग्राह्यांशेन तस्य ग्रहणमिति चेन्न, तस्य ग्राह्यभावस्य ग्राहकशक्त्यभावादित्याह ग्राह्यांशेनेति[८७] । तस्य च ग्राहकत्वे ग्राहकमात्ररूपत्वाज् ज्ञानस्य द्वैरू-

---

* ग्राहकस्मृतीत्याद्येतत्पर्यन्तमर्द्धपट्कं त्रुटितं १ पु. ।

ग्राहके गृह्यमाणे च ग्राह्यमात्रप्रसञ्जनम् ।
न स्यादाकार एकश्चेदितरस्यापि नास्तिता ॥८८॥
उद्भवाऽभिभवाभ्यां च ग्राह्याऽग्राह्यत्वदर्शनम् ।
यथा दीपप्रभादीनां रूपमात्रोपलम्भनम् ॥८९॥
दिवा चाऽग्नेः समीपस्थैः स्पर्श एवोपलभ्यते ।
गन्धवद्द्रव्यवृत्तौ च गन्धस्यैवोपलम्भनम् ॥९०॥
न गुणान्तरसंवित्तिर्यथा ऽत्राभिभवात्तथा ।
नाऽऽकारान्तरसंवित्तिर्ग्राह्यग्राहकबुद्धिषु ॥९१॥
ग्राह्यादनन्यभूतो ऽपि कश्चिन्नैवोपलभ्यते ।
नित्याऽनित्यादयो धर्माः शब्दादिग्रहणे यथा ॥९२॥

---

प्यहानिरित्याह ग्राहकत्वेनेति । एवं ग्राहकस्यापि ग्राह्यत्वे ग्राह्यमात्रतया द्वैरूप्यहानिरेवेत्याह ग्राहकइति[८८] ।

भवतु तर्ह्यैकरूप्यमेवेति चेत्, तत्राह न स्यादिति । ग्राह्यग्राहकयोरितरेतराऽपेक्षत्वादन्यतराभावे ऽन्यतरदपि न स्यात्, ततश्च निःस्वभावकत्वाज् ज्ञानस्यैवाऽभावः स्यादिति । उद्भवाऽभिभववशेन चोपपन्नमेकस्य ग्रहणम् इतरस्य चाऽग्रहणं, तथा लोके दर्शनादित्याह उद्भवेति[८९] । क्व इत्थमित्याह यथेति । प्रभारूपस्पर्शयोर्हि व्यवस्थितं रात्रिन्दिवमुपलम्भनम् । उदाहरणान्तरमाह गन्धवदि[९०] त्यभिभवा[९१]दन्तेन । प्रकृते योजयति तथेति ।

ननु रूपादीनां भेदादुद्भवाऽभिभवौ युक्तौ, ग्राह्यग्राहकयोः कथमत आह ग्राह्यादिति[९२] । न हि रूपादिवन्नित्यत्वादीनां धर्मिणो भेदः, अथ च तद्ग्रहणे ऽप्यग्रहणमिति । किं चाऽभेदस्याऽभ्युपगमे-

अभेदं वा ऽभ्युपेत्याऽयं प्रसङ्गो यदि गीयते।
एकस्मिन् गृह्यमाणेंशे न गृह्येताऽपरः कथम् ॥९३॥
तस्माद्यत् स्याद्यदा योग्यं तस्यैव ग्रहणं तदा।
द्वयं च त्वदुपन्यस्तं शक्त्यभावान्न गृह्यते ॥९४॥
कुतो ऽयमेकवस्तुत्वे योग्याऽयोग्यत्वसम्भवः।
उद्भवाऽभिभवात्मत्वं कथं चैकस्य कल्पितम् ॥९५॥
एकांशाऽभिभवे च स्यादितराऽभिभवो ऽपि ते।
तथा तस्याऽभिभूतत्वाद् ग्राह्यत्वं न च युज्यते ॥९६॥
अयोग्यता विकल्प्यैवं दृष्टान्ता ये ऽत्र कीर्तिताः।
रूपादिभेदात्तत्र स्यादुद्भवाऽभिभवाद्यपि ॥९७॥

---

नेदं प्रसङ्गाऽऽपादानम्, अभेदे च सत्येकस्मिन् गृह्यमाणे ऽपरो ऽपि गृह्यतएव, कथमग्रहणमुच्यतइत्याह अभेदमिति[९३]। पूर्वमपरस्याऽग्रहणमुपपादितं, तदुपसंहरति तस्मादिति[९४]। यद्भूतं यस्य वा ग्राहकसद्भावः तद्योग्यम्, इतरदयोग्यमिति। यदपि समुच्चित्योक्तम्, एकस्य ग्रहणाऽग्रहणे वा द्वयोरपि तथा स्यादिति, तदपि शक्त्यभावादेव न प्रसज्यतइत्याह द्वयमिति। परिहरति कुत इति[९५]। न ह्येकस्य युगपद्योग्याऽयोग्यत्वमुद्भवाऽभिभवात्मकत्वं वा सम्भवति, विरुद्धधर्माऽध्यासेन भेदापत्तेरिति। एवं चैकाऽभिभवे परस्याऽप्यभिभवादग्रहणं स्यादित्याह एकांशेति[९६]। एवमयोग्यता ऽपि विकल्पनीया स्यात्, यद्येकस्यैव तदा न सम्भवति अभेदात्, अयोग्यत्वे न कश्चिद् गृह्येतेत्याह अयोग्यतेति[९७]। रूपादीनां तु भेदादुपपन्नैवोद्भवाऽभिभवव्यवस्थेत्याह दृष्टान्ता इति।

यदा ऽप्येकान्ततो भेदो रूपादेर्न परस्परम् ।
तदा ऽपि द्रव्यरूपस्य परिणामस्तथा तथा ॥९८॥
'अभिन्नत्वे ऽपि न ग्राह्यमिति यच्चाऽब्रवीद्भवान् ।
कृतकत्वादिधर्माणां धीभेदे ऽनन्यथा कथम् ॥९९॥
न ह्यन्यत्प्रत्ययादस्ति भिन्नाद् ग्राह्यस्य भेदकम्' ।
न चेयत्तैव भेदस्य देशतो मूर्तितो ऽपि वा ॥१००॥
कारणानां हि सम्बन्धः कार्यैः कृतकतोच्यते ।
विभागो ऽवयवानां च भवेत् क्वचिदनित्यता ॥१०१॥

---

कथं पुना रूपादीनां द्रव्यादेकस्मादभिन्नानां मिथो भेदो, ऽत आह यदा ऽपीति[९८] । यद्यपि द्रव्यस्यैकत्वात्तदभिन्नानां रूपादीनामपि तेनाऽऽत्मनैकत्वान्नैकान्तभेदः, तथाप्यस्त्यव स्वरूपतो भेदः, द्रव्यमपि तत्तद्रूपादिपरिणामभेदेन भिन्नमेवेति ।

यच्च शब्दादिग्रहणे तदभिन्नानामपि नित्यत्वादीनामग्रहणमित्युक्तं, तदनुभाष्य परिहरति अभिन्नत्वे ऽपीति[९९] सार्द्धेन । तेषामप्यस्त्येव भेदः, बुद्धिभेदात्, न हि बुद्धिभेदादन्यदस्ति भेदे प्रमाणमिति। नन्वसति देशभेदे परिमाणभेदे वा कथं भेदो, ऽत आह न चेति[१००]। न हि मूर्त्तिदेशभेदनिबन्धन एव भेद इत्येवमियत्ता ऽस्ति, तदभावे ऽपि प्रमाणबलादुपपत्तेरिति । कीदृशं पुनः शब्दादिव्यतिरिक्तं कृतकत्वादीनां रूपं यद्बुद्धिभेदाद्भिन्नमित्युच्यते, तद्दर्शयति कारणानामिति[१०१]। नाशित्वात्मकमनित्यत्वं साऽवयवानामवयवविश्लेषात्मकं तदुपलक्षितः प्रध्वंसाभाव इत्यर्थः । निरवयवानां तु बुद्ध्यादीनां धर्मिणः स्वरूपमात्रेणाऽवस्थानं बुद्धिविरहस्तत्प्रध्वंसाभाव इति यावत् ।

बुद्ध्यादेरात्मरूपादिस्थानं नाशित्वमुच्यते ।
नित्यत्वं सर्वदा सत्ता वस्तुत्वं सैव कीर्त्यते ॥१०२॥
प्रमाणज्ञानसम्बन्धः प्रमेयज्ञेयतोच्यते ।
सर्वत्र चाऽत्र भिन्नत्वमस्ति केन चिदात्मना ॥१०३॥
तस्माद्यथैव रूपादेर्देशभेदादिभिर्विना ।
बुद्धिभेदेन भेदो ऽस्ति तथैवाऽत्र प्रतीयताम् ॥१०४॥
अत्यन्तभिन्नता ऽस्माभिर्नैव कस्य चिदिष्यते ।
सर्वं हि वस्तुरूपेण भिद्यते न परस्परम् ॥१०५॥
सर्वं च कृतकत्वादि क्रियाहेत्वाद्यपेक्षया ।
गृह्यते तदसंवित्तावभेदे ऽपि न गृह्यते ॥१०६॥

---

तदाह विभाग इति । नित्यत्वं दर्शयति नित्यत्वमिति[१०२] । उत्पत्तिविनाशरहितत्वे सति सत्त्वं सर्वदा सत्त्वं, न पुनः सर्वकाल-संबन्धः, कालस्य तदभावप्रसङ्गादिति । वस्तुत्वं दर्शयति वस्तुत्व-मिति । सैवेति । सर्वदेति विशेषणरहिता सत्त्येत्यर्थः । प्रमेयत्वं ज्ञेयत्वं च दर्शयति प्रमाणेति[१०३] । ज्ञेयत्वाऽवान्तरसामान्यं प्रमेय-त्वमिति । सर्वेषु च कृतकत्वादिष्वस्ति केन चिदात्मना शब्दादिभ्यो भेद इत्याह सर्वत्रेति । उपसंहरति तस्मादिति[१०४] । नन्वेवमत्य-न्तभेदाऽभावादभेदो ऽप्यस्तीति अभिन्नत्वे ऽपि सिद्धमुद्भवादिकमत आह अत्यन्तेति[१०५] । कथमित्याह सर्वं हीति । तेन कथं चि-द्भेदवतोरेव सर्वत्रोद्भवाऽभिभवव्यवस्थानमिति ।

किं पुनः कारणं शब्दाऽभिन्नस्यापि कृतकत्वादेः, यतस्तद्ग्रहणे ऽप्यग्रहणमत आह सर्वं चेति[१०६] । ज्ञाने तु ग्राह्यग्राहकयोः कथं

ज्ञाने नैवंविधो भेदो नाऽपेक्षा ऽन्यत्र विद्यते ।
परस्परेण चाऽपेक्षा स्याच्चेत् सन्निहितश्च सः ॥१०७॥
ननु ग्राहकमित्येवं ग्राह्यमित्यपि वा मतिः ।
नीलादिग्रहणे नाऽस्तीत्यपेक्षा कथमुच्यते ॥१०८॥
मा भूदेवं तथाऽप्यत्र द्व्याकारं ग्रहणं भवेत् ।
एवं चाऽगृह्यमाणे वा ज्ञाने द्व्याकारता कथम् ॥१०९॥

---

चिदपि भेदो नास्ति, न चाऽपेक्षणीयं किंचिदतो ऽवश्यमेकग्रहणे परस्यापि तत्स्यादित्याह ज्ञाने इति[१०७] । शङ्कते परस्परेणेति । ग्राह्यं हि ग्राहकाऽपेक्षं, तच्च ग्राह्याऽपेक्षमिति । परिहरति संनिहित-इति । चोदयति नन्विति[१०८] ।

यदुक्तं संनिहितइति, तदयुक्तं, बुद्धिस्थितिर्हि संनिधानं, न च नीलादिग्रहणे ग्राहकमिति ग्राह्यमिति वा बुद्धिरस्ति, अतः कथं तयोः संनिधानम् 'अपेक्षा कथमुच्यत' इति अपेक्षाऽङ्गीकरणमयुक्तं, तद-ङ्गीकरणे च परिहाराऽसंभव इत्यर्थः । परिहरति मा भूदिति[१०९] । यद्यपि ग्राह्यं ग्राहकमिति वा न गृह्यते तथापि तावत्स्वरूपेण ग्राह्यं गृहीतं, तावता चाऽपेक्षणीयलाभादितरो ऽपि ग्रहीतव्यः, तथा ग्राहके ऽपि गृहीते तल्लाभाद्ग्राह्यो ऽपि गृहीतव्य इति । किं च, यदि ग्राह्यं ग्राहक-मिति च गृह्यते, ततो ऽस्य द्व्याकारत्वे किं प्रमाणम्, न तु ज्ञानान्तरं, तस्यापि स्वांशपर्यवसानादित्याह एवमिति ।

एवमेकग्रहणे ऽपरस्यापि ग्रहणप्रसङ्गे अहिते परः पुनराह, अस्त्येव साध्याऽऽकारा संवित्तिः, उत्पद्यमानमेव हि ज्ञानं ग्राह्याऽऽकारेण घटा-दिना ग्राहकाऽऽकारेण च ज्ञानरूपेण प्रकाशते, उत्तरोत्तरज्ञानविशेषा-

उत्तरोत्तरविज्ञानविशेषाद्या प्रकल्प्यते ।
ग्राहकाऽऽकारसंवित्तिः स्मरणाच्चाऽऽनुमानिकी ॥११०॥
'एकाऽऽकारं किल ज्ञानं प्रथमं यदि कल्प्यते ।
ततस्तद्विषया ऽप्यन्या तद्रूपैव मतिर्भवेत् ॥१११॥
घटविज्ञानतज्ज्ञानविशेषो ऽतो न सिध्यति' ।
ग्राहकाऽऽकारसंवित्तौ त्वाकारप्रचयो भवेत् ॥११२॥
जायते* पूर्वविज्ञानं द्व्याकारं यत्र तत्पुनः ।
तस्याऽऽत्मीयश्च पूर्वौ च विषयस्थावुपप्लुतौ ॥११३॥

---

दुत्तरकाले चोभयत्र स्मृतिदर्शनात्, स्वयं प्रकाशस्तस्याऽनुमीयते । तथा ऽऽहुः—

घटाविज्ञानतज्ज्ञानविशेषाच्चु द्विरूपता ।
स्मृतेरुत्तरकालं च न ह्यसाववविभावितः ॥ इति ।

तद् दूषयितुमुपन्यस्यति उत्तरोत्तरेति[११०]।'उत्तरोत्तरविज्ञानवि-शेषा'दित्येतद्विवृणोति एकाऽऽकारमिति[१११] सार्द्धेन ।

यदि घटज्ञानं घटविषयं केवलं विषयाऽऽकारं स्यात्ततस्तस्य घ-टाकारत्वात्तद्विषयमपि द्वितीयज्ञानं केवलविषयाकारं घटाकारमेव स्यात्, एवं तृतीयादिकमपीति नोत्तरोत्तरविज्ञानविशेषः स्यात्, एवं केवलग्राहकाकारत्वे ऽपि सर्वेषां संवित्मात्ररूपत्वादविशेष एवेति। यदा तु प्रथमज्ञानं ग्राह्यग्राहकोभयरूपं तदा ऽऽकारप्रचयात् सिध्यति विशेष इत्याह ग्राहकेति[११२] । प्रचयमेव दर्शयति जायतइति[११३]

---

* ज्ञायते इति २ पु. पा. ।

परेष्वाकारवृद्ध्यैवं पूर्वेभ्यो भिन्नता, तथा ।
ग्राह्यवत्स्मरणात्पश्चात्संवित्तौ ग्राहकः पुरा ॥११४॥
न तावदेवमाकारान् पश्यामः प्रचयाऽन्वितान् ।
विषयव्यपदेशाच्च नर्ते ज्ञाननिरूपणम् ॥११५॥
तस्माज्ज्ञानात्मनैकत्वे ग्राह्यभेदनिबन्धनः ।
संवित्तिभेदः सिद्धो ऽत्र किमाकारान्तरेण नः ॥११६॥

---

भिन्नता[११४]ऽन्तेन । प्रथमस्य हि विषयाकारेण ग्राहकाकारेण च द्व्याकारत्वे तद्विषयं द्वितीयं तद्विषयाभ्यामाकाराभ्यामात्मीयेन च ग्राहकाकारेण त्र्याकारं भवति । एवमेकाऽऽकारप्रचयादुत्तरोत्तरेषां पूर्वपूर्वेभ्यो भिन्नता सिध्यतीति । 'स्मरणाच्चाऽऽनुमानिकी'त्येताद्वि-वृणोति तथेति । ज्ञातो घट इति सहैव ज्ञानेनाऽर्थं स्मरति, न चाऽगृहीतस्य स्मरणं संभवति, अतो ज्ञानमपि गृहीतमिति । परिहरति न तावदिति[११५] । केवलग्राहकाकारं संविन्मात्ररूपमेव सर्वं, न तु तत्र द्वित्र्याकारप्रचयो ऽस्ति, विषयाकारस्तु घटादिर्बाह्य एव ज्ञानस्य विषयो भवति न ह्यसौ ज्ञानस्याकार इति । कथं तर्हि नीलाद्याकारो ज्ञानमिति व्यपदेशः, अत आह विषयेति । नीलाकारं, नीलविषय-मित्यर्थः । विषयविशेषस्य व्यपदेशमन्तरेण ज्ञानस्य स्वगतो विशेषो निरूपयितुं व्यपदेष्टुं चाऽशक्य इति विषयद्वारेण व्यपदिश्यतइति ।

नन्वेवं संविन्मात्ररूपत्वाज् ज्ञानानां न भेदः सिद्ध्येदत आह तस्मादिति[११६] । यस्मादेवं विषयादृते न ज्ञाननिरूपणं तस्मात् ज्ञानरूपेणैकत्वे ऽपि विषयभेदप्रमाणक एव ज्ञानभेदः, न ह्यसति ज्ञानभेदे ज्ञेयभेदः संभवतीति ।

निराकारत्वसाम्ये ऽपि यथा ऽऽकारवतां ध्रुवम् ।
भेदः स्वाभाविकस्तद्वज्ज्ञानानां किं न सिध्यति ॥११७॥
स्मृतेरुत्तरकालं चेत्येतन्मिथ्यैव गीयते ।
तदैव ह्यस्य संवित्तिरर्थापत्त्योपजायते ॥११८॥
गृहीतमेव यच्चोक्तं तदभेदान्न तद्यतः ।
नाऽस्माभिर्वाक्यवृत्तेस्त्वं निमित्तमनुयुज्यसे ॥११९॥
ग्राह्यग्राहकतैवाऽस्य केन चिन्नोपलभ्यते ।
प्रत्यक्षज्ञानपक्षे च नैषा स्यादानुमानिकी॥१२०॥

---

ननु विद्यमानो भेदो ग्राह्यभेदात्प्रतीयते, निराकाराणां तु संविदां कथं भेदो, ऽत आह निराकारत्वेति[११७]। साकारणामेव कुतो भेदः, स्वभावात्कारणभेदाद्वेति चेत्, तुल्यो ऽयं निराकाराणामपीति किं नीलाद्याकारकल्पनया। ततश्च यदुक्तं 'भवतस्त्वर्थं कल्पयित्वा भवे'दिति 'न हि संवित्तिसत्तयैव तद्वेदना युक्ते'ति, तत्परिहृत्य 'स्मृतेरुत्तरकाल'मित्येतत् परिहरति स्मृतेरिति[११८]। असिद्धेयं स्मृतिरिति। कथं तर्हि ज्ञातो घट इति ज्ञानपरामर्शो, ऽत आह तदैवेति। यथा चाऽर्थापत्त्या ज्ञानकल्पनं तथा वक्ष्याम इति।

यत्त्वभेदादेव ग्रहणे परमपि गृहीतमेवेत्युक्तं, तदनुभाषते गृहीतमि[११९]त्यभेदादन्तेन। निराकरोति न तदिति। कारणमाह यतो नाऽस्माभिरिति। यदि ह्येकस्मिन् गृहीते किमन्यदपि गृहीतमिति वाक्प्रवृत्तिः संभवतीत्येतदस्माभिर्भवान्पृच्छयेत तत एवं ब्रूयात्संभवत्येषा वाक्प्रवृत्तिरिति, न त्वेव मस्माभिः पृच्छ्यत इति। किं तर्हि भवतोच्यते, ऽत आह ग्राह्येति[१२०]। ग्राह्यग्राहकयोरन्यतरग्रहणे

एकाऽऽकारे च विज्ञाने यद्यन्यो ऽप्यत्र कल्प्यते ।
सहस्राऽऽकारतैकस्य कस्मान्न परिकल्प्यते ॥१२१॥
ग्राह्यग्राहकयोर्भेदो नन्वस्त्येव परस्परम् ।
सिद्धो नः पक्ष एवं स्यान्न ज्ञानत्वादभेदतः ॥१२२॥
भिन्नाऽभिन्नत्वमेकस्य कुतो ऽत्र परिकल्पितम् ।
त्वया सांख्यमतेनैवमुक्त्वा बुद्धस्य शासनम् ॥१२३॥
एकं चेद् ग्राहकं ग्राह्यं कुतो भिन्नत्ववागियम् ।
भिन्नं चेत्कथमुच्येत तस्यैकत्वं पुनस्त्वया ॥१२४॥

---

ऽन्यतरन्न गृह्यते, तस्यैकत्वे ऽनुपपन्नं, तस्माद् भिन्नमेव ग्राह्यं ग्राहकादितीदमस्माभिरुच्यतइति ।

यच्चाऽऽकारप्रचयादुत्तरकालस्मृतेश्च ग्राहकस्यापि संवित्तिरस्तीत्यनुमीयतइत्युक्तं, तत्राह प्रत्यक्षेति । तदेवं ग्राह्यमात्राऽवभासे विज्ञाने ये द्वितयस्य त्रितयस्य वा भासनमेकदेशिनः सौगताश्च कल्पयन्ति ते स्वहस्ताकाराऽवभासमेव कल्पयेयुरित्याह एकाकारइति[१२१]। चोदयति ग्राह्येति[१२२] । एकस्यापि ज्ञानस्य ग्राह्यग्राहकांशौ भिन्नावेवेति युक्तमेकग्रहणे परस्याऽग्रहणमिति । सिद्धान्तवाद्याह सिद्धइति । परः पुनराह नेति । कारणमाह ज्ञानत्वादिति । एकस्यैव ज्ञानस्योभावप्यंशौ तावंशात्मना भिन्नावपि ज्ञानरूपेणाऽभिन्नाविति न युष्मत्पक्षसिद्धिरिति । तदेतदभ्युपगतसिद्धान्तविरोधेन दूषयति भिन्नाऽभिन्नत्वमिति[१२३] ।

बुद्धशासनमेव स्मारयति एकमिति[१२४] । एवं च भवन्मतादै-

एकज्ञानादनन्यत्वाद् ग्राह्यग्राहकयोर्मिथः ।
एकत्वेन भवेज्ज्ञानं ग्राह्यं ग्राहकमेव वा ॥१२५॥
तत्र चाऽन्यतराऽपाये द्वितीयाऽपायतः पुनः ।
ज्ञानस्यांशद्वयासत्त्वान्नैःस्वाभाव्यादभावता ॥१२६॥
भिन्नाभ्यां वा ऽप्यभिन्नत्वाद्भेदो ज्ञानात्मनो भवेत् ।
तत्स्वात्मन*स्ततश्चैवं सिद्धं वस्तुद्वयं हि नः ॥१२७॥
'तयोश्च यदि संज्ञेयं ज्ञानमित्यस्त्वथाऽपि वा ।
ज्ञानं ज्ञायतइत्यर्थो धीर्भावे करणे ऽपि वा ॥१२८॥
सर्वथा वस्तुभेदो नः सिद्धः शब्दो यथारुचि ।
प्रवर्त्ततां न नस्तत्र का चिद्विप्रतिपन्नता' ॥१२९॥

---

करूप्यमेव ज्ञानस्याऽऽपादयितुं शक्यमित्याह एकेति[१२५]। यदा त्वन्यतराऽभावस्तदा ग्राह्यग्राहकयोरितरेतराऽपेक्षत्वादेकाभावे ऽपरस्याप्यभावान्निःस्वभावत्वेन ज्ञानस्याऽप्यभाव एव स्यादित्याह तत्र चेति[१२६]। यदि वा भिन्नाभ्यामंशाभ्यामभेदस्तद्वदेव ज्ञानस्यापि भेद इत्याह भिन्नाभ्यामिति[१२७] वदन्तेन। एवं चाऽत्यन्तभेदाद् ग्राह्यग्राहकयोः सिद्धं नः समीहितमित्याह ततश्चेति। सिद्धे च वस्तुभेदे यद्युभयोर्ज्ञानशब्दः परिभाष्येताऽथ वा कर्मव्युत्पत्त्या ऽर्थे भावकरणाऽन्यतरव्युत्पत्त्या च बुद्धौ ज्ञानशब्दः प्रयुज्यते तदस्तु नाम यथेष्टमित्याह तयोश्चेति[१२८] द्वयेन ।

वैभाषिकास्त्वाहुः, सत्यं, ग्राहकाद्भिन्नमेव ग्राह्यं, तत्तु ज्ञानमेव

---

* तत् स्वात्मवदिति २ पु. पा. ।

'अथ सत्यपि भिन्नत्वे ग्राह्यं ज्ञानान्तरं भवेत् ।
ज्ञानत्वे तस्य का युक्तिः' पूर्वोक्ता यदि* सेष्यते॥१३०॥
ज्ञानं ज्ञानमितीदं तु न द्वयोरनुवर्त्तते ।
व्यतिरिक्तं च सामान्यं त्वया नाऽभ्युपगम्यते ॥१३१॥
व्यतिरेके तयोर्ज्ञानान्न† ज्ञानात्मकता भवेत् ।
तद्रूपरहितत्वे च ज्ञानाऽभावः प्रसज्यते ॥१३२॥
ताभ्यां च तस्य सबन्धे प्रत्येकं व्यतिषज्य च‡ ।
भेदे सावयवत्वादि दोषो वैशेषिकादिवत् ॥१३३॥

---

वा ऽतीतं नार्थ इति, तदप्ययुक्तं, युक्त्यभावादित्याह अथेति[१३०] पादत्रयेण। यदि तु पूर्वोक्ता परिभाषा कर्मव्युत्पत्तिर्वा ज्ञानत्वे ग्राह्यस्य युक्तिः ततः सेत्स्यतइत्याह पूर्वोक्तेति । अर्थतस्तु नैकरूपं ज्ञानत्वमुभयोरस्तीत्याह ज्ञानमिति[१३१] । तत्रापि नास्त्येवाऽनुगतं, न हि स्वलक्षणव्यतिरिक्तं सामान्यमस्ति भवतामित्याह व्यतिरिक्तमिति । अभ्युपेत्यापि ब्रूमः, तत् खलु पूर्वोत्तराभ्यां ग्राह्यग्राहकस्वलक्षणाभ्यां व्यतिरिक्तमव्यतिरिक्तं वा, व्यतिरिक्तत्वे तावद् ग्राह्यग्राहकयोर्न ज्ञानात्मकता स्यादित्याह व्यतिरेके इति[१३२]। ज्ञानस्य च ग्राह्यग्राहकाभ्यां भिन्नस्य तद्रूपविरहादभावः स्यादित्याह तद्रूपेति। व्यतिरिक्तस्य च ज्ञानस्वरूपस्य ताभ्यां प्रत्येकं सम्बन्धे भूतगतकर्मगुणवद्भेदः स्याद्, व्यासज्य सम्बन्धे सावयवत्वमित्यादिदोषो वैशेषिकादिवद्भवतामपि स्यादित्याह ताभ्यामिति[१३३] । वैशेषिकादि-

---

* पूर्वोक्ता तस्येति का. पा. । † तयोश्श्लिष्टे नेति २ पु. पा. ।
‡ त्रेति २ पु. पा० ।

यथा हि तेषां जात्यादौ दोषा ह्युक्ताः परैरमी ।
तथैवेषां प्रसज्यन्ते भिन्नाऽभिन्नार्थसंगतौ ॥१३४॥
ताभ्यामव्यतिरेके वा भेदः पूर्वोक्त एव ते ।
सादृश्याऽपोहसामान्यकल्पना वारयिष्यते ॥१३५॥
वस्त्वन्तरस्य चाऽभावात्त्वया ऽपोहो ऽपि दुष्करः ।
नाऽज्ञानं नाम किञ्चित्स्यादपोह्यं ज्ञानवादिनः॥१३६॥
अपोहो न ह्यभावस्य कथं चिदुपपद्यते ।
वस्त्वन्तरमभावः स्यादपोह्यत्वाच्च वस्तुता ॥१३७॥

---

षदित्येतद्विवृणोति यथा हीति[१३४] । भिन्नेष्वभिन्नस्याऽर्थस्य सङ्गतावभ्युपगम्यमानायामित्यर्थः । यदि च व्यतिरिक्तमेव ग्राह्यग्राहकाभ्यां सामान्यं ततः पूर्ववद्भिन्नाभ्यामभिन्नत्वात् सामान्यस्याऽपि भेदः स्यादित्याह ताभ्यामिति[१३५] ।

ननु जात्यात्मकसामान्याऽङ्गीकारे अमी दोषाः सन्तु, सादृश्यरूपमपोहरूपं वा किं न भवत्यत आह सादृश्येति । विशेषतश्च ज्ञानमात्रवादिनो ऽपोह्याऽभावान्नाऽपोहसिद्धिरित्याह वस्त्वन्तरस्येति[१३६]। वस्त्वन्तराऽभावमेव दर्शयति नाऽज्ञानमिति। अगोनिवृत्त्या च गवात्मनो ऽश्वादयो वस्तुरूपाः सन्त्येवेति शेषः। यदि तु वस्त्वन्तराऽभावे ऽपि ज्ञानाऽभाव एवाऽपोह्यस्तत्राऽपोहो ऽपि वस्तुनिवृत्तिः, अभावस्याऽवस्तुरूपस्याऽपोह्यस्य तदपोहात्मकं ज्ञानसामान्यं वस्तुरूपमेव स्यान्न निवृत्तिरूपं, न ह्यवस्तुनिवृत्तिरवस्तु भवति, तदवस्तुत्वे वा ऽपोह्यस्याऽभावस्य वस्त्वन्तरत्वापत्तिरित्याह वस्त्वन्तरमिति[१३७] ।अत्रे-

तेनाऽज्ञाननिवृत्तौ हि ज्ञाने ऽन्यार्थः प्रसज्यते ।
कल्पितं स्यादपोह्यं चेन्नाऽत्यन्ताऽसत्यकल्पना ॥१३८॥
बुद्धिरज्ञाननिर्भासा तत्राऽज्ञानं प्रकल्पितम् ।
ततश्च ज्ञानमेवैकमपोह्यत्वेन संमतम् ॥१३९॥
न चाऽऽत्माऽपोह एवास्ति क चित् सामान्यकल्पने ।
वृक्षस्य न ह्यपोह्यत्वं वृक्षेणैव कदा चन ॥१४०॥
अपोह्ये चैव विज्ञाने ज्ञानत्वं न भवेत्तव ।
वृक्षत्वं न ह्यपोह्येषु घटत्वादिषु युज्यते ॥१४१॥

---

च प्रयोगमाह अपोह्यत्वादिति । अज्ञानं वस्तु, अवस्त्वात्मकस्य सामान्यस्याऽपोह्यत्वात्, अश्वादिवदिति । तेनाऽभावस्याऽपोह्यत्वाऽयोगादज्ञाननिवृत्तिरूपे ज्ञानसामान्ये ऽङ्गीक्रियमाणे तदपोह्यमज्ञानं ज्ञानादन्यद्वस्त्वन्तरमर्थ एव तव प्रसज्यतइत्याह तेनेति[१३८] । शङ्कते कल्पितमिति । दूषयति नेति ।

कल्पना हि बुद्धिविशेषः, न चाऽत्यन्ताऽसत्यस्य बुद्धिविषयता सम्भवति, भवन्मते ऽपि सर्वज्ञानानामात्मा ज्ञानान्तरं वा ग्राह्यमिति वाऽत्यन्ताऽसत्यस्य कल्पना सम्भवति; एवं च कल्पितमप्यज्ञानमज्ञानात्मिका बुद्धिरेव तथाऽऽपद्यतइत्याह बुद्धिरिति[१३९] । ततः किमित्याह ततश्चेति । तथापि किमित्याह न चेति[१४०] । न हि ज्ञानस्य ज्ञानेनाऽपोहः सम्भवति वृक्षस्येव वृक्षेणेति । अपोह्यस्य चाऽज्ञानस्य ज्ञानत्वं न स्याद् वृक्षाऽपोह्येष्विव घटादिषु न वृक्षत्वमिति आह अपोह्ये इति[१४१] । ज्ञानत्वाऽभावे चाऽज्ञानशब्दस्याऽर्थशब्देनाऽभि-

ततश्चाऽज्ञानमेवार्थ इत्यभिन्नाऽर्थता भवेत् ।
अज्ञानप्रत्ययश्चाऽयं किमालम्बन इष्यते ॥१४२॥
न तावज्ज्ञाननिर्मुक्तमज्ञानं ग्राह्यमस्ति ते ।
न च वस्तु निषिद्धं तदभावः किं न गृह्यते ॥१४३॥
भावो न गृह्यते येन तस्याऽभावेषु का कथा ।
स्वांशपर्यवसानं च तुल्यमत्रापि कारणम् ॥१४४॥
तेन ज्ञानान्तरं वा स्याद् ग्राह्यमात्मांश एव वा ।
स्वरूपविपरीतं च कथं ग्राह्यं प्रतीयते ॥१४५॥

---

ऽनार्थत्वमित्याह ततश्चेति[१४२] । किं च, यो ऽयमज्ञानप्रत्ययो ग्राह्यो-पस्थापकः स किमालम्बनः, न ज्ञानाऽतिरिक्तं तावदस्ति भवतां, य-दालम्बनं स्यादित्याह अज्ञानेति । चोदयति न चेति[१४३] । व-स्त्वेव हि ज्ञानाऽतिरिक्तमस्माभिर्निषिध्यते नाऽभावः, तेन ज्ञानाऽभा-वस्याऽऽलम्बनत्वमस्तीति। परिहरति भाव इति[१४४]। सर्वप्राणिप्रसिद्ध-मतिस्थूलमपि महीमहीधराद्यपह्नुवानः कथमभावमङ्गीकुर्यादिति । यच्च भावाऽपह्नवे कारणं सर्वज्ञानानां स्वांशे ज्ञानान्तरे वा वृत्तिर्ना-न्यत्रेति, तदभावाऽपह्नवे ऽपि तुल्यमित्याह स्वांशेति। स्वांशग्रहणं ज्ञानान्तरस्याप्युपलक्षणम् । ज्ञानान्तरग्राह्यत्वपक्षे ऽपि निराक्रियमाणे स्वांशपक्षोपक्षेपः, तस्मिन्नपि पक्षे तुल्यमिदं दूषणमिति दर्शयितुं, तेनाऽज्ञानप्रत्ययस्यापि ज्ञानान्तरमात्मांशो वा ऽऽलम्बनमापद्यतइत्याह तेनेति[१४५] । न त्वेतत्संभवतीत्याह स्वरूपेति । अज्ञानरूपविप-रीतं विज्ञानरूपं, तत्कथं ज्ञानाऽभावप्रत्ययस्य तद्विपरीतं विज्ञानरूप-

यथोष्णे ऽनुष्णधीर्नास्ति ज्ञाने ऽप्यज्ञानधीस्तथा ।
तेन न ज्ञानमात्रत्वे स्यादपोह्यं कथं चन ॥१४६॥
ग्राह्यग्राहकयोश्चाऽतो न ज्ञानात्मसमानता ।

---

मालम्बनं स्यादिति । अतो ऽत्र दृष्टान्तमाह यथेति[२४६] ।

प्रकृते योजयति ज्ञाने ऽपीति । तेनाऽवश्यमज्ञानप्रत्ययस्य बलादर्थाऽवलम्बनत्वमभ्युपगन्तव्यम् । अनेनैव न्यायेन यदपि द्वित्वस्थूलत्वस्थायित्वचित्रत्वादिविज्ञानं तदप्यर्थालम्बनं दर्शयितव्यं; न ह्येकस्य ज्ञानस्य द्वित्वमाकारः सम्भवति, नापि सूक्ष्मस्य स्थूलत्वं, नापि क्षणिकस्य स्थायित्वं रूपं सम्भवति, नाप्येकस्य नानापर्यायश्चित्रत्वं, तदवश्यमत्राऽर्थालम्बनत्वमङ्गीकर्त्तव्यम; तथा च भवदुक्तयुक्तिजं सर्वज्ञानानि नाऽर्थमालम्बन्तइति यज्ज्ञानं तदपि स्वांशमतीतं वा ज्ञानमालम्बमानं नीलादिज्ञानानाम् अर्थालम्बनत्वाऽभावं न शक्नुयाद्ग्रहीतुमित्युक्तं निरालम्बनवादे 'चैत्रादिप्रत्ययानां चे'*त्यत्र । तस्य वा तदालम्बनत्वेन सर्वज्ञानानां स्वांशग्राहित्वमतीतग्राहित्वं वा सिध्येत्, ज्ञानाकारत्वे च नीलादेः प्रत्यभिज्ञाऽनुपपत्तिः; ज्ञानस्य क्षणिकत्वादर्थो ऽपि क्षणिक इति चेत्, तच्छब्दाधिकरणे निराकरिष्यते । ज्ञानमपि स्थायीति चेत्, संज्ञामात्रे विवादः स्यान्नालं तावत्प्रत्यभिज्ञानादस्थायि, स्थायित्वे च सुषुप्त्यादौ विद्यमानस्यैवाऽप्रकाशात्स्वप्रकाशत्वाऽनुपपत्तेरन्येन प्रकाशकेन भवितव्यम्, इति न सिद्धमद्वैतमित्यलमनेन;प्रस्तुतमनुसरामः । तत्सिद्धमपोह्याऽभावान्नाऽपोहरूपसामान्यसिद्धिरित्याह तेनेति ।

सामान्याऽभावे च न ग्राह्यग्राहकयोर्ज्ञानात्मनैकत्वमित्याह ग्राह्येति[१४७] । उपसंहरति तस्मादिति । सति त्वेवं ग्राहकस्यैव ज्ञान-

---

* श्लो. वा. निरालम्बनवादे श्लो. ६५ ।

तस्मादन्यतरत्रेदं ज्ञानत्वं संप्रतीयते ॥१४७॥
तत्राऽप्युभयसिद्धत्वाद् ग्राहकस्येति गम्यते ।
वस्तुभेदे प्रसिद्धे च व्यपदेशो यथारुचि ॥१४८॥
ज्ञानमस्तूभयं वा ऽर्थो ग्राहको वा ऽर्थ उच्यताम् ।
बुद्ध्योरयुगपद्भावान्न द्वयोर्मेयमानता ॥१४९॥
क्षणिका हीत्यनेनोक्तमर्थो ह्येकः* प्रसज्यते ।
'अन्योन्यनिरपेक्षत्वाद्युगपच्चाऽपि जन्मनि ॥१५०॥
मानमेयत्वनास्तित्वं' क्रियाकारकवर्जनात् ।
'अर्थविज्ञानयोरत्र या मितिं प्रति सङ्गतिः ॥१५१॥

---

त्वमुभयवादिसिद्धत्वादित्याह तत्रापीति[१४८] । अथ वा, तत्रापि किं न एतेन, वस्त्वभेदे सिद्धे व्यपदेशो यथारुचि क्रियतामित्याह वस्तुभेदे इति । भाष्यकारेण त्वतीतस्याऽऽलम्बनत्वं क्षणिकत्वान्न सम्भवतीत्युक्तं, क्षणिका हि सा न बुद्ध्यन्तरकालमवस्थास्यतइति । तदाह बुद्ध्यो[१४९]रित्युक्त[१५०]मन्तेन । यदा ऽस्त्येवमतीतं ज्ञानं प्रत्यक्षबुद्धेरालम्बनं न भवति तदा ऽर्थ एव ग्राह्य इति सिद्धं भवतीत्याह अर्थ इति ।

मा भूदतीतस्य ग्राह्यत्वं युगपज्जन्मनोरेव तु ज्ञानयोरेकं ग्राह्यम्, इतरद् ग्राहकं भविष्यतीत्यत आह अन्योन्येति पादत्रयेण । कारणत्वमेव हि भवतां ग्राह्यत्वं, यौगपद्ये चाऽन्योन्यनिरपेक्षजन्मनोः कार्यकारणभावाऽभावान्न ग्राह्यग्राहकत्वमिति कथं नैरपेक्ष्यमित्यत आह क्रियाकारकेति[१५१] । उत्पादनक्रियायां हि कर्मकारकत्वं, तस्यामेव

---

* अर्थो ह्यन्य इति २ पु. पा. ।

कार्यकारणभावो ऽयं' नाऽन्यत्रैवं च दृश्यते ।
'नियमश्च न लभ्येत सव्यदक्षिणशृङ्गवत् ॥१५२॥
इदं कार्यमयं हेतु, र्द्वयं नाऽन्योन्यसंश्रयात् ।
तद्भावभाविता मात्रं हेतुः केनैव कल्प्यते* ॥१५३॥

---

च कर्तृत्वं करणत्वं वा कारणत्वं, न च युगपज्जन्मनोरेककर्तृकां क्रियामपेक्ष्येतरजन्म सम्भवति, सिद्धस्य च कर्तृत्वमसिद्धस्य च कर्मत्वं, न च युगपद्भाविनोरेकस्य सिद्धिः इतरस्य चाऽसिद्धिरिति सम्भवतीति न कार्यकारणभावः, तद्भावाच्च न ग्राह्यग्राहकत्वमिति। भवत्पक्षे वा कथमर्थज्ञानयोः कार्यकारणभावः, यतो ग्राह्यग्राहकभावो, ऽत आह अर्थेति पादत्रयेण ।

नाऽस्माकं कार्यत्वं ग्राहकत्वं कारणत्वं वा ग्राह्यत्वं, किं तु ग्राहकमेव कारणं ग्राह्यं च कार्यम्। तथा हि, येयं प्रमितिरूपा क्रिया प्रत्यक्षसूत्रे बुद्धिजन्येति वर्णिता तज्जन्यभासनाख्यफलसमवायित्वादर्थस्य कर्मत्वम्, इदमेव तस्य ग्राह्यत्वं तेन रूपेणाऽर्थस्य कार्यत्वं, तस्यां च क्रियायां यद्बुद्धेः कर्तृत्वं करणत्वं वा तदेव तस्या ग्राहकत्वं कारणत्वं च; ततश्चाऽर्थसमवायिनः फलस्य ज्ञानस्य च पौर्वापर्यात्युक्तः कार्यकारणभाव इति। तव तु यौगपद्यान्नैवं सम्भवतीत्याह नाऽन्यत्रेति[१५२]। यौगपद्ये चेदं कार्यमिदं कारणमिति नियमो ऽपि न स्यादित्याह नियमश्चेति पादत्रयेण । विशेषाऽग्रहणे द्वयमपि कार्यं कारणं च भवत्विति चेत्, नेत्याह द्वयं नेति[१५३]।कारणमाह अन्योन्येति ।

---

* कैनैव वर्ण्यते इति २ पु. पा. ।

पौर्वापर्यविनिर्मुक्तं कार्यकारणलक्षणम् ।
'गवाश्वस्य यथा नास्ति पौर्वापर्ये ऽपि तत्तथा ॥१५४॥
युगपज्जायमाने ऽपि सन्तत्यन्तरजे क्षणे ।
रूपादिषु घटे यद्वत्' तस्मात्पूर्वमवस्थिते ॥१५५॥
यो यस्माज्जायते* पश्चात्स तत्कार्यमितीष्यते ।
हेतुहेतुमतां सिद्धं यौगपद्यनिदर्शनम् ॥१५६॥
यत्प्रदीपप्रभाद्युक्तं सूक्ष्मः कालो ऽस्ति तत्र नः ।
दुर्लक्षस्तु यथा वेधः पद्मपत्त्रशते तथा ॥१५७॥

---

ननु तद्भावभावाऽव्यभिचार एव कार्यकारणलक्षणं, तच्च युगपद्भाविनोरपि विद्यतएव; यथा ऽऽहुः'प्रत्ययो ऽव्यभिचारित्वात्सहे'ति । प्रत्ययः, कारणमित्यर्थः । तत्राह तद्भावेति । पौर्वापर्यनियमसंयुक्तं तद्भावभावित्वं तल्लक्षणं न तन्निर्मुक्तमिति । यथा च पौर्वापर्यनियमसहितमेवेदं लक्षणं न नियमरहितं नाऽपि पौर्वापर्यरहितं, तथा दर्शयति गवाश्वस्येति[१५४] सपादेन । उपसंहरति तस्मादिति[१५५] ।

यत्तु परैरसत्यपि पौर्वापर्ये कार्यकारणत्वमित्यत्र सिद्धवद्दीपप्रभावदिति निदर्शितं, तदसिद्धमित्याह हेतुहेतुमतामिति[१५६] । कथं तर्हि यौगपद्याऽभिमानो, ऽत आह दुर्लक्ष इति[१५७]। सन्तमपि कालभेदमतिसौक्ष्म्यादलक्षयतां पद्मपत्रशतव्यतिभेदइव यौगपद्यभ्रमः; तुलानमनोन्नमनयोस्तु न मिथः कार्यकारणत्वम्, उभयोरेककारणत्वादिति । इयं च यौगपद्येन कार्यकारणत्वनिराक्रिया ज्ञानां-

---

* यस्मिन् यो जायते इति २ पु. पा. ।

भागयोर्यौगपद्येन तथैव स्यान्निराक्रिया ।
न च शक्त्यर्पणद्वारं क्रमेणाऽऽलम्बनं भवेत् ॥१५८॥
ग्राह्यं तदा ह्यतीतं स्यात्तादूप्यं चाऽप्रमाणकम् ।
'अतीतत्वाऽनुविद्धो हि स्मृत्या ग्राह्यो ऽनुभूयते॥१५९॥
तद्वदेव भवेत्तत्र' स्वप्ने न स्याद्विपर्ययात् ।
तत्र ह्यवर्तमानो ऽपि गृह्यते वर्तमानवत् ॥१६०॥
बाधज्ञानादिदं भ्रान्तं न त्वत्रैवं विपर्ययः ।
तस्मात्प्रत्यक्षबुद्धीनां नाऽतीतो विषयो भवेत् ॥१६१॥

---

शयोरपि ग्राह्यग्राहकत्वनिराकरणाय वक्तव्येत्याह भागयोरिति[१५८]।

मा भूद्यौगपद्यं, क्रमभाविनोस्तु पूर्वमुत्तरस्य ग्राह्यं भवतु, यत्त्वतीतस्य ग्राह्यत्वं न संभवतीत्युक्तं,तत्त्वयुक्तं, शक्त्यर्पणद्वारेण संभवात्, पूर्वज्ञानाऽर्पितवासनावशेन हि तत्स्वरूपमुत्तरमुत्पद्यमानं तदालम्बनं भवति स्मरणमिव पूर्वाऽनुभवालम्बनम्; तदुक्तं 'शक्त्यर्पणात्क्रमा'दिति, तत्राह न चेति । कारणमाह ग्राह्यमिति[१५९] । ततः किमित्याह तादूप्यमिति । वर्तमानतया गृह्यमाणस्याऽतीतत्वमप्रमाणकमिति । स्मृतिवदेव तु शक्त्यर्पणद्वारेण ज्ञायमानमतीतत्वाऽनुविद्धमेव पूर्वं गृह्येतेत्याह अतीतत्वेति पादत्रयेण । स्वप्ने ऽपि तर्ह्यनुभूतग्रहणादतीतत्वाऽनुविद्धमेव ग्रहणं स्यान्नैवमित्याह स्वप्ने इति[१६०]। कारणमाह विपर्ययादिति। भ्रान्तित्वाद्युक्तं स्वप्ने ऽवर्तमानस्यापि वर्त्तमानतया ग्रहणमिदमेव भ्रान्तीनां तत्त्वं यदन्यथाभूतस्याऽन्यथा ग्रहणमिति । कथं भ्रान्तित्वमत आह बाधज्ञानादिति[१६१] । अत्रापि विपर्यय इति चेद्, नेत्याह न त्विति। बाधाऽभावादित्यर्थः।

अतीतत्वाद्यथैवाऽऽसां वृत्तौ जन्मान्तरेषु यः ।
तद्रूपत्वेन वा ज्ञानं हेतुर्भाविवदुच्यते ॥१६२॥
अतीतत्वे ऽपि नार्थो ऽयं धीरेषेत्यत्र का प्रमा ।
अतीते* यच्च विज्ञानं ग्राह्यत्वेन प्रकल्पितम् ॥१६३॥
तस्माद् ग्राहकरूपं वा ग्राह्यं वोभयथा ऽपि वा ।
ग्राह्याऽऽकारत्वमात्रे स्यादर्थः शब्दान्तरेण ते ॥१६४॥
स्वकाले† चाऽथ संवित्ते‡र्न स्याच्छक्त्यर्पणं ततः ।
यथैवाऽनागताज् ज्ञानात्सन्तत्यन्तरजादपि ॥१६५॥

---

एवमतीतस्य प्रत्यक्षविषयत्वं निराकृत्याऽत्रैव प्रयोगमाह तस्मादिति । अनन्तराऽतीतः पक्षः, अतीतत्वसामान्यं च हेतुरिति । अत्रैव दृष्टान्तान्तरमाह तद्रूपत्वेनेति[१६२] । यो हि यथाऽवस्थितो न गृह्यते नाऽसौ प्रत्यक्षस्य विषयो भाविवदिति । किं चाऽतीतस्यापि विषयस्वज्ञानमेव तदिति नास्ति प्रमाणमर्थ एवाऽतीतो विषय इति सौत्रान्तिकवदङ्गीकर्त्तुं युक्तम, एवं हि महीधरादयो लोकप्रसिद्धा नाऽपह्नुता भवन्तीत्याह अतीतत्वे इति[१६३] । यच्चेदमतीतं ग्राह्यतया कल्पितं, तत् त्रेधा विकल्पयति अतीतमिति । ग्राह्यमात्रत्वे दूषणमाह ग्राह्येति । अयं चाऽस्मिन्पक्षे दोष इत्याह स्वकाल इति[१६५] । गृहीतविषया हि वासना ग्राह्यैकस्वभावा च पूर्वमुत्तरो-

---

* अतीतमिति २ पु. पा. ।

† अकाले इति २ पु. पा. ।

‡ अप्यसंवित्तेरिति २ पु. पा. ।

40

दृढत्वेनाऽथ विज्ञाता*त्तथोत्पन्नाद्विनश्यतः ।
केवलग्राहकत्वे तु विषयत्वं न युज्यते ॥१६६॥
किमपेक्ष्य च तस्येदं ग्राहकत्वं प्रकल्प्यते ।
द्व्याकारता निरस्तैव संवेद्येत तदैव च ॥१६७॥

---

त्पत्तेः प्रागगृहीतं स्वविषयां वासानां नाऽर्पयेत्, तदभावेन च नोत्तरं पूर्वविषयत्वेनोत्पद्यतइति । शक्त्यर्पणाऽभावमेव प्रयोगेण दर्शयति यथैवेति । यथा ह्यनागतात्संतानान्तराद्वा न शक्त्यर्पणम्, एवमनन्तराऽतीतादपि दृढत्वेनाऽविज्ञातादुत्पन्नमात्रविनष्टादविज्ञातत्वादेवेति । ग्राहकैकस्वभावत्वे तु पूर्वस्योत्तरं प्रति विषयत्वं न स्यादित्याह केवलेति[१६६] । दूषणान्तरमाह किमपेक्ष्येति[१६७] । तस्याऽनन्तराऽतीतमपेक्ष्येति चेत्, न, तस्याप्यनेनैव न्यायेन ग्राहकैकस्वभावत्वेन ग्राह्यत्वाऽयोगादिति ।

द्व्याकारत्वे दूषणमाह द्व्याकारतेति । ननु स्वयं ग्राह्यग्राहकत्वं निरस्तं, यथा तु भवन्मते ज्ञानस्याऽर्थापेक्षया ग्राहकत्वं ज्ञानान्तरापेक्षया ग्राह्यत्वं, तथा मम सर्वज्ञानानां पूर्वाऽपेक्षया ग्राहकत्वम्, उत्तराऽपेक्षया च ग्राह्यत्वं किं नोपपद्यते; उक्तोत्तरमिदम् । एवं स्वोत्पत्तिवेलायामगृहीतं न शक्तिमर्पयेत्, अस्मत्पक्षे तु ज्ञानं न स्वविषयां वासनां जनयति किं त्वर्थविषयाम्; अत एवाऽर्थविषयैव स्मृतिस्तया जन्यते न ज्ञानविषया, तस्मादुत्पत्तिवेलायामेव संवित्तिरभ्युपगन्तव्या; ततश्च स्वयमेव ग्राह्यग्राहकत्वमापन्नं, तन्निरस्तमिति । दोषान्तरमाह संवेद्यतेति । ततः को दोषो ऽत आह ततश्चेति ।

---

* अप्यविज्ञातादिति २ पु. पा. ।

ततश्चोत्तरविज्ञानं न प्रतीक्षेत बोधकम् ।
द्व्याकारकल्पनायां च परस्यात्मांश एव ते ॥१६८॥
प्रमापर्यवसानेन नाऽतीतो विषयो भवेत् ।
पूर्वग्राह्यसरूपत्वे* ग्राह्यकत्वं प्रहीयते ॥१६९॥
ग्राहकाऽऽकारमात्रे स्याद्विषयो नाऽसरूपतः ।
न च शक्त्यर्पणस्याऽत्र व्यापार उपलभ्यते ॥१७०॥
शक्त्यर्पणस्य चाऽभावो युष्मत्पक्षे प्रसाधितः ।
सन्तानान्तरवच्चैषां निषेध्याद्धेतुसाध्यता ॥१७१॥

---

एवं ग्राहकरूपत्वं द्व्याकारत्वं चानुपपन्नम् इति ग्राह्यमात्ररूपं पूर्वं, ततश्चार्थ एव शब्दान्तरेणोक्तो भवतीति स्थितम्; इदानीं परमपि त्रेधैव विकल्प्य द्व्याकारत्वे तावद् दूषणमाह द्व्याकारेति[१६८]। यदि तु पूर्वेण ग्राह्येण सरूपमुत्तरमपि ग्राह्यरूपं ततो ग्राहकत्वं न स्यादित्याह पूर्वेति[१६९]। ग्राहकाऽऽकारमात्रत्वे तूत्तरस्य पूर्वस्तस्य विषयो न स्याद्, ग्राह्यग्राहकरूपत्वेन वैरूप्यात्सारूप्यनिबन्धनत्वाच्च विषयस्येत्याह ग्राहकेति[१७०]। यदपि पूर्वमुत्तरत्र शक्तिमर्पयतीत्युक्तं, तदप्ययुक्तमित्याह न चेति। व्यापाराऽधीनं च वासनाऽर्पणं, न च क्षणिकस्य ज्ञानस्य व्यापारः संभवतीति। भवत्पक्षे च वासनाऽर्पणं निरालम्बनवादे निराकृतमित्याह शक्त्यर्पणस्येति[१७१]।

इदानीं ज्ञानानां हेतुसाध्यत्वाऽभावे वास्यवासकत्वाऽभावे च प्रयोगमाह संतानान्तरवदिति। एकसंततिपतितानां ज्ञानानां न मिथो हेतुमत्त्वं वाच्यवाचकत्वं वा, ज्ञानत्वात्, संततिद्वयवर्त्तिज्ञानवदिति ।

---

* स्वरूपत्वे इति २ पु. पा. ।

वास्यवासकभावश्च ज्ञानत्वादेकसन्ततौ ।
तस्माद्यद्भासकं रूपं* तद्ग्राह्यात्तस्य भिन्नता ॥१७२॥
तत्संवित्तावसंवित्ते रसादिग्राहकं यथा ।
ग्राह्यं तद्ग्राहकाच्चैव तत्परामृशता यतः ॥१७३॥
न परामृश्यते ऽवश्यं रसादिग्राहकं यथा ।
द्वयं परस्परेणैवं भिन्नं साध्यं रसादिवत् ॥१७४॥
ऐकरूप्येण विज्ञाना†त्सन्तानान्तरबुद्धिवत् ।
ज्ञानं स्वांशं न गृह्णाति ज्ञानोत्पत्तेः स्वशक्तिवत् ॥१७५॥
ग्राह्यत्वं प्रतिषेधश्च द्वयहीना द्विवासना‡ ।
चैत्रज्ञानं तदुद्भूतज्ञानांशग्राह्यबोधकम्§ ॥१७६॥

---

यद्यपि पूर्वमेकस्य ग्राह्यग्राहकत्वं निराकृतं, तत्र प्रयोगमाह तस्मादिति[१७२] द्वयेन। तद्ग्राहकं परामृशता यस्मान्न नियमेन परामृश्यतइति तद्दर्शितं 'न स्मरामि मया को ऽपी'ति, एतदेव द्वयं समुच्चित्य दर्शयति द्वयमिति[१७४] । रूपं तद्ग्राहकं च मिथो भिन्नं परस्परपरिहारेण परामर्शाद् रूपरसवदिति । अत्रैव हेतुदृष्टान्तान्तरमाह ऐकरूप्येणेति[१७५] । प्रयोगान्तरमाह ज्ञानमिति । ज्ञानं स्वांशं न गृह्णाति, नापि स्वांशेन गृह्यते, ज्ञानादुत्पद्यमानत्वाद्वासनावत्, सा हि स्वांशं न गृह्णाति, नापि स्वांशेन गृह्यते इति । प्रयोगान्तरमाह चैत्रज्ञानमिति[१७६] । चैत्रज्ञानं तज्ज्ञानसन्ततावुद्भूतस्य

---

* रूपादिति २ पु. पा. ।
† चाऽज्ञानादिति २ पु. पा. । § बोधनमिति पाठान्तरम् ।
‡ हि वासतेति २ पु. पा. ।

ज्ञानत्वान्न भवेद्यद्वत्तस्य देहान्तरोद्भवम् ।
एतयैव दिशा वाच्या शक्तिद्वयनिराक्रिया ॥१७७॥
प्रमाणान्तरसिद्धत्वादन्यत्राऽनेकशक्तिता ।
न त्वत्र कारणं तादृक् शक्तिभेदकृदस्ति ते ॥१७८॥
तस्मादुभयसिद्धत्वाल्लाघवाद्य*परिगृहः ।
उपायत्वाच्च यत्तस्य पूर्वगृहणकल्पनम् ॥१७९॥

---

ज्ञानांशस्य ग्राह्यस्य बोधकं न भवति ज्ञानत्वात्, यथा देहान्तरोद्भवं तस्य ग्राहकं तद्वदिति । ज्ञानस्य ग्राह्यग्राहकशक्तिद्वयनिराकरणे ऽप्यनयैव दिशा प्रयोगो दर्शयितव्य इत्याह एतयैवेति[१७७] । न ज्ञानं द्विशक्तिकं, ज्ञानोत्पत्तेः, वासनावदिति । नन्वेवमात्मनो न ग्राह्यग्राहकशक्तिः, वस्तुत्वाद्, घटादिवदत आह प्रमाणान्तरेति[१७८]। प्रत्यग्-वृत्ति†स्वभावेनाऽहंप्रत्ययेन मानसप्रत्यक्षसिद्धं ग्राह्यग्राहकत्वं नाऽनुमानेन शक्यं निराकर्तुमिति । ज्ञानस्य तु नैवं प्रमाणान्तरमस्ति, यतः शक्तिद्वयं स्यादित्याह न त्वत्रेति । तद्धीदं नीलमिति पराग्वृत्तिस्वभावमेव सर्वदोदेतीति । यदा त्वेवं नीलादेर्ज्ञानादभिन्नत्वं न प्रमाणबलात्सिद्धं द्वैतं, तदा यदुक्त'मुभयवादिसिद्धत्वाज् ज्ञानस्य तस्यैवाकारकल्पना युक्ता लाघवमेवं सति भवतीति' तदनादरणीयम्, नह्येतावता प्रमाणसिद्धं हातुं शक्यमित्याह तस्मादिति[१७९] । यदपि प्रकाशकत्वादर्थग्रहणात्पूर्वमेव ज्ञानं ग्रहीतव्यमित्युक्तं, तदनैकान्तिकमित्याह उपायत्वादिति ।

---

* सिद्धत्वलाघवादिति २ पु. पा.

† प्रत्यग्वृत्तीति २ पु. पा. ।

चक्षुरादीन्द्रियैरत्र तदनैकान्तिकं भवेत् ।
यदप्यप्रतिबद्धत्वादुत्पत्तौ गृह्यतामिति ॥१८०॥
तत्राऽऽत्मना न शक्यं तन्नाऽन्योत्पत्तिस्तदस्ति वा ।
तेनैतत्कारणाऽभावात्तदानीं नाऽनुभूयते ॥१८१॥
नाऽन्यथा ह्यर्थसद्भावो दृष्टः सन्नुपपद्यते ।
ज्ञानं चेन्नेत्यतः पश्चात्प्रमाणमुपजायते ॥१८२॥

---

यदपि प्रतिबन्धकाऽभावादुत्पत्तावेव ग्रहीतव्यमित्युक्तं, तदपि अनुभाष्य परिहरति यदपीति[१८०] सार्द्धेन । न तावत् स्वात्मना शक्यं ग्रहीतुमित्युक्तं, न च ज्ञानान्तरमपि तदानीमुत्पन्नं येन गृह्येत, ततः प्रत्युत्पन्नमपि ग्राहकप्रमाणाऽभावान्नोत्पत्तिवेलायां गृह्यतइति । किं पुनर्ज्ञानस्य ग्राहकं प्रमाणं, किमिति वा तत्पश्चादेवोपजायते न पूर्वम्,अत आह नाऽन्यथेति[१८२]। अर्थापत्तिर्ज्ञानस्य प्रमाणं,सा चाऽर्थस्य ज्ञातत्वाऽन्यथानुपपत्तिप्रभवा प्रागर्थस्य ज्ञातत्वाऽभावान्नोत्पद्यते, ज्ञाते त्वथ पश्चात्तज्ज्ञानत्वाऽनुपपत्त्या ऽर्थापत्तिप्रमाणमुपजायते; तद्युक्तं पूर्वं त्वग्रहणं पश्चाच्च ग्रहणमिति। ननु ज्ञानकर्मत्वं ज्ञातत्वं, तत् प्रथमं ज्ञाते ज्ञाने ऽवगम्यते, अनवगतं च कथं ज्ञानं कल्पयेत्, तदितरेतराश्रयं, ज्ञानाऽवगमे ज्ञातत्वाऽवगमस्तदवगमे च ज्ञानाऽवगम इति ।

तत्र केचिदाहुः। सर्वथा तावदस्ति ज्ञानम्। तथा हि, विद्यमान एव हि घटः कस्य चिदेव व्यवहारयोग्यतामापद्यते न सर्वेषां, नापि सर्वदा, तदवश्यं यो यदा तेन व्यवहरति तस्य तद्व्यवहारानुगुणः कश्चिदतिशयः संजात इति कल्पनीयं स ज्ञानमिति। सत्यम, एवं सिध्यति ज्ञानं, किं तु प्रागपि व्यहारादवगम्यते ज्ञानम, अव्यवहरन्नपि ज्ञातो ऽयमर्थो मयेति आत्मना ऽर्थस्य ज्ञानत्वमनुसंधत्त-

इति सर्वजनीनमेतत्; न च ज्ञानमविदुषां ज्ञातत्वरूपत्वं शक्यं वेदितुं; यदेवं प्रागेव व्यवहारादुपजायमानो ज्ञातत्वाऽवगमो ऽसति ज्ञानस्य प्रत्यक्षत्वे कथमुपपद्यते।

अत्राहुः। ज्ञानजन्योऽर्थगतः कश्चिदतिशयः प्रकाशनभासनादिपर्यायपदवाच्यः, स च पाकजन्यौदनादिगताऽतिशयवदनवगते ऽपि ज्ञाने शक्यते ऽवगन्तुम्; अतः ज्ञानस्य कल्पक इति; सत्यमस्त्यतिशयः, स च प्रत्यक्षे ऽर्थे प्रत्यक्षाऽवगतः कल्पयेदपि ज्ञानम्, अनुमानादिषु तु तस्याऽप्रत्यक्षत्वात् प्राग्व्यवहारात्तद्व्याप्तलिङ्गाऽभावादप्रमितस्य चाऽकल्पकत्वान्न ज्ञानं कल्पयेत्, अनुमिते ऽपि चार्थे ज्ञातो मया ऽग्निरिति अग्निं ज्ञातमनुसंधत्ते, ऽतस्तत्रवं वक्तव्यं, ज्ञाने प्रमाणमुच्यते ज्ञानक्रियाजनितो ज्ञातुर्ज्ञेयेन सहाऽऽप्तत्वसंबन्धः, स मानसप्रत्यक्षाऽवगतो ज्ञानं कल्पयति सत्यां जिज्ञासायां, यत्रापि च कश्चिदर्थमनुभूय तद्विषयं ज्ञानमकल्पयित्वैव कालान्तरे तमर्थं स्मरति तत्रापि स्मृतिज्ञानेनैवात्मनोऽर्थस्य च दृश्यद्रष्टृत्वसम्बन्धे निष्पन्ने मानसप्रत्यक्षेण चाऽवगते तद्बलेन च ज्ञाने कल्पिते तस्य ज्ञानस्येन्द्रियादिप्रत्युत्पन्नकारणाऽसम्भवेन स्मृतित्वं निश्चित्य तदनुपपत्त्या पूर्वोऽनुभवः कल्प्यते, यथोक्तं 'तदैव ह्यस्य संवित्तिरर्थापत्त्योपजायते' इति। स एवाऽऽत्मनो ऽर्थेन संबन्धो दृष्टत्वज्ञातत्वादिपदैरभिधीयतइति। कः पुनरसौ संबन्धः, उक्तं प्राप्तिरिति। ये ऽपि च स्वप्रकाशां संविदं मन्यन्ते तेषामपि स्वोत्पत्तिसमये संवित्तिः स्वात्मानं कर्त्तारं वेद्यं च भासयति न तु स्वस्य वेत्तुर्वा संवेद्यसंबन्धं, तस्य तदा ऽनिष्पन्नत्वेनाऽसत्त्वात्ततो निष्पन्नायां संवित्तौ तस्याः कर्त्तुश्च तद्द्वारा विषयसंबन्धे जाते ततो मानसेनैव प्रत्यक्षेणाऽर्थेन सह संवित्तेः संवेत्तुश्च संबन्धो ऽवभासतइति अङ्गीकर्त्तव्यम्; संविदन्तरोत्पत्तिसमये च पूर्वसंविदो नष्टत्वान्न तद्धर्मत्वेन संवेद्यसम्बन्धः शक्यते प्रत्यक्षेण ग्रहीतुमिति संवेत्तृधर्मभूत एव संवेद्यसम्बन्धः कोपि नाम सर्वजनीनः प्राप्तिपर्यायो गृह्यतइति तत एव

न चाऽपि प्रतिबन्धेन केवलेनाऽग्रहो* भवेत् ।
विशिष्टकारणाऽभावे ऽप्यर्थो नैवाऽनुभूयते ॥१८३॥
व्यापृतं चाऽर्थसंवित्तौ ज्ञानं चाऽऽत्मान†मृच्छति ।
तेन प्रकाशकत्वे ऽपि बोधायाऽन्यत्प्रतीयते ॥१८४॥
ईदृशं वा प्रकाशत्वं तस्याऽर्थाऽनुभवात्मकम् ।
न चात्माऽनुभवो ऽस्त्यस्येत्यात्मनो न प्रकाशकम्॥१८५॥
सति प्रकाशकत्वे च व्यवस्था दृश्यते यथा ।
रूपादौ चक्षुरादीनां तथा ऽत्रापि भविष्यति ॥१८६॥

---

संवित्तिरूपक्रियाकल्पनासिद्धेरलं स्वप्रकाशतया । तत्सिद्धमुत्पत्तिवेलायामर्थस्य दृष्टत्वाऽभावेन फलांशाऽभावान्न ज्ञानं गृह्यते पश्चात्तु दृष्टत्ववशेन गृह्यतइति ।

यदि परमसत्यपि ग्राहके प्रतिबन्धाऽभावात् किमुत्पत्तावेव न गृह्यतइति उच्यते, तच्चाऽयुक्तमित्याह न चेति[१८३] । किमपरमग्रहे कारणमत आह विशिष्टेति । यत्तु स्वयमेव प्रकाशरूपस्य किमन्याऽपेक्षयेत्युक्तं, तत्राह व्यापृतमिति[१८४] । प्रकाशकमपि सदेतदुत्पत्तिवेलायामर्थस्य प्रकाशने व्यापृतत्वान्न स्वात्मानं प्रकाशयति, शक्तावपि हि कारणानि कार्यान्तरव्यापृतानि न कार्यान्तरं कुर्वन्ति, पश्चात्तु विनष्टत्वान्न प्रकाशयतीति । यद्वा ऽर्थे प्रत्येव तस्य प्रकाशकत्वं सर्वदा तन्मात्रांशदर्शनात्,नाऽऽत्मानं प्रति,तस्य कदा चिदपि तेनाऽनुभवादित्याह ईदृशमिति[१८५] । न च प्रकाशकत्वे सति कथं व्यवस्थेति वाच्यम्, अन्यत्रापि दर्शनादित्याह सतीति[१८६] सार्द्धेन ।

---

* केवलेन ग्रह इति २ पु. पा. ।
† ज्ञानं नात्मानमिति २ पु. पा. ।

प्रकाशकत्वं बाह्ये ऽर्थे शक्त्यभावात्तु नाऽऽत्मनि ।
अन्येन वा ऽनुभावे ऽसावनवस्था* प्रसज्यते ॥१८७॥
तत्र तत्र स्मृतिं दृष्ट्वा सर्वाऽनुभवकल्पना ।
एकेन त्वनुभूतत्वे सर्वं तत्रैव सम्भवेत् ॥१८८॥
तत्रापि स्मृतिरित्येतन्न लोकाऽनुमतं वचः ।
न हि विज्ञानसन्तानं कश्चित् स्मरति लौकिकः ॥१८९॥
'घटादावगृहीते ऽर्थे यदि तावदनन्तरम् ।
अर्थापत्त्या ऽवबुध्यन्ते विज्ञानानि पुनः पुनः ॥१९०॥

---

यत्तु भिक्षुणोक्तं "ज्ञानान्तरेणाऽनुभवो† ऽनिष्टस्तत्रापि हि स्मृति"रिति तदिदमनुभाषते अन्येनेति[१८७]। ज्ञाते घटे पश्चाद्धटे तज्ज्ञाने च स्मृतिर्दृश्यते, सा च गृहीतविषया, तेन ज्ञानमपि गृहीतमुत्पत्त्यवस्थायामित्यभ्युपगन्तव्यम्; तद्यदि ज्ञानान्तरेण गृह्येत ततस्तस्यापि ज्ञानस्य पूर्ववदुत्पत्तौ अग्रहणाज्ज्ञानान्तराऽपेक्षा, तत्रापि तथेत्यनवस्था स्यादिति । यदा त्वेकेनैव घटज्ञानेन घटाकारो ज्ञानाकारश्चाऽनुभूतो भवति तदा तन्मात्रएव सर्वस्मरणसम्भवान्नाऽनवस्थेत्याह एकेनेति[१८८] । परिहरति तत्राऽपीति[१८९] ।

यदेतत्त्वयोक्तं 'तत्रापि हि स्मृति'रिति, तत्किं वीप्साऽभिप्रायं तत्र तत्र स्मृतिरिति, किं वा प्रथमज्ञानमात्राऽभिप्रायम्; प्रथमपक्षस्तावल्लोकविरुद्ध इति। कथमित्यत आह न हीति । यदि तु कश्चित्कदा चिदेवं ज्ञानप्रवाहं स्मरेत्, ततस्तस्य कथं निर्वाहो, ऽत आह घटादाविति[१९०] सार्द्धेन । यो नाम घटज्ञानसमये तज्ज्ञानमप्यर्था-

---

* अन्येन चास्य संवित्तावनवस्थेति २ पु. पा. ।

† ज्ञानान्तराऽनुभव इति २ पु. पा. ।

यावच्छ्रमं ततः पश्चात्तावत्येव स्मरिष्यति'।
तदा त्वकल्पिते ऽप्येवं स्मृतिर्वन्ध्यासुतादिवत् ॥१९१॥
स्मृतिभ्रान्तिश्च या ऽप्यत्र पश्चाज्ज्ञानेषु जायते।
तदैवाऽर्थस्मृतेरेषां तज्ज्ञानादिप्रमाणता ॥१९२॥

---

परया कल्पयति तस्य संभवति स्मरणं, तत्रापि तु नाऽनवस्था यावच्छ्रमग्रहणात्, यावद्ग्रहणं च स्मरणादिति। यस्तु प्राग् ज्ञानप्रबन्धमकल्पयित्वैव पश्चात्स्मरति स वन्ध्यासुतमपि स्मरेदित्याह तदा त्विति[१९१]।

ननु न ब्रूमो ज्ञानप्रबन्धस्य ग्रहणं स्मरणं वा, किं त्ववश्यमुत्पत्तावेव ज्ञानं ग्रहीतव्यं पश्चात्स्मृतिदर्शनात्, तदेवं सति यदि ज्ञानान्तरेण गृह्येत ततस्तस्याऽपि ज्ञानस्वाभाव्येनोत्पत्तावेव ग्रहीतव्यस्य ज्ञानान्तराऽपेक्षणादनवस्थेति, तत्राह स्मृतीति[१९२]।

स्यादेवं, यदि पश्चाज्ज्ञाने स्मृतिः स्यान्न त्वेवम्, अर्थ एव हि तदा स्मर्यते, ज्ञानं तु तदैव प्रतीयते*, स्मरणाऽनुपपत्तेरित्युक्तम्। या त्वियं भवतो ज्ञाने ऽपि स्मृतिः, भ्रान्तिरेषा, ऽर्थस्मरणेन हि संनिकर्षात् ज्ञाने ऽपि स्मृतिभ्रमः; परमार्थतस्तु घटज्ञानं† तज्ज्ञानादौ प्रमाणं पश्चात्त्वस्य ज्ञानविषयत्वं यस्य ज्ञानस्य तत्स्मृतिरेवेति ; तथापि ग्रहणस्मरणप्रबन्धे यावच्छ्रमं तद्बुद्धौ नाऽनवस्थेत्युक्तम्, अतो यदेकविषयज्ञानप्रवाहकल्पनायामेवाऽऽयुःपर्यवसानाद् विषयान्तरसंचारो न स्यादित्युक्तं 'विषयान्तरसंचारस्तथा न स्यात्स चेष्यत' इति, तदयुक्तमि-

---

* प्रमीयते इति १ पु. पा.।

† घटस्मरणमिति क्व चित् पाठः।

यावच्क्रमं च तद्बुद्धिस्ततप्रबन्धे महत्यपि* ।
श्रमाद्रुच्या ऽन्य†संपर्काद्विच्छेदो विषयेष्विव ॥१९३॥
तत्रापि स्मृतिरित्येषा प्रथमे प्रत्यये यदि ।
तन्मात्रग्रहणादेवं नाऽनवस्था प्रसज्यते ॥१९४॥
स्मरणं त्वथ सर्वेषु तत्सिद्धौ ग्रहणं तथा ।
प्रमाणवत्त्वादायातः प्रवाहः केन वार्यते ॥१९५॥
अथ तान्याद्यविज्ञानविषयाणीति कल्प्यते ।
नोत्तरोत्तरबुद्धीनां विशेष उपपद्यते ॥१९६॥

---

त्याह यावच्क्रममिति[१९३] । यथैकस्मिन्विषये चक्षुषा घटादावनुभूयमाने श्रमाद्, रुच्या, विषयान्तरसंसर्गाद्वा पूर्वविषये विच्छेदो भवति तद्वज्ज्ञानकल्पनाविच्छेद इति ।

यदि तु तत्रापि स्मृतिरिति येयं स्मृतिः सा प्रथमज्ञानमात्राऽभिप्राया न वीप्साऽभिप्राया, ततो नास्त्येवाऽनवस्थेत्याह तत्रापीति[१९४]। यदि त्वस्त्येवाऽनन्तरज्ञानस्मरणं तथा सति तत्सिद्धये ग्रहणान्यप्यनन्तानि अवश्यंभावीनीति प्रमाणबलसिद्धो ऽनवस्थाप्रवाहः केन वार्यतइत्याह स्मरणमिति[१९५] । अथाऽनन्तान्यपि स्मरणानि आद्यविज्ञानविषयाण्येव, तेन नाऽस्माकं कदा चिदनवस्थेत्युच्यते, तत्राह अथेति[१९६] । घटज्ञानतज्ज्ञानादिविषयतया विशिष्टरूपाः स्मृतिबुद्धयः कथमेकविषया भवेयुः, अतः स्मृतिबहुत्ववदवश्यं ग्रहणबहुत्वमपि कल्प्यं, तद्भावादेव तु नाऽनवस्थेति ।

---

* प्रबन्धे च सत्यपीति २ पु. पा. ।

† श्रमाद्वाप्यन्येति २ पु. पा.

विज्ञानविषयत्वं च यस्य सर्वासु बुद्धिषु ।
घटविज्ञान*तज्ज्ञानविशेषस्तेन दुर्लभः ॥१९७॥
स्मरन् यथैव विज्ञानं निराकारं स्मरत्ययम् ।
तथा स्मरन् गृहीतार्थं† निराकारतया स्मरेत् ॥१९८॥
ज्ञानपृष्टेन यो ऽप्यूर्ध्वं परामर्शो भवत्यसौ ।
तस्याऽर्थेष्वभ्युपायत्वान्न तु ग्राह्यत्वकारितः ॥१९९॥

---

इतश्च न ज्ञानविषयत्वं बुद्धीनामित्याह विज्ञानेति[१९७] । घटज्ञानमपि ज्ञानविषयं तज्ज्ञानमपि तथेति को ऽनयोर्विशेषः । ननु विषयाकारभेदाद्विशेषः, प्रथमज्ञानस्य घटो विषयः, तत्तज्ज्ञानस्य तत्तज्ज्ञान‡मित्येवं न विज्ञानाकारादन्यो विषयाकारः, अन्यत्वे त्वात्मग्राहिता ज्ञानस्य न स्यात्, अतो ज्ञानस्याऽतिरेकेण विषयाकाराऽभावात् सर्वेषां ज्ञानाकारत्वाद् विषयज्ञानतज्ज्ञानविशेषो न सिध्यतीति विपरीतप्रसङ्गाऽऽपादनमिति । एवं चाऽयमप्यपरो दोष इत्याह स्मरन्निति[१९८] । यदा हि घटज्ञाने ऽपि घटाकारस्याऽभावाज् ज्ञानाकारमात्रमेवाऽनुभूतं तदा यथैवाऽयं न स्मरामि मया को ऽपि गृहीतो ऽर्थ इत्येवं घटाकारनिर्मुक्तं ज्ञानमेव निराकारं स्मरति तथैवार्थमप्यनुभूतं स्मरन् निराकारमेव स्मरेदिति ।

यत्तु ज्ञानपृष्टेनोर्ध्वं परामृश्य परस्मै कथनादनुभवो ऽपि तथैवेत्युक्तं, तदनुभाष्य परिहरति ज्ञानपृष्टेनेति[१९९] । विषयमात्रे चा-

---

* विषयज्ञानेति २ पु. पा. ।

† गृहीत्वा ऽर्थमिति का. पा. ।

‡ तत्तु ज्ञानस्य तत्तु ज्ञानमिति २ पु. पा. ।

प्रत्यासन्नत्वसम्बन्धौ* ग्राह्यत्वाऽसंभवाच्च्युतौ ।
विषयत्वेन वा ऽप्येतौ स्तः किं देशाऽविभागतः॥२००॥
अर्थाऽऽकारस्य यो ऽप्युक्तो मिथ्याज्ञानेष्वसंभवः ।
देशकालाऽन्यथामात्रसंभवः केषु चित् कृतः ॥२०१॥

---

ऽनुभूते भवत्येवैवं परामर्शः, स हि तदानीं परस्मै कथयन्नर्थं स्मृत्वा तद्विषयं ज्ञानं तदैव प्रमाय कथ्यमानस्याऽर्थस्य ज्ञानोपायत्वात्तत्प्रमाणकत्वात् तत्पुरःसरमेव कथयितुं ज्ञानपृष्ठेना†ऽनुभवादिति ।

यत्तूक्तं, संवेदनान्नीलं न भिन्नं; न ह्यनात्मनः संवेदनं संभवति, नीलवित्तौ पीतवत्, संबन्धाऽभावाच्च ग्राह्यलक्षणमपि न युज्यते, मम तु प्रत्यासन्नं तदात्मभूतम्, अत एव च संबन्धं ग्राह्यं भवतीति; तत्राह प्रत्यासन्नत्वेति[२००] । द्वयमप्येतदेवाऽऽत्मनो यथोक्तेन न्यायेन ग्रहणाऽसंभवादेव‡ भ्रष्टम्, अतो बलादनात्मनो ऽसंबद्धस्यैव च ग्रहणमुपेतव्यमिति। यद्वा तादात्म्याऽभावे ऽपि विषयविषयिभावादेव ज्ञानाऽर्थयोः प्रत्यासत्तिसंबन्धौ सिद्ध्यत इत्याह विषयत्वेनेति । देशो, विभागः, तादात्म्यं, विषयत्वं च ज्ञानफलभागित्वं, तदेव च ग्राह्यलक्षणं, नान्यत्संभवतीति शास्त्रदीपिकायाम् उपपादितम् । ज्ञानं हि स्वकारणवशादर्थविषयफलजनकस्वभावमुत्पद्यतइति न किं चिदनुपपन्नमिति ।

अत्र पूर्वोक्तमनुभाष्य परिहरति अर्थाऽऽकारस्येति[२०१] । केषु चित्तावद् बुद्धिभ्रमेषु देशकालाऽन्यथाभावमात्रेण बाह्याऽर्थसद्भावो निरालम्बनवादे वर्णित इति। कथमसंनिहितमवर्त्तमानं च ज्ञानं जनयेत्,

---

* प्रत्यासन्नत्वसंबद्धाविति २ पु. पा. ।

† कथयति ननु ज्ञानपृष्ठेनेति ३ पु. पा. ।

‡ ग्रहणसंभवादेवेति ३ पु. पा. ।

प्रत्यक्षादन्यविज्ञानमतीताऽनागतैरपि ।
जन्यते ऽर्थे भवन्तीषु वासनास्वसतीषु वा ॥२०२॥
यः पुनर्नाऽनुभूतो ऽर्थो न वा ऽप्यनुभविष्यते ।
वासनाऽभावतस्तत्र तवाप्यनुभवः कथम् ॥२०३॥
विना ऽपि वासनातश्चेद्बुद्धिरुत्पद्यते ततः ।
वासनाया निमित्तत्वमभ्युपेतं विरुध्यते ॥२०४॥
वासना चेद्भवेत्तत्र सा च संवित्तिपूर्विका ।
तथा सति च पूर्वत्र गृहीतः क्वाप्यसौ ध्रुवम् ॥२०५॥
एवं च नैव वक्तव्यमत्यन्तभवनं क्व चित् ।
अन्यथाऽनुपपत्त्या हि सिद्धा जन्मान्तरे ऽस्तिता॥२०६॥

---

इदमपि तत्रैव दत्तोत्तरम् 'एष प्रत्यक्षधर्मे' इत्यत्रेत्याह प्रत्यक्षादिति[२०२] । भवन्तीषु वासनासु स्मृत्यात्मकं स्वप्नादिज्ञानमनागताऽनुमानादि च सतीष्वेव लिङ्गादिवशादिति ।

ननु क्व चिदनुभूतं स्वप्ने गृह्यते, ऽत आह यः पुनरिति[२०३] । तुल्यो ऽयं दोषस्तवाऽपि, वासनाधीनत्वादाकाराणाम्; अननुभूते च वासनाऽसंभवादिति । विना ऽपि वासनया तदाकारबुद्ध्यङ्गीकरणे पूर्वाऽभ्युपगमविरोध इत्याह विना ऽपीति[२०४] । वासनाऽभ्युपगमे तस्याः पूर्वाऽनुभवपूर्वकत्वाद् ध्रुवम् असावर्थः क्वापि देशे काले चाऽनुभूत इत्यभ्युपगन्तव्यमित्याह वासना चेदिति[२०५] । एवं च न क्व चिदपि ज्ञाने ऽर्थस्यात्यन्ताऽसत्त्वं वक्तव्यमित्याह एवं चेति[२०६] । किं पुनस्तस्य सद्भावे प्रमाणं, न हि दोषतुल्यतया ऽर्थसिद्धिरत

दुष्टत्वेन च विज्ञानमन्यथा ऽपि व्यवस्थितम् ।
पृथिव्यादिषु गृह्णीयादाकारं तन्निबन्धनम् ॥२०७॥
तान्यपास्य तु नैवाऽर्थे क्व चिदाकारकल्पना ।
न ज्ञानं ह्यनवष्टम्भमात्मनं लब्धुमर्हति ॥२०८॥

---

आह अन्यथेति । स्वप्नज्ञानं तावत् प्रत्युत्पन्नकारणाऽभावादनन्तरदिवसाऽनुभूतस्य च स्वप्ने वर्त्तमानवदाभासात् संस्कारमात्रजं स्मरणमेव, ततश्च यदप्यस्मिन् जन्मन्यननुभूतं स्वप्ने ऽनुभूयते तस्याऽप्यन्यथाऽनुपपत्त्या जन्मान्तरे ऽनुभवकल्पनात्सिद्धमस्तित्वमिति ।

ननु वाह्यं चेद्वस्तु स्याद् यथाव्यवस्थितमेव ग्रहीतव्यम्, अन्यथाग्रहणे न किं चित्कारणम्; अतो ऽन्यथाकल्पनानिबन्धन एवाऽयमाकारो ज्ञानाकारो वा न वाह्य* इत्यत आह दुष्टत्वेनेति[२०७] । नैतावता काल्पनिकत्वं भवति, दुष्टत्वेन हि ज्ञानं, पार्थिवादिष्वेव हि वस्तुषु पृथिव्यादिनिबन्धनं परिणतिविशेषाऽधीनं वाह्यमेव शुक्त्याकारमन्यथा ऽपि स्थितमन्यथा रजताद्यात्मना गृह्णातीति युक्तं, न पुनः काल्पनिकत्वं ज्ञानाकारत्वं वा, यथा ऽसत्ख्यातिवादिनो मन्यन्ते, यथा वा ऽऽत्मख्यातिवादिन इति । कस्मादित्याह तानीति[२०८] । पृथिव्यादीनि वाह्यान्यपास्य न क्व चिदाकारकल्पनेति । तदेव कथमित्याह न ज्ञानमिति । न हि भ्रान्तिज्ञानमपि शुक्तिशकलाद्युपष्टम्भनशून्यमुत्पद्यते, अत्यन्ताऽसतस्तु ज्ञानाकारस्य वा वहिष्टेनाकारकल्पनायां शुक्तिकादिसन्निधिरकिंचित्करी स्यात्, अतो वहिरवस्थितमेव शुक्तिकादिकं वहिरवस्थितेनैव व्यक्त्यन्तरगतेन रजताद्याकारेण गृह्यतइति ।

---

* वाह्याऽऽकार इति २ पु. पा. ।

विज्ञानस्यैव वा कार्यं यद्येषो ऽन्ये च कल्पिताः* ।
विशेषः को ऽत्र येनाऽयमत्यन्ताऽसन्नितीष्यते ॥२०९॥
तस्माद् भ्रान्तिरपि त्वेषां कल्पयन्त्यर्थ†मेव नः ।
कल्पयत्यन्यथा सन्तं न त्वात्मानं व्यवस्यति ॥२१०॥
ततश्च बाधकज्ञानाद्वाचोयुक्तिरियं भवेत् ।
अर्थे ऽन्यथापि सत्येष धिया ऽऽकारः‡ प्रतीयते ॥२११॥
द्विचन्द्रादिमतिष्वेवं§ तारकादिमतौ तथा ।

---

किं च, यो ऽयं स्वप्नादिविभ्रमेष्वाकारो ऽवभासते, ये चाऽन्ये जाग्रद्बुद्धिषु स्तम्भाद्याकाराः ते सर्वे यदि ज्ञानस्यैवाकारा भवतां, ततः सर्वेषां ज्ञानाकारतया विद्यमानत्वादस्य स्वप्नाऽवभासस्याकारस्य को विशेषः, येनाऽयमत्यन्ताऽसन्नित्याह विज्ञानस्येति[२०९]। यदि सर्वत्र विद्यमानमेव बाह्यं गृह्यते, कथं तर्हि भ्रान्तित्वं, कल्पना हि भ्रान्तिरसदारोपश्च कल्पना विद्यमानस्यैव भासने बाधकेन वा किं कृतम् ; इत्यत आह तस्मादिति[२१०] । यस्मादेवं सर्वत्र बाह्यमस्ति तस्मादपि कल्पयन्ती कल्पनारूपा ऽपि सती अर्थमेवाऽन्यथा स्थितमन्यथा कल्पयति, तेन च रूपेण विद्यमानमेव विद्यमानतया कल्पयति न त्वात्मानं बहिष्ट्वेन, नाऽत्यन्ताऽसन्तं सत्त्वेनेति। बाधो ऽप्येतावतैव॥ सिद्ध्यतीत्याह ततश्चेति[२११] । द्विचन्द्रादिबोधे ऽप्ययमेव न्याय इत्याह द्विचन्द्रादिमतिष्विति[२१२] ।

---

* विज्ञानस्यैव वा ऽऽकारो यद्येषो ऽन्ये च कल्पिता इति २ पु. पा. । विज्ञानस्यैव वा कार्यं यदि वा ह्येष कल्पिता इति पाठान्तरम् ।

† कल्पयत्यर्थमिति का. पा. । ‡ ज्ञेयाऽऽकारं इति पाठान्तरम् ।

§ द्विचन्द्रादिष्वपि चेनमिति १ पु. पा. । ॥ एतावानेवेति १ पु. पा. ।

स्त्रीत्वाद्यन्यत्र दृष्टं स्यात् कथं चिद्वेह संभवेत् ॥२१२॥
शब्दमात्रप्रतीत्या वा, दृष्टैर्वा कैश्चिदिङ्गनात् ।
संस्त्यानप्रसवस्थानैर्यथा पातञ्जले मते ॥२१३॥
तेन लिङ्गत्रयस्याऽत्र सद्भावः स्यात् प्रमाणवत् ।
अपेक्षाभेदतश्चाऽत्र विरोधोऽपि न विद्यते ॥२१४॥

---

यत्तु नक्षत्रं तारका तिष्य इति लिङ्गत्रयमेकत्र विरुद्धमित्युक्तं,* तत्राह तारकादीति पादत्रयेण । प्राणिधर्मत्वाल्लिङ्गत्रयम् अन्यत्र विद्यमानमेवाऽत्र भ्रान्त्यैवाऽवगम्यते; कथं पुनरसति बाधके भ्रान्तित्वम्, सत्यं, यदि बाधो न स्यात्, पदप्रयोगवेलायामवगतमप्यप्राणिषु लिङ्गं प्रत्यक्षाद्यनुपलब्ध्या बाध्यतएवेति । मतान्तरमाह कथं चिदिति । केन चित् प्रकारेणेति । तदेव दर्शयति शब्दमात्रेति[२१३] वाऽन्तेन । शब्द एव प्रमाणमिति । न त्वेतद्युक्तं, पदमात्रस्याऽप्रमाणत्वात्, अतः प्रमाणान्तरमाह दृष्टैरिति । इङ्गनं कल्पनं, ये स्त्रीत्वादिभिः प्रायः सहचारिणो धर्मा दृष्टाः तैरिहाऽपि लिङ्गत्रयं कल्प्यते ; किमिदं कल्पनम् अनुमानमिति चेत्, न, प्रत्यक्षाऽनुपलब्धिविरोधात् ; कथं चैकाविरुद्धं लिङ्गत्रयमनुमीयते, सत्यं, तच्छब्दप्रयोग एवात्र कल्पनमित्युच्यते, स्त्रीत्वादिषु संस्त्यानप्रसवस्थानाख्यगुणविवक्षायां स्त्रीलिङ्गादिवचनः शब्दोऽप्राणिषु नक्षत्रादिषु गौणः प्रयुज्यते ; संस्त्यानं रजोबाहुल्यं स्त्रीधर्मः, प्रसवः सत्त्वबाहुल्यं पुंधर्मः, स्थानं तमोबाहुल्यं नपुंसकधर्म इति । ततश्च एकस्मिन्नप्यर्थे निकृष्टरजःपदार्थान्तरापेक्षया यदा रजसः समुत्कर्षो विवक्ष्यते तदा स्त्रीलिङ्गशब्दः प्रयुज्यते, तथा पुँल्लिङ्गो नपुंसकलिङ्गश्चेति । लिङ्गत्रयमपि संभवत्येव गौणमित्याह तेनेति[२१४] । ननु विरुद्धमेकत्र लिङ्गत्रयमत आह

---

* श्लो. वा. शून्यवादे श्लो. ५८ ।

कुणपादिमतौ चैवं सार्वरूप्ये व्यवस्थिते ।
वासनाः सहकारिण्यो व्यवस्थाकारदर्शने ॥२१५॥
स्वप्रत्ययाऽनुकारो हि बह्वाकारेषु वस्तुषु ।
निर्द्धारणे भवेद्धेतुर्नाऽपूर्वाऽऽकारकल्पने ॥२१६॥
तथा दीर्घघटत्वादौ भिन्नाऽपेक्षानिबन्धना ।
आकारभेदसम्पत्तिरविरुद्धा भविष्यति ॥२१७॥

---

अपेक्षेति । उक्तमिदं न मुख्यं लिङ्गत्रयमस्ति, गौणं चाऽभिधानं विरुध्यते किं, भवति हि निकृष्टसत्त्वाद्यपेक्षया कुत्रापि सत्त्वादीनामुत्कर्षविवक्षा, तेनाऽपेक्षितत्वादुत्कर्षस्य तद्भेदादविरोध इति ।

यत्त्वेकस्यां प्रमदायां परिव्राट्कामुकशुनां कुणपादिमतिभेदो ऽनुपपन्न इत्युक्तं, तत्राह कुणपादीति[२१५]। कुणपादिरूपाणि सर्वाण्येव प्रमदायां सन्ति, परिव्राजकादिस्तु स्ववासनाऽनुसारेण किं चिद्रूपं पश्यति न सर्वे सर्वाणि; परिव्राजको हि विषयवैराग्याऽनुबन्धिचेताः कामिनीरूपं, श्वा पुनरामिषगन्धिमनाः तालफलायमानस्तनशालिनीं कवलयितुम् इच्छति; सेयमेषामात्मीयवासनासहकारिकारिता विकल्पव्यवस्थेति ।

नन्वेवमेवास्तु, किमर्थाऽभ्युपगमेनाऽत आह स्वप्रत्ययेति[२१६] । स्वहेतुप्रत्ययाऽनुकारो हि वासना स्वकारणभूतं ज्ञानमनुकरोति, यथाविधेन ज्ञानेन जन्यते तथाविधमेव ज्ञानं जनयतीत्यर्थः ; तदसौ बह्वाकारे वस्तुनि पूर्वाऽभ्यस्ताऽऽकारनिर्धारणे कारणं भवति, न त्वपूर्वाकारं विकल्पयति ; न ह्यत्यन्तमन्मथाऽऽक्रान्तस्वान्तो ऽपि घटं कामिनीं पश्यति, श्वा वा भक्ष्यमिति ; तथैकस्मिन्नपि ह्रस्वादिबुद्धिरपेक्षाभेदादविरुद्धा ; तथा युगपद्ग्राहकाणां घटत्वपार्थिवत्वाद्याकारभेदसंवित्तिर्देशकालव्यपेक्षशब्दविशेषस्मरणाऽपेक्षया न विरुध्यत इत्याह तथेति[२१७] ।

नाऽनेकाऽऽकारसंवित्तेर्निराकारत्वकल्पना ।
युक्ता, प्रतीतिभेदात्तु बह्वाकारत्वसम्भवः ॥२१८॥
संवित्तेश्चाऽविरुद्धाना*मेकस्मिन्नप्यसम्भवः† ।
एकाऽऽकारं भवेदेकमिति नेश्वरभाषितम् ॥२१९॥
तथैव‡ तदुपेतव्यं यद्यथैवोपलभ्यते ।
न चाप्यैकान्तिकं तस्य स्यादेकत्वं च वस्तुनः ॥२२०॥

---

यत्त्वेकस्याऽनेकाकारत्वं विरुद्धं, ततो ऽलीक एवाकार इत्युक्तं, तत्राह नाऽनेकेति युक्ताऽन्तेन[२१८]। किं तर्हि युक्तमत आह प्रतीति।

भवत्वेकस्याऽप्यविरुद्धाऽनेकाकारसम्भवः, विरुद्धानां तु दीर्घ-ह्रस्वाद्याकाराणामपेक्षाभेदादपि कथमेकत्र सम्भव इत्यत आह संवित्तेरिति[२१९] । संविन्निष्ठा हि वस्तुव्यवस्थितिः, अतस्तद्बलेन दीर्घादीनामप्यपेक्षाभेदादेकत्रापि सम्भवो नाऽनुपपन्न इति । यदुक्तं प्रतीतिभेदादेकस्यापि बह्वाकारत्वमिति, तद्विवृणोति एकेति । न ह्येकमेकाकारमेवेति किं चन प्रमाणमस्ति, तेन यद्यादृशमेकाकारमनेकाकारं नोपलभ्यते तत्तथैवाऽङ्गीकर्त्तव्यमिति; किं त्वेकत्वमपि तस्य वस्तुनो न केन चिद्व्यवस्थापितं, यतो ऽनेकाकारता न स्यात्, तदपि ह्यनेकधर्ममवगम्यमानं तेनात्मना ऽनेकतामपि भजतइत्याह न चेति[२२०]। सति चाऽनेकाकारत्वे युक्ता तत्तदाकारप्रतीतिव्यवस्था, उद्भ-

---

* विरुद्धानामिति २ पु. पा. ।

† एकस्मिन्नपि सम्भव इति २ पु. पा. ।

‡ तथापीति का पु. पा. ।

'तस्माद्देशादिसद्भावनिमित्तैः प्रत्ययैः पृथक् ।
वस्त्वाकाराः प्रतीयेरन्नुद्भवाऽभिभवात्मकाः ॥२२१॥
युगपद्ग्राहकाणां च यो यदाकारवाचिनम् ।
शब्दं स्मरति तेनासावाकारः संप्रतीयते' ॥२२२॥
नित्यं सत्सु तथा लोके रूपादिषु घटे पृथक् ।
चक्षुराद्यनुरोधेन संवित्तिर्व्यवतिष्ठते ॥२२३॥
एवमेव घटत्वादौ सर्वान् प्रति भवत्यपि ।
वाचकस्मृतिभेदेन संवित्तिर्व्यवतिष्ठते ॥२२४॥
तस्माद् बहिः स्थितो ऽप्यात्मा नराणां चक्षुरादिभिः ।
प्राप्य वा ऽप्राप्य वा बुद्धेर्विषयत्वेन कल्प्यते ॥२२५॥

---

वाऽभिभवाऽपेक्षाभेदादित्युपसंहरति तस्मादिति[२२१] द्वयेन । देशकालाऽपेक्षया वस्त्वाकाराणमुद्भवाऽभिभवौ, विपिने हि सायुधं पुरुषं पश्यतो हिंस्ररूपम् उद्भूतं प्रतिभासते, ग्रामनगरेषु पालकरूपं, तथा दीपप्रभायां नक्तंदिवं रूपस्पर्शयोरुद्भवाद्ग्रहणं, युगपद्ग्राहकाणां त्वेकस्मिन्नपि देशे काले च शब्दविशेस्मरणवशादाकारविशेषोपलब्धिरिति । तत्रैव दृष्टान्तमाह नित्यमिति[२२३]। दार्ष्टान्तिके योजयति एवमेवेति[२२४]। भवत्यपीति । विद्यमाने ऽपीत्यर्थः ।

नन्वर्थान्तरभूतं ग्राह्यं केन संबन्धेन ज्ञानेन प्रकाश्यते, विषयत्वादिति चेन्न, तस्यैव निर्निबन्धनत्वात्; भिन्नत्वाऽविशेषे हि केन हेतुना कश्चिदेवाऽर्थः कस्य चिज्ज्ञानस्य विषयो न सर्वस्य सर्वो, ऽत आह तस्मादिति[२२५] । यस्मादेवं न कथं चिज्ज्ञानस्यात्मविषयता सं-

वदन्ति लौकिका यच्च यादृग् ज्ञानं तथा बहिः।
ते पुनर्ज्ञान*संवित्त्या तथाऽर्थं प्रति जानते ॥२२६॥
ग्राहकत्वेन विज्ञानं यथार्थं नः समर्पयेत्।
तादृगर्थः स इत्येवं तेषां वा तदुपायतः ॥२२७॥
लैङ्गिकाऽसत्त्वमप्राप्तैरेतैर्बाह्याऽर्थ†वादिभिः।
ज्ञानाऽनुभवमुक्रम्य बाह्य एव प्रतीयते ॥२२८॥

---

भवति तस्माद्बहिष्ठ एवाऽर्थो ऽवश्यं प्रकाशयितव्यः, स च ज्ञानकारणचक्षुरादिवशात्कश्चिदेव कस्य चिद्विषयो न सर्वः सर्वस्य; तानि हि क चिदेवार्थं प्राप्याऽप्राप्य वा बाह्यसामर्थ्येन बुद्धेर्विषयत्वेनोपनयन्तीति।

यत्तु ज्ञानाकारत्वे नीलादेर्ज्ञानग्रहणस्य कारणत्वमुक्तं, नीलो ऽर्थो ऽयं, यतो मे ऽत्र तद्रूपा जायते मतिरिति वक्तारो व्यवहरन्तीति; तदनुभाष्य परिहरति वदन्तीति[२२६]। न ते ज्ञानं साकारं विदित्वा ततः पश्चात्तथाभूतमर्थं प्रतिजानतइति। कथं तर्हीत्याह ग्राहकत्वेनेति[२२७]। ज्ञानपुरस्कारस्तावन्न तत्पूर्वकाऽर्थग्रहणात्, किं तु तदुपायत्वादर्थस्य तत्प्रमाणकत्वादिति यावत्। नीलाकारता च तत्समर्थकता नीलाकार ज्ञानमिति नीलसमर्थकमित्यर्थः। तदेवं प्रत्यक्षस्य बहिर्वृत्तिसामर्थ्यात्तद्विरुद्धं निरालम्बनाऽनुमानं नाऽर्थापह्नवायाऽलमिति आनुमानिकं बाह्यार्थाऽसत्त्वम् अप्राप्तैर्बाह्याऽर्थवादिभिर्ज्ञानाऽनुभवमुक्रम्य बाह्ये प्रयत्यते, बाह्यमेवालम्बनं निश्चीयते; तदाह लैङ्गिकेति[२२८]।

---

* ते ऽपि न ज्ञानेत्यादिपाठः २ पु.।

† अतो बाह्याऽर्थेति २ पु. पा.।

यथा लोके च तद्बुद्धिर्वाच्यमेवं परीक्षकैः ।
न यादृगन्तराकारस्तादृग् बाह्यो ऽवकल्पते ॥२२९॥
'उत्पद्यमाना गृह्येत धीरर्थग्रहणे यदि ।
पूर्वपक्षस्य किं सिद्धं' कथं चाऽर्थान्तरं वदेत् ॥२३०॥
बाह्याऽर्थवादिनं ब्रूते भवान् किं नैवमिच्छति ।
प्रतिबन्धो न तस्यास्ति गृह्णात्यर्थान्तरं यदा ॥२३१॥

---

ननु यद्यपि प्रत्यक्षादिभिः प्रमाणैर्बाह्यमवस्थाप्यते तथापि परीक्षकास्तं युक्तितो ऽसंभावयन्तस्तमपह्नुवते, अतो दोषो, ऽत आह यथेति[२२९] । लौकिकप्रमाणाऽनुसरणमेव परीक्षकाणां तत्त्वं, तद्विपर्यये चाऽपरीक्षका एव स्युरिति। लोके च नीलादिवित्तौ यादृगन्तराकारः, आन्तरस्य ग्राहकस्य यादृगाकारो ऽहमिति, न तादृशो नीलादिरवगम्यते, किं त्वसाविदं नीलमिति बाह्यो ग्राहकाद्भिन्नः प्रतीयत इत्याह न यादृगिति ।

"उत्पद्यमानैवाऽसौ ज्ञायते ज्ञापयति चार्थान्तरं प्रदीपवदिति यद्युच्येते"ति* चोद्यभाष्यमाक्षिपति उत्पद्यमानेति[२३०] पादत्रयेण । न ह्यर्थग्रहणवेलायां बुद्धेर्ग्रहणमर्थापह्नवस्योपयोगीति । न केवलं पूर्वपक्षाऽनौपयिकमिदं प्रत्युत विपरीतमिदमर्थान्तरं ज्ञापयतीति भाष्यवचनमर्थापह्नवस्येत्याह कथमिति । समाधत्ते बाह्यार्थेति[२३१] । नायं स्वपक्षोपन्यासः, किं तु शून्यवादी बाह्यार्थवादिनमेवं चोदयति, किं भवानर्थग्रहणसमये ज्ञानस्य प्रतिबन्धाऽभावं नेच्छति येन तदा तस्याऽग्रहणं ब्रवीति, न ह्यप्रतिबद्धस्याऽग्रहणं

---

* शा. भा. पृ. ९ प. १८ ।

'उत्तरं ग्राहकाऽभावाल्लिङ्गाऽभावाच्च नास्ति नः ।
तदा ग्रहणमित्येत''दन्यतर्केषु चोच्यते ॥२३२॥
तेषु तर्केषु* विज्ञानमर्थकाले ऽवगम्यते' ।
तथा सत्यर्थनाशः स्यादित्येतदुपदिश्यते ॥२३३॥
नन्वित्येतदसम्बद्धं परेष्टस्यैव चोदनात् ।

---

संभवति, ग्रहणे च सति तस्यैवाऽयमाकारो भवतीत्यर्थाऽभावसिद्धि-रिष्टा सेत्स्यतीति ।

परिहारभाष्यार्थमाह उत्तरमिति[२३२] पादत्रयेण । सत्यं, नास्ति प्रतिबन्धः, तथापि ग्राहकाऽभावान्न तदा गृह्यते,लिङ्गाऽभावाच्च ग्राह-काऽभावः, ज्ञातत्वं लिङ्गं तदा विद्यते च; तदिदमुक्तं "न ह्यज्ञाते ऽर्थे कश्चिद्बुद्धिमुपलभते, ज्ञाते त्वनुमानादवगच्छती"†ति ।

चोद्यभाष्यस्याऽर्थान्तरमाह अन्येति सपादेनाऽर्द्धेन । वैशेषिका-दीनां बाह्याऽर्थवादिनामेवेदं चोद्यं, ते ह्यर्थग्रहणवेलायामेव ज्ञानमपि गृह्यतइति मन्यन्तइति । किमिति तर्हि तन्निराकरणमत आह तथा सतीति[२३३] । ज्ञानस्य ह्युत्पत्तिसमये ग्रहणाऽभ्युपगमे निरा-कारस्य ग्रहणाऽभावाज्ज्ञानमेवाकारवत्स्यादित्यर्थनाशः स्यात्,अतो ऽर्थाऽभ्युपगमविरोधी ज्ञानग्रहणाऽभ्युपगमस्तेषामित्येतदनेनोच्यते इति ।

"ननूत्पन्नायामेव बुद्धौ अर्थो ज्ञात इत्युच्यते नाऽनुत्पन्नायाम्, अतः पूर्वं बुद्धिरुत्पद्यते पश्चाज्ज्ञातो ऽर्थ"‡ इति चोद्यभाष्यमाक्षिपति नन्विति[२३४] । सिद्धान्तवादिनो हीदमिष्टं, बुद्ध्युत्पत्तावर्थोपल-

---

* सर्वेष्विति पाठान्तरम् ।

† शा. भा. पृ. ९ पं. २० ।

पौर्वापर्यविभागो ऽपि प्रागुक्तेन विरुध्यते ॥२३४॥
क्षणिकत्वेन युक्तं स्याज् ज्ञातत्वमथ चेत्तदा ।
भूतकालाश्रयाद् ब्रूयाद् वृथोक्तस्य पुनर्वचः ॥२३५॥
अत्रापि न स्वसिद्धान्तमूचे व्याजात्* परस्य तु ।
भ्रान्तत्वादन्यथा पक्षं गृहीत्वेति स्म पृच्छति ॥२३६॥

---

र्धिरिति, शून्यवादिनस्त्वनिष्टमेवाऽर्थग्रहणं, तदस्यैवं चोदयतः स्वपक्षहानिः परपक्षाऽभ्युपगमश्चाऽऽपद्येतेवेति । यदपि पूर्वं बुद्धिरुत्पद्यते पश्चाज् ज्ञातो ऽर्थ इति पौर्वापर्याऽभिधानं, तदपि पूर्वोक्तेन विरुद्धम, "उत्पद्यमानैवाऽसौ ज्ञायते ज्ञापयति चाऽर्थान्तर"मिति हि यौगपद्यमुक्तम; तदाह पौर्वापर्येति । विरोधपरिहारं शङ्कते क्षणिकत्वेनेति[२३५] । यौगपद्यमेवाऽत्राप्युच्यते, पूर्वं बुद्धिरुत्पद्यतइति हि पूर्वस्मिन्काले बुद्धेरुत्पद्यमानत्वमुक्तं; पश्चाज्ज्ञातो ऽर्थ इति पश्चात्काले ऽर्थस्य ज्ञातत्वं भूतकालप्रत्ययनिर्देशेनोक्तं; तदनेन प्रकारेण बुद्ध्युत्पत्तिसमयएवाऽर्थस्य ज्ञानविषयत्वमुक्तम् । यदेव हि पूर्वस्मिकाले ज्ञायमानं भवति तदेवोत्तरस्मिन्काले ज्ञातं भवति, अवश्यं च यौगपद्यमेव वक्तव्यं, न हि बुद्ध्युत्पत्तिसमये बुद्धिमुत्पादितवतो ऽर्थस्य पश्चादवस्थानं सम्भवति क्षणिकत्वात्, न चाऽनवस्थितस्य ग्रहणं सम्भवति प्रत्यक्षेण, तस्मात्पश्चाद्ग्रहणाऽसम्भवादिहापि यौगपद्याभिधानादविरोध इति ।

दूषयति वृथेति । उक्तस्य हि यौगपद्यस्य पुनर्वचनमनर्थकमिति । समाधत्ते अत्रापीति[२३६] । पूर्वचोद्यवदत्रापि न स्वपक्षं ब्रूते, यतः

---

* वाक्यादिति २ पु. पा. ।

सहोत्पत्त्युपलब्धा* हि ज्ञानस्यैकान्ततः स्थितिः† ।
प्रागूर्ध्वं वा ऽर्थसंपत्तेर्युगपद्वेति चिन्त्यते ॥२३७॥
एष चाऽर्थस्य संपत्तेः पश्चाज् ज्ञानाऽवबोधनम् ।
ब्रवीतु नूनमेतस्य पश्चादुत्पद्यते ऽपि तत् ॥२३८॥
न चैतच्छक्यते तस्मादुत्पत्तेरपकर्षणम् ।
करोमि तावत् तत्काला संवित्तिरपि सेत्स्यति ॥२३९॥
प्राक् च तद्ग्रहणे‡ सिद्धे बाह्याभ्यन्तरयोर्ध्रुवम् ।
विवेकाऽदर्शनं, तस्मादिदं पूर्वं च चोदितम् ॥२४०॥

---

परपक्षाऽङ्गीकरणं स्यात्, किं तु ज्ञाते त्वनुमानादवगच्छतीति सिद्धान्तिनो वाक्याद् भ्रान्तः सिद्धान्तिपक्षमन्यथा गृहीत्वा ननूत्पन्नायामिति चोदितवानिति ।

कथमस्माद्वाक्याद् भ्रान्तिः कीदृशी चाऽत आह सहेति[२३७] त्रयेण। एवं शून्यवादी भ्राम्यति, ज्ञानस्योत्पत्तिरुपलब्धिश्च द्वयं युगपदिति तावदविवादम्, तत्त्वर्थोपलब्धेः प्राक् पश्चाद्युगपद्वेत्येतावच्चिन्त्यम् ; एवं च मीमांसको ऽर्थसंवित्तेः पश्चाज् ज्ञानसंवित्तिं ब्रवीति, ज्ञाते त्वनुमानादवगच्छतीति; तदस्य ज्ञानोत्पत्तिरपि पश्चादेवाऽभिमता, न च तद्युक्तम्; अतो ज्ञानोत्पत्तिं तावदर्थसंवित्तेः प्रागपकर्षामीति मत्वा ननूत्पन्नायामित्याह, तदपकर्षे च तत्संवित्तिरपि प्रागेव सिद्ध्यतीत्यभिप्राय इति ।

भवतु वा प्राक् संवित्तिः, तथापि किम्,अत आह प्रागिति[२४०]

---

* उपलब्धी हीति २ पु. पा. ।

† स्थिती इति २ पु. पा. ।

‡ प्राकृतग्रहणे इति २ पु. पा. ।

युगपद् गृह्यमाणे ऽपि नाऽऽकारो ऽर्थस्य लक्ष्यते* ।
तस्मादर्थस्य संवित्तिः पूर्वं यत्नेन साध्यते ॥२४१॥
यस्त्वेतस्योत्तरो ग्रन्थः प्रागेवाऽसौ निरूपितः ।
नन्वेत†त्साधनं साक्षात्पूर्वं बुद्धेरबोधने ॥२४२॥

---

दर्शनमन्तेन । न हि निराकारोपलब्धिरस्ति, न चाऽर्थज्ञानयोर्विवेकेनाऽऽकारद्वयं दृश्यते, ततो ज्ञानस्यैवाऽयमाकार इति अर्थाऽभावसिद्धिरिति । तस्मात्स्वपक्षोपयोग्येवेदं चोद्यमित्याह तस्मादिति[२४०] । चोदितमिति वक्ष्यमाणेन सम्बन्ध इति । यदपि पूर्वमुत्पद्यमानैवाऽसौ ज्ञायते ज्ञापयति चाऽर्थान्तरमिति यौगपद्यचोद्यं, तदपि ज्ञानाकारसिद्ध्यर्थमेवेत्याह पूर्वमिति । एतदेव विवृणोति युगपदिति[२४१] । यस्मादेव ज्ञानस्य प्राक् संवित्तौ तस्यैवाऽऽकारो भवति तस्मादेव सिद्धान्तवादी "सत्यं पूर्वं बुद्धिरुत्पद्यते न तु पूर्वं ज्ञायत" इति अर्थस्यैव पूर्वं संवित्तिर्न बुद्धेरिति साधयतीत्याह तस्मादिति ।

कथं पूर्वं न ज्ञायत इत्यत आह भाष्यकारः "भवति हि कदा चिदेतद्यज्ज्ञातो ऽर्थः सन्नज्ञात इत्युच्यत"‡ इति । तदिदं 'न स्मरामि मया ज्ञातो ऽपी'त्यत्र व्याख्यातमित्याह यस्त्विति[२४२] ।

---

* लभ्यते इति २ पु. पा. ।
† न त्वेतदिति २ पु. पा. ।
‡ शा. भा. पृ. १० प. १ ।

न परामृश्यते ऽर्थात्मा ज्ञातो ऽप्यज्ञातवद्यतः* ।
तस्मान्न ग्रहणं† पूर्वं बुद्धेः किं केन सङ्गतम् ॥२४३॥
अतः पूर्वोपलब्ध्या यो बुध्याऽऽकारो ऽत्र वाञ्छितः ।
तन्निराकरणेनैव फलत्वाद् ग्रन्थवर्णना ॥२४४॥
कामं बुद्धेरिति त्वेतदर्थाऽधीनत्वमुच्यते ।
'न चाऽर्थरूपाद्भेदेन धियामस्ति निरूपणम् ॥२४५॥

---

सिद्धान्तभाष्यमाक्षिपति नन्विति । कथं न साधनमत आह न परेति[२४३] । संभवति हि सहाऽनुभूतयोरप्येकस्य स्मरणम्, इतरस्य च विस्मरणम्; अतो ऽर्थविस्मरणे ऽपि ज्ञानस्य स्मरणाद् नाऽर्थसंवित्तिसमये ज्ञानसंवित्तिरित्यसङ्गतमिति ।

समाधत्ते अत इति[२४४] । यत एव साक्षान्न साधनमत एव फलद्वारेण वर्णनीयम्, पूर्वोपलब्धिसाधनस्य हि ज्ञानाकारत्वसिद्धिः फलं, तदनेन निराक्रियते, नीलाकारं हि ज्ञानं न तन्निर्मुक्तं स्मर्यते, अतो न ज्ञानं नीलाकारं, न च प्राक् ज्ञातुं शक्यम् ; अतो न पूर्वं ज्ञायतइति ।

"काममेकरूपत्वे बुद्धेरेवाऽभावः, न त्वर्थस्य प्रत्यक्षस्ये"‡ति भाष्यमनुपपन्नम्, एवमद्वैतासिद्धेः, बुद्ध्यभावे चाऽर्थप्रत्यक्षत्वाऽयोगादत आह काममिति[२४५] । यद्यवश्यमन्यतरदपह्नोतव्यम् अतो ऽर्थप्रकाशाऽधीनं तेनाऽनुमेयं ज्ञानमेवाऽपह्नोतव्यं, न तु प्रत्यक्षसिद्धो ऽर्थ इति । एवमतिशयोक्तिमात्रमिदं न परमार्थः । तदाह भाष्यकारः "न चैकरूप्य"§मिति ।

---

* यदीति २ पु. पा. । † तस्मादग्रहणमिति २ पु. पा. ।
‡ शा. भा. पृ. १० प. ४ । § शा. भा. पृ. १० प. ६ ।

परस्परूपनिरूप्यं च न मेयं मृगतोयवत् ।
असद्ग्राह्याऽनुसारेण* ज्ञानसंवेद्यता तव ॥२४६॥
स्वच्छत्वात्तु स्वरूपस्य कल्पिता ग्राह्यता धियाम् ।
वासनोपप्लवात् तेन न मेयं पारमार्थिकम् ॥२४७॥
निमित्तनियतत्वं तु समानमुभयोरपि ।
निजशक्त्यनुसारित्वाज् ज्ञानबाह्याऽर्थवादिनोः ॥२४८॥

---

"न चाऽर्थव्यपदेशमन्तरेणे"त्यादेः "तस्मादप्रत्यक्षा बुद्धि"†रित्यन्तस्य भाष्यस्याऽर्थमाह न चेति[२४५] सार्द्धत्रयेन। स्वच्छं हि चिन्मात्रं नैसर्गिकं ज्ञानरूपं, तत्तु वासनोपप्लवादविद्यमाननीलाद्याकारं प्रकाशतइति वो दर्शनं, न चैवमवगम्यमानं मृगतोयवत् प्रत्यक्षं भवति, पटरूपाव्यपदेश्यमिति च भाष्यार्थ इति ।

"अपि च नियतनिमित्त"‡इति भाष्यमाक्षिपति निमित्तेति[२४८] । अर्थवादिनो ऽपि हि स्वशक्तिवशादेव तन्तवः पटमारभन्ते, न घटं, मृत्पिण्डो वा घटं, ज्ञानवादिनो ऽपि तन्तुज्ञानानि पटज्ञानं न घटज्ञानमिति सिद्ध्यत्येव व्यवस्थेति । तदेवं सति यदि ज्ञानवादी पर्यनुयुज्य-

---

* अनुकारेणेति पाठान्तरम् ।

† न चाऽर्थव्यपदेशमन्तरेण बुद्धेः रूपोपलम्भनम् । तस्मान्न व्यपदेश्या बुद्धिः। अव्यपदेश्यं च न प्रत्यक्षं; तस्मादप्रत्यक्षा बुद्धिः। शा. भा. पृ.१० प. २ ।

‡ अपि च, नियतनिमित्तस्तन्तुष्वेवोपादीयमानेषु पटप्रत्ययः, इतरथा तन्त्वादाने ऽपि कदा चित् घटबुद्धिरविकलेन्द्रियस्य स्यात्, न चैतदस्ति; अतो निरालम्बनः प्रत्ययः; अतो न व्यभिचरति प्रत्यक्षम्। शा. भा. पृ. १० प. ७ ।

तन्त्वर्थैरपि कस्माद्धः क्रियते केवलः पटः ।
नाऽऽरभ्यते घटः किं तैर्मृत्पिण्डार्थेन वा पटः ॥२४९॥
तन्तुमृत्पिण्डविज्ञाने ह्यनुयोज्ये मते यदि ।
अर्थपर्यनुयोगो ऽपि तद्वदेव प्रसज्यते ॥२५०॥
अर्थाऽऽरम्भव्यवस्था चेत् सामर्थ्यनियमाऽऽश्रया ।
ज्ञानाऽऽरम्भव्यवस्थायां सामर्थ्यं केन वार्यते ॥२५१॥
तस्माद्यत्रोभयोर्दोषः परिहारो ऽपि वा समः ।
नैकः पर्यनुयोक्तव्यस्तादृगर्थविचारणे ॥२५२॥
देशकालनिमित्तानि व्यञ्जकान्यर्थवादिनः ।
शक्तीनां कारणस्थानां स्वकार्यनियमं प्रति ॥२५३॥
शक्तयो ऽपि च भावानां कार्याऽर्थापत्तिकल्पिताः ।
प्रसिद्धाः पारमार्थिक्यः प्रतिकार्यं व्यवस्थिताः ॥२५४॥

---

ते, इतरो ऽपि शक्यः पर्यनुयोक्तुमित्याह तन्त्वर्थैरिति[२४९] । एतदेव विवृणोति तन्त्विति[२५०]। सामर्थ्यतस्तु व्यवस्थाऽऽश्रयणमितरस्यापि तुल्यमित्याह अर्थेति[२५१]। उपसंहरति तस्मादिति[२५२]। यथा ऽऽहुः—

यथाविधं घटं दृष्ट्वा द्वैतवादी विचेष्टते ।
ज्ञात्वा तथाविधं ज्ञानमद्वैती किं न चेष्टते ॥ इति ।

समाधत्ते देशेति[२५३] । शक्तिमदपि हि तन्त्वादिकारणं न सर्वदा कार्यमारभते, किं तु शक्त्यभिव्यञ्जकं सहकारिणमपेक्षते, तच्च देश-कालादितन्तुवायादिनिमित्तमस्मत्पक्षे विद्यते, यद्वशेन कदा चित् कार्यारम्भनियम इति । शक्तिरपि मत्पक्षे ऽस्त्येव भावानां पारमार्थिकीत्याह शक्तय इति[२५४] । भवतस्तु शक्तिरेव तावन्नास्तीत्याह

भवतस्तु न विज्ञानाद्भिन्नाऽभिन्ना निरूप्यते ।
शक्तिः संवृतिसद्भावमुत्सृज्य परमार्थतः ॥२५५॥
वासनैव च युष्माभिः शक्तिशब्देन गीयते ।
निमित्तनियतत्वं च वासनाया यदुच्यते ॥२५६॥
तस्याश्चाऽसम्भवेनैतदपारार्थ्याच्च दुर्लभम् ।
देशकालनिमित्तादि न च ते ऽस्ति नियामकम् ॥२५७॥
मत्वैतदपि चेत्याह भाष्यकारः परं प्रति ।
तस्मादपरिहारो ऽयं तन्तुभ्यस्ते यथा पटः ॥२५८॥

---

भवत इति[२५५] । शक्तिरपि संवृतिसत्यैव भवन्मते, संवृतिश्चाऽसत्यपर्याया न कार्यारम्भोपयोगिनीति । वासनैव च भवतां शक्तिरभिमता न वस्त्वन्तरमित्याह वासनेति[२५६] । ततः किमित्यत आह निमित्तेति । वासनायाः कारणत्वाद्यन्निमित्ताऽज्ञानान्नियतत्वमुच्यते किं चिदेव कस्य चिन्निमित्तं न सर्वं सर्वस्येति, तद्दुर्लभं, तस्या एवाऽसम्भवस्य निरालम्बनवादे दर्शितत्वादपारार्थ्याच्च । अस्माकं ह्यात्मार्था वासना, तदस्यावात्मप्रणिधानाद्यपेक्षया विलम्बतइति युक्तम्, भवतस्तु यस्मिन्नसावाहिता तस्य क्षणिकत्वादनन्याऽपेक्षत्वाच्च न किं चिद्विलम्बनिमित्तमस्तीति सर्वदैव तन्तुज्ञानात्पटज्ञानं स्यादिति । न च देशकालादिकमपि भवतामस्ति, यतः कदा चिदारम्भः कदा चिदनारम्भ इति नियमः सिध्येदित्याह देशेति[२५७] । किं चाऽसत्यपि हि मृत्सलिलच्छन्नबीजज्ञाने अङ्कुरज्ञानं दृश्यते, अतो न कारणं ज्ञानं कार्यस्य ज्ञानस्य जनकमिति शक्यं वक्तुम् । तस्माद्युक्तं भाष्यकारमतमित्याह मत्वेति[२५८] । पर्यनुयोगतुल्यत्वमप्ययुक्तमित्याह तस्मादिति ।

तथा मे तन्तुबुद्धिभ्यः पटबुद्धिरितीदृशः ।
एवमाद्यप्रमाणाभ्यां न तावद्बाह्यशून्यता ॥२५९॥
आगमस्य तु नैवेह व्यापारो ऽतो ऽन्यथा ऽपि वा ।
नोपमा सदृशाऽभावान्नाऽर्थापत्तिर्विपर्ययात् ॥२६०॥
तस्मादभावगम्यत्वं शून्यतायाः स्थितं हि नः ।
एवं प्रमाणतो ऽसिद्धा यैः प्रमेयाऽऽश्रयोच्यते ॥२६१॥

---

तदेवं प्रत्यक्षस्य बहिःप्रवृत्तिसामर्थ्यान्न तत्परीक्षया बाह्याऽभावः, न चाऽनुमानेन, तस्य तद्विरुद्धत्वात्; तस्मादाद्येन प्रमाणद्वयेन न बाह्याऽभावसिद्धिरित्याह एवमिति[२५९]। आगमस्य नेह नाना ऽस्ति किं चनेत्यादेर्विद्यमानस्याऽऽत्मप्रशंसापरत्वाद् नाऽर्थाभावे व्यापार इत्याह आगमस्येति[२६०]। प्रत्युत विविधोपकरणयुक्तविविधकर्मविधायिनः शास्त्रस्य, अतो ऽन्यथा शून्यत्वविपर्यये बाह्यसद्भाव एव व्यापार इत्याह अत इति। उपमानं तु सदृशदर्शनोत्पन्नं, न च ज्ञानाऽतिरिक्तं किं चित् शून्यमस्ति, येन ज्ञानं शून्यतयोपमीयेतेत्याह नोपमेति।

अर्थापत्तिस्तु विचित्रव्यवहाराऽन्यथाऽनुपपत्त्या विचित्रान् बाह्यानुपदर्शयन्ती विपरीतैव शून्यताया इत्याह नाऽर्थापत्तिरिति। तदेवमभावगम्यत्वमेव शून्यतायाः पारिशेष्यादापन्नम् इत्याह तस्मादिति[२६१]।

एवं तावद्यदुक्तं 'प्रमाणस्थस्तु मूलत्वा'*दिति, तद्विचारितं, संप्रति यत् सांन्यासिकं कृतं तत्राऽऽस्तां यः प्रमेयत इति; तदुपन्यस्यति एवमि-

---

* स्थस्तु तन्मूलत्वादिति २ पु. पा.।

बाह्यस्याऽणुसमूहादेर्ग्राह्यस्याऽसम्भवे क्षणात् ॥
तैरान्तराऽसम्भवतो यथोक्ताद्
ज्ञेयं स्वमन्यस्य बलादुपेयम् ।
ग्राह्या न चेष्टाः परमाणवोऽतः
सत्यः समूहः प्रतिपादनीयः* ॥२६३॥
इति बहिर्विषयप्रतिपादनाद्
तदभावकृता मतिसंवृतिः ।

---

ति। न तावदणूनां ग्राह्यत्वं तेषामतीन्द्रियत्वात्, नाऽवयविजात्यादीनां, तेषां व्यतिरेकाऽव्यतिरेकविकल्पाऽक्षमाणां गगनकुसुमायमानत्वात्; अतो बाह्यं नास्तीति यैरुक्तं तेषामिदमुत्तरमित्याह तैरिति[२६२]। यदा ऽऽभ्यन्तरस्य ज्ञानाकारस्य न कथं चिद्ग्राह्यत्वं सम्भवतीति स्थितं, तदा बाह्यस्यैव ग्राह्यत्वं बलादभ्युपगन्तव्यं, ततश्चाऽणूनां त्वदुक्तेनैव मार्गेण ग्राह्यत्वाऽसम्भवात्समूहाख्यस्यैव त्ववयविनस्तत्समवेतानां च जात्यादीनां ग्राह्यत्वमङ्गीक्रियतां;तेषां चाकृतिवादे सद्भावः प्रतिपादयिष्यते ।

सिद्धे बाह्यार्थे यन्मध्यमिति माध्यमिकैरुक्तम्, अर्थाभावादेव ज्ञानमपि नास्तीति, तदपि मूलनिरासादेव निरस्तमित्याह इतीति[२६३]। मतिसंवृतिरिति, ज्ञानाभाव इत्यर्थः । सति त्वेवं ज्ञानमर्थं चोभयमपि तत्त्वतो जानतां मीमांसकानाम् इदमुभयं धर्माख्यरथाङ्गभूते धूःशब्दार्थे विचारे युग्यद्वयमिव धूर्वहने समर्थं चोभयमपि तत्त्वतो ज्ञात-

---

* परिपालनीय इति १ पु. पा. ।

उभयतत्त्वविदां परमार्थतः
क्षममिदं धुरि धर्मविचारणे ॥२६४॥

इति शून्यवादः ॥

## अथाऽनुमानपरिच्छेदः ।

प्रत्यक्षाऽव्यभिचारित्वादेवंलक्षणकं च यत् ।
प्रसिद्धमनुमानादि न परीक्ष्यं तदप्यतः ॥१॥

---

मर्थशून्यासूत्तरबुद्धिषु नेति सर्वमीमांसाशास्त्रं दुस्थं स्यादित्युक्तम् । इदानीमर्थालम्बनत्वे साधिते विचारात्मकं शास्त्रं समर्थितमित्याह उभयेति ॥

इति श्रीपार्थसारथिमिश्रविरचिते न्यायरत्नाकरे शून्यवादः ॥

अथाऽनुमानपरिच्छेदः ।

"अनुमानं ज्ञातसंबन्धस्ये"*ति भाष्यं तस्याऽभावपर्यन्तस्य लक्षणग्रन्थस्य तात्पर्यमाह प्रत्यक्षेति[1] । निमित्तसूत्रे हि प्रमाणानां प्रसिद्धत्वेनाऽपरीक्ष्यत्वे वर्णिते व्यभिचारात्परीक्षितव्यं, शुक्तिरजतवेदने प्रत्यक्षस्य व्यभिचारात्तत्पूर्वकत्वाच्चेतरेषामपि व्यभिचार इति चोदिते प्रत्यक्षस्यैवंपर्यन्तेन ग्रन्थेनाऽव्यभिचारित्वेनाऽपरीक्ष्यत्वमुक्तं, ततश्च तत्पूर्वकत्वेन यदनुमानादीनां व्यभिचारित्वमुक्तं, तत्परिहृतम्, इदानीमात्मीयलक्षणेनाऽव्यभिचारादनुमानादिकं न परीक्ष्यमित्युच्यते । एवंलक्षणं यत्प्रसिद्धम् अनुमानादि तदप्यत एवंलक्षणकत्वादेव प्रत्यक्षाऽव्यभिचारित्वाच्चाऽपरीक्ष्यमित्यक्षरार्थ इति ।

---

*शा. भा. पृ. १० प. ११ ।

प्रमाता ज्ञातसंबन्ध एकदेश्यथ वोच्यते ।
कर्मधारयपक्षो वा संबन्धिन्येकदेशता ॥२॥
द्वयं वा ज्ञातसम्बन्धमुपलब्धं परस्परम् ।
तस्यैकदेशशब्दाभ्यामुच्येते समुदायिनौ ॥३॥

---

संप्रति प्रत्येकं लक्षणानि व्याचक्षाणः प्रथममनुमानलक्षणमनुसंधत्ते प्रमातेति[२] । ज्ञातसंबन्ध इति तृतीयार्थे बहुव्रीहिः । बुद्धिसंबन्धजनितव्यतिरेकस्य प्रमातुः पुरुषस्य निर्द्देशः । येन प्रमात्रा संबन्धो ज्ञातः तस्य बुद्धिरिति षष्ठ्यर्थे वा ऽयं बहुव्रीहिः । एकदेशद्वयसंबन्धजनितव्यतिरेकस्यैकदेशिनो धर्मिणो निर्देश इत्याह एकदेशीति । यस्य ज्ञातधूमसंबन्धस्य सपक्षस्य महानसाद्येकदेशिनो ऽग्निसंबन्धो नियमाख्यो ज्ञातः तस्य यो धूमाख्य एकदेशः तस्य पर्वतादौ दर्शनात् तत्रैव ह्येकदेशान्तरे ऽग्निबुद्धिरिति ।

कर्मधारयसमासो वा ऽयम्,एकदेशशब्दाभ्यां च संबन्धिनोरभिधानमित्याह कर्मधारयेति । संबन्धो हि संबन्धिनाव्यासज्य वर्त्तमान एकदेशी, एकदेशौ च संबन्धिनौ, ज्ञातश्चासौ संबन्धश्च तस्य य एकदेशः संबन्धी धूमः तस्य दर्शनात्संबन्ध्यन्तरे बुद्धिरिति ।

बहुव्रीहावेवाऽर्थान्तरमाह द्वयमिति[३] । यल्लिङ्गलिङ्गिद्वयं तत्समुदाय एव ज्ञातसंबन्धः, तस्यैकदेशः समुदायी, तस्य दर्शनात् समुदाय्यन्तरे बुद्धिरिति समुदायिवचनावेकदेशशब्दाविति । नन्वनुपात्तानां पुरुषैकदेशिसमुदायानां बहुव्रीह्यर्थत्वमयुक्तम्, उपात्तस्त्वेकदेश एवान्यपदार्थो युक्तः, यत उक्तं ज्ञातसंबन्धस्यैकदेशदर्शनादिति, न, उपसर्जनत्वात्, न हि वृत्तिस्थमुपसर्जनं पदान्तरेण संबध्यते ; सामर्थ्ये हि समासः,व्यपेक्षालक्षणं च सामर्थ्यं, पदान्तरसंबन्धे तदपेक्षत्वात् सामर्थ्याऽभावेन समासाऽनुपपत्तिः,यद्युच्येत, उपसर्जनमनुपसर्जन-

मिति नाऽयं संबन्धहेतुराकाङ्क्षितं पूरणसमर्थं च संबन्धिना ऽपेक्ष्यत-इति, सत्यं, यदि पूरणसामर्थ्यं स्यात्, तदेव तु नास्ति, उपसर्जनत्वादित्युच्यते। ननु दर्शनं प्रति दृश्य एव देशः *प्रधानं. भवति च प्रधानस्य सापेक्षस्यापि समासः, नेदं प्रधानं, गुण एवाऽयं, विशेषणत्वं हि गुणत्वं न शेषत्वं, विशेष्यत्वं च प्राधान्यं न शेषित्वम्, ऋद्धस्य राज्ञः पुरुष इत्यत्र शेषिणो ऽपि राज्ञो विशेषणत्वादृद्धिमपेक्षमाणस्य समासाऽभावात्, राजपुरुषः शोभन इति च शेषभूतस्यापि पुरुषस्य विशेष्यस्य शोभनपदाऽपेक्षस्यापि समासदर्शनात्; विशेषणं त्वेकदेशो दर्शनस्येति नाऽन्येन संबद्धस्य ज्ञातसंबन्धपदाऽपेक्षस्य संभवति समासः। नन्वेकदेशिवचनत्वे ऽपि ज्ञातसंबन्धशब्दस्य तदपेक्षैकदेशशब्दस्य समासाऽनुपपत्तिः स्यात्, न, नित्यसापेक्षत्वात्, संबन्धिशब्दो ह्ययम् एकदेशशब्दः, कश्चिद्धि कस्य चिदेकदेशो भवति, संबन्धिशब्दानां प्रतिसंबन्धिनमपेक्षमाणानामपि न सामर्थ्यविघातो भवति, देवदत्तस्य गुरुकुलमितिवत्, तेषामपि प्रतिसंबन्धिव्यतिरिक्तार्थान्तरापेक्षायां भवत्येव सामर्थ्यविघातः। न हि भवति शोभनस्य गुरुकुलमिति, अत्र संबन्धिशब्दस्यापि गुरुशब्दस्य शोभनाऽपेक्षस्य न समासः, तेनैकदेशिवचनत्वे ज्ञातसंबन्धशब्दस्य तदपेक्षत्वे ऽप्येकदेशशब्दस्य नास्ति सामर्थ्यविघातः। भवतस्तु ज्ञातसंबन्धः पदमेकदेशमेव ज्ञातसंबन्धत्वेन विशिनष्टि, शोभनपदमिव गुरुम्, इत्येकदेशशब्दस्य तदपेक्षस्य सामर्थ्यविघातात् समासाऽनुपपत्तिः स्यात्। एकदेश्यपेक्षं ह्येकदेशत्वं न ज्ञातसंबन्धाऽपेक्षमिति वैषम्यमिति।

स्यान्मतम्, अनुमानमेकदेशस्येत्यनेनाऽसमस्तेन ज्ञातसंबन्धपदं विशेषणत्वेन संबध्यतइति; एवमप्याकाङ्क्षावाक्यस्याऽश्रवणादनुपात्ताऽन्यपदार्थकत्वं तदवस्तु स्यात्, वाक्यभेदमात्रं त्वधिकम्। न चोपात्तस्यैवाऽन्यपदार्थत्वं, तत्र प्रमाणाभावात्; स्वर्गकामादिपदानां

---

* दृश्य एकदेश इति २ पु. पा.।

सम्बन्धो व्याप्तिरिष्टा ऽत्र लिङ्गधर्मस्य लिङ्गिना ।
व्याप्यस्य गमकत्वं च व्यापकं गम्यमिष्यते ॥४॥
यो यस्य देशकालाभ्यां समो न्यूनो ऽपि वा भवेत् ।
स व्याप्यो व्यापकस्तस्य समो वा ऽभ्यधिको ऽपि वा॥५॥
तेन व्याप्ये गृहीते ऽर्थे व्यापकस्तस्य गृह्यते ।
न ह्यन्यथा भवत्येषा व्याप्यव्यापकता तयोः ॥६॥
व्यापकत्वगृहीतस्तु व्याप्यो यद्यपि वस्तुतः ।
आधिक्ये ऽप्यविरुद्धत्वाद् व्याप्यं न प्रतिपादयेत् ॥७॥

---

च बहुव्रीहित्वे ऽनुपात्ते ऽपि पुरुषे वृत्त्यभ्युपगमादित्यास्तां तावत् ।

कः पुनर्लिङ्गलिङ्गिनोः संबन्धः, कार्यकारणतादात्म्यसंयोगसमवायैकार्थसमवायविरोधा इति चेत्, न; तदभावे ऽपि कृत्तिकारोहिण्युदयादीनां लिङ्गलिङ्गिभावात्; अत आह संबन्ध इति[४] । व्याप्तिर्नियमो, येन केनापि संबन्धेन यो नियमः स एव संबन्धो लिङ्गधर्मस्य लिङ्गिनेति। अथाऽस्मिन् संबन्धे कस्य गमकत्वं कस्य वा गम्यत्वं तद्दर्शयति व्याप्यस्येति । कारणमाह यो यस्येति[५] । भवत्विदं व्याप्यव्यापकयोर्लक्षणं, ततः किमित्यत आह तेनेति[६] । यस्मादिदं व्याप्यव्यापकयो रूपं, तेन व्याप्यस्य व्यापकदेशकालाभ्यां न्यूनत्वे समत्वे चोभयथा ऽपि व्यापकदेशकालाऽतिक्रमणाऽभाव।त्तस्मिन् गृहीते व्यापको गृह्यते, यदि न गृह्येत, ततो व्याप्यव्यापकतैव तयोर्न स्यात्, अवगमकस्य तद्देशकालाऽतिक्रमेणापि सद्भावो ऽभ्युपगन्तव्यः स्यात्, ततश्चाऽऽधिक्यान्न व्याप्यत्वं स्यात्, तदितरच्च न्यूनत्वाद् व्यापकं न स्यात्, अनधिकस्य त्वव्यभिचारान्नित्यं गमकत्वं, व्यापकस्य तु समाऽधिकलक्षणस्य व्याप्यदेशकालाऽतिक्रमेणापि सद्भावान्न तद्गमकत्वमिति ।

'विस्पष्टं दृष्टमेतच्च गोविषाणित्वयोर्मितौ ।
व्याप्यत्वाद्गमिका गावो व्यापिका न विषाणिता ॥८॥
तेन यत्राप्युभौ धर्मौ व्याप्यव्यापकसंमतौ ।
तत्रापि व्याप्यतैव स्यादङ्गं न व्यापिता मितेः'॥९॥
'तेन धर्म्यन्तरेष्वेषा यस्य येनैव यादृशी ।
देशे यावति काले वा व्याप्यता प्राङ् निरूपिता॥१०॥
तस्य तावति तादृक्स दृष्टो धर्म्यन्तरे पुनः ।
व्याप्यांशो व्यापकांशस्य तथैव प्रतिपादकः' ॥११॥

---

ननु व्यापकादपि व्याप्याऽनुमानं दृष्टम्, अनित्यत्वादिव कृतकत्वस्यात आह व्यापकत्वेति[७] । कृतकत्वाऽनित्यत्वयोर्हि समदेशकालत्वादुभयमुभयस्य व्याप्यं व्यापकं च, तत्राऽनित्यत्वं कृतकतामनुमापयदपि व्याप्यरूपेणाऽनुमापकं न व्यापकरूपेण; तस्य रूपस्याऽऽधिक्ये ऽप्यविरुद्धस्य गमकत्वाऽसम्भवादिति । एतदेवाऽसंकीर्णोदाहरणेन दर्शयति विस्पष्टमिति[८] द्वयेन । यत्र हि न्यूनाऽधिकत्वेन व्याप्यव्यापकत्वमसंकीर्णं, यथा गोत्वविषाणित्वयोः, तत्र व्याप्यमेव गोत्वं विषाणित्वमनुमापयति न तु व्यापिका विषाणिता गोत्वम्; अतः समोदाहरणे ऽपि व्याप्यतैव मितेरनुमानस्याऽङ्गं न व्यापकतेति । यतो व्याप्यं तत्राऽङ्गत्वेन व्याप्यस्यैव गमकत्वं न व्यापकस्येत्युपसंहरति तेनेति[९] द्वयेन । एषा पूर्वोक्ता समन्यूनकालकव्याप्यता यस्य धूमादेर्यादृशस्याऽनवरतोर्ध्ववृत्तेर्येनाग्न्यादिना यादृशेनाऽऽर्द्रेन्धनादिसंयोगविशिष्टेन यावद्देशकालवर्त्तिना धर्म्यन्तरेषु पूर्वदृष्टेषु महानसादिषु पक्षेषु निरूपिता स तादृशो व्याप्यांशो धर्म्यन्तरे पर्वतादौ साध्यधर्मिणि पक्षे दृष्टः, तस्य व्यापकांशस्य तथैव तथाभूत-

भूयोदर्शनगम्या च व्याप्तिः सामान्यधर्मयोः ।
ज्ञायते भेदहानेन क चिच्चापि विशेषयोः ॥१२॥

---

स्यैव तावद्देशकालवर्त्तिनो ऽनुमापको भवति, न तु व्यापको व्याप्यस्येति । धर्म्यन्तरेष्विति च पूर्वदृष्टमहानसादिसपक्षगतैव व्याप्तिरनुमानाङ्गं न तु सकलदेशव्याप्तिरिति दर्शयति । ततश्च लिङ्गसकलदेशकालव्याप्त्यवगमो लिङ्गिनो ऽनुमानाङ्गमिति मन्वानाः तस्य च प्रमाणं मृगयमाणाः सकृदेव प्रत्यक्षेण नियमो गम्यते भूयोदर्शनाऽऽहितसंस्कारसचिवेन वा चरमेण प्रत्यक्षेणेत्यादिसंवित्तिविरुद्धाऽभिधानेन क्लिश्यन्तो निरस्ता इति ।

ननु सपक्षेष्वपि बहुषु न केन चिदेकेन प्रमाणेन नियमो ऽवगन्तुं शक्यते, सर्वप्रमाणानामेकैकदेशकालपर्यवसानादत आह भूयोदर्शनेति[१२] । सत्यं, नैकेन गम्यते बहुभिस्तु दर्शनैर्बहुषु देशेषु धूमस्याऽग्निना साहित्यं गम्यते, तस्मिंश्चावगते व्यभिचारे चाऽनवगते यथादृष्टेषु धूमस्याऽग्निना व्याप्तिरवगता भवति । ननु नाऽदर्शनमात्रादनग्निषु सर्वेषु धूमस्याऽभावः सिध्यति, को वा ब्रूते सिध्यतीति, किं त्वदर्शनमात्रमेवाऽनग्नौ धूमस्य ब्रूमः, तावतैव बहुशो ऽवगताग्निसाहित्यस्य धूमस्य परिदृष्टेषु देशकालेषु वह्निनियमो ऽवगतो भवति, तावदेवाऽनुमानाङ्गं, तदनन्तरं तु यत्र यत्र धूमः तत्र तत्राऽग्निरिति यो ऽवगमः सो ऽप्यानुमानिक एव परोक्षरूपत्वात्, तस्य तु प्रत्यक्षत्वं संविद्विरुद्धम्, आपरोक्ष्याभावादिति न्यायरत्नमालायामेव प्रपञ्चितमित्यास्तां तावत् ।

नन्वन्यस्यैव धूमस्य महानसे ऽपि न साहित्यमन्येनैवाऽग्निना ऽवगतं, देशान्तरे चाऽन्यस्याऽन्येन, अतः कस्य केन नियमः साहित्यं वा व्याप्तिर्वा; ऽत आह सामान्येति । अस्ति हि तयोर्भूयोदर्शनमिति । क चित् स्थायिनोर्विशेषणयोरपि व्याप्तिरस्त्येव, कृत्तिकारोहिण्योरिवे-

कृत्तिकोदयमालक्ष्य रोहिण्यासत्तिक्लृप्तिवत् ।
'व्याप्तेश्च दृश्यमानायाः कश्चिद्धर्मः प्रयोजकः ॥१३॥
अस्मिन् सत्यमुना भाव्यमिति शक्त्या निरूप्यते ।
अन्ये परप्रयुक्ताना व्याप्तीनामुपजीविकाः ॥१४॥
तैर्दृष्टैरपि नैवेष्टा व्यापकांशाऽवधारणा' ।
ये तु तानपि विस्रब्धं साध्यसिद्धौ प्रयुञ्जते ॥१५॥

---

त्याह क चिदिति । यदि व्याप्यं व्यापकमनुमापयति हिंसात्वमग्नीषोमीयादिहिंसायामधर्मत्वमनुमापयेत्, अस्ति तस्याऽधर्मत्वेन व्याप्तिर्ब्रह्महत्यादौ; अत आह व्याप्तेरिति[१३] द्वयेन ।
सत्यम्, अस्ति हिंसात्वस्य व्याप्तिः, तथापि नाऽधर्मत्वव्याप्तेः तत्प्रयोजकम्, यदेव निषिद्धत्वमस्मिन्नधर्मत्वे सत्यमुष्य निषिद्धत्वस्य भवितुं शक्तिरित्येवं निरूप्यते तदेव प्रयोजकम् । अन्ये तु हिंसात्वादयः परेण निषिद्धत्वेन प्रयुक्तां व्याप्तिमुपजीवन्ति, अतः सत्यामपि व्याप्तौ तैर्दृष्टैरपि व्यापकधर्मत्वं नाऽवधारयितुं शक्यम् । कः पुनः प्रयोजकः, यस्य धर्मान्तरविरहेणाऽपि साध्याऽन्वयो दृष्टः स प्रयोजकः, यस्य त्वन्यसहितस्यैव साध्याऽन्वयः स तदभावे निश्चिते तद्रहितो न प्रयोजकः, निषिद्धत्वस्य च हिंसात्वविरहेणापि सुरापानादावधर्माऽन्वयो दृष्ट इति तदेवाऽधर्मत्वव्याप्तेः प्रयोजकम् । हिंसात्वस्य तु निषिद्धत्वविरहेण न क चिदधर्माऽन्वयो दृष्ट इति तदप्रयोजकम् । यत्र तु द्वयोः सहितयोरेव साध्याऽन्वयः तत्र द्वयोरपि प्रत्येकमप्रयोजकत्वात् सहिताभ्यामेवाऽनुमानं नैकेनेति । ये च प्रयोजकानपि हेतून् साध्यसिद्ध्यर्थं प्रयुञ्जते तेषां न केवलमप्रयोजकत्वम्, अन्ये ऽपि तु प्रतिहेत्वादिदोषास्तेषां सुलभाः; तेन तेषां भ्रान्तिरेवेत्याह ये त्विति[१५] । वि-

सुलभैः प्रतिहेत्वादिदोषैर्भ्राम्यन्ति ते चिरम् ।
तेष्वागमविरुद्धत्वं स्वयं चेष्टविघातिता ॥१६॥
अलौकिकविवादाश्च वर्ज्यास्ते हैतुकैस्ततः ।
'निषिद्धत्वेन हिंसानामधर्मत्वं प्रयुज्यते ॥१७॥
तदभावे न तत्सिद्धिर्हिंसात्वादप्रयोजकात् ।
हेतुद्वये प्रयुक्ते च मिथ्यात्वे सर्वबुद्धिषु ॥१८॥
ज्ञानत्वोत्पत्तिमत्त्वादिसाधको नाऽप्रयोजकः* ।
त्रैवर्णिकप्रयुक्ता च यागादेः स्वर्गहेतुकाम् ॥१९॥

---

श्रद्धया,मादरेणेत्यर्थः । तानेव दोषान् दर्शयति तेष्विति। शक्यते प्रयोक्तुम्, अग्नीषोमीयादिर्हिंसा, धर्मः, विहितत्वात्, अग्निहोत्रवदिति । आगमविरोधश्चाऽधर्मत्वानुमानस्य, इष्टविघातश्च, यागादीनामपि क्रियात्वेनाऽधर्मत्वानुमानात् सर्वलोकप्रसिद्धिविरोधाच्चैवंवादिनो न्यायविद्भिरुपेक्षणीया इति ।

एवमुपपादितमप्रयोजकत्वमुदाहरणतो दर्शयति निषिद्धत्वेनेति[17] पञ्चभिः । हेतुद्वयं कारणदोषो बाधकज्ञानं च प्रयत्नाऽनन्तरज्ञानादित्येवंजातीयकैरनित्यत्वं शब्दस्य न सिद्ध्यति, तथा जातिमत्त्वेनैन्द्रियकत्वेन च, तद्धि वस्तुसत्तामात्रनिबन्धनं नित्याऽनित्यसर्ववस्तुसाधारणमिति शब्दाधिकरणे वक्ष्यते । अतः कृतकत्वसावयवत्वादिप्रयुक्तमेवाऽनित्यत्वं,जातिमत्त्वादिकं त्वतिस्थूलमिति तार्किकाणामेव वक्तुमुचितं नास्माकम् । ननु निरवयवस्यापि कर्मादेर्विनाशित्वदर्शनात् कृतकत्वमेवाऽनित्यत्वस्य प्रयोजकं न सावयवत्वम्, सत्यं, सावयवत्वेनापि कृतकत्वमनुमाय शक्यमनित्यत्वमनुमातुम्, यदि

---

* न प्रयोजक इति २ पु. पा. ।

म मनुष्यत्वमात्रेण शूद्रस्थेन प्रयुज्यते ।
कृतसावयवत्वादिप्रयुक्ता च विनाशिता ॥२०॥
प्रयत्नाऽनन्तरज्ञानसदृशैर्न प्रयुज्यते ।
जातिमत्त्वेन्द्रियत्वादि वस्तुसन्मात्रबन्धनम् ॥२१॥
शब्दाऽनित्यत्वसिद्ध्यर्थं को वदेद्यो न तार्किकः' ।
तस्माद्य एव यस्याऽर्थो दृष्टः साधनशक्तितः ॥२२॥
स एव गमकस्तस्य न प्रसङ्गाऽन्वितो ऽपि यः ।
उपात्तश्चैकदेशाभ्यां धर्म्यप्यत्रैकदेशवान् ॥२३॥
अपारार्थ्ये हि धूमादेः स्वरूपैर्नैकदेशता ।
स एव चोभयात्मा ऽयं गम्यो गमक एव वा* ॥२४॥

---

हि कृतकत्वस्याऽभावो निश्चितः स्यात् ततो ऽशक्यमेव सावयवत्वेनाऽनित्यत्वाऽनुमानमिति ।

उपसंहरति तस्मादिति[२२]। ननु पक्षधर्मिणो ऽनुपादानाय परिपूर्णं लक्षणमत आह उपात्त इति[२३]। अन्यस्यैकदेशस्योपादाने कथमन्यस्यैकदेशिन उपादानम्, अत आह अपारार्थ्यइति[२४]। एकदेशिसम्बन्धिरूपमेव ह्येकदेशत्वं न वस्तुरूपमात्रमिति । ननु प्रमातुरन्यपदार्थत्वे पक्षधर्म्यपेक्षमेकदेशत्वमिति युज्यते एकदेशाभ्यामर्थात् पक्षधर्म्याक्षेपः, यदा सपक्षैकदेशी समुदायो वा ऽन्यपदार्थः यदा वा कर्मधारयः तदा सपक्षसम्बन्धसमुदायानामन्यतमस्यैकदेशावेकदेशशब्दावभिदधाते न तु पक्षैकदेशाविति न ताभ्यां पक्ष-

* एव चेति २ पु. पा. ।

असिद्धेनैकदेशेन गम्यः सिद्धेन बोधकः ।
अतः* पृथगभिन्नो वा प्रयोक्तृणां विवक्षया ॥२५॥
अनित्यः कृतको यस्माद्धूमवानग्निमानिति ।
धर्म्यभिन्नमुपादानं, भेदो ऽत्राग्निरितीदृशे ॥२६॥
एकदेशविशिष्टश्च धर्म्येवाऽत्राऽनुमीयते ।
न हि तन्निरपेक्षत्वे संभवत्यनुमेयता ॥२७॥

---

धर्म्युपादानं सिद्ध्यति; तेन त्रिष्वपि समासार्थेषु यथा पक्षधर्म्युपादानं सिद्ध्यति तथा वक्तव्यमत आह स एवेति । स एव पक्षैकदेशयेव हि लिङ्गिलिङ्गैकदेशवत्तयोभयात्मा गम्यो गमकश्च, न त्वेकदेशिमात्रं, तस्य सम्बन्धग्रहणसमयएव गृहीतस्याऽननुमेयत्वात् ; तदिदं पक्षधर्मिणो ऽनुमेयत्वमसन्निकृष्टग्रहणेन भाष्ये दर्शितमिति नाऽनुपादानं दोष इति ।

तावेव गम्यगमकात्मानौ विभजति असिद्धेनेति[२५] । असिद्धेन प्रमाणान्तराऽप्रसिद्धेन वह्निमत्त्वात्मना ऽनुमेयत्वं, प्रमाणान्तरसिद्धेन तु धूमवत्त्वात्मना गमकत्वमिति । अथाऽयमेकदेशी साधनवाक्ये कथमुपादातव्य, इत्यत आह अत इति । पृथगेकदेशाभ्यां वैयधिकरण्येनाऽभिन्नस्ताभ्यां सामानाधिकरण्येन यथाविवक्षमुपादानमिति । तावेव प्रकारौ दर्शयति अनित्य इति[२६] ।

यदुक्तमेकदेश्येवाऽसिद्धेनैकदेशेन गम्य इति, तदुपपादयितुमुपक्षिपति एकदेशेति[२७] । उपपत्तिमाह न हीति । कथं न सम्भव-

---

* आत्त इति पाठान्तरम् ।

न धर्ममात्रं सिद्धत्वात्, तथा धर्मी, तथोभयम् ।
व्यस्तं वा ऽपि समस्तं वा स्वातन्त्र्येणाऽनुमीयते॥२८॥
एकदेशस्य लिङ्गत्वं साध्येनाऽनुगमो ऽस्य च ।
द्वयं च न स्यादिष्टं सत् पक्षेष्वेषु यथाक्रमम् ॥२९॥
अनित्यत्वादयो धर्माः कृतकत्वादयो न हि ।
ध्वनिना ऽनुगमो नैषां नोभयस्योभयेन वा ॥३०॥
संबन्धो ऽप्यनुपादानान्नाम्ना षष्ठ्या ऽपि वा मितौ ।
न चाऽप्यनुगमस्तेन लिङ्गस्येह निदर्श्यते ॥३१॥

---

त्यत आह न धर्मेति[२८] । अग्निः सम्बन्धग्रहणकाले एव सिद्धः, पर्वतो ऽपि प्रत्यक्षसिद्धो, ऽत एव अग्निपर्वतात्मकमुभयमपि स्वातन्त्र्येण सिद्धम्; अतो न तयोर्व्यस्तयोः समस्तयोर्वा स्वातन्त्र्येणाऽन्योन्याऽविशिष्टरूपेणाऽनुमेयत्वमिति ।

इतश्च धर्मधर्म्युभयेषां नाऽनुमेयत्वमित्याह एकदेशस्येति[२९] । एतदेवोदाहरणेन दर्शयति अनित्यत्वेति[३०] । अनित्यत्वमस्तीत्येतावति प्रतिज्ञाते कृतकत्वस्याऽतद्धर्मत्वान्न पक्षैकदेशस्य लिङ्गत्वं स्यात्, शब्दाऽस्तित्वप्रतिज्ञायां तु कृतकत्वस्य घटादिषु तदनुगमो न शक्यते दर्शयितुं, शब्दाऽनित्यत्वयोः सद्भावप्रतिज्ञायामपि न कृतकत्वस्योभयधर्मत्वं, शब्दमात्रधर्मत्वात्; अतो न स्वातन्त्र्येण धर्मधर्मिणोरनुमेयत्वमिति । सम्बन्धो ऽपि न धर्मधर्मिणोः स्वातन्त्र्येण साध्यः, मितौ साधनवाक्ये षष्ठ्या नाम्ना वा संबन्धपदेनाऽनुपादानात्; न ह्येवं प्रयुञ्जते लौकिकाः, पर्वतस्याग्निरस्तीति, अग्निपर्वतसंबन्धो ऽस्तीति वा, यथालोकं च परीक्षकैर्वक्तव्यं, न तद्विपर्ययेणेत्याह सम्बन्ध इति[३१] । उदाहरणे ऽपि लिङ्गस्य न सम्बन्धेनाऽनुगमं दर्शयन्तीत्या-

न चाऽऽकारद्वयं तस्य साध्यसाधनभाग् भवेत् ।
'तस्मादर्थगृहीतत्वान्मतुबर्थस्य गम्यता ॥३२॥
न स्वातन्त्र्येण मन्तव्या' यथा दण्ड्यादिशब्दतः ।
विशिष्टाऽर्थप्रतीता स्यात् सम्बन्धो नान्तरीयकः ॥३३॥
विशेषणविशेष्यत्वमापन्नौ द्वाविमावतः ।
गम्यावङ्गाङ्गिभावस्तु कैश्चिदिष्टो विकल्पतः ॥३४॥
सर्वथा धर्मिणो धर्मो धर्मेण त्ववगम्यते ।

---

न चापीति ।

किं च, सम्बन्धसत्त्वमात्रं न साध्यं सिद्धत्वात्, न चासौ पर्वतवत् साध्यसाधनरूपमाकारद्वयं बिभर्ति, येन सम्बन्धं पक्षीकृत्याऽग्निमत्तया शक्यते साधयितुं, सम्बन्धमात्रस्याऽग्निमत्त्वाऽभावात्; सम्बन्धविशेषस्य प्रागनुमानादसिद्धस्य पक्षीकर्त्तुमशक्यत्वात्; न च तस्य धूमवत्त्वं सिद्धं येन हेतुः स्यात्, तदिदमाह न चेति[32]। तस्माद्धर्मविशिष्टो धर्म्येवाऽनुमानज्ञानेन विषयीक्रियते, न चाऽसति सम्बन्धे विशिष्टं शक्यते प्रतिपत्तुमिति सम्बन्धो ऽपि तत्राऽर्थादन्तर्णीतो गम्यते, तत्र तु प्राप्ताऽप्राप्तविवेकेन सम्बन्धस्यैवाऽर्थगृहीतस्य गम्यता ऽनुमेयता न तु स्वातन्त्र्येणेत्याह तस्मादिति पादत्रयेण । अत्रैव दृष्टान्तमाह यथेति[33] । दण्डिशब्देन हि प्रकृत्या दण्डः प्रत्ययेन तद्वानभिधीयते, सम्बन्धस्तु नान्तरीयकतया गम्यतइति । उपसंहरति विशेषणेति गम्या[34]वन्तेन । इमौ धर्मधर्मिणौ । तत्र तु किं विशेषणं किं वा विशेष्यमित्यत्रैकेषां मतमाह अङ्गाङ्गीति । विकल्पाऽभिप्रायमेव दर्शयति सर्वथेति[35]। धर्मिगतो धर्मो ऽनित्यत्वं कृत-

विशेषणविशेष्यत्वे न विशेषोऽवधार्यते ॥३५॥
'तत्रोत्तरं वदन्त्यन्ये यदि धर्मी विशेषणम् ।
हेतुधर्मेण सम्बन्धस्तस्याऽप्राधान्यतः स्फुटः ॥३६॥
प्रधानत्वाद्धि धर्मेण सम्बन्धो वाक्यतो भवेत् ।
तत्राऽसंभवतः पश्चात् कल्प्यो ऽसौ धर्मिणा सह॥३७॥
ध्वनेरित्यथ वा वाच्य'मन्वयस्य तु दर्शने ।
भेदोपात्तस्य धर्मस्य गुणभावो न दुष्यति ॥३८॥
अग्नेर्देशाऽविशिष्टत्वे न चैतत् पक्षलक्षणम् ।
विशिष्टता ऽस्य देशेन भवेदेवंप्रकारिका ॥३९॥

---

कत्वधर्मेणाऽवगम्यते, स्वातन्त्र्ये सिद्धसाध्यतापत्तेः; स तु धर्मो विशेषणं वा विशेष्यो वा भवतु न तत्राऽभिनिवेश इति । एतद् दूषयति तत्रेति[36] सपादद्वयेन । अनित्यत्वं शब्दगतमिति हि प्रतिज्ञाय कृतकत्वं हेतुत्वेनोच्यमानं प्रतिज्ञावाक्ये शब्दस्य विशेषणत्वेनाऽप्राधान्यान्न तेन संबध्यते, प्रधानेनैव त्वनित्यत्वेन सम्बन्धः सहसा गम्येत, तत्र चाऽसंबन्धमालोक्य क्लेशेन धर्मिसम्बन्धः कल्प्यः स्यात्, शब्दस्य कृतकत्वादिति वा पुनः शब्दग्रहणं कर्त्तव्यं स्यात् ; अतः शब्दस्यैवाऽनित्यत्वविशिष्टस्य साध्यत्वं युक्तमिति ।

नन्वेवं यद्यत् कृतकं तत्तदनित्यमित्यन्वयः, दर्शनवेलायां प्रधानभूतेन शब्देनैवाऽन्वयो गम्येत न गुणभूतेनाऽनित्यत्वेनाऽत आह अन्वयस्येति[38] । यत्कृतकं तदनित्यमित्यन्वयवाक्ये पुनरनित्यत्वस्योपादानात्कृतकत्वाऽन्वयसिद्धेः प्रतिज्ञायां तस्य गुणभावो न दूषणाय भवतीति । इतश्चाऽग्नेर्न विशेष्यत्वमित्याह अग्नेरिति[39] । वक्ष्य-

यो ऽग्निः सो ऽस्ति क चिद्देशे यो दृष्टो यत्र तत्र वा, ।
अग्निः पूर्वाऽनुभूतो वा देशमात्रेण सङ्गतः, ॥४०॥
यो ऽग्निः सो ऽनेन युक्तो वा, यो दृष्टो ऽनेन सो ऽथ वा,।
यो ऽयं स देशमात्रेण युक्तः, पूर्वेण वा ऽप्ययम्,॥४१॥
एतद्देशविशिष्टो वा यो ऽयमग्निरितीह तु ।
पूर्वयोः सिद्धसाध्यत्वं परेषु स्याद्विरुद्धता, ॥४२॥
व्याप्तिरेतेन देशेन सर्वाऽग्नीनां न युज्यते, ।
नाऽपि पूर्वस्य, नाऽप्येष वन्हिः सर्वैर्विशिष्यते ॥४३॥

---

माणं पञ्चलक्षणं पञ्चप्रकारो विशेष्यस्याग्नेर्न सम्भवतीति। तानेव प्रकारान् दर्शयति विशिष्टेति इत्य[४२]न्तेन। एतेषु षट्सु पक्षेषु प्रथमद्वितीययोः सिद्धसाध्यत्वम्, उत्तरेषु पञ्चसु प्रमाणान्तरविरोध इत्याह इह त्विति । सिद्धसाध्यत्वं सुगमम्।

विरोधं प्रपञ्चयति व्याप्तिरिति[४३] । चतुर्थपक्षे हि यो ऽग्निः सो ऽनेन युक्त इत्यग्न्युद्देशेन पर्वतसंयोगोपादानेन यावदुद्देश्यमुपादेयसम्बन्धात् उद्देश्यस्य च सर्वाऽग्निव्यक्तिविशेषत्वात्सर्वाग्नीनां पर्वतसम्बन्धो ऽवगम्येत, ततश्च प्रमाणान्तरविरोधः स्यात्; पर्वतविशेषोद्देशेन त्वग्निजातिसम्बन्धोपादाने ऽप्युपादेयस्योद्देश्येनाऽव्याप्तेर्न कश्चिद्विरोध इति। पञ्चमपष्ठसप्तमेषु यथाक्रमं विरोधं दर्शयति नाऽपीति। पूर्वदृष्टस्याऽग्नेरेतद्देशेन न सम्बन्ध एव, पर्वतगतो वह्निः सर्वैर्देशैर्न विशिष्यतइति। अयं च पष्ठस्य विरोधः तृतीयस्याप्यग्निः पूर्वाऽनुभूतो वा देशमात्रेण सङ्गत इत्यस्यापि तुल्य इति न पृथक्

देशैः, पूर्वेण वा ऽप्यस्य न देशेन विशेष्यता ।
एतद्देशविशिष्टो ऽयमित्येतत् कथ्यते कथम् ॥४४॥
यदा देशाऽनपेक्षो ऽग्निर्नाऽयमित्यवधार्यते ।
अग्नेः पूर्वतरं चात्र देश एवाऽवधार्यते ॥४५॥
तज्ज्ञानकालबुद्धश्च न देशः स्याद्विशेषणम् ।
देशस्य पर्वतादेस्तु स्वरूपे पावकादृते ॥४६॥
गृहीते ऽग्निविशिष्टस्य पुनर्ज्ञानं न दुष्यति ।
तस्माद्धर्मविशिष्टस्य धर्मिणः स्यात् प्रमेयता ॥४७॥
सा देशस्याऽग्नियुक्तस्य, धूमस्याऽन्यैश्च कल्पिता ।
ननु शब्दवदेव स्याल्लिङ्गगम्यं विशेषणम् ॥४८॥

---

प्रदर्शित इति । अष्टमं पक्षं दूषयति एतदिति[४४] । किमिति वा न कथ्यते, ऽत आह यदेति[४५] । तर्ह्यगृहीतपर्वतसम्बन्धैरयमिति तद्गतो वह्निरवधार्यते, अनवधारितश्च कथं पक्षीक्रियते, तत्सम्बन्धाऽग्रहे वा नाऽनुमेयत्वमवशिष्येतेति । इतश्च न देशस्य विशेषणत्वमित्याह अग्नेरिति । प्रागवधारितो हि पश्चाद्विशेषणविशिष्टो ऽनुमेयदेशश्च प्रागेव गम्यते; तदसौ वह्निज्ञानकाले ऽवबुद्धत्वान्न विशेषणमिति । विशेष्यस्तु भवतीत्याह देशस्येति[४६] । उपसंहरति तस्मादिति[४७] । सा च देशस्यैव धर्मित्वादित्याह सा देशस्येति[४८] ।

नैयायिकास्तु धूममेव धर्मीकृत्य तस्यैवाऽग्निविशिष्टस्याऽनुमेयतामाहुरित्याह धूमस्येति । चोदयति नन्विति । यथैव जातिविशिष्टव्यक्त्यवगमे ऽपि शब्दस्य जाताविव विशेषणे शक्तिर्न तद्विशिष्टे

नैवं, न ह्यत्र लिङ्गस्य शक्त्यनेकत्वकल्पना ।
न च तस्याऽनुमेयत्वं विशेष्यश्चाऽवधारितः ॥४९॥
विशिष्टत्वेन चाऽज्ञानात्तन्मात्रस्याऽनुमेयता ।
ननु धूमविशेष्यत्वे हेतोः पक्षैकदेशता ॥५०॥
नैतदस्ति, विशेषे हि साध्ये सामान्यहेतुता ।
धूमतज्ज्ञानसम्बन्धस्मृतिप्रामाण्यकल्पने ॥५१॥

---

तथा लिङ्गस्यापि विशेषणभूते ऽग्नावेव पर्यवसानाद् न विशिष्टविषयतेति । परिहरति नैवमिति[४९] । कारणमाह न हीति । कथमित्याह न चेति । च शब्दो हेतौ, विशेषणं हि सम्बन्धग्रहणकाले गृहीतम् इदानीं स्मर्यमाणमेव विशेष्यं शक्नोति विशेष्टुमिति तत्र न शब्दस्येव लिङ्गस्य शक्तिः कल्पनीयेति । विशेष्यमपि पर्वतादिकं प्रमाणान्तराऽवधारितमिति न तत्रापि लिङ्गस्य शक्तिकल्पनमित्याह विशेष्यश्चावधारित इति । विशेषणसम्बन्धमात्रं त्वन्यतो ऽनवगतमिति तन्मात्रस्याऽनुमेयत्वमिति तत्रैव लिङ्गस्य शक्तिरिति न शक्त्यनेकत्वमित्याह विशिष्टत्वेनेति[५०] । ननु व्यापकमनुमेयं, न चाऽग्निविशिष्टस्य पर्वतस्य व्यापकत्वं व्यापकविशिष्टधर्म्यन्तराऽवगतिरनुमानं न व्यापकस्वरूपाऽवगतिरिति न दोषः । चोदयति नन्विति । परिहरति नैतदिति[५१] । सांप्रतिको हि धूमविशेषो ऽग्निमत्तया साध्यमानपक्षः धूमत्वं सामान्यं च हेतुरिति ।

दर्शितम् अनुमानस्य प्रमेयम्, इदानीं प्रमाणफले तयोश्च विषयैकत्वं दर्शयति धूमेति । धूमतज्ज्ञानादीनां प्रमाणत्वं प्रमेयज्ञानं फलं, तत्प्रामाण्ये तु हानादिबुद्धिः फलं, व्यापारतः समानविषयत्वं

फलेन विषयैकत्वं तद्व्यापारात् पुरोदितम् ।
प्रमेयधीप्रमाणत्वं* भाष्यकारस्तु मन्यते ॥५२॥
प्रत्यक्षाऽनियमोक्तिश्च सर्वत्रैवाऽनुषज्यते ।
अनुमानगृहीतस्य तेनैव प्रतिपादनम् ॥५३॥

---

प्रत्यक्षवदिहापि वेदितव्यम्। सर्वेषां धूमादीनां प्रमेयज्ञाने व्यापारात्।

यत्तु भिक्षुणा विषयैकत्वतृष्णया ज्ञानमेव प्रमाणं फलं चेति प्रत्यक्षे दर्शयित्वा तदेवाऽनुमानेऽप्यतिदिष्टं पूर्ववत्फलमस्येति, तस्य निराकरणमपि प्रत्यक्षोक्तमेव 'साध्यसाधनयोर्भेदो लौकिकस्तेन बाधित' इत्यतिदेष्टव्यम्। आह च—

पूर्ववत्फलमस्येति यः प्रमाणफलैकताम्।
आह प्रत्यक्षवत्तस्य प्रतिषेधोऽपि पूर्ववत्॥
को वृत्तच्छिदयैकत्वं परशोर्वेदितुं क्षमः॥ इति।

ननु प्रमेयबुद्धेरेव प्रामाण्यं भाष्यकारेणोक्तं, तत्कथं भवता प्रमाणाऽनियमो वर्ण्यते, ऽत आह प्रमेयेति[५२]। सत्यमत्रैवं भाष्यकारेणोक्तं, प्रत्यक्षोक्तस्त्वयमनियमो बुद्धिर्वा जन्म वेत्यादिरिहाप्यनुषङ्गेण द्रष्टव्य इति। एवं प्रमाणं प्रमेयं फलं च दर्शितं, प्रतिज्ञाहेतुदृष्टान्तदोषास्तु साधनगता एव वक्तव्या इति साधनमनुसंधत्ते अनुमानेति[५३]। स्वयमनुमितार्थे परस्याऽप्यनुमानबुद्धिर्येन वाक्येनोत्पद्यते तद्वाक्यं साधनमित्युच्यते। तच्च वाक्यं प्रतिज्ञाहेतुदृष्टान्तैः सावयवमङ्गीकृत्य प्रतिज्ञां शोधयति, साध्यनिर्देशः प्रतिज्ञा, साध्यश्च पक्षः, स च यथोदितो धर्मविशिष्टो धर्मी, स स्वयमनुमितस्याऽर्थ-

---

* प्रमाणं हीति क्व चित्।

परेभ्यो वाञ्छता* वाच्यः पूर्वपक्षो यथोदितः ।
तत्र† धर्मिणमुद्दिश्य साध्यधर्मो विधीयते ॥५४॥
नियमस्तद्विपक्षाच्च‡ कल्प्यते§ नाऽविरोधिनः ।
असन्निकृष्टवाचा च द्वयमत्र जिहासितम् ॥५५॥
ताद्रूप्येण परिच्छित्ति‖स्तद्विपर्ययतो ऽपि च ।
प्रमितस्य प्रमाणे हि नाऽपेक्षा जायते पुनः ॥५६॥

---

स्याऽनुमानेनैव प्रतिपादनं परस्मै वाञ्छता प्रथमं वक्तव्यः, तद्वचनशब्दः प्रतिज्ञाख्यः साधनाऽवयवः प्रयोक्तव्य इति ।

कीदृशं तद्वचनं, तद्दर्शयति तत्रेति[५४] । यो ऽयं पर्वतः सो ऽग्निमानिति । ननूद्देश्यस्योपादेयेन नियमादग्निमानेवेत्यापद्यते, ततश्च धर्मान्तराणां व्युदासे धूमवत्त्वस्यापि व्युदासः स्यादत आह नियम इति[५५] । अग्निमत्तया हि पर्वतो नियम्यमानो यो ऽग्निमत्त्वविपक्षस्तदभावः तदभावनियतं च धर्मान्तरं तस्मादेव नियम्यते, तस्यैव व्युदासो भवति, नाऽविरोधिनो धर्मान्तरस्य; यथा शुक्ल एव पट इत्युक्ते शौक्ल्याभावस्य कृष्णादीनां च निवृत्तिः, न तु दैर्घ्यादेः, तथाऽत्रापीति ।

भाष्यकारेणाऽसन्निकृष्टइति प्रतिज्ञाताऽर्थस्य साध्यस्य विशेषणमुपात्तं, तस्य व्यावर्त्यं दर्शयति असन्निकृष्टेति । येन रूपेणाऽनुमातुमिष्यते तेनैव रूपेण तद्विपरीतेन वा रूपान्तरेण शीघ्रप्रमाणेन

---

* वाञ्छित इति ३ पु. पा. । † तवेति १ पु. पा. ।
‡ तद्विरुद्धाच्चेति २पु. पा. ।
§ कल्पते इति ३ पु. पा. ।
‖ ताद्रूप्येण गृहीतत्वमिति २ पु. पा. ।

ताद्रूप्येण परिच्छिन्ने प्रमाणं निष्फलं परम् ।
वैपरीत्यपरिच्छिन्ने नाऽवकाशः परस्य तु ॥५७॥
मूले तस्य ह्यनुत्पन्ने पूर्वेण विषयो हृतः ।

---

परिच्छिन्नो यो धर्मी स सन्निकृष्टः, तस्य पक्षत्वं व्यावर्त्तयितुमसंनिकृष्टग्रहणमिति। किमिति पुनस्तद्व्यावर्त्त्यते, ऽत आह प्रमितस्येति[५६]। द्वेधा ऽपि प्रमिते नास्ति प्रमाणाऽपेक्षेति।

एतदेव विभज्य विवृणोति ताद्रूप्येणेति[५७] । न हि हस्तिनि दृश्यमाने पुनस्तत्पादेनाऽनुमानं फलवत्, अतो न तत्र प्रमाणाऽपेक्षेति। ननु महानसादौ परिच्छिन्नस्याऽग्नेः पर्वते ऽपि परिच्छेदात्कथमपरिच्छिन्नविषयत्वं; देशान्तरकालान्तराधिक्यादिति चेत्, न, यावद्धूमदेशकालमग्निसद्भावस्य व्याप्तावगृहीतत्वात् । असन्निकृष्टग्रहणं तु स्मरणाऽभिमाननिरासार्थम । मैवं, न ह्यनुमानादन्येन यावद्धूमदेशकालमग्निसद्भावः शक्यते ग्रहीतुमित्यसकृदुक्तम् । धूमवानग्निमानिति सामान्यतो ऽवगते ऽपि पर्वतादेर्देशविशेषस्य स्वरूपं व्याप्तिसमये नाऽवगतं, नतरामग्निमत्त्वं, तस्माद्देशकालाऽऽधिक्याद्युक्तमगृहीतग्राहित्वमनुमानस्य, स्मरणाऽभिमाननिरासार्थत्वे चाऽसंनिकृष्टग्रहणस्य विपरीतपरिच्छिन्ने ऽनुमानप्रवृत्तिरनिरस्ता स्यात्, न हि तन्निरासस्याऽवयवान्तरमस्तीत्यलमनेन ।

तत्र तावत्ताद्रूप्यपरिच्छिन्ने ऽनुमानं, विपरीतरूपेणापि शीघ्रप्रवृत्तिना प्रमाणेन परिच्छिन्ने परस्य नाऽवकाशो ऽस्तीत्याह वैपरीत्येति । कारणमाह मूले इति[५८]। लिङ्गदर्शनव्याप्तिस्मरणादिकमनुमानस्य मूलं, तद्यावन्नैवनिष्पद्यते तावदेवाऽनुमान विषयो ऽपहृतः, अनुमानाऽधिगम्यरूपविपरीतरूपेण परिच्छिन्ने तद्विपरीतरूपे न प्रमाणाऽपेक्षेति । न केवलमनुमानविषयमेवेदं मन्थरस्य बाध्यत्वं

प्रत्यक्षादेश्च षट्कस्य येनैवार्थो ऽवधारितः* ॥५८॥
तेनैवोत्तरबाधः स्याद् विकल्पादेरसम्भवात् ।

---

षण्णामपि प्रत्यक्षादीनां मध्ये येनैव शीघ्रप्रवृत्तिना प्रथममर्थो ऽवधारितो भवति तेनैवोत्तरकालस्य मन्थरस्योत्पत्तिनिरोधलक्षणो बाधो भवतीत्याह प्रत्यक्षादेरिति ।

कारणमाह विकल्पादिरिति[५९] । विकल्पस्तावत्सिद्धवस्तुविषयो न संभवति, नियतैकस्वभावत्वाद्वस्तुनः, समुच्चयो ऽपि विरोधान्न संभवतीति पारिशेष्याद्बाधः; तद्यदि परं पूर्वाऽनपेक्षमुत्पद्यते यथा नेदं रजतमिति, तस्य पूर्वाऽबाधेनोत्पत्त्यसंम्भवात् उत्पन्नस्यैव पूर्वस्योत्तरेण मिथ्यात्वख्यापनरूपो बाधो भवति, अनुमानस्य च लिङ्गदर्शनदृष्टान्ताऽपेक्षया विलम्बमानस्याऽलब्धात्मकस्योत्पत्तुमभिप्रवर्त्तमानस्य शीघ्रप्रवृत्तिना प्रत्यक्षादिना विषयाऽपहारेण मुखनिरोधादुत्पत्तिरेव निरुध्यते । शीघ्रं हि प्रमाणं प्रथममेव प्रमेयं विषयीकृत्य एवमिदमित्यनुपरमेण निश्चाययतीति न तद्विरुद्धस्यात्मलाभः सम्भवति। तदेवं सर्वत्र शीघ्रप्रवृत्ति प्रमाणं प्रतिष्ठितं तद्विलम्बितस्य बाधकं भवति । न ह्यग्नावुष्णत्वविपरीतशैत्याऽनुमानं कस्यचिदुत्पद्यते । तेनाऽबाधितविषयत्वमपि मन्थरस्योत्पत्तौ कारणमित्यङ्गीकर्त्तव्यमिति । अनुमाने चाऽयमपरो विशेषः, यदा हि प्रत्यक्षाऽवगतौष्ण्ये ऽग्नौ द्रव्यत्वेन पृथिव्यादिवदनुष्णत्वमनुमातुमिष्यते, तदैवोष्णे ऽप्यग्नौ द्रव्यत्वं पश्यतो ऽनुमानमनैकान्तिकत्वान्नाऽनुष्णत्वमनुमापयेत् । नन्वनुमित्सितविषयव्यतिरिक्तविषयैव व्याप्तिरनुमानाङ्गम्, अस्ति च द्रव्यत्वस्याऽग्निव्यतिरिक्तेषु पृथिव्यादिषु अनुष्ण-

---

* नैवार्थो ह्यवधारित इति का. पु. पा. ।

अग्राह्यता तु शब्दादेः प्रत्यक्षेण विरुध्यते ॥५९॥
तेषामश्रावणत्वादि विरुद्धमनुमानतः ।
न हि श्रावणता नाम प्रत्यक्षेणाऽवगम्यते ॥६०॥
सा ऽन्वयव्यतिरेकाभ्यां गम्यते बधिरादिषु ।

---

त्वेन व्याप्तिरिति स्यादेव ततस्तदनुमानम्, नैवम् अदृष्टव्यभिचारो हेतुरनुमानाङ्गं, स यत्र क चिदपि दृष्टव्यभिचारो नाऽनुमानज्ञानं जनयतीति यत्किं चिदेतत् । यत्र तु शीघ्रमपि प्रमाणं प्रत्यक्षादिकम् उपजातमपि दूरत्वादिदोषेण सांशयिकं स्वयमेवाऽप्रतिष्ठितं भवति तत्र मन्थरेणापि निःसंशयेन विपरीताऽर्थपरिच्छित्तिर्भवत्येवेति ।

प्रत्यक्षविरोधोदाहरणमाह अग्राह्यतेति । अग्राह्यत्वं ग्रहणाऽयोग्यत्वम्, अविद्यमानत्वमिति यावत् । यो हि शून्यवादी मायावादी वा नामरूपप्रपञ्चस्याऽसद्भावं प्रतिजानीते तस्य प्रत्यक्षविरोध इति ।

अनुमानविरोधमुदाहरति तेषामिति[60] । दिङ्नागस्त्विदं प्रत्यक्षविरोधोदाहरणमिच्छति, तन्निराकरोति न हीति । इदं शब्दस्य श्रावणत्वं यज् ज्ञानस्य श्रोत्रजन्यत्वं, तद्भावभावनियमश्च तज्जन्यत्वं, न च श्रोत्रं शब्दज्ञानं वा प्रत्यक्षं, तत्कथं श्रोत्रभावे शब्दज्ञानस्य भावः प्रत्यक्षेण गृह्यते, अतो न प्रत्यक्षगम्या श्रावणतेति । किं त्वनुमानगम्येत्याह सेति[61] । शब्दज्ञानस्य कार्यत्वात्कारणवत्त्वे कल्पिते शब्दोच्चारणादिषु सत्स्वपि कदा चिच्छब्दस्याऽज्ञानात्तदतिरिक्तमपि कारणमस्तीति निश्चिते कर्णशष्कुलीपिधाने तस्याश्च वातदोषादिवशादुपघाते वा बधिरस्याऽश्रवणादन्यस्य च श्रवणात्कर्णशष्कुलीगतमेवाऽऽकाशमित्यनुमीयते, तच्च श्रोत्रम्; अतो ऽनुमानगम्यैव श्रावणता, तेन यो नाम शब्दो ऽश्रावणः गुणत्वाद्रूपादिवदिति प्रयुङ्क्ते

त्रिधा शब्दविरोधः स्यात् प्रतिज्ञादिविभागतः ॥६१॥
प्रतिज्ञापूर्वसंजल्प*सर्वलोकप्रसिद्धितः ।
'यावज्जीवमहं मौनीत्युक्तिमात्रेण बाध्यते ॥६२॥
सर्ववाक्यमृषात्वे तु† धर्मोक्त्यैवात्मबाधनम् ।
धर्म्युक्त्या ऽहं यतो जातः सा वन्ध्या जननी मम'॥६३॥
बौद्धस्य शब्दनित्यत्वं पूर्वोपेतेन बाध्यते ।
चन्द्रशब्दाऽभिधेयत्वं शशिनो यो निषेधति ॥६४॥

---

तस्याऽनुमानविरोधः, किं पुनः श्रावणत्वाऽनुमानस्याऽश्रावणत्वानुमानाद्बलीयस्त्वं, शीघ्रप्रवृतित्वमेव, शब्दज्ञानश्रोत्रयोर्हि कार्यकारणभावं प्रतिषेधता ऽवश्यं कार्यकारणभावो ऽन्यत्रावगतो ऽत्र प्रतिषेद्धव्यः, अनवगतस्य प्रतिषेधायोगात्, तस्य च तद्भावभावित्वमेवाऽन्यत्रापि प्रमाणम्; तच्च शब्दज्ञानश्रोत्रयोरपि समानमिति यथैवाऽन्यत्र कार्यकारणभावो गृह्यते तथैव शब्दज्ञानश्रोत्रयोरपि गृह्यतइति पाश्चात्यस्याऽश्रावणत्वाऽनुमानस्याऽनुत्पत्तिरिति ।

शब्दविरोधं दर्शयति त्रिधेति । विभागमेव दर्शयति प्रतिज्ञेति[६२] । अथ प्रतिज्ञाविरोधमप्युच्चारणधर्मधर्म्युक्तिभिस्त्रेधा दर्शयति यावज्जीवमिति सार्द्धेन । उक्तिरुच्चारणं, तेनैव प्रतिज्ञातमौनित्वस्य बाध्यत्वं सर्ववाक्यं मृषेति मृषात्वधर्मोक्त्यैव प्रतिज्ञातार्थो मृषात्वं बाध्यते, सर्वमृषात्वे प्रतिज्ञावाक्यमपि मृषा स्यात्, तदेव च तस्य मृषात्वं यत्सर्वेषाममृषात्वम्, अतो मृषात्वेनैव मृषात्वस्य बाधः; जननी मे वन्ध्येति जननीति धर्म्युक्त्यैव वन्ध्यात्वबाधः । सो ऽयं स्ववचनविरोध इति । पूर्वसंजल्पविरोधमुदाहरति बौद्धस्येति[६४] ।

---

* संकल्पेति १ पु. पा. । † मृषात्वेनेति १ पु. पा. ।

स सर्वलोकसिद्धेन चन्द्रज्ञानेन बाध्यते ।
ज्ञातगोगवयाकारं प्रति यः साधयेदिदम् ॥६५॥
न गोर्गवयसादृश्यं तस्य बाधोपमानतः ।
'गेहाऽवगतनास्तित्वो जीवंश्चैत्रो यदा बहिः ॥६६॥
नास्तीति साध्यते बाधस्तत्राऽर्थापत्तितो भवेत् ।
अग्नावदाहके साध्ये शब्दे चाऽनभिधायके ॥६७॥

---

सर्वलोकप्रसिद्धिविरोधमुदाहरति चन्द्रेति । चन्द्रशब्देन हि शशिविषयं विज्ञानं सर्वलोकप्रसिद्धमुपजायमानं तस्य तदभिधेयतां बोधयदनभिधेयत्वं बाधतइति । एतेन च प्रतिज्ञाविरोधादयः शब्दसंस्पर्शित्वमात्रेण शब्दविरोधा इत्युच्यन्ते, न त्वत्र क्व चिदपि शब्देन प्रतिज्ञातार्थो बाध्यते; सर्वत्राऽनुमानेनाऽर्थापत्त्या प्रत्यक्षेण वा बाधः, य एव तु श्रुतिस्मृतिविरुद्धो ऽर्थः प्रतिज्ञायते यथा शुचि नरशिरःकपालं प्राण्यङ्गत्वाच्छुक्तिवत्, अग्निहोत्रं न स्वर्गसाधनं क्रियात्वाद्भोजनवत्, अग्नीषोमीयहिंसा प्रत्यवायकरी हिंसात्वाद् ब्रह्महत्यादिवदिति, अत्रैवाऽऽगमबाधः, पदार्था ह्यगृहीतसम्बन्धा एवाऽऽगमार्थं बोधयन्तो नियमस्मरणसापेक्षाल्लिङ्गाद्बलीयांसो भवन्तीत्यनुमानादागमस्य बलीयस्त्वं, विशेषतश्च वेदस्य निर्दोषस्याऽनन्यथासिद्धेश्च सम्भवाद्दोषादन्यथोपपत्तेश्चाऽनुमानाद्बलीयस्त्वमिति । उपमानविरोधमुदाहरति ज्ञातेति[६५] ।

अर्थापत्तिविरोधं दर्शयन् दृष्टाऽर्थापत्तिविरोधस्य तावदुदाहरणपञ्चकं दर्शयति गेहेति[६६] द्वयेन । दृश्यादर्शनाऽवगतगृहाऽभावकल्पितस्य बहिर्भावस्याऽभावप्रतिज्ञा ऽभावपूर्विकया ऽर्थापत्त्या बाध्यते, वह्नेस्तु प्रत्यक्षाऽवगतदाहकल्पितशक्तेरदाहकत्वम् अतच्छक्तित्वं

श्रोत्रादिनास्तितायां च शब्दाऽनित्यत्वसाधने'।
श्रुताऽर्थापत्तिबाधो ऽत्र यदाप्तोक्तिनिवारिते ॥६८॥
दिवाभुजौ निषिध्येत* हेतुना रात्रिभोजनम्।
शशशृङ्गादिसद्भावविरोधो ऽनुपलब्धितः ॥६९॥
एवं च धर्मसम्बन्धबाधस्तावदुदाहृतः।
धर्मधर्म्युभयेषां च स्वरूपस्व†विशेषयोः ॥७०॥

---

प्रत्यक्षपूर्विकया चेष्टानुमितज्ञानकल्पिताऽभिधानशक्त्यनुमानमनुमानपूर्विकया शब्दज्ञानकारणत्वेनाऽनुमितस्य कर्णशष्कुल्यवच्छिन्नस्य दिगाकाशाऽहंकाराणामन्यतमस्य सामर्थ्ये कल्पिते तदभावाऽनुमानस्याऽनुमानपूर्विकया ऽर्थापत्त्या बाधः। श्रोत्रशब्देन तच्छक्तिर्लक्ष्यते। तथा ऽर्थापत्तिः सिद्धाऽभिधानशक्त्यन्यथानुपपत्तिकल्पितशब्दनित्यत्वविपरीता नित्यत्वपक्षस्याऽस्यार्थापत्तिपूर्विकया। श्रुताऽर्थापत्तिविरोधमुदाहरति श्रुतेति[६८]।

अभावविरोधमुदाहरति शशेति[६९]। भावप्रमाणवदेव चाऽभावस्यापि बलाऽबलभावः, प्रमाणेषु यद्यतो बलीयः तदभावो ऽपि ततो बलीयान्, यच्च यतो दुर्बलं तदभावो ऽपि ततो दुर्बल इति वेदितव्यमिति।

एवमुदाहृतं प्रत्यक्षादिबाधमुपसंहरति एवं चेति[७०]। धर्मसम्बन्धो हि धर्मिणो ऽनुमानस्य प्रमेयतत्स्वरूपस्य प्रत्यक्षादिबाधो दर्शि-

---

* दिवाभुजेर्निषिद्धेनेति १ पु.। दिवाभुजो निषिधेनेति २ पु. पा.।

† स्वरूपत्वेति पाठान्तरम्।

श्रुत्यर्थाऽऽक्षिप्तयोर्वाक्ये वाच्यः सर्वप्रमाणकः ।
तृणादिविक्रियाहेतोरग्निमद्धिमसाधने ॥७१॥
प्रत्यक्षाऽवगताच्छैत्यात्तद्विशेषोत्थबाधनम् ।
'अधर्मो विहितो दुःखं करोत्यल्प*मितीह तु ॥७२॥
विहितत्वादधर्मस्य स्वरूपस्यैव बाधनम् ।
तथा दुःखनिमित्तत्वं विशेषस्तस्य बाध्यते' ॥७३॥

---

त इति धर्मस्वरूपवत्तद्विशेषस्य धर्मिस्वरूपतद्विशेषयोरुभयस्वरूपतद्विशेषयोश्च प्रत्यक्षादिबाधो दर्शयितव्य इत्याह धर्मेति । धर्मग्रहणं दृष्टान्तार्थम् । अत्र पूर्वोऽभ्युपगमबाधे यत्किंचिद्विशेषबाधो ऽपि दूषणमेव, प्रत्यक्षादिबाधस्तु प्रतिज्ञातस्यैव विशेषस्य वक्तव्यो यो धर्मधर्म्युक्त्यैवाऽवर्जनीयतया ऽर्थादाक्षिप्यते, तद्बाधे ऽपि प्रतिज्ञातार्थे बाधो भवति, अत उक्तं श्रुत्यर्थाक्षिप्तयोरिति[७१]। श्रुत्युपात्तस्य स्वरूपस्याऽर्थाक्षिप्तस्य च विशेषस्येत्यर्थः । यस्तु विशेषो नाऽऽक्षिप्यते तस्मिन् बाधिते ऽपि न प्रतिज्ञाताऽर्थो बाधितो भवति, तस्य यदि वाद्युपगममात्रेण प्रतिवादी बाधं ब्रूयात्ततः प्रकृतासिद्धान्तान्तरदूषणं नाम निग्रहस्थानमापद्यतइति ।

तत्र धर्मविशेषबाधमुदाहरति तृणेति । अग्निर्ह्युष्णत्वव्याप्तः स्वव्यापकमुष्णत्वमाक्षिपेत्, तस्य च प्रत्यक्षाऽवगतेन शैत्येन बाधात् तद्व्याप्तो ऽग्निरपि बाधितो भवति ।

धर्मिस्वरूपतद्विशेषबाधमुदाहरति अधर्म इति[७२] सार्द्धेन । विहितग्रहणमुपलक्षणमात्रं न तु धर्मि तद्विशेषणं वा । तदयमर्थः । यो ऽग्नीषोमीयहिंसाद्यधर्मः सो ऽल्पदुःखं करोति इति । अत्र चाऽधर्म-

---

* अलमिति पाठान्तरम् ।

'अयथार्था धियः सर्वा इत्युक्ते द्वयबाधनम् ।
स्वरूपस्वविशेषाभ्यां' तद्धीमिथ्यात्वसाधनात्* ॥७४॥
क्षणिकाऽत्यन्तमिथ्यात्वे विशेषौ च द्वयोरिह ।
दर्शनादेकदेशस्येत्यनेनैतद् व्युदस्यते ॥७५॥

---

त्वादेवाऽर्थाक्षिप्तं दुःखकरत्वम् । अल्पत्वस्य विषयज्ञानार्थमुपात्तमल्पत्वमेव साध्यते; तदिहाऽधर्मस्वरूपधर्मिणो विहितत्वादेव बाधः, आगमेन बाध इत्यर्थः । तथा यो दुःखकरत्वमधर्मस्य धर्मिणो विशेषो ऽर्थाक्षिप्तः तस्याप्यागमेनैव बाधः, तद्बाधे च तद्विषयमल्पत्वमपि प्रतिज्ञाताऽर्थो बाधितं भवतीति । उभयस्वरूपतद्विशेषबाधमुदाहरति अयथार्था इति[७४] पादत्रयेण । कारणमाह तद्धीति ।

को पुनरनयोर्विशेषौ, तौ दर्शयति क्षणिकेति[७५] । ज्ञानस्वरूपस्य तद्विशेषस्य च क्षणिकत्वस्याऽयथार्थत्वस्य तद्विशेषस्य चात्यन्तिकत्वस्य बाधः, तद्ग्राहिणीनामपि धियां मिथ्यात्वापातात् । सो ऽयं प्रतिज्ञयैव धर्मधर्मिस्वरूपयोर्बाधात् स्ववचनबाधः । पूर्वं धर्मोक्त्या धर्म्युक्त्या च बाधो वर्णितः, संप्रत्युभयोक्त्या, सो ऽयं निरालम्बनवादे दर्शितः । क्षणिकात्यन्तिकयोश्च धर्मधर्मिविशेषयोरभ्युपगतयोर्बाधात् पूर्वाऽभ्युपगमबाध इति । नन्वप्रसिद्धविशेष्यत्वमप्रसिद्धविशेषणत्वमप्रसिद्धोभयत्वं च दोषाः किमिति नोच्यन्ते, निरालम्बनवादएवाऽप्रसिद्धोभयत्वं वा वाच्यम्, अन्यतरस्य वेति दर्शितत्वादुदाहरणमपि नान्यन्मृग्यम् । नन्वदृष्टस्वलक्षणस्यापि कर्मणः संयोगविभागाभ्यामनुमानादप्रसिद्धविशेषणत्वं दोषः, कथं पुनरदृष्टस्वलक्षणस्याऽनुमानमुत्पत्तिमतः फलस्य दर्शनादिति चेत् । नन्वेवं संयोगविभागावुत्पत्तिकारणजन्याविति पक्षः स्यात्, प्रसिद्धं चोत्पत्तिकारणजन्यत्वं घटा-

---

* बोधनादिति का. पु. पा. ।

यत्रैकस्योभयोर्वापि संशयाऽधीविपर्ययाः ।
शैत्यान्न दाहको वह्निश्चाक्षुषत्वादनित्यता ॥७६॥
शब्दस्येत्येवमादौ तु द्वयोः सिद्धो विपर्ययः ।
कृतकत्वगुणत्वादौ परोक्ते याज्ञिकं प्रति ॥७७॥
स्वोक्ते चैवंप्रकारे स्यादसिद्धो ऽन्यतरस्य तु ।
'बाष्पादिभावसंदिग्धो द्वयोरन्यतरस्य वा ॥७८॥
धूमस्त्रिधा ऽप्यसिद्धः स्यादेवं तावत्स्वरूपतः ।

---

दाविति नाऽप्रसिद्धविशेषणत्वम् । अथ कर्मजन्याविति साध्येनाऽगृहीते कर्मणि तद्विशिष्टबुद्ध्यसंभवात्, न ह्यगृहीतविशेषणा विशेष्ये बुद्धिः; अथ कर्मस्वरूपमप्यनुमानेनैव गृह्येत, न, अत्यन्ताऽदृष्टेन तेन कस्य चिल्लिङ्गस्य संबन्धग्रहणाऽसंभवात् । यश्च दृष्टस्यापि वह्न्यादेर्देशकालान्तरसंबन्धमात्रमप्यगृहीतं नाऽनुमानेन गृह्यते, गृहीतविषयमेवाऽनुमानमिति वदति, स कर्मस्वरूपमेवाऽगृहीतमनुमानेन गृह्यतइति वदन्नुन्मादमेवाऽऽत्मनः प्रकटयतीत्यास्तां तावत् ।

एवमसंनिकृष्टग्रहणनिरस्ताः प्रतिज्ञाभासाः प्रपञ्चिताः, संप्रति हेत्वाभासानसिद्धाऽनैकान्तिकविरुद्धान्प्रपञ्चयन् एकदेशदर्शनादित्यनेन दर्शनशब्देन निश्चयवाचिना निरस्तमसिद्धं दर्शयति दर्शनादिति । वादिप्रतिवादिनोरेकस्य द्वयोर्वा संशयाऽज्ञानविपर्यया यस्मिन् सो ऽनिश्चितत्वादसिद्धो ऽनेन व्युदस्यतइति । द्वयोर्विपर्ययाऽसिद्धिमुदाहरति शैत्यादिति[७६] । अन्यतरस्य विपर्ययाऽसिद्धिमुदाहरति कृतकत्वेति[७७] । शब्दाऽनित्यत्वे हि यदेव मीमांसकं प्रति वैशेषिकादिभिः कृतकत्वगुणत्वादिकं हेतुत्वेनोच्यमानं प्रतिवादिनो ऽसिद्धं तदेव मीमांसकेनोच्यमानं वाद्यसिद्धमिति । संदिग्धा-

एतएव प्रकाराः स्युराश्रयाऽसिद्धिकल्पने ॥७९॥
ज्ञाते ऽपि हि स्वरूपेण नाऽतद्धर्मे ऽस्ति हेतुता ।
सर्वत्र दृष्टकार्यत्वादात्मा सर्वगतस्त्विति ॥८०॥
बौद्धं प्रत्याश्रयासिद्धो, लौकिकादेस्तु संशयः* ।
'वाङ्मात्राऽसिद्धिमात्रेण व्यवहाराऽप्रकल्पनात् ॥८१॥

---

ऽसिद्धमुदाहरति बाष्पादीति[७८] पादत्रयेण । त्रिधाऽपीति, वादिप्रतिवाद्युभयेषामिति । अज्ञानाऽसिद्धिस्त्वप्रसिद्धार्थपदप्रयोगे दर्शयितव्येति ।

एवं तावत्स्वरूपतो ऽसिद्धिमुक्तामुपसंहरति एवं तावदिति[७९] । आश्रयद्वारेणापि हेतोरसिद्धिः, एवमेवाऽज्ञानसंशयविपर्ययैर्वादिप्रतिवाद्युभयाऽपेक्षैर्वक्तव्येत्याह एतएवेति । कथं पुनर्धर्म्यसिद्धौ हेतोरसिद्धिरत आह ज्ञाते ऽपीति[८०] । पक्षसम्बन्धितारूपेण हि हेतुत्वम्, अज्ञाते च धर्मिणि न तद्धर्मत्वं ज्ञायतइति भवत्येव हेतोरसिद्धिरिति । उदाहरणमाह सर्वत्रेति । बौद्धस्याऽऽत्माऽभावनिश्चयाद्विपर्ययाऽसिद्धिः, पृथग्जनानां देहातिरिक्ते पुंसि संशयात्† तेषां सन्दिग्धाश्रयासिद्धिरिति ।

ननु यद्यन्यतराऽसिद्धिर्दूषणं ततस्तिस्रो ऽपि कथाः समुच्छिद्येरन्, सर्वत्र हि स्वाऽनभिमतार्थसाधनमसहमानाः प्रतिवादिनो हेत्वसिद्धिमात्मनो ब्रूयुः, तावता च तस्य दूषणं सिध्येत्, तत्र 'चोदनाजनिता बुद्धिः प्रमाणं दोषवर्जितैः, करणैर्जन्यमानत्वा'दित्युक्ते शाक्यादयो वेदानामनाप्तप्रणीतत्वं मन्यमानाः हेत्वसिद्धिमुक्त्वैव कृतार्थाः स्युः, ततश्च मीमांसकाः पराजीयेरन्, अत आह वाङ्मात्रेति[८१] द्वये-

---

* संश्रय इति १ पु. पा. ।

† देहाऽतिरिक्तेषु तत्संशयादिति २ पु. पा. ।

द्वाभ्यां यो ऽसत्त्वतो* ज्ञातस्तद्वचो दूषणं मतम् ।
इतरत्साधनं तु स्याद्वादिना यदि साध्यते ॥८२॥
निराकरणसिद्धौ वा दूषणं प्रतिवादिनः' ।
'संदेहविपरीतत्वहेतू चात्र निराकृतौ ॥८३॥
ज्ञातसम्बन्धवचनात्' त्रयः संशयहेतवः ।
सत्साध्ये† तदभावे वा‡ द्वाभ्यां§ व्यावृत्त एव च ॥८४॥

---

न। सत्यं, वाङ्मात्रेणाऽसिद्ध्युद्भावनेन दूषणव्यवहारो न प्रकल्पते, अत एव न तन्मात्रेण दूषणत्वं ब्रूमः, किं तु यो हेतुः प्रतिवादिना ऽसिद्धत्वेनोद्भावितो ऽपि वादिप्रतिवादिभ्यां यथावन्निरूप्यमाणो ऽसत्त्वेन संप्रतिपन्नो भवति तस्यैव वचनं दूषणं; भवति च तत्त्वपरत्वे वादिप्रतिवादिनोः संप्रतिपत्तिः। यत्तु वादिनः प्रतिवादिनो वा कर्कशत्वान्न कथंचिदुभाभ्यां सत्त्वेन वा ऽसत्त्वेन वा संप्रतिपन्नं भवति तद्यदि वादी प्राश्निकेभ्यः प्रतिपादयेत् ततो ऽसत्यामपि प्रतिवादिसंप्रतिपत्तौ सम्यक् साधनं भवति । यदि तु प्रतिवाद्येवाऽसिद्धिं तेभ्यः प्रतिपादयेत् ततो ऽसत्यामपि वादिसंप्रतिपत्तौ दूषणमेव स्थितं भवतीति ।

ज्ञातसम्बन्धपदव्यावर्त्तितावनैकान्तिकविरुद्धाख्यौ संशयविपर्ययहेतू दर्शयति संदेहेति[८३] पादत्रयेण । उभयोरपि व्याप्त्यभावाद्व्याप्तिवचनेन ज्ञातसम्बन्धपदेन व्यावृत्तिरिति । संशयहेतुस्त्रिविध इत्याह त्रय इति[८४] । तानेव दर्शयति सत्साध्ये इति । साध्यतदभावयोः सपक्षविपक्षयोर्वर्तमानः साधारणाऽनैकान्तिकः । ताभ्यां

---

* यो ऽतत्त्वत इति १ पु. पा. ।

† तत्साध्ये इति १ पु. पा. ।

‡ तदभावे चेति २ पु. पा. । तदबाह्ये चेति ३ पु. पा. ।

§ ताभ्यामिति पाठान्तरम् ।

द्वौ विरुद्धार्थसम्बद्धौ यावेकत्रैकदेशिनि ।
प्रमेयाऽनित्यताऽमूर्तिधर्माः साधारणा द्वयोः ॥८५॥
नित्याऽयत्नोत्थयत्नोत्थाऽनित्येषु द्विरनित्यतः* ।
नित्या भूर्गन्धवत्त्वेन स्यादसाधारणस्त्वयम् ॥८६॥
निश्चयैकाङ्गवैकल्यादेष संशयकारणम्† ।

---

सपक्षविपक्षाभ्यां व्यावृत्तः केवलपक्षएव वर्त्तमानो ऽसाधारणः, धर्म्यन्तरेषु विरुद्धार्थव्याप्तं हेतुद्वयमेकत्रैकदेशिनि दृश्यमानं विरुद्धाऽव्यभिचारीति ।

साधारणमुदाहरति प्रमेयेति[८५] । हेतुवर्गे द्विरनित्यता पठनीया, ते ऽमी प्रमेयत्वादयश्चत्वारो यथाक्रमं नित्यत्वादिषु साध्येषु द्वयोः सपक्षविपक्षयोः साधारणाः, प्रमेयत्वं हि नित्येषु व्योमादिष्वनित्येषु घटादिषु विद्यते, अनित्यत्वं च यत्नोत्थेषु घटादिष्वयत्नोत्थेषु विद्युदादिषु विद्यमानं द्वयोरन्यतरस्यापि साधनत्वेनोच्यमानम् उभयवर्त्तित्वात्साधारणम् । अमूर्त्तत्वमपि नित्येषु व्योमादिष्वनित्येषु कर्मादिषु भावात्साधारणम् । अतः साध्यतदभाववृत्तिभिर्हेतुभिरुभयोः संशयो भवति, नैकत्रापि निश्चय इति चतुर्ष्वपि साध्येषु शब्दो धर्मी ।

असाधारणमुदाहरति नित्येति[८६] । भूमावेव हि गन्धो नाऽन्यत्र क्वचिन्नित्येष्वनित्येषु वा विद्यते, अतो ऽसाधारणो ऽयमिति । युक्तं तावत्साधारणो द्वाभ्यां सह दृष्टो द्वये स्मृतिं जनयन् संशयहेतुरिति, यश्चाऽसाधारणः स केनापि सहाऽदृष्टः क्वचिदपि बुद्धिमनादधत्कथं संशयहेतुरत आह निश्चयेति[८७] । सपक्षाऽन्वयो विपक्ष-

---

* नित्ये बुद्धिरनित्यतेति ३ पु. पा. ।

† उभौ संशयकारणम् इति २ पु. पा. ।

'साधारणो यथा दृष्टो बुद्धिद्वयनिमित्तकः ॥८७॥
विरुद्धैकाऽनवाप्तेश्च संशये कारणं मतम् ।
अत्राऽसाधारणो* नास्ति तदभावमुखेन तु ॥८८॥

---

व्यतिरेकश्च द्वयं निश्चयाङ्गं,तत्र साधारणस्य सपक्षान्वयोऽस्ति, विपक्षव्यतिरेकस्तु नास्ति, तत्रापि वृत्तेरसाधारणस्य विपक्षव्यतिरेको ऽस्ति न सपक्षान्वयोऽस्ति । तेन निश्चयैकाङ्गवैकल्यात्साधारणवदसाधारणोऽपि संशये कारणमिति ।

नन्वेकाङ्गविकलतामात्रेण क्व चिदपि द्वयोर्बुद्धिमनादधतः कथं संशयहेतुत्वम्, अत आह साधारण इति द्वयेन । न हि साधारणो द्वयोः स्मृतिजननात्संशयहेतुः, किं तु द्वाभ्यां सह दृष्टः पक्षधर्मिणि दृश्यमानो द्वयमपि तत्राऽनुमापयति, द्वयोश्चैकत्र विरोधात्संशयो भवति । संशयनिमित्ताऽनुमानबुद्धिद्वयं यस्य कार्यतया विद्यते स बुद्धिद्वयनिमित्तकः । एवमसाधारणोऽपि यत्र नित्ये ऽनित्ये वा नास्ति तयोरुभयोः पक्षधर्मिण्यभावमनुमापयन्नुभयाऽभावस्य त्वेकत्राऽसंभवात्संशयहेतुरिति । तदिदं शाक्यमतेनाऽसाधारणस्य संशयहेतुत्वमुक्तं, स्वयं त्वस्य संशयहेतुत्वं प्रदेशान्तरे निरस्तम् । न हि साधारणो द्वयमनुमापयन्संशयनिदानं, द्वयोरपि नियमाभावेनाऽनुमानाऽसंभवात्किं तु द्वाभ्यां सहदृष्टिमात्रेण द्वयोः स्मरणं जनयति । विरुद्धाऽर्थद्वयस्मरणं चाऽन्यतरनिर्धारणकारणाभावे संशयं जनयति। यस्त्वसाधारणः क्व चिदप्यदृष्टो धर्मिवदेव न क्व चिद्भावे ऽभावे वा स्मृतिं जनयतीति नाऽस्य संशयहेतुत्वमिति ।

---

* यत्राऽसाधारण इति २ पु. पा. ।

द्वयाऽसत्त्वविरोधाच्च मतः संशयकारणम्' ।
सन्दिग्धहेतुता चैषां त्रिषयाऽपेक्षयोच्यते* ॥८९॥
'निर्णयस्यापि हेतुत्वं दृष्टं साध्यान्तरे यतः ।
व्यवच्छेदाऽन्वयौ लब्ध्वा' निष्क्रियादावमूर्तिवत् ॥९०॥
क्षित्येकदेशसिद्धत्वे गन्धवत्त्वस्य हेतुता ।
यत्राऽप्रत्यक्षता वायोररूपत्वेन साध्यते ॥९१॥
स्पर्शात्प्रत्यक्षता वा ऽसौ विरुद्धाऽव्यभिचारिता ।
के चिज्जात्यन्तरं चैनां वर्णयन्त्यपरे पुनः ॥९२॥

---

किं पुनरुदाहृतानां स्वाभाविकमेव संशयहेतुत्वं, नेत्याह संदिग्धेति[८९] । कस्मादित्यत आह निर्णयेति[९०] पादत्रयेण । क दृष्टमित्याह निष्क्रियादाविति । अमूर्त्तत्वं हि नित्यत्वे साध्ये कर्मादिष्वपि वर्त्तमानं विपक्षव्यवच्छेदाभावात्संशयहेतुः । निष्क्रियत्वे तु साध्ये तल्लाभान्निर्णयहेतुर्भवति; तथा गन्धवत्त्वमपि सर्वस्यां पृथिव्यां नित्यत्वेन पक्षीकृतायां पृथिवीव्यतिरेकेणाऽन्यत्र क चिदप्यभावादलब्धसपक्षान्वयं संशयहेतुः । तदेव क्षित्येकदेशस्य सिद्धत्वेन तदेकदेशे साध्ये तदेकदेशान्तरे साध्याऽन्वयलाभान्निर्णयहेतुरिति ।

विरुद्धाऽव्यभिचारित्वमुदाहरति यत्रेति[९१] । द्रव्यत्वे सत्यरूपत्वादिति, महत्त्वे सति स्पर्शवत्त्वादिति च, तामिमां विरुद्धाऽव्यभिचारितां के चित्साधारणाऽसाधारणाभ्यां जात्यन्तरं वर्णयन्ति । अपरे तु द्वयमप्यंशेन सपक्षविपक्षयोर्वर्त्तमानं साधारणे ऽन्तर्भावयन्ति । द्वयस्यापि मिलितस्याऽत्र क चिदप्यभावादसाधारणत्व-

---

* इष्यते इति २ पु. पा. ।

साधारणत्वमंशेन समस्तं वा ऽप्यनन्वयम्* ।
प्रतिज्ञा यत्र बाध्येत पूर्वोक्तैर्यस्य साधनैः ॥९३॥
तत्पराजयतः कार्यो निर्णयो बाध† वर्जनात् ।
क चित्संशयहेतू यौ प्रत्येकत्वेन लक्षितौ ॥९४॥
संघाते निर्णयस्ताभ्यामूर्ध्वताकाकवत्त्ववत् ।
प्रत्येकं संहतौ‡ वा ऽपि गमकावविरोधिनौ ॥९५॥

---

मित्यन्ये। तदाह के चिदिति[९२] । स्वयं तु जात्यन्तरत्वमेवाऽत्राभिमतं, त्रयः संशयहेतव इत्युक्तत्वादिति ।

कथं पुनरेवं साधनद्वयनिमित्ते संशये निर्णयः, अत आह प्रतिज्ञेति[९३] । यस्य साधनस्य प्रतिज्ञा प्रत्यक्षादिना बाध्यते तस्य पराजयं कृत्वेतरेण निर्णयः, तस्य बाधाऽभावाद्यथा वायाविवाऽपरोक्षाऽनुभवेनाऽप्रत्यक्षाऽनुमानं बाध्यतइति ।

यत्तु भिक्षुणा पक्षधर्मस्तदंशेन व्याप्तो हेतुरिति एकस्यैव हेतुत्वविवक्षया ऽनेकयोर्विरुद्धाऽव्यभिचारिणोराभासत्वं दर्शितं, तन्निराकरोति क चिदिति[९४] । न हि विरुद्धाऽव्यभिचारिणोरनेकत्वादनिर्णायकत्वम् , ऊर्द्धत्वकाकनिलयनाभ्यां स्थाणुपुरुषस्थाणुस्थलसाधारणाभ्यां प्रत्येकं स्थाणुत्वनिर्णयाऽसमर्थाभ्यामपि सहिताभ्यां ताभ्यामेव स्थाणुत्वनिर्णयदर्शनादिति । तथा प्रत्येकमग्न्यनुमापकाभ्यां गन्धविशेषधूमाभ्यां सहिताभ्यामपि विरोधिभ्यां तदनुमानं दृश्यते, अतो नाऽनेकत्वमहेतुत्वकारणमित्याह प्रत्येकमिति[९५] । तस्माद्विरुद्धार्थव्याप्ताऽनेकहेतुसन्निपात एव संशयनिमित्तत्वेनोदाहर्त्तव्यः ।

---

* असन्मयमिति २ पु. पा. । † बाध्येति ३ पु. पा. ।
‡ संहिताविति ३ पु. पा. ।

तस्माद्भिन्नौ विरुद्धार्थौ हेतू चात्र* निदर्शितौ ।
षोढा विरुद्धतामाहुश्चतुर्धा वैकधाऽपि वा ॥९६॥
श्रुत्यर्थोक्तस्य बाधायां प्रतिज्ञार्थस्य हेतुना, ।
नित्यत्वे कृतकत्वस्य धर्मबाधाद्विरुद्धता ॥९७॥
'बाधो धर्मविशेषस्य यदा त्वेवं प्रयुज्यते ।
अर्थवच्छब्दरूपं स्यात् प्राक्सम्बन्धाऽवधारणात् ॥९८॥

---

नाऽनेकत्वमात्रमिति एकत्वविवक्षाऽभिधानमनुपपन्नम्, तथा हि अविरुद्धस्याप्यनेकस्य निरासः स्यात्, स चा युक्त इत्युक्तं, तदाह तस्मादिति[९६] ।

प्रपञ्चितस्त्रिधा संशयहेतुः, विपरीतहेतुं प्रपञ्चयति षोढेति । धर्मधर्म्युभयेषां स्वरूपविशेषाभ्यां षड्विधत्वमुभयस्यैकैकाऽनतिरेकात् चतुर्विधत्वम्, अवान्तरभेदस्याऽनुपयोगात्, प्रतिज्ञार्थबाधाऽविशेषादेकविधत्वमिति । कीदृशे विषये विरुद्धता, तां दर्शयति श्रुतीति[९७]। धर्मविशिष्टधर्मिवचनं प्रतिज्ञा, तेन श्रुत्युक्तस्य धर्मधर्मिस्वरूपस्याऽर्थोक्षिप्तस्य तद्विशेषस्य यत्र हेतुना बाधः तत्र विरुद्धतेति । सो ऽयं प्रतिज्ञार्थं बाधमानो विरुद्धश्च बाधक इति वा विरोधीति वा* वाच्यो न विरुद्ध इति, शाक्यपरिभाषया तु विरुद्धशब्द इति ।

धर्मस्वरूपबाधमुदाहरति नित्यत्वे इति । धर्मविशेषबाधमुदाहरति बाध इति[९८] सार्द्धद्वयेन । यो हि स्वरूपमेव शब्दानामभिधेयमित्याश्रित्य तत्सिद्ध्यर्थमेवं प्रयुङ्क्ते, सम्बन्धग्रहणात्प्रागपि शब्दो ऽर्थवान्, अर्थं बोधयतीति यावत्, विभक्तिमत्त्वात् पश्चाद्वदिति, सिद्धे चाऽर्थबोधने ऽर्थान्तरबोधाऽभावात्स्वरूपार्थत्वं सिद्धं भवतीति, तं

---

* विरुद्धार्थहेतू वा ऽत्रेति ३ पु. पा. । विरुद्धौ वा हेतू चात्रेति २ पु. पा.

विभक्तिमत्त्वात्पश्चाद्वत्स्वरूपेणेति चाऽऽश्रिते ।
अस्वरूपाऽर्थयोगस्तु पश्चाच्छब्दस्य दृश्यते* ॥९९॥
तेन प्रागपि सम्बन्धादस्वरूपार्थता भवेत्' ।
इहप्रत्ययहेतुत्वाद् द्रव्यादेर्व्यतिरिच्यते ॥१००॥
समवायं यथेहाऽयं घट इत्यादिसङ्गतिः ।
अत्राप्यसमवायत्वं संयोगस्येव सिध्यति ॥१०१॥
तेन धर्मिस्वरूपस्य वैपरीत्याद्विरुद्धता ।
यच्च सत्तावदेकत्वं समवायस्य कल्पितम् ॥१०२॥

---

प्रत्युच्यते । सम्बन्धग्रहणात्पश्चात्स्वरूपाऽतिरिक्ताऽर्थबोधेन विभक्तिमत्त्वस्य व्याप्तिदर्शनाद् दृष्टान्ताऽनुसारेण प्रागप्यस्वरूपाऽर्थबोधनमेव साधयेत्, तच्च प्रमाणान्तरविरोधादशक्यं साधयितुम । यत्तु शक्यं स्वरूपार्थत्वं तदनेनैव हेतुना बाध्यते, शक्यते हि प्रयोक्तुं प्राक् सम्बन्धान्न स्वरूपार्थत्वं विभक्तिमत्त्वात् पश्चाद्वदिति । यदा चार्थान्तरबोधनं दृश्याऽदर्शनेन स्वरूपार्थत्वं च हेतुनैव बाधितं तदा प्रकारान्तराऽसम्भवादर्थवत्त्वमेव प्रतिज्ञार्थो बाधितो भवतीति ।

धर्मिस्वरूपतद्विशेषबाधोदाहरणमाह इहेति[१००] । संगतिः, संयोग इति । स्वरूपबाधं दर्शयति अत्रापीति[१०१] । विशेषविरोधं दर्शयति यच्चेति[१०२] । संयोगे हि प्रतिद्रव्यं भेदेन व्याप्तमिहप्रत्ययहेतुत्वं समवायस्यापि भेदमापादयत् तस्य विशेषसत्तावदेकत्वं वैशेषिकाऽभिमतं बाधेतेति ।

---

* शस्यते इति ३ पु. पा. ।

तत्र संयोगवद्भेदात् स्याद्विशेषविरुद्धता ।
नित्यमात्माऽस्तिता कैश्चिद्यदा सौत्रान्तिकं प्रति ॥१०३॥
साध्यते ऽवयवाऽभावाद्व्योमवद् द्वयबाधनम् ।
तदोभयविशेषस्य बाधो ऽयं साध्यते यदा ॥१०४॥
पारार्थ्यं चक्षुरादीनां संघाताच्छयनादिवत् ।
शयने संघपारार्थ्यं भौतिकव्याप्तहेतुके ॥१०५॥
आत्मानं प्रति पारार्थ्यमसिद्धमिति बाधनम् ।
असंहतपरार्थत्वे दृष्टे संहतता ऽपि च ॥१०६॥

---

उभयस्वरूपबाधमुदाहरति नित्यमिति[१०३] । सौत्रान्तिकस्याऽऽवरणाऽभावमात्रं व्योम, अभावस्य तुच्छत्वात् स्वरूपमेव नास्ति, नतरां नित्यत्वम्; अतस्तेनैव दृष्टान्तेनाऽऽत्मनो ऽपि स्वरूपं नित्यतां चाऽनवयवत्वं बाधेतेति ।

उभयविशेषबाधमुदाहरति तदेति[१०४] । सांख्यानां प्रकृत्यतिरिक्तं पुमांसं साधयतामयं प्रयोगः, सिद्धे पारार्थ्ये यो ऽसौ परः स पुमानित्यभिप्रायः । संघातात्सत्त्वरजस्तमआत्मकत्वादित्यर्थः ।

अत्र विशेषविरोधं दर्शयति शयने इति[१०५] । शयनादिषु संघातात्मकशरीरपारार्थ्येन भौतिकत्वेन च व्याप्तः संहतत्वहेतुर्दृष्ट इति स चक्षुरादीनामपि संहतपारार्थ्यसाधनादिष्टमसंहतरूपं प्राकृतैः सत्त्वरजस्तमोभिरसंपृक्तं चिन्मात्ररूपमात्मानं प्रति पारार्थ्यं धर्मविशेषं धर्मिणामपि चक्षुरादीनां धर्मविशेषमाहंकारिकत्वं बाधेतेति । एतदेव विवृणोति असंहतेति[१०६] । संहतरूपवस्त्वन्तरपारार्थ्यसाधनात् प्रकृत्यतिरिक्तात्मपारार्थ्यमभिमतं न सिध्येत्, अतो न सिसाधयिषिताऽऽत्मसिद्धिरिति ।

अनहङ्कारिकत्वं च चक्षुरादेः प्रसज्यते ।
गमकस्यैकदेशस्य व्याप्तिर्गम्येति भाषितुम्* ॥१०७॥
साध्यसाधर्म्यवैधर्म्यदृष्टान्तः प्रतिपाद्यते ।
तत्र हेत्वर्थमुद्दिश्य साध्योपादानमिष्यते ॥१०८॥
उद्देश्यो व्याप्यते धर्मो व्यापकश्चेतरो मतः ।
यद्वृत्तयोगः प्राथम्यमित्याद्युद्देश्यलक्षणम्† ॥१०९॥
तद्वृत्तमेवकारश्च स्यादुपादेयलक्षणम् ।
वदत्यर्थं स्वशक्त्या च शब्दो वक्त्रनपेक्षया ॥११०॥

---

दर्शिता हेत्वाभासाः, संप्रति ज्ञातसंबन्धपदव्यावर्त्तितानेव दृष्टान्तदोषान् दर्शयितुं दृष्टान्तवचनमेव तावत् प्रस्तौति गमकस्येति[१०७]। साध्यो धर्मविशिष्टो धर्मी, तत्साधर्म्येण साध्यधर्मवत्तया वैधर्म्येण च तदभाववत्तया चाऽवस्थितो यो दृष्टान्तः स गमकस्य हेतोर्गम्येन व्याप्तिं दर्शयितुं प्रतिपाद्यतइति । प्रतिपादनप्रकारं दर्शयति तत्रेति[१०८] । हेतुः साधनवाक्याऽवयवः कृतकत्वादित्यादिः, तस्यार्थः कृतकत्वादिलिङ्गं, तमुद्दिश्याऽनित्यत्वादेः साध्यस्योपादानं कार्यम्; कस्मादित्याह उद्देश्य इति[१०९] । यदुद्देशेन हि यदुपादीयते तस्य तेन व्याप्तिः कथिता भवति, तेन लिङ्गस्य व्याप्यतां लिङ्गिनश्च व्यापकतां दर्शयता लिङ्गोद्देशेन लिङ्ग्युपादीयतइति। कीदृशः पुनरुद्देशः, कीदृशं चोपादानं, तद्दर्शयति यद्वृत्तेति । किं यत्तद्वृत्तग्रहणं तानेव विभक्त्यन्तान् डतरडतमान्तांश्च गृह्णाति यत्कृतकं तदनित्यमेवेति। ननु यथा वा तथा वा रचितं वाक्यं वक्तुर्विवक्षितं प्रतिपादयत्येवेति किं

---

* व्याप्तं गम्येत भाषितुम् इति २ पु. पा. ।

† उद्देशलक्षणमिति २ पु. पा. ।

साध्यहेतुत्वमर्थानां व्याप्तिशक्त्यनुरोधतः ।
'तत्राऽज्ञानाद्यदा वक्ता सहचार*विवक्षया ॥१११॥
विपर्ययेण वा हेतौ† न व्याप्तत्वं विवक्षति ।
विवक्षन्नपि वा शब्दं तद्योग्यं न वदेद् यदि ॥११२॥
घटे कृतकनाशित्वे नाशिव्याप्तं कृतेन वा ।
न तदेष्टस्य हेतुत्वं, स्यादनिष्टस्य चैव तत् ॥११३॥
तस्माद् व्याप्यत्वरूपेण वाच्यो हेतुत्वसंमतः' ।

---

रचनाविशेषेणाऽत आह वदत्यर्थमिति[११०] । स्वशक्तिमनुरुध्यन्ते शब्दा न वक्तुरभिप्रायम्, अतो ऽवश्यमादर्त्तव्यो रचनाविशेषः, तद्वचनमात्रेण साधुता भवति । किं चाऽर्थद्वयमपेक्षितव्यम, न हि लिङ्गलिङ्गिशून्यः सपक्षः समीचीनेनापि वाक्येन यत्तद्युक्ततया निर्दिश्यमानः शक्नोति लिङ्गलिङ्गिनोर्व्याप्तिं बोधयितुम, अतो द्वययुक्त एव सपक्षो वक्तव्यो यो व्याप्तिं बोधयितुं शक्नुयात्; तादृशेनैव साध्यसिद्धिरित्याह साध्येति[१११] ।

एवं साधर्म्यवचनं स्वरूपतो ऽर्थतश्च शोधयित्वा विपर्यये दोषान् दर्शयन् रचनादोषं तावद्दर्शयति तत्रेति त्रयेण । हेतोर्हि साध्येन नियमः साध्यसिद्ध्यै वक्तव्यो यत्कृतकं तदनित्यं घटादिवदिति; यदा त्वज्ञानात्साहित्यमात्रं विवक्षन् हेतोरेव वा व्याप्तिं विवक्षन्नपि प्रमादात् साहित्यं वदति घटे कृतकनाशित्वे सहदृष्टे इति, न तदा कृतकत्वस्य हेतुत्वमिष्टं सिध्यति; यदा वा साध्यस्य हेतुना व्याप्तिः यदनित्यं तत्कृतकमिति तदा ऽपि न परमिष्टस्य कृतकत्वस्य हेतुत्वं

---

* सहभावेति का. पा. ।

† हेतोरिति २ पु. पा. ।

'यदा सम्यक् प्रयुक्ते ऽपि वाक्ये ऽर्थो न तथा भवेत॥११४॥
साध्यहेतुभयव्याप्तिशून्यत्वात् परमार्थतः ।
नित्यो ध्वनिरमूर्त्तत्वात् कर्मवत्परमाणुवत् ॥११५॥
घटवद् व्योमवच्चाऽपि' तदसद्वादिनं प्रति ।
धर्म्यसिद्धावपि ह्येवं दृष्टान्ताऽऽभासता भवेत् ॥११६॥
तत्सद्भावे ऽपि च व्योम्नि ह्ययुक्ते ऽपि कीर्तिते ।
कर्माद्यालोचनाद् व्याप्तिर्हेतोर्नास्तीति वर्जनम् ॥११७॥
व्याप्त्या साधर्म्यउक्ते च न वैधर्म्यमपेक्ष्यते ।
'सहभावित्वदृष्ट्या तु यदा व्याप्तिं न लक्षयेत ॥११८॥

---

न सिध्यतीति किं त्वनिष्टस्यैवाऽनित्यत्वस्य हेतुत्वं स्यादिति । संप्रत्यर्थाऽन्यथात्वदोषमाह यदेति[११४] पादन्यूनेन द्वयेन। साध्यशून्यत्वादीनां यथासंख्यं कर्मादीन्युदाहरणानि। दृष्टान्ताभासतेति वक्ष्यमाणेन संबन्ध इति। व्योमवदिति च तदभाववादिनं सौत्रान्तिकं प्रति धर्म्यसिद्धा ऽपि तदाभासता स्यादित्याह तदसदिति[११६] । व्याप्तिशून्यतां विवृणोति तत्सद्भावइति[११७] । यद्यपि व्योम्नः सद्भावः स्यात्, तच्च नित्यत्वाऽमूर्त्तत्वयुक्तमेव दृष्टान्ततया कीर्तितं, तथापि तन्निदर्शनं निष्फलमेव,कर्माद्यालोचनेनाऽमूर्त्तत्वस्याऽनित्येष्वपि वृत्तेरनैकान्तिकत्वात्; यद्यपि चायं हेतुदोषो नैकान्तिकत्वं नाम तथापि दृष्टान्तो ऽपि व्याप्तिदर्शनार्थत्वात्तदसद्भावे ऽनर्थक एव; ते चामी दृष्टान्तदोषा ज्ञातसंबन्धपदेन व्यावर्त्तिताः । न हि साध्यशून्येषु दृष्टान्तेषु लिङ्गलिङ्गिनोः संबन्धज्ञानं संभवतीति ।

वैधर्म्यवचनमनुसंधित्सुः प्रथमं तावदनावश्यकत्वं तस्य दर्शयति व्याप्त्येति[११८] । यथा व्याप्तिरवगम्यते तथेत्यर्थः। कदा तर्हि

परः साधर्म्यदृष्टान्तात् तं च नाऽपेक्षते यदा ।
वक्ता वा सहभावित्वं शुद्धं तेन वदेद् यदा ॥११९॥
विपरीताऽन्वयं वा ऽपि* तत्समाधित्सया तदा ।
पूर्वज्ञानोपमर्देन वैधर्म्येणेष्टसाधनम्' ॥१२०॥
साहित्यमात्रं पूर्वोक्तं हेतोस्तत्रोपयुज्यते ।
व्याप्यव्यापकभावो हि भावयोर्यादृगिष्यते ॥१२१॥

---

तदपेक्षेत्यत आह सहेति सार्द्धद्वयेन। वादिना सम्यगपि साधर्म्ये ऽभिहिते यदा प्रतिवादी मानसाऽपचाराद् व्याप्तिमनवबुद्ध्य साहित्यमात्रं साधर्म्यात् मन्यते, यदा वा प्रतिवादी साहित्यं स्वयमेवाऽवगम्य विपक्षव्यतिरेकार्थं वैधर्म्यमेवाऽपेक्षते न साधर्म्यं, यदा वा वाद्येव साधर्म्यं यथावदनुक्त्वा साहित्यमात्रं व्याप्तिविपर्ययं च पूर्ववद्वदेत् तदा तत्समाधित्सया साधर्म्योपजनितविपर्ययज्ञानोपमर्देनापि घटे व्याप्तिदर्शनाय वैधर्म्यं वाच्यमिति। तदा तर्हि किं कथितमपि साधर्म्यं निष्फलमेव, नेत्याह साहित्येति[१२१]। न ह्यसत्यन्वये व्यतिरेकमात्रादर्थः सिध्यति, तेन वैधर्म्येणापि इष्टं साधयतो यथा कथंचिदप्युक्तेन साधर्म्येण यत्साहित्यं सिद्धं तदुपयुज्यतइति। लिङ्गलिङ्गिनोर्व्याप्तिकथनं वैधर्म्यं, तत्रापि व्याप्यमेवाऽभावमुद्दिश्य व्यापकस्याऽभावस्योपादानं, व्याप्यव्यापकभावस्त्वभावयोर्भावविपरीत इत्याह व्याप्येति। ततश्च यत्र धूमस्तत्राऽग्निरिति साधर्म्यं, यत्राऽग्निर्नास्ति तत्र धूमो नास्तीति वैधर्म्यमिति।

---

* विपरीतान्वयत्वं वेति १ पु. पा.।

तयोरभावयोस्तस्माद् विपरीतः प्रतीयते ।
'धूमभावे ऽग्निभावेन व्याप्ते, ऽनग्निस्ततश्च्युतः॥१२२॥
अधूम एव विद्येतेत्येवं व्याप्यत्वमश्नुते ।
तथा ऽनग्नावधूमेन व्याप्ते धूमस्ततश्च्युतः ॥१२३॥

---

विपर्यये प्रमाणमाह धूमभावे इति[122] द्वयेन । यो हि यत्रैव भवन् यद्देशकालौ नाऽतिक्रामति स तद्व्याप्यः, व्यापकस्त्वाधिक्ये ऽप्यविरुद्धः, तत्र धूमस्याऽग्निदेशकालाऽनतिक्रमात् सकलधूमदेशकाले ऽग्निना व्याप्ते ऽनग्निरग्न्यभावस्ततो धूमात्प्रच्युतो धूमाऽभाव एव भवन् धूमाऽभावदेशकालाऽनतिक्रमाद् व्याप्यो भवति, एवमेवाऽनग्नावप्यधूमेन व्याप्ते धूमस्ततो ऽनग्नेः स्वविरुद्धाद् धूमव्याप्तात्प्रच्युतो ऽग्नावेव भवन्नग्निना व्याप्तो भवति, तेन धूमेनाऽग्निं साधयता धूमस्याऽग्निव्याप्तिसिद्ध्यर्थमनग्नेरधूमेन व्याप्तिर्वैधर्म्ये वक्तव्या । एतदुक्तं भवति, यत्र तावद्व्याप्यव्यापकयोः समदेशकालता तत्र तदभावयोरपि समदेशकालत्वान्नाऽसंकीर्णं व्याप्यव्यापकत्वं शक्यं दर्शयितुम् , यत्र तु व्याप्यव्यापकयोर्न्यूनाऽधिकत्वं तत्र व्याप्यस्य भावस्य न्यूनत्वात्तदभावो ऽवश्यमधिको भवन् व्यापको भवति, व्यापकस्य व्याप्याऽधिकत्वात्तदभावो न्यूनतया व्याप्यो भवतीति युक्तो विपर्यय इति ।

तदेवं सति यथैव साधर्म्ये ऽग्निभावो धूमस्य व्यापकतयोक्तः तथैव यदि वैधर्म्ये ऽप्यग्न्यभावो धूमाऽभावस्य व्यापकतयैवोच्येत तथा सति व्यापकस्याधिक्ये ऽप्यविरोधादधूमाऽतिक्रमेणाप्यनग्निः सम्भवन् धूमे ऽपि सम्भावितः स्यात्, ततश्च व्याप्याद्धूमाद्विपक्षस्याऽनग्नेस्तेन सहापि सम्भवतो न प्रच्युतिस्ततः सिध्येत्, तत्प्रच्युतिकथनार्थं च वैधर्म्यमनर्थकं स्यात्, अच्युते च तस्मिन् विपक्षे ऽपि

अन्यत्राऽनवकाशत्वाद् व्याप्यते धूममग्निना’ ।
व्यापकौ तु यदोच्येते भावाऽभावौ तदा ततः ॥१२४॥
नैव व्याप्याद्विपक्षस्य प्रच्युतिः कथिता भवेत् ।
तस्माद्धूमेन साध्यत्वमग्नेः प्रार्थयते यदा ॥१२५॥
तदा ऽनग्निरधूमेन व्याप्तो* वाच्यो न चाऽन्यथा ।
अनग्न्यधूमसाहित्ये व्याप्तेर्वा ऽपि विपर्यये ॥१२६॥
न प्रस्तुतोपकारः स्यादन्यद्वापि प्रसाध्यते ।
यत्राऽप्यर्थस्य शून्यत्वं द्वाभ्यामेकेन वा भवेत् ॥१२७॥
यदनित्यं तु तन्मूर्तमणुवद् बुद्धिवत् खवत् ।
‘साध्येन व्याप्तिसिद्धैव व्यतिरेको ऽत्र कथ्यते॥१२८॥

---

सम्भवन् धूमो ऽग्निना व्याप्त्यभावान्नाग्निं गमयेदित्याह व्यापकाविति[१२४] । उपसंहरति तस्मादिति[१२५] । न चाऽन्यथेति[१२६] । न साहित्यमात्रं नापि व्याप्तिविपर्यय इति। अन्यथावचने दोषमाह अनग्नीति । साहित्ये साहित्यमात्रे प्रस्तुतस्य धूमव्याप्यत्वस्याऽनुपकारः, विपर्यये त्वन्यदेवाऽग्नेरेव व्याप्यत्वं साधितं स्यादिति ।

न च वचनाऽसम्यक्त्वमात्रेण साध्यसिद्धिः, अर्थतथात्वमप्यादर्त्तव्यमित्याह यत्रापीति[१२७] । तत्रापि न प्रस्तुतोपकारः स्यादिति सम्बन्धः । द्वाभ्यामभावाभ्यामेकेन वा नित्यः शब्दो ऽमूर्त्तत्वात्, इत्यत्राऽनित्यत्वं साध्याऽभावस्तेन शून्यः परमाणुः, मूर्त्तत्वं च साधनाऽभावस्तच्छून्या बुद्धिः, उभयशून्यमाकाशमिति ।

साधर्म्यवदेव वैधर्म्यव्याप्तिशून्यत्वस्य दूषणत्वमुदाहरणं च द-

---

* व्याप्य इति १ पु. पा. ।

यस्यायं नास्त्यसौ हेतुस्तेन साध्येन नाप्यते ।
तेन दृष्टे ऽपि साहित्ये न सर्वो गम्य इष्यते ॥१२९॥
सहदृष्टिर्न सम्बन्धो व्याप्तिर्नैव च तावता ।
मूर्ताऽनित्यत्वयुक्ते ऽपि तस्मादङ्गीकृते घटे ॥१३०॥
कर्मादौ व्याप्त्यभावेन न दृष्टान्तत्वमिष्यते' ।
'अशेषाऽपेक्षितत्वाच्च सौकर्याच्चाप्यदर्शनात् ॥१३१॥

---

र्शयति साध्येनेति[१२९] त्रयेण । साध्येन हेतोर्व्याप्तिं दर्शयितुं विपक्षात्साध्याभावाद्धेतोर्व्यतिरेको हेतोस्तत्राऽभावः कथ्यते यस्मान्मूर्त्तत्वस्य विपक्षैकदेशादपि बुद्ध्यादेरनित्याद्व्यतिरेको बुद्ध्यादावभावो नास्ति नासावमूर्त्तत्वं हेतुस्तेन नित्यत्वसाध्येन व्याप्यते, व्याप्त्यसिद्धौ च यद्यपि क्व चिदमूर्त्तत्वनित्यत्वयोः साहित्यं दृष्टं व्योमादौ तथापि न सर्वस्याऽमूर्त्तस्य नित्यता ऽध्यवसातुं शक्यते. न हि साहित्यमात्रं लिङ्गलिङ्गिनोः सम्बन्धः, न च तन्मात्रेणाऽव्यभिचारमन्तरेण व्याप्तिः सिध्यति, तस्माद्यद्यपि वैधर्म्यवचने साधनाऽभावेन मूर्त्तत्वेन साध्याऽभावेन चाऽनित्यत्वेन युक्तो घटादिर्निर्दिश्यते यदनित्यं तन्मूर्त्तं यथा घट इति तथापि कर्मादिष्वनित्येष्वपि मूर्त्तत्वस्य व्याप्तेः व्याप्तिसिद्ध्यर्थत्वाच्च दृष्टान्तत्वस्य तदसिद्धौ घटादेरपि न दृष्टान्तत्वमिति ।

शाक्यास्तु वैधर्म्यवचनस्य पाक्षिकत्वमसहमाना वैधर्म्यमेव सर्वदा वक्तव्यं न साधर्म्यमित्याहुः; तदुपन्यस्य दूषयति अशेषेति[१३१] सार्द्धेन । ते किल मन्यन्ते, यस्यापि साध्याऽन्वयो लिङ्गस्याऽनुमानाङ्गं यस्य वा विपक्षव्यतिरेकः तयोरुभयोरपि तावदशेषाऽपेक्षितत्वमविवादम्; तत्र यद्यन्वयो ऽङ्गमिष्येत ततो ऽवश्यं सर्वेषा-

साधने यद्यपीष्टो ऽत्र व्यतिरेको ऽनुमां प्रति ।
तावता न ह्यनङ्गत्वं युक्तिः शाब्दे हि वक्ष्यते' ॥१३२॥

---

प्रतीताऽनागतानामपि धूमानामग्निभिः सर्वैः समन्वयो ग्रहीतव्यः, न चासावीश्वरेणापि ग्रहीतुं शक्यते; न च केषां चिदन्वये गृहीते ऽन्यैरगृहीताऽन्वयैरनुमानं सम्भवति; वह्निमत्त्वसामान्येन धूमवत्त्वसामान्यस्याऽन्वयो गृहीत इति चेत्, न, सामान्यस्य स्वलक्षणव्यतिरेकाऽव्यतिरेकविकल्पसहनाऽसम्भवात्, अस्तु वा सामान्यं, तथापि तदीयाऽशेषदेशकालाऽन्वयो ऽनेर्दुर्ग्रह एव, विपक्षव्यतिरेकस्तु सुज्ञानः, स ह्यदर्शनमात्रगम्यः, सुकरं च सर्वधूमानामप्येकदेशस्थेनैवाऽनग्निष्वदर्शनम्; तस्मात् अनग्निभ्यो व्यतिरिच्यमानो धूमो ऽनग्निव्यावृत्तिमुखेनाऽग्निं गमयति, अत एवाऽतद्व्यावृत्तिविषयत्वं लिङ्गशब्दयोः; तस्माद् विपक्षव्यावृत्तिप्रदर्शनार्थं वैधर्म्यमेव वक्तव्यं न साधर्म्यमिति । तान्प्रत्युच्यते, यद्यप्येवं व्यतिरेक एवाऽनुमानाङ्गं शाक्यानामिष्टं तथाप्यन्वयो ऽङ्गमेव, न तस्याऽनङ्गत्वं शक्यते वक्तुम्, अत्र च युक्तिरपोहनिराकरणपर्वणि वक्ष्यते । न चाऽदर्शनमात्रेण ताभ्यां प्रत्यायनं भवेत्, सर्वत्रैव ह्यदृष्टत्वात्प्रत्याय्यं नाऽवशिष्यत इति । यदि ह्यनग्नाविवाऽग्नावपि धूमो न दृश्येत ततो ऽग्नेरनग्नेश्च द्वाभ्यां व्यावृत्तो धूमो द्वयोर्व्यावृत्तिं गमयन् गन्धर्वत्ववत् संशयहेतुः स्यात् । अतो ऽन्वयो ऽप्यङ्गमेव । यत्तु सर्वत्राऽन्वयो दुर्ग्रह इत्युक्तं, तुल्यमिदं व्यतिरेके ऽपि । न ह्यदर्शनमात्रात् सो ऽपि सिध्यति, दृश्याऽदर्शनगम्यत्वादेकदेशस्थस्य च सर्वत्र दृश्याऽदर्शनाऽसम्भवात् । तस्मादनवगते ऽपि सर्वत्रान्वये सर्वतश्च व्यतिरेके बहुशः साहित्याऽवगममात्रादेव व्यभिचाराऽदर्शनसनाथादनुमानोत्पत्तिरङ्गीकर्त्तव्या। शाब्दे, शब्दार्थनिरूपणे अपोहवादे इत्यर्थः । तत्र हि जातिः शब्दार्थो नाऽपोह इति निरूपयिष्यतइति ।

बोधप्रसङ्गो भेदानां न चाऽव्याप्तेर्भविष्यति ।
अस्ति सामान्यवस्त्वेषु व्यापिता* तत्र गम्यताम्॥१३३॥
केचित्साधर्म्यदृष्टान्ते व्याप्त्या ऽपि कथिते† पुनः ।
वैधर्म्योक्तिमपीच्छन्ति व्यावृत्तिनियमेच्छया ॥१३४॥
हेतौ साधर्म्यदृष्टान्तात्साध्येनैवाऽवधारिते ।
व्यावृत्तिः सर्वतः प्राप्ता साध्याऽभावे नियम्यते॥१३५॥
तत्तु मन्दफलं यस्मात्पक्षे ऽप्येवं निरूपितम् ।
व्यापकाऽभावमात्रं हि व्याप्यान्नित्यं निवर्तते ॥१३६॥

---

ननु सामान्यस्याऽभावाद्धूमभेदादेवाऽग्निभेदानामनुमानमङ्गीकर्त्तव्यं, न च भेदानामदृष्टपूर्वाणामन्वयग्रहणमस्तीति कथमन्वयस्याङ्गत्वम, अत आह बोधेति[१३३] । स्यादेवं यदि भेदेनाऽनुमानप्रसङ्गः स्यान्न त्वसावस्ति उक्तादेव व्याप्त्यभावादिति । कस्य तर्ह्यनुमानं केन चात्मना, ऽत आह अस्तीति । केचित्तु साधर्म्यवद् वैधर्म्यमपि नियतं मन्यन्ते, तदुपन्यस्यति केचिदिति[१३४] । कारणमाह व्यावृत्तीति । एतदेव विवृणोति हेताविति[१३५] । यो धूमवान् सोऽग्निमानेवेति साधर्म्यवचनाद्धूमो ऽग्निना नियम्यमानो ऽग्निव्यतिरिक्तात्सर्वस्मादेव व्यावृत्तः प्रसज्यमानः पुनर्वैधर्म्येण यत्राऽग्निर्नास्ति तत्र धूमो नास्तीति एवम् अग्न्यभावाद्व्यावृत्तिः क्रियते, कथं नाम वस्त्वन्तराद्व्यावृत्तिः परिसंख्यायेतेति नियम इति परिसंख्यैवोच्यते तत्र चान्यत्र च प्राप्तेरिति । दूषयति तत्त्विति । यथा खलु पर्वतो

---

* व्याप्ततेति पाठान्तरम् ।

† कल्पिते इति का. पा. ।

तस्माद्यथैव शुक्लत्वे पटस्योक्ते विरोधिनाम् ।
निवृत्तिर्न तु दैर्घ्यादेस्तथा ऽत्रापि भविष्यति ॥१३७॥
द्वैविध्यं नोपपन्नं तु यथैव ह्यग्निधूमयोः ।
प्रत्यक्षदृष्टः सम्बधो गतिप्राप्त्योस्तथैव हि ॥१३८॥
आदित्ये ऽनुपलब्धिश्चेन्न देशे ऽप्यधुनातने ।
क्व चित्तत्रोपलब्धिश्चेद्देवदत्ते ऽपि दृश्यताम् ॥१३९॥

---

ऽग्निमानेवेत्यत्र पक्षवचने ऽन्यभावस्यैव निवृत्तिः नाऽन्यस्येत्युक्तं, तत्रापि न ह्यग्निमानेवेत्यस्याऽयमर्थः, अग्निरेवास्तीति किं त्वग्निरस्त्येवेति, तस्माददोष इति । एतदेव दृष्टान्तदर्शनेनोपसंहरति तस्मादिति[१३७] ।

"तत्तु द्विविधं प्रत्यक्षतो दृष्टसम्बन्धं सामान्यतो दृष्टसम्बन्धं च, तत्र प्रत्यक्षतो दृष्टसम्बन्धं यथा धूमाऽऽकृतिदर्शनादग्न्याकृतिविज्ञानं, सामान्यतोदृष्टसम्बन्धं यथा देवदत्तस्य गतिपूर्विकां देशान्तरप्राप्तिमुपलभ्याऽऽदित्ये गतिस्मरण"*मिति भाष्यं, तदाक्षिपति द्वैविध्यमिति[१३८] । परस्पराऽसंकीर्णे हि विधाद्वये द्वैविध्यं भवति, इह च सामान्यतोदृष्टोदाहरणे गतिप्राप्तिसम्बन्धे प्रत्यक्षदृष्टत्वमप्यस्तीति द्वैविध्याऽनुपपत्तिरिति । अथ पक्षधर्मिण्यादित्ये गतिप्राप्त्योः सम्बन्धो न प्रत्यक्षेणोपलभ्यतइत्युच्यते, सो ऽधुनातने ऽपि पर्वतादौ देशे ऽग्निधूमयोरपि न प्रत्यक्ष इति तुल्यत्वमित्याह आदित्ये इति[१३९] । यदि तु क्व चिन्महानसादौ प्रत्यक्षो ऽग्निसम्बन्ध इत्युच्यते ततो

---

* शा. भा. पृ. १० प. १२ ।

'यदि धर्म्यन्तराऽपेक्षा तत्र सामान्यदृष्टता।
स्यादग्निधूमयोः सैव' तस्मादेवं प्रचक्षते ॥१४०॥

---

ऽत्रापि देवदत्तादौ गतिप्राप्त्योरपि सम्बन्धः प्रत्यक्ष एवेत्याह क चिदिति। प्रत्यक्षेणैव हि दृष्टं कर्मस्वरूपं, तदनन्तरं च देशान्तरप्राप्तिं देवदत्तादेरुपलभामहे, न हि नित्याऽनुमेयं कर्मस्वरूपम, अपरोक्षेणैवाऽवभासात्, नित्याऽनुमेयत्वे च देवदत्तेऽप्यनुमेयत्वाद् "देवदत्तस्य गतिपूर्विकां देशान्तरप्राप्तिमुपलभ्यादित्येऽपि गतिस्मरण"*-मिति भाष्यमनुपपन्नं स्यान्न च देशान्तरप्राप्त्याऽतीन्द्रियस्यापि कर्मणोऽनुमानं सम्भवति, दृष्टैरेव प्रयत्नवदात्मसंयोगादिभिः कर्मकारणत्वाभिमतैस्तदुपपत्तेरिति शास्त्रदीपिकादौ प्रपञ्चितमित्यास्तां तावत्।

एवं प्रत्यक्षतोदृष्टत्वं संकीर्णमित्युक्तम, इदानीं सामान्यतोदृष्टत्वमपि संकीर्णमित्याह यदीति[१४०] पादत्रयेण। न ह्यादित्यस्य देशान्तरप्राप्तिस्तदीयगत्यन्विता दृष्टा, किं तु धर्म्यन्तरे देवदत्ते देशान्तरप्राप्तेर्गतिसमन्वयं दृष्ट्वाऽऽदित्येऽपि प्राप्तिसामान्येन गतिसामान्यमनुमीयतइति। एवमत्र सामान्यतोदृष्टत्वमभिमतं तदग्निधूमयोरपि धर्म्यन्तरेष्वेव सम्बन्धग्रहणात्तुल्यम्। अथ कार्यान्तरेष्वागन्तुककारणजन्यत्वं दृष्ट्वा प्राप्तेरपि कारणमागन्तुकं किंचिदस्तीत्येवं सामान्यमनुमीयते तत्र त्वन्येषामसम्भवात्ततोऽन्यदवतिष्ठते न त्वन्यरूपेणाऽनुमीयते, अतः सामान्यतोदृष्टत्वम्। अग्न्यनुमाने त्वग्निरूपमेवाऽनुमीयतइति "ततो गतिपूर्विकां देशान्तरप्राप्तिमुपलभ्ये"†ति भाष्यं विरुध्येत, गतेरेव सम्बन्धग्रहणोपन्यासात्। किं चैवं कारणसामान्यमनुमितं स्यात्, तस्मिंस्त्वनुमिते कारणान्तराणां प्रयत्नादीनामागन्तूनामपि करणत्वं नाऽनुमानेन निरस्तं स्यात्, प्रमाणान्तरेण तु तदस-

---

* शा. भा. पृ. १० प. १४। † शा. भा. पृ. १० प. १४।

प्रत्यक्षदृष्टसम्बन्धं ययोरेव विशेषयोः ।
गोमयेन्धनतज्जन्यविशेषादिमतिः कृता ॥१४१॥
तद्देशस्थेन तेनैव गत्वा कालान्तरे ऽपि तम् ।
यदा ऽग्निर्बुध्यते तस्य पूर्वबोधात्पुनः पुनः ॥१४२॥

---

म्भवो ऽवगम्यते, या पारिशेष्यात् कारणान्तरस्यातीन्द्रियत्वसिद्धिः सा ऽर्थापत्तिरिति नानुमेयत्वं कर्मणः, यच्च तत्कारणसामान्यं तदन्यत्र दृष्टमेवाऽग्निवत्, अतो द्वैविध्याऽनुपपत्तिरिति। समाधत्ते तस्मादिति बुध्यत[142]इत्यन्तेन। यदा हि क चिद्देशे गोमयेन्धनजन्यमग्निविशेषं तज्जन्यं च धूमविशेषमुपलभ्य ईदृशो गोमयेन्धनो ऽग्निरीदृशश्च तज्जन्यो धूम इत्येवमग्न्यन्तरधूमान्तरेभ्यो विलक्षणस्वरूपे मतिं कृत्वा देशान्तरं गतः कियता ऽपि विलम्बनेन तद्देशस्थेन तेनैव धूमविशेषेण तमेव गोमयेन्धनमग्निविशेषमनुमिमीते*तदा तद्विशेषतोदृष्टसम्बन्धमनुमानं प्रत्यक्षदृष्टसम्बन्धमाचक्षतइति। युक्तं चैतत्, विशेष एव हि सामान्यस्य प्रतियोगी भवति न प्रत्यक्षं, तद्धि प्रमाणान्तरस्य प्रतियोगि न सामान्यस्य, सम्भवति हि सामान्ययोरपि प्रत्यक्षेण सम्बन्धग्रहणम्, तस्मात्प्रत्यक्षतोदृष्टसम्बन्धं सामान्यतोदृष्टसम्बन्धमितीदं द्वैविध्यं मिथो ऽप्रतिपक्षत्वादनुपपन्नम; अतो यत्र विशेषयोरेव प्रत्यक्षेण सम्बन्धो गृह्यते तत्प्रत्यक्षेण दृष्टसम्बन्धमित्युच्यते, यत्र सामान्ययोः प्रत्यक्षेण सम्बन्धो गृह्यते तत्सामान्यतोदृष्टमित्युच्यतइति। ननु प्रत्यक्षाऽवगताग्निविशेषविषयस्याऽनुमानस्य कथं प्रामाण्यमत आह तस्येति। पूर्वबोधात् कालान्तराभिक्येनेत्यर्थः।

---

* अनुमीयते इति २—३ पु. पा.।

संदिह्यमानसद्भाववस्तुबोधा*त्प्रमाणता ।
विशेषदृष्टमेतच्च लिखितं विन्ध्यवासिना ॥१४३॥
आकृत्योरेव चैवेष्टा व्यवच्छेदेन केन चित् ।
हेतुसाध्यव्यवस्थेति विशेषो नोपदर्शितः ॥१४४॥
अग्निधूमान्तरत्वे च वाच्ये सामान्यतो मितौ† ।
सामान्यदृष्टमेकान्तादत्रेत्यादित्य उच्यते ॥१४५॥
प्रत्यक्षविषयत्वं च सामान्यस्य प्रसाधितम् ।
वस्तुत्वं चात्र हेतुर्वा ह्ययस्याप्यभिधीयते ॥१४६॥

---

विन्ध्यवासिनाऽपीदं विशेषदृष्टत्वेनोपवर्णितमिति युक्तमेव तद्भिप्रायत्वं भाष्यस्येत्याह विशेषेति[१४३] । यदि विशेषयोरेवाऽनुमानं कथं धूमाऽऽकृतिदर्शना‡दित्याकृतिग्रहणं भाष्ये, धूमदर्शनादिति हि वक्तव्यमत आह आकृत्योरिति[१४४] । यद्येवमिदमेव विशेषानऽवच्छिन्नं सामान्यतोदृष्टोदाहरणान्तरमस्ति किमादित्योदाहरणेनाऽत आह अग्नीति[१४५] । विशेषदृष्टाऽसंकीर्णनिःसंदिग्धसामान्यदृष्टप्रदर्शनार्थमादित्योदाहरणमिति । कथं पुनः सामान्यतः सम्बन्धग्रहणं, न ह्यगृहीतयोः सम्बन्धिनोः सम्बन्धग्रहणं सम्भवति, न च सामान्ययोः प्रत्यक्षेण ग्रहणं तस्य स्वलक्षणमात्रविषयत्वात्, अवस्तुभूतं च सामान्यं कथं प्रत्यक्षेण गृह्येताऽत आह प्रत्यक्षेति[१४६] । प्रत्यक्षसूत्रे हि प्रत्यक्षत्वम् अत एव च वस्तुत्वं सिद्धमिति अनुमानेनापि तस्य

---

* वस्तुभेदादिति ३ पु. पा.

† मितेरिति ३ पु. पा. ।

‡ शा. भा. पृ. १० पं. १३ ।

'धूमादग्न्यनुमानस्य वस्त्वालम्बनता भवेत् ।
अभावाऽन्यप्रमाणत्वात्स्वार्थे श्रोत्रादिबुद्धिवत् ॥१४७॥
सामान्यस्य च वस्तुत्वं प्रत्यक्षग्राह्यता ऽपि च ।
अभावाऽन्यप्रमेयत्वादसाधारणवस्तुवत्' ॥१४८॥
'सामान्यं नाऽनुमानेन विना यस्य प्रतीयते* ।
न च लिङ्गविनिर्मुक्तमनुमानं प्रवर्तते ॥१४९॥
असामान्यस्य लिङ्गत्वं न च केन चिदिष्यते ।
न चाऽनवगतं लिङ्गं किं चिदस्ति प्रकाशकम् ॥१५०॥
तस्य वाप्यनुमानेन स्यादन्येन गतिः पुनः ।
तदुत्पत्तिश्च लिङ्गात्स्यात्सामान्यज्ञानसंहतात् ॥१५१॥
तस्य चाप्यनुमानत्वा†द्भवेल्लिङ्गेन चोद्भवः ।
अनुमानान्तरादेव ज्ञानेनैवं च कल्पने‡ ॥१५२॥

---

प्रत्यक्षत्वं वस्तुत्वं चाऽवगम्यतइत्याह अत्रेति । तमेव दर्शयति धूमादिति[१४७] द्वयेन । स्वार्थस्तु स्वेन सन्निकृष्टस्तद्ग्रहणं भ्रान्तिव्यावृत्त्यर्थम् ।

ये तु शाक्याः सामान्यस्य प्रत्यक्षग्राह्यतामनिच्छन्तो ऽनुमानैकगम्यत्वं मन्यन्ते, तन्मते ऽनुमानोच्छित्तिरेव स्यात्, पक्षधर्मतया हि लिङ्गमनुमितौ ग्रहीतव्यं, सामान्यमेव च लिङ्गं न हि विशेषः, अनुगमाऽभावात्; अतो लिङ्गभूतसामान्यग्रहणाय पुनरन्योन्याऽपेक्षणादनवस्थापातान्न किं चिदप्यनुमानमात्मानं लभतइत्याह सामान्यमिति[१४९]

---

* सामान्यतो ऽनुमानेन विनाशस्य प्रतीयते इति ३ पु. पा. ।
† अनुमानत्वमिति ३ पु. पा. । ‡ एवं प्रकल्पिते इति २—३ पु. पा. ।

लिङ्गलिङ्ग्यनुमानानामानन्त्यादेकलिङ्गिनि ।
गतिर्युगसहस्रेषु बहुष्वपि न विद्यते* ॥१५३॥
अथ सामान्यभूते ऽपि लिङ्गे ऽन्यस्माद्गतिर्भवेत् ।
प्रमाणादप्रमाणाद्वा तथा लिङ्गिगतिर्भवेत् ॥१५४॥
एवमप्यनुमानस्य नित्योच्छेदः प्रसज्यते ।
प्रमाणान्तरमेव स्यात्सामान्यस्याऽवबोधकम् ॥१५५॥
अप्रमाणाऽवबुध्दाद्वा लिङ्गाल्लिङ्गिनि या मतिः ।
साऽपि मिथ्या भवे† न्नित्यं बाष्प‡जाताऽग्निबुध्दिवत्॥१५६॥

---

पञ्चभिः । शङ्कते अथेति[१५४] । लिङ्गसामान्यमप्रत्यक्षमिति स्वलक्षणदर्शनप्रभवाद्विकल्परूपात्प्रत्यक्षाभासाज्ज्ञानान्तरादवगम्यते नाऽनुमानात्, अतो नाऽनवस्थेति । तं दूषयितुं विकल्पयति प्रमाणादिति ।

प्रमाणत्वे दूषणमाह तथा लिङ्गीति । न तावत्प्रत्यक्षाऽनुमानातिरिक्तं प्रमाणं भवतामिष्टम , उपत्यापि ब्रूमः, तत्खलु प्रमाणमिन्द्रियसंयोगापेक्षं चेत्प्रत्यक्षमेव स्यात्, नो चेल्लिङ्गसामान्यवल्लिङ्गिसामान्यस्यापि तेनैवाऽवगतिः सिद्ध्यतामिति§ । ततः किमित्याह एवमिति[१५५] । यथा ऽनवस्थायामनुमानोच्छित्तिस्तथा ऽत्रापीति । कथमित्याह प्रमाणान्तरमिति । एतदेव हि प्रमाणान्तरं लिङ्गिसामान्यस्याप्यवबोधकमिति किमनुमानेनेति ।

अथाऽप्रमाणं, तत्राह अप्रमाणेति[१५६] । ततश्चाऽनुमानस्यापि

---

* न युज्यते इति २ पु. पा. ।

† सामिथ्यैवं भवेदिति २ पु. पा. ।

‡ व्याप्येति ३ पु. पा. । § इष्यतामितीति ३ पु. पा. ।

नन्वप्रमाणभूतापि सम्बन्धस्मृतिरिष्यते ।
यथा लिङ्गिगतौ हेतुस्तथा लिङ्गगतिर्भवेत् ॥१५७॥
तत्र यत्पूर्वविज्ञानं तस्य प्रामाण्यमिष्यते ।
तदुपस्थान*मात्रेण स्मृतेः स्याच्चरितार्थता ॥१५८॥

---

प्रामाण्यं न स्यात् । ननु अप्रमाणमेवाऽनुमानम्, अवस्तुभूतसामान्यविषयत्वात्, तथापि तु परम्परया वस्तुप्रभवम् । तथा हि । वह्निस्वलक्षणाद्धूमस्वलक्षणं, ततो धूमदर्शनं, ततश्च धूमविकल्पः, तदूर्ध्वं चानुमानं, परम्परया वस्तुप्रभवतया तत्प्रतिबन्धितत्प्रतिलम्भकतया व्यवहाराऽविसंवादित्वात् प्रमाणदशायां प्रमाणमित्युच्यते, बाष्पविषयधूमविकल्पोत्थं त्वग्निज्ञानं परम्परया ऽप्यग्निना न प्रतिबद्धम्, न हि बाष्पव्यवहारस्वलक्षणमग्निस्वलक्षणादुद्भवति, तेन तदवस्तुप्रतिलम्भकं व्यवहारविसंवादादप्रमाणमिति । यद्येवं यो ऽप्येवं धूमदर्शनोत्थधूमविकल्पो ये चान्ये गवादिस्वलक्षणदर्शनोत्था गवादिविकल्पाः ते ऽपि व्यवहाराऽविसंवादिनो व्यावहारिकं प्रमाणास्पदत्वमनुविदधानाः प्रामाण्यमश्नुवीरन्, ततश्च द्वयवादानुपपत्तिः, पारमार्थिकं हि प्रामाण्यम् एकस्यैव प्रत्यक्षस्य, व्यावहारिकं तु त्रयाणामिति कथं प्रमाणद्वयवाद इति ।

तत्र चोदयति नन्विति[१५७] । स्मर्यमाणनियमं हि लिङ्गमनुमानस्य हेतुः, स्मृतेश्चाऽप्रामाण्यमविवादम्, अतस्तद्वदेव लिङ्गज्ञानमप्यप्रमाणमेव प्रमाणभूतस्याऽनुमानस्य करणं भविष्यतीति । परिहरति अत्रेति[१५८] । स्मृतिर्हि गृहीतग्राहित्वमात्रेणाऽप्रमाणमित्युच्यते, न

---

* तदवस्थानेति ३ पु. पा. । तदुपस्थानेति २ पु. पा. ।

न तु लिङ्गगतौ किं चित्प्रमाणमुपपद्यते ।
तदभावात्स्मृतिश्चात्र न कथं चित्प्रवर्तते ॥१५९॥
स्मार्तमेतदभेदेन विज्ञानमिति यो वदेत् ।
तस्य वन्ध्यासुते ऽप्यस्ति नूनं स्मरणशक्तता ॥१६०॥

---

तु यथार्थतया : सा हि स्वातन्त्र्येणाऽर्थपरिच्छेदाऽसमर्था ऽपि यथार्थविषयपूर्वाऽनुभव*प्रभवा तद्विषयभूतं यथावस्थितमेवार्थमवस्थापयतीति युक्तं तदुत्थस्याऽनुमानस्य यथार्थत्वं, सति यथार्थत्वे ऽनवगतविषयत्वात्प्रामाण्यमपि सिद्ध्यतीति । तत्र तु लिङ्गसामान्याऽवगतौ प्रमाणान्तरमपि नास्ति, यतस्तत्प्रभवत्वेनाऽधुनातनं लिङ्गज्ञानं तत्स्मृतित्वेन यथार्थं स्यादित्याह नन्विति[१५९] ।

यत्तूच्येत, धूमविकल्पो ऽपि प्रत्यक्षाऽवगतं स्वलक्षणमेव सामान्याकारेणाऽध्यवस्यंस्तदभिन्नविषयतया स्मृतिरेव, अत एवास्य व्यवहाराऽविसंवादित्वे ऽप्यप्रामाण्यम्, अनुमानं त्वनवगतमेवाऽध्यवस्यत् प्रमाणमिति प्रमाणद्वयवादो ऽपि युक्त इति; तदयुक्तम्, सामान्याभासो विकल्पः कथं स्वलक्षणविषयो ऽपि स्यात्, यत्त्वाहुः 'स्वप्रतिभासेन तत्त्वाध्यवसायेन प्रवृत्तेरिति' तदयुक्तम्, तदगृह्णतः कथं तदध्यवसायः, तद्यदि स्वलक्षणं न विकल्पेन गृह्यत कथं तदध्यवसीयेत, उपेत्यापि ब्रूमः, तद्गोचरत्वे ऽपि विकल्पस्य न स्मृतित्वं यद्यपि स्वलक्षणरूपमवगतं तथापि सामान्याकारो ऽनवगत एवावगम्यतइति कथं स्मृतित्वम्; न ह्यनवगतस्य स्मरणं सम्भवति, वन्ध्यासुतस्यापि प्रसङ्गादित्याह स्मार्त्तमिति[१६०] ।

---

* यथार्थविषयकाऽनुभवेति २ पु. पा. ।

न चाऽसाधारणो ऽर्थात्मा सामान्यज्ञानकारणम् ।
यस्मान्नास्याऽविनाभावस्तेन दृष्टः कथं चन* ॥१६१॥
स्याद्वा सम्बन्धदृष्ट्या ऽसौ सामान्यं कृतकत्ववत्† ।
न ह्यसाधारणं वस्तु पूर्वत्रेह च विद्यते ॥१६२॥
न चाप्यव्यपदेशस्य विकल्परहितस्य च ।
विना पूर्वानुसन्धानाल्लिङ्गत्वमुपपद्यते ॥१६३॥
कल्प्यन्ते च विशेषा ये ते ऽप्यलिङ्गमनन्वयात् ।
एतस्मादेव हेतोः स्यात्तज्ज्ञानस्याप्यलिङ्गता ॥१६४॥

---

ननु यद्यपि सामान्यांशस्य प्रमाणान्तराऽवगतत्वादस्मर्यमाणस्य विकल्पेन चाऽप्रमाणभूतेन ग्रहणादप्रमाणस्य मृषात्वं तथापि स्वलक्षणस्य प्रत्यक्षेणावगतत्वात्परमार्थत्वाच्च तस्मिन्नंशे विकल्पो ऽपि स्मृतिरेव यथार्थश्चेति कथं तदुत्थितस्याऽनुमानस्याऽप्रामाण्यमत आह न चेति[१६१] । स्यादेवं यदि स्वलक्षणं लिङ्गं स्यान्न त्वेवम्, अनुगमाऽभावादिति । संबन्धग्रहणाऽनुगमे वा सामान्यमेव स्यात्,-कृतकत्ववदित्याह स्यादिति[१६२] । कारणमाह न हीति । मा भूत्पूर्वत्र, इह तु भवतु लिङ्गत्वमत आह न चापीति[१६३] । न स पक्षेषु साध्यसंबन्धितया अननुसंधीयमानस्य इह च स एवायं धूम इत्येवमविकल्प्यमानस्याऽव्यपदेशस्य स्वलक्षणस्य लिङ्गत्वं भवतीति । किं च ये ऽपि तावत् पर्वतनितम्बवर्त्तित्वादयो धर्मा विकल्पाऽऽस्पदीभूतास्ते ऽप्यन्वयाभावान्न लिङ्गं, किमङ्ग पुनर्निर्विकल्पकमसाधारणमित्याह कल्प्यन्ते इति[१६४] । अथ धूमज्ञानमेव लिङ्गं न धूमस्व-

---

* कदा च नेति २ पु. पा. ।

† इदमर्धं नास्ति ३ पु. ।

सामान्यरूपतायां वा तथैवाऽनवधारणम् ।
क्व चिद्वा दृष्टसम्बन्धे सर्वः प्रत्यायको भवेत् ॥१६५॥
सम्बन्धाऽनुभवो ऽवश्यमेषितव्यश्च लिङ्गिनः ।
अनुमानप्रवृत्तेस्तु प्रग् ज्ञानं तत्र नास्ति ते ॥१६६॥
न चापि वासनामात्राल्लिङ्ग*ज्ञानस्य संभवः ।

---

लक्षणं वा सामान्यं वा, तन्न, तस्याप्यन्वयाभावादित्याह एतस्मादिति । ततो ऽवश्यं स्वलक्षणस्य तज्ज्ञानस्य वा लिङ्गत्वे सामान्यस्वरूपत्वं कल्पनीयमिति ।

भवतु सामान्यरूपत्वमिति चेदत आह सामान्येति[१६५] । सामान्यस्य ह्यनुमानादन्यतः प्रवृत्त्यसम्भवादनुमानस्य चाऽनवस्थापत्तेरेवाऽसम्भवान्न कथं चिदप्यवधारणसिद्धिरिति । असाधारणत्वे ऽपि स्वलक्षणानामेकस्मिन्गृहीतसम्बन्धे न्यो ऽगृहीतसम्बन्ध एवाग्निं प्रत्याययेत्, ततो ऽतिप्रसङ्गः स्यादित्याह क्व चिदिति ।

एवं तावत्पक्षधर्मत्व†ग्रहणे लिङ्गसामान्यस्याऽनुमानाऽपेक्षत्वादनवस्थितता दर्शिता, सैव सम्बन्धग्रहणसमये ऽपि दर्शयितव्या । न ह्यगृहीतयोर्लिङ्गलिङ्गिसामान्ययोः सम्बन्धग्रहणं सम्भवति, तयोश्च ग्राहकं भवन्मते ऽनुमानमेव, तदपि चाऽनुमानं संबन्धग्रहणसापेक्षमिति अपरापरापेक्षायामस्त्येवाऽनवस्थेत्याह सम्बन्धेति । यदि तु वासनामात्रादेव सम्बन्धसमये लिङ्गलिङ्गिनोरनुमानसमये च लिङ्गस्य ज्ञानं भवतीत्युच्यते ततो ऽनुमानसमये ऽपि लिङ्गिज्ञानं तत एव संभवन्न त्रिरूपलिङ्गजन्यं स्यात्तन्न सैवाऽनुमानस्य नित्योच्छित्तिरित्याह न चेति[१६७] ।

---

* लिङ्गे इति ३ पु. पा. । † प्रत्यक्षधर्मत्वेति २ पु. पा.

लिङ्गिज्ञानं च तद्वत्स्यात्त्रिरूपाल्लिङ्गतो न तत् ॥१६७॥
तत्राऽभावस्य लिङ्गत्वं न चाऽसावानुमानिकः ।
प्रमाणान्तरगम्यत्वात्तत्र दोषो न जायते ॥१६८॥
प्रत्यक्षाऽवगताल्लिङ्गाद्यस्य लिङ्गिगतिर्भवेत् ।
तस्य नातो ऽधिकं किं चित्प्रार्थनीयं प्रसज्यते ॥१६९॥
यत्राप्यनुमिताल्लिङ्गाल्लिङ्गिनि ग्रहणं भवेत्* ।
तत्रापि मौलिकं लिङ्गं प्रत्यक्षादेव गम्यते ॥१७०॥
लिङ्गत्वं कृतकत्वादौ क्रियायाः कारकस्य वा ।
प्रत्यक्षत्वं च तस्येष्टमिति दूरं न गम्यते ॥१७१॥

---

नन्वियमनवस्था मेघाऽभावेन वृष्ट्यभावाऽनुमाने भवतो ऽपि तुल्या, लिङ्गभूतस्य मेघाऽभावस्याऽनुपलब्धिगम्यत्वात्, अनुपलब्धिरप्युपलब्ध्यभावरूपत्वात् अनुपलब्ध्यन्तरमपेक्षते तदपि तथेत्यत आह यत्रेति[१६८]। एषा ऽप्यनवस्था शाक्यानामेवाऽनुपलब्धिलिङ्गाऽनुमेयमभावं वदताम्; अस्माकं त्वनुपलब्धिः प्रमाणान्तरं, सा च सत्तामात्रेणेन्द्रियवद् भावमभावं गमयतीति न क चिद्दोष इति।

एवं परपक्षे ऽनवस्थामुक्त्वा प्रत्यक्षसामान्यवादिनां तु नाऽसावस्तीत्याह प्रत्यक्षेति[१६९]। यत्र तर्ह्यादित्यगत्या तत्कारणमनुमीयते तत्र लिङ्गस्याऽपि गतेरनुमेयत्वादनवस्था स्यादत आह यत्रेति[१७०]। मूलाऽनुमाने यल्लिङ्गं देशान्तरप्राप्तिः तत्प्रत्यक्षसिद्धमिति नाऽनवस्थेति। यत्र तर्हि कृतकत्वादनित्यत्वमनुमीयते तत्र कृतकत्वस्य प्रत्यक्षसिद्ध्यभावादनुमानापेक्षायामनवस्था स्यादत आह लिङ्गत्वमिति[१७१]।

---

* ग्रहणोद्भव इति २ पु. पा. ।

एवं शब्दोपमानादौ सामान्याश्रयता यतः ।
तद्दौस्स्थित्येन दौस्स्थित्यं सर्वत्राऽतः प्रसज्यते ॥१७२॥
तस्मात् प्रत्यक्षपूर्वत्वं प्रमाणान्तरइष्यते ।
प्रत्यक्षत्वं च सामान्ये नाऽन्यथा हि गतिर्भवेत्॥१७३॥
प्रत्यक्षाऽऽलम्बनत्वं च विशेषस्य कथं भवेत् ।
यदा वस्त्वन्तराऽपेक्षः सामान्यांशः स कीर्त्यते॥१७४॥
'रूपादयो हि सामान्यं सर्वे नीलाद्यपेक्षया ।
स्वविशेषानपेक्ष्याथ नीलादीनां समानता ॥१७५॥

---

कृतकत्वे हि क्रियानन्तर्यं तद्विशिष्टकारकानन्तर्यं वा लिङ्गं, तच्चोभयमपि प्रत्यक्षमेवेति । तदेवमनुमानस्याऽसति सामान्यस्य वस्तुप्रत्यक्षत्वे च दौस्स्थित्यमुक्तम्, एवं शब्दादीनामपि सामान्यविषयतया संबन्धग्रहणाय च तद्ग्रहणाऽपेक्षितया सामान्याश्रयत्वात्तदभावे तदप्रत्यक्षत्वे च दौस्स्थित्यं स्यादित्याह एवमिति[१७२] । उपसंहरति तस्मादिति[१७३] । कथं च विशेषस्यैव प्रत्यक्षत्वं, गवादिस्वलक्षणमपि हि अवयवित्वात् स्वाऽवयवाऽपेक्षया सामान्यमेवेत्याह प्रत्यक्षेति[१७४] ।

यदि तु द्रव्यमपह्नुत्य रूपादीनामेव प्रत्यक्षत्वं वदेत् तदापि रूपं विशेषान्नीलपीतादीनपेक्ष्य सामान्यमेव,* नीलमपि तापिच्छमधुकरादिनीलविशेषाऽपेक्षया सामान्यं, मधुकरनीलमपि स्वावयवाऽपेक्षया; एवमा परमाणुभ्यः सामान्यरूपत्वं, ततः प्राग् द्व्यणुकरूपमपि परमाणुद्वयसाधारणत्वात् सामान्यमेवेत्याह रूपादय इति[१७५] द्व-

---

* नीलमेवेति २ पु. पा. ।

ते चापि तावत्सामान्यं यावत्स्युः परमाणवः ।
द्व्यणुकस्यापि यद्रूपं तद्धि साधारणं द्वयोः'* ॥१७६॥
न चाऽन्त्येन विशेषेण व्यवहारो ऽस्ति कस्य चित् ।
न च प्रत्यक्षता तस्य संघाते केवलस्य वा ॥१७७॥
भेदेनाऽगृह्यमाणस्य नाऽभेदो† ग्राह्यतां व्रजेत् ।
न च भिन्नेष्वभिन्नत्वबुध्देर्ग्राह्यत्वसंभवः ॥१७८॥

---

येन । रूपपरमाणुरेव तर्ह्यसाधारणः प्रत्यक्षो भवत्वत आह **न चे-ति**[१७७]। व्यवहाराऽविसंवादितया प्रत्यक्षानुमानयोः प्रामाण्यं,न चाऽन्त्यैः परमाणुभिर्व्यवहारो ऽस्तीति किं तेषां प्रत्यक्षविषयतया । किमिदम-न्त्येनेति । अन्ते भवमन्त्यं, कस्यान्ते परिमाणस्य, तस्य हि द्वावन्तौ पारिमाण्डिल्यत्वं परममहत्त्वं च, तत्राऽत्यन्ताऽल्पत्वे वर्त्तमानः पर-माणुरत्यन्तमहत्त्वे च वर्त्तमानं व्योमादिकमन्त्यमित्युच्यतइति। भवतु वा ऽन्त्येनापि कश्चिद्व्यवहारस्तथापि तस्याऽतीन्द्रियत्वादेकाकिनो ऽन्यसहितस्य वा न प्रत्यक्षत्वमित्याह **न चेति** ।

ननु न स्वरसतो ऽतीन्द्रियाः परमाणवः, प्रत्येकमिन्द्रियैरगृह्यमा-णानामपि साहित्ये प्रत्यक्षत्वोपपत्तेः, दूरस्थानामिव सिकतादीनाम्, अत आह **भेदेनेति**[१७८]। सिकतादयो हि समीपस्थितैः प्रत्येकमपि गृह्यन्तइति नैषां स्वारसिकम् अनैन्द्रियकत्वम् । सति चैन्द्रियकत्वे दूरत्वदोषात् प्रत्येकमगृहीतानामपि साहित्यसामान्यं सुप्रत्यक्षं, प-रमाणुभेदास्तु भेदरूपेण कदा चिदप्यगृह्यमाणाः कथं प्रत्यक्षग्राह्याः स्युरिति । ननु प्रत्येकमगृहीतानामपि तावत्संघातग्रहणमुपपन्नम्,

---

* द्वयमिति २ पु. पा. ।

† न भेद इति ३ पु. पा. ।

समुदायो न वा ऽप्यस्ति भवतां न च सर्वदा।
सर्वेषामसता ऽर्थेन प्रत्ययोत्पत्तिसंभवः ॥१७९॥
न चैकजातियोगेन विना ऽस्ति समुदायता।
समुदाये ऽपि चाणुत्वं नैतेषामपगच्छति ॥१८०॥
सामान्यमित्यदृश्ये ऽपि तेन सामान्यएव नः।
व्यासङ्गिनी भवत्येषा धीर्विना ऽप्येककल्पनात् ॥१८१॥
व्यासज्य वर्तमानस्य सामान्यस्य यथेन्द्रियैः।
ग्रहणं तद्वदेव स्यात् प्रतिव्यक्तिनिवेशिनः ॥१८२॥

---

अतः परमाणव एवोत्तराऽधरभावेन निरन्तराऽवस्थिता गृह्यन्तइति युक्तम्, उभयवादिसिद्धत्वात्तेषाम्, अत आह न चेति। एकस्थूलाभासा धीः कथमनेकान् सूक्ष्मांश्चालम्बते संविद्विरोधादिति। ननु समुदायस्यैकत्वात्तदालम्बनैकधीर्भविष्यत्यत आह समुदाय इति[१७९] समुदायो हि समुदायिव्यतिरेकेण नास्त्येव,असंश्च कथमबाधितबुद्धिविषयः स्यादिति। किं च, एकजातीयानामेव समुदायः, न हि वृक्षतोयलोष्टादिषु समुदायबुद्धिरस्ति, अतः परमाणुसमुदायमङ्गीकुर्वता ऽवश्यं परमाणुजातिरङ्गीकर्त्तव्येत्याह न चेति[१८०]।

नन्ववयविद्रव्ये न कस्य चित् सामान्यबुद्धिरस्ति, न च तदनेकेषु व्यासक्तमेकमिति गृह्यते, कथं सामान्यमित्युच्यते, ऽत आह सामान्यमिति[१८१]। अस्ति तस्याऽनेकाऽवयवव्यासक्तस्य साधारणत्वमिति। भवतु व्यासज्यवर्त्तिनो ऽवयविसामान्यस्य प्रत्यक्षत्वं न तु प्रत्येकवर्त्तिनो गोत्वादेरिति चेत्, न, प्रतीत्यविशेषात्, इत्याह व्यासज्येति[१८२]। यच्चोभयसिद्धत्वात्परमाणूनामेव ग्रहणमित्युक्तं, तत्राह

मीमांसकैश्च नाऽवश्यमिष्यन्ते परमाणवः ।
यद्बलेनोपलब्धस्य मिथ्यात्वं कल्पयेद्भवान् ॥१८३॥
समूहरूपं प्रत्यक्षमदृश्यैः परमाणुभिः ।
यो ऽपन्हुते शशस्यापि सो ऽभावं शृङ्गतो वदेत्॥१८४॥
समूहपरमार्थत्वे स्थिते तत्सिद्धिहेतुका ।
यदि नामाऽवगम्येत परमाण्वस्तिता पुनः ॥१८५॥
तस्माद्यद् गृह्यते वस्तु येन रूपेण सर्वदा ।

---

मीमांसकैरिति[१८३] । यदि परमाण्वभ्युपगमे दृश्यमानस्य स्थूलस्याऽपह्नवो भवति ततस्ते एवास्माभिर्नेष्यन्ते, न हि ते प्रत्यक्षेण गृह्यन्ते, स्थूलाऽनुपपत्त्या तु ते कल्प्यन्ते, तद्यदि स्थूलमपह्नुतं ततस्ते कथमभ्युपेयेरन् इति। दृष्टाऽपह्नवेन चादृष्टमङ्गीकुर्वता शशमपह्नुत्य शशविषाणमङ्गीकर्त्तव्यमित्यह समूहेति[१८४] ।

किमिदानीं न सन्त्येव परमाणवः, नेत्याह समूहेति[१८५] । सिद्धे स्थूले तदनुपपत्त्या परमाणवो ऽपि कल्प्यन्ते, स्थूलस्य हि परिमितत्वमसत्सु परमाणुषु नोपपद्यते, अनन्तावयवत्वे हि मूर्त्तैरवयवैरन्योन्याऽवकाशमप्रयच्छद्भिरनन्ततद्देशव्याप्तेरेकेनैव सर्षपेण सर्वं जगत् पूर्येत, अतो ऽन्ततो ऽपि गत्वा के चिन्निरवयवा एवाङ्गीकर्त्तव्या इति स्थूलसिद्धौ तदनुपपत्त्या सिद्ध्यन्त्येव परमाणवः तदभावान्निष्प्रमाणकाः स्युरिति। तस्माद्यदेव किं चिदवयवि द्रव्यं गोत्वादिसामान्यं वा साक्षात्प्रतीत्या गम्यते तत्सर्वं परमार्थत एव तथाभूतं प्रत्यक्षं चेत्युपगन्तव्यमिति ।

उपसंहरति तस्मादिति[१८६] । किं च, विशेषविषयत्वे ऽपि प्रत्य-

तत्तथैवाऽभ्युपेतव्यं सामान्यमथ वेतरत् ॥१८६॥

सत्तादिसामान्यमपेक्ष्य सर्वं गोत्वादि साधारणतामुपैति ।
तस्मादसाधारणमक्षगम्यं वदन्न सामान्यमपन्हुवीत॥१८७॥

सामान्यरूपेण न गृह्यते चे-
त्किं वाऽस्त्यसाधारणबुद्धिरत्र ।
यद्वस्तु लोकः प्रतिपद्यते ऽस्मि-
न्द्विधापि तच्छक्यतएव वक्तुम् ॥१८८॥

इत्यनुमानपरिच्छेदः ॥

---

क्षस्य न गोत्वादीनामप्रत्यक्षत्वं, तेषामपि सत्ताद्यपेक्षया विशेषत्वादित्याह तस्मादिति[१८७] । प्रत्यक्षेण वस्तु गृह्यमाणमपि गोत्वादिकं न सामान्यम् इत्येवं गृह्यते, तत्कथं सामान्यविषयत्वं प्रत्यक्षस्येति शङ्कते सामान्येति[१८८] । परिहरति किं वेति । एवं ह्यसाधारणत्वेनाप्यनवगमादसाधारणविषयता ऽपि न स्यादिति । अथ यद्गृह्यते तद्वस्तुतो ऽसाधारणमित्युच्यते, ततः सामान्यरूपत्वमपि वस्तुतो ऽस्तीति द्विरूपमेव तत्प्रत्यक्षगृहीतमित्याह यद्वस्त्विति ॥

इति श्रीपार्थसारथिमिश्रविरचिते न्यायरत्नाकरे अनुमानपरिच्छेदः ॥

## अथ शब्दपरिच्छेदः ।

प्रत्यक्षादिषु वक्तव्यं शब्दमात्रस्य लक्षणम् ।
तदतित्वरितेनेह किं शास्त्रादभिधीयते* ॥१॥
सामान्यलक्षणं त्यक्त्वा विशेषस्यैव लक्षणम् ।
न शक्यं केवलं वक्तुमितो ऽप्यस्य न वाच्यता ॥२॥
यच्चोक्तं शब्दविज्ञानादर्थे ज्ञानमितीदृशम् ।
अविशिष्टं विशिष्टस्य न तच्छास्त्रस्य लक्षणम् ॥३॥
प्रवृत्तिर्वा निवृत्तिर्वा नित्येन कृतकेन वा ।
पुंसां येनोपदिश्येत तच्छास्त्रमभिधीयते ॥४॥

---

## अथ शब्दपरिच्छेदः ।

"शास्त्रं शब्दविज्ञानादसंनिकृष्टे ऽर्थे ज्ञान"मिति भाष्यं, तदाक्षिपति प्रत्यक्षादिष्विति[१] । प्रमाणाऽवान्तरभेदेपूच्यमानेषु तद्भेदस्य शब्दस्य लक्षणं वक्तव्यं न शास्त्रस्य, यद्यवश्यं तदपि वक्तव्यं ततः शब्दस्योक्त्वा पश्चाद्वक्तव्यम । यत्तु तदनुक्त्वैवाऽतित्वरया शास्त्रलक्षणमभिधीयते तन्न युक्तम । इत श्चाऽयुक्तमित्याह सामान्येति[२] । अवगतसामान्यो हि सुखेन तद्विशेषमवधारयितुमलं नान्य इति। लक्षणमपि शब्दमात्र-साधारणत्वादतिव्यापकमित्याह यच्चेति[३] । कीदृशं तर्हि शास्त्रलक्षणं, तद्दर्शयति प्रवृत्तिरिति[४] ।

---

* शास्त्रस्याभिधीयते इति पाठान्तरम् । किं वा शास्त्रे ऽभिधीयते इति २ पु. पा. ।

स्वरूपकथनं यत्तु कस्य चित्तत्र दृश्यते ।
तदङ्गत्वेन तस्यापि शास्त्रत्वमवगम्यते ॥५॥
भावनायां समस्तायां* वाक्यादेवोपजायते ।
प्रवृत्तिर्वा निवृत्तिर्वा तच्छास्त्रं न पदाद्यतः ॥६॥
अपरीक्षामिषेणापि लक्षणानि वदन्नयम् ।
न स्वतन्त्रोपयोगित्वनिरपेक्षाणि जल्पति ॥७॥
तत्र यल्लोकवाक्यस्थं कथयेच्छब्द†लक्षणम् ।
वेदं व्याख्यातुकामस्य तन्नाऽतीवोपयुज्यते ॥८॥

---

ननु वस्तुस्वरूपकथनमपि शास्त्रं दृश्यते वायुर्वै क्षेपिष्ठा देवतेतिवत्, अतः कथं प्रवर्त्तकत्वं शास्त्रलक्षणमत आह स्वरूपेति[५]। विध्यङ्गत्वेनेत्यर्थः। ननु भवत्वेवं, तथापि प्रवर्त्तकत्वाऽभावात्कथं शास्त्रत्वं, प्रत्ययस्यैव हि प्रवर्त्तकत्वम्, अतः पदस्यापि शास्त्रत्वं न सिद्ध्यति, नतरां विध्युद्देशवर्त्तिनां पदान्तराणां, नतमामर्थवादानाम्, अत आह भावनायामिति। येन हि पुरुषः प्रवर्त्यते तत्प्रवर्त्तकं, स च त्र्यंशपूरितायां सप्ररोचनायां भावनायां प्रवर्त्तते, तादृशी साऽर्थवादकविध्युद्देशसमर्पणीयेति तद्युक्तस्यैव प्रत्ययस्य प्रवर्त्तकतया शास्त्रत्वं न प्रत्ययमात्रस्य पदमात्रस्य वेति।

एवमाक्षिप्य समाधत्ते अपरीक्षेति[७]। मिषेण, छलेन। स्वतन्त्रो वेदः। किमतो यद्येवमत आह तत्रेति[८]। न हि लौकिकवाक्यस्याऽप्यव्यभिचारेण प्रामाण्यप्रतिपादनं वेदप्रामाण्ये तदर्थविचारे

---

* प्रशस्तायामिति पाठान्तरम् ।

† कथं चिच्छब्देति २ पु. पा. ।

प्रत्यक्षाद्युपयोगं तु वर्णमात्रादितः पुरः ।
शास्त्रार्थज्ञानवेलायां मत्वा तल्लक्षणं कृतम् ॥९॥
यत्तु गामानयेत्यादिवाक्यस्थं शब्दलक्षणम् ।
तस्य नेहोपयोगोऽस्ति तस्माच्छास्त्रगतं कृतम् ॥१०॥
विशेषश्च न सामान्यमन्तरेणास्ति कश्चन ।
तस्मात्तमप्युदाहृत्य सामान्यं लक्षयेत्सुखम् ॥११॥

---

वोपयुज्यतइति। प्रत्यक्षादि वा किमुपयुज्यते, सत्यमित्याह प्रत्यक्षेति[९]। शास्त्रार्थोऽवधारणाय यदि पुरैव वर्णमात्रादिरूपेण यथावत् शास्त्ररूपमवधारयितुमस्ति प्रत्यक्षस्योपयोगः, तथा ऽनुमानादेरपि प्रत्येकगृहीतमन्त्रशेषस्य प्रवृत्तिविशेषस्य विश्वजिदादिफलस्याङ्गियत्तायाश्चाऽवधारणे ऽस्त्युपयोग इति। नन्वस्त्वेवं लौकिकस्य वाक्यस्योपयोग इति शास्त्रमात्रस्यैवाऽव्यभिचारार्थं कृतमित्याह यत्त्विति[१०]।

ननु गामानयेत्याद्यपि विधिवाक्यत्वात् शास्त्रमेव, तत्कथं शब्दमात्रे एव निक्षिप्यते, न तच्छास्त्रं लोकप्रसिद्ध्यभावात्; यद्यपि शिष्यते ऽनेनेत्येव शास्त्रशब्दः प्रवृत्तः, तथापि तन्मात्रे प्रयोगाऽभावात् पङ्कजादिवद्योगरूढ्यभ्युपगमेन धर्माऽधर्मोपदेशीनि चतुर्दशाष्टादश वा विद्यास्थानानि शास्त्रशब्दाभिधानीयकं भजन्ते नान्यदिति। ननु शास्त्रस्यापि शब्दसामान्यप्रयुक्तैव प्रामाण्यशक्तिः, न हि शब्दविशेषस्य शास्त्रस्य शक्तिविशेषो ऽस्ति, तेन शब्दसामान्यप्रयुक्तशक्त्युपजीवित्वाच्छास्त्रस्य सामान्यस्याऽव्यभिचाराय लक्षणं वक्तव्यं, वर्णितं चैतत्—

इन्द्रियादिव्युदासेन शब्दो यावन्न साध्यते ।
तावच्च तद्विशेषस्य युक्तो नाऽवसरो भवेत् ॥ इति ।

अत आह विशेषश्चेति[११]। सत्यं वक्तव्यं सामान्यलक्षणं, तद-

सामान्यरूपमप्येतदधिकाराद्विशिष्यते ।
चोदना चोपदेशश्च शास्त्रमेवेत्युदाहृतम् ॥१२॥
यथा* च चोदनाशब्दो वैदिक्यामेव वर्तते ।
शब्दज्ञानाऽर्थविज्ञानशब्दौ शास्त्रे तथा स्थितौ ॥१३॥
प्रत्यक्षाद्यपरीक्ष्यत्वे तदन्तर्भावहेतुकम्† ।
शास्त्रस्याप्यपरीक्ष्यत्वमनयैव धियोदितम् ॥१४॥

---

प्यनेनैवार्थात्सिध्यति, तेन साक्षान्न विवक्षितमित्यवधार्यते । यदा हि प्रवर्त्तकं वाक्यं शास्त्रमित्युक्तं तदा ऽर्थात्प्रवर्त्तकविशेषणरहितं वाक्यं शब्द इत्यर्थादुक्तं भवतीति । यत्त्वतिव्यापकं लक्षणमित्युक्तं, तत्राह सामान्येति[१२] । शब्दशब्देन सामान्यवाचिना प्रवृत्तत्वाच्चोदना ऽभिधीयते, अर्थशब्देनापि धर्माऽधर्माविति । ननु चोदनाया प्रामाण्यं प्रतिज्ञातं, तत्किं शास्त्रस्याऽव्यभिचारित्वमुच्यते, ऽत आह चोदनेति ।

सामान्यस्याऽधिकाराद्विशेषवृत्तौ दृष्टान्तमाह यथेति[१३] । चोदनापदं प्रवर्तनामात्रवचनमपि चोदनासूत्रे प्रथमसूत्रोक्ताऽऽनन्तर्याक्षिप्तवेदाऽध्ययनाधिकाराद्वैदिक्यामेव वर्त्तते तथेहापि शब्दशब्दार्थः, शब्दश्च शास्त्ररूपे शब्दे तदर्थयोश्च धर्माऽधर्मयोर्वर्ततइति । यदपि वृत्तिकारग्रन्थे प्रत्यक्षादीनि प्रसिद्धानि प्रमाणानि तदन्तर्गतं च शास्त्रमिति शास्त्रस्यैवाऽपरीक्ष्यत्वमुक्तं, तदपि तस्यैव साक्षादुपयोगित्वादित्याह प्रत्यक्षेति[१४] ।

तदिदं शब्दमनुमानाऽन्तर्भूतं शाक्यवैशेषिकाः प्रतिपन्नाः । तथाहुः-

---

* यदा चेति ३ पु. पा. ।

† कृतमिति २ पु. पा. ।

तत्राऽनुमानमेवेदं बौद्धैर्वैशेषिकैः श्रितम् ।
भेदः संख्यादिभिस्त्विष्टो न तूक्तं भेदकारणम् ॥१५॥
'पूर्वसंस्कारयुक्ताऽन्त्यवर्णवाक्यादिकल्पना ।
विवक्षादि च धूमादौ नास्तीत्येतेन भिन्नता ॥१६॥

---

प्रत्यक्षमनुमानं च प्रमाणे सदृशात्मनः ।
अप्रत्यक्षस्य संबन्धादन्यतः प्रतिपत्तितः ॥ इति ।

तथा वैशेषिका अस्येदं कार्यं कारणं संबन्ध्येकार्थसमवायि विरोधि चेति लैङ्गिकमित्युक्त्वा एतेन हि शाब्दं व्याख्यातमिति । तथाच सति लक्षणान्तरप्रणयनमनर्थकम्, अतस्तन्निराकरणं प्रतिजानाति तत्रेति[१५] । तन्निराकर्त्तव्यमिति शेषः । ननु सांख्यादिभिरेव भेदः समर्थितः, अभेदश्च निराकृतो*, ऽत आह भेद इति । सत्यं, न तु तैर्भेदकारणं सम्यक् कथितमिति ।

कथमित्याह पूर्वेति[१६] सार्द्धेन । वाक्यं हि प्रमाणं, तच्चानन्त्यं पदमन्त्यं वा सर्वाणि वा आख्यातं वा पूर्ववर्णजनितसंस्कारसंयुक्तो ऽन्त्यो वा वर्ण इत्येवं बहुविधा कल्पना, विवक्षादिभिश्च तन्निष्पद्यते, न ह्येवं बहुविधो विकल्पो विवक्षादिभिः फलनिष्पत्तिर्वा न धूमादिष्वस्ति, तेन विलक्षणकारणजन्यत्वात्प्रमाणान्तरं शाब्दमित्येवं हि तैर्भिन्नत्वमुक्तमेव, तच्च जात्युत्तरं वैधर्म्यसमा विकल्पसमा वेयं जातिः शाब्दमनुमानम्, अन्वयव्यतिरेकाऽधीनजन्मत्वाद् धूमादग्निज्ञानवदिति शाक्यादिभिरभेदे ऽनुमानेन साधितं धूमादिकं वाक्याविकल्परहितं, शाब्दे तु तद्युक्तं तद्वैधर्म्याद् नानुमानमिति वैधर्म्यसमा । तथा ऽन्वयव्यतिरेकाऽधीनजननमपि किंचिद्वाक्यविकल्पाऽऽपादनरहितं, तद्यथा ऽग्निज्ञानं किं चित्तद्विकल्पयुक्तं यथा शाब्दं तथा किं चिदनुमानं किं

---

* निराकार इति१ पु. पा.

यैरुक्ता तत्र वैधर्म्यविकल्पसमजातिता' ।
धूमानित्यविषाण्यादिविशेषान्न हि भिन्नता ॥१७॥
त्रैलक्षण्यपरित्यागो यावन्न प्रतिपाद्यते ।
तावद्विशेषमात्रेण वदतो जातिता भवेत् ॥१८॥
यथेष्टविनियोगेन प्रतीतिर्या ऽपि शब्दतः ।
न धूमादेरितीहापि व्यभिचारो ऽङ्गवृत्तिभिः ॥१९॥
हस्तसंज्ञादयो ये ऽपि यदर्थप्रतिपादने ।
भवेयुः कृतसङ्केतास्ते न लिङ्गमिति स्थितिः ॥२०॥

---

चिह्नानुमानं न भविष्यतीति विकल्पसमा, तदिदं जात्युत्तरम् असाधनमिति। कथं न साधनमित्याह धूमेति[१७] । अनुमानानामपि मिथो ऽस्त्येव किं चिह्नैधर्म्यमपि, न तावता ऽनुमानता सिध्यतीति ।

कथं तर्हि तत्सिद्धिरत आह त्रैलक्षण्येति[१८] । पक्षधर्मत्वं सपक्षान्वयो विपक्षव्यतिरेकश्च त्रीणि लिङ्गस्य लक्षणानि भवन्ति, तादृशलिङ्गजत्वमनुमानलक्षणम्, अतः शब्दस्याऽनुमानतामनिच्छता शब्दस्य त्रैलक्षण्यपरित्याग एव प्रतिपादयितव्यः, तदप्रतिपादनेन यत्किंचिद्विशेषवचनं जातिरेवेति ।

यदप्युच्यते, शब्दो हि यत्रैव पुरुषेच्छया विनियुज्यते संकीर्त्यते तदेव प्रत्याययति न तथा धूमादयो, ऽतो ऽनुमानाद्भेद इति । तदप्यनैकान्तिकं, हस्ताद्यङ्गचेष्टानां लिङ्गानामपि यथेष्टविनियोगेन प्रत्यायकत्वदर्शनादित्याह यथेष्टेति[१९] । एतदेव विवृणोति हस्तेति[२०] ।

यदपि धूमादयो येन केनापि पुरुषेण निष्पादिता दर्शिताश्चाऽग्न्यादिकं गमयन्ति, शब्दस्तु प्रयोक्तुः पुरुषस्याऽऽप्तत्वमपेक्ष्याऽर्थं प्रत्याययन्नाऽनुमानमिति; तस्यापि हस्तसंज्ञादिभिरेव व्यभिचारः । न

पुरुषाक्षिप्ततायां च तथैव व्यभिचारिता ।
पदवैदिक*वाक्यानां न सत्यव्यापिता भवेत् ॥२१॥
सम्बन्धाऽनुभवश्चायं सो ऽन्यत्रापि विलक्षणः ।
'एतस्मिन्पुरुषापेक्षा देशाऽपेक्षा† ऽग्निधूमयोः॥२२॥
कालाद्यपेक्षया चान्य' 'उक्ता चान्यैराभिन्नता ।
आप्तवादाऽविसंवादसामान्यादनुमानतः' ॥२३॥

---

अनाप्तस्य हस्तसंज्ञाभिरर्थनिश्चयो भवति,स हि विप्रलिप्सया तथाभूते ऽप्यर्थे ऽन्यादृशीं हस्तचेष्टां वाक्यप्रणयनवत्करोतीत्याह पुरुषेति । भागाऽसिद्धश्चाऽयं पुरुषाप्तत्वं पुरुषापेक्षत्वं वा हेतुः,पदेषु वैदिकवाक्येषु चाऽव्याप्तेरित्याह पदेति[२१]। शब्दार्थयोः संबन्धस्तु यत्पुरुषद्वारेण गृह्यते नैतावता ऽननुमानत्वं सिध्यति, अन्यत्राप्यनुमानेषु संबन्धद्वाराणां विलक्षणत्वदर्शनादित्याह संबन्धेति[२२] । वैलक्षण्यमेव दर्शयति एतस्मिन्निति पादत्रयेण ।

एतस्मिंश्च शब्दाऽनुमाने पुरुषापेक्षः शब्दार्थयोः संबन्धः, आप्तपुरुषप्रणीतशब्दस्यार्थोऽविसंवादादिति, अग्निधूमयोर्देशद्वारा यस्मिन्देशे धूमः तत्राग्निरिति, चन्द्रोदयसमुद्रवृद्ध्योस्तु कालापेक्ष इति। प्रत्युत पुरुषाऽपेक्षितयैव शब्दस्याऽनुमानादभिन्नता शाक्यादिभिरुक्ता, आप्तवादित्वाऽविसंवादित्वसामान्ययोर्व्याप्तिदर्शनात्; अतः कथमियमेव भेदहेतुत्वेनोच्यतइत्याह उक्तेति[२३] पादत्रयेण । ननु गृहीतसंबन्धं लिङ्गं लिङ्ग्यनुमापकं, शब्दास्त्वपूर्वदेवतास्वर्गादयो ऽगृहीत-

---

* पदवैदिकेति पाठान्तरम् ।

† पुरुषापेक्षो देशापेक्ष इति २ पु. पा. ।

न चाऽपूर्वादिशब्दानां भेदात्सर्वत्र भिन्नता* ।
न चेहाऽश्वादिशब्देभ्यो भेदस्तेषां प्रतीयते ॥२४॥
न चाप्यज्ञातसम्बन्धं पदं किं चित्प्रकाशकम् ।
सम्बन्धाऽननुभूत्या ऽतो न स्यादननुमानता ॥२५॥
तुल्याकारतया ऽप्यत्र शब्दज्ञानाऽर्थतद्धियाम् ।
अग्निधूमेष्वदृष्टत्वान्न भेदस्तन्निवारणात् ॥२६॥
'प्रतिबिम्बेष्वनैकान्तो बिम्बं यादृग्घि दर्पणे ।
तादृङ् मुखादि बुध्यन्ते' न चाऽत्राऽननुमानता ॥२७॥

---

संबन्धा एवाऽर्थं प्रत्याययन्तीति कथमनुमानमत आह न चेति[२५] । अपूर्वादयो ऽल्पा ह्येके संबन्धं नापेक्षन्ते न तावता सर्वशब्दानां भिन्नतेति। तेषामपि पदत्वात्संबन्धापेक्षेत्याह न चेति । किमितो यत्पदमत आह न चेति[२५] । अतः संबन्धाऽननुभवाद्येषामनुमानत्वं न तत्सिद्ध्यतीत्याह संबन्धेति । अपूर्वादिपदमप्यर्थापत्त्यादिसिद्धाऽपूर्वाद्यर्थैर्गृहीतसंबन्धमेव प्रत्यायकमिति । भेदकारणान्तरमुपन्यस्य निरस्यति तुल्येति[२६]। निरस्तेयं तुल्याकारता प्रत्यक्षसूत्रे इति। अनैकान्तिकं च तुल्यत्वं लिङ्गेष्वपि संभवादित्याह प्रतिबिम्बेष्विति[२७] पादत्रयेण ।

ननु दर्पणतेजःप्रतिहतेन नायनेन तेजसा संयुक्तं मुखं प्रत्यक्षेणैव गृह्यतइति नेदमनुमानमत आह न चेति । यद्यपि तदेव मुखमादर्शे

---

* भिन्नते इति २ पु. पा. ।

प्रत्यक्षता तदाऽप्यत्र तदा ऽन्यैर्व्यभिचारिता ।
यत्र पादादि बिम्बेन गतानामनुमीयते ॥२८॥
एकवाक्यात्सकृच्चोक्तान्नाप्यनेकस्य तत्क्षणम्* ।
स्याद्विरुद्धाऽविरुद्धस्य बोधादेतस्य भिन्नता ॥२९॥
लिङ्गस्यापि हि तादृप्यं दृष्टं हेतुविरुद्धयोः ।
'विरोधान्नाऽनुमानं चेत्स्यादनागमता ऽपि ते ॥३०॥

---

गृह्यते तथापि न प्रत्यक्षेण तदेवेति गम्यते, तत्त्वाऽन्यत्वसाधारणं प्रत्यक्षम् । परीक्षकास्तु न्यायतस्तत्त्वमध्यवस्यन्ति, प्रतिपत्तारस्तु मुकुरे केवलं प्रतिबिम्बं पश्यन्तः प्रत्यक्षेष्वङ्गुल्यादिषु बिम्बप्रतिबिम्बयोः सारूप्यं गृहीत्वा मुखस्यापि प्रतिबिम्बसारूप्यमनुमिमतइत्यनुमानमेवेदमिति । भवतु वा प्रत्यक्षं तथाप्यन्यदुदाहरणमस्तीत्याह प्रत्यक्षतेति[२८] । सिकताऽवस्थितेन पादबिम्बेन तादृगेव गतानां पादो ऽनुमीयतइति ।

भेदकारणान्तरमुपन्यस्य दूषयति एकवाक्यादिति[२९] । लिङ्गं ह्येकमेवार्थं बोधयति वाक्यं त्वेकमेव सकृदेवाऽनेकमर्थं विरुद्धमविरुद्धं च बोधयति, यथा श्वेतो धावतीति सारमेय इतो द्रुतं गच्छतीति श्वेतः पुरुषो वस्त्राणि शोधयतीति । तथा विरुद्धमुत्पलद्वयमन्तरा कमलद्वयमिति । न हि ज्ञायते कमलयोर्मध्ये वोत्पले विपरीतं वोत्पलयोरिति, द्वयं च विरुद्धम् । अतो ऽनुमानाद्भिन्नं शाब्दमिति एवमपि न भिन्नतेति। कथमित्यत आह लिङ्गस्यापीति[३०]। हेतुस्तावद्धूमादिरग्निमार्द्रेन्धनं तत्संबन्धम् औष्ण्यं चाऽनेकं गमयतीति। तथा विरुद्धः नित्यः शब्दः कृतकत्वादिति सहसा तावन्नित्यत्वं गमयति

---

* लक्षणमिति २ पु. पा. ।

यत्र चैकार्थता वाक्ये' तत्र स्यादनुमानता ।
सकृदुच्चरिते चाऽस्मिन्विवक्षैकैव दृश्यते ॥३१॥
यस्त्वनिर्धारितार्थानामनेकप्रतिभोद्भवः ।
स लिङ्गे ऽप्यस्फुटे दृष्टस्तस्मान्नैतेन भिद्यते ॥३२॥
दृष्टान्ताऽनभिधानं च धूमादौ व्यभिचारितम् ।
प्रसिद्धत्वाद्धि तत्रापि न दृष्टान्तो ऽभिधीयते ॥३३॥
अनभ्यस्ते त्वपेक्षन्ते शब्दे सम्बन्धिनः स्मृतिम् ।
अत्र*प्रत्युक्त इत्येवं बुध्यन्ते हि चिरात् क्वचित्॥३४॥

---

व्याप्तिबलेन च तद्विपरीतमनित्यत्वमिति । शङ्कते विरोधादिति पादत्रयेण । ततो नित्यत्वप्रतीतिः सा ऽनुमानं तद्विरुद्धस्य तद्गमकताऽयोगादिति । परिहरति स्यादिति । शब्दो ऽप्येकत्रैव गमको भवति नोभयत्रेति । यदि चाऽनेकार्थत्वमनुमानाद् भेदहेतुः, एकार्थानां न भेदः स्यादित्याह यत्रेति[३१] ।

यदुक्तमेकत्रैव गमकत्वं नोभयत्रेति, तदुपपादयति सकृदिति । तात्पर्ये हि शब्दाः प्रमाणं, सकृदुच्चरितस्यैकत्रैव तात्पर्यमिति । यदि परमनिर्द्धारितार्थविशेषाणामनेकार्थविषयसंशयमात्रं स्यात्तच्च लिङ्गे ऽपि दूराद्धूमरेणुसंघातसंशये ऽग्निवात्ययोः संशयात्तुल्यम्, अतो नाऽनेकार्थत्वेना ऽनुमानाद्भेदसिद्धिरित्याह यस्त्विति[३२]। यदपि दृष्टान्ताऽनभिधानादननुमानत्वं, तदप्यनैकान्तिकमित्याह दृष्टान्तेति[३३] । असिद्धे तु दृष्टान्तवचनं शब्दे ऽपि क्वचिदस्त्येवेति असिद्धो हेतुरित्याहा अनभ्यस्ते त्विति[३४] । एतदेव दर्शयति अत्रेति ।

---

* यत्रेति २ पु. पा. ।

परोक्ता हेतवश्चात्र नाऽभेदस्य निवारिताः ।
'शब्दाऽनुमानयोरैक्यं धूमादग्न्यनुमानवत् ॥३५॥
अन्वयव्यतिरेकाभ्यामेकप्रत्यक्षदर्शनात् ।
सम्बन्धपूर्वकत्वाच्च प्रतिपत्तिरितो यतः ॥३६॥
प्रत्यक्षाऽन्यप्रमाणत्वात्तददृष्टार्थबोधनात् ।
सामान्यविषयत्वाच्च त्रैकाल्यविषयाश्रयात्' ॥३७॥
कैश्चिन्मीमांसकैरुक्तो भेदो ऽत्र विषयान्तरात् ।
पूर्वाभ्यां ह्यपरिच्छिन्ने शास्त्रमर्थे प्रवर्तते ॥३८॥
तत्रापि नागमत्वं स्यात्पुरुषोक्तेस्तथा ऽस्तु चेत् ।
प्रत्ययः किंनिमित्तो ऽर्थे वक्तृबुद्धेः कुतो न्वसौ॥३९॥

---

तदेवं सांख्यदिभिर्भेदो न सम्यक् साधित इत्युक्तं, शाक्याद्युक्ताऽभेदहेतुनिराकरणमपि न सम्यक्कृतमित्याह परोक्ता इति[३५]। तानेव दर्शयति शब्देति सार्द्धद्वयेन। एकदेशिमतेन निराचष्टे कैश्चिदिति[३८]। विषयात्कारणमाह पूर्वाभ्यामिति। प्रत्यक्षाऽनुमानाऽगोचरत्वं हि धर्माऽधर्मयोः स्थितं, यच्च यदगोचरे प्रवर्त्तते तत्ततो भिद्यते, प्रत्यक्षादिवाऽनुमानमिति।

तदिदं स्वाऽभिप्रायेण तावत्सिद्धान्तवादी दूषयति तत्राऽपीति[३९]। शङ्कते तथेति। दूषयति प्रत्यय इति। परः पुनराह वक्तृबुद्धेरिति। वाक्याद्वक्तृबुद्धिरनुमीयते तया चार्थ इति। दूषयति कुत इति। वक्तृबुद्धिरेव न कुतश्चित्सिध्यति, कथं तया ऽर्थसिद्धिरिति।

न शब्दार्थस्य सा लिङ्गं न शब्दो ऽस्याः कथं चन ।
विशेषो गम्यते ताभ्यां न चैतस्याऽनुमेयता ॥४०॥
तेन वक्तुरभिप्राये प्रत्यक्षाद्यनिरूपिते ।
पुरुषोक्तिरपि श्रोतुरागमत्वं प्रपद्यते ॥४१॥
न चाप्यननुमेयत्वमागमार्थस्य शक्यते ।
लिङ्गं हि शब्द एवास्य धूमो ऽग्नेरिव कल्प्यते ॥४२॥
न चाप्यननुमेयत्वात्प्रमाणान्तरगम्यता ।
रूपस्याऽश्रावणत्वेन न ह्यप्रत्यक्षतेष्यते ॥४३॥
एवं सति स्वयूथ्या नः के चिन्नातिप्रपञ्चिनः* ।

---

उभयाऽसिद्धिं दर्शयति न शब्दार्थस्येति[४०] । कथमित्याह विशेष इति। बुद्धिविशेषो ऽर्थविशेषश्च नदीतीरादिवाक्योच्चारणे गम्यते । न च विशेषस्याऽनुमानतः सिद्धिः। वाक्यमात्रेण हि बुद्धिमात्रमनुमीयते ततश्चार्थमात्रमिति । तेनावश्यमनिरूपिताऽवस्थएव वक्तृज्ञाने पुरुषवाक्यमागमरूपेणैवार्थे प्रतिपादयतीत्यङ्गीकर्त्तव्यम, तथा हि सत्यर्थविशेषप्रतिपादकवाक्यरचनया तदर्थविषया बुद्धिरनुमातुं शक्या भवति, इतरथा तु वाक्यमात्रान्न विशेषाऽनुमानं सिद्ध्यतीत्याह तेनेति[४१] । यच्चाऽन्यद्वक्तव्यं तत्सर्वं न्यायरत्नमालायामुक्तमिति ।

संप्रति शाक्याभिप्रायेण दूषयति न चेति[४२] । यदा हि शब्दस्यार्थे लिङ्गत्वं तदा वेदार्थो ऽप्यनुमेयः स्यादिति। कथमित्याह लिङ्गमिति । वेदवाक्यमेव स्वार्थस्य लिङ्गमिति। तथाप्यर्थात्मकलिङ्गाऽभावान्नाऽनुमेयत्वमिति चेत्तत्राह एवमिति[४४] ।

---

* नातिप्रयत्नत इति १ पु. पा. ।

अनुमानविशेषो ऽयमीदृग् धर्मस्य बोधकः ॥४४॥
भविष्यत्यर्थरूपं तु लिङ्गं धर्मे निराकृतम् ।
संज्ञाऽनुमानतेच्छा तु न दुष्येदागमे ऽपि नः ॥४५॥
लक्षणेन त्वभिन्नत्वं यदि शब्दाऽनुमानयोः ।
वेदज्ञानाऽप्रमाणत्वं स्यादतल्लक्षणत्वतः ॥४६॥
'आप्तवादाऽविसंवादसामान्यान्नृवचस्सु हि ।
लक्षणेनाऽनुमानत्वात्प्रामाण्यं सिद्धिमृच्छति ॥४७॥
वेदे त्वाप्तनराऽभावात्सम्बधाऽनुभवादृते ।
लक्षणं नाऽनुमानस्येत्यप्रामाण्यं प्रसज्यते' ॥४८॥

---

नन्वनुमानस्य भविष्यति प्रत्यक्षागोचरे धर्मे प्रमाणत्वं निराकृतम्, अतो ऽनुमानत्वे वेदस्याऽप्रामाण्यं धर्मे स्यादत आह भविष्यतीति[४५]। अर्थात्मकमेव लिङ्गं धर्मे न प्रवर्त्तते, शब्दात्मकं तु प्रवर्त्तत एवेति । दूषयति संज्ञेति । यदि प्रमाणान्तरस्यैव पश्चान्मानसामान्याच्छब्दस्याऽनुमानसंज्ञा क्रियते, सा ऽस्तु नाम इति । लक्षणतस्तु शब्दस्याऽनुमानत्वे वेदस्य तल्लक्षणत्वाऽभावात्प्रमाणान्तरत्वाऽनभ्युपगमाच्चाऽप्रामाण्यं स्यादित्याह लक्षणेनेति[४६] । कथमित्याह आप्तेति[४७]द्वयेन । न तावद्वक्तृविशेषबुद्धिमनादृत्य शब्देनैवाऽञ्जसा ऽर्थो ऽनुमातुं शक्यत इति वक्ष्यते, तेन लक्षणतो ऽनुमानत्वं वदता आप्तोक्तत्वस्याऽविसंवादित्वव्याप्तेस्तेनास्याऽनुमानत्वं वक्तव्यम्, इदं च नृवचस्स्वेव संभवति, वेदस्य तु गृहीताऽविसंवादनियमस्याऽऽप्तप्रत्ययाऽभावात् कथमनुमानत्वेन प्रामाण्यं, तद्भावे वा बलात्पौरुषेयत्वापत्तिरिति ।

नन्वेकदेशसत्यत्वे तस्य स्यादनुमानता ।
वेदत्वादग्निहोत्रादौ वायुक्षेपिष्ठवाक्यवत् ॥४९॥
नाऽऽदित्ययूपे ऽनैकान्तात्तद्वद्वा गौणता भवेत् ।
नातः प्रत्यनुमानानामेवं पूर्वोक्तया दिशा ॥५०॥
तस्माल्लक्षणभेदेन यदि शब्दप्रमाणता ।
समा लोके च वेदे च सिद्धा वेदप्रमाणता ॥५१॥

---

चोदयति नन्विति[४९] । परिहरति नेति[५०] । अत्र तावदिदमेव वक्तव्यम्, एवमप्यर्थप्रतिपत्तिर्नानुमानिकी सिद्ध्यति, प्रतिपन्नस्याऽर्थस्य*पश्चात्सत्यतामात्राऽनुमानमिदमुपन्यस्तं, प्रतिपन्नस्य चाऽर्थस्य सत्यत्वं स्वतःप्रामाण्यादेव सिद्धमिति किमनुमानेनेति । तदास्तां तावदादित्ययूपवाक्ये तावदनैकान्तिको हेतुरिति । ननु तदपि गुणवृत्त्या स्तुतिं कुर्वत्प्रमाणमेवात आह तद्वदिति । प्रमाणान्तरसंगताऽर्थविषयो हि सत्यता क्षेपिष्ठादिवाक्ये दृष्टेत्यग्निहोत्रादिवाक्यानामपि न स्वमहिम्ना प्रामाण्यं स्यात्, अतस्तान्यपि प्रमाणान्तरसिद्धं यं कंचिदर्थमादित्ययूपवाक्यवद्गुणवादेन वदेयुरिति । सप्रतिसाधनश्चायं हेतुः स्वर्गकामादिसंबन्धविषया इत्यादिभिरप्रामाण्यं हेतुभिरित्याह नात इति । तस्माल्लोकवेदसाधारण्येनैव यदि शब्दमनुमानाल्लक्षणत एव प्रमाणान्तरं स्यात् ततः सिद्ध्यति वेदप्रामाण्यं नाऽन्यथेत्याह तस्मादिति[५१] ।

यत एव लोकवेदसाधारण्येनैव लक्षणं वक्तव्यम्, अत एवाप्तोपदेशः शब्द इतीदमपि लक्षणमक्षपादोक्तं नाऽवकल्पतइत्याह

---

* अर्थस्येति नास्ति ३ पु. ।

तेन चाप्तोपदेशत्वं न स्यादागमलक्षणम् ।
नाऽऽप्तस्य संभवो वेदे लोके नाऽस्मात्प्रमाणता ॥५२॥
पुरस्ताद्वर्णितं ह्येतत्तस्माच्छब्देन या मतिः ।
तस्याः स्वतः प्रमाणत्वं न चेत्स्याद्दोषदर्शनम् ॥५३॥
अनुमानेन चैतस्य प्रामाण्यं केवलं समम् ।
पदे तावत्कृतो यत्नः परैरित्यत्र वर्ण्यते ॥५४॥
विषयो ऽन्यादृशस्तावद्दृश्यते लिङ्गशब्दयोः ।
सामान्यविषयत्वं च पदस्य स्थापयिष्यति ॥५५॥
धर्माऽधर्मविशिष्टश्च लिङ्गीत्येतच्च साधितम् ।
न तावदनुमानं हि यावत्तद्विषयं न तत् ॥५६॥

---

तेनेति[५२] । किमिति न स्यादत आह नाप्तस्येति । किं च, लोकेऽपि नाऽऽप्तप्रणीतत्वात्प्रामाण्यमित्याह लोकइति । कारणं चात्र प्रागेवोक्तमित्याह पुरस्तादिति[५३] । तस्माद्भाष्योक्तमेव लक्षणमित्याह तस्मादिति । शब्दविज्ञानादिति च भाष्यं न चेद्दोषदर्शनमित्युपस्कृत्य व्याख्येयमिति ।

ईदृशस्य शब्दस्याऽनुमानाद्भेदं प्रतिजानाति अनुमानेनेति[५४] । द्विधा शाब्दं, पदं वाक्यं च, तत्र पदमभ्यधिकाभावादप्रमाणमसंनिकृष्टग्रहणेनैव व्यावर्त्तितमिति न तस्य भेदः प्रतिपादनीयः, तथापि परैः पदस्याभेदः प्रतिपादित इति वयमपि तत्रैव भेदं प्रतिपादयाम इत्याह पदइति । तदिदानीं वर्णयति विषय इति[५५] । तदेव विवृणोति सामान्येति। ननु त्रैलक्षण्यपरित्यागो वाच्यः शब्दस्य किं विशेषान्तराभिधानेनाऽत आह न तावदिति[५६] । विशिष्टविषयता

सामान्यादतिरिक्तं तु शाब्दे वाक्यस्य गोचरः ।
सामर्थ्यादनुमेयत्वादश्रुते ऽपि पदान्तरे ॥५७॥
संख्यादिमान् पदार्थश्चेन्न तावत्सो ऽव्ययादिषु ।
यत्रापि ते प्रतीयन्ते तत्र व्यक्तेर्विशेषणम् ॥५८॥
पदान्तराभिधेयस्य तादर्थ्याच्च क्रियात्मनः ।
वाक्यार्थे ऽपि पदं यत्र गोमदादि प्रयुज्यते ॥५९॥

---

ऽपि ह्यनुमानस्य लक्षणमेव दर्शितम्, एकदेशान्तरे बुद्धिरिति, परैरप्युक्तं, प्रसिद्धोयमप्रसिद्धविशेषणविशिष्टतया स्वयं साध्यत्वेनेप्सितः पक्ष इति । तेन विशिष्टविषयत्वाऽभावादनुमानत्वमेव न भवतीति ।

ननु विशिष्टविषयमपि पदं दृष्टं, यथा लोके को यातीति पृष्टे अश्व इत्युक्ते केवलादश्वपदादश्वविशिष्टा क्रिया गम्यते, ऽत आह सामान्यादिति[५७] । कथमश्रुते पदान्तरे वाक्यत्वमत आह सामर्थ्यादिति। प्रश्नवाक्यगतं क्रियापदमनुपपत्त्या ऽनुषङ्गेण वाक्यशेषः कल्प्यते, द्वारमित्यादावप्यनुपपत्त्यैव संव्रियतामित्यादिकमध्याह्रियतइति शङ्कते संख्यादिमानिति[५८] । तेन पदमपि विशिष्टविषयमिति। परिहरति न तावदिति । गवादिपदे तर्हि कथमत आह यत्रापीति । जातिर्हि पदार्थो न तद्विशेषणं संख्यादयः, ते ह्यनुरञ्जनेन व्यक्तेर्विशेषणं तादर्थ्येन तु क्रियास्ते हि प्रत्ययश्रुत्या कारकत्वमापन्नाः क्रियायां विनियुज्यन्तइति चतुर्थे वक्ष्यतइति । यत्तर्हि गोमत्पाचकादिपदं वाक्यार्थवृत्ति तद्विशिष्टविषयत्वादनुमानं स्यात्, अत आह वाक्यार्थे इति[५९] । प्रमाणसिद्धो हि धर्मी धर्मविशिष्टतया ऽनुमानतः साधयितव्यः, अत्र प्राक् पदोच्चारणान्न किंचित्सिद्धम्, उच्चारिते तु विशिष्टमेव सिद्धमिति नानुमेयत्वमिति ।

सत्यप्यत्र विशिष्टत्वे सिद्धत्वान्नैव पक्षता ।
तावानेव हि तत्रार्थो यः पर्वमवधारितः ॥६०॥
भेदबुद्धेश्च वैषम्यं प्रकृतिप्रत्ययार्थयोः ।
विशेषणविशेष्यार्थस्वातन्त्र्यग्रहणं न च ॥६१॥
विशेष्यपूर्विका तत्र बुद्धिश्चात्र विपर्ययः ।
अथ शब्दो ऽर्थवत्त्वेन पक्षः कस्मा न्न कल्प्यते ॥६२॥
प्रतिज्ञार्थैकदेशो हि हेतुस्तत्र प्रसज्यते ।
पक्षे धूमविशेषे च सामान्यं हेतुरिष्यते ॥६३॥

---

विशिष्टसिद्धिमेव दर्शयति तावानिति[६०] । पूर्वपदोच्चारणाद्‌ धर्मी सिद्धिमासादयन् यद्विशेषणविशिष्टो ऽवधारितः तदुत्तरकालमपि न ततो ऽधिकं किं चिदनुमेयमस्तीति । किं चात्रापि भिन्नयोः प्रकृतिप्रत्यययोः पृथक्पृथग्विशेषणविशेष्यस्वरूपमेव वाच्यं, विशिष्टता तु समभिव्याहारादेव पदार्थानामिव वाक्यं सिध्यतीति न शब्दस्य विशिष्टविषयत्वम् ; अतो वैषम्यमनुमानादित्याह भेदेति[६१] । किं च, स्वतन्त्रगृहीतो धर्मी स्वतन्त्रस्मृतेन धर्मेण विशिष्टो ऽनुमानविषयः, न च शब्दे स्वातन्त्र्यग्रहणमस्तीत्याह विशेषणेति । वैषम्यान्तरमाह विशेष्येति[६२] । चोदयति अथेति । शब्दमेव स्वतन्त्रगृहीतं पक्षीकृत्य स्वतन्त्रस्मृतेनार्थेन विशिष्टं साधयेदिति । परिहरति प्रतिज्ञेति[६३] । न हि धर्मिणः शब्दादन्यो ऽस्ति हेतुरिति ।

ननु धूमे पक्षीकृते यथा स एव हेतुः तथा शब्दे ऽपि किं न भवत्यत आह पक्षत इति । न त्वेवमिह संभवतीत्याह शब्दत्व-

शब्दत्वं गमकं* नात्र गोशब्दत्वं निषेत्स्यते ।
व्यक्तिरेव विशिष्यातो हेतुश्चैका प्रसज्यते ॥६४॥
भवेद् व्यञ्जकभेदाच्चेन्न त्वेवं प्रत्ययो ऽस्ति नः ।
कथं चास्य विशिष्टत्वं न तावद्देशकालतः ॥६५॥
तत्प्रतीतिविशिष्टश्चेत्परं किमनुमीयते ।
न प्रत्यायनशक्तिश्च विशेषस्यानुमीयते ॥६६॥

---

मिति[६४] । गोशब्दं पक्षीकृत्य तस्मिन् सास्नादिमद्विशिष्टे साध्ये शब्दत्वमनैकान्तिकं गोशब्दत्वं च नान्यो ऽर्थो धर्मिणो ऽस्तीति स्यादेव प्रतिज्ञार्थैकदेशतेति । शङ्कते भवेदिति[६५] । व्यञ्जकभेदादस्त्येव गोशब्दव्यक्तीनां भेदः, अतश्च सामान्यमस्तीति । परिहरति न त्विति । यथा च नास्ति भेदप्रत्ययः तथा च वक्ष्यतइति ।

केन संबन्धेनार्थः शब्दं विशिनष्टि, न तावदेकदेशकालतया, युधिष्ठिरशब्ददेशकालयोर्युधिष्ठिरस्याऽभावादित्याह कथमिति । शङ्कते तत्प्रतीतीति[६६] । दूषयति परमिति । जातायामर्थप्रतीतौ पश्चात्तद्विशिष्टत्वाऽनुमानं सिद्धफलत्वादनर्थकं,लिङ्गिप्रतीतिरेव लिङ्गस्य फलमिति । अथ न प्रतीतिः साध्यते, किं तर्हि तच्छक्तिः, सा कस्य, यदि गोशब्दस्य, स एव तर्हि शक्तिविशिष्टः पक्षः स एव च हेतुरिति सैव प्रतिज्ञार्थैकदेशता; न च सामान्यविशेषभेदो नास्तीत्युक्तम् । उपेत्याप्याह न प्रत्यायनेति । यदि विशेषस्य पक्षस्य शक्तिविशिष्टता ऽनुमीयते ततः सामान्यहेतुः स्यात्, न

---

* शब्दे च गमकमिति पाठान्तरम् ।

विशेषाणां न शक्तिर्हि सैकदेशे ऽग्निजातिवत् ।
सामान्यस्यैव शक्तत्वं पक्षो हेतुस्तदेव च ॥६७॥
तस्मादर्थविशिष्टस्य न शब्दस्याऽनुमेयता ।
कथं च पक्षधर्मत्वं शब्दस्येह निरूप्यते ॥६८॥
न क्रियाकर्तृसम्बन्धादृते सम्बन्धनं क चित् ।
'राजा भर्त्ता मनुष्यस्य तेन राज्ञः स उच्यते ॥६९॥
वृक्षस्तिष्ठति शाखासु ता वा तत्रेति तस्य ताः ।
देशे ऽग्निमति धूमस्य कर्तृत्वं भवनं प्रति ॥७०॥

---

तु सा ऽनुमातुं शक्येति । कथमित्याह विशेषाणामिति[६७] । यदि हि महानसादिदेशविशेषान्वयिनीवाऽग्निजातिः एका व्यापिका शक्तिः पूर्वदृष्टगोशब्दविशेषान्वयिनी दृष्टा स्यात् ततः सा ऽधुनातने विशेषे अग्नित्वमिवाऽनुमीयेत, न तु विशेषाणां शक्तिर्दृष्टेति । कस्य तर्हि दृष्टा, ऽत आह सामान्यस्येति । अग्नित्वस्य देशविशेषाऽन्वयः प्रत्यक्षः, शक्तिस्त्वर्थापत्तिगम्या, आकृत्यधिकरणन्यायेन वाच्यमिव वाचकशक्तिरपि सामान्यस्यैवाऽवगता; अतः सामान्यमेव सपक्षः पक्षो हेतुश्चेति कथमिव संभवतीति । उपसंहरति तस्मादिति[६८] ।

तदेवं विषयभेदमुक्त्वा इदानीं त्रैलक्षण्यं निराकुर्वन् पक्षधर्मत्वं निराकरोति कथमिति । शब्दो हि लिङ्गं, तस्य च स्वयं धर्मित्वायोगादर्थो धर्मीकर्त्तव्यः, तद्धर्मत्वं च शब्दस्य न सम्भवतीति । कथमित्याह न क्रियेति[६९] । क्रियाकारकसम्बन्धपूर्वो ऽयं सम्बन्ध इति । एतदेवोदाहरणैर्दर्शयति राजेति द्वयेन । शब्दस्याऽर्थेन सह न कश्चित्सम्बन्धो ऽवगम्यते, न चाऽनवगतरूपं सम्बन्धमात्रमस्तीति शा-

कार्यकारणभावादौ क्रिया सर्वत्र विद्यते' ।
न चाऽनवगताकारः सम्बन्धो ऽस्तीति गम्यते ॥७१॥
न चास्त्यसति सम्बन्धे षष्ठीतत्पुरुषो ऽपि वा ।
तस्मान्न पक्षधर्मो ऽयमिति शक्या निरूपणा ॥७२॥
निवृत्ते ऽन्यत्र सम्बन्धे ये ऽपि तद्विषयात्मना ।
वदेयुः पक्षधर्मत्वं शब्दस्याऽनुपलब्धिवत् ॥७३॥
तैरप्येतन्निरूप्यं तु शब्दस्तद्विषयः कथम् ।
न तद्देशादिसद्भावो नाऽऽभिमुख्यादि तस्य वा ॥७४॥
तस्मादुत्पादयत्येष यतो ऽर्थविषया मतिम् ।
तेन तद्विषयः शब्द इति धर्मत्वकल्पना ॥७५॥
तत्र वाचकतायां च सिद्धायां पक्षधर्मता ।
न प्रतीत्यङ्गतां गच्छेन्न चैवमनुमानता ॥७६॥

---

कथं वक्तुमित्याह न चेति[७१] । तदभावे च पक्षस्य धर्म इति वा समासो नाऽवकल्पत इत्याह न चेति[७२] । उपसंहरति तस्मादिति ।

केचित्तु शब्दो ऽर्थविषय इत्येवं तस्य धर्मतां मन्यन्ते, यथा ऽनुपलब्धिरभावविषयेति, तदुपन्यस्यति निवृत्ते इति[७३] । दूषयति तैरपीति[७४] । कथं वा न भवतीत्यत आह न तदिति । देशादिसम्बन्धाऽभावे चाऽर्थबुद्धिजननेनैव तज्जननशक्त्या वा तद्विषयता वक्तव्येत्याह तस्मादिति[७५] । भवत्वेवमिति चेत्, तत्राह तत्रेति[७६] । जननेन हि तद्धर्मत्वं प्रतीत्युत्तरकालत्वान्न प्रतीतेरङ्गं स्यात्, प्रतीतिरपि पक्षधर्मत्वाऽनादरेणोपजाता नाऽनुमानं स्यात्, वाचकता प्रतिपाद-

गमकत्वाच्च धर्मत्वं धर्मत्वाद्गमको यदि ।
स्यादन्योन्याश्रयत्वं हि तस्मान्नैषा ऽपि कल्पना ॥७७॥
न चाऽगृहीतसम्बन्धाः स्वरूपव्यतिरेकतः ।
शब्दं जानन्ति येनात्र पक्षधर्ममतिर्भवेत् ॥७८॥
न च स्वरूपमात्रेण धूमादेः पक्षधर्मता ।
न चापि पूर्वसम्बन्धमपेक्ष्यैषा प्रसज्यते ॥७९॥
धूमवानयमित्येवमपूर्वस्यापि जायते ।
पक्षधर्ममतिस्तेन भिद्येतोत्तरलक्षणात् ॥८०॥

---

कता तच्छक्तिर्वा, शक्त्यधीने ऽपि तद्धर्मत्वे ततः प्रागेव शक्तिरङ्गीकर्तव्या, सत्यां च स्वभावतः शक्तौ तत एव तत्प्रतीतिसिद्धेः किं पक्षधर्मत्वेनेति । तदेवं सति यदि पक्षधर्मत्वादेव गमकत्वमिष्यते, ऽतः पक्षधर्मत्वमपि गमकत्वाऽधीनमिति तदितरेतराश्रयं स्यादित्याह गमकत्वादिति[77] । इतश्च न पक्षधर्मत्वं शब्दस्येत्याह न चेति[78] । न ह्यगृहीतसम्बन्धाः पुरुषाः शब्दमर्थधर्मतया जानन्ति, यतः पक्षधर्मत्वं स्यादिति । न च स्वरूपमात्रेण पक्षधर्मता भवति, धूमादिष्वदर्शनात्, तेषां हि पर्वतादिसम्बन्धितयैव तद्धर्मत्वं न धूममात्रेणेत्याह न चेति[79] । ननु गृहीतसम्बन्धानां तावदर्थसम्बन्धितया शब्दः प्रतिभासते, ततस्तद्धर्मता भविष्यतीत्यत आह न चापीति मति[80]-रन्तेन । यो ऽपि धूमस्याऽग्निनियमनं वेत्ति सो ऽपि धूमस्य पर्वतसम्बन्धमवगच्छत्येवेति । येन चैवं सर्वे पक्षधर्मत्वलक्षणं पूर्वसम्बन्धसपक्षान्वयलक्षणं नापेक्षते तेनैवेदमुत्तरस्माल्लक्षणाद्भिद्यते, अन्यथा तदेव स्मर्यमाणमनुमानाङ्गमिति ततो भेदेन पक्षधर्मत्वं न लक्षणं हेतोः

न त्वत्र पूर्वसम्बन्धादधिका पक्षधर्मता ।
न चाऽर्थप्रत्ययात् पूर्वमित्यनङ्गमियं भवेत् ॥८१॥
न च धर्मी गृहीतो ऽत्र येन तद्धर्मता भवेत् ।
पर्वतादिर्यथा देशः प्राग्धर्मत्वाऽवधारणात् ॥८२॥
यश्चात्र कथ्यते धर्मी प्रमेयो ऽस्य स एव नः ।
'न चाऽनवधृते तस्मिंस्तद्धर्मत्वाऽवधारणात् ॥८३॥
प्राक् स चे*त्पक्षधर्मत्वाद् गृहीतः किं ततः परम् ।
पक्षधर्मादिभिर्ज्ञातैर्येन स्यादनुमानिता' ॥८४॥
अन्वयो न च शब्दस्य प्रमेयेन निरूप्यते ।
व्यापारेण हि सर्वेषामन्वितत्वं प्रतीयते ॥८५॥
यत्र धूमो ऽस्ति तत्राग्नेरस्तित्वेनाऽन्वयः स्फुटः ।
न त्वेवं यत्र शब्दो ऽस्ति तत्राऽर्थो ऽस्तीति निश्चयः॥८६॥

---

सिध्येदित्याह तेनेति । शब्दे तु नैवमस्तीत्याह न त्विति[८१]।पूर्वसंबन्धाऽपेक्षापि पक्षधर्मता प्रतीत्युत्तरकालमेवाऽधिका ऽवगम्यते इति नार्थः प्रतीत्यङ्गमित्याह न चेति । इतश्च न पक्षधर्मत्वमित्याह न चेति[८२] । न ह्यत्राऽर्थातिरेकेण पर्वतादिवद्धर्मी कश्चिदस्ति, यद्धर्मता शब्दस्य स्यादिति । यस्त्वर्थो धर्मी प्रमेयो ऽपि स एवेत्याह यश्चेति[८३]। ततः किमित्याह न चेति सार्द्धेन ।

निराकृतं पक्षधर्मत्वं, सपक्षाऽन्वयमिदानीं दूषयति अन्वय इति[८५] । कथमित्याह व्यापारेणेति । तदेव दर्शयति यत्रेति[८६]।

---

* प्राग् भवेदिति १ पु. पा. ।

न तावत्तत्र देशे ऽसौ तत्काले वा ऽवगम्यते ।
भवेन्नित्यविभुत्वाच्चेत्सर्वार्थेषु च तत्समम् ॥८७॥
तेन सर्वत्र दृष्टत्वाद् व्यतिरेकस्य चाऽगतेः* ।
सर्वशब्दैरशेषार्थप्रतिपत्तिः प्रसज्यते ॥८८॥
अथैवं देशकालाभ्यामसत्यत्वप्रकल्पने ।
वाचकप्रत्ययं कश्चिद् ब्रूयादर्थधिया ऽन्वितम्॥८९॥
नैवमप्यस्ति दृष्टो हि विना ऽप्यर्थधिया क्व चित् ।
वाचकप्रत्ययो ऽस्माभिरव्युत्पन्ननरान् प्रति ॥९०॥
द्वितीयादिप्रयोगे च भवेदन्वयकल्पना ।
शतकृत्वः प्रयुक्ते ऽपि न च दृष्टा ऽर्थधीः क्व चित् ॥९१॥

---

न त्वेवं शब्दे ऽस्तीत्याह न त्विति । एतदेव विभज्य दर्शयति न तावदिति[८७] । इदं च प्रागेव दर्शितमिति । शङ्कते भवेदिति । परिहरति सर्वार्थेष्विति । ततः किमित्याह तेनेति[८८] । यथा हि गोत्वं नित्यं विभु च तथा ऽश्वत्वादीन्यपीति सर्वैस्तैर्व्याप्तो गोशब्दः सर्वाणि तानि बोधयेदिति । शङ्कते अथेति[८९] । शब्दज्ञानं हि स्वानन्तरभाविनैकार्थसमवायिना ऽर्थज्ञानेन नियतमिति । परिहरति नैवमिति[९०] । पुनः शङ्कते द्वितीयेति[९१] । परिहरति शतकृत्व इति । शतकृत्वो ऽभ्यस्तादपि जर्भरीतुर्फरीतू इत्येवमादेर-

---

* एतदर्धत्रयं त्रुटितं १ पु. ।

ननु ये ज्ञातसम्बन्धास्तेषां दृष्टो ऽन्वयः स्फुटः ।
यद्येवमन्वयात्पूर्वं संबन्धः को ऽपि कल्पितः ॥९२॥
नाऽङ्गमर्थधियामेषा भवेदन्वयकल्पना ।
अन्वयाऽधीनजन्मत्वमनुमानस्य च स्थितम् ॥९३॥
ज्ञाते प्रतीतिसामर्थ्ये तद्वशादेव जायते ।
पश्चादन्वय इत्येष कारणं कथमुच्यते ॥९४॥
तस्मात्तन्निरपेक्षैव शब्दशक्तिः प्रतीयते ।
न च धूमाऽन्वयात्पूर्वं शक्तत्वमवगम्यते ॥९५॥

---

ध्येतॄणामर्थप्रतीतिर्न दृष्टेति । चोदयति नन्विति[९२] । परिहरति यद्येवमिति[९३] । को ऽपीति । शक्तिरूपः । ततः किमित्याह नाङ्गमिति[९४] । तदपि किं मिथ्येत्यत* आह अन्वयेति । अनङ्गत्वमेवाऽन्वयकल्पनायां विवृणोति ज्ञाते इति[९५] । स्वाभाविके हि शब्दस्याऽर्थप्रत्यायनसामर्थ्ये ज्ञाते ततश्चाऽर्थप्रतीतौ जातायां तद्वशेन पश्चादुपजायमानो ऽन्वयः कथमर्थप्रतीतेरङ्गं स्यादिति । तस्मादनपेक्षिताऽन्वयस्यैव शब्दस्याऽर्थप्रत्यायनसामर्थ्यान्नाऽनुमानत्वमित्याह तस्मादिति[९६]। नन्वन्वयव्यतिरेकवत एवार्थेन शब्दस्य तत्प्रत्यायनसामर्थ्यमतस्तदधीना ऽर्थप्रतीतिरन्वयाऽधीनैवेति कथं नानुमानमत आह न चेति ।

ननु प्रत्युदाहरणे विलक्षणा एव लिङ्गलिङ्गिनोः सम्बन्धा इत्युक्तम्, एतास्मिन्पुरुषापेक्षो देशापेक्षो ऽग्निधूमयोरिति, तेन धूमा-

---

* वागतौ इति ३ पु. पा. ।

व्यतिरेको ऽप्यविज्ञातादर्थाच्छब्दाधियो यदि ।
सो ऽपि पश्चादिस्थतत्वेन नाऽर्थप्रत्ययसाधनम् ॥९६॥
सम्बन्धं यं तु वक्ष्यामस्तस्य निर्णयकारणम् ।
स्यादन्वयो ऽतिरेकश्च न त्वर्थाऽधिगमस्य तौ ॥९७॥
तस्मादननुमानत्वं शब्दे प्रत्यक्षवद्भवेत् ।
त्रैरूप्यरहितत्वेन तादृग्विषयवर्जनात् ॥९८॥

---

दावदृष्टो ऽपि शक्तिरूप एव संबन्धो ऽनुमानाङ्गं किं न भवति, भवत्वयं संबन्धो, न त्वनेनाऽनुमानता सिध्यति। यस्य ह्यन्वयनिबन्धनैव प्रत्यायनशक्तिः तदेव लिङ्गं, शब्दस्त्वन्वयाऽनपेक्षः स्वरसादेव शक्तो लिङ्गविलक्षणत्वान्नाऽनुमानाय कल्पते। किं च, येन हि यस्य यादृशः संबन्धः तस्याऽनुमानकाले ऽपि तादृश एव संबन्धो ऽनुमीयते, यथा धूमवतामग्निसंयोगे ऽवगते पर्वतस्याऽग्निसंयोग एवाऽनुमीयते, तदिह शब्दस्याप्यर्थप्रतिपादनशक्तावविगतायामनुमानेनापि शक्तिरेवाऽनुमीयेत नार्थः ; स त्ववगतशक्तिकाच्छब्दादसत्यामेव व्याप्तावक्गम्येत इति सिद्धमर्थाऽवगतेरननुमानत्वमिति। व्यतिरेकमिदानीं निराकरोति व्यतिरेक इति[९६]। न तावदर्थाऽभावे शब्दाऽभावो, युधिष्ठिराऽभावे ऽपि तच्छब्दसद्भावात्। यदि परमार्थाऽज्ञानाद्व्यतिरेकः शब्दज्ञानस्योच्येत, सो ऽपि नास्ति, अव्युत्पन्नानामर्थज्ञानाभावे ऽपि शब्दज्ञानदर्शनात्; गृहीतसंबन्धानामिति चेन्न, प्रत्यायकत्वाऽतिरिक्तसंबन्धाऽभावात्तद्वशो व्यतिरको ऽर्थज्ञानोत्तरकालत्वादन्वयवदेवाऽनङ्गमिति। यदि नाऽर्थप्रतिपादनाङ्गमन्वयव्यतिरेकौ क तर्हि तावङ्गमत आह संबन्धमिति[९७]। शक्तिनिष्कर्षे तयोरङ्गत्वमिति।

तदिदं त्रैलक्षण्याऽभावेन विषयभेदेन चोपपादितम् अननुमानत्वं प्रयोगेण दर्शयति तस्मादिति[९८]। एवं पदस्य प्रामाण्यमभ्युपेत्या-

सति चास्य प्रमाणत्वे भेदाऽभेदनिरूपणा ।
युक्ता न तु पदज्ञानात्पदार्थो ऽत्र प्रमीयते ॥९९॥
पदं प्रयुज्यमानं हि चतुर्द्धा ऽर्थे प्रयुज्यते ।
प्रत्यक्षे च परोक्षे च ज्ञाते ऽज्ञाते ऽपि वा पुरा ॥१००॥
तत्र यत्पूर्वविज्ञाते प्रत्यक्षे च प्रयुज्यते ।
प्रमिते च प्रयुक्तत्वादनुवादो ऽधिकाद्विना ॥१०१॥
अदृष्टपूर्वे त्वज्ञानं सम्बन्धप्रत्ययो ऽपि वा ।
सम्बन्धो न च तस्यार्थो यो ऽर्थः स त्वन्यगोचरः* ॥१०२॥
परोक्षे ऽननुभूते च नाऽभिधेये मतिर्भवेत् ।
परोक्षश्चाऽनुभूतश्च यस्तत्र स्मृतिरिष्यते ॥१०३॥
प्रमिते च प्रवृत्तत्वात्स्मृतेर्नास्ति प्रमाणता ।
परिच्छेदफलत्वाद्धि प्रामाण्यमुपजायते† ॥१०४॥

---

ऽननुमानत्वमुक्तम्, अधुना प्रामाण्यमेव नास्तीत्याह सतीति[९९] कथमित्याह पदमिति[१००]। एतेष्वेवाऽप्रमाणत्वं दर्शयति तत्रेति[१०१]। अदृष्टपूर्वे संप्रति प्रत्यक्षे ज्ञानाऽनुत्पत्तिः, अथ वा अयं पनस इति प्रयुज्यमाने वा च्यवाचकलक्षणसंबन्धप्रतीतिरित्याह अदृष्टेति[१०२]। संबन्धएव तर्हि प्रामाण्यमस्त्वित्यत आह संबन्ध इति । यस्तु पदस्याऽभिधेयः स प्रत्यक्षाऽवगतो न प्रमेय इत्याह यो ऽर्थइति। यस्तु परोक्षो ऽननुभूतश्च तत्र ज्ञानाऽनुत्पत्तिरेवेत्याह परोक्षइति[१०३]। यस्तु शब्दवाच्यत्वेनाऽवगतः संप्रति परोक्षः तत्र पदात्स्मृतिरेवेत्याह परोक्ष इति । स्मृतिर्वा किं न प्रमाणं, सत्यमित्याह प्रमितइति[१०४]।

---

* अन्यतो गत इति २ पु. पा. । † उपपद्यते इति पाठान्तरम् ।

तादात्विकपरिच्छेदफलत्वेन प्रमाणता ।
प्रत्यभिज्ञानवत्कस्मात्स्मृतेरपि न कल्प्यते ॥१०५॥
यावान्पूर्वपरिच्छिन्नस्तावानेवावधार्यते ।
स्मृत्या तदनुसारेण तदा ऽसत्त्वे ऽस्य नैव धीः ॥१०६॥
पदमभ्यधिकाऽभावात्स्मारकान्न विशिष्यते ।
पदाधिक्यं भवेत् किं चित्तत्पदस्य न गोचरः ॥१०७॥
प्रमाणमनुमानं वा यद्यपि स्यात्पदान्मितिः* ।
वाक्यार्थस्याऽऽगमार्थत्वाद्दोषो नाऽऽगमवादिनाम्॥१०८॥
वाक्यार्थे तु पदार्थेभ्यः सम्बन्धानुभवादृते ।
बुद्धिरुत्पद्यते तेन भिन्ना ऽसावक्षबुद्धिवत् ॥१०९॥

---

भवतु प्रमितप्रवृत्तिः तथापि किमित्यप्रामाण्यमत आह परिच्छेदेति । अगृहीतग्रहणं परिच्छेदः, स स्मृतौ नास्तीति । चोदयति तादात्विकेति[१०५] । परिहरति यावानिति[१०६] । ननु संस्कारजन्या स्मृतिः, पदात् पदार्थप्रतीतिस्तु प्रत्युत्पन्नकारणिका कथं स्मृतिरत आह पदमिति[१०७] । यथा हि स्मारकाः संबन्धिदर्शनादयो ऽनधिकाविषयाः तथैव पदमप्यनधिकविषयत्वतुल्यत्वादप्रमाणमिति । पदाधिक्यमिति । संव्रियतामित्याद्यध्याहाराद्वाक्यमेव तन्न पदमात्रमिति ।

भवतु पदस्य प्रामाण्यमनुमानत्वं च तथापि वाक्यार्थस्याऽऽगमरूपप्रमाणान्तरगम्यत्वाद्युक्तमागमवादिनां प्रमाणान्तराङ्गीकरणमित्याह वाक्यार्थे इति[१०९] । संबन्धग्रहणाऽपेक्षैव नास्ति, ततश्च प्रत्यक्षवद-

---

* मतिरिति पाठान्तरम् ।

वाक्याऽधिकरणे चास्य हेतोः सिद्धिर्भविष्यति ।
सर्वेषां च परोक्तानां वाक्यबुद्धावसिद्धता* ॥११०॥
वाक्येष्वदृष्टेष्वपि सार्थकेषु
पदाऽर्थविन्मात्रतया प्रतीतिम् ।
दृष्ट्वा ऽनुमानव्यतिरेकभीताः
क्लिष्टाः पदाभेदाविचारणायाम्* ॥१११॥

इति शब्दपरिच्छेदः ।

अथ उपमानपरिच्छेदः ।

'कीदृग्गवय इत्येवं पृष्टो नागरिकैर्यदि ।
ब्रवीत्यारण्यको वाक्यं यथा गौर्गवयस्तथा ॥१॥

---

नुमानाद्भेद इति । नन्वसिद्धो हेतुः संबन्धाऽपेक्षत्वादित्यत आह वाक्येति[११०] । ये त्वपरोक्ताः शब्दस्याऽनुमानत्वे हेतवस्ते हेतवो वाक्यजन्यायां बुद्धावसिद्धा इत्याह सर्वेषामिति । अन्वयव्यतिरेकजत्वं संबन्धपूर्वकत्वं सामान्यविषयत्वं चासिद्धम्, अन्यच्च हेतुचतुष्टयमुपमानादिभिरनैकान्तिकमिति । यत एवाऽत्यन्ताऽदृष्टवाक्यार्थतत्संबन्धमेव पुरुषाणां पदार्थज्ञानमात्रेण वाक्यार्थज्ञानमुत्पद्यते तत एवाऽऽगमस्याऽनुमानव्यतिरेकाद् बिभ्यतः शाक्याः पदस्यैवाऽभेदे चिक्लिशुरित्याह वाक्येष्विति[१११] ।

इति श्रीपार्थसारथिमिश्रविरचिते न्यायरत्नाकरे शब्दपरिच्छेदः ॥

अथ उपमानपरिच्छेदः ।

"उपमानमपि सादृश्यमसंनिकृष्टेऽर्थे बुद्धिमुत्पादयति यथा गवयदर्शनं गोस्मरणस्ये"ति भाष्यं,† तदिहाऽक्षपादोक्तलक्षणाल्लक्षणान्तर-

---

* वाक्याद् बुद्ध्यवसायितेति २ पु. पा. । † शा. भा. पृ. १०५. १६ ।

एतस्मिन्नुपमानत्वं प्रसिद्धं शाबरे पुनः ।
तस्यागमाऽबहिर्भावादन्यथैवोपवर्णितम्' ॥२॥
पुरुषप्रत्ययेनैव तत्राऽर्थः संप्रतीयते ।
तदीयवचनत्वेन तस्मादागम एव सः ॥३॥
सदृशादुपजायेत या मतिः सदृशान्तरे ।
ध्यानादिस्मृतितुल्यत्वात्सा प्रमाणं कथं भवेत् ॥४॥
देशकालादिभेदेन यथा ऽन्यत्र विशिष्यते ।
प्रमेयं नैवमस्त्यत्र नगरस्थाऽनुसारतः ॥५॥

---

वर्णनकारणमाह कीदृगिति[१] द्वयेन । प्रसिद्धसाधर्म्यात्साध्यसाधनमुपमानमिति अक्षपादेनोक्तं, कीदृशो गवय इत्येवं नागरिकेण पृष्टो वन्यः प्रसिद्धेन गवा साधर्म्यादप्रसिद्धं गवयं येन वाक्येन बोधयति यथा गौरिव गवय इति, तद्वाक्यम् उपमानमिति । यद्यप्येवं नैयायिकानां प्रसिद्धं तथापि तस्य शब्दज्ञानादर्थे ज्ञानमितीहशाच्छब्दभेदादन्यादृशं लक्षणं भाष्ये वर्णितमिति ।

नैयायिकोक्तादप्याप्तोपदेशः शब्द इति लक्षणादागमत्वमेवास्येत्याह पुरुषेति[३] । भाष्यकारीयमपि लक्षणमाक्षिपति सदृशादिति[४] । गवयदर्शनं गोस्मरणस्येति हि सादृश्यविशिष्टगवयदर्शनं गवि स्मरणमुत्पादयति, तदुत्पादितं च स्मरणमुपमानमित्युक्तं, तच्च स्मरणत्वात्प्रमाणमेव न भवति, न हि ध्यानादिस्मृतेः सदृशदर्शनेच्छायाश्च कश्चिदप्रामाण्ये विशेष इति । न च प्रत्यभिज्ञावद्देशकालाधिक्यादपि प्रामाण्यं, तदभावादित्याह देशेति[५] । नैयायिकानामेव

श्रुताऽतिदेशवाक्यानामारण्ये गवये मतिः ।
या सोपमानं केषांचिद्गोसादृश्याऽनुरञ्जिता ॥६॥
प्रत्यक्षो गवयस्तावत्सादृश्यस्मृतिरत्र तु ।
ननु सादृश्ययुक्ते ऽर्थे न स्मृतिर्नेन्द्रियाद्गतिः ॥७॥
पूर्ववाक्यार्थविज्ञानान्नाऽऽधिक्यं गवये यदि ।
स्मरणादविशिष्टत्वात्संगतेर्न प्रमाणता ॥८॥
अथ त्वाधिकता काचित्प्रत्यक्षादिवशाद्भवेत्* ।
यावद्धीन्द्रियसम्बन्धस्तत्प्रत्यक्षमिति स्थितम् ॥९॥

---

मतान्तरमुपन्यस्यति श्रुतेति[६] । यथा गौर्गवयस्तथेत्यतिदेशवाक्यं श्रुत्वा वनं गतानामयं गोसदृशो गवय इति ज्ञानं, तदुपमानमिति । दूषयति प्रत्यक्ष इति[७] ।

चोदयति नन्विति । यद्यपि गोसदृशः कश्चिदिति सामान्यतो ऽवगतं स्मर्यते, तद्विशिष्टस्तु गवयो न प्रागवगतो न प्रत्यक्ष इति । परिहरति पूर्वेति[८] । प्रत्युत्पन्नकारणजन्यं यदवगतविषयं ज्ञानं तत्संगतिः संवादो ऽनुवाद इति चोच्यते, तच्च स्मृतिवदेवाऽनधिकविषयत्वादप्रमाणम; अतो ऽतिदेशवाक्याऽवगतं यदत्र गृह्यते तत्तावन्न प्रमेयम, यत्त्वनवगतं गवयस्वरूपं तस्य च सादृश्यविशिष्टत्वं तत्प्रत्यक्षमेवेत्याह अथेति[९] । कथं पुनरुपलब्धगवयस्य स्मरणोत्तरकालं भवत्सादृश्यज्ञानं स्मरणान्तरितेन्द्रियव्यापारं प्रत्यक्षमत आह यावदिति । प्रत्यक्षसूत्रे न हि स्मरणतो यत्प्राक् तत्प्रत्यक्षमित्यत्र

---

* प्रत्यक्षादेव सा भवेदिति २ पु. पा. ।

स्मर्यमाणस्य चांशस्य विवेकेनाऽप्रमाणता ।
'श्रुताऽतिदेशवाक्यत्वं न चाऽतीवोपयुज्यते ॥१०॥
ये ऽपि ह्यश्रुततद्वाक्यास्तेषामपि भवत्ययम् ।
प्रत्यक्षदृष्टगोत्वानां वने गवयदर्शिनाम्' ॥११॥
अथ संज्ञाऽनुसन्धानं तेषां नास्तीति वर्ण्यते ।
न नाम वस्तु तत्तावत्सर्वथा तैः प्रतीयते ॥१२॥
न च शब्दाऽर्थसम्बन्धः प्रमेयो ऽत्र तदेष्यते ।
सादृश्याऽवधृते वाक्ये वाक्यादवगतो ह्यसौ ॥१३॥

---

स्थितमिति । ननु गोसादृश्यज्ञानं गवांशे स्मरणं कथं प्रत्यक्षमत आह स्मर्यमाणस्येति[१०] । इदमपि तत्रैव स्थितम् । विविक्ता एव ते ऽर्था हीति । अतश्च स्मर्यमाणविषयएव तस्याऽप्रामाण्यं न गृह्यमाणविषये ऽपि, संभवति ह्येकस्यापि ज्ञानस्य विषयभेदेन प्रामाण्यमप्रामाण्यं च, अतो विवेकेन स्मरणांशस्यैवाऽप्रामाण्यं न ग्रहणांशस्याप्रमाणतेति । श्रुतातिदेशवाक्यानामिति च विशेषणमनर्थकम्, अन्येषामपि गोसादृश्यविशिष्टगवयज्ञानोत्पत्तेरित्याह श्रुतेति सार्द्धेन । शङ्कते अथेति[१२]। परिहरति न नामेति। उपमानप्रमेयं गोसादृश्यविशिष्टं गवयं तावद्विदन्ति मा नाम गवयसंज्ञां वेदिषुरिति ।

ननु समाख्यासम्बन्ध एवोपमानस्य प्रमेय इष्यते नैयायिकैः, न चाऽश्रुताऽतिदेशवाक्यस्य तत्प्रतिपत्तिरस्तीति कथं विशेषणाऽऽनर्थक्य मत आह न चेति[१३]। कारणमाह सादृश्येति । गोसादृश्येनोपलक्षितस्य गवयशब्दः संज्ञेत्यतिदेशवाक्यार्थः, तद्यावद् गोसदृशं न पश्यति तावत् किं चिद् गोसदृशं वस्तु यस्यानेन गवयसंज्ञोक्तेति

न चास्य प्रत्यभिज्ञानं पुनरुत्पद्यते वने ।
शक्त्योरतीन्द्रियत्वेन स्मृतिरेव हि सेष्यते ॥१४॥
शब्दाऽनुविद्धबोधे ऽपि प्रत्यक्षमुपपादितम् ।
तस्मात्सादृश्ययुक्तार्थः प्रमेयो ऽपूर्व उच्यताम् ॥१५॥

---

एवं वाक्यप्रतिपादितमेवार्थं यथावन्न विजानाति ; दृष्टे तु गोसदृशे वस्तुनि तेनैव वाक्येन स्मृतेन गवयसंज्ञां प्रतिपद्यतइति नोपमानाऽपेक्षेति । वाक्याऽवगतमप्यर्थं पुनरुपमानेन प्रत्यभिजानातीति चेत्, अत आह न चेति[१४]। कारणमाह शक्त्योरिति। यावानेव हि वनस्थस्याऽस्य गवयशब्दः संज्ञेति वाक्यादर्थो ऽवगतः तन्मात्रमेव तत् न पुनरधिकं न्यूनं वा किं चित्। यस्त्वत्र वाच्यशक्तिः वाचकशक्तिश्च सा स्मर्यते, न हि वाच्यवाचकशक्तिरतीन्द्रिया प्रत्यभिज्ञायतइति । नन्वतीन्द्रियत्वान्मा नाम प्रत्यक्षेण प्रत्यभिज्ञायताम्, उपमानाख्येन तु प्रमाणान्तरेण प्रत्यभिज्ञायते; स्यादेवं यदि शक्तौ देशकालाधिक्यं स्यान्न तु तदस्ति, अतो ऽनधिकार्थत्वात् शक्तिज्ञानं स्मृतिरेवेति ।

स्यान्मतम्, अश्रुताऽतिदेशवाक्यस्याऽशब्दज्ञानाऽनुविद्धं सादृश्यविशिष्टगवयज्ञानं प्रत्यक्षं भवति, श्रुतवाक्यस्य तदनुविद्धमप्रत्यक्षं प्रमाणान्तरं सिद्ध्यतीति तदर्थं विशेषणोपादानमित्यत आह शब्देति[१५] । विशेषणे ऽपि नास्य प्रत्यक्षता निवर्त्ततइति। तस्मादुपमानं प्रमाणमिच्छता सादृश्यविशिष्टो ऽपूर्वः प्रत्यक्षाऽनवगतो ऽर्थः प्रमेयो वक्तव्यः, न चाऽसावस्तीत्युपसंहरति तस्मादिति । किं च, कल्पनाऽपदप्रत्यक्षवादिनां सादृश्यविशिष्टगवयज्ञानं मा भूत्प्रत्यक्षं, व्यव-

व्यवसायात्मकत्वं तु प्रत्यक्षस्य यदेष्यते ।
जात्यादिवत्तदा तेन सादृश्यं किं न मीयते ॥१६॥
प्रत्यक्षाऽऽभासमेतत्तु निर्विकल्पकवादिनाम् ।
प्रमेयवस्त्वभावाच्च नाऽभिप्रेता प्रमाणता ॥१७॥
सादृश्यस्यापि वस्तुत्वं न शक्यमपबाधितुम् ।
भूयोऽवयवसामान्ययोगो जात्यन्तरस्य तत् ॥१८॥

---

सायात्मकप्रत्यक्षवादिनां तु नैयायिकानां जात्यादिवत्किं न सादृश्यं प्रत्यक्षमित्याह व्यवसायेति[१६] ।

निर्विकल्पकवादिनां वा किं सिध्यति प्रमाणान्तरं, नेत्याह प्रत्यक्षेति[१७] । गवादिविकल्पवत्प्रत्यक्षाऽऽभासमिदं, न त्वस्य प्रामाण्यमिति बौद्धानामभिमतिः । अनभिमतौ कारणमाह प्रमेयेति । न हि सादृश्यं नाम किं चिद् वस्तुधर्मिव्यतिरिक्तमव्यतिरिक्तं वा सम्भवति, व्यतिरेके पृथगुपलब्धिप्रसङ्गादव्यतिरिके तन्मात्रापातात् । किं च, पुरःस्थितवस्तुगतं सादृश्यमनवगतम् अगृहीतप्रतियोग्यपि जातिवद् गृह्णीयात्; प्रतियोग्यपेक्षं सादृश्यमिति चेत्, किमुत्पत्तौ किं वा ज्ञप्तौ ; द्वेधा ऽपि न सम्भवति, मृते ऽपि देवदत्ते तत्सादृश्यं यज्ञदत्तस्य निष्पद्यते ऽवगम्यते च, अतो वासनानिर्मितमिदं सादृश्यं न वस्तुरूपमिति तज्ज्ञानं प्रत्यक्षाभासमिति । यद्यनया युक्त्या तैराभासत्वमभिप्रेयेत तथैव तर्हि तद्वता वा कथं त्वस्य प्रत्यक्षत्वमुच्यते, ऽत आह सादृश्यस्येति[१८] । यद्यप्येवं ते न मन्यन्ते तथापि न सादृश्यस्याऽवस्तुत्वं सर्वेषां, सर्वदा त्वबाधिता प्रत्यक्षबुद्धिर्जातिवत्सर्वविकल्पनिराकरणेन सादृश्यमुपस्थापयतीति ।

सदृशाऽवयवत्वं तु यत्र पद्मदलाऽक्षिवत् ।
तत्स्वाऽवयवसामान्यभूम्ना तेषा भविष्यति ॥१९॥
एवं जातिगुणद्रव्यक्रियाशक्तिस्वधर्मतः ।
एकैकद्वित्रिसामस्त्यभेदादेतस्य चित्रता ॥२०॥

---

यत्त्वगृहीते ऽपि प्रतियोगिनि तद्ग्रहणप्रसङ्ग इत्युक्तं, तत्परिहाराय सादृश्यस्वरूपं कथयति भूय इति । जात्यन्तरयोगिभिरवयवसामान्यैर्यो जात्यन्तरस्य योगः तत्सादृश्यम् । न चाऽत्र स्वरूपमात्रं योगः, किं तु जात्यन्तरसम्बन्धाऽनुरक्तरूपेण यस्तेषां जात्यन्तरेण योगस्तत्सादृश्यम् । न चाऽगृहीते गवि सम्बन्धिता सामान्यानां ग्रहीतुं शक्येति युक्तमगृहीतगोः सादृश्याऽग्रहणम् । अवयवग्रहणं सम्बन्ध्युपलक्षणार्थम्, जातिग्रहणमपि वस्त्वन्तरोपलक्षणम् । एतदुक्तं भवति, वस्त्वन्तरस्य स्वाऽवयवेषु गुणेषु कर्मसु वा समवेतैर्यैः सामान्यैर्येन प्रकारेण योगः तेनैव प्रकारेण वस्त्वन्तरस्य योगः सादृश्यं, न त्ववस्तु नाऽपि तत्त्वान्तरं प्रमाणाभावात्, सर्वत्र सादृश्यबुद्धेरीदृशसामान्ययोगाऽन्वयव्यतिरेकात् । किं च, सामान्याऽल्पभूयस्त्ववशेन सादृश्यस्याऽल्पभूयस्त्वदर्शनात्तदेव सादृश्यं नान्यत् । यत्तु उत्पत्तौ ज्ञप्तौ वा प्रतियोग्यपेक्षा न सम्भवतीत्युक्तं, नोभयत्रापि प्रतियोगी सत्तयोपकरोति, स्वसम्बन्धे सामान्ययोगितया तु स्मर्यमाणः प्रतियोगी सादृश्याऽवगतावुपयुज्यते । यदपि गुणयोः सादृश्यं, यथा केतकीगन्धस्य सर्पगन्धस्य च, तत्राप्यवयविगुणानामवयवगुणसामान्ययोगः सादृश्यं, कर्मणामपि स्वसम्बन्धिद्रव्यदेवतासामान्ययोग इति । यत्र तर्ह्यवयवयोः सादृश्यं यथा पद्मदलस्याऽक्ष्णश्च, तत्र कथमत आह सदृशेति[१९] । तयोरपि स्वाऽवयवसामान्ययोगः सादृश्यमिति ।

न धर्मा एव सादृश्यं भूयस्ता वा तदाश्रया ।
भूयस्त्ववद्धि जात्यादि सदृशत्वेन दृश्यते ॥२१॥
यमयोः कथमेतच्चेद्दृष्टत्वात्किमिहोच्यते ।
क चिद्धि भूयसामेतत्क चिदल्पीयसामपि ॥२२॥

---

एवं जात्यादिसामान्यैर्व्यस्तैः समस्तैर्वा विचित्रं सादृश्यमित्याह एवमिति[२०] । जातिर्जन्म, तत्सामान्यादग्निब्राह्मणयोः सादृश्यम्, अग्निर्वै ब्राह्मण इति द्वयोरपि प्रजापतिमुखाज्जननं प्रजापतिर्मुखतस्त्रिवृतं छन्दसां निरमिमीत अग्निं देवानां ब्राह्मणं मनुष्याणामिति श्रुतेः। गुणसामान्यं तु चित्रे दर्शयितव्यम् । द्रव्यसामान्यं समानाऽलङ्कारधारिणोर्गवादिधनवतोश्च, क्रियासामान्यं तु निपत्यादानसामान्याद्यागस्य श्येनेन सादृश्यं, शक्तितः सिंहदेवदत्तयोः,स्वधर्मतः पञ्चावत्तनराशंसद्वितीयप्रयाजादित्वादेरिति ।

ननु धर्माख्यान्यवयवसामान्यानि तद्भूयस्त्वं वा सादृश्यमित्येतावद्वक्तव्यं, किं योगग्रहणेनाऽत आह न धर्मा इति[२१]। कथमित्याह भूयस्त्ववदिति । सामान्यानि ह्यवयवसमवेतानि, भूयस्ता तु सामान्यसमवेता, अतस्तद्भूयस्त्वं सादृश्यस्याऽवयवः सामान्यानि बुद्ध्या गृह्येरन्, गोजातीयाऽवयवसामान्ययुक्ता तु गवयजातिः सादृश्ययुक्ता गृह्यतइति योग एव सादृश्यमिति । चोदयति यमयोरिति[२२]। न हि तयोरवयवसामान्ययोगो ऽस्तीति । परिहरति दृष्टत्वादिति । सत्यं दृष्टं, न तत्सामान्यनिबन्धनं सम्भवति, यमावतिक्रम्यापि तत्सादृश्यप्रसङ्गात्, सामान्यानां नित्यत्वेनाऽन्यत्रापि सम्भवात्, विना ऽपि तु सामान्येन सादृश्याऽवगमात् अवस्तुरूपमेतत्; अत आह क चिदिति । कथमल्पीयसां सादृश्यं सामान्यनिबन्धनं भविष्यतीत्यत

नैतावता विशेषेण वस्तुत्वं तस्य हीयते ।
सामान्यान्यपि चैतानि नाशीन्याश्रयनाशतः ॥२३॥
अनन्ताऽऽश्रययोगाच्च न नाशो ऽन्यत्र विद्यते ।
तेन सर्वं न सामान्यं नित्यत्वेन प्रकल्प्यते ॥२४॥
सामान्यानां न वा नाशः क चिदभ्युपगम्यते ।
सर्वस्य ह्याश्रयः कश्चिदस्ति देशान्तरादिषु ॥२५॥
तेषां भूयस्तया चेदं सादृश्यमतिरिच्यते ।
तानि व्यस्तानि सन्त्येवं प्रत्यक्षे ऽपि क चित्क चित् ॥२६॥
सदृशाऽवयवत्वं तु यत्र नाम प्रतीयते ।
तदप्यवयवानां स्यात्समानाऽवयवान्तरैः ॥२७॥

---

आह सामान्यानीति[२३]। ततश्च तन्मात्राऽवयवयोगीनि सामान्यानि नाऽन्यत्र सादृश्यमुपकल्पयन्तीति ।

ननु न क चिदपि सामान्यानां नाशित्वं दृष्टम्, अत आह अनन्तेति[२४]। नन्वेवं नित्यं सामान्यमिति सिद्धान्तहानिः स्यादित्यत आह तेनेति । नायं सिद्धान्तः सार्वत्रिक इति । इदं चाऽतिशयेनोक्तं, परमार्थतस्तु नास्त्येव सामान्यविनाश इत्याह सामान्यानामिति[२५]। कथमित्यत आह सर्वस्येति । कथं तर्हि तेषां सादृश्यबुद्धिर्न भवत्यत आह तेषामिति[२६]। भूयसां समुदितानां योगो यमयोरिति कृत्वा सादृश्यमात्रं वस्त्वन्तरेभ्यो यमयोरधिकं, सामान्यानि तु प्रत्येकमन्यत्रापि सन्त्येवेति। पूर्वमवयवानां स्वाऽवयवसामान्यं सादृश्यमुक्तं, तदवयवानां तर्हि कथमत आह सदृशेति[२७]। एवमा

एवं तावद्यतो नास्ति पराऽभेदप्रकल्पना ।
ततः परं तु सामान्यं भवेत्सादृश्यवर्जितम् ॥२८॥
प्रधानानां तु सामान्यं यत्रैकं संप्रतीयते ।
स एवेति भवेत्तत्र तद्भेदे सदृशत्वधीः ॥२९॥
चित्रादौ यत्र सादृश्यं सामान्यं तत्र किं भवेत् ।
तत्रापि पृथिवीवर्णविशेषादिसमानता ॥३०॥
रूपगन्धरसानां च कस्य चित्तुल्यता क्व चित् ।
नाऽवश्यं सर्वसामान्यात्सादृश्यमुपजायते ॥३१॥

---

परमाणुभ्यो दर्शयितव्यमित्याह एवमिति[२८] । परमाणुषु सादृश्यवर्जितं सामान्यमेव केवलमित्याह ततः परमिति ।

यदा च संबन्धिसामान्ययोगः सादृश्यं, तदा लक्षणं दूषयन्तः केचिदाहुः, न सादृश्यं सामान्यं, किं तर्हि तदेव तत्, गोत्वादेरेकत्वादिति; तदस्मदीयलक्षणाऽपरिज्ञानादेवेत्याह प्रधानानामिति[२९]। न हि सामान्यं सादृश्यमस्माभिरुक्तं, नापि सामान्ययोगमात्रं, किं तु संबन्धिसामान्ययोगः, तेन यस्य येन सादृश्यं तयोः प्रधानसामान्ययोर्यदेकं सामान्यं न तेन तद्योगेन वा तयोः सादृश्यं, तत्तु स एवेति बुद्धेर्निबन्धनं तद्भेदे प्रधानात्सामान्याद्भिन्नैः संबन्धिसामान्यैर्योगात्सादृश्यबुद्धिरिति । चोदयति चित्रादाविति[३०] । न हि मनुष्याऽवयवगतानि हस्तत्वादीनि चित्राऽवयवेषु सन्तीति। परिहरति तत्रापीति । तत्रापि हि संस्थानपरिमाणवर्णसामान्यानि सन्तीत्येवेति । ननु गन्धरसादीनां वैलक्षण्यात् कथं सादृश्यमत आह रूपेति[३१] ।

पृथिव्यादिषु चैतेषां सतामेव स्वभावतः ।
परिणामादिभि*र्व्यक्तिर्यथादृष्टव्यवधार्यते ॥३२॥
न हि शक्त्यात्मना किं चिदसज्जन्म प्रपद्यते ।
धर्माणां न च नानात्वमस्ति चाऽवान्तरास्थितिः॥३३॥

---

कतिभिश्चिदेव सामान्यैः सादृश्यं भवति नावयवैर्नापि रूपादिभिरेवेति। रूपगन्धादयो ऽपि वा सन्त्येवेत्याह पृथिव्यादिष्विति[३२]। सर्वे हि रूपरसगन्धादयः पृथिव्यादिषु स्वभावत एव सर्वदा विद्यमाना अपि परिणामादेव चित्रकाराक्रियया वा के चित् क चिदभिव्यज्यन्ते, अतः चित्रगन्धादीनि विद्यमानान्येवाऽनभिव्यक्तत्वान्नोपलभ्यन्ते, रूपसंस्थानादिकं त्वभिव्यक्तत्वादुपलभ्यते, यथादर्शनं हि तदभिव्यक्तिः कस्य चिदङ्गीक्रियतइति। विद्यमानत्वे कारणमाह न हीति[३३]। यद्यत् सूक्ष्मरूपेण न विद्यते न तदुत्पत्तुमर्हति शशविषाणवत्, अतः सर्वकार्याणि सूक्ष्मात्मना कारणेषु सन्त्येवेति। तादिदं सत्कार्यवादिनां मतं,न स्वमतम्। न हि दृश्याऽदर्शननिरस्तः कारणावस्थायां कार्यसद्भावः शक्यो ऽभ्युपगन्तुम्। अतश्चाऽसज्जन्म नाऽवश्यमभिव्यक्तावङ्गीकर्त्तव्यं, तत्सत्त्वे कारकव्यापारानर्थक्यादित्यास्तां तावत्।

यत्तु सादृश्यं भिन्नमभिन्नं वेति विकल्पितं, तत्राह धर्माणामिति। नात्यन्तनानात्वं धर्माणां क चिदपि धर्मिणो ऽस्तीति। ननवभेदे तन्मात्रं स्यादत आह अस्तीति। अभेदो ऽपि नात्यन्तिकः किं त्ववान्तरस्थितिर्भिन्नाभिन्नत्वमित्यर्थः। तदेवं सादृश्यस्य वस्तुत्वे सति चक्षुःसंनिकृष्टस्यैकस्मिन्धर्मिणि द्वयोर्वा युगपदुपलभ्यमानयोः

---

* परिमाणादिति १ पु. पा.।

वस्तुत्वे सति चास्यैवं* सम्बन्धस्य च चक्षुषा ।
द्वयोरेकत्र वा दृष्टेः प्रत्यक्षत्वा†न्न वार्यते ॥३४॥
सामान्यवच्च सादृश्यमेकैकत्र समाप्यते ।
प्रतियोगिन्यदृष्टे ऽपि तस्मात्तदुपपद्यते‡ ॥३५॥
तत्र यद्यपि गां स्मृत्वा तज्ज्ञानमुपजायते ।
सन्निधेर्गवयस्थत्वाद्भवेदिन्द्रियगोचरः ॥३६॥
तस्माद्यत्स्मर्यते तत्स्यात्सादृश्येन विशेषितम् ।
प्रमेयमुपमानस्य सादृश्यं वा तदन्वितम् ॥३७॥

---

समवेतस्य प्रत्यक्षत्वोपपत्तेः न किंचिदुपमानस्य सन्निकृष्टे धर्मिणि विषये प्रमेयमस्तीत्याह वस्तुत्वे इति[३४]। युक्तं तावद् द्वयोः प्रत्ययोः प्रत्यक्षमेकैकत्र, कथं, न हि प्रतियोग्यपेक्षस्य तदग्रहे ग्रहणं संभवति, अत आह सामान्यवदिति[३५] । स्यादेतत्, यदि द्वयोर्व्यासक्तं तत्स्यान्न तु प्रत्येकं जातिवद्वर्त्तते, अतो गवये ऽपि कृत्स्नस्य गोसादृश्यस्य समवायादगृह्यमाणे ऽपि गवि स्मर्यमाणे ऽपि युक्तं प्रत्यक्षमिति ।

ननु गवयदर्शनोत्तरकालं गां स्मृत्वा पश्चाद् दृश्यमानं सादृश्यं स्मरणान्तरितेन्द्रियव्यापारं कथं प्रत्यक्षम्, अत आह तत्रेति[३६] । पश्चादपि नेन्द्रियव्यापारोपरतिः, अतो गवयस्थत्वेनेन्द्रियसांनिहितं सादृश्यं तद्गोचरतां नातिक्रामतीति । एवं नैयायिकमतं दूषयित्वा भाष्योक्तमेव लक्षणं पूर्वोक्षिप्तं समर्थयते तस्मादिति[३७] । यस्मादेव

---

* चाप्येवमिति २ पु. पा.

† प्रत्यक्षत्वमिति २ पु. पा. ।

‡ तदुपलभ्यते इति २ पु. पा. ।

प्रत्यक्षेणाऽवबुद्धे ऽपि सादृश्ये गवि च स्मृते ।
विशिष्टस्याऽन्यतो ऽसिद्धेरुपमानप्रमाणता* ॥३८॥
प्रत्यक्षे ऽपि यथा देशे स्मर्यमाणे च पावके ।
विशिष्टविषयत्वेन नाऽनुमानाऽप्रमाणता ॥३९॥

---

प्रत्यक्षे गवये न किंचिदुपमानस्य प्रमेयमस्ति, तस्मात्स्मर्यमाणैव गौर्गवयसादृश्यविशिष्टा तद्विशिष्टं वा सादृश्यमुपमानस्य प्रमेयमिति । ननु गवये सादृश्यं प्रत्यक्षं गृहीतं गौः स्मर्यते किमन्यदुपमेयमत आह प्रत्यक्षेणेति[३८] । तत्रैव दृष्टान्तमाह प्रत्यक्षे इति[३९] ।

नन्वग्निसामान्यमेवाऽनुमीयते न विशेषः, तेन युक्तमनुमानस्य विशिष्टविषयत्वम्, इह तु प्रत्यक्षगृहीताद्गवयसादृश्यादन्यदेव गोगतं सादृश्यं तत्स्वरूपमपि प्रत्यक्षाऽगृहीतमुपमानप्रमेयं भवत्येव, अतः किमुच्यते प्रत्यक्षेण गृहीते ऽपीति; सादृश्यमात्राभिप्रायमिदं न विशेष्याऽभिप्रायं, विशेष्यस्य तु स्वरूपं तद्विशिष्टत्वं च गोरुपमेयमेव भवति, अस्य स्मर्यमाणस्यैव सादृश्यविशिष्टत्वमुपमेयमिति वदता सादृश्यविशिष्टगोविषयज्ञानमुपमानमेव, आदित्येपि गतिस्मरणमित्यत्राऽनुमानमिव गोरूपांशे स्मरणत्वात्स्मरणशब्देन भाष्यकारेणोक्तमिति व्याख्यातम् । तदयं भाष्यार्थः । यत्सादृश्यं दृश्यमानमसंनिकृष्टे ऽर्थे बुद्धिमुत्पादयति तदुपमानं प्रमेयबुद्धिजनकमेव सादृश्यमिन्द्रियप्रत्यक्षमुपमानं यथा गवयदर्शनमिति सादृश्यविशिष्टगवयदर्शनं गोस्मरणस्य जनकमिति । यद्वा सादृश्यमसंनिकृष्टे ऽर्थे यां बुद्धिमुत्पादयति सोपमानं यथा गवयदर्शनं यस्य गोस्मरणस्य जनकं तदिति । केचित्तु गो-

---

* अन्यतो लोके प्रसिद्धे ऽनुपमानतेति १ पु. पा. ।

यत्र त्वसद्वशादेव कल्पयित्वोपजायते ।
सादृश्यप्रत्ययस्तत्र तदाभासत्व*कल्पना ॥४०॥
बाधकप्रत्ययाच्चैषा सादृश्याभासता मता ।
यथा पलालकूटस्य सादृश्यं कुञ्जरादिना ॥४१॥
समीपस्थोऽपि जानाति सादृश्यं नेति तत्र हि ।
न बाध्यते समीपादौ यत्तु सादृश्यमेव तत् ॥४२॥
न चैतस्याऽनुमानत्वं पक्षधर्माद्यसम्भवात् ।
प्राक्प्रमेयस्य सादृश्यं न धर्मत्वेन गृह्यते ॥४३॥

---

स्मरणस्येति पुरुषपरं व्याचक्षते, तत्र नन्द्यादिषु स्मरतेः पाठो मृगयितव्यः । केचित्तु बहुव्रीहिमिच्छन्ति, तदपि वैयधिकरण्यादयुक्तम्, बहुव्रीहिः समानाधिकरणानामिति स्मृतेः । अथ कर्मणि स्मरणशब्दं व्युत्पाद्य सामानाधिकरण्यमुच्यते, गोर्विशेषणत्वात्स्मरणस्य पूर्वनिपातः स्यादनुपात्तान्यपदार्थकत्वं च बहुव्रीहेरनिच्छतां सुतरामयुक्तं बहुव्रीहित्वाङ्गीकरणत्वमिति ।

किं पुनरुपमानाभासं यत्संकरपरिहारार्थे लक्षणं, तद्दर्शयति यत्रेति[४०] । किं पुनस्तस्याऽऽभासत्वे प्रमाणम्, अत आह बाधकेति[४१] । उदाहरणमाह यथेति । किमस्ति तत्र बाधकं, सत्य,मित्याह समीपेति[४२] । यत्तु समीपादावपि न बाध्यते तत्सम्यक् सादृश्यमिति तदुपजनितमुपमानं प्रमाणमेव नाभासमित्याह न बाध्यतइति ।

ये तु शाक्याः प्रमाणद्वयवादिनः सांख्या वा प्रमाणत्रयवादिनो

---

* तद्भावासत्त्वेति पाठान्तरम् ।

गवये गृह्यमाणं च न गवामनुमापकम् ।
प्रतिज्ञार्थैकदेशत्वाद्गोगतस्य न लिङ्गता ॥४४॥
गवयश्चाप्यसम्बन्धान्न गोर्लिङ्गत्वमृच्छति ।
सादृश्यं न च सर्वेण पूर्वं दृष्टं तदन्वयि ॥४५॥
एकस्मिन्नपि दृष्टे ऽर्थे द्वितीयं पश्यतो वने ।
सादृश्येन सहैवास्मिंस्तदैवोत्पद्यते मतिः ॥४६॥

---

ऽस्यानुमानाऽन्तर्भावं मन्यन्ते, तान्प्रत्याह न चेति[४३]। असम्भवमेव दर्शयति प्रागिति । प्रमेयो गौः तद्गतं तावत्सादृश्यं न लिङ्गं तस्य प्रागुपमानात्तद्धर्मत्वेनाऽग्रहणादिति। गवयगतमपि सादृश्यं गवि प्रमेये न पक्षधर्म इत्याह गवये इति[४४] । गोगतस्य च प्रतिज्ञार्थैकदेशत्वादपि न लिङ्गता, तदेव हि गोगतं प्रमेयमित्याह प्रतिज्ञेति । सादृश्यविशिष्टो गवयो ऽपि पक्षधर्मत्वाऽभावादेव न लिङ्गमित्याह गवये इति[४५]। ननु तत्सम्बन्धितामात्रमेव तद्धर्मत्वं न संयोगसमवायावेवास्ति गवयस्य गोसम्बन्धः तस्यासौ सदृशः, तत्र कथमपक्षधर्मत्वमत आह सादृश्यमिति ।

भवतु कथं चित्पक्षधर्मता, न त्वन्वयो ऽस्ति, न हि गवयगतं गोसादृश्यं गोगतेन गवयसादृश्येनाऽन्वितं दृष्टम् । इदानीमेव गवयसादृश्यं गृह्यते। ननु युगपद्गवयं गां च पश्यतो ऽन्यद्वा ऽर्थद्वयं परस्पर सदृशं येन यत्सदृशं तदपि तेन सदृशमिति शक्यमेवाऽन्वयग्रहणं कर्तुम्, अत उक्तं सर्वेणेति । सत्यं दृष्टं, न तु सर्वेण गवयं दृष्ट्वा तत्सादृश्यं गृह्णतैवमन्वयो गृहीतो भवतीति । अस्ति चाऽदृष्टसदृशद्वयस्याप्येकमेव गां दृष्ट्वैव वने द्वितीयं गवयं पश्यतस्तदैव सादृश्यविशिष्टे प्रत्यय इत्याह एकस्मिन्निति[४६] । शङ्कते शृङ्गित्वादेरि-

शृङ्गित्वादेरथोच्येत सम्बन्धाल्लिङ्गता गवि ।
न तेषां गवयज्ञानव्यापारं प्रत्युपक्षयात् ॥४७॥
यदि तेभ्यः प्रतीतिः स्यान्निःसादृश्यैव सा भवेत् ।
न गौः शृङ्गादिसदृशी सदृशी गवयेन तु ॥४८॥
सदृशप्रत्ययं दृष्ट्वा शृङ्गादिप्रत्ययात्परम् ।
गवयप्रत्ययादेव गोज्ञानमुपजायते ॥४९॥
सदृशाऽवयवत्वे तु तेषामेवोपमा भवेत् ।
न च शृङ्गादयो यत्र तत्र गौरनुमीयते ॥५०॥
इत्थं चाऽनुमिमानस्य भ्रान्तज्ञानं प्रसज्यते ।
नगरस्थं तु गोज्ञानं स्मरणान्नाऽतिवर्तते ॥५१॥

---

ति[४७] । गृहीतो हि शृङ्गित्वादीनां गवयाऽन्वय इति । निराकरोति नेति । कारणमाह तेषामिति । शृङ्गित्वादिभिर्गवये गोसदृशतयाऽवगते पश्चात्तत्सदृशी गौः प्रतीयतइति । यदि तु तैरेव साक्षात्प्रतीयेत ततः सादृश्यरहितं गोमात्रं प्रतीयेतेत्याह यदीति[४८] । कारणमाह न गौरिति । तेनास्त्येव शृङ्गित्वादिज्ञानस्य गवयसदृशगोज्ञानस्य च गोसदृशो गवय इति ज्ञानेन व्यवधानमित्याह सदृशेति[४९] । ननु गोऽवयवाः शृङ्गादयोऽपि मिथः सदृशा इति कथं निःसादृश्या प्रतीतिरत आह सदृशेति[५०] । शृङ्गादीनामेवोपमा स्यात्, गौस्तु निःसादृश्यैव गम्यतइति ।

भवतु निःसादृश्यं, गोमात्रम् अनुमेयमिति चेत्, तत्राह न चेति । गोस्वरूपमनुमीयमानं यत्रेदानीं शृङ्गादयो दृश्यन्ते गवये तत्र वाऽनुमीयते नगरे वा । तत्र तावन्न शक्यं दृश्यादर्शनविरोधादिति अनु-

भिन्नाऽनुमानादुपमेयमुक्ता
सौर्यादिवाक्यैरसहापि दृष्टम् ।
सादृश्यतो ऽग्न्यादियुतं कथं नु
प्रत्याययेदित्युपयुज्यते नः ॥५२॥
'प्रतिनिधिरपि चैवं व्रीहिसादृश्ययोगा-
द्भवति तदपचारे यत्र नीवारजातौ ।
तदपि फलमभीष्टं लक्षणस्योपमायाः'
'प्रकृतिरपि च गौणैर्बाध्यते यत्र चाऽन्यैः ॥५३॥

---

माने वा भ्रान्तिः स्यादित्याह इत्थमिति[५१] । नापि नगरइत्याह नगरस्थमिति । सादृश्यविशिष्टो हि गौः प्रतियोग्यग्रहणान्न गृहीतः, गोस्वरूपं तु गृहीतमेव, तेन सादृश्यविशिष्टज्ञानमेव प्रमाणं, तस्य च सिद्धं प्रमाणान्तरत्वमिति ।

कः पुनरस्य प्रमाणान्तरस्य स्वतन्त्रोपयोगः, तद्दर्शयति, भिन्नेति[५२] । न हि सौर्यतद्वाक्ययोराग्नेयतद्वाक्याभ्यामन्वयो गृहीतः, येनाऽनुमानं स्यात्, निर्वापो हि लोकवेदसाधारणः, तद्धितनिर्देशादयो ऽपि, प्रमाणान्तरेण तु उपमानेनाऽऽग्नेयवाक्यसदृशेन सौर्यवाक्येनोपमितम् अग्न्यादियुतमाग्नेयवाक्यं स्वार्थमुपस्थापयति, तस्य च त्र्यंशस्य साध्यसाधनांशाऽनपेक्षित्वाद्भावना इत्यन्तिमांशो ऽपेक्षावशात्सौर्यभावनया गृह्यतइति एवमस्योपयोग इति ।

प्रयोजनान्तरमाह प्रतिनिधिरिति[५३] पादत्रयेण । एवं व्रीह्यपचारे सदृशतया नीवारेषु अवगतेषु तत्सदृशत्वेन च व्रीहिष्वयमिति व्रीह्यवयवसामान्याऽवगमात्तल्लाभाय तेषां प्रतिनिधिः सिध्यतीति ।

यदि सुसदृशमन्यल्लभ्यते तत्र मिथ्या
भवति विसदृशत्वान्मन्दसादृश्ययुक्तम्' ।
मतिरपि च तथैव द्रागिवोत्पद्यते ऽस्मि-
न्नितरविषयबोधे ऽसत्यपीत्थं च बाधः ॥५४॥

इत्युपमानम् ॥

---

अथ अर्थापत्तिः ।

प्रमाणषट्कविज्ञातो यत्राऽर्थो नाऽन्यथा भवेत् ।
अदृष्टं कल्पयेदन्यं सा ऽर्थापत्तिरुदाहृता ॥१॥

---

प्रयोजनान्तरमाह प्रतिकृतिरिति पादत्रयेण । उपमानेन हि काचित्प्रतिकृतिः सादृश्यं गौणैः सामान्यैरीषत्सदृशं बोध्यते, अल्पैरित्यर्थः, किं चिद्वाऽन्यैर्भूयोभिः सुसदृशं, ततः श्रुतानामवयवानां भूयसां लाभाय सदृशस्योपादानं सिद्ध्यति । ईषत्सदृशो ऽपि तु तदपेक्षया विसदृशत्वात् उपजाता ऽपि बुद्धिर्मिथ्या भवति, कार्याऽनुपयोगादिति । कारणान्तरमपि सुसदृशोपादाने दर्शयति मतिरिति[५४] । न केवलं बह्ववयवलाभः, किं तु मतिरपि सदृशे शीघ्रमुत्पद्यते,* तावतैव च नैराकाङ्क्ष्ये जाते पश्चादुपजातो ऽपि मन्दसदृशबोधो ऽनुष्ठानाऽनौपयिकत्वाद्बाध्यतइति ॥

इति श्रीपार्थसारथिमिश्रविरचिते न्यायरत्नाकरे उपमानपरिच्छेदः ॥

---

अथाऽर्थापत्तिपरिच्छेदः ।

"अर्थापत्तिरपि दृष्टः श्रुतो वा ऽर्थो ऽन्यथा नोपपद्यतइत्यर्थकल्पने"†ति भाष्यं, तस्यार्थमाह प्रमाणषट्केति[१] । दृष्टग्रहणं चक्षुर्दृष्टे

---

* सुसदृशे शीघ्रदृष्टे श्रुते वा समुत्पद्यते इति २ पु. पा. ।

† शा. भा. पृ. १० प. १७ ।

दृष्टः पञ्चभिरप्यस्माद्भेदेनोक्ता श्रुतोद्भवा ।
प्रमाणग्राहिणीत्वेन यस्मात्पूर्वविलक्षणा ॥२॥
तत्र प्रत्यक्षतो ज्ञानाद्दाहाद्दहनशक्तता ।
वन्हेरनुमिता सूर्ये यानात्तच्छक्तियोग्यता ॥३॥
श्रुताऽर्थापत्तिरत्रैव परस्तादभिधास्यते ।
गवयोपमिता या गौस्तज्ज्ञानग्राह्यता मता ॥४॥
अभिधानप्रसिद्ध्यर्थमर्थापत्त्या ऽवबोधितात् ।
शब्दे बोधकसामर्थ्यात्तन्नित्यत्वप्रकल्पनम् ॥५॥

---

प्रत्यक्षाऽवगते प्रमितमात्रे वा वर्त्तते, प्रथमद्वितीयकल्पयोरनुमानादि-पूर्विका नोक्ता स्यात्, तृतीये तु श्रुतग्रहणमतिरिच्यते, ऽत आह दृष्टइति[२] । कारणमाह अस्मादिति । दृष्टाद्भेदेन श्रुतोपादानात् प्रमितमात्रवचनो ऽपि दृष्टशब्दो गोबलीवर्दन्यायेन श्रुताऽतिरिक्तपञ्चक-परो भवतीति । किं पुनः श्रुतस्य पृथगुपादाने प्रयोजनमत आह प्रमाणेति । श्रुताऽर्थापत्तेः प्रमाणग्राहिणीत्वभेदेनैव दृष्टार्थापत्तितो वैलक्षण्यं दर्शयितुं पृथग्ग्रहणमिति ।

प्रत्यक्षपूर्विकामुदाहरति तत्रेति[३] । अनुमानपूर्विकामुदाहरति अनुमितादिति । शब्दपूर्विकामुदाहरति श्रुतेति[४] । उपमानपूर्वि-कामुदाहरति गवयेति । अर्थापत्तिपूर्विकामुदाहरति अभिधा-नेति[५] । अभिधानाऽनुपपत्तिप्रभवया ऽर्थापत्त्या शब्दस्य वाचकशक्तिं कल्पयित्वा पुनस्तदनुपपत्त्या नित्यत्वकल्पनेति । एतदेव विवृणोति

'अभिधा नाऽन्यथा सिध्येदिति वाचकशक्तताम् ।
अर्थापत्त्या ऽवगम्यैवं तदनन्यगतेः पुनः ॥६॥
अर्थापत्त्यन्तरेणैव शब्दनित्यत्वनिश्चयः' ।
दर्शनस्य परार्थत्वादित्यस्मिन्नभिधास्यते ॥७॥
'प्रमाणाऽभावनिर्णीतचैत्राऽभावविशेषितात् ।
गेहाच्चैत्रबहिर्भावसिद्धिर्या त्विह दर्शिता ॥८॥
तामभावोत्थितामन्यामर्थापत्तिमुदाहरेत्' ।
पक्षदोषेषु चाऽन्यासामुदाहरणविस्तरः ॥९॥
अभावाऽवगताच्चैत्राद् बहिर्भावस्य सूचनम् ।
पक्षधर्माद्यनङ्गत्वाल्लिङ्गेनैवाप्यनुमानतः ॥१०॥

---

अभिधेति[६] सार्द्धेन । एतच्च शब्दाधिकरणे वक्ष्यतइत्याह दर्शनस्येति[७] । अभावपूर्विकां तु भाष्यकार एवोदाहृतवान् । जीवतो देवदत्तस्य गृहाऽभावदर्शनेन बहिर्भावस्याऽदृष्टस्य कल्पनेत्याह प्रमाणेति सार्द्धेन । अर्थापत्त्यन्तराणामप्युदाहरणप्रपञ्चः पक्षदोषाऽवसरे श्रोत्रादिनास्तितायामित्यादिना बृहट्टीकायां दर्शित इत्याह पक्षदोषेष्विति[९] ।

ननु भाष्यकारेणाऽभावपूर्विकैवोदाहृता, तत्कथमुदाहरणप्रपञ्चः, अत आह अभावेति[१०] । सर्वसूचनार्थमिदं गृहाऽभावेन बहिर्भावकल्पनं, न तन्मात्रपरमिति । नन्वनुमानमेवेदं जीवन् देवदत्तो बहिरस्ति विद्यमानत्वे सति गृहे ऽभावात् मद्वदित्यत आह पक्षेति ।

बहिर्देशाविशिष्टे ऽर्थे देशे वा तद्विशेषिते ।
प्रमेये यो गृहाऽभावः पक्षधर्मस्त्वसौ कथम् ॥११॥
तदभावविशिष्टं तु गृहं धर्मो न कस्य चित् ।
गृहाऽभावविशिष्टस्तु तदा ऽसौ न प्रतीयते ॥१२॥
गम्यते तु गृहं तत्र न च चैत्रः प्रतीयते ।
न चात्राऽदर्शनं हेतुर्यथा ऽभावे ऽभिधास्यते ॥१३॥
तेन वेश्मन्यदृष्टत्वादिति हेतुर्न कल्प्यते* ।
अदर्शनादभावे च प्रमेयस्याऽवधारिते ॥१४॥

---

पक्षधर्मत्वं तावन्निराकरोति बहिरिति[११] । गृहगतो ह्यभावो न देवदत्तस्य बहिर्देशस्य वा धर्मः, अभावविशिष्टं तु गृहं न कस्य चिद्धर्म इत्याह तदभावेति[१२] ।

पक्षधर्मत्वमभावस्य नास्तीत्युक्तं, तदपि न गम्यतइत्याह गृहाऽभावेति । असौ देवदत्तो बहिर्देशो वेति कथमित्याह गम्यतइति[१३] । चैत्रग्रहणमुपलक्षणं, गृहमेव गम्यते न चैत्रो बहिर्देशो वा, न चाऽनवगतस्य धर्मोऽवगतिः सम्भवतीति । यदि तु चैत्राऽदर्शनं हेतुरित्युच्यते,ऽत आह न चेति । यथा ह्यभावे ऽनुमेये लिङ्गत्वमभावस्य न सम्भवति तथा ऽत्रापि पक्षधर्मत्वाभावादेव, एतच्च ह्यभाववादे 'प्रमाणानामनुत्पत्तेर्न चाऽभावस्य धर्मते'त्यत्राभिधास्यतइति । इतश्च नाऽदर्शनस्य हेतुत्वमित्याह अदर्शनादिति[१४] । अदर्शनादभावे ऽवगते पश्चादुपजायमाना बहिर्भावमतिर्नोऽदर्शननिमित्ता भवि-

---

* हेतुर्न कस्य चिदिति २ पु. पा. ।

बहिर्भावमतिर्नासौ तेनाऽदर्शनहेतुका ।
चैत्राऽभावस्य हेतुत्वं गेहे ऽभावश्च संस्थितः ॥१५॥
पूर्वं न चाऽगृहीतस्य धर्मिणः स्यात्प्रमेयता ।
न चात्र बाह्यदेशो वा चैत्रो वा गृह्यते पुरा ॥१६॥
नदीपूरेण या वृष्टिरुपरिष्टात्प्रतीयते ।
देशे कथमदृष्टे तु पक्षधर्मत्वसंभवः ॥१७॥
'वृष्टिमत्परदेशत्वं नदीपूरवतो ऽत्र तु ।
देशस्य प्रतिपद्यन्ते' यद्वा ऽर्थापत्तिरेव सा ॥१८॥

---

तुमर्हतीति नाऽभावस्य लिङ्गत्वं, न च तस्य पक्षधर्मतेत्याह चैत्राऽभावस्येति[१५]। न चाऽनुमेयत्वमपि चैत्रस्य बहिर्देशस्य वा सम्भवतीत्याह पूर्वमिति[१६]। ततः किमित्याह न चेति ।

चोदयति नदीपूरेणेति[१७]। अत्रत्यो हि नदीपूरो नोपरिष्टाद्देशस्य धर्मः, तदनवगमाच्च तद्धर्मतया नाऽवगम्यते, प्रागप्रतीतश्चोपरिदेशो न वृष्टिमत्तया ऽनुमातुं शक्यतइति । परिहरति वृष्टिमदिति[१८] पादत्रयेण । नन्वत्रत्य एव नदीपूरो लिङ्गमुपरिवृष्टेरिति किमनेन प्रतिज्ञावचनविन्यासविशेषेण, न ह्यनेनाऽर्थस्य कश्चिद्विशेषः । यदि चैतावता निर्दोषं भवति ततो ऽत्रापि गृहस्यैव चैत्रवद्बहिर्देशत्वमनुमीयतां, तदन्यदुत्तरं वाच्यम्, अत आह यद्वेति ।

इदमपि न युक्तं, न हि साक्षात्संबन्धेनैव पक्षधर्मत्वं, येन केनापि प्रकारेण साक्षात्परंपरया वा यस्य येन सम्बन्धो नियतस्तेन तत्प्रतीतिरनुमानमेव। प्रतीयते चाऽभावस्य देवदत्तसम्बन्धो, देवदत्ताभाव इति हि स प्रतीयते, न चाऽगृहीतत्वादननुमेयत्वं, स्मृतौ विपरिवर्त्त-

जीवतश्च गृहाऽभावः पक्षधर्मोऽत्र कल्प्यते ।
तत्संवित्तिर्बहिर्भावं न चाऽबुद्धोपजायते ॥१९॥
अग्निमत्ताऽनपेक्षा तु धूमवत्ता प्रतीयते ।
न तद्ग्रहणवेलायामग्न्यधीनं हि किं चन ॥२०॥
गेहाऽभावस्तु यः शुद्धो विद्यमानत्ववर्जितः ।
स मृतेष्वपि दृष्टत्वाद्बहिर्वृत्तेर्न साधकः ॥२१॥
विद्यमानत्वसंसृष्टगृहाऽभावधिया ऽनया ।
गेहादुत्कालितश्चैत्रो विद्यते बहिरेव हि ॥२२॥

---

मानस्य बहिर्देशविशिष्टतया ऽनुमानोपपत्तेः । एवमुपरिदेशस्यापि वृष्टिसम्बन्धाऽनुमानं द्रष्टव्यम् । तस्मादनुमानमेवेदं वक्तव्यो वा हेतुरनेनाऽनुमानात् भेदः सिद्ध्यतीति ।

किमेभिर्जात्युत्तरैरत आह जीवत इति[19] । जीवनेन विद्यमानत्वेन संसृष्टो गृहाऽभावो बहिर्भावस्य लिङ्गम्, अतः स एव पक्षीकृते चैत्रे धर्मतया ग्रहीतव्यः, न चासौ बहिर्भावबोधमन्तरेण शक्यते ग्रहीतु मिति । ततः किमित्याह अग्निमत्तेति[20] । लिङ्गज्ञानजन्यं लिङ्गिविषयं ज्ञानान्तरमनुमानं, न तु लिङ्गज्ञानमेव लिङ्गिविषयं भवितुमर्हति, यथा धूमज्ञानजन्यमग्निज्ञानं, न ह्यग्निमज्ज्ञानाऽनपेक्षमेव धूमवत्ताज्ञानं जन्यते, न हि तत्र ज्ञाने ऽग्निज्ञानमपेक्ष्यते, येन धूमज्ञानेनैवाऽग्निज्ञानं स्यात्, ततश्च ज्ञाते व्याप्ये पश्चाद्व्यापकज्ञानमिति । तद्वदिहापि ज्ञात एव गृहाऽभावो बहिर्भावं गमयत्विति चेदत आह गेहाऽभाव इति[21] ।

विद्यमानत्वसंसृष्ट एव लिङ्गमस्त्विति चेदत आह विद्यमानत्वेति[22] । सत्त्वाऽसत्त्वे ह्येकस्मिन्देवदत्ते देशभेदावनन्तर्भाव्य न

गेहाऽभावत्वमात्रं तु यत्स्वतन्त्रं प्रतीयते ।
न तावता बहिर्भावश्चैत्रस्यैवाऽवधार्यते ॥२२॥
सिद्धे सद्भावविज्ञाने गेहाऽभावधिया ऽत्र तु ।
गेहादुत्कालिता सत्ता बहिरेवाऽवतिष्ठते ॥२३॥
तेनास्य निरपेक्षस्य व्यभिचारो मृतादिना ।
यस्य त्वव्यभिचारित्वं न ततो ऽन्यत्प्रतीयते ॥२४॥
तस्मात्प्रत्यक्षतो गेहे चैत्राऽभावे ह्यभावतः ।
ज्ञाते यत्सत्त्वविज्ञानं तदेवेदं बहिः स्थितम् ॥२५॥

---

शक्येते संसृज्य बोद्धुम, अतो यथैव धिया ययोः संसर्गो गम्यते तयैवाऽभावाक्रान्ताद् गृहादुत्कालितश्चैत्रो बहिरेव विद्यते, विद्यमानत्वं बहिरेवाऽवगतं भवतीत्यर्थः। न हि गृहबहिर्देशसाधारण्येनाऽवगम्यमानं सत्वं गृहगतेनाऽसत्त्वेन संसृज्यते, विरोधात्, न ह्येवं सम्भवति, गृहे नास्त्येव चैत्रः किं तु गृहे वा बहिर्वा ऽस्तीति । यदि स्वतन्त्रं चैत्राऽनवच्छिन्नं सामान्यरूपेणैव न कश्चिदिह गृहे ऽस्तीत्यभावं प्रतीयात्, न हि शक्यते ऽनन्तर्भाविते ऽपि चैत्रे गृहाऽभावो ग्रहीतुमत आह गेहेति[२३]। सत्यं शक्यते, तद्वदेव तु बहिर्भावो ऽपि सामान्येनैव गम्यते, न तु चैत्रस्यैवाऽसाधारणत्वेनेति। अतो ऽवश्यमन्यत्र चैत्रसद्भावज्ञानं सिद्धं कृत्वा गृहाऽभावः, ततश्चैकयैवैकान्तिकलिङ्गविषयया धिया गेहादुत्कालिता सत्ता बहिरेव व्यवस्थापिता भवतीति नाऽनुमेयमवशिष्यतइत्याह सिद्धइति[२४]।

उक्तमेवाऽर्थं संक्षिप्य दर्शयति तेनेति[२५]। कथं पुनस्ततो ऽन्यन्न प्रतीयते, न हि विद्यमानत्वं गृहाऽभावो वा बहिर्भावो, ऽत आह तस्मा-

पक्षधर्मात्मलाभाय बहिर्भावः प्रवेशितः ।
तद्विशिष्टो ऽनुमेयः स्यात्पक्षधर्मोऽन्वयादिभिः ॥२७॥
पक्षधर्मादिविज्ञानं बहिःसंबोधतो यदि ।
तैश्च तद्बोधतो ऽवश्यमन्योन्याश्रयता भवेत् ॥२८॥
अन्यथाऽनुपपत्तौ तु प्रमेयाऽनुप्रवेशिता ।
ताद्रूप्येणैव विज्ञानान्न दोषः प्रतिभाति नः ॥२९॥

---

दिति[२६] । यद्यप्यर्थान्तरं वहिर्भावः, तथापि तु यत्तद्विद्यमानत्वज्ञानं तदेव स्वविषयं विद्यमानत्वं बहिष्ठानवस्थाप्य गृहे ऽसत्त्वेन समुद्धेतुमशक्तं तत्संसर्गाय वहिः स्थितं भवति, वहिरेव विद्यमानत्वं स्थापयति, न तु तज्जन्यं ज्ञानान्तरमिति । तथापि कथमननुमानत्वमत आह पक्षधर्मेति[२७] । येन बहिर्भावेन विशिष्टश्चैत्रो ऽनुमातव्यः स पक्षीकृतजीवच्चैत्रधर्मतया गृहाऽभावस्याऽऽत्मलाभाय तत्प्रतीतिवेलायामेवाऽनुप्रवेशित इति । तदेवं सत्यपि यद्यनुमानत्वमिष्येत तत्स्फुटमितरेतराश्रयमित्याह पक्षधर्मादीति[२८] ।

नन्वर्थापत्तावपि तुल्यो ऽयं दोषः, तत्रापि हि गृहाऽभावमात्रं मरणेनाप्युपपन्नं न बहिर्भावं कल्पयति, विद्यमानत्वसंसृष्टस्तु कल्पयेत्, स त्वनवगतं बहिर्भावे न शक्यते ऽवगन्तुं, न चाऽनवगतः कल्पको भवति, तदवगमे च प्रमेयाऽभावः स्यादत आह अन्यथेति[२९] । अन्यथाऽनुपपत्तिरूपे प्रमाणान्तरे यो ऽयं विद्यमानत्वसंसृष्टगेहाऽभावबुद्धावेव प्रमेयस्य बहिर्भावस्याऽनुप्रवेशः स न दोषः, कस्मात्, ताद्रूप्येणैव ज्ञानात्; ईदृग्रूपमेव ह्येतत् प्रमाणं यदर्थं च यस्यासत्यर्थान्तरे मिथः प्रतिघातेनाऽसम्भवमालोच्याऽर्थान्तरकल्पनया प्रतिघातं परिहृत्य सम्भवतीत्यत एव विलक्षणसामग्रीत्वेन प्रमाणान्तरत्वमनुपपत्तिरिति चाऽवगतस्यार्थान्तरेण प्रतिघातश्चोच्यत इति ।

अविनाभाविता चात्र तदैव परिकल्प्यते ।
न प्रागवधृतेत्येवं सत्यप्येषा न कारणम् ॥३०॥
गृहाऽभावबाहिर्भावौ न च दृष्टौ नियोगतः ।
साहित्ये तु प्रमाणं च तयोरन्यन्न विद्यते ॥३१॥
अन्यथाऽनुपपत्त्यैव ह्येकेनान्यत्प्रतीयते ।
तथा न कल्प्यते तच्चेत्साहित्यं न प्रतीयते ॥३२॥
तेन सम्बन्धवेलायां सम्बन्ध्यन्यतरो ध्रुवम् ।
अर्थापत्त्या ऽवगन्तव्यः पश्चादस्त्यनुमानता ॥३३॥

---

निरस्तं पक्षधर्मत्वम्, अन्वयमिदानीं निरस्यति अविनेति[३०]। यदैव ह्यर्थापत्त्या गृहाऽभावेन बहिर्भावः कल्प्यते तदैव तयोरविनाभावो गम्यते, अतः प्रागर्थापत्तेः सन्नप्यविनाभावो ऽनवगतत्वान्नाऽनुमानस्य कारणं भवतीति ।

यस्तर्ह्यवगतसम्बन्धः तस्याऽनुमानं स्यादत आह गृहाभावेति[३१]ऽन्तेन । यो ऽपि गृहाऽभावबहिर्भावौ सह न दृष्टवान् सो ऽपि गृहाऽभावेन बहिर्भावं कल्पयत्येवेति तस्य तावत् प्रमाणान्तरत्वं सिद्धमिति । किं च साहित्ये ऽपि तयोरर्थापत्तिरेव प्रमाणं नाऽन्यदित्याह साहित्ये ऽपीति। अर्थापत्त्या चाऽन्यतरेणाऽन्यतरस्य कल्पने साहित्यमेव न सिध्यतीत्याह तथेति[३२] । तत्सिद्धं साहित्यासिद्ध्यर्थमेवाऽर्थापत्तेः प्रमाणान्तरत्वं, तद्वशेन तु सम्बन्धे गृहीते पश्चाद्भवत्वनुमानमित्याह तेनेति[३३] ।

यस्तु वदति, विना ऽप्यर्थापत्त्या गृहद्वारि स्थित्या गृहाऽभावबहिर्भावयोः साहित्यं गृह्यतइति; स वक्तव्यः, यद्यप्येवमिह सम्भवति त-

'गृहद्वारि स्थितो यस्तु बहिर्भावं प्रकल्पयेत् ।
यदैकस्मिन्नयं देशे न तदा ऽन्यत्र विद्यते ॥३४॥
तदा ऽप्यविद्यमानत्वं न सर्वत्र प्रतीयते' ।
न चैकदेशे नास्तित्वाद्व्याप्तिर्हेतोर्भविष्यति ॥३५॥
नन्वत्राऽविद्यमानत्वं गम्यते ऽनुपलब्धितः ।
सा चाऽप्रयत्नसाध्यत्वादेकस्थस्यैव सिध्यति ॥३६॥
नैतया ऽनुपलब्ध्या ऽत्र वस्त्वभावः प्रतीयते ।
तद्देशाऽगमनात्सा हि दूरस्थेष्वस्ति सत्स्वपि ॥३७॥
गत्वा गत्वा तु तान् देशान् यद्यर्थो नोपलभ्यते ।
ततो ऽन्यकारणाऽभावादसन्नित्यवगम्यते ॥३८॥

---

थापि यदेतदेकत्र विद्यमानस्य सर्वत्राऽविद्यमानत्वं तत्साहित्यग्रहणा-ऽभावान्नाऽनुमानं सिद्ध्यतीत्याह गृहेति[३४] सार्द्धेन । नन्वेकदेशस्थस्या-ऽन्यत्र तत्समीपे तावदभावो गम्यते, अतः सिध्यति सर्वत्राऽभावाऽनु-मानम्, अत आह न चेति[३५] । येन हि साहित्यं गृहीतं तदेवाऽनुमा-तुं शक्यम्, अतः कथमेकदेशगतेनाऽविद्यमानत्वेन गृहीतसाहित्यं वि-द्यमानत्वं सर्वदेशवर्त्तिनमभावमनुमापयेदिति ।

चोदयति नन्विति[३६] । मा भूदनुमानम्, अनुपलब्ध्यैव स-मीपवदन्यत्रापि सर्वत्राऽभावाऽवगमसिद्धेः किमर्थापत्त्येति । परिहरति नैतयेति[३७] ।

स्यादेवं, यद्यत्र समीपदेशे इव सकलविशेषणविशिष्टया ऽनुप-लब्ध्या ऽभावो गम्येत, न तु तदस्ति, सा हि सत्स्वपि दूरस्थेषु भावेषु तद्देशाऽगमनादेव सम्भवन्ती नाऽलमभावं गमयितुमिति । कया तर्ह्यनु-

ननु चाऽग्न्याद्यभावे ऽपि धूमादिव्यतिरेकिणाम् ।
तद्देशागमनात् स्पष्टो व्यतिरेको न सिध्यति ॥३९॥
यस्य वस्त्वन्तराऽभावः प्रमेयस्तस्य दुष्यति ।
मम त्वदृष्टमात्रेण गमकः सहचारिणः ॥४०॥
नन्वेवमितरत्रापि सम्बन्धो ऽनुपलब्धितः ।
चैत्राऽभावस्य भावेन दृष्टत्वादुपपद्यते ॥४१॥
साहित्ये मितदेशत्वात्प्रसिद्धे चाऽग्निधूमयोः ।
व्यतिरेकस्य चाऽदृष्टेर्गमकत्वं प्रकल्प्यते ॥४२॥

---

पलब्ध्या ऽभावाऽवगतिरत आह गत्वेति[३८] । तत्र ह्यभावादेवाऽनुपलब्धिः, दूरत्वादिकारणान्तराऽभावादिति ।

चोदयति नन्विति[३९] । सर्वत्रैव तावत्साध्याऽभावे हेतोर्व्यतिरेको ऽवगन्तव्यः, तद्यदि गत्यैवाऽनुपलब्धे रभावसिद्धिः नाऽनुपलब्धिमात्रात्ततः सर्वोऽनग्निदेशगमनाऽसम्भवान्न तद्व्यतिरेकः सिध्येदिति । परिहरति यस्येति[४०] । यः खलु वस्त्वन्तरेषु विपक्षेषु लिङ्गस्याऽभावाऽवधारणमनुमानाय प्रार्थयते तस्यैव दोषः, वयं तु द्वित्रिचतुरेषु अवगताग्निसाहचर्याद्धूमाद्विपक्षाऽदर्शनमात्रेण सहचारिणमग्निम अनुमिमाना न सर्वविपक्षेषु धूमाऽभावाऽवधारणं प्रार्थयामहे, नापि सर्वधूमवतामग्न्यन्वयमिति ।

चोदयति नन्विति[४१] । यद्यन्तरेणैव विपक्षाऽभावं साहचर्ये सति व्यभिचाराऽनुपलब्धिमात्रेणाऽनुमानं सिद्ध्यति, एवं सत्यत्रापि चैत्रभावेनैकदेशगतेनेतरत्राऽभावस्य सहदृष्टत्वादेकदेशे ऽपि तावद्भावाऽभावयोः साहचर्ये सिद्धे व्यभिचाराऽनुपलम्भादेव भावाऽभा-

इह साहित्यमेवेदमेकस्य सहभाविनः।
अनन्तदेशवर्त्तित्वान्न तावदुपपद्यते ॥४३॥
ननु देशान्तरं शून्यं चैत्रेणैवं प्रतीयते।
तद्देशव्यतिरिक्तत्वा*त्समीपस्थितदेशवत् ॥४४॥
विरुद्धाऽव्यभिचारित्वं तद्वदेव हि गम्यते।
समीपदेशभिन्नत्वाच्चैत्राऽधिष्ठितदेशवत् ॥४५॥

---

यद्योः सम्बन्धनियमसिद्धेरनुमानं भवतीति। परिहरति साहित्य-इति[४२]। वह्निधूमसामान्ययोः प्रतिव्यक्ति कृत्स्नसमवायित्वेन परिमितदेशयोः सम्भवति साहित्याऽवगमः, तस्मिंश्च सति व्यतिरेकाऽदर्शनात् सिध्यत्यनुमापकत्वमिति।

न त्वेवमत्र सम्भवतीत्याह इहेति[४३]। सम्बन्धग्रहणे, परस्परं हि साहित्यग्रहणे। इह च भावाऽभावौ सम्बन्धिनौ, तत्र भावः परिमितदेशकालत्वाच्छक्यते ग्रहीतुम्, अभावस्त्वनन्तदेशवर्ती न कथंचिद्ग्रहीतुं शक्यते, अतः साहित्यस्यैवाऽग्रहणात्तन्नियमो दूराऽपास्त इति।

पुनश्चोदयति नन्विति[४४]। न सर्वदेशगतेनाऽभावेन नियमं ब्रूमः, किं तु चैत्राऽधिष्ठितदेशव्यतिरिक्तस्य समीपदेशस्य तच्छून्यत्वदर्शनात् अन्येषामपि तदधिष्ठितदेशव्यतिरिक्ततया तच्छून्यत्वमनुमीयतइति। परिहरति विरुद्धेति[४५]। तद्वदिति। चैत्रयुक्तमित्यर्थः। एतदुक्तं भवति, न तावद्देशान्तराणि चैत्रशून्यानि तत्संयुक्तदेशव्यतिरिक्तदेशत्वादिति हेतुः सम्भवति सन्दिग्धत्वाद्देशान्तराण्यपि त-

---

* व्यतिरेकत्वादिति १ पु. पा.।

पुरुषस्य तु कार्त्स्न्येन यदेकत्रोपलम्भनम् ।
तस्याऽन्यथा न सिद्धिः स्यादित्यन्येष्वस्य नास्तिता ॥४६॥
तेनाऽर्थापत्तिपूर्वत्वमत्र यत्र च कारणे ।
कार्याऽदर्शनतः शक्तेरस्तित्वं संप्रतीयते ॥४७॥
कार्यस्य ननु लिङ्गत्वं न संबन्धाऽनपेक्षणात् ।
'दृष्ट्वा संबन्धितां चैषा शक्तिर्गम्येत नान्यथा ॥४८॥

---

त्संयुक्तानि न वेत्येतावदेव विचार्यते। कथं तेषां तत्संयुक्तदेशाद्व्यतिरेकसिद्धिः. यदि परमेवमुच्यते यमेवाऽधुना चैत्रो ऽधिष्ठितो ऽपवरकदेशं तद्व्यतिरिक्तत्वादिति, एवंविधश्चाऽप्रयोजको हेतुः, इतरथा हि शक्यते चैत्रयुक्तं देशान्तरं तत्समीपव्यतिरिक्तदेशत्वात् तदधिष्ठितदेशवदिति ।

अर्थापत्त्या वा कथं सर्वत्राऽभावसिद्धिरत आह पुरुषस्येति[४६] । मूर्त्तस्य पदार्थस्य कार्त्स्न्येनैकत्रावस्थाऽनुपपत्त्या ऽन्यत्र सर्वत्राऽभावः कल्प्यते, कः पुनरत्र प्रतिघातः, यत्समाधित्सया ऽन्यत्राभावः कल्प्यते । उच्यते । अनुमानेन तावदेकस्य मूर्त्तस्य युगपदनेकदेशसंयोगो न सम्भवतीत्यवगतं, स्वशरीरे तथा ऽवगमात्, स्वशरीरस्य ह्येकत्र सतस्तत्काले ऽन्यत्राऽभावो दृश्यादर्शनादेवाऽवगतः, चैत्रस्यापि तद्वदेव युगपदनेकत्राऽनवस्थानमनुमानादवगतं, प्रत्यक्षं सन्निहितदेशवर्त्तित्वं, तदिदमुभयं सम्भावयितुमन्यत्राऽभावः कल्प्यते; स हि यद्यन्यत्रापि स्यादनुमानादवगतमनेकत्र युगपदनवस्थानं बाध्यते ! यदि त्विमं देशं हित्वा व्यवतिष्ठेत ततः प्रत्यक्षाऽवगतमेतद्देशसम्बन्धित्वं बाध्येतेति। तदवश्यमर्थापत्त्यैवाऽन्यत्राऽभावः पूर्वं ग्रहीतव्यः, पश्चात्तु भवत्वनुमानमित्याह तेनेति[४७] । शक्तिकल्पना ऽप्यर्थापत्तिरेवेत्याह यत्रेति ।

तद्दर्शने तदानीं च प्रत्यक्षादेरसंभवात् ।
अर्थापत्तेः प्रमाणत्वं त्रैलक्षण्याद्विना भवेत्' ॥४९॥
अनुमानादभिन्नत्वान्नोक्तौ जयपराजयौ ।
वध्यघातकभावेन यौ सर्पनकुलादिषु ॥५०॥
पीनो दिवा न भुङ्क्ते चेत्येवमादिवचःश्रुतौ ।
रात्रिभोजनविज्ञानं श्रुताऽर्थापत्तिरुच्यते ॥५१॥
तामर्थगोचरां केचिदपरे शब्दगोचराम् ।
कल्पयन्त्यागमाच्चैनामभिन्नां प्रतिजानते ॥५२॥

---

चोदयति कार्यस्येति[४८]। कारणवत्तया शक्तिः कल्प्यते कार्याच्च कारणबुद्धिरनुमानमिति। निराकरोति नेति। कारणमाह सम्बन्धेति। बीजे सत्यङ्कुरोत्पत्तिदर्शनाद् बीजकारणत्वमवगम्यते, सत्यपि तस्मिन्मूषिकाघ्राते ऽङ्कुराऽनुत्पत्तेरकारणत्वं, तदिदं कारणाऽकारणत्वव्याघातपरिजिहीर्षया शक्तिकल्पनं सम्बन्धज्ञानाऽनपेक्षत्वान्नाऽनुमानं; यथा वा ऽनया युक्त्या शक्तिसिद्धिः तथा शास्त्रदीपिकायां दर्शितमिति।

इतश्च नाऽनुमानमित्याह दृष्टेति सार्द्धेन। सम्बन्धिग्रहणपूर्वकं हि सम्बन्धग्रहणं, न च शक्तेःप्रत्यक्षग्रहणं सम्भवति, अतो ऽवश्यं सम्बन्धग्रहणवेलायां शक्तिग्रहणमभ्युपगन्तव्यम, अर्थापत्तिर्हि त्रैलक्षण्यवर्जिता शक्नोति तां ग्रहीतुमिति। वृत्त्यन्तरे सर्पनकुलयोरेकस्य जयमन्यस्य पराजयं वा दृष्ट्वेतरत्र जयपराजयकल्पनमर्थापत्त्युदाहरणं दत्तं, तत्किं भाष्यकारेण नोक्तमत आह अनुमानादिति[५०]।

श्रुतार्थापत्तिमुदाहरति पीन इति[५१]। तस्याः प्रमाणाग्राहिणी-

प्रायशश्चाऽनया वेदे व्यवहारो व्यवस्थितः ।
सो ऽवैदिकः प्रसज्येत यद्येषा भिद्यते ततः ॥५३॥
वचनस्य श्रुतस्यैव सो ऽप्यर्थः कैश्चिदाश्रितः ।
तदर्थोपप्लुतस्यान्यैरिष्टो वाक्यान्तरस्य तु ॥५४॥
न तावच्छ्रूयमाणस्य वचसो ऽर्थो ऽयमिष्यते ।
न ह्यनेकार्थता युक्ता वाक्ये वाचकता तथा ॥५५॥
पदार्थान्वयरूपेण वाक्यार्थो हि प्रतीयते ।
न रात्र्यादिपदार्थश्च दिवावाक्येन गम्यते ॥५६॥

---

त्वं दर्शयितुम् विप्रतिपत्तिं दर्शयति तामिति[५२]। सर्वे चाऽऽगमान्तर्भूतां तां मन्यन्ते, इत्याह आगमादिति । तदन्तर्भावे प्रयोजनमाह प्रायश इति[५३] । फलापूर्वविध्यन्तासिद्धेरेतदधीनाऽऽगमाऽनन्तर्भावे सत्यवैदिकी स्यादिति ।

शब्दगोचरत्वे ऽपि पुनरवान्तरविप्रत्तिमुपन्यस्यति वचनस्येति[५४] । श्रुतस्यैव शब्दस्य तत्प्रतिपादकत्वं के चित्कल्पयन्ति, अन्ये तु शब्दान्तरमेव तत्प्रतिपादकमिति; तत्राऽनन्तरपक्षं निराकरोति* न तावदिति[५५] । कारणाह न हीति । किं च, यदि वाक्यं वाचकं स्यात्स्याद्प्यनेकार्थता, न तु वाक्यं वाचकमित्याह वाचकतेति ।

कथं तर्हि वाक्यार्थप्रतीतिरत आह पदार्थेति[५६] । किमिति रात्रिभोजनं दिवावाक्यस्यार्थो न भवत्यत आह न रात्रीति । न हि

---

* निष्कर्षति इति २ पु. पा. ।

न दिवादिपदार्थानां संसर्गो रात्रिभोजनम्।
न भेदो येन तद्वाक्यं तस्य स्यात् प्रतिपादकम् ॥५७॥
अन्याऽर्थव्यापृतत्वाच्च न द्वितीयाऽर्थकल्पना।
तस्माद्वाक्यान्तरेणायं बुद्धिस्थेन प्रतीयते ॥५८॥
तस्य चागमिकत्वेऽपि यत्तद्वाक्यं प्रतीयते।
प्रमाणं तस्य वक्तव्यं प्रत्यक्षादिषु यद्भवेत् ॥५९॥
न ह्यनुच्चारिते वाक्ये प्रत्यक्षं तावदिष्यते।
नाऽनुमानं न चेदं हि दृष्टं तेन सह क्वचित् ॥६०॥
यदि त्वनुपलब्धेऽपि सम्बन्धे लिङ्गतेष्यते।
तदुच्चारणमात्रेण सर्ववाक्यमितिर्भवेत् ॥६१॥

---

रात्र्यादिपदार्था दिवावाक्यपदैरभिधीयन्ते, ते कथमन्वितरूपतया तद्वाक्यार्थीभवेयुरिति। यद्यपदार्थोऽपि रात्रिभोजनं दिवादिपदार्थानां संसर्गो भेदो वा स्यात्ततोऽपि तस्यैव वाक्यस्यार्थः स्यान्न तु तदस्तीत्याह न दिवेति[५७]।

यद्यपि चाऽनेकार्थता तथाप्येकस्मिन्प्रयोगे व्यापृतस्य नार्थान्तरं सम्भवतीत्याह अन्यार्थेति[५८]। तस्माद्वाक्यान्तरस्यैव कल्पितस्यायमर्थो न श्रुतस्येत्याह तस्मादिति। तस्य तु वाक्यस्य किं प्रमाणमिति विचारणीयमित्याह तस्येति[५९]। यच्च तदर्थान्तरं तदा यद्यपि वाक्यार्थत्वादागमिकं न निष्प्रमाणकं तथापि तदेव वाक्यं किंप्रमाणकमिति चिन्त्यमिति।

तत्राऽर्थापत्तिरेव प्रमाणमिति वक्तुं पूर्वेषां तावदसम्भवं दर्शयितुमाह न हीति[६०]। नाप्यनुमानं, श्रुतस्य वाक्यस्याऽश्रुतेन सम्ब-

न चाऽर्थापत्तिगम्यानि सर्वैः सर्ववचांसि हि ।
सम्बद्धान्युपलब्धानि येन तेष्वनुमा भवेत् ॥६२॥
न च सत्ताऽनुमानेन विशेषो वा ऽनुमीयते ।
इह वाक्यविशेषस्य सत्तैव त्ववगम्यते ॥६३॥
पूर्वसिद्धः स्वतन्त्रो ऽर्थः स्वतन्त्रेण विशेषितः ।
धर्मोऽधर्मविशिष्टो ऽत्र नाऽनुमेयः प्रतीयते ॥६४॥
अथ श्रुतस्य वाक्यस्य मीयते तद्विशिष्टता ।
ततः पक्षो ऽभ्युपेतः स्यादप्रसिद्धविशेषणः ॥६५॥
किञ्च लिङ्गान्तराऽभावादेतस्य यदि लिङ्गता ।
प्रतिज्ञार्थैकदेशत्वं पदवत्तो प्रसज्यते ॥६६॥

---

न्धाऽग्रहणात्, इत्याह नाऽनुमानमिति। शङ्कते यदीति[६१]। निराकरोति तदुच्चारणेति । ननु यदा पीनो दिवा न भुङ्क्ते रात्रौ भुङ्क्ते इति सहोच्चारितं तदा सम्भवति साहित्यग्रहणमत आह न चेति[६२] ।

इतश्च नाऽनुमेयत्वमित्याह न चेति[६३] । ततः किमित्याह इहेति । यस्त्वनुमानविषयः प्रसिद्धो धर्मी अप्रसिद्धविशेषणविशिष्टः सो ऽत्र न सम्भवतीत्याह पूर्वेति[६४] । शङ्कते अथेति[६५] । निराकरोति तत इति । श्रुतस्य च धर्मित्वे लिङ्गान्तराऽभावाद्यदि तदेव लिङ्गं ततः प्रतिज्ञार्थैकदेशत्वं, यथा पदे पक्षीकृते दर्शितमित्याह किं चेति[६६] । यदि तु यथा पदार्थस्य धर्मित्वं पदस्य तद्धर्मतया लिङ्गत्वमाशङ्कितं तथा ऽत्राप्यश्रुतस्य वाक्यस्य धर्मित्वं श्रुतस्य धर्मत्व-

तद्वदेव निराकार्या वचसो धर्मधर्मिता।
नाऽगृहीते हि तद्धर्मो गृहीते नाऽनुमेयता ॥६७॥
क्रियाकारकसम्बन्धादृते नास्ति तु धर्मता।
अवाचकतया चैतन्न धर्मो विषयात्मना ॥६८॥
प्रतीतेर्वाचकत्वं चेत्प्रसक्ता ऽनेकशक्तिता।
अनुमाविषयोत्थं तु धर्मत्वं निष्फलं भवेत् ॥६९॥
पदार्थैरपि तद्वाक्यं नाऽसम्बन्धात्प्रतीयते।
सामान्यान्यन्यथाऽसिद्धेर्विशेषं गमयन्ति हि ॥७०॥

---

मुच्येत तद्वदेव निराकर्त्तव्यमित्याह तद्वदिति[६७]। तदेव दर्शयति नेति।

अगृहीते रात्रिवाक्ये तद्धर्मत्वाद्दिवावाक्यं ग्रहीतुं न शक्यं गृहीतं चेत्किमनुमेयमिति। तद्वदेव क्रियाकारकसम्बन्धाऽभावादिदमपि न श्रुतस्याऽश्रुतधर्मत्वमित्याह क्रियेति[६८]। यदि श्रुतस्याऽश्रुतं विषय इति कृत्वा तद्धर्मत्वं श्रुतस्योच्येताऽत आह वाचकेति। तत्प्रतिपादकता हि तद्विषयता, न चासाववाचकस्यास्तीति शङ्कते प्रतीतेरिति[६९]। निराकरोति प्रसक्तेति। तदनुमापकतया तु तद्धर्मत्वमनुमानोत्तरकालत्वान्नाऽनुमानाऽङ्गमित्याह अनुमेति।

तदेवं दिवावाक्यं न रात्रिवाक्यस्याऽनुमापकमित्युक्तम्। एवं दिवादिपदार्थो ऽपि नैव लिङ्गसंबन्धाऽभावादेवेत्याह पदार्थैरपीति[७०]। नन्वसंबद्धैरपि पदार्थैर्यथा वाक्यार्थः प्रतीयते तथा रात्रिवाक्यमपि किं न प्रत्येष्यते, अत आह सामान्यानीति। सामान्यं हि पदार्थो विशेषश्च वाक्यार्थः, सामान्यानि च विशेषमन्तरेणाऽनुपपद्यमानानि

न तु वाक्यान्तरेणैषां विना किं चिन्न सिध्यति ।
न चाऽप्यन्यः प्रकारोऽस्ति तेन वाक्येन सङ्गतौ ॥७१॥
'अथैतद्वाचि कल्प्येत वाक्यमन्यत्तथैव च ।
प्रसङ्गात्तत्र दूरेऽपि नाऽसम्बन्धात्प्रमुच्यते ॥७२॥
ततश्च* प्रथमादेव वरं ज्ञातु†मसङ्गतात्' ।
अन्वयव्यतिरेकौ च प्रतिषेध्यौ पदे यथा ॥७३॥
'श्रुतवाक्येन सादृश्यं नाऽश्रुतस्याऽस्ति किं चन ।
तस्मादनुपमानत्व'मर्थस्याऽप्यनया दिशा ॥७४॥

---

युक्तं यत्तद्गमयन्तीति; न त्वेवमिहाऽस्तीत्याह न त्विति[७१] । न चापि तद्देशतत्कालत्वादिसम्बन्धो दिवावाक्यतत्पदार्थानां वा रात्रिवाक्ये- नास्तीत्याह न चेति ।

प्रत्यक्षाऽनुमानगम्यत्वे निरस्ते शब्दगम्यत्वमाशङ्क्य निराकरोति अथेति[७२] सार्द्धेन । न तावद्दिवावाक्यस्य रात्रिवाक्यमर्थः, तत्र वाक्यान्तरं रात्रिवाक्यवाचकं कल्पनीयं, तदपि चाप्रत्यक्षं, दिवावा- क्येन च सम्बन्धादननुमेयमिति पुनरपरापरवाक्यकल्पनायामनवस्था स्यात्,तत्राऽन्ततो गत्वाऽप्यवश्यं किंचिद्वाक्यमसत्येव सम्बन्धेऽर्था- पत्त्यैव दिवावाक्येन ज्ञातव्यं, तद्वरं दिवावाक्येन रात्रिवाक्यमेव क- ल्पितम्।एवशब्दो भिन्नक्रमः प्राथम्याद्रात्रिवाक्यमेव वरं ज्ञातुमिति।

संप्रत्यनुमानमेवोपसंक्रम्याऽन्वयव्यतिरेकौ निराकरोति अन्व- येति[७३]। देशकालद्वाराऽन्वयव्यतिरेकाऽभावाज्ज्ञानद्वारयोश्च ज्ञानो- त्तरकालत्वेनाऽनुपयोगादिति पदवदेव दर्शयितव्यमिति ।

---

* अतश्चेति १ पु. पा. । † न तज्ज्ञातुमिति १ पु. पा. ।

'उपमानत्वलिङ्गेन वाक्यं प्रति निवारिते ।
अर्थे ऽपि चैवमेव स्या'त्तस्मात्पूर्वैष्वसम्भवः ॥७५॥
अतः श्रुतस्य वाक्यस्य यदर्थप्रतिपादनम् ।
तदात्मलाभ एव स्याद्विना नेत्येतदिष्यते ॥७६॥
एतदर्थाद्विना नायमित्यर्थः किं न कल्प्यते ।
वाक्यार्थवच्च किन्त्वाऽयमागमार्थः प्रतीयते ॥७७॥
सविकल्पकविज्ञानैः शब्दः पूर्वं प्रतीयते ।

---

संप्रत्युपमानगम्यत्वं निराकरोति श्रुतेति[७४] पादत्रयेण। उपमीयते येन। तदुपमानमिति दिवावाक्यवत्तदर्थो ऽपि नोपमानमित्याह अर्थस्येति । रात्रिवाक्यवत्तदर्थे ऽपि दिवावाक्यतदर्थयोर्लिङ्गत्वोपमानत्वे निराकार्ये इत्याह उपमानत्वेति[७५] पादत्रयेण । उपसंहरति तस्मादिति ।

पारिशेष्यादर्थापत्तिरेव रात्रिवाक्ये प्रमाणमित्याह अत इति[७६]। पीनत्वभोजनप्रतिषेधयोरेकवाक्यत्वाऽनुपपत्त्या तदुपपादनाय तच्छेषत्वेन रात्रिवाक्यं कल्प्यतइति ।

अर्थकल्पनावादी चोदयति एतदिति[७७] । न हि रात्रिभोजनवाक्यं पीनत्वस्योपपादकं किं तु रात्रिभोजनमेव, अतः किं शब्दकल्पनयेति । स्यादेतत्, विश्वजिदादिषु फलादेः शाब्दत्वसिद्ध्यर्थं शब्दकल्पनमिति, तत्राह वाक्यार्थेति । यथा शब्दाऽभिहितपदार्थगम्यो ऽपि वाक्यार्थः शब्दमूलतया शाब्दः तथा वाक्यार्थाऽनुपपत्तिगम्यो ऽप्यर्थो वाक्यमूलतया शाब्दो भविष्यतीति ।

परिहरति सविकल्पकेति[७८] । ततश्च प्रथमाऽवगतेन शब्देनैवाऽनुपपत्तिपरिक्षयान्नार्थं यावदर्थापत्तिर्गन्तुमर्हति । नन्वेवं प्रत्य-

लब्धप्रयोजने वाक्ये परं नाऽऽगमिकं च नः ॥७८॥
ननु चाऽसति सम्बन्धे सति वा ऽनवधारिते ।
गम्यज्ञानमिदं वाक्यं प्रसज्येताऽप्रमाणकम् ॥७९॥
सम्बन्धस्य प्रमाणत्वं स्थितं किं चेश्वराज्ञया ।

---

च्चाऽनुमानादिविकल्पानामपि शब्दपूर्वकत्वात्तेषामपि शब्दविषयता स्यात्, न, इन्द्रियलिङ्गयोरर्थे व्यापके च क्लृप्तसामर्थ्ययोः शब्दविषये सामर्थ्याऽभावात्, अर्थापत्तिस्तूपपादकमात्रेण सन्तुष्टा शब्दस्याप्युपपादकत्वात् तत्रैव प्रथमाऽवगते पर्यवस्यति । दृष्टाऽर्थापत्तिरपि तर्हि व्युत्पन्नानां शब्दएव पर्यवस्येन्नाऽनुपपादकत्वाद् बहिर्भाव एव गृहाभावस्योपपादको न तच्छब्दोपि । नन्वस्यापि तर्हि रात्रिभोजनमेवोपपादकं न तच्छब्दः, सत्यं, वाक्याऽनुपपत्तिस्तु शब्देनापि शाम्यति यथैव ह्यर्थस्यानुपपत्तिः एवं वाक्यस्यापि यथाश्रुतस्य परिपूर्णार्थप्रतिपादकत्वाऽनुपपत्तेरस्त्याकाङ्क्षा, तत्र प्रथमाऽवगतेन शब्देन तदुपपत्तौ नार्थे यावद्गन्तव्यम् । किं च शब्दाऽवगतो ऽर्थस्तदेकवाक्यभूतशब्दान्तरप्रतिपादितेनैवाऽर्थेन सह वाक्यार्थीभवति न प्रत्यक्षाऽवगतेनेत्यसकृदुक्तम्, एवं चोभावपि सिद्ध्यतः, अन्यथा नेत्येतदपि तत्र तत्र प्रतिपादितमिति ।

यदपि वाक्यार्थवदागमार्थत्वमुक्तं, तत्राह लब्धप्रयोजनइति । यावद्ध्यकृतार्थं वाक्यं तावद्यत्कल्प्यते तत्सर्वं शाब्दं भवति, पदार्थानां चाऽवगतत्वेनाऽप्रयोजनत्वात्तेष्वकृतार्थं वाक्यं तत्तद्द्वारा ऽप्रतिपन्नवाक्यार्थोऽवसायीति युक्तं वाक्यार्थस्यागमार्थत्वं, ततः परं तु पदार्थान्तरं, ततः प्रागेव वाक्यस्य कृतार्थत्वान्न तस्यागमार्थत्वम् । अथाऽकृतार्थत्वं ततः शब्द एव कल्पयितव्यो ऽन्येन वाक्यस्याऽऽकाङ्क्षापूरणाऽभावादिति ।

प्रत्यक्षस्य प्रमाणत्वं कथं वा सङ्गतेर्विना ॥८०॥
अस्तीन्द्रियाऽर्थसम्बन्धस्तत्र चेन्नाऽनपेक्षणात् ।
न हि प्रत्यक्षवेलायां सर्वेणाऽसौ निरूप्यते ॥८१॥
येनाऽपि तु निरूप्येत पश्चादनुभवादसौ ।
न स्यादेव प्रमाणाङ्गमसता तुल्य एव सः ॥८२॥
अप्राप्यकारिणी येषां चक्षुःश्रोत्रे च ते यथा ।
तज्ज्ञानस्य प्रमाणत्वमिच्छन्त्येवं भविष्यति ॥८३॥
तस्मादसत्त्वे सत्त्वे वा सम्बन्धस्य यदेव नः ।
जायेताऽभङ्गुरं ज्ञानं तस्यैव स्यात्प्रमाणता ॥८४॥
न चाप्यस्याः प्रमाणत्वे कश्चिद्विप्रतिपद्यते ।
भेदाऽभेदे विसंवादः कुतस्तत्र च निर्णयः ॥८५॥

---

चोदयति नन्विति[७९] । परिहरति सम्बन्धस्येति[८०] । सम्बन्धप्रामाण्ये च प्रत्यक्षमप्रमाणं स्यादित्याह प्रत्यक्षस्येति । शङ्कते अस्तीति[८१] । निराकरोति नेति । सन्नपि सम्बन्धो ऽनवगतत्वादसत्तुल्य इति । एतदेव दर्शयति न हीति । यस्तर्हि निरुपायो न* तस्याङ्गं स्यादत आह येनापीति[८२] ।

ननु नाऽयमसत्तुल्यः, सत्तया ह्यसौ प्रत्यक्षज्ञानस्य कारणमेवाऽत आह अप्राप्येति[८३]। सत्यं कारणमेकं, तथापि शाक्यास्तावत्सम्बन्धं नैव चक्षुःश्रोत्रयोरिच्छन्ति, ते यथैव प्रत्यक्षस्य प्रामाण्यं मन्यन्ते तथा चेयमर्थापत्तिरिति। कथमसति सम्बन्धे प्रामाण्यमिति इमामाशङ्कामपनुदन्नुपसंहरति तस्मादिति[८४] । बाधविरहः प्रामाण्ये का-

---

* निरुपपत्तीति २ पु. पा. ।

कृते* यत्र च सम्बन्धाद्बुद्धिरेव न जायते ।
तत्र किं क्रियतां सो ऽपि प्रामाण्ये नैव कारणम्॥८६॥

'स्मृत्या श्रुतिर्या परिकल्प्यते ऽस्मि-
ल्लिङ्गादिभिर्या विनियोजिका च ।
फलादिभिर्यत्परिपूरणं च
सम्बन्धदृक्तत्र न का चिदस्ति ॥८७॥

तत्सर्वमित्याद्यसमञ्जसं स्या-
न्न चेदियं स्यादनुमानतो ऽन्या' ।
एवंस्वभावा ऽप्यनुमानशब्दं
लभेत चेदस्ति यथेप्सितं नः ॥८८॥

इत्यर्थापत्तिः ॥

---

रणं न सम्बन्ध इति । निर्विवादं चाऽर्थापत्तेः प्रामाण्यम्, अनुमानात्तु भेदाऽभेदयोर्विवादः, तत्र च निर्णयो ऽस्माभिः प्रागेव दर्शित इत्याह न चेति[५] ।

नन्वेवमनुमाने ऽपि किं सम्बन्धेनात आह कृते इति[६] । तत्रापि बुद्ध्युत्पादे एव सम्बन्धोपयोगो न प्रामाण्ये, तत्रोत्पन्नाया बुद्धेः स्वारसिकमेवेत्याह सो ऽपीति । कः पुनरर्थापत्तेरनुमानाद्भेदस्य स्वतन्त्रोपयोगः, तं दर्शयति स्मृत्येति[७] सार्द्धेन । यदि तु विलक्षणरूपा ऽपि पश्चान्मानसाम्या†दनुमानशब्देन वक्तुमिष्यते तदस्तु यथाकाममित्याह एवमिति[८] ॥

इति श्रीपार्थसारथिमिश्रविरचिते न्यायरत्नाकरे अर्थापत्तिपरिच्छेदः ॥

---

* ज्ञाते इति १ पु. पा. । † पश्चान्मानादिति २ पु. पा ।

## अथाऽभावप्रामाण्यवादः ।

प्रमाणपञ्चकं यत्र वस्तुरूपे न जायते ।
वस्तुसत्ताऽवबोधार्थं तत्राऽभावप्रमाणता ॥१॥
वस्त्वसङ्करसिद्धिश्च तत्प्रामाण्यसमाश्रया ।
'क्षीरे दध्यादि यन्नास्ति प्रागभावः स उच्यते ॥२॥
नास्तिता पयसो दध्नि प्रध्वंसाऽभाव इष्यते* ।
गवि यो ऽश्वाद्यभावस्तु सो ऽन्योन्याभाव उच्यते ॥३॥
शिरसो ऽवयवा निम्ना वृद्धिकाठिन्यवर्जिताः ।

---

### अथ अभावपरिच्छेदः ।

"अभावो ऽपि प्रामाण्याभावो नास्तीत्यस्यार्थस्याऽसन्निकृष्टस्ये"†ति भाष्यं, तदयुक्तं, न हि प्रमाणाऽभावः प्रमाणलक्षणं संभवति, विपरीतत्वादत आह प्रमाणेति[1] । पूर्वोक्तसदुपलम्भकप्रमाणपञ्चकाभिप्रायो ऽयं प्रमाणशब्दः, तदभावश्च षष्ठस्य युक्तमेव लक्षणं, तेनेदृशं वस्तुसत्ताऽवबोधार्थं यत् प्रमाणपञ्चकं तद्यत्र घटादौ वस्तुरूपे सत्यामेव प्रसक्तौ न जायते तत्र घटादावभावस्य प्रामाण्यमिति ।

नन्वप्रमीयमाणे घटे कथमभावस्य प्रामाण्यमिति, न ह्यप्रमीयमाणस्य प्रमेयता संभवति, तत्रोत्तरं भाष्यकारेणोक्तं "नास्तीत्यस्यार्थस्याऽसंनिकृष्टस्ये"ति; तद्व्याचष्टे वस्त्विति[2] । प्रत्यक्षादिभिः सद्रूपेणाऽप्रमीयमाणमपि घटादिकमसद्रूपेणाऽभावस्य प्रमेयम्, असंकरो ऽसद्रूपमभाव इति यावत् । वस्त्वसंकरमेव विवृणोति क्षीर-

---

* ध्वंसाऽभावस्य लक्षणमिति २ पु. पा. ।

† शा. भा. पृ. १० प. २० ।

शशशृङ्गादिरूपेण सो ऽत्यन्ताऽभाव उच्यते' ॥४॥
'क्षीरे दधि भवेदेवं दध्नि क्षीरं घटे पटः ।
शशे शृङ्गं पृथिव्यादौ चैतन्यं मूर्तिरात्मनि ॥५॥
अप्सु गन्धो रसश्चाऽग्नौ वायौ रूपेण तौ सह ।
व्योम्नि संस्पर्शिता ते च न चेदस्य प्रमाणता' ॥६॥
न च स्याद् व्यवहारो ऽयं कारणादिविभागतः ।
प्रागभावादिभेदेन नाऽभावो भिद्यते* यदि ॥७॥
न चाऽवस्तुन एते स्युर्भेदास्तेनास्य वस्तुता ।
कार्यादीनामभावः को यो ऽभावः कारणादिनः ॥८॥

---

इति सार्द्धद्वयेन। शशशृङ्गादिरूपेणेति[४] । शृङ्गस्य यदसद्रूपं शशमूर्द्धाऽवयवसमवेतं सो ऽत्यन्ताभाव इत्यर्थः। सो ऽयं वस्त्वसंकरो ऽसत्यभावप्रामाण्ये न सिद्ध्यतीत्याभिप्रायेणाह क्षीरइति[५] द्वयेन ।

ये निःस्वभावमभावमवस्तुस्वरूपं तुच्छं मन्यन्ते, तान् प्रत्याह न चेति[७] । यत् खलु दधिरूपं प्रागभूत्वा भवति तदुपादेयं कार्यं, यच्च प्रागवस्थितं क्षीररूपं पश्चान्न भवति तदुपादानकारणं, सो ऽयं कार्यकारणविभागः । तथा गौरश्वो न भवति, अश्वो न भवति गौः, विषाणशून्यः शश, इत्यादिव्यवहारो ऽसत्यभावस्य प्रागभावादिरूपभेदे नोपपद्यतइति ।

तथापि कथं वस्तुत्वमत आह न चेति[८] । इतश्च वस्तुत्वमित्याह कार्यादीनामिति । क्षीरमेव दध्यभावः, तद्धर्मत्वाद्धर्मधर्मि-

---

* विद्यते इति पाठान्तरम् ।

'यद्वा ऽनुवृत्तिव्यावृत्तिबुद्धिग्राह्यो यतस्त्वयम् ।
तस्माद्गवादिवद्वस्तु' प्रमेयत्वाच्च गम्यते ॥९॥
न चौपचारिकत्वं वा भ्रान्तिर्वापि यदृच्छया ।
भवत्यतो न सामान्यविशेषात्मकता मृषा ॥१०॥
प्रत्यक्षादेरनुत्पत्तिः प्रमाणाभाव उच्यते ।
सा ऽऽत्मनः परिणामो वा विज्ञानं वा ऽन्यवस्तुनि ॥११॥

---

णोश्चा ऽनतिभेदात्, तदयं वस्तुधर्मः सन् कथमवस्तुधर्मः स्यादिति । इतश्चैवमित्याह यद्वेति पादत्रयेण । अस्ति ह्यभावस्य प्रागभावादिस्वरूपेण व्यावृत्तिरभावरूपेण चाऽनुवृत्तिरिति । तत्रैव हेत्वन्तरमाह प्रमेयेति ।

दर्शितं तस्य प्रमेयत्वं,यस्तु प्रमेयाऽभावादप्रामाण्यं मन्यते स प्रत्यक्षस्यापि वदेत्, तत्प्रमेयस्यापि घटादेः प्रमाणान्तरतः सिद्ध्यभावात्; प्रत्यक्षादेव तत्सिद्धिरिति चेत्,सा ऽभावस्यापि स्वप्रमाणादविशिष्टेति। सत्यमस्त्यनुवृत्तिव्यावृत्तिबुद्धिः, सा तु मृषैवौपचारिकत्वात् भ्रान्तित्वाद्, अत आह न चेति[१०]। यदृच्छया विना कारणेनौपचारिकत्वं भ्रान्तित्वं वा न युक्तम्, अतो न मृषार्थत्वम्।

प्रमाणशब्दः पञ्चकपर इति व्याख्यातम्, अभावशब्दमिदानीं व्याचष्टे प्रत्यक्षादेरिति[११] । तामेव द्विधा विभजते सेति । यो ऽयमात्मनो घटादिविषयः प्रत्यक्षादिज्ञानस्वरूपः परिणामः तदभावमात्रमेवाऽनुत्पत्तिरभाव इति बोध्यते । तच्च घटाद्यभावविषयं नास्ति, बुद्धिजनकतया इन्द्रियादिवत् प्रमाणं नास्तीति । बुद्धिश्च फलं, सैव या बुद्धिर्घटाद्यभावरूपे वस्तुनि जायमाना लक्षणया

स्वरूपपररूपाभ्यां नित्यं सदसदात्मके ।
वस्तुनि ज्ञायते कैश्चिद्रूपं किं चित्कदा चन ॥१२॥

---

ऽनुत्पत्त्यभावशब्दाभ्यामुच्यते । तत्प्रामाण्ये च हानादिधीः फलम् । तदेष भाष्यार्थः, प्रत्यक्षाद्यभावो यो नास्तीत्यस्याऽर्थस्य बोधकः सो ऽभावो नाम प्रमाणमिति ।

ननु भूतलादिभावाऽतिरेकेणाऽभावाख्यं न किं चिद्वस्तूपलभामहे, भवता ऽपि चोक्तं "भावान्तरमभावो ऽन्यो न कश्चि"दिति; भावश्च प्रत्यक्षादिगोचर एवेति न प्रमाणान्तरस्याऽवकाश इत्यत आह स्वरूपेति[१२] । सर्वं हि वस्तु स्वरूपतः सद्रूपं पररूपतश्चाऽसद्रूपं, यथा घटो घटरूपेण सन् पटरूपेणाऽसन्, पटो ऽप्यसद्रूपेण भावान्तरे घटादौ समवेतः तस्मिन् स्वीयाऽसद्रूपाकारां बुद्धिं जनयति, यो ऽयं घटः स पटो न भवतीति । तथेह घटो नास्तीति घटसंयोगाऽभावात्मना भूतलादिबुद्धिर्दर्शयितव्या ।

यस्तु माध्यमिकवादमनुशीलयन् भूतलबुद्धिव्यतिरेकेण नास्तीति बुद्धिमपह्नुते स तन्निराकरणेन स्वरूपपररूपाभ्यामित्यनेनैव निराकर्तव्यः । नास्तीति व्यवहारश्च निर्निबन्धनः स्यात्, न ह्यसौ भूतलोपलम्भनिबन्धनो,घटवत्यपि प्रसङ्गात्,दृश्ये घट इति चेत्स एव प्रसङ्गः, दृश्यमानो हि घटः, दृश्यएव तन्मात्रोपलब्धिरिति चेत्, मात्रशब्दो यद्यनर्थकः स एव प्रसङ्गः, भूतलादनर्थान्तरवचनत्वे ऽपि स एव दोषः, वैयर्थ्यं च पुनरुक्तत्वात्, अर्थान्तरवचनत्वे सिद्धं प्रमेयान्तरम् ।

यस्तु वदति यदेवाऽभाववादिनो ऽभावज्ञानस्य कारणं तदेवाऽस्माकं व्यवहारस्य भवत्विति, स घटादिव्यवहाराणामपि तज्ज्ञानकारणादेव सिद्धिमङ्गीकृत्य तज्ज्ञानान्यपह्नुवीत । किं चैवंवादिना न भाष्यमालोचितं, प्रमाणाऽभावो हि प्रमेयाऽभावज्ञानस्य कारणं, न च स-

यस्य यत्र यदोद्भूतिर्जिघृक्षा वोपजायते ।
चेत्यते ऽनुभवस्तस्य तेन च व्यपदिश्यते ॥१३॥
तस्योपकारकत्वेन वर्त्ततेंशस्तदेतरः ।
उभयोरपि संवित्तावुभयाऽनुगमो ऽस्ति हि ॥१४॥
अयमेवेति यो ह्येष भावे भवति निर्णयः ।
नैष वस्त्वन्तराऽभावसंवित्त्यनुगमादृते ॥१५॥

---

वोऽभावापह्नववादिनः प्रमाणाऽभावो ऽस्ति, तदङ्गीकरणे वा घटाद्यभावेन किमपराद्धमित्यास्तां तावत्। तदेवं सदसदात्मना द्विरूपे वस्तुनि किं चिद्रूपं कदा चित्केन चिद् गृह्यते किं चिन्न कदा चिदित्यस्ति प्रमाणान्तरस्याऽवकाश इति।

कस्य कदा ज्ञानं कस्य वा नेत्यत आह यस्येति[13] । तेन च व्यपदिश्यतइति। घटज्ञानमभावज्ञानमिति। इतरस्त्वंशस्तस्यैव गृह्यमाणस्योपकारकत्वेन लीनो भूत्वा ऽवतिष्ठतइत्याह तस्येति[14] । अथ वा ऽस्त्येवाऽन्यतरग्रहणे ऽप्यन्यतरस्य विशेषणत्वेन ग्रहणमित्याह उभयोरिति । तत्र भावग्रहणे तावदभावस्य विशेषणत्वेनाऽनुवृत्तिः कदा चिदस्तीत्याह अयमेवेति[15]। यो ऽयं देवदत्त एवात्र गृहे नाऽन्यः, स्थाणुरेवायं न पुरुष इति सावधारणो निर्णयः स वस्त्वन्तराऽभावाऽनुविद्धः।

नन्वेवं प्रत्यक्षादीनामप्रामाण्यं स्यात्, निर्णयफलत्वं हि प्रमाणानां तत्त्वं, निर्णयश्चाऽयमेवेति ज्ञानं, तच्चाऽभावानुविद्धम्, अभावश्च प्रमाणान्तरगम्यः, इति तदपेक्षतया प्रत्यक्षादीनामनपेक्षत्वलक्षणं प्रामाण्यं न स्यात्; नैष दोषः। न ह्यभावाऽनुविद्धबोधो निर्णयलक्षणं, तद्भावे ऽपि संशयदर्शनात्, तदभावे च निश्चयदर्शनात्। किं देवदत्त एवा-

नास्तीत्यपि च संवित्तिर्न वस्त्वनुगमादृते ।
ज्ञानं न जायते किं चिदुपष्टम्भनवर्जितम् ॥१६॥
प्रत्यक्षाद्यवतारस्तु भावांशो गृह्यते यदा ।
व्यापारस्तदनुत्पत्तिरभावांशे जिघृक्षिते ॥१७॥

---

ऽस्मिन्गृहे किं वा ऽन्यो ऽपीति वस्त्वन्तराऽभावाऽनुविद्धो ऽपि देवदत्तः प्रकाशमानः सन्देहमारोहति, तथा किमस्तीह चैत्रः किं वा नास्तीति भावाऽभावौ सन्दिह्यमानौ प्रकाशेते; तद्यद्यभावप्रकाशो निर्णयलक्षणं नाऽभावे सन्देहः स्यात्, तथा किं चिन्मात्ररूप एवात्मा किं सुखदुःखरूपो ऽपीति सुखादिभावाऽभावसन्देह,स्तथा न चिन्मात्ररूपः किं तु सुखादिरूपो ऽपीति विनैवाऽभावप्रकाशेन निर्णयो दृश्यते । तस्मान्नाऽभावाऽवभासतदभावात्मानौ निर्णयाऽनिर्णयौ ।

कीदृशः पुनर्निर्णयः, ज्ञानविशेषः सार्वजनीनः, नायमित्थंभावेनोपाख्यातुं शक्यते । कथं तर्हि वस्त्वन्तराऽभावसंवित्त्यनुगमादनेन निर्णय इत्युच्यते, केन वेदमुच्यते, यस्त्वयमेवेत्येवंविधो निर्णयः स वस्त्वन्तराऽभावाऽनुविद्ध इति ब्रूमः, न सर्वे निर्णयास्तदनुविद्धा इति। नास्तीति ज्ञानं तु सर्वमेव भावाऽनुविद्धमित्याह नास्तीति[१६] । एतदेव व्यनक्ति ज्ञानमिति । सर्वमेवाऽभावज्ञानम् इदमिह नास्तीदमिदं न भवतीति वा भावोपष्टब्धमेव, न तच्छून्यं किं चिदस्तीति।

दर्शितं सदसदात्मकत्वं समस्तस्य वस्तुनः, तत्र सदंशस्य प्रत्यक्षाद्विगम्यत्वम् असदंशस्य चाऽभावगम्यत्वं दर्शयितुमाह प्रत्यक्षेति[१७] । तदनुत्पत्तिः प्रत्यक्षाद्यभाव इति ।

तत्र प्रत्यक्षगम्यत्वं नैयायिका मन्यन्ते, तद्धीन्द्रियाऽर्थसन्निकर्षोत्पन्नं ज्ञानं, षड्विधश्च सन्निकर्षः, संयोगाद् द्रव्यग्रहणं, संयुक्तसमवा-

न तावदिन्द्रियैरेषा नास्तीत्युत्पद्यते मतिः ।
भावांशेनैव संयोगो योग्यत्वादिन्द्रियस्य हि ॥१८॥
ननु भावादभिन्नत्वात्संप्रयोगो ऽस्ति तेन च ।
न ह्यत्यन्तमभेदो ऽस्ति रूपादिवदिहापि नः ॥१९॥
धर्मयोर्भेद इष्टो* हि धर्म्यभेदे ऽपि नः स्थिते ।
उद्भवाऽभिभवात्मत्वाद् ग्रहणं चाऽवतिष्ठते ॥२०॥

---

याद्गुणग्रहणं, संयुक्तसमवेतसमवायाद् गुणत्वग्रहणं, समवायाच्छब्द-ग्रहणं, समवेतसमवायाच्छब्दत्वग्रहणं, संयुक्तविशेषणत्वादभावग्रहणम्, अफलवती शाखेति; तान् प्रत्याह न तावदिति[१८] । कारणमाह भावांशेनेति ।

मा भूत्संयोगतः, संयुक्तविशेषणत्वाद् गृह्यतामिति चेत्, न, असति सम्बन्धे विशेषणत्वाऽयोगात् । अस्त्येव सम्बन्ध इति चेत्, को ऽसौ; न तावत्संयोगः, अद्रव्यत्वात्, न समवायः, तदनभ्युपगमात् । अभ्युपगमे वा संयुक्तसमवायादेव ग्रहणात्तद्विशेषणत्वमवक्तव्यं स्यात् । तन्न तावद्भवतामस्ति सन्निकर्षः, अस्माकं त्वस्ति संयुक्तसमवायः; तथापि तु नैन्द्रियकत्वमित्यत्रैव वक्ष्याम इति ।

चोदयति नन्विति[१९] ।परिहरति न हीति । एतदेव दर्शयति धर्मयोरिति[२०] । यद्याप्येकमेव भावाऽभावात्मकं वस्त्विति कृत्वाऽऽत्माऽनात्मांशयोरैक्यं तथापि रूपादिवत्स्वरूपतो ऽस्त्येव भेद इति । प्रमाणमाह उद्भवेति । न ह्यसति भेदे ग्रहणाऽग्रहणव्यवस्थासंभव

---

* भेददृष्ट इति पाठान्तरम् ।

इदमेव निमित्तं च* विवेकस्य प्रतीयते ।
भावाऽभावधियोरक्षैः सम्बन्धो ऽक्षाऽनपेक्षणम् ॥२१॥
रूपादेरपि भेदं च के चिद् ग्राहकभेदतः ।
वर्णयन्ति यथैकस्य पुंसः पुत्रादिरूपताम् ॥२२॥
बुद्धिमात्रकृतो भेदो रूपादौ नित्यमेव हि ।
न च देशाद्यभिन्नानां समुदायाऽवकल्पना ॥२३॥
सद्गुणद्रव्यरूपेण रूपादेरेकतेष्यते ।
स्वरूपाऽपेक्षया चैषां परस्परविभिन्नता ॥२४॥

---

इति । इतश्चास्ति भेद इत्याह इदमिति[२१] । अक्षाऽनपेक्षत्वं चाऽभावधियो वक्ष्यतइति ।

अपरमपि भेदे कारणमेकेषां मते दर्शयति रूपादेरिति[२२] । पितृत्वादिकं हि प्रतियोगिभेदात् भिद्यते, प्रतियोग्येव ग्राहकमित्युच्यते तदधीनत्वात्पितृत्वादिग्रहणस्य, तथा रूपादीनामपि चक्षुरादिग्राहकभेदाद्भेदः, तद्वद्भावाभावयोरपि तत एव भेदो ऽस्त्विति । अस्मन्मते तु बुद्धिभेदादेव रूपादीनां भेदः सो ऽपि भावाऽभावयोरस्त्येवेत्याह बुद्धीति[२३] । नन्वेवं भेद एव रूपादीनां भावाऽभावयोश्च स्यात्, एकबुद्धिस्तु देशाभेदात् वनादिवत्समुदायनिबन्धनैव स्यात्, न हि नानारूप एको धर्मी संभवति यद्रूपेणाऽभेदः स्यान्नानात्वैकत्वयोर्विरोधात्; तत्राह न चेति । दर्शितो हि धर्मी प्रत्यक्षसूत्रइति । न च विरोधो, ऽपेक्षाभेदादित्याह सद्गुणेति[२४] । एतच्चाऽऽकृतिवादे समर्थयिष्यते । तथा भावाऽभावयोरपि स्वरूपेण धर्मिरूपेण च भेदाऽभेदौ

---

* निमित्तत्वमिति पाठान्तरम् ।

यदि तद्वदपेक्षा ऽत्र न स्याद्भेदो ऽत्र नैव हि ।
सदसद्रूपता बुद्धेर्भवेदन्यतरत्र नः ॥२५॥
तत्सम्बन्धे सदित्येवं तद्रूपत्वं प्रतीयते ।
नास्त्यत्रेदमितीदं तु तदसंयोगहेतुकम् ॥२६॥

---

वेदितव्यौ । न ह्यन्यथैकाधिकरणं सदसद्रूपं बुद्धिद्वयं जायतइत्याह यदीति[२५] । अस्ति त्वेकत्रैव वस्तुनि सदंशे सद्रूपत्वम् असदंशे चाऽसद्रूपत्वं बुद्धेरित्याह तत्संबन्धइति[२६] । भूतलरूपं हीन्द्रियसंयुक्तं सद्रूपं प्रकाशते, तदेव घटसंयुक्तात्मतया इन्द्रियेणाऽसंयुक्तमसद्रूपतया, घटशून्यं भूतलमिति, तथा घटो ऽपि यदा यत्रेन्द्रियसंनिकृष्टः तदा तत्र सद्रूपतया प्रतीयते अस्ति घट इति, यदा यत्राऽसत्तया प्रतीयते नास्तीह घट इति तत्र भूतलसंयोगाऽभावात्मना घट एव प्रतीयते न भूतलं, घटशून्यतया भूतलस्य सप्तम्या परविशेषणत्वात्, यदा तदेव विशेष्यते तदा घटशून्यं भूतलमिति प्रतीतिः, घटसंयोगित्वेनाऽविद्यमानमित्यर्थः । सो ऽयं घटसंयोगो यदा ऽनुत्पन्नः तदा प्रागभावः, यदा उत्पद्य विनष्टः तदा प्रध्वंसाऽभावः । शशस्य तु विषाणवत्त्वेनाऽविद्यमानत्वं सार्वकालिकम्, इति सो ऽत्यन्ताभावः । तस्मिन्नभावत्रये ऽप्यन्यस्याऽन्यसंबन्धित्वनिषेधः, इतरेतराऽभावे ऽन्यस्याऽन्यतादात्म्यनिषेधः, गौर्न भवत्यश्व इति गवात्मत्वमश्वस्य न विद्यतइत्यर्थः ।

नन्वविद्यमानत्वमभावः, एतच्च क समवेतं, यत्र विद्यते तत्रेति चेन्न, अविद्यमानस्याऽऽश्रयत्वायोगात्; भूतलइति चेत्, तदेव तर्हि न विद्यतइत्यापद्येत; घटसंयोगात्मना न विद्यतएवेति चेत्, तस्याऽविद्यमानस्याश्रयत्वानुपपत्तिरिति स एव दोषः । ननु सद्रूपमेव भूतलं घटशून्यतया प्रतीयते, किमिदं तच्छून्यत्वमन्यदतो घटसंयन्धित्वेनाऽविद्यमा-

गृहीत्वा वस्तुसद्भावं स्मृत्वा च प्रतियोगिनम् ।
मानसं नास्तिताज्ञानं जायते ऽक्षाऽनपेक्षणात्*॥२७॥

---

नत्वादतस्तदवस्थमविद्यमानाश्रयत्वम् । नैष दोषः । अर्थान्तराणि हि विद्यमानमाश्रयन्ते, यत्त्वविद्यमानत्वं तत्कथं विद्यमानमाश्रयेत्, अतो ऽस्याविद्यमानाश्रयत्वं भूषणमेव न दूषणम् । न केवलमात्मीय†मेवाऽविद्यमानत्वमविद्यमानमाश्रयते, वस्त्वन्तराऽभावो ऽप्यविद्यमानाश्रयो दृष्टः, यथा शशविषाणे दैर्घ्यतैक्ष्ण्याद्यभावः, न दीर्घं न तीक्ष्णं वा, तथा च वक्ष्यति—

अवस्तुत्वेन साध्यत्वान्निषेधाद्धेतुसाध्ययोः ।
सपक्षे ऽन्यतराऽसिद्धिर्न दोषायात्र जायते ॥ इति ।

येन च सम्बन्धित्वं तादात्म्यं वा ऽन्यस्य निषिध्यते तत्प्रतियोगीत्युच्यते, यस्य निषिध्यते स आश्रय इति ।

नन्वस्त्वसद्रूपस्य भेदः, तदपि त्विन्द्रियेणैवाऽवगम्यते, रूपादिवदुन्मीलिताक्ष एव घटो नास्तीति बुध्यते न निमीलिताक्षो ऽन्धो वा,तथा चाऽपरोक्षाऽवभासो विशिष्टप्रतीतिश्चोपपन्ना भवति; इतरथा हि भूतलमात्रविषयत्वादिन्द्रियस्याऽनुपलब्धेश्चाऽभावमात्रविषयत्वान्निर्निबन्धनो विशिष्टबोधः स्यादत आह गृहीत्वेति[२७]। दृश्याऽदर्शनमभावे प्रमाणं नाऽदर्शनमात्रं, येन चाश्रयभूतं भूतलादिकं वस्तु गृहीतं तस्यैव घटो दृश्यो भवति नाऽन्यस्योन्मीलिताक्षस्यैव च तद्ग्रहणमिति तत्सिद्धये ऽक्षापेक्षा नाऽभावग्रहणाय । गृहीते चाश्रये प्रतियोगिनि च स्मृते ऽक्षस्थानीयेन दृश्याऽदर्शनसहायेन मनसैवाऽभावज्ञानजन्मोपपत्तेर्नेन्द्रियस्याऽभावे शक्तिः शक्या कल्पयितुम् । आपरोक्ष्यं

---

* अक्षाऽनपेक्षयेति २ पु. पा. ।

† अभावीयमिति पाठान्तरम् ।

स्वरूपमात्रं दृष्ट्वा ऽपि पश्चात्किं चित्स्मरन्नपि ।
तत्राऽन्यनास्तितां पृष्टस्तदैव प्रतिपद्यते ॥२८॥

---

तु भावांशएव नाभावांशे तदस्ति । विशिष्टबोधो ऽपि कारणसमाहारादेवोपपद्यते प्रत्यभिज्ञायामिव भूतवर्त्तमानकालसम्बन्धः । दृश्यादर्शनमक्षं च सहितम् अभावविशिष्टं भावं बोधयति, तत्र भावांशे ऽक्षस्य व्यापारः, अभावांशतत्सम्बन्धयो*स्त्वनुपलब्धिर्व्याप्रियते यथा क्षीरादिद्रव्ये जिह्वागते द्रव्यस्वरूपं त्वचा माधुर्यमस्य च द्रव्यं सम्बन्धो रसनेनेत्युभाभ्यां माधुर्यविशिष्टक्षीरबुद्धिः । कथं तर्हीदमुक्तं "न हि भिन्नेन्द्रियग्राह्यं किं चिदस्त्यनुरागकृ"दिति सम्बन्धाऽग्रहणविशिष्टं† तच्चक्षुषा हि गवादिस्वरूपमेव गृह्यते न तस्य शब्दसम्बन्धः । श्रोत्रेणापि शब्दरूपमेव गृह्यते न तस्यार्थेन सम्बन्धः । तेनाऽयुक्तं शब्दानुरक्ताऽर्थग्रहणस्यैन्द्रियकत्वम् । यत्र हि विशेषणविशेष्यसम्बन्धः प्रत्यक्षः तत्रैव विशिष्टस्वरूपस्य प्रत्यक्षत्वम्, अन्यत्र तु येनैव प्रमाणेन सम्बन्धग्रहणं, तदेव विशिष्टस्वरूपस्य प्रमाणम् । तथा चाऽग्निसम्बन्धस्याऽऽनुमानिकत्वाद् विशिष्टरूपमानुमानिकमित्युक्तम् । अत्राप्यभावसम्बन्धस्याऽभावप्रमाणगम्यत्वादभावविशिष्टभूतलादिबोधो ऽभावप्रमाणक एव, शब्दानुविद्धबोधस्य प्रत्यक्षत्वमर्थस्वरूपापेक्षया न शब्दानुविद्धरूपाऽपेक्षयेति ।

ननु कल्प्यतामिन्द्रियस्य शक्तिः, दृश्याऽदर्शनस्यापि सा कल्पनीयैव, अत्राह स्वरूपेति[२८] । यदा हि कश्चित्प्रातःकाले कं चिद्देशमध्यासीनस्तत्र व्याघ्रादिकमदृष्ट्वा तदस्मरणाच्च तदभावमप्यगृहीत्वा देशमात्रं दृष्ट्वा देशान्तरगतो मध्यन्दिने पृच्छयते कश्चित्तस्मिन्देशे प्रातःकाले व्याघ्रो गजः सिंहः पार्थिवो वा समागत इति स तदा तं

---

* अभावांशे तत्संबन्धयोरिति १—पु.पा.? । † विषयमिति पाठान्तरम् ।

न चाप्यत्राऽनुमानत्वं लिङ्गाऽभावात्प्रतीयते ।
भावांशो ननु लिङ्गं स्यात्तदानीं नाऽजिघृक्षणात् ॥२९॥
अभावाऽवगतेर्जन्म भावांशे ह्यजिघृक्षिते ।
तस्मिन्प्रतीयमाने तु नाऽभावे जायते मतिः ॥३०॥

---

देशमवगतत्वात्स्मरन्नपि तत्र देशे ऽन्येषां व्याघ्रादीनामभावं प्रागगृहीतं तदैव गृह्णाति । न च मध्यन्दिने समये प्रातःकालिकस्याऽभावस्याऽनिन्द्रियसंनिकृष्टस्य संभवति प्रत्यक्षेण ग्रहणं,तस्येन्द्रियसंनिकृष्टवर्त्तमानविषयत्वात् । ननु योग्याऽनुपलब्धिरपि तदानीं नास्ति, न हि मध्यन्दिने प्रातस्तनस्याऽर्थस्योपलब्धियोग्यता ऽस्ति । सत्यं, प्रत्यक्षयोग्यता नास्ति,स्मृतियोग्यता त्वस्त्येव अवश्यं ह्यनेकसहस्रजनाधिष्ठितामपि सभामध्यासीनैस्तत्रागतः सिंहः पार्थिवो वा तदैव ग्रहीतव्यो मध्यन्दिने च सत्यां सुस्मूर्षायां स्मर्त्तव्यः । तदिदं स्मर्त्तव्यत्वे सत्यस्मरणं मध्यन्दिनवेलायां विद्यमानं प्रातस्तनमभावं बोधयति । ननु "प्रमाणाऽभावः प्रमाण"मिति भाष्यं तत्कथं स्मरणाऽभावस्य प्रामाण्यम्, स्मरणाऽभावो ऽपि फलतः प्रमाणाऽभाव एव, स्मरणस्य प्रमाणफलत्वात् । ननु प्रागेवाऽभावग्रहणात्स्वरूपमात्रदर्शनाभिधानं तदेव दृश्ये प्रतियोगिनि व्यवहारकारणमित्यापद्येत; तदिदमुक्तोत्तरम् । मात्रशब्दो ऽयं ज्ञानाऽभाववचनः, देशमात्रस्य तदा ज्ञानं न सिंहस्य तदभावस्य वेत्यर्थः । तव तु ज्ञानाऽभावाऽनङ्गीकरणादिदमपि दुर्वचनं, तदङ्गीकरणे च ज्ञेयाभावो ऽप्यङ्गीकर्त्तव्यः, अविशेषादिति ।

निरस्तं प्रत्यक्षत्वम्, अनुमेयत्वं निराकरोति **न चेति**[२९] । चोदयति **भावांश इति** । तदिदं विकल्प्य निराकरोति **तदानीमिति** । न तावद् घटभावस्य लिङ्गत्वं, तस्य तदानीमगृहीतस्य लिङ्गत्वाऽयोगादिति । तदग्रहणमेव दर्शयति **अभावेति**[३०] । कथमित्याह त-

न चैष पक्षधर्मस्त्वं पदवत्प्रतिपद्यते ।
सह सर्वैरभावैश्च भावो नैकान्ततो गतः* ॥३१॥
क चिद्भावे ऽपि सद्भावो ज्ञातो यस्य कदा चन ।
तस्याऽभावो ऽपि तत्रैव कदा चिदवगम्यते ॥३२॥
यत्राप्यदृष्टपूर्वत्वं यदभावस्य तत्र च ।
तदभावमतिर्दृष्टा सम्बन्धे ऽक्षानपेक्षया ॥३३॥
कस्य चिद्यदि भावस्य स्यादभावेन केन चित् ।
सम्बन्धदर्शनं तत्र सर्वमानं प्रसज्यते† ॥३४॥

---

स्मिन्निति । न हि सदसद्रूपे वस्तुनी युगपदेकत्राऽवतिष्ठेते । अथ य एव पुरःस्थितो भूतलभावः स एव लिङ्गं, तत्राह न चेति[३१] । यथा पदस्य पदार्थधर्मता निराकृता तथा भूतलमपि नाऽगृहीते अभावे तद्धर्मतया गृह्यते, गृहीते च अनुमानस्य मेयाभावइति। अन्वयो ऽपि भूतलस्य सर्वैरभावैर्नावगम्यतइत्याह सहेति। इतश्च नानुमानिकमित्याह क चिदिति[३२] । न चैतदनुमानत्वं सम्भवति, कथं हि घटेनापि सहदृष्टं भूतलमनैकान्तिकत्वात्तदभावमनुमापयेदिति । अन्वयाऽग्रहणं विवृणोति यत्रेति[३३] ।

शङ्कते कस्य चिदिति[३४] दर्शनमन्तेन । अभावसामान्येन सम्बन्धग्रहणादन्येषामप्यभावानामनुमानमिति। दूषयति तत्रेति।

---

* नैकान्तिको मत इति १ पु. पा. ।

† प्रशस्यते इति २ पु. पा. ।

गृहीतेऽपि च भावांशे नैवाभावेऽन्यवस्तुनः ।
सर्वत्र* मतिरित्येवं व्यभिचारादलिङ्गता ॥३५॥
सम्बन्धे गृह्यमाणे च सम्बन्धिग्रहणं ध्रुवम् ।
तत्राऽभावमतिः केन प्रमाणेनोपजायते ॥३६॥
तदानीं न हि लिङ्गेन सम्बन्धिग्रहणं भवेत् ।
तत्राऽवश्यमभावस्य प्रमाणान्तरतो गतिः ॥३७॥
प्रत्यक्षादेरनुत्पत्तिर्न तु लिङ्गं भविष्यति ।

---

न त्वेतदस्तीत्याह गृहीतइति[३५] । यदपि भूतलं कतिभिरभावैर्गृहीतसहभावं तदपि न सर्वेषामभावानां गमकं, भावानामपि केषांचित्तत्र दर्शनात्, अतः पूर्ववद्व्यभिचारात्सत्यपि केन चिदभावेन साहचर्य्यग्रहणे न सर्वाऽभावालिङ्गता भूतलस्येति । न च केन चिदपि शक्यं साहचर्यग्रहणमित्याह संबन्धइति[३६] ।

अनुमानेनेति चेत्,तत्राह तदानीमिति[३७] । संवन्धग्रहणोत्तरकालमनुमानं, तत्कथमनेन गृहीत्वा संबन्धिनं संवन्धो गृह्येतेति । तेन प्रमाणान्तरेणैव संवन्धग्रहणसमये संबन्धिनोऽभावस्य ग्रहणमङ्गीकर्त्तव्यम् इत्याह तत्रेति ।

संप्रत्यनुपलब्धिलिङ्गवादी सौगतश्चोदयति प्रत्यक्षेति[३८] । दृश्यं सद् यद्यत्र नोपलभ्यते तत्तत्र नास्ति यथा बुद्धिसत्त्वे पुरुषः, न दृश्यते चात्र देशे दृश्यो घट इति स्वभावहेतुः, तथा यैवैकज्ञानसंसर्गिणोरन्यतरोपलब्धिः सैवेतरस्याऽनुपलब्धिर्न तूपलब्ध्यभावो नाम

* सर्वस्येति १ पु. पा. ।

न विशेषणसम्बन्धस्तस्याः सामान्यतो भवेत् ॥३८॥
'न चाप्यभावसामान्ये प्रमाणमुपजायते ।
व्यभिचाराद्विशेषास्तु प्रतीयेरन्कथं तया' ॥३९॥

---

कश्चिदनुपलब्धिव्यतिरेकेणाऽनुपलब्धिसंज्ञो ऽस्ति, यतस्तस्याऽनुपलब्ध्यन्तराऽपेक्षया ऽनवस्था स्यात् । या चासावन्यतरोपलब्धिः सा स्वसंवेद्यैवेति नाऽनवस्था । तस्याश्चोत्पत्तिरक्षादेव घटो नास्तीत्यादिव्यवहारयोग्यतया, तादात्म्यमेव संबन्धः । सैव च योग्यता घटाद्यभावो न तु तत्त्वान्तरम् । अतो ऽनुपलब्धिसमाख्या प्रत्यक्षाद्यनुत्पत्तिरभावस्य लिङ्गम्, वीतहेतुर्वायं, दृश्यस्य सत्ता दर्शनव्याप्ता तद्दर्शनव्यापकं निवर्त्तमानं दृश्यस्य सत्तां व्याप्यां निवर्त्तयतीति ।

दूषयति न विशेषेणेति सार्द्धेन । न ह्यनुपलब्धिमात्राद् घटाऽभावाऽनुमानं संभवति, सामान्यमात्रं चाऽनुमीयेत, न चाऽभावसामान्ये ऽस्ति बुद्धिः, स्वविशेषे तु बुद्धिः, न चाऽसावनुपलब्धिमात्राच्छक्यते ऽनुमातुं, व्यभिचारात्, सत्यपि घटे ऽनुपलब्धिमात्रं संभवत्येवेति । घटाऽनुपलब्धिस्तर्हि लिङ्गमस्तु, मा भूदनुपलब्धिमात्रं, केयं घटाऽनुपलब्धिः, यदि भूतलोपलब्धिः, सा तर्हि साधारण्येव । किं चासौ सत्यपि घटादौ भावे संभवन्ती नाऽभावमात्रमपि गमयति नतरां तद्विशेषम् । अन्यतरोपलब्धिरिति चेन्न, किं द्वयोपलम्भे ऽन्यतरोपलब्धिर्नास्ति । तन्मात्रोपलब्धिरित्यादि वदतामेकदेशिवदेव सौगतानामपि निराकरणम् । अथ घटोपलब्ध्यभावो ऽनुपलब्धिः तस्याप्यभावस्याऽनुमानवेलायामन्वयग्रहणवेलायां चाऽनुपलब्ध्यन्तरापेक्षा तस्यामपि तथेत्यनुपलब्ध्यानन्त्यादनवस्था, तथा ऽन्वयवेलायां लिङ्गाभावे ऽपि । एवं चाऽवीतहेतुरपि निराकर्त्तव्यः, दर्शननिवृत्त्या हि दृश्यनिवृत्तिरनुमातव्या, दर्शननिवृत्तिरप्यभावरूपत्वान्निवृत्त्यन्तरेणाऽनुमातव्या, इत्य-

'न चाऽनवगतं लिङ्गं गृह्यते चेदसावपि ।
अभावत्वादभावेन गृह्येताऽन्येन हेतुना ॥४०॥
स चाऽन्येन ग्रहीतव्यो नाऽगृहीते हि लिङ्गता ।
तद्गृहीतिर्हि लिङ्गेन स्यादन्येनेत्यनन्तता ॥४१॥
लिङ्गाऽभावे तथैव स्यादनवस्थेयमित्यतः ।
काऽप्यस्य स्यात्प्रमाणत्वं लिङ्गत्वेन विना ध्रुवम्'॥४२॥
'नास्तीति धीः फलं चैषा प्रत्यक्षादेरजन्मनः ।
तस्यैव च प्रमाणत्वमानन्तर्यात्प्रतीयते ॥४३॥
त्रिलक्षणेन या बुद्धिर्जन्यते सा ऽनुमेष्यते ।
न चाऽनुत्पत्तिरूपस्य कारणाऽपेक्षिता क चित्' ॥४४॥

---

नवस्था। तस्मादवश्यं प्रत्यक्षाद्यनुत्पत्तेस्तल्लिङ्गत्वरहिताया एव प्रमाणान्तरतयैव क चिदभावप्रमाणत्वमभ्युपगन्तव्यम् । पश्चात्तु भवत्वनुमानमित्याह न चेति[४०] त्रयेण।

हेतुनेति । लिङ्गभूतेनेत्यर्थः । यदि चाऽभावबुद्धिरेव प्रमाणं स्यात्ततः स्यादपि कथं चिदनुमानाशङ्का, यदा तु नास्तीति धीः प्रत्यक्षाद्यनुत्पत्तेः फलं तदनन्तरप्रवृत्त्या चाऽभावाऽनुत्पत्तिरेव प्रमाणं तदा भवदीयात्त्रिरूपाल्लिङ्गतो ऽर्थदृगनुमानमित्यनुमानलक्षणान्नाऽनुमानत्वम् । न ह्यनुत्पत्तिरुत्पत्तिप्रागभावरूपा, कारणाऽनपेक्षत्वात्त्रिलक्षणहेतुजन्या, नाऽप्यर्थदर्शनात्मिका, अतो नाऽनुमानत्वमित्याह नास्तीति[४३] द्वयेन ।

मानं कथमभावश्चेत्प्रमेयं चास्य कीदृशम् ।
मेयो यद्वदभावो हि मानमप्येवमिष्यताम् ॥४५॥
भावात्मके तथा मेये नाऽभावस्य प्रमाणता ।
तथा ऽभावप्रमेये ऽपि न भावस्य प्रमाणता ॥४६॥
भावात्मकस्य मानत्वं न च राजाज्ञया स्थितम्* ।
परिच्छेदफलत्वाद्धि प्रामाण्यं स्याद् द्वयोरपि ॥४७॥
'यदि चास्य प्रमाणत्वमभावत्वेन नेष्यते ।
वस्तुनः कारणत्वं हि दृष्टमित्यभिमानिता† ॥४८॥
न लिङ्गत्वप्रमेयत्वे भवेतां तद्वदेव हि' ।
तथा सति च पूर्वोक्तो व्यवहारो न सिध्यति ॥४९॥

---

शङ्कते मानमिति[४५] । तुच्छरूपा ऽनुत्पत्तिः कथं प्रमाणमिति । परिहरति प्रमेयमिति । प्रमेयाऽऽनुरूप्यं हि प्रमाणस्योचितमेवेति । प्रत्युत भावरूपत्वमेवाऽस्यानुचितमित्याह भावात्मके इति[४६] ।

ननु सर्वत्र भावरूपत्वमेव प्रमाणस्य दृष्टं, तत्कथमभावस्य प्रामाण्यं स्यात्, अत्राह भावात्मकस्येति[४७]। यदि त्वन्यत्र भावस्यैव कारणत्वं दृष्टं नाऽभावस्येति कृत्वा इहापि नाऽभावस्येष्येत ततो लिङ्गत्वप्रमेयत्वे अपि न स्याताम्, अन्यत्राऽदर्शनादित्याहयदि चेति[४८] सार्द्धेन । मा भूतामिति चेत्तत्राह तथेति[४९] । "न च स्याद्व्यवहारोय"मित्यादिना दर्शितः, तेनाऽवश्यं वस्त्वेवाऽभावो न तुच्छ इत्यभ्युपगन्तव्यं, ततश्च युक्तं प्रामाण्यमिति ।

---

* कृतमिति ३ पु. पा. ।

† अभिमानत इति ३ पु. पा. ।

प्रमाणानामनुत्पत्तेर्नोऽभावस्यापि धर्मता* ।
यत्राभावो ऽस्ति तेनास्याः सम्बन्धो नैव विद्यते ॥५०॥
यो न सन्निहितस्तत्र तस्य धर्मो भवेदियम् ।
न च तस्य प्रमेयत्वं धर्मधर्मित्ववर्जनात् ॥५१॥
अभावेन तु सम्बन्धो भवेत्तद्विषयत्वतः ।
तज्ज्ञानाद्विषयत्वं च ज्ञाने मेयं न विद्यते ॥५२॥

---

पूर्वमनवस्थाप्रसङ्गेनाऽनुत्पत्तिलिङ्गत्वं निराकृतम्, अधुनाऽ पक्षधर्मत्वादपीत्याह प्रमाणानामिति[५०] । यदि तावत्प्रमेय एवाऽभावः पक्षीक्रियते ततस्तद्धर्मत्वेन प्रत्यक्षाऽनुत्पत्तिः संभवति, तद्देशतत्कालत्वादिसंबन्धाऽभावात्, अगृहीते चाऽभावे न तद्धर्मतया ऽनुत्पत्तिः शक्यते ग्रहीतुम्, अवगते चाऽनुमेयताऽभाव इति। अथ यत्राभावो भूतले साध्यते तदेव पक्षीक्रियते ततस्तद्धर्मतोप्यनुत्पत्तेर्नास्त्येव भूतले प्रत्यक्षोत्पत्तिरित्याह यत्रेति ।

अथ घटस्य यत्सद्रूपम् इहाऽसंनिहितं तदेव पक्षः, तत्र ह्यस्ति प्रत्यक्षाऽनुत्पत्तिरिति, तदनुभाष्य परिहरति य इति[५१]। न हि सद्रूपमसद्रूपस्य धर्मितया प्रमेयं, सद्रूपस्य तद्विरुद्धस्य तद्धर्मित्वाऽयोगात्; नापि तद्धर्मतया, तत्र तस्याभावादिति । ननु यत्सदसद्रूपसाधारणं घटरूपं तदेव पक्षीकृत्याऽसद्रूपता भूतले साध्यते प्रत्यक्षाऽनुपलब्धिश्च लिङ्गं घटो भूतले नास्ति दृश्यत्वे सत्यनुपलभ्यमानत्वादिति न भविष्यत्यपक्षधर्मत्वम् । उक्तमेव त्वत्र दूषणमनुपलब्धेरप्यनुपलब्ध्यन्तराऽपेक्षत्वादनवस्थेति ।

---

* अनुत्पत्त्या भावस्यापि च धर्मतेति १ पु. पा. ।

संयोगसमवायादिसम्बन्धो नैव विद्यते ।
नाऽगृहीते हि धर्मत्वं गृहीते सिद्धसाधनम् ॥५३॥
'अभावशब्दवाच्यत्वात्प्रत्यक्षादेश्च भिद्यते ।
प्रमाणानामभावो हि प्रमेयाणामभाववत् ॥५४॥
अभावो वा प्रमाणेन स्वाऽनुरूपेण मीयते ।
प्रमेयत्वाद्यथा भावस्तस्माद्भावात्मकात्पृथक्' ॥५५॥
कर्माणि सर्वाणि फलैः समस्तैः
सर्वैर्यथावच्च यदङ्गकाण्डैः ।
न सङ्गतानीह परस्परं च*
नाऽङ्गं तदेतत्प्रभवं क्रतूनाम् ॥५६॥

---

यदि त्वभाव एव पक्षीक्रियते, ऽनुत्पत्तेश्च तद्विषयतया तद्धर्मत्व-मुच्यते, तद्विषया हि सा, तया तस्य ज्ञानादत आह अभावेनेति[५२]। ज्ञानोत्तरकालो हि तद्विषयत्वसंबन्धो न ज्ञानाङ्गं स्यादिति। न चान्यो ऽपि संयोगादिसंबन्धो ऽनुपलब्धेरभावे न विद्यतइत्याह संयोगेति[५३]। यद्यपि स्यात्तथापि नाऽभावग्रहणात्प्राग्ग्रहीतुं शक्यते, गृहीते च प्रमेयाऽभाव इत्याह नेति। एवमुपपादितं भेदं प्रयोगद्वयेन दर्शयित्वोपसंहरति अभावेति[५५]द्वयेन ।

स्वतन्त्रोपयोगमभावस्य दर्शयति कर्माणीति[५६] । सर्वप्रकारो ऽपि वस्त्वसंकरो ऽभावप्रमाणक एव, न हि दर्शादेः श्रुत्यादिचोदिताङ्गाऽतिरेकेणाऽङ्गान्तराऽभावे फलान्तराऽभावे चान्यदागमाभावात्प्रमाणमस्तीति ।

---

* हीति १ पु. पा. ।

युक्त्यागमाभ्यामिति तर्कितो ऽयं
प्रमाणषट्कं प्रविभज्य भाष्ये ।
ततो ऽधिकं यद् द्वयमिष्टमन्यै-
र्भेदो न तस्येत्यपि सिद्धमेतत् ॥५७॥
इह भवति शतादौ सम्भवाद्या ऽऽसहस्रा-
न्मतिरवियुतभावात् सा ऽनुमानादभिन्ना ।
जगति बहु न तथ्यं नित्यमैतिह्यमुक्तं
भवति तु यदि सत्यं नाऽऽगमाद्भिद्यते तत् ॥५८॥

इत्यभावप्रामाण्यवादः ॥

---

ननु सम्भवैतिह्याख्यमपि प्रमाणद्वयं कैश्चिदिष्टं, तत्किमिति भाष्यकारेण न लक्षितम्, अत आह युक्त्येति[५७] । प्रमाणषट्कमेव युक्त्युपेतो व्यासादिमहर्षिवचनपरम्परया चाऽवगत इति स एव निरूपितः, तदधिकं तु द्वयमत्रैवाऽन्तर्भावान्न पृथक् लक्षितमिति ।

अन्तर्भावमेव दर्शयति इहेति[५८] । महासंख्यया महापरिमाणेन वा यदवान्तरसंख्यापरिमाणयोर्ज्ञानं, सहस्रेण शते, प्रस्थेन कुडवे, तत्सम्भव इत्युच्यते, तच्चाऽविनाभावनिबन्धनत्वादनुमानमेव । पुरुषवचनपरम्परा ऐतिह्यं, वटे वटे वैश्रवण इत्यादि; तच्चाऽनिर्णायकत्वात्प्रमाणमेव न भवति, तद्भावे ऽप्यागमान्तर्भावात् । पृथग्वक्तव्यं प्रातिभं तु प्रत्यक्षसूत्रे एव निराकृतम् । लोकप्रसिद्धिरपि प्रत्यक्षादिष्वेवाऽन्तर्भूतत्यौत्पत्तिकसूत्रे निराकृतम् । तस्मात् षडेव प्रमाणानि, न न्यूनानि नाऽधिकानि वेति ॥

इति श्रीपार्थसारथिमिश्रविरचिते न्यायरत्नाकरे अभावाख्यं प्रमाणं समाप्तम् ॥

## अथ चित्राक्षेपवादः ।

परलोकफलाः पूर्वमाक्षिप्ताश्चोदनाः परैः ।
इदानीमैहिकाऽऽक्षेपः सूत्रकारेण चोद्यते ॥१॥

---

### अथ चित्राक्षेपः ।

"प्रत्यक्षादीन्यन्यानि भवन्तु प्रमाणानि, शब्दस्तु न प्रमाणं, कुतः, अनिमित्तं विद्यमानोपलम्भनत्वा"*दिति भाष्यं, तस्य न त्वतथाभूतमित्यादिना पौनरुक्त्यमाशङ्क्याह परलोकेति[१]। आक्षेपहेतुभेदो ऽत्र विषयभेदेन दर्शितः, तत्र हि प्रमाणान्तरपरतन्त्रः शब्दो न स्वातन्त्र्येण प्रमाणमित्याक्षेपः, स चायं प्रमाणान्तराऽगोचरार्थासु चोदनासु परलोकफलासु सम्भवति, ऐहिकफलासु तु यद्यनन्तरं फलं दृश्येत ततः प्रमाणान्तरसंगतार्थत्वान्नाऽयथार्थत्वमिति। यदि न दृश्यते ततस्तद्विपर्ययादेव सुखमप्रामाण्यसिद्धेः किं शब्दपारतन्त्र्यप्रतिपादनव्यसनेन; अतः स तावत्परलोकविषयः, अत्र तु प्रत्यक्षादिविसंवादेनाऽऽक्षेपः। स चैहिकविषय एव, प्रमाणान्तरयोग्यार्थे हि वचस्तदसंवादविसंवादाभ्यामप्रमाणं, तदगोचरार्थत्वविश्वासमात्रमेव स्वप्नदृष्टद्वीपान्तरार्थवचनवन्न विपर्यासाऽवगतिसम्भवः। तस्मादैहिकविषयो ऽयमिति।

परिहारान्तरमाह सूत्रेति। स्वमतेन हि सूत्राणि व्याचक्षाणस्तत्सूत्रोक्तमेवाऽऽक्षेपं दर्शितवान्, इदानीं तु वृत्तिकारमतेन सूत्रार्थतया ऽऽक्षेपं दर्शयति। तेन यद्यपि स एवायमाक्षेपः स्यात् तथापि सूत्रकारस्यात्रैव प्रथमाऽभिधानान्नास्ति पौनरुक्त्यम्। सूत्रकारेणापि विद्यमानोपलम्भनत्वादिति वदता प्रत्यक्षाद्यसंवादविसंवादाभ्यामेवात्र प्रामाण्यमाक्षिप्यते न तु पूर्वोक्तशब्दपारतन्त्र्येणेति विस्पष्टमपौनरुक्त्यमिति।

---

* शा. भा. पृ १० प. २२ ।

'चित्रापशुफलत्वादिविषयाश्चोदना मृषा ।
प्रत्यक्षाद्यधिकारे ऽपि तैरर्थाऽसङ्गतिर्यतः ॥२॥
यदीदृक् तन्मृषा दृष्टं विप्रलिप्सोर्यथा वचः ।
नदीतीरे फलानीति तत्राऽदृश्यानि तानि चेत्' ॥३॥
'न वा पशुफला चित्रा स्वकाले तददानतः ।
स्नानभुज्यादिवत्ते ऽपि तत्साध्या* न भवन्ति वा ॥४॥
तदुत्पत्तावसद्भावात् स्वर्गे तृप्तिसुखादिवत्' ।
वैधर्म्येणोभयत्रापि भवेतां सुखमर्दने† ॥५॥
आनन्तर्यमयुक्तं चेन्न सामर्थ्याऽवबोधनात् ।
शब्दैकदेशभूतेन तेन तत्प्रतिपादितम् ॥६॥

---

सूत्रोक्तं प्रत्यक्षाऽनुपलब्धिविरोधादप्रामाण्यं प्रयोगेण दर्शयति चित्रेति[२] द्वयेन। चित्रैव वा निष्फलतया प्रयोगद्वयेन साधनीयेत्याह न वेति[४] सार्द्धेन। यो ऽस्याः फलदानाय प्राप्तः कालस्तस्मिन्नदानात्स ह्यनन्तरकाल इत्यभिप्रायः। भोजनादितृप्तिजं सुखमिति। तत्र च प्रयोगद्वये भाष्योक्तं मर्दनं तत्सुखं च वैधर्म्योदाहरणमित्याह वैधर्म्येणेति[५]। यद्यस्य साधनं तत्स्वकालएव तत्साधयति यथा मर्दनं, तथा यद्यस्य साध्यं तत्तदुत्पत्तौ भवति, यथा मर्दनसुखमिति।

शङ्कते आनन्तर्यमिति[६]। यदि कर्मानन्तर्यं फलस्योक्तं स्यात् ततः प्रत्यक्षयोग्यतया तदनुपलब्ध्या बाधः स्यात्, तदनन्तरमेव फ-

---

* ते साध्या इति ३ पु. पा.।

† सुखदर्शने इति १ पु. पा.।

कालान्तराऽनुपादानात्कर्मस्त्राभाव्यतो ऽपि च ।
चोद्यमानस्य चित्रादेरानन्तर्यं विशेषणम् ॥७॥
अत्र तावदसंवादो विरोधश्चोत्तरस्य* तु ।
स्वर्गयानविरुद्धो हि भस्मीभावो ऽत्र दृश्यते ॥८॥

---

लदानकालः स्यान्न तु तदुक्तम् । अतः प्रत्यक्षाद्यधिकारे ऽपि तदसङ्गतिः स्वकाले च फलादानमसिद्धमिति । परिहरति नेति । सामर्थ्यसिद्धमानन्तर्यं, विनष्टस्य कारणत्वाऽयोगात्; अपूर्वद्वारेण स्यादिति चेन्न, शास्त्रार्थोऽवधारणवेलायां स्वर्गकामवचनवत् कर्मफलकालवियोगज्ञानकारणाऽभावात् पश्चादीनामनन्तरकाले ऽपि सम्भवात् । अतो ऽनन्तर्भावितापूर्वमेव कर्म फलसाधनत्वेन बोधितमित्यानन्तर्यमेव सामर्थ्यतः सिध्यतीति ।

नन्वेवमप्यानन्तर्यं बोधयतः सामर्थ्यस्यैवाऽनुपलब्धिबाधः, न, अविशेषप्रवृत्तेः शब्दस्याऽत आह शब्देति । न हि सामर्थ्यं नाम प्रमाणान्तरं, शब्दैकदेशो हि तदित्युक्तम् । 'अर्थाद्वा कल्पनैकदेशत्वात्†' इति । अतस्तद्बाधे शब्दस्यापि बाध इति । न स्यादपि सामर्थ्यासिद्धमानन्तर्यं शब्दस्य विशेषणं यदि तद्विरुद्धं कालान्तरं श्रुत्युपात्तं स्यात्, तदा हि तद्बलेनाऽपूर्वमन्तर्भाव्येत, न तु तदस्तीत्याह कालान्तरेति७ ।

"दृष्टविरुद्धमपि किं चिद्वैदिकं वचनं स एष यज्ञायुधी यजमानो ऽञ्जसा स्वर्गं लोकं याती"ति‡भाष्यं तस्य चित्रोदाहरणाद्विशेषं दर्शयति अत्रेति८ । अत्र ह्यनुपलब्धिरस्ति तद्विरुद्धमप्यर्थान्तरं दृश्य-

---

* उत्तरत्रेति १ पु. पा. ।
† जै. सू. अ. १ पा. ४ सू. ३० । ‡ शा. भा. पृ. ११ प. १० ।

यज्ञायुधिवचो मिथ्या प्रत्यक्षेण विरोधतः ।
साधर्म्येण शिलावाक्यं वैधर्म्येणाऽऽप्तभाषितम् ॥९॥
शरीराद्यदि चान्यः स्यान्नासौ यज्ञायुधी भवेत् ।
न चास्य यजमानत्वं सद्भावो ऽपि च दुर्लभः ॥१०॥
यदि स्याद्विधिशब्दो ऽत्र नैवाऽदर्शनतो भवेत् ।
विशेषो ऽस्येति भेदेन नोपात्तं स्यादिदं ततः ॥११॥
विधिशब्दे भाविष्यत्त्वं फलस्य परिकल्प्य हि ।
विरोधपरिहारः स्याद्वर्तमाने ऽपि नास्त्यसौ ॥१२॥

---

तद्इति विशेषः, तं दर्शयति स्वर्गेति । अत्रैव प्रयोगमाह यज्ञायुधीति[९] । भाष्योक्तं ग्रावाणः प्लवन्ते इति शिलावाक्यमिति ।

नन्वात्मनः स्वर्गगमने कथं प्रत्यक्षविरोधः, अत आह शरीरादिति[१०]। न हि सतो ऽप्यात्मनो यज्ञायुधसंप्रयोगो ऽस्ति, नापि यजमानत्वं, विभोः कर्तृत्वाऽसंभवात् । सत्ता ऽपि निष्प्रमाणिकैव, अतः शरीरस्यैवेदं स्वर्गगमनमुच्यते, अतो ऽस्ति प्रत्यक्षविरोध इति ।

"न चैष यातीति विधिशब्द"*इति भाष्ये विधिनिराकरणं व्यर्थमत आह यदीति[११]। चित्रोदाहरणाद्विशेषप्रदर्शनार्थमिदं, सति हि विधौ संवाद एवात्रापि स्यात् न विसंवादः, अतो नेदं भेदेनोपादेयं स्यादिति । कथमित्याह विधिशब्दे इति[१२]। विधौ हि भविष्यत्ता ऽपि फलस्य स्यात्, ततश्च न साक्षात्प्रत्यक्षविरोधः स्यात्, चित्रावाक्यवदेव तु सामर्थ्यसिद्धमानन्तर्यमसंवादेन बाध्येत, वर्त्तमानापदेशे तु तस्मिन्काले स्वर्गगमनं विरुद्धं, भस्मीभावदर्शनाद्विसंवादः स्फुटो भवेदिति ।

---

* शा. भा. पृ. ११ प. १३ ।

फलं च न भवेदेवं भस्मीभावाद्विधावपि ।
तत्सामर्थ्येन या चाऽन्या* कल्पना तान्निषेधति ॥१३॥
प्रायश्चैवंप्रकारत्वमर्थवादेषु दृश्यते ।
मन्त्रेषु चेति ते सर्वे पक्षीकार्याः प्रयत्नतः ॥१४॥
एवं सत्यग्निहोत्रादिवाक्येष्वपि मृषार्थता ।
वेदवाक्यैकदेशत्वाच्चित्रादिवचनेष्वपि† ॥१५॥

इति चित्राक्षेपवादः ॥

---

ननु सत्यपि विधौ प्रत्यक्षाऽवगतभस्मीभावविरोधो ऽस्त्येव, कथं हि भस्मीभूतः कालान्तरे फलं भुञ्जीत । तदिदमनुशयैव परिहरति फलमिति । सति हि विधौ तत्प्रामाण्यादेव शरीरादन्यमात्मानं कल्पयित्वा ऽपि विरोधः परिह्रियते, अनुवादस्तु स्वार्थे ऽप्यप्रमाणं नार्थान्तरं कल्पयितुं शक्नुयात्, तत्र शरीरस्यैव स्वर्गगमनवचनाद्विरोधः स्यादिति ।

प्रायेण चादितिर्द्यौरदितिरन्तरिक्षं वनस्पतयः सत्रमासतेत्येवमादयो मन्त्रार्थवादाः प्रमाणान्तरविरुद्धार्था एव, अतः सर्वे पक्षीकृत्याऽप्रमाणतया साधनीया इत्याह प्राय इति[१४] । तत्सामान्यादग्निहोत्रादिचोदनास्वप्यनाश्वास इति भाष्योक्तं प्रयोगं दर्शयति एवमिति[१५] ।

इति श्रीपार्थसारथिमिश्रविरचिते न्यायरत्नाकरे चित्राक्षेपः समाप्तः ॥

---

* या ऽन्या ऽपीति २ पु. पा. ।

† वचनेष्विवेति १ पु. पा. ।

अथ सम्बन्धाक्षेपः ।

स्वपक्षसाधनं तावन्न मृषा वैदिकं वचः ।
स्वार्थे वक्रनपेक्षत्वात् पदार्थपदबुद्धिवत् ॥१॥

तत्कृतः प्रत्ययः सम्यङ्नित्यवाक्योद्भवत्वतः ।
वाक्यबुद्धिवदेवा,ऽत्र पूर्वोक्ताश्चापि हेतवः ॥२॥

'नित्यान् शब्दार्थसम्बन्धानाश्रित्योक्तेन हेतुना ।
स्वतः प्रामाण्यसिद्ध्यर्थमप्रामाण्ये निराकृते ॥३॥

---

अथ संबन्धाक्षेपः ।

अत्राऽनन्तर "मौत्पत्तिकस्त्वित्या*"दिना सिद्धान्तवादी स्वपक्षं साधयति, तच्चाऽयुक्तं, पूर्वोक्ताऽऽक्षेपाऽसमाधानात्, अत आह स्वपक्षेति[1]। स्थिते हि प्रमाण्ये तद्बलेनैव सर्वोऽऽक्षेपपरिहारः सुकर इत्यभिप्रायः। तदेव प्रयोगद्वयेन दर्शयति न मृषेत्येत्वा[2]ऽन्तेन । प्रथमप्रयोगे सत्यतामात्रं साध्यते, तत्सिद्धौ चाऽनधिगतार्थत्वाद् यत्र सिद्धमेव प्रामाण्यमिति पूर्वोक्ता अपि दोषवर्जितैः करणैर्जन्यमानत्वादित्यादयो हेतवो वक्तव्या इत्याह अत्रेति ।

"स्यादेतत्, नैव शब्दस्यार्थेनास्ति संबन्धः, कुतो ऽस्य पौरुषेयता वे"ति† भाष्यं, तस्य तात्पर्यमाह नित्यानिति[3] सार्द्धेन । संबधौत्पत्तिकत्वाऽऽश्रयणादेवाऽर्थात्संबन्धिनोरपि तदाश्रितं भवति, तेषां च नित्यतया दोषाऽभावेनाऽपवादभूताऽप्रामाण्यनिराकरणेन प्रागुक्ते स्वतःप्रामाण्ये स्थापिते संबन्धाऽभावादप्रामाण्यं पूर्वपक्षी वदति। न ह्यसंबन्धाऽस्य निदर्शनेनाऽन्यकल्पना संभवति, अतिप्रसङ्गात्। न च शब्द-

---

* शा. भा. पृ. ११ प. १८। † शा. भा. पृ. १२ प ११।

असम्बन्धोद्भवत्वेन परो मिथ्यात्वमब्रवीत्' ।
सम्बन्धो ऽस्ति च नित्यश्चेत्युक्तमौत्पत्तिकादिना ॥४॥
मिथ्यात्वस्य निरासार्थं तत्परैर्नेष्यते द्वयम् ।
नैव चाऽस्त्यत्र सम्बन्धः कृतको वेति वक्ष्यते ॥५॥
'असम्भवेन शेषाणां संश्लेषः परिशिष्यते ।
अस्मि*न्नेव च सम्बन्धे प्रतीतिर्लौकिकी ध्रुवा ॥६॥
तन्निषेधमतः प्राह' 'न शब्दो ऽर्थेन सङ्गतः ।
तद्देशानन्तरादृष्टेर्विन्ध्यो† हिमवता यथा' ॥७॥

---

स्यार्थेन संबन्धो ऽस्ति, अतो ऽनियतनिमित्तमप्रमाणमेव वेदार्थज्ञानमिति । एतदेव विवृणोति सम्बन्ध इति[४] ।

तत्रेह तावत्पदसत्त्वविचारः, पश्चात्कृतको नित्यो वेति विचारयिष्यतइत्याह नैवेति[५]। "स्याच्चेदर्थेन सम्बन्धः, क्षुरमोदकशब्दोच्चारणे मुखस्य पाटनपूरणे स्याता"मिति भाष्य‡मयुक्तं, न हि सम्बन्धिनोरवश्यं समानदेशतया भवितव्यं, पितापुत्रादिषु व्यभिचारात्, अत आह असम्भवेनेति[६] सपादेन । यदा हि सम्बन्धान्तराणामसम्भवः उपरितने भाष्ये वक्ष्यते तदा संश्लेष एवाऽवशिष्यते, तथा च गौरिति संश्लेषमेव शब्दार्थसम्बन्धं लौकिका मन्यन्ते, अतस्तन्निषेधार्थमिदमुक्तम् इति । तन्निषेधमेव प्रयोगेण दर्शयति न शब्द इति[७] सपादेन ।

---

* तस्मिन्निति १ पु. पा. ।

† दृष्टो विन्ध्य इति १ पु. पा. ।

‡ शा. भा. पृ. १२ प. ।

एवमर्थो द्वयं वा ऽपि साधनीयमसङ्गतम्' ।
क्षुरेत्यादि च सिद्ध्यर्थं हेतोरुक्तमथाऽपरः ॥८॥
शक्तिरूपं गृहीत्वा ऽऽह संश्लेषो यदि वार्यते ।
सम्बन्धाऽसिद्धसाध्यत्वमथ सम्बन्धमात्रकम् ॥९॥
पितापुत्रादिसम्बन्धैरनैकान्तः प्रसज्यते ।
एकभूम्यादिसम्बन्धाद् दृष्टान्ते साध्यहीनता ॥१०॥
वाच्यवाचकसम्बन्धनिषेधे लोकबाधनम् ।
विरोधश्च स्ववाक्येन न हि सम्बन्धवर्जितैः ॥११॥
प्रतिज्ञार्थं पदैः शक्यः प्रतिपादयितुं परः ।
अभिधानक्रियायां हि कर्मत्वं वाच्यसंश्रितम् ॥१२॥

---

यस्तु हेतोरसिद्धिं मन्यते स क्षुरमोदकभाष्येण बोधयितव्य इत्याह क्षुरेत्युक्त[८]मन्तेन । "यो ऽत्र व्यपदेश्यः सम्बन्ध"* इत्यादि-सिद्धान्तभाष्यार्थमाह अथेत्याहा[९]ऽन्तेन ।

परोक्तं साधनं विकल्प्य दूषयति संश्लेष इति हीनता[१०]ऽन्तेन । यदि प्रत्याय्यप्रत्यायकत्वमेव निषिध्यते ततो लोकविरोध† इत्याह वाच्येति[११] । दोषान्तरमाह विरोध इति । न ह्यप्रत्यायकेन प्रतिज्ञावचनेन प्रतिज्ञार्थः प्रत्याययितुं शक्यते, अतः शब्देन प्रतिज्ञार्थं प्रत्याययता प्रतिज्ञार्थोऽप्रत्यायकत्वं विरुध्यतइति ।

किं पुनरिदं वाच्यत्वं वाचकत्वं च, तद्दर्शयति अभिधानेति[१२]। अर्थप्रतिपत्तिफलः शब्दव्यापारो ऽभिधानक्रिया, तच्च शब्दज्ञानमेव,

---

* शा. भा. पृ. १२ प. १७ । † विरुद्ध इति २ पु. पा. ।

शब्दानां करणत्वं वा कर्तृत्वं वा निरूपितम्।
प्रतिपत्तावुपादानात्साहित्ये च विवक्षिते ॥१३॥

---

तदेव ह्यर्थप्रतिपत्तिफलतया निरूप्यमाणमभिधानक्रियेत्युच्यते। तस्यां च न इश्या प्रतिपत्त्याख्यक्रियाफलभागितया यदर्थस्य कर्मत्वं तद्वाच्यत्वं, शब्दस्य च विवक्षावशेन यत्कर्तृत्वं करणत्वं वा तद्वाचकत्वम् इति।

नन्वेवमेकक्रियान्वयित्वमेव स्यान्न मिथः सम्बन्धः, न ह्येकसंमार्गोऽन्वयिनां ग्रहाणां मिथः सम्बन्धः समस्ति, अत आह प्रतिपत्ताविति[13]। उद्देश्या ह्यन्योन्यमनपेक्ष्य क्रियां वशीकुर्वन्तो युक्तं यन्मिथो न सम्बध्यन्तइति, ये तूपादेयास्तेषां क्रियया वशीकृत्य संहन्यमानानां तद्द्वारेणास्ति परस्परनियमः सम्बन्धः; तथोद्देशोपादेययोरप्यस्ति साहित्यम, उद्देश्यं हि क्रियामाकर्षति, सा च स्वांशभूतमुपादेयं गृहीत्वैव स्वप्रधानं याति, क्रय इवाऽरुणादियुक्तः सोमं, तदिहार्थः प्रधानभूतः स्वप्रतिपत्तिसिद्धये ऽभिधाव्यापारमुपादत्ते, स च स्वांशभूतं शब्दम, इत्यस्ति शब्दार्थयोरेकक्रियानियमात्सम्बन्धः। किमिदं नियम इति, यस्यामभिधानक्रियायां गोशब्दः करणं तस्यां साक्षादिमान् कर्म, यस्यां चासौ कर्म तस्यां गोशब्दः करणम् इति। एवं नियमे ऽवगते यदि प्रमाणान्तरेणैकस्यैव शब्दस्याऽर्थान्तरमभिधेयम् अर्थस्य वा शब्दान्तरमभिधायकं गम्यते, तत्राऽवगतो ऽपि नियमो व्रीह्यादिनियम इव यवादिविधिना बाध्यते, अत एवाऽनेकशब्दत्वमनेकार्थत्वं चाऽन्याय्यमिति वक्ष्यते, अवगतनियमबाधप्रसङ्गात्। अत एव गुणवत्संज्ञापि भेत्री भवति, यथा ह्युत्पत्त्यवगतस्य गुणस्य पाक्षिकबाधमष्टदोषदुष्टं च विकल्पं परिहर्तुं गुणान्तरं वाजिनादि कर्मान्तरं कल्पयति, तथा संज्ञा ऽपि, तत्रापि ह्यस्त्येव पाक्षिको बाधो विकल्पो ऽपि, कदा चित्कस्य चिच्छब्दस्योपादानादिति।

नियम्यते यदेकस्यां सम्बन्धः सो ऽर्थशब्दयोः ।
'तत्र यद्यप्यसम्बन्धः कारकाणां परस्परम् ॥१४॥
तथापि यत्क्रिया तस्यामुपकार्योपकारिता ।
स क्रियासङ्गतेः पश्चात् सम्बन्धः कीर्त्यते तयोः'॥१५॥
न चात्राप्यविनाभाव उपयोगीति साधितम् ।
'संज्ञेति गमकत्वं चेन्न तदङ्गमियं भवेत् ॥१६॥
गमयन्तीं श्रुतिं दृष्ट्वा कल्प्यते व्यवहारतः ।
न चैषा गमयत्यर्थं सम्बन्धे ऽनवधारिते ॥१७॥

---

नन्वस्त्वेकस्यां क्रियायां नियमः, तथापि कारकाणां परस्पराऽसंबद्धानां क्रिययैव संबन्धात् कथं शब्दार्थयोः सबन्धो ऽत आह तत्रेति[१४] सार्द्धेन ।

नन्वेवमपि कारकाणां क्रियायामेव कर्मत्वं कर्तृत्वं चोक्तं स्यान्न मिथः संबन्धः, सत्यं, न क चित्कारकाणां साक्षात्संबन्धः, क्रियान्वितानां तु तद्द्वारको ऽस्त्येव पश्चात्सबन्धः, सो ऽनेनोच्यते। यथैकभावनाऽन्वितयोः साध्यसाधनयोः साधनेतिकर्त्तव्यतयोश्च यागः स्वर्गस्योपकारकः, तथा तस्यापीतिकर्त्तव्यता, तथा ऽर्थस्य व्यवहारोपयोगिनः प्रतिपत्त्याख्यं संस्कारं कुर्वन् शब्द उपकारको भवति अर्थश्चोपकार्य इत्यस्त्यभिधानक्रियाद्वारकः शब्दार्थयोरुपकार्योपकारकलक्षणो वाच्यवाचकभावो नियमादिपर्यायः संबन्ध इति ।

नन्वेवं नियमजन्यत्वादनुमानमेव शाब्दं स्यादत आह न चेति[१६]। प्रतीत्युत्तरकालो ऽयं नियमो न प्रतीत्युपयोगीत्युक्तमिति । चोदयति संज्ञेति सपादद्वयेन । गमकत्वमेव हि संज्ञात्वं, तच्चाऽवगत्युत्तरकालभावित्वान्नाऽवगत्यङ्गम्, अतः संबन्धान्तरं वक्तव्यं, न ह्यसति सं-

तस्माद्गमकता पश्चाद्धूमादेरिव जायते ।
सा ऽनङ्गं तद्वदेव स्याद्' नेयं धूमादिभिः समा॥१८॥
'निरूपिते ऽविनाभावे तत्र तत्कारिता ह्यसौ ।
गमकत्वेन पूर्वं च तत्र नोत्पद्यते मतिः ॥१९॥
इह वाचकतायाः प्राङ्गाऽविनाभावितामतिः ।
यदैव चेह सम्बन्धं वृद्धेभ्यः प्रतिपद्यते ॥२०॥
तदैव गमको ऽस्यायमिति नाऽन्यस्वरूपतः' ।
'कथयन्ति क्व चित्तावद्बोद्धव्यो ऽस्मादयं त्विति ॥२१॥
क्व चिद्वाचक इत्येवं वाच्यो ऽयमिति चोच्यते ।
क्व चिदुच्चरिताच्छब्दाद्दृष्ट्वा ऽर्थविषयां क्रियाम् ॥२२॥
केषां चित्तत्र बोद्धृत्वमनुमानात् प्रतीयते ।
एतेनाऽस्माद्यतः शब्दादर्थो ऽयमवधारितः ॥२३॥

---

बन्धे संज्ञा संज्ञिनं गमयति, गमकता तु पश्चादुपजायमाना धूमादिलिङ्गस्येव वाचकत्वस्याप्यनङ्गमेवेति । परिहरति नेयमिति। वैषम्यमेव दर्शयति निरूपिते इति[१९] सार्द्धेन द्वयेन। धूमादौ देशकालादिद्वारा संबन्धनियमे ऽवगते तत्संबन्धेनैव गमकता, न तु सैव प्रथमं गृह्यते, शब्दस्य तु प्रथमं गमकत्वं वृद्धेभ्यो गृह्यते, न संबन्धान्तरं, तद्ग्रहणादेव च गमकता भवति। न चात्माश्रयता, पूर्वपूर्ववृद्धेषु गमकत्वग्रहणादुत्तरोत्तरेषां गमकतोपपत्तेरिति ।

वृद्धेभ्यः प्रतिपत्तिमेव त्रिधा दर्शयति कथयन्तीति[२१] त्रयेण। ननु वृद्ध*व्यवहारे वाक्यानन्तरं वाक्यार्थे प्रतीतिदर्शनात्तयोरेव वा-

---

* वृद्धेति नास्ति ३ पु. ।

तेन नूनमिमौ सिद्धौ लोके वाचकशक्तिकौ' ।
इत्थं वाचकता सिद्धा संकीर्णा ऽपि ततः परम् ॥२४॥
अन्वयव्यतिरेकाभ्यां निष्कृष्टे ऽर्थे नियम्यते* ।
'बहुजातिगुणद्रव्यकर्मभेदाऽवलम्बिनः ॥२५॥
प्रत्ययात् सहसा जाता श्रौतलाक्षणिकात्मकात् ।
न लोकः कारणाऽभावान्निर्धारयितुमिच्छति' ॥२६॥
बलाऽबलादिसिद्ध्यर्थं वाक्यज्ञास्तु विविञ्चते ।
'कक्षान्तरितसामान्यविशेषेषु हि दुर्बलः ॥२७॥

---

व्यवाचकता स्यात्, न पदपदार्थयोरत आह इत्थमिति[२४] । गोशब्दस्य गोत्वमात्रे निष्कृष्टे वाचकत्वानिर्णय इति ।

नन्वनेकजातिव्यक्त्यात्मकमेव लोको गोशब्दाद्यर्थं मन्यते, ततः कथं जातेरेव निष्कृष्टायाः शब्दार्थत्वमत आह बह्विति[२५] सार्द्धेन । संमूर्च्छिताऽनेकार्थसंनिधाने शब्दः प्रयुक्तः कियत्यप्यर्थजाते प्रत्ययं करोति, तेन चाऽविविक्ताऽभिधेयलाक्षणिकांशेनापि दृष्टार्थव्यवहारसिद्धेर्न लोकः प्रयोजनाऽभावान्निर्धारयेत्, न तावता निर्धारणं नास्तीति मन्तव्यमिति ।

भवतां वा किं तद्विवेके प्रयोजनम्, अत आह बलाऽबलेति[२७]। एतदेव विवृणोति कक्षान्तरितेति द्वयेन । परं सामान्यं वस्तुत्वं, द्रव्यत्वपृथिवीत्वप्राणित्वगोत्वपशुत्वादीन्यपरसामान्यानि, तत्र द्रव्यत्वं वस्तुत्वाऽपेक्षया विशेषः, पृथिवीत्वाद्यपेक्षया च सामान्यम्; एवं पृथिवीत्वादिकमपि पूर्वपूर्वाऽपेक्षया विशेषः, उत्तरोत्तराऽपेक्षया च सामान्यम् । तत्र यस्य सामान्यस्य यः शब्दो वाचकः स तद्विशेषे

---

* अवधारिते इति १ पु. पा. ।

सामान्यवचनःशब्दो जायते लक्षणाबलात्।
तेनाऽवश्यं विवेक्तव्यं शब्देन कियदुच्यते ॥२८॥
कियद्वा नित्यसम्बन्धादभिधेयेन लक्ष्यते*'।
'तत्र प्रयोगबाहुल्यात्तत्प्रयोगेष्वसत्स्वपि ॥२९॥
प्रयोगात्परसामान्ये सति चाप्यप्रयोगतः।
सास्नाद्येकार्थसम्बन्धिगोत्वमात्रस्य वाचकः ॥३०॥
गोशब्द इति विज्ञानमन्वयव्यतिरेकजम्'।
तस्माद्गमकतैवादावभिधायकता पुनः ॥३१॥

---

स्वाऽभिधेयसामान्यस्य विशेषे स्वाऽभिधेयसामान्यरूपकत्वान्तरिते लक्षणया वर्त्तमानो दुर्बलो भवति, यथा आहवनीये जुहोतीत्यत्र होमसामान्यवचनो जुहोतिशब्दः स्वाऽभिधेयसामान्ये बुद्धिमाधाय पश्चात्तदन्तरितेषु विशेषेषु पत्नीसंयाजेषु बुद्धिमादधल्लाक्षणिकत्वाद्दुर्बलो भवति, गार्हपत्ये पत्नीसंयाजानिति तु पत्नीसंयाजानेव विशेषान् श्रुत्या ऽभिदधच्छीघ्रत्वात्प्रबलो भवतीति तेष्वाहवनीयो गार्हपत्येन बाध्यते। वाच्यगम्यमानांशाऽविवेके तु नेदं बलाऽबलं सिध्येत्, अतो विवेक्तव्यं किमभिधेयं, किमभिधेयसंबन्धात् लक्ष्यतइति।

कः पुनर्विवेकोपायः, अन्वयव्यतिरेकावित्युक्तं, तौ दर्शयति तत्रेति[२९] द्वयेन। तत्र गोत्वे भूयः प्रयोगात्तद्विशेषेषु शाबलेयादिष्वसत्स्वपि बाहुलेयादिषु प्रयोगाद् गोत्वाऽन्वये गोशब्दस्याऽन्वयात् परसामान्ये द्रव्यत्वादौ सत्यपि गोत्वाऽभावे ऽश्वादावप्रयोगाद् गोत्वव्यतिरेके गोशब्दस्य व्यतिरेकात् तदेव तस्य वाच्यमिति तेन गमकत्वमेव विविच्यते न संबन्धान्तरमित्युपसंहरति तस्मादिति[३१]।

---

* गम्यते इति ३ पु. पा.।

तन्निमित्तेति सम्बन्धः संज्ञासंज्ञित्वलक्षणः ।
सम्बन्धनियमो ऽयं तु या ऽविनाभावितोच्यते ॥३२॥
सम्बन्धग्रहणात्पूर्वं यस्मान्न गमयत्यतः ।
गवादेर्नाऽभिधाशक्तिर्देवदत्तपदे यथा* ॥३३॥

---

एवमपि कथमभिधायकत्वमत आह अभिधायकेतेति । गमकतामात्रे ऽवधारिते तत एव तद्विशेषो ऽभिधायकत्वमपि सिद्ध्यति, गमकविशेषा ह्येते, इन्द्रियं लिङ्गमभिधायकमिति, यत्सत्तामात्रेण स्वसंनिकृष्टमर्थं गमयति तदिन्द्रियं, यत्तु व्याप्यतया ज्ञायमानं व्यापकं गमयति तल्लिङ्गम्, यत्तु गमकत्वाऽवगमादेव गमयति तदभिधायकं; तदिह गमकत्वे गृहीते पश्चात्तन्मात्रेणैवाऽसत्यपि सम्बन्धान्तरे शब्दादर्थं प्रतिपद्यमानो लिङ्गादिविलक्षणमभिधायकत्वरूपं गमकत्वं संज्ञाऽपरपर्यायमध्यवस्यतीति संज्ञासंज्ञित्वमेव सम्बन्ध इति ।

नन्वन्वयव्यतिरेकौ वदता ऽविनाभावो ऽङ्गीकृत इति कथं न सम्बन्धान्तरमस्तीत्युच्यते, ऽत आह सम्बन्धेति[३२] । गमकत्वस्यैव सम्बन्धस्य संकीर्णरूपेणाऽवगतस्य विषयनियमो ऽन्वयव्यतिरेकाभ्यामवगम्यते, अस्यायं गमको ऽस्यायमिति, अतः स एव सम्बन्धः, न हि शब्दार्थस्वरूपयोर्देशतः कालतो वा ऽन्वयव्यतिरेकौ विद्येते इति हि दर्शितम् । तेन न तौ प्रतीत्यङ्गं किं तु गमकत्वविवेकाङ्गं, गमकत्वं तु प्रतीत्यङ्गमिति ।

"यदि प्रत्यायकः शब्दः, प्रथमश्रुतः किं न प्रत्याययतीऽऽति"† भाष्यार्थं प्रयोगेण दर्शयति सम्बन्धेति[३३]। देवदत्तादिशब्दो हि यत्र संकेत्यते तदेव गमयति, तेनास्य न कचित्स्वभावशक्तिरिति ।

---

* पदेति १ पु पा. । † शा. भा. पृ. १२ प. १९ ।

यथैव गमकः शब्दो व्यवहारात्प्रतीयते ।
तथैव शक्तिविज्ञानं तस्योपायो ऽवगम्यते ॥३४॥
स्वरूपग्रहणं चास्य यथा व्याप्रियते फले ।
तथा सम्बन्धविज्ञानं नाऽशक्तिस्तत्कृता भवेत् ॥३५॥
यत्साधकतमत्वेन कस्य चित्किं चिदुच्यते ।
तस्याऽनुग्राहकाऽपेक्षा न स्वशक्तिविघातिनी ॥३६॥
न हि तत्कारणं लोके वेदे वा किं चिदीदृशम् ।
इतिकर्तव्यतासाध्ये यस्य नाऽनुग्रहे ऽर्थिता ॥३७॥
प्रत्यात्मनियतत्वाच्च यथैव करणं भवेत् ।
बाह्याऽन्तरविभागेन क्व चित्स्याद्वा विवक्षया ॥३८॥

---

"सर्वत्र नो दर्शनं प्रमाणम्"* इति परिहारभाष्यार्थमाह यथैवेति[३४] । उपायो ऽङ्गमितिकर्त्तव्यता, न हि तदपेक्षया शक्तिविघातो भवति । एतदेव दृष्टान्तेन दर्शयति स्वरूपेति[३५] । न केवलं शब्दस्यान्यस्यापि करणस्याऽनुग्राहकाऽपेक्षा नाऽशक्तिमापादयतीत्याह यदिति[३६] । कथमित्याह न हीति[३७] । सर्वत्र चक्षुरादौ प्रदीपाद्यर्थित्वदर्शनादैकान्तिकं सहायाऽपेक्षणं नाऽशक्तिमापादयति, प्रत्युतेतिकर्त्तव्यतयैव करणत्वं, तदभावे एव तन्न सिध्यति, प्रतिकरणं तदपेक्षाया नियतत्वादित्याह प्रत्यात्मेति[३८] ।

---

* शा. भा. पृ. १२ प. २० ।

उद्विग्नो ह्यन्धकारेण कश्चिदेवं ब्रवीत्यपि ।
किं चक्षुषा ममैतेन दृष्टं दीपेन यन्मया ॥३९॥
नित्यवृत्तौ तु नाऽन्धानां दृष्टिर्दीपशतैरपि ।
रूपादिदर्शने यस्मात्तस्माच्चक्षुः प्रकाशकम् ॥४०॥
शरीरात्ममनोयोगादसाधारणताबलात् ।
विज्ञानाऽऽसत्तिभावाच्च चक्षुः कारणमिष्यते ॥४१॥
तथैवेहापि सम्बन्धज्ञानमङ्गं प्रसिद्धितः ।
गौरवात्करणत्वेन मतं चेत्केन वार्यते ॥४२॥

---

कथं पुनः साधनत्वाविशेषे करणेतिकर्तव्यताविभागो, ऽत आह बाह्येति । यत्फलस्य प्रत्यासन्नं चक्षुरादिकं तत्करणं, बाह्यं तु दीपादिकमितिकर्त्तव्यतेति । क चित् बाह्यस्यापि विवक्षातः करणत्वमस्त्येवेत्याह क चिदिति । अत्रैवोदाहरणमाह उद्विग्न इति[३९] । स्वरसतस्त्वान्तरस्यैव करणत्वमित्याह नित्येति[४०] । नित्यत्वं स्वारसिकमिति। यस्मान्नाऽन्धानां दृष्टिर्दर्शनं तस्माद्रूपदर्शने चक्षुरेव करणमित्यन्वय इति ।

नन्वात्ममनःसंयोगः शरीरात्मसंयोगश्च ज्ञानाख्यस्य फलस्य एकार्थसमवायित्वादत्यन्तप्रत्यासन्नौ, तत्कथं चक्षुषः करणत्वमत आह शरीरेति[४१] । आत्ममनःसंयोगो हि सर्वज्ञानसाधारणः चक्षुरूपज्ञानस्याऽसाधारणत्वात् तदपेक्षया ऽभ्यर्हितत्वात् करणं दीपाऽपेक्षया त्वासत्तेरिति । प्रकृते ऽपि शब्दः प्रत्यासत्तेः करणं सम्बन्धज्ञानं त्वङ्गं, तथैव लोकप्रसिद्धेरित्याह तथेति[४२] ।

यथा चक्षुरितीदं तु व्यभिचारित्वमुच्यते ।
देवदत्तोऽपि चाऽव्यक्तां शक्तिमिच्छन्ति युक्तितः ॥४३॥
प्रकाशेऽवस्थिते बाह्ये नाऽन्धे रूपं प्रतीयते ।
फलाऽऽनन्तर्यतश्चापि चक्षुः करणमिष्यते ॥४४॥
पुरुषाऽधीनविज्ञानस्तेभ्यः प्रागनिरूपितः ।
यः संज्ञासंज्ञिसम्बन्धः स चेष्टश्चेद् ध्रुवं कृतः ॥४५॥

---

यदि तु कुतश्चित्कारणात्तत्रैव गौरवं मत्वा करणत्वं विवक्ष्यते तन्न निवारयाम इत्याह गौरवादिति ।"यथा चक्षु"*रित्यादिभाष्यार्थमाह यथेति[४३] । दृष्टान्तोऽपि साध्यविकल इत्याह देवदत्तेऽपीति । दर्शितमिदं प्रत्यक्षसूत्रइति । केन पुनर्विशेषेण चक्षुष एव द्रव्यप्रकाशकत्वं बाह्यप्रकाशस्य साहायकं भाष्यकारेणोक्तम, अत आह प्रकाशे इति[४४] । दर्शितमेवैत†दिदानीं भाष्यसमर्थनार्थमुक्तमिति न पौनरुक्त्यमिति ।

दर्शितः सम्बन्धसद्भावः, स तु कृतको नित्यो वेति विचारयन् भाष्यकारः पूर्वपक्षमाह "यदि प्रथमश्रुतो न प्रत्याययती"‡त्यादिना, तस्यार्थमाह पुरुषेति[४५] । संज्ञात्वं हि पुरुषेभ्यो गम्यते इत्युक्तं, तेनेदं देवदत्तादिशब्दवदस्येयं संज्ञा इति वदद्भिः पुरुषैरेव कृतं स्यादिति । यदि संज्ञात्वातिरिक्तं किंचित्सम्बन्धान्तरं स्यात् स्यादपि नित्यता, न तु तदस्तीत्युक्तं "स्वभावतो ह्यसम्बन्धावेता"§वित्यादिना भाष्येण,

---

* शा. भा. पृ. १२ प. २३ ।

† एतदिति नास्ति ३ पु. ।

‡ शा. भा. पृ. १२ प. २४ ।

§ शा. भा. पृ. १३ प. २ ।

भिन्नदेशाद्यधिष्ठानाद्यथा रज्जुघटादिषु ।
समं नास्त्यनयोः किं चित्तेनाऽसङ्गतता स्वतः ॥४६॥

इति सम्बन्धाक्षेपवादः ।

अथ स्फोटवादः ।

आधारात्मनि विज्ञाते सुखमाधेयबोधनम् ।
तस्यैव तावत्प्रस्तावादथ गौरित्यतो ऽब्रवीत् ॥१॥

---

तद्व्याचष्ट भिन्नेति[४६] । सर्वस्य हि केन चिदभिन्नेन सम्बन्धो भवति, न चानयोर्देशं कालं वा एकरूपमुपलभामहे*, भिन्नदेशाद्यधिष्ठानात्; दर्शितमिदं "मुखे हि शब्द"†मित्यादिना, अतः पृकग्भूतयोस्त्वनयोः स्वतो ऽसंगतयोः पश्चात्पुरुषेभ्यो जायमानो ऽयं सञ्ज्ञासंज्ञिसंबन्धो रज्जुघटवत्पुरुषकृत इति ।

इति श्रीपार्थसारथिमिश्रविरचिते न्यायरत्नाकरे संबन्धाक्षेपवादः ॥

अथ स्फोटवादः ।

अथ गौरित्यत्र कः शब्द इति संबन्धानित्यत्वसाधनाऽवसरे केन प्रयोजनेन कया वा संगत्या शब्दस्वरूपानिरूपणं क्रियते, अत आह आधारेति[१] । संबन्धिद्वयाऽऽधारो हि संबन्धो नाऽनिरूपितयोस्तयोर्निरूपयितुं शक्यते, न हि वर्णाऽतिरिक्तस्य शब्दस्य शशविषाणायमानस्य संबन्ध एव संभवति नतरां नित्यत्वम्, अतः प्रयोजनवद्वर्णानां शब्दत्वप्रतिपादनं, संबन्धप्रस्तावादेव च नाऽप्रसक्तं क्रियते । "अथ गौ"‡रिति तु सिद्धान्तवादिवचनम् । आस्तां तावत्संबन्धः, शब्दस्वरूपमेव तावत् कीदृशमिति निरूपयाम इति ।

---

* देशं कालमन्यद्वा किं चिदुपलभामहे इति ३ पु. पा. ।

† शा. भा. पृ. १३ प. २ । ‡ शा. भा. पृ. १३ प. ७ ।

प्रत्यक्षे ऽपि विसंवादो येषां कः स्वयमुत्तरम् ।
तेभ्यो दद्यादिति ज्ञात्वा वृद्धानां मतमब्रवीत् ॥२॥
तत्राऽर्थप्रत्ययद्वारं कृतं शब्दनिरूपणम् ।
यैरासतां तु ते तावत्प्रत्यक्षेण परीक्ष्यते ॥३॥
प्रत्यक्षं नाऽसमर्थं नस्तेन चार्थे ऽवधारिते ।
न हेतुर्बलवानन्यः परीक्ष्येत यतस्ततः ॥४॥
तस्माच्छ्रोत्रपरिच्छिन्नो यद्यर्थं गमयेन्न वा ।
सर्वथा तस्य शब्दत्वं लोकसिद्धं न हीयते ॥५॥

---

"गकारौकारविसर्जनीया इति भगवानुपवर्ष"* इत्युपवर्षग्रहणं किं परमतत्वज्ञापनाय, नेत्याश्रित्यार्थान्तरमाह प्रत्यक्षे इति[२] । यः खलु वैयाकरणः सर्वजनप्रत्यक्षे ऽपि वस्तुनि विसंवदते तमनेन वृद्धमतोपन्यासेनोपालभतइति । श्रोत्रग्रहणे ह्यर्थे लोके शब्दशब्दः प्रसिद्धः, ते च श्रोत्रग्रहणा इति प्रत्यक्षबलेन वर्णा एव शब्द इति परीक्षितं, पश्चाच्चाऽर्थप्रत्ययद्वारेण । तदयुक्तम, अर्थप्रत्ययद्वारेणैव हि वैयाकरणैर्वर्णाऽतिरिक्तः शब्दः साधितः, अतस्तथैव निरूपणं कर्त्तव्यं, किं प्रत्यक्षपरीक्षया, ऽत आह तत्रेति[३] । किमित्येवं क्रियते, ऽत आह प्रत्यक्षमिति[४] । यदि प्रत्यक्षमत्राऽसमर्थं स्याद्यदि वा कारणान्तरं ततो बलवत् ततः कारणान्तरेण परीक्ष्येत न तु तदस्तीति । उपसंहरति तस्मादिति[५] । श्रोत्रग्राह्यत्वमेव शब्दत्वजातीयलक्षणं न तु प्रत्यायकत्वमिति । ततश्च यद्यपि श्रोत्रग्राह्यस्याऽर्थप्रत्यायनाऽसामर्थ्या-

---

* शा. भा. पृ. १३ प. ७ ।

यदि त्वर्थगतौ शक्तिर्न स्यादस्य ततः पुनः ।
वस्त्वन्तरं प्रकल्प्येत विना शब्दप्रसिद्धितः ॥६॥
अग्न्यादीन् गमयन्तो ऽपि शब्दा धूमादयो न हि ।
न वा ऽप्रत्यायकत्वात्स्यादेकवर्णेष्वशब्दता ॥७॥
न च प्रागर्थविज्ञानाच्छ्रोत्रग्राह्ये न शब्दधीः ।
न चाऽर्थज्ञानतः पश्चादश्रौत्रे ऽपि च शब्दता ॥८॥
परस्पराऽनपेक्षाश्च श्रोत्रबुद्ध्या स्वरूपतः ।
वर्णा एवावगम्यन्ते न पूर्वाऽपरवस्तुनी ॥९॥
अल्पीयसा ऽपि यत्नेन शब्दमुच्चरितं मतिः ।

---

द्वस्त्वन्तरं कल्प्यते तथापि न तस्य शब्दशब्दवाच्यता, प्रसिद्धिविरहादित्याह यदीति[6] ।

यस्त्वर्थप्रत्यायनमेव शब्दलक्षणं वक्ति तस्याऽव्याप्त्यतिव्याप्ती स्यातामित्याह अग्न्यादीनिति[7]। किं चैवं सत्येकस्यैवाऽनुष्ठातृभोक्तृत्ववदेकस्यैव कदा चित् शब्दत्वमशब्दत्वं च स्यात्, न त्वेवं लोकप्रसिद्धिरस्तीत्याह न चेति[8]। तामिदानीं प्रत्यक्षपरीक्षां प्रारभते परस्परेति[9]। "ते च श्रोत्रग्रहणा"*इति भाष्ये गकारादीनामेव श्रौत्रत्ववचनात् पूर्वाऽपरवस्तुनोः श्रौत्रत्वं निराकृतं, पूर्वशब्देन वर्णकारणभूतास्तदवयवा निराकृताः, अपरशब्देन गत्वमत्वमवयवी गोशब्दत्वं समुदायः स्फोटश्चेति।

पूर्ववस्तुनि तावत्प्रत्यक्षं प्रमाणं नास्तीत्याह अल्पीयसेति[10] । साकल्यवैकल्यग्रहणे हि स्यादवयवसिद्धिः, न तु तदस्तीति। न चा-

---

* शा. भा. पृ. १३ प. ९ ।

यदि वा नैव गृह्णाति वर्णं वा सकलं स्फुटम् ॥१०॥
पृथङ् न चोपलभ्यन्ते वर्णस्याऽवयवाः क्व चित् ।
न च वर्णेष्वनुस्यूता दृश्यन्ते तन्तुवत्पटे ॥११॥
तेषामनुपलब्धेश्च न ज्ञाता लिङ्गसङ्गतिः ।
नाऽऽगमस्तत्परश्चास्ति नाऽदृष्टे चोपमा क्व चित् ॥१२॥
न चाप्यनुपपत्तिः स्याद्वर्णस्याऽवयवैर्विना ।
यथा ऽन्यावयवानां हि विना ऽप्यवयवान्तरैः ॥१३॥
प्रत्यक्षेणाऽवबुद्धश्च वर्णो ऽवयववर्जितः ।
किं न स्याद्, व्योमवच्चात्र लिङ्गं तद्रहिता मतिः॥१४॥

---

ऽवयवानामपि वर्णाऽनुस्यूतानां पृथगवस्थितानां वा ऽस्ति ग्रहणमित्याह पृथगिति[11] ।

न चाऽनुमानमपि संभवति, प्रत्यक्षाऽगृहीतैस्तैः कस्य चिल्लिङ्गस्य संबन्धग्रहणाऽसंभवादित्याह तेषामिति[12] ।

न चाऽऽगमेनोपमानेन वा तत्सिद्धिरित्याह नागम इति । नाऽप्यर्थापत्तिः, परमाणुवदेवाऽनवयवत्वे ऽपि वर्णानामुपपत्तेरित्याह न चेति[13] ।

मा भूद्वर्णाऽवयवैरनुपलब्धेर्विशेषतः संबन्धदर्शनं, सामान्यतोदृष्टं तु संभवति, प्रत्यक्षत्वस्य घटादौ साऽवयवत्वेन व्याप्तेरत आह प्रत्यक्षेणेति न स्यादन्तेन । निरवयवत्वे ऽपि गुणादिषु प्रत्यक्षत्वदर्शनादिति । निरवयवत्वमनुमानेन गम्यतइत्याह व्योमवदिति ।

संप्रति परवस्तु पराभिमतत्वं* निराकर्त्तुं व्यक्तिभेदाऽभावमाह

---

* परवस्तु गत्वामिति १ पु. पा. ।

तद्वच्चास्यैकबुद्धित्वाद्देशभेदे ऽप्यभिन्नता ।
ननु भेदमतिर्न स्यात्तथाप्येकत्वधीः कुतः ॥१५॥
सामान्येषु ममैका धीस्तद्व्यक्तिषु च भेदधीः ।
न हीष्टं भेदमात्रं हि न स्यादेकत्वधीर्यतः ॥१६॥
व्यक्तेस्तावन्न सामान्यं भिन्नरूपं प्रतीयते ।
वर्णेष्वन्यत्र शब्दत्वान्नाऽन्यच्चेद्वर्ण एव सः ॥१७॥
स एवेति मतिर्नापि सादृश्यं, न च तत्क चित् ।
विना ऽवयवसामान्याद्वर्णेष्ववयवा न च ॥१८॥
प्रत्यक्षविषयत्वाच्च नाऽन्याऽपोहो ऽपि युज्यते ।
वाचकश्चात्र लिङ्गं वा न तदानीं प्रतीयते ॥१९॥

---

तद्वदिति[१५]। व्योमवत्प्रत्यभिज्ञानादेक एव गकार इति किं गाऽन्तरेणेति। चोदयति नन्विति । द्रुतो विलम्बितो मध्यम इति बुद्धिभेदो ऽसति गकारभेदे न स्यादिति। सिद्धान्तवादी त्वाह न चाऽपीति ।

परः पुनराह समान्येष्विति[१६] । अस्ति हि ममोभयमित्याह न हीति । दूषयति व्यक्तेरिति[१७] । मा भूत् जातिः, सादृश्यरूपं तु सामान्यं किं न भवति, अत आह स एवेति सादृश्य[१८]मन्तेन । विशेषतश्च न वर्णेषु सादृश्यं संभवतीत्याह न चेति। निरवयवत्वं च प्रागेव दर्शितमिति ।प्रत्यक्षत्वाच्चैकबुद्धेर्नाऽभावात्मकाऽपोहसामान्यविषयत्वं संभवतीत्याह प्रत्यक्षेति[१९]। यत्तु अपोहस्य प्रमाणं वाचको लिङ्गं वा तत् गकारोपलब्धिवेलायां नास्तीत्याह वाचक इति ।

गकारादिषु सामान्यं शब्दत्वं कल्प्यते यथा ।
गोत्वं च शाबलेयादौ तथैतत्किं न कल्प्यते ॥२०॥
'शाबलेयगकारादीन् निष्पन्नान् व्यक्तिरूपतः ।
सामान्यधीर्न गृह्णातीत्यतो जातिरपीष्यते ॥२१॥
न तु द्रुतादिभेदे ऽपि निष्पन्ना संप्रतीयते ।
गव्यक्त्यन्तरविच्छिन्ना गव्यक्तिरपरा स्फुटा ॥२२॥
तेनैकत्वेन वर्णस्य बुद्धिरेकोपजायते' ।
विशेषबुद्धिसद्भावो भवेद् व्यञ्जकभेदतः ॥२३॥

---

शङ्कते गकारादिष्विति[२०]। सर्वसामान्याऽपह्नववादिनां सौगतानाम् इदं व्यतिरेकाऽव्यतिरेकविकल्पेन तन्निराकरणं युज्यते, तव तु शब्दत्वगोत्वादिवत् गत्वादीनामपि सम्भवात् किं विकल्पेनेति। परिहरति शाबलेयेति[२१] सार्द्धद्वयेन। न विकल्पेन सामान्यं निवारयामः किं तु शब्दत्वात् व्यतिरिक्तं गत्वादिकं न प्रतीयतइति, भिन्नेषु हि गकारादिष्वयमपि शब्दो ऽयमपि शब्द इति, तथा शावलेयादिष्वयमपि गौरयमपि गौरिति सामान्यधीर्नाऽन्तरेण सामान्यं सिद्ध्यतीति युक्तस्तदभ्युपगमः, द्रुतादिषु तु गकारव्यक्तिभेदाऽभावात्तदेकत्वादेवैकबुद्धिरिति न सामान्यसिद्धिरिति।

कथमसति व्यक्तिभेदे द्रुतो गकारो मध्यमो विलम्बित इति च भेदबुद्धिरत आह विशेषेति[२३]। न ह्यत्राऽयं गौरयमपि गौरितिवदयं गकारो द्रुतो ऽयं मध्यम इति व्यक्तिभेदः प्रतीयते, किं तु गकारो ऽनेन द्रुतमुच्चरितो ऽनेन मध्यम इति एक एव गकारो देवदत्तवत् शौर्यादिभेदभिन्नो ऽवस्थाभेदभिन्नः प्रतीयते, अवस्थाभेदश्च व्यञ्जकध्वनिभेदनिबन्धन इति।

यथैव तव गत्वादि गम्यमानं द्रुतादिभिः ।
विशेषैरपि नाऽनेकमेवं वर्णो ऽपि नो भवेत् ॥२४॥
त्वया ऽपि व्यञ्जक*व्यक्तिभेदाद्भेदो ऽभ्युपेयते ।
ममापि व्यञ्जकैर्नादैर्भेदबुद्धिर्भविष्यति ॥२५॥
तेन यत्प्रार्थ्यते ज्ञाने† तद्वर्णादेव लभ्यते ।
व्यक्तिलभ्यं च नादेभ्य इति गत्वादिधीर्वृथा ॥२६॥
कल्पयित्वा ऽपि तत्पश्चाद्विभुत्वैकत्वनित्यताः ।
प्रत्येकवृत्तिता चाऽस्य भवेयुर्महतः श्रमात् ॥२७॥
द्वयसिद्धस्तु वर्णात्मा नित्यत्वादि यथैव च ।
कल्पितस्येष्यते तद्वत्सिद्धस्यैवाऽभ्युपेयताम् ॥२८॥

---

किमिति पुनर्विशेषबुद्धिवशेन व्यक्तिभेद एव नाऽभ्युपगम्यते, ऽत आह यथेति[२४] । गत्वमपि हि तव द्रुतादिभिन्नं भासते अथ च न-भिद्यते, तथा गकारो ऽपि न भेत्स्यतइति । एतावांस्तु विशेषः, तव व्यञ्जकव्यक्तिभेदात्सामान्ये भेदाऽवभासः, मम तु व्यञ्जकनादभेदा-द्वर्णभेदाऽवभास इत्याह त्वयेति[२५] । उपसंहरति तेनेति[२६] । गत्वा-द्यङ्गीकरणे च कल्पनागौरवमपि स्यादित्याह कल्पयित्वेति[२७] । ननु तवापि गव्यक्तौ सर्वमिदं कल्पनीयमेवाऽत आह द्वयेति[२८] । धर्मिकल्पनातो लघीयसी धर्ममात्रकल्पनेति ।

---

* अव्यञ्जकेति १ पु. पा. ।

† ज्ञाते इति १ पु. पा. ।

प्रत्येकसमवाये च क्लेशो नैव भविष्यति।
व्यञ्जनेषु च धीभेदो नैव तादृक् प्रतीयते ॥२९॥
दृश्यते ऽजनुरागेण भेदो यो नाम, तत्र नः।
विवेको ऽस्त्येव न ह्येष केवलानां प्रतीयते ॥३०॥
अक्ष्वप्येवं परोपाधिर्द्रुतादिप्रत्ययो यथा।
वर्णाऽऽश्रितत्वाद्वर्णत्वव्यञ्जनप्रत्ययो यथा ॥३१॥
गकारो ऽत्यन्तनिष्कृष्टगत्वाऽऽधारो न गम्यते।
गाऽन्यबुद्ध्यनिरूप्यत्वात्परैः कल्पितगत्ववत् ॥३२॥
अवस्तुत्वेन साध्यत्वान्निषेधाद्धेतुसाध्ययोः।
सपक्षे ऽन्यतराऽसिद्धिर्न दोषायात्र जायते ॥३३॥

---

धर्मो ऽपि प्रत्येकसमवायी नाऽस्माकं कल्पनीय इत्याह प्रत्येकेति[२९]। किं च, व्यञ्जनेषु तु धीभेदो ऽपि मध्यमादिरूपो नास्ति केवलद्रुताऽवभासात्, अतो ऽसति व्यक्तिभेदे निर्निबन्धनमेव तत्र सामान्यमित्याह व्यञ्जनेष्विति नामा[३०]ऽन्तेन। कथमयं विवेको, ऽजनुरागरहितानामदर्शनात्, तदाह तत्रेति। एवं चाऽक्ष्वपि शक्यविवेकमपरोपाधिकत्वमनुमातुमित्याह अक्ष्वपीति[३१]। वर्णत्वादिसामान्ये व्यञ्जनेषु च यो द्रुतादिप्रत्ययस्तद्वदिति। जात्यभावे प्रयोगमाह गकार इति[३२]। अन्यबुद्धिर्विपरीतबुद्धिः।

ननु वादिनो मीमांसकस्याऽसिद्धं गत्वं कथं सपक्षो भवत्यत आह अवस्तुत्वेनेति[३३]। गत्वाऽऽधारो न गम्यतइति चाऽनिरूप्यत्वादिति च निषेधात् नञ्प्रयोगात् गत्वाधारत्वमन्यबुद्धिनिरूप्यत्वं वा

वर्णत्वाच्चापि साध्यो ऽयं यकारादिवदेव च ।
व्यतिरेकस्य* चाऽदृष्टेर्नात्र दृष्टं निवर्तकम् ॥३४॥
गोत्वादिवारणे त्वेवं दृष्टबाधः स्फुटो भवेत् ।
नाऽन्यथा हि मतिस्तत्र स्यात्सामान्यविशेषयोः ॥३५॥
न चाप्यत्रैकवस्तुत्वे भेदो व्यञ्जकभेदतः ।
न पिण्डव्यतिरेकेण व्यञ्जको ऽत्र ध्वनिर्यथा ॥३६॥
पिण्डव्यङ्ग्यैव गोत्वादिर्जातिर्नित्यं प्रतीयते ।
तेन भिन्नेषु पिण्डेषु जातिरेका प्रतीयते ॥३७॥

---

वस्तुत्वेनाऽविद्यमानत्वेन सपक्षे ऽस्माभिः साध्यं दर्शयितव्यं, शक्यते चाऽविद्यमाने वस्त्वन्तराऽभावो दर्शयितुं,शशविषाणइव तैक्ष्ण्यस्य, अतो वाद्यसिद्धिः सपक्षस्यात्र न दोषः, तदपि गत्वं गत्वाधारो गाऽन्यबुद्धिनिरूप्यं च न भवत्येवेति ।

प्रयोगान्तरमाह वर्णत्वादिति[३४] । ननु दृष्टविरुद्धमिदम्, पकाऽऽकाराऽवगमात् गोत्वाद्यभावाऽनुमानवदत आह व्यतिरेकस्येति। उक्तमिदं व्यक्तिरेकत्रैका, न व्यतिरिक्तं सामान्यं दृश्यतइति । शाबलेयादयो गोत्वाधारा न भवन्ति व्यक्तित्वात् ककारादिवदिति वदतां दृष्टविरोधः स्यादित्याह गोत्वादीति[३५] । कथमित्याह नान्यथेति । तत्रापि व्यक्तयेकत्वादेकबुद्धिर्भेदबुद्धिस्तु व्यञ्जकभेदादिति चेत्, तत्राह न चेति[३६] । कारणमाह न पिण्डेति । उपसंहरति तेनेति[३७] ।

---

* व्यतिरिक्तस्येति ३ पु. पा. ।

ननु यस्य द्वयं श्रौत्रं तस्य बुद्धिद्वयं भवेत् ।
भवतोऽतीन्द्रियत्वात्तु कथं नादैर्विशेषधीः ॥३८॥
नादेन संस्कृताच्छ्रोत्राद्यदा शब्दः प्रतीयते ।
तदुपश्लेषतस्तस्य बोधं के चित्प्रचक्षते ॥३९॥
नैव वा ग्रहणं तेषां शब्दे बुद्धिस्तु तद्वशात् ।
संस्काराऽनुकृतेः सोऽपि महत्त्वाद्यवबुध्यते ॥४०॥

---

चोदयति नन्विति[३८] । श्रौत्री हीयमनुवृत्तिव्यावृत्तिबुद्धिः, तस्याः श्रौत्रेणैव विषयेण भवितव्यं, मम तु गत्वं तद्व्यक्तिश्च द्वयं श्रौत्रं, तव तु ध्वनीनां वायवीयानामश्रौत्रत्वात् न तन्निबन्धना विशेषबुद्धिः सिद्ध्यतीति । परिहरति नादेनेति[३९] । न वाय्वात्मा तत्संयोगविभागात्मा वा नादः, किं तु वायुगुणः शब्दविशेषो नादो ध्वनिरिति चोच्यते । द्विविधो हि शब्दो वर्णो ध्वनिश्च, द्वयोरनुगतं शब्दत्वं, वर्णत्वं ध्वनित्वं च तदवान्तरसामान्ये, वर्णविशेषा गकारपकारादयः, ध्वनिविशेषाः शङ्खघोषादयः । ध्वन्यात्मकश्च शब्दो वायुगुणः, स एव च वर्णात्मकानां गकारादीनामभिव्यञ्जकः प्रभारूपमिव भावान्तराणां, स च वायौ कर्णविवरं प्राप्ते संयुक्तसमवायेन श्रोत्रं संस्कृत्य तेन गृह्यमाणः कदा चित् वर्णरहितः केवलो गृह्यते शङ्खघोषादिषु, कदा चित् वर्णानभिव्यञ्जन् तदुपश्लिष्टः प्रतीयते प्रभारूपवदेव, अस्ति हि वर्णोच्चारणे ध्वन्युपलब्धिः, दूरादिभिन्नेषु वर्णरहितध्वन्युपलम्भदर्शनात्, अतो युक्तं बुद्धिद्वयमिति ।

परिहारान्तरमाह नैवेति[४०] । यदि ध्वनिवशात् शब्दबुद्धिः, ततः किमित्यत आह संस्कारेति । यो हि वैशेषिको गकारादिषु व्यक्तिजातिभेदमिच्छति सोऽपि शब्देषु महत्त्वाऽल्पत्वयोर्गुणतां नाऽभ्युपैति,

'मधुरं तिक्तरूपेण श्वेतं पीततया तथा ।
गृह्णन्ति पित्तदोषेण विषयं भ्रान्तचेतसः ॥४१॥
तथा वेगेन धावन्तो नाव्यारूढाश्च गच्छतः ।
पर्वतादीन् विजानन्ति भ्रमेण भ्रमतश्च तान् ॥४२॥
मण्डूकवसया ऽक्ताऽक्षा वंशानुरगबुद्धिभिः ।
व्यक्त्यल्पत्वमहत्त्वाभ्यां सामान्यं च तदाश्रयम् ॥४३॥
गृह्णन्ति यद्वदेतानि निमित्तग्रहणाद्विना* ।
व्यञ्जकस्थमबुद्धैव† व्यङ्ग्य भ्रान्तिर्भविष्यति' ॥४४॥
वर्णान्तरत्वमेवाहुः के चिद्दीर्घप्लुतादिषु ।
न हि द्रुतादिवत् तत्र प्रयोगो नान्तरीयकः ॥४५॥

---

निर्गुणत्वाद् गुणानां शब्दस्य च गुणत्वात्, अतो यथा तस्याऽविद्यमानमेव शब्दे महत्त्वादिकं ध्वनिसंस्काराऽनुसारिण्या बुद्ध्या गृह्यते तथा द्रुतादिकमपि ध्वनिषु श्रोत्रं प्राप्यैव क्षिप्रमन्यतः प्रयातेषु तत्संयोगसंस्कारस्य श्रोत्रे ऽल्पकालमवस्थानाच्छब्दो ऽपि क्षणएवाऽविर्भूय तिरोभवन् द्रुत इति गृह्यते, तथा मध्यमो विलम्बित इति युक्तो व्यञ्जकधर्माणां द्रुतादीनां व्यङ्ग्ये शब्दे भ्रान्त्या समारोप इति ।

कथमनवगतेषु भ्रमहेतुषु नादेषु तद्धर्मप्राप्तिर्व्यङ्ग्येष्वत आह मधुरमिति[४१] चतुर्भिः। वेगधावनादिकं व्यक्तयल्पत्वमहत्त्वं च गृह्यमाणमपि भ्रान्तिनिमित्तत्वेनाऽग्रहणादुदाहृतमिति। निरस्तं गत्वम्, अत्वमिदानीं दर्शयितुं व्यक्तिभेदमाह वर्णान्तरत्वमिति[४५] । कारणमाह न हीति । नान्तरीयको हि द्रुतादिभेदो युज्येताप्यपर-

---

* ग्रहणादिनेति २ पु. पा. ।　　† एवमिति ३ पु. पा. ।

तथा च सति सामान्यं त्रिष्वत्वं कैश्चिदिष्यते।
सामान्यकल्पना त्वन्यैर्न युक्तेत्यभिधीयते ॥४६॥
'अत्वमित्युच्यमानं हि न दीर्घप्लुतयोर्भवेत्।
आत्वं न ह्रस्वप्लुतयोस्त्रैमात्र्यं* न च पूर्वयोः ॥४७॥
सर्वसाधारणत्वेन तद्विज्ञातुं न शक्यते।
प्रत्येकं शाबलेयादिरूपे गोत्वं यथा स्फुटम्' ॥४८॥
अवर्णकुलशब्दोऽपि स्थानसाम्याद्वनादिवत्।
समुदायाऽर्थवाचीति न जातिवचनो भवेत् ॥४९॥

---

मार्थः, ह्रस्वदीर्घादिभेदस्तु अर्थविशेषे प्रतीत्यौपयिकतया विवक्षितप्रयोगः कथं भ्रान्तिः स्यात्, तद्भ्रान्तित्वे हि तन्निबन्धनाऽर्थविशेषबुद्धिरप्यगमनमागमनमित्यादौ भ्रान्तिः स्यात्,बाष्पजाताऽग्निबुद्धिवत्; अतः पारमार्थिक एव ह्रस्वदीर्घादिषु वर्णभेद इति।

सति च तद्भेदे तदनुवृत्तमत्वसामान्यं केचिदिच्छन्तीत्याह तथा चेति[४६]। अन्ये तु सत्यपि वर्णभेदे सामान्यकल्पनां नेच्छन्तीत्याह सामान्येति। कारणमाह अत्वमिति[४७] द्वयेन। साधारणरूपं हि सामान्यं शाबलेयादिष्विव गोत्वं, न च तदिहाऽस्तीति। कथं तर्ह्यवर्णकुलमिति व्यवहारः, कुलशब्दो हि समुदायवचनः समानजातीयेषु दृष्टो ब्राह्मणकुलमित्यादौ, अत आह अवर्णेति[४९]। समुदायो हि वनादिवद्देशादिकं यत्किंचिदेकमुपाधिमाश्रित्य भवति नाऽवश्यं जातिमेवेति।

---

* त्रिमात्रमिति २ पु. पा.।

स्वतो ह्रस्वादिभेदस्तु नित्यत्वादे विरुध्यते ।
सर्वदा यस्य सद्भावः स कथं मात्रिकः स्वयम् ॥५०॥
तस्मादुच्चारणं तस्य मात्राकालं प्रतीयते ।
द्विमात्रं वा त्रिमात्रं वा न वर्णो मात्रिकः स्वयम् ॥५१॥
दीर्घादेर्न त्वनङ्गत्वं वाचकाऽधर्मतो भवेत् ।
इत्थं प्रतीयमानाः स्युर्वर्णा न प्रतिपादकाः ॥५२॥
यादृशात् पूर्वदृष्टो ऽसावर्थो गम्येत तादृशात् ।
भ्रान्त्या कथं प्रतीतिश्चेन्नाऽसावर्थमितिं प्रति ॥५३॥

---

तदेवं सत्यपि वर्णभेदे सामान्यं नास्तीत्युक्तम्, इदानीं स्वमतेन वर्णभेदं निराकरोति **स्वत इति**[५०] । कारणमाह **सर्वदेति** । कस्य तर्हि मात्रिकत्वमत आह **तस्मादिति**[५१] । उच्चारणधर्मो मात्रिकत्वं भ्रान्त्या वर्णे गम्यतइति ।

चोदयति **दीर्घादेरिति**[५२] । द्रुतादिवदित्यभिप्रायः । परिहरति **इत्थमिति** । उच्चारणधर्मो ऽपि मात्रिकत्वं भ्रान्त्या शब्दधर्मतया गम्यमानम् अङ्गमिति । कथमित्याह **यादृशादिति**[५३] । तथाविधस्यैव वृद्धव्यवहारादर्थेन सम्बन्धग्रहणादिति । परः स्वाशयमाविष्करोति **भ्रान्त्येति** । परिहरति **नाऽसाविति** । भ्रान्तिरप्यसौ शब्द एव पर्यवस्यति न तु वाष्पधूमभ्रान्तिवदर्थप्रतीतौ संक्रामति । यथा ह्यरूपेण स्फटिकेन भ्रान्त्या ऽवगतेनापि जपाकुसुमसन्निध्यनुमानं न भ्रान्तिः, तथाविधस्यैव सम्बन्धग्रहणात्, तथेहापि मात्रिकादिरूपेण प्रतीयमानस्याऽर्थेन सम्बन्धग्रहणं न वस्तुतो मात्रिकस्य । धूमस्य तु वस्तुत एव तादृशस्य सम्बन्धग्रहणमन्यादृशाद्वाष्पाद्वह्निप्रतीतिर्भ्रा-

यथा ऽश्वादिजवः पुंसां कार्याऽङ्गत्वं प्रकल्पयेत् ।
परधर्मो ऽपि वर्णानां ध्वनिधर्मा*स्तथैव नः ॥५४॥
ननु दीर्घाद्यनित्यत्वादनित्यो वाचको भवेत् ।
आनुपूर्वीवदेवाऽस्य परिहारो भविष्यति ॥५५॥
तथोदात्तादिभेदानां संस्कारवशगा मतिः ।
तेषां दीर्घादिवद्भेदो न कदा चित्प्रतीयते† ॥५६॥

---

न्तिरिति विशेषः । प्रत्यभिज्ञायते च ह्रस्वदीर्घादावेकं वर्णरूपं, य एव ह्रस्वोच्चारणप्रयत्नः स एवाऽनुपरमेण द्वयोर्मात्रयोरनुवर्त्तमानो दीर्घमभिव्यनक्ति । यद्यप्यसौ ह्रस्वादिरूपपरिहारेण न शक्यते दर्शयितुं तथापि तेषु व्यावर्त्तमानेष्वनुवर्त्तमानं तदुपसंहारेण मनसा हेमेव पारिहार्यादिभेदसंहारेण सामान्यं वा व्यक्तिपरिहारेण विवेकिभिर्निरूप्यते । तेनैक एव वर्णो मात्राकालेनोच्चारणेन तत्काले एवोपलभ्यमानः स्वयमपि तत्कालइव गम्यते, तथा ऽघगम्यमानश्चाऽर्थविशेषं प्रतिपादयतीति ।

न च वाच्यं कथमन्यधर्मो मात्रिकत्वादिकं शब्दस्याऽर्थविशेषप्रतिपादने ऽङ्गमिति, तथा ऽन्यत्रापि दर्शनादित्याह यथेति[५४] ।

चोदयति नन्विति[५५] । दैर्घ्यादिरुच्चारणधर्मत्वादनित्यः, तद्युक्तस्य वर्णस्य वाचकत्वे वाचकरूपमनित्यं स्यादिति । परिहरति आनुपूर्वीवदिति ।

उदात्तादिभेदो ऽप्यर्थविशेषौपयिको ऽपि दीर्घादिवदेव ध्वनिधर्मो न वर्णधर्म इत्याह तथेति[५६] । दीर्घादिषु स्यादपि कदा चिद्भेदाऽऽशङ्का न त्वत्रेत्याह तेषामिति । नन्वस्त्युदात्तो ऽनुदात्त इति

---

* धर्म इति २ पु. पा. । † प्रतीयतामिति ३ पु. पा. ।

तत्रैकवर्णरूपत्वे भेदो ऽपि स्याद् द्रुतादिवत् ।
नात्र वर्णान्तरव्यक्तिरिव ध्वन्य*न्तरोद्भवः ॥५७॥
तएव मृदुतीव्रत्वशीघ्रत्वादिसमन्विताः ।
अभेदे चापि वर्णस्य ध्वनीनां द्विप्रकारता ॥५८॥
के चित् स्वरूपबोधार्थाः के चिद्बोधाऽनुवर्तिनः ।
युगपत्क्रमरूपेण संस्कारोत्पादहेतवः ॥५९॥
तत्र दीर्घादिबोधः स्यात् पूर्वेषां प्रचयो यदा ।
वर्णात्मैव हि कालेन तावता तैः प्रतीयते ॥६०॥

---

भेदबुद्धिरत आह तत्रेति[५७] । नन्ववश्यं द्रुतादिह्रस्वाद्युदात्तादिभेदार्थम् अकारैकारादिषु भिन्नजातीया ध्वनयः कल्पनीयाः, तद्वर्णभेदकल्पने को दोषो, ऽत आह नात्रेति । एकस्य वर्णस्यैकजातीया एव ध्वनयः, तैरेव तु मृदुतीव्रत्वादिसमन्वितैर्द्रुतादिभेदसिद्धेर्न वर्णान्तराऽभिव्यक्ताविव ध्वन्यन्तरं कल्पनीयमिति। कथं पुनस्तैरेव ध्वनिभिः स एव वर्णो द्विविधमभिव्यज्यते, ऽत आह अभेदे इति[५८]। तावेव प्रकारौ दर्शयति के चिदिति[५९] । किंनिबन्धनः पुनरयं विभागो, ऽत आह युगपदिति। युगपच्छ्रोत्रं संस्कुर्वन्तो वर्णस्वरूपं बोधयन्ति क्रमेण तु संस्कुर्वन्तो बोधमनुवर्त्तयन्तीति ।

दीर्घादिबोधोपायत्वमिदानीं विभज्य दर्शयति तत्रेति[६०]। ननु द्वयोर्मात्रयोः संस्काराऽनुवृत्तौ दीर्घबोधस्तेन बोधानुवृत्तिः, अतो ऽयं कथं स्वरूपबोधार्थैर्जन्यतइत्युच्यते, ऽत आह वर्णेति । सत्यं, तत्र क्रमवर्त्तिनो ध्वनयः क्रमेण संस्कारं जनयन्तो बोधमनुवर्त्तयन्ति

---

* व्यक्तिशक्तध्वनीति २ पु. पा. ।

युगपत्प्रचितैस्तैश्च स्यादुदात्तादिकल्पना ।
प्रचये त्वितरेषां स्याद् वृत्तिभेदो द्रुतादिकः ॥६१॥
वर्णात्मन्यवबुद्धे ऽपि तद्रूपामेव ते मतिम् ।
शनैरुत्पादयन्तीति नाऽन्यो वर्णः प्रतीयते ॥६२॥

---

तथापि तावता दीर्घेणापि कालेन वर्णात्मैव प्रतीयते । यादृशं ह्यर्थप्रतीत्यौपयिकं तादृशं वर्णस्वरूपत्वेन विवक्ष्यते, तावतैव कालेन दीर्घरूपं प्रतीयते, प्रथमक्षणे तद्रूपं प्रतिपन्नमेव पश्चादनुसंधीयते, ततस्तावद्भिर्ध्वनिभिरपि वर्णस्वरूपं बोध्यतइति युक्तं स्वरूपबोधार्थैर्दीर्घादिबोध इति । ते च क्रमवर्त्तिनो ऽपि वर्णरूपोपलब्धिकालस्य सर्वस्यैकत्वेन विवक्षितत्वाद्युगपत्संस्कारहेतुत्वेनोक्ता इति तैरेव युगपत्प्रचितैरुदात्तादिबुद्धिर्बहुभिरुदात्तो ऽल्पैः स्वरितो ऽल्पतरैरनुदात्त इत्याह युगपदिति[६१] । बोधाऽनुवृत्तिप्रचयेन द्रुतादिवृत्तिबोध इत्याह प्रचये इति । अत्र द्रुतादिशब्देनाऽतद्गुणसंविज्ञानबहुव्रीहिणा मध्यमविलम्बितयोरेव ग्रहणम् । न हि द्रुते बोधाऽनुवृत्तिरस्ति, शीघ्रैर्ध्वनिभिः क्षणमात्रएव तद्बोधजननादिति ।

कथं बोधाऽनुवृत्तिः, न हि क्षणिकस्य बोधस्याऽनुवृत्तिसंभव इत्यत आह वर्णात्मनीति उत्पादय[६२]न्त्यन्तेन । सत्यं, नैकस्य बोधस्याऽनुवृत्तिः, तथापि ह्रस्वरूपे दीर्घरूपे वा वर्णात्मन्यवबुद्धे तादृशीमेव मतिमविच्छेदेन शनैः शनैरुत्तरोत्तरे ध्वनयो जनयन्तो बोधाऽनुवर्त्तिन इत्युच्यन्तइति । उपसंहरति इतीति । वर्णाऽन्यत्वाऽभावे निष्प्रमाणकमत्वादिकमिति ।

तत्रैतत्स्यात्, त्वया मीमांसकेन स्वपक्षाऽनुरागादिदं व्यक्तयेकत्वं

व्यक्त्याकृतिकृतो भेदो यद्यप्येकान्ततो भवेत् ।
वर्णेषु जैमिनेः पक्षस्तथापि न विरुध्यते* ॥६३॥
नित्यत्वयत्नः सर्वो ऽपि गत्वादिषु भविष्यति ।
गकारादिवचश्चैतत्तेष्वेव न विरोत्स्यते ॥६४॥
विच्छिन्नयत्नव्यङ्ग्यैश्च नित्यैः सर्वगतैरपि ।
व्यतिरिक्तपदारम्भो वर्णैर्नोऽत्रोपपद्यते ॥६५॥
अनारब्धे च गोशब्दे गोशब्दत्वं कथं भवेत् ।
वर्णसामान्यवच्चापि न तत्कल्पनमर्हति ॥६६॥

---

जातिनिराकरणं च क्रियते, न त्वेतत् न्याय्यम्, अत आह व्यक्तीति[६३]। अतो ऽन्याय्यत्वादेवेदमुच्यते न स्वसिद्धान्ताऽभिनिवेशादिति। कथमविरोधो, ऽत आह नित्यत्वेति[६४] । गकारौकारविसर्जनीया इति भाष्यमपि गत्वाद्यभिप्रायकं शक्यं व्याख्यातुमित्याह गकारादीति।

गोशब्दाऽवयविनमिदानीं निराकरोति विच्छिन्नेति[६५] । युगपदवस्थितैरेवाऽवयवैरवयवी आरब्धव्यो, न च वर्णानामुपलब्धितो यौगपद्यं, विच्छिन्नयत्नव्यङ्ग्यत्वात्, सत्तायौगपद्येन त्वारम्भे नित्यत्वात् विभुत्वाच्च सर्वे सर्वमारभेरन् । किं चाऽवयवाऽधिकपरिमाणेनाऽवयविना भवितव्यं, न च विभुभ्यः कस्य चिदाधिक्यं सम्भवतीति न वर्णैरवयव्यारम्भ इति । तदनारम्भे च तत्समवेतं गोशब्दत्वं दूराऽपास्तमित्याह अनारब्धइति[६६] । सत्यप्यवयविनि निष्प्रमाणकमेव गोशब्दत्वं गत्वादिवदित्याह वर्णेति । ननु गव्यक्तचेकत्वात् तत्सामान्यबुद्धिर्युक्ता, गोशब्दाऽवयवी तु प्रत्युच्चारणमन्यो ऽन्यश्चेति

---

* विरोत्स्यते इति २ पु. पा. ।

वर्णात्मनामभेदाच्च सिद्धा सामान्यधीरपि ।
समुदायो ऽपि तेभ्यो ऽन्यो वारणीयो ऽनया दिशा ॥६७॥
अभेदसमुदायस्तु तेषां धर्मो न दुष्यति ।
तेषामस्ति हि सामर्थ्यमर्थप्रत्यायनं प्रति ॥६८॥
यावन्तो यादृशा ये च यदर्थप्रतिपादने ।
वर्णाः प्रज्ञातसामर्थ्यास्ते तथैवाऽवबोधकाः ॥६९॥

---

कथमसति सामान्ये तुल्यबुद्धिरत आह वर्णात्मनामिति[६७] । त एव वर्णास्तेनैव क्रमेण ह्यस्तनाऽद्यतनगोशब्दयोरवस्थिता इति तदुपाधिकृता ऽभेदबुद्धिरिति ।

समुदायो ऽपि वर्णाऽतिरिक्तो ऽवयविवदेव निवार्यतइत्याह समुदाय इति । वर्णा एव त्वेकमर्थप्रतिपत्तिलक्षणं कार्यं कुर्वन्तस्तेनैवोपाधिना समुदायशब्देनोच्यन्ते, न ततो भिन्नं समुदायान्तरमिति चेत्, तदिष्टमेवेत्याह अभेदेति[६८] । कथं न दुष्यत्यत आह तेषामिति । वर्णानां ह्यस्त्यर्थप्रत्यायनसामर्थ्यम्, अतस्तेषां तदुपाधिकृता समुदायापत्तिर्युक्तेति ।

कथं पुनस्तेषां प्रत्यायनसामर्थ्यं, ते हि प्रत्याययन्तः सर्वे सर्वाऽर्थान् प्रत्याययेयुः, वर्णत्वाऽविशेषात् । किं च, प्रत्येकं वा वर्णाः प्रत्याययेयुः संहत्य वा । न तावत्प्रत्येकमर्थप्रतीतिर्दृश्यते, साहित्यं तु क्रमवर्त्तिनामसम्भावनीयमेव । तथा न्यूनाऽधिकत्वे क्रमभेदे कर्तृभेदे च वर्णरूपाऽविशेषादर्थप्रतीतिः स्यादत आह यावन्त इति[६९] । व्यवहाराऽवगम्यं हि वाचकत्वं नाऽस्मदिच्छाधीनम्, अतो यथादर्शनं तदभ्युपगमान्न का चिदतिप्रसक्तिरिति ।

तेषां तु गुणभूतानामर्थप्रत्यायनं प्रति ।
साहित्यमेककर्त्रादिक्रमश्चापि विवक्षितः ॥७०॥
कर्त्रैकत्वे निमित्ते च क्रमे सति नियामकम् ।
प्रयुञ्जानस्य यत् पूर्वं वृद्धेभ्यः क्रमदर्शनम् ॥७१॥
यौगपद्यं त्वशक्यत्वान्नैव तेषामिहाऽऽश्रितम् ।
कर्तृभेदश्च तत्र स्यान्न चैवं दृश्यते ऽभिधा ॥७२॥

---

कीदृशानां पुनः सामर्थ्यं दृष्टं, तद् दर्शयति तेषां त्विति[७०] । गुणभूता ह्यर्थप्रत्यायने वर्णास्तेनैषां साहित्यमेककर्तृत्वमादिशब्दोपात्तं चाऽन्यूनाऽधिकत्वं क्रमविशेष इति सर्वं विशेषणं विवक्षितम् । किं पुनः क्रमविवक्षायां तद्विशेषे वा प्रमाणं, तद्दर्शयति कर्त्रैकत्वेति[७१] । न ह्येको वक्ता युगपदनेकवर्णोच्चारणक्षम इत्यवश्यंभावी तावत् क्रमः, तेन य एव वृद्धव्यवहारे दृष्टः स एव नियम्यते, तस्यैवाऽर्थप्रतीतावङ्गत्वाऽवगमादिति ।

ननु साहित्यं क्रमश्च परस्परमेकत्र विरुद्धम्, अतः साहित्यसिद्ध्यर्थं यौगपद्यमेवाऽऽश्रीयताम्, अत आह यौगपद्यमिति[७२] । सत्यं, तत्त्वशक्यमिति त्यक्तमिति । शक्यत्वे वा कर्तृभेदः स्यादित्याह कर्तृभेद इति । ततः को दोषो, ऽत आह न चेति । वक्त्रेकत्वमपि हि अभिधाने ऽङ्गम्, अनेककर्तृप्रयुक्तेभ्यो ऽभिधानाऽदर्शनात् । नन्वनवधारयन्तो ऽपि वक्त्रेकत्वमर्थमवधारयन्तः कलकले दृश्यन्ते, अतः कथं तस्याऽङ्गत्वम्; एकस्मिन् वक्तरि वर्णानां नैरन्तर्यविशेषः स्वरविशेषश्च निष्पद्यते, तच्चार्थप्रतीत्यङ्गं, तन्निष्पत्त्युपयोगि वक्त्रेकत्वं न साक्षादर्थप्रत्यायने ऽङ्गम् । न हि तन्निष्पत्तिः कथं चिदपि वक्तृभेदे स-

युगपद्दृश्य*सामर्थ्या नैव शक्ताः क्रमे यथा ।
भावास्तथा क्रमे शक्ता यौगपद्ये न शक्नुयुः ॥७३॥
दृष्टश्च पूर्णमासादेः क्रमः संहत्यकारिणः ।
अभ्यासानां च लोकेऽपि स्वाध्यायग्रहणादिषु ॥७४॥
साधनादित्रयाणां च व्यापारस्यैककालता ।
सर्वत्रास्तीति नेह स्यादुपालम्भः क्रमं प्रति ॥७५॥
निष्पन्ना एव दृश्यन्ते व्यापाराः सर्वएव हि ।
सूक्ष्मा व्यापारभेदास्तु दृश्यन्ते न कदा चन ॥७६॥

---

म्भवति, तादृशं च रूपं कलकलेऽप्यवगम्यते एवेति न कश्चिद्दोषः । किं च, यद्यप्येकस्मिन्नपि वक्तरि यौगपद्यं शक्यं स्यात्, तथापि क्रमविशेषशालिनामेव वर्णानां व्यवहारेऽर्थप्रत्यायनशक्तिदर्शनान्न यौगपद्ये शक्तिः स्यात्, युगपदुत्साधारणसमर्थानामिव प्राणिनां क्रमे, तदाह युगपदिति[७३] ।

नन्वेवं संहत्यकारित्वं विरुध्यते, ऽत आह दृष्ट इति[७४] । न केवलमाग्नेयादिसाधनपङ्क्तस्यैव क्रमवर्त्तिनः संहत्यकारित्वं, किं तु साध्यसाधनेतिकर्त्तव्यतानां त्रयाणामप्ययुगपद्भुवामेकैककाले व्यापारः सर्वत्र वेदे लोके चास्ति, यदैव स्वर्गस्तदपूर्वं वा भवने व्याप्रियते तदैव करणं तद्भावयति, इतिकर्त्तव्यता च करणमुपकरोति, अतो नेह वर्णेषु संहत्यकारित्ववशेन क्रमोपालम्भो युक्त इत्याह साधनेति[७५] ।

ननु तत्राऽपूर्वाख्याऽवान्तरव्यापारद्वारेण युक्तं साहित्यं, वर्णानां तु न तादृग्व्यापारो दृश्यते, अत आह निष्पन्ना इति[७६] । फलाऽपव-

---

* दृष्टेति ३ पु. पा. ।

'एकसाधनसंस्थाश्च व्यापाराऽवयवा यदा ।
स्वरूपतो निरीक्ष्यन्ते यौगपद्यमसत्तदा ॥७७॥
किं पुनर्बहवो भिन्ना भिन्नसाधनसंश्रिताः ।
भवेयुर्यौगपद्येन व्यापाराः क्रमवर्तिनः' ॥७८॥
यदा त्वाद्यपरिस्पन्दात् प्रभृत्या फललाभतः ।
क्रिया पूर्वाऽपरीभूता लक्ष्यते वर्त्तते तदा ॥७९॥

---

र्गित्वाक्रियाणां तन्निष्पत्त्या निष्पत्तिवाचोयुक्तिः । निष्पन्नाः कृतकार्या इत्यर्थः । ये ऽपि ह्यन्ये ऽवान्तरव्यापारा यथानुभवतैलपानादिजन्याः संस्कारास्ते ऽपि फलनिष्पत्त्यैव कल्प्यन्ते, न ततः प्राक् स्वरूपेण दृश्यन्ते, सूक्ष्मत्वादतीन्द्रियत्वादित्यर्थः । तथा वर्णाऽवान्तरव्यापाराणामप्यर्थप्रतिपत्तिलक्षणकार्यकल्प्यत्वात्स्वरूपाऽदर्शनमदोष इति ।

नन्वाग्नेयादीनामेव स्वरूपसाहित्यं किं नेष्यते, ऽत आह एकेति[७७] द्वयेन । एकस्यापि साधनस्य यागस्य होमस्य वा ये व्यापाराऽवयवाः, उद्देशः त्यागः प्रक्षेपश्च, तेषामपि तावत्स्वरूपयौगपद्यं नास्ति, तत्राऽवश्यं पूर्वपूर्वैरवयवैः किं चिददृष्टं जन्यते, तत्सहितश्चाऽन्तिमो ऽवयवः कार्यमारभतइत्यङ्गीकर्त्तव्यं, किं पुनर्भिन्नानामाग्नेयाऽग्नीषोमीयादीनां स्वरूपयौगपद्यं स्यादिति ।

कथं तर्ह्ययुगपद्भुवां वर्त्तमानाऽपदेशो दर्शो वर्त्ततइत्यत आह यदेति[७९] । न घटादिवन्निष्पन्नाऽविनष्टतया व्यापारेषु वर्त्तमानापदेशः, किं त्वेकफलावच्छिन्ना बह्ववयवात्मिका क्रिया, तस्याम् आद्यपरिस्पन्दात्प्रभृत्या फलनिष्पत्तेः पूर्वाऽपरीभावेन लक्ष्यमाणायां वर्त्तमानत्वाऽपदेश इति ।

तेनात्रापि विवक्षातः प्रभृत्या ऽर्थावबोधनात् ।
साकल्येनेक्ष्यमाणे स्याद् व्यापारे वर्त्तमानता ॥८०॥
प्रत्येकं ये पुनस्तत्र व्यापारास्तन्निरूपणम् ।
फलाऽनिष्पत्तितो न स्यान्नास्तित्वं न च तावता॥८१॥
फलाऽनुमेयतायां च व्यापारस्य फलं प्रति ।
कारकाणां यथास्थानं व्यापारे वर्तमानता ॥८२॥
अवश्यंभाविनी नित्यं* प्रत्यासत्तिश्च कस्य चित् ।
न तावता व्यपेतत्वा†दितरेषामनङ्गता ॥८३॥

---

इममेव वर्त्तमानप्रकारं वर्णव्यापारे ऽप्यभिधाने दर्शयति तेनेति[८०]। ननु फलाऽनुमेयो ऽभिधाव्यापारः ततः प्रागनुपलभ्यमानः कथं वर्त्तमानतया व्यपदिश्यते,गामभिधत्ते देवदत्त इति,अत आह प्रत्येकमिति[८१] । प्रागपि हि फलादस्त्येव व्यापार इति। सतो ऽपि कथमज्ञातस्य वर्त्तमानापदेशः, फलनिष्पत्तिसमये तु सो ऽतीतो, ऽत आह फलेति[८२]। यद्यपि फलाऽनुमेयो ऽयं तथापि यथावस्थितेभ्यो वर्णेभ्यो ऽर्थप्रतीतिं दृष्ट्वा वर्णानां व्यापारं प्रागनुमितवान् तथाऽवस्थानं पुनर्दृष्ट्वा शक्यमेव व्यापारे वर्त्तमानतामनुमातुं यथास्थानं स्थानानुरूपेणेत्यर्थः ।

ननु सर्वेषां प्रत्यायकत्वे सिद्धे स्यात् संस्कारकल्पनं, तत्त्वन्तिमस्यैवाऽऽनन्तर्यविशेषादत आह अवश्यमिति[८३]। अवर्जनीयं बहुषु कस्य चिदानन्तर्यम् इतरेषां व्यवधानं, न तावता व्यवहितानामनङ्गत्वं, तदनङ्गत्वे हि तद्रहितादन्तिममात्रादर्थप्रतीतिः स्यादिति । अथ वा

---

* तत्रेति २ पु. पा. ।

† व्यवेतत्वादिति २ पु. पा. ।

द्व्यन्तरैकान्तरत्वेन गकारौकारयोर्ध्रुवम् ।
अर्थप्रत्यायने शक्तिस्तत्रस्थौ गमकौ यतः ॥८४॥
यथा विसर्जनीयस्य व्यवधाने न शक्तता ।
तथैवेतरयोः शक्तिरानन्तर्ये न विद्यते ॥८५॥
न च यत्रैकशो ऽशक्तिस्तत्र सर्वेष्वशक्तता ।
तथा ह्यङ्गानि दृश्यन्ते शाल्यादिवहनादिषु ॥८६॥
'शक्तिस्तत्रास्ति का चिद्धि वहने सा समृद्ध्यते ।
संघातेन तु वर्णानां प्रत्येकं का चिदीक्ष्यते ॥८७॥
न ह्यर्थोऽवयवः कश्चित्प्रत्येकं तैः प्रतीयते* ।
समस्तस्याऽथ वा कश्चिद्बोधलेशो ऽत्र जायते' ॥८८॥
रथस्यापि तु यत्कार्यं शाल्यादिवहनं न तत् ।

---

नाऽवर्जनीयत्वमात्रेण पूर्वेषां व्यवधानं, किं तु विवक्षितमेव, तथाविधानामेव सामर्थ्यादित्याह द्व्यन्तरेति[८४] । एतदेव दृष्टान्तेनोपपादयति यथेति[८५] ।

ननु प्रत्येकं तावद्वर्णानामर्थप्रतीतौ नास्ति शक्तिः, संहता अपि तथैवेति कथं शक्ता भवन्त्यत आह न चेति[८६] । सहितेष्वित्यर्थः ।

चोदयति शक्तिरिति[८७] द्वयेन । प्रत्येकमपि रथाङ्गानामस्त्येव कियत्यपि वहने शक्तिः, संहतानां तु सा समुच्चीयते, वर्णानां तु प्रत्येकं न का चिदर्थैकदेशे बोधैकदेशे वा शक्तिरस्ति, या संघाते समुच्चीयेतेति । परिहरति रथस्येति[८९] । रथकार्ये तावदङ्गानां नास्त्येव शक्तिरिति ।

---

* तथैवेत्याद्यर्धषट्कं त्रुटितं का. सं. पुस्तके २ पुस्तके च ।

प्रत्येकं दृश्यते किञ्चिन्मनागपि यथेहितम्* ॥८९॥
अथ यत्किञ्चिदुच्येत वहने तदिहापि नः ।
स्वात्मप्रत्ययहेतुत्वं वर्णेष्वर्थे ऽपि वा क्व चित् ॥९०॥
यस्याऽनवयवः स्फोटो व्यज्यते वर्णबुद्धिभिः ।
सो ऽपि पर्यनुयोगेन नैवैतेन विमुच्यते ॥९१॥
तत्रापि प्रतिवर्णं हि पदस्फोटो न गम्यते ।
न चाऽवयवशो व्यक्तिस्तदभावान्न चात्र धीः ॥९२॥
प्रत्येकं चाप्यशक्तानां समुदाये ऽप्यशक्तता ।
तत्र यः परिहारस्ते स नो ऽत्रापि भविष्यति ॥९३॥

---

अथ यत्किंचिद्वहनसामर्थ्यमुच्येत, वर्णानामपि यत्किंचिद्बोधसामर्थ्यमस्त्येव, स्वात्मप्रत्ययहेतुत्वात्, विषयो ऽपि हि कारणं प्रत्ययप्रतीतेरर्थे ऽपि क्व चिदस्त्येव, केषां चित्प्रत्येकमेव शक्तिः ककारस्येव परस्यां देवतायामित्याह अथेति[९०] । यच्च वर्णानामर्थप्रत्यायने चोद्यं, तत्सर्वं स्फोटवादिनो ऽपि ध्वनीनां वर्णानां वा तदभिव्यक्तौ तुल्यमेवेत्याह यस्येति[९१] । वर्णग्रहणमनास्थयोक्तं, ध्वनीनामेव व्यञ्जकत्वस्य परैरिष्टत्वात् ।

तुल्यत्वमेव दर्शयति तत्रापीति[९२] ध्वनीनामपि साहित्यमेककर्तृत्वं क्रमश्च विवक्षितः, क्रमवर्त्तिनां च स्वरूपसाहित्याऽसम्भवात्संस्कारकल्पना ऽपि तुल्यैव । तदुक्तं भाष्यकारेण "शब्दकल्पनायां सा च शब्दकल्पना चे"†ति । यच्च प्रत्येकाशक्तौ समुदाये ऽप्यशक्तिरिति, तदपि तुल्यं, न हि ध्वनयः प्रत्येकं स्फोटान् व्यञ्जयन्ति. तथा सत्यु-

---

* यथेप्सितामिति ३ पु. पा. । † शा. भा. पृ. १४ प.१६ ।

सद्भावव्यतिरेकौ च तथा ऽवयववर्जनम् ।
तत्राऽधिकं भवेत्तस्माद्यत्नो ऽसावर्थबुद्धिषु ॥१४॥
नाऽन्यथानुपपत्तिश्च भवेदर्थमतिं प्रति ।
तदेवाऽस्या निमित्तं स्याज्जायते यदनन्तरम् ॥१५॥
सा च वर्णद्वयज्ञाने ऽतीते ऽन्त्यज्ञानतः परा ।

---

त्तरनादवैयर्थ्यात्; पूर्वैरस्फुटाऽभिव्यक्तिः परैः स्पष्टो ऽभिव्यज्यतइति चेत्, एवं तर्हि यएव स्पष्टाऽभिव्यञ्जकास्तैरेव भवितव्यम्, अलं पूर्वैः। अथ न कुतश्चिदप्यन्याऽनपेक्षा स्फुटाऽभिव्यक्तिः, किं तु पूर्वजनिता-ऽस्फुटप्रकाशाहितसंस्कारसहितैरुत्तरोत्तरैः स्फुटाभिव्यक्तिरिति चेत्, एवं तर्हि तैरेव नादैरावर्त्यमानैः शब्दस्फुटाभिव्यक्तिसिद्धेर्विजातीयनादाश्रयणवैयर्थ्यं, व्युत्क्रमे ऽपीदृशाभिव्यक्तिसिद्धेः क्रमविशेषादरो ऽनर्थकः स्यात् । तस्मान्नैकैकशः शक्तिरिति दोषे तुल्यत्वम्। तत्राऽवश्यं संहतानामभिव्यञ्जकत्वं संस्काराश्रयणं चाऽवर्जनीयं; तदर्थप्रतीतावेव वरमाश्रितं किं स्फोटाऽभ्युपगमेनेति ।

यदि तुल्यत्वं कः स्फोटाऽभ्युपगमे दोषो,ऽत आह सद्भावेति[१४]। स्फोटसद्भावो वर्णेभ्यश्च व्यतिरेकः साऽवयवे पदे गम्यमाने तद्विपरीतं निरवयवत्वं कल्पनीयं, तस्माद्यो ऽवश्याश्रयितव्यः संस्कारादिकल्पनांशः सो ऽर्थबुद्धावेवाश्रयितव्यो न स्फोटाभिव्यक्ताविति। अथ वा, संस्कारो ऽपि न कल्पनीयः, तदभावे ऽप्यर्थप्रतीत्युपपत्तेरित्याह नान्यथेति[१५] ।

किं पुनरसति संस्कारे ऽर्थप्रतीतेर्निमित्तम्, अत आह तदेवेति। तदेव दर्शयति सा चेति[१६]। कथमसति संस्कारे ऽतीतस्य निमित्त-

भवतीतीदृगेवाऽस्या निमित्तमवकल्पते* ॥९६॥
विना संस्कारकल्पेन तदनन्तरवृत्तितः ।
कृताऽनुग्रहसामर्थ्यो वर्णो ऽन्त्यः† प्रतिपादकः ॥९७॥
एष एव तु संस्कार इति केचित्प्रचक्षते ।
अदृष्टकल्पनाऽतीतं तावन्मात्रं हि दृश्यते ॥९८॥
अथ वा वासनैवास्तु संस्कारः, सर्वएव हि ।
दृढज्ञानगृहीते ऽर्थे संस्कारो ऽस्तीति मन्वते ॥९९॥
तस्याऽर्थबुद्धिहेतुत्वे विसंवादो ऽस्य निर्णये ।
तद्भावभाविताहेतुरन्यत्रैव प्रतीयते ॥१००॥

---

त्वम्,अत आह विनेति[९७]। पूर्ववर्णैरुत्तरस्याऽनन्तरवृत्तत्वेन दृष्टेनैवाऽनुग्रहाख्यं सामर्थ्यं कृतमिति किमत्राऽदृष्टसंस्कारकल्पनया भाष्योक्तया समाश्रितयेति । केचित्पुनर्भाष्ये ऽपि संस्कारशब्देनाऽनन्तरवृत्तित्वमेवोच्यतइति प्राहुरित्याह एष इति[९८] । कारणमाह अदृष्टेति ।

अयं तु द्विविधो ऽपि संस्काराऽनाश्रयणपक्षो ऽनुपपन्न इति मत्वा संस्कारकल्पनामपि परिहरन् पक्षान्तरमाह अथ वेति संस्कारो[९९]ऽन्तेन । स च सर्वत्र सर्ववादिनामविवादसिद्धो नाऽत्रैवाऽस्माकं विशेषतः कल्प्य इत्याह सर्वइति । यथाहुः 'वस्तुधर्मो ह्येष यदनुभवः पटीयान् स्मृतिबीजमाधत्ते'इति । तस्य तु संप्रतिपन्नस्वरूपस्याऽर्थप्रतीतिहेतुत्वमात्रे विवादः । तत्र च स्मृताविव तद्भावभावादेवाऽर्थप्रतीतावपि तस्य सुकल्पमेव सामर्थ्यमित्याह तस्येति[१००]।

---

* कल्प्यते इति ३ पु. पा. । † वर्णेभ्य इति १ पु. पा. ।

संस्कारे निष्प्रमाणे तु पूर्ववृत्तत्वकल्पनम् ।
निष्प्रमाणकमेवेति नाऽनुग्रहफलं भवेत् ॥१०१
यद्यपि स्मृतिहेतुत्वं संस्कारस्य व्यवस्थितम् ।
कार्यान्तरेषु* सामर्थ्यं न तस्य प्रतिषिध्यते ॥१०२॥
तेन संस्कारसद्भावो नाऽनेनैवं प्रकल्प्यते† ।
तस्याऽर्थबुद्धिहेतुत्वमदृष्टं केवलं कृतम् ॥१०३॥
शब्दपक्षे ऽपि तच्चैतददृष्टत्वान्न मुच्यते ।
कार्यबोधनशक्तत्वं तुल्यं संस्कारशब्दयोः ॥१०४॥

---

संस्काराऽनाश्रयणे दोषमाह संस्कारइति[१०१] । न हि विनष्टस्याऽसतो ऽनारब्धाऽवान्तरव्यापारस्योत्तराऽनुग्राहकत्वं सम्भवति, असति च तदनुग्राहकत्वे पूर्ववृत्तत्वं निष्फलमप्रमाणकं स्यादिति । ननु स्मृतिहेतोः कथं कार्यान्तरे सामर्थ्यमत आह यद्यपीति[१०२] । सम्भवति ह्येकस्याप्यनेकत्र सामर्थ्यं‡, कर्मवत्संयोगविभागयोरिति । उपसंहरति तेनेति[१०३] । नन्वेवमप्यस्त्येवाऽदृष्टकल्पना, ऽत आह शब्देति[१०४] । स्फोटशब्दपक्षे ह्यवश्यं संस्कारान्तरं स्मृतिहेतोरेव घा तदभिव्यक्तिसामर्थ्यमदृष्टमेव कल्प्यं, तथाऽस्माभिरर्थप्रतीतावेव कल्पितमिति । किं च, यदस्माभिः संस्कारस्याऽर्थप्रतीतिसामर्थ्यं कल्प्यते तद्भवता ऽपि स्फोटस्याऽवश्यं कल्पनीयमेव, संस्कारस्य तु स्फोटाऽभिव्यञ्जकत्वमधिकमित्याह कार्येति । तदेवं त्वत्पक्षे ऽपि

---

* कार्यान्तरे ऽपीति ३ पु. पा. ।

† प्रकल्पित इति ३ पु. पा. ।

‡ अनेकत्वसामर्थ्यमिति ३ पु. पा. ।

क्षीणा ऽर्थापत्तिरेवञ्च न स्फोटं परिकल्पयेत् ।
संस्कारकल्पना पूर्वमवश्यंभाविनी हि ते ॥१०५॥
ध्वनिभ्यो ऽप्यपरस्तावन्नेष्येताऽर्थमतिं प्रति ।
ते वा यद्युपलभ्येरन् वर्णाः प्रत्यक्षतो न च ॥१०६॥
वर्णानां यौगपद्येन यदि चाऽवश्यमार्थिता ।
नित्यत्वात् सर्वदा तत्स्यान्न तु कारणता तथा ॥१०७॥
इत्थं क्रमगृहीतानां युगपद्या ऽथ वा परा ।
स्थितिः सा कारणं तु स्यान्नित्यमर्थधियं प्रति ॥१०८॥

---

प्रथमसंस्कारपक्षस्याऽवश्यंभावित्वात्तेनैवोपपन्ना ऽर्थप्रतीतिर्न स्फोट-कल्पनायाऽलमित्याह क्षीणेति[१०५] ।

ननु यदि स्फोटाऽभिव्यञ्जकैरेवाऽर्थप्रतीतिमङ्गीकृत्य स्फोटो ऽयं परिह्रियते ततो वर्णाऽभिव्यञ्जकैर्ध्वनिभिरेवाऽर्थप्रत्ययोपपत्तेर्वर्णैरपि किमभ्युपगतैरत आह ध्वनिभ्य इति[१०६] । स्यादेवं, यदि वर्णवत् ध्वनयः प्रत्यक्षाः स्युः, यदि वा वर्णाः स्फोटवदप्रत्यक्षाः, न तु तदुभयमप्यस्ति। तदिदं "गकारादीन्येव प्रत्यक्षाणी"*त्यनेन भाष्येणोक्त-मिति।

यस्तु स्वरूपयौगपद्यं वर्णानामभिलषति, तस्य तदस्त्येव, नित्यत्वात्,नतु तदर्थप्रतीतेः कारणमगृहीतानामप्रत्यायकत्वादित्याह वर्णा-नामिति[१०७] । सम्भवति वा तस्यापि कथं चिदर्थप्रतीतिहेतुत्वमि-त्याह इत्थमिति[१०८] । अत्रापि संस्कारकल्पनमश्यंभाव्येव क्रम-गृहीतवर्णोपजनितसंस्कारसहितं तदनन्तरवर्णयौगपद्यं कारणमिति।

---

* शा. भा. पृ. १४ प. १३ ।

यद्वा प्रत्यक्षतः पूर्वं क्रमज्ञातेषु यत् परम् ।
समस्तवर्णविज्ञानं तदर्थज्ञानकारणम् ॥१०९॥
तत्र ज्ञाने च वर्णानां यौगपद्यं प्रतीयते ।
नाऽवश्यं यौगपद्येन प्रत्यक्षस्थेन तद्भवेत् ॥११०॥
चित्ररूपां च तां बुद्धिं सदसद्वर्णगोचराम् ।
के चिदाहुर्यथा वर्णो गृह्यते ऽन्त्यः पदे पदे ॥१११॥
अन्त्यवर्णे ऽपि विज्ञाते पूर्व*संस्कारकारितम् ।
स्मरणं यौगपद्येन सर्वेष्वन्ये प्रचक्षते ॥११२॥
सर्वेषु चैवमर्थेषु मानसं सर्ववादिनाम् ।
इष्टं समुच्चयज्ञानं क्रमज्ञानेषु सत्स्वपि ॥११३॥

---

संप्रति संस्कारान्तरस्य स्मृतिहेतोश्च स्मृतितो ऽन्यत्र सामर्थ्यमकल्पयन् पक्षान्तरमाह यद्वेति[१०९]। तस्मिंश्चास्त्येव वर्णानां स्वरूपयौगपद्यमित्याह तत्रेति[११०] । नन्वेवमपि प्रत्यक्षतो यौगपद्यं न स्यादित्यत आह नाऽवश्यमिति ।

तामेव समस्तवर्णविषयां बुद्धिं द्वेधा विभजाति चित्रेति[१११] । उत्तरोत्तरवर्णोपलब्धिवेलायामपि पूर्वपूर्ववर्णाः स्मृत्या ऽनुसंधीयन्ते, तेनाऽन्त्यवर्णोपलब्धावपि पूर्वे स्मर्यन्ते, तेन येयं सद्रूपा ऽन्त्यवर्णविषये प्रत्यक्षा, पूर्वेषु चाऽतीतेषु स्मृतिरूपा चित्रस्वरूपा बुद्धिः सैवाऽर्थप्रतीतिहेतुरिति । ततो ऽपि वा परतः समस्तवर्णविषया स्मृतिरेवेति पक्षान्तरमाह अन्त्येति[११२] ।

किं पुनः क्रमगृहीतानां युगपत्स्मरणं भवति, सत्यम्, अन्यत्रापि

---

* सर्वेति २ पु. पा. ।

न चेत्तदाऽभ्युपेयेत* क्रमदृष्टेषु नैव हि ।
शतादिरूपं जायेत तत्समुच्चयदर्शनम् ॥११४॥
तेन श्रोत्रमनोभ्यां स्यात् क्रमाद्वर्णेषु यद्यपि ।
पूर्वज्ञानं परस्तान्न युगपत्स्मरणं भवेत् ॥११५॥
तदारूढास्ततो वर्णा न दूरेऽर्थावबोधनात् ।
शब्दादर्थमतिस्तेन लौकिकैरभिधीयते ॥११६॥
चित्रबुद्ध्याऽनया भ्रान्त्या वर्णेभ्यो व्यतिरेकतः ।
पश्चाद्गौरिति विज्ञानं प्रत्यक्षं कैश्चिदिष्यते ॥११७॥
वैलक्षण्यं तु तस्येष्टमेकैकज्ञानतः स्फुटम् ।
वर्णरूपाऽवबोधात्तु न तदर्थान्तरं भवेत् ॥११८॥

---

दर्शनादित्याह सर्वेष्विति[११३] । तदनभ्युपगमे दोषमाह न चेदिति[११४] । उपसंहरति तेनेति[११५] । क्रमोच्चारिताश्च वर्णाः स्वयमक्रमा अप्युपलब्धिक्रमारोपेण क्रमवन्त इव प्रतीयन्ते, ततः पश्चाच्च युगपत्स्मर्यमाणा अपि तत्क्रमतः स्मर्यमाणा अर्थप्रत्यायका इति न व्युत्क्रमोच्चारणेऽर्थप्रतीतिप्रसङ्ग इति । अस्मिंश्च पक्षे शब्दादर्थं प्रतिपद्यामहे इति लौकिकं वचनमुपपन्नतरं, स्मृत्यारूढानां शब्दानामव्यवधानेनैवाऽर्थप्रतीतिहेतुत्वादित्याह तदारूढा इति[११६] ।

वैयाकरणास्तु गौरित्येवं गकारादिविलक्षणं शब्दान्तरं प्रत्यक्षमवगम्यत इत्याहुः, तेषां च भ्रान्तिरेव, भ्रान्तौ चेयमेव चित्रा बुद्धिर्निमित्तम्, एकैकज्ञानाद्विलक्षणेयमन्त्यवर्णाशे च प्रत्यक्षा, तावतैव प्रत्यक्षः स्फोट इति विभ्रमः । तदिदमाह चित्रबुद्ध्येति[११७] । कथं पुनरयं

---

* तदभ्यवेयेतेति ३ पु. पा. ।

यदि चाऽर्थान्तरत्वं स्यादेकैकस्मात् त्रयस्य तत् ।
वर्णत्रयपरित्यागे बुद्धिर्नान्यत्र जायते ॥११९॥
गौरित्येकमतित्वं तु नैवास्माभिर्निवार्यते ।
तद्ग्राह्यैकार्थताभ्यां* च शब्दे स्यादेकतामतिः॥१२०॥
शैघ्र्यादल्पान्तरत्वाच्च गोशब्दे सा भवेदपि ।
देवदत्तादिशब्देषु स्फुटो भेदः प्रतीयते ॥१२१॥

---

भ्रमः, नन्वेवमस्त्येवाऽस्यैकैकज्ञानाद्वैलक्षण्यमत आह वैलक्षण्यमिति[११८] ।

सत्यमस्ति ज्ञानस्य वैलक्षण्यं, कथमसत्यर्थान्तरे ज्ञानवैलण्यमत आह यदीति[११९]। तुष्यतु भवान्, अस्त्यर्थान्तरं, तत्तु वर्णत्रयमेकैकस्माद्‌र्थान्तरं,तत्परित्यागेन त्वर्थान्तरमनुपलब्धिनिरस्तमिति । कथं पुनरसति शब्दान्तरे नानाभूतेषु वर्णेषु गोशब्द इत्येकशब्दाऽवभासो, ऽत आह गौरिति[१२०] । एकबुद्धिविषयत्वादेकार्थत्वाद्वा एकत्वव्यपदेश इति ।

ननु न व्यपदेशमात्रं, गौरित्येकपिण्डविषया मतिरेवोपजायते, ऽत आह शैघ्र्यादिति[१२१]। गोशब्दस्याऽज्झलोः संश्लेषादेकताभ्रान्तिर्न हि तत्र वर्णभेदमपि प्रतिपत्तारो मन्यन्ते, अतो निर्विवादमस्या भ्रान्तित्वं, यत्र देवदत्तादिशब्दे वर्णभेदाऽवसायः न तत्रास्त्येकशब्दाऽवगातीरिति । अत्र भाष्यं "गौण एष शब्द इति चेत्, न गौणो ऽक्षरेषु निमित्तभाव"†इति, तत्र गौण इति विच्छिद्य पूर्वेण योजयति

---

* एकार्थतायाश्चेति २ पु. पा. ।

† शा. भा. पृ. १९ प. ६ ।

न गौणः शब्द इत्येवं ग्रन्थसम्बन्धनं भवेत् ।
अस्त्यक्षरेषु हेतुत्वं तत्परं वचनं हि तत् ॥१२२॥
शब्दादिति च हेतुत्वं पञ्चम्याऽत्राभिधीयते ।
भवत्पक्षे ऽपि चैकान्ताज्ज्ञानेन व्यवधिर्भवेत् ॥१२३॥
'गौणो ऽन्यथा प्रसिद्धो वा प्रयुज्येताऽन्यथा यदि ।
न चाऽन्यादृङ्निमित्तत्वं कस्य चित्संप्रतीयते ॥१२४॥
स्वव्यापारव्यवायो हि सर्वस्मिन्नेव कारके ।
दृष्टो व्यापार ईदृक् तु शब्दस्येत्यव्यवेतता'* ॥१२५॥

---

न गाण इति[१२२] । शब्दे हि चोदितं गौणत्वं तत्रैव परिहर्त्तुं युक्तं, निमित्तभावे तु तत्परिहारो ऽसंगतः स्यादित्यभिप्रायः । अक्षरेषु निमित्तभाव इति तस्यैव हेतुरित्याह अस्तीति । हेतुत्वपरमेव लौकिकं वचनमिति । कथमित्याह शब्दादिति[१२३] । व्यवहितस्याप्यस्त्येव हेतुत्वमिति । स्फोटपक्षे ऽप्यस्त्येव व्यवधानमित्याह भवत्पक्षइति ।

तदेवं व्यवहितस्यापि हेतुत्वसंभवान्न गौणत्वमित्युक्तम्, इदानीं व्यवधानमेव नास्तीत्याह गौण इति[१२४]द्वयेन । यादृशं हि शब्दस्याऽर्थप्रतिपत्तिहेतुत्वं ततो ऽन्यादृशं न कस्य चिदप्यस्ति, स्वव्यापारव्यवायस्य सर्वत्र नियतत्वात्, संस्कारश्च शब्दस्य व्यापार एव, तेनेदृशं व्यवधानमव्यवधानमेवेति स्फोटं प्रति शब्दादर्थं प्रतिपद्यामह-

---

* अव्यपेततेति १ पु. पा. ।

गकारादेर्यदा चान्यो न लोके शब्द उच्यते ।
तदा तस्मात्प्रतीते ऽर्थे शब्दादिति कथं भवेत् ॥१२६॥
शब्दज्ञानादिसंस्कारव्यक्तस्फोटकृते ऽथ वा ।
प्रत्यये शब्दजन्यत्वमिति गौणं प्रसज्यते ॥१२७॥
'संस्कारजननार्थं च न शब्दोच्चारणं मतम् ।
अर्थप्रतीतिमुद्दिश्य प्रयुक्तस्य क्रमादयम्* ॥१२८॥
तस्मात्तादर्थ्यतः शब्दः फलेन व्यपदिश्यते' ।
समुच्चयाऽवबोधे तु व्यवधानं न केन चित् ॥१२९॥
यदि चाऽपूर्वसंस्कार इतिकर्तव्यतेष्यते ।
वर्णो ऽन्त्यो गमकस्तस्य शब्दत्वान्मुख्यता भवेत्॥१३०॥
'वर्णा वा ध्वनयो वापि स्फोटं न पदवाक्ययोः ।

---

इति वचनस्याऽनुपपत्तिरित्याह गकारादेरिति[१२६] । यदि शब्दज्ञानजनितसंस्कराऽभिव्यक्तस्फोटजन्यो ऽर्थप्रत्ययः शब्दजन्य इत्युच्यते ततो ऽनेकव्यवधानादिति गौणत्वं स्यादित्याह शब्देति[१२७] ।

नन्वस्तु व्यवहितस्यापि तज्जन्यत्वव्यपदेशः, संस्कारस्यापि त्वव्यवहितस्य शब्दजन्यत्वं किमिति लोके न व्यपदिश्यते, ऽत आह संस्कारेति[१२८] सार्द्धेन । समुच्चयज्ञानपक्षे तु नास्त्येव व्यवधानमित्युक्तमेवेत्याह समुच्चयेति[१२९] । भाष्यकारीये ऽपि पक्षे शक्यमेवाऽव्यवधानमेकवचनस्य च मुख्यत्वं वक्तुमित्याह यदि चेति[१३०] ।

---

* क्रमस्त्वयमिति ३ पु. पा. ।

व्यञ्जन्ति व्यञ्जकत्वेन यथा दीपप्रभादयः ॥१३१॥
सत्त्वाद् घटादिवच्चेति साधनानि यथारुचि ।
लौकिकव्यतिरेकेण कल्पिते ऽर्थे भवन्ति हि' ॥१३२॥
नाऽर्थस्य वाचकः स्फोटो वर्णेभ्यो व्यतिरेकतः ।
घटादिवन्न दृष्टेन विरोधो धर्मसिद्धितः १३३॥
प्रतिषेधेत्तु यो वर्णान् तज्ज्ञानाऽनन्तरोद्भवान् ।
दृष्टबाधो भवेत्तस्य शशिचन्द्रनिषेधवत् ॥१३४॥

---

एवमुपपादितं स्फोटाऽभावं प्रयोगेण दर्शयति वर्णा वेति[१३१] द्व-येन । ध्वनिमात्रोपादाने शङ्खादिध्वनीनां स्फोटाभिव्यञ्जकत्वस्य परै-रनिष्टत्वादंशे सिद्धसाध्यत्वं स्यात्तन्मा भूदिति पदवाक्ययोरिति विशेषणं, पदवाक्ययोर्वर्त्तमाना वर्णा ध्वनयो वा स्फोटं नाभिव्यञ्ज-न्तीत्यन्वयः । वाचकत्वाऽभावे ऽपि स्फोटस्य प्रयोगमाह नार्थस्येति द्व[१३३]यन्तेन । न च दृष्टविरोधः, स्फोटस्याऽसिद्धत्वेन वाचकत्वा-ऽदृष्टेरित्याह न दृष्टेनेति ।

नन्वसिद्धत्वेन धर्मिणः पक्षो ऽप्यप्रसिद्धविशेष्यः स्यात्, उक्तो-त्तरमिदम् 'अवस्तुत्वेन साध्यत्वा'दित्यत्र । शक्यो ह्यविद्यमाने ऽपि वाचकत्वाऽभावो दर्शयितुम्। ननु बुद्धावनारूढस्य कथमभावेना-पि विशेष्यता, नायमत्यन्ताऽनारूढः, किं तर्हि शक्यते वर्णाऽतिरिक्तो यो ऽर्थस्य वाचकतयेतरैः कल्पितः इत्येवं बुद्धावारोहयितुम्,एवमन्य-त्रापि'निर्विशेषं न सामान्यं भवेत् शशविषाणव'दित्यादावूहनीयमिति। यस्तु वर्णानपि वाचकतया निषेधेत्सत्त्वाद् घटवदिति, तस्य दृष्टवि-रोधः, वर्णज्ञानानन्तरमर्थप्रत्ययोद्भवदर्शनादित्याह प्रतिषेधेदि-

वर्णोत्था वा ऽर्थधीरेषा तज्ज्ञानाऽनन्तरोद्भवा ।

येदृशी सा तदुत्था हि धूमादेरिव वह्निधीः ॥१३५॥

'दीपवद्वा गकारादिर्गवादेः प्रतिपादकः ।

ध्रुवं प्रतीयमानत्वा'त्तत्पूर्वं प्रतिपादनात् ॥१३६॥

वर्णाऽतिरिक्तः* प्रतिषिध्यमानः

पदेषु मन्दं फलमादधाति ।

कार्याणि वाक्याऽवयवाऽऽश्रयाणि

सत्यानि कर्तुं कृत एष यत्नः ॥१३७॥

इति स्फोटवादः ।

---

ति[१३४] । वर्णजन्यत्वे ऽर्थप्रत्ययस्य प्रयोगमाह वर्णोत्थेति[१३५] । वर्णानेव वा पक्षीकृत्याऽर्थप्रतिपादकत्वं साधनीयमित्याह दीपवदिति[१३६] पादत्रयेण । वर्णाऽनन्तरमर्थस्य प्रतीयमानत्वादित्यर्थः । हेत्वन्तरमाह तत्पूर्वमिति । यत्पूर्वं हि यत्प्रतिपद्यते तत्तस्य प्रतिपादकं, यथा दीपारोपणं प्रतिपद्यमानस्य घटस्य प्रतिपादकं, वर्णोच्चारणपूर्वो ऽर्थः प्रतिपाद्यते, ऽतो वर्णः प्रतिपादक इति ।

चोदयति वर्णातिरिक्त इति[१३७] । परिहरति कार्याणीति । स्फोटपक्षे हि निरवयवं वाक्यं निरवयवस्य वाक्यार्थस्य वाचकम्, अवयवास्तु पदात्मका वर्णात्मकाश्च मृषाभूताः, ततश्च पदतदवयवाश्रितस्योहादेर्महावाक्याऽवयवान्तरवाक्यार्थप्रयाजाद्याश्रितस्य प्रसङ्गतन्त्रादेः कार्यस्य मृषात्वं स्यात्, अतस्तत्सत्यतासिद्ध्यर्थं स्फोटनिराकरणं न निष्फलमिति ॥

इति श्रीपार्थसारथिमिश्रविरचिते न्यायरत्नाकरे स्फोटवादस्थानकम् ॥

---

* वर्णातिरेक इति २ पु. पा. ।

## अथाऽऽकृतिवादः ।

आकृतिव्यतिरिक्ते ऽर्थे सम्बन्धो नित्यता ऽस्य च ।
न सिध्येतामिति ज्ञात्वा तद्वाच्यत्वमिहोच्यते ॥१॥
तत्सद्भावप्रसिद्ध्यर्थमत्र तावत्प्रयत्यते ।
वाच्यत्वे वक्ष्यते युक्तिर्व्यक्त्या सह बलाऽबले ॥२॥

---

## अथाऽऽकृतिवादः ।

वाचकनिरूपणवदेव वाच्यनिरूपणस्यापि संगतिः, प्रयोजनं त्वाकृतिवाच्यत्वस्य दर्शयति आकृतीति[1] ।

यदि ह्याकृतिव्यतिरिक्ता व्यक्तय एव सर्वत्र शब्दार्थाः स्युः ततस्ताभिर्व्यभिचारात् सम्बन्ध एव शब्दस्य न सिध्यति नतरां नित्यत्वम् । आकृतिवाच्यत्वे तु क चित्तयैव क चित्तद्विशिष्टेनार्थान्तरेण सिध्यति शब्दस्य सम्बन्धो नित्यता चेति प्रयोजनवत्तद्वाच्यत्वप्रतिपादनमिति । सूत्रकारेणैव 'आकृतिस्तु क्रियार्थत्वा'*दित्याकृतेरभिधेयत्वं स्थापयिष्यते, किं पृथक्प्रयासेन, अत आह तत्सद्भावेति[2]। द्वेधा ह्याकृतेरनभिधेयत्वम्, अभावात्, भावे ऽपि च क्रियायामनुपयोगाद्वा, तदिह सद्भावप्रतिपादनेन प्रथमपक्षनिराकरणं, द्वितीयं तूपरिष्टात्सूत्रकारो निराकरिष्यति 'व्यक्त्या सह बलाऽबले' इति तत्सिद्ध्यर्थमित्यर्थः । जातिवाच्यत्वे हि जातिव्यक्तिशास्त्रयोर्बलाऽबलं सिद्ध्यति, व्यक्तिवाच्यत्वे तुल्यबलमुभयं स्यादित्युक्तं 'कक्षान्तरितसामान्ये'त्यत्रेति ।

---

* जै. सू. अ. ७ पा. ३ सू. २३ ।

जातिमेवाऽऽकृतिं प्राहुर्व्यक्तिराक्रियते यया ।
सामान्यं तच्च पिण्डानामेकबुद्धिनिबन्धनम् ॥३॥
तन्निमित्तं च यत्किञ्चित्सामान्यं शब्दगोचरम् ।
सर्व एवेच्छतीत्येवमविरोधो ऽत्र वादिनाम् ॥४॥
सर्ववस्तुषु बुद्धिश्च व्यावृत्त्यनुगमात्मिका ।
जायते ह्यात्मकत्वेन विना सा च न सिद्ध्यति ॥५॥
विशेषमात्रइष्टे च* न सामान्यमतिर्भवेत् ।
सामान्यमात्रबोधे तु निर्निमित्ता विशेषधीः ॥६॥

---

ननु संस्थानमाकृतिः, तच्च प्रतिपिण्डमन्यदन्यच्चेति तदभिधेयत्वे ऽपि सम्बन्धतन्नित्यत्वे न सिध्येतामेवाऽत आह जातिमिति[३] । आक्रियते निरूप्यतइत्यर्थः । तया हि द्रव्यं निरूप्यते गौरयमिति । ततः किमित्यत आह सामान्यमिति । भिन्नेषु पिण्डेषु एकबुद्ध्यालम्बनं सामान्यं जातिर्न प्रतिपिण्डं भिद्यतइति । तथापि कथं तस्याः शब्दार्थत्वमत आह तन्निमित्तमिति[४] ।

एकबुद्धिनिमित्तं यत् सामान्यं जातिरूपं सारूप्यरूपमपोहरूपं तस्य शब्दवाच्यत्वं सर्ववादिनामविवादं, तत्स्वरूपे तु विवाद इति । जातिसद्भावः प्रतिपाद्यते इत्युक्तं, तमिदानीं प्रतिपादयति सर्ववस्तुष्विति[५] । कथं न सिध्यत्यत आह विशेषेति[६] । यदि तावदसाधारणं स्वलक्षणमेव वस्तु स्यान्न सामान्यं, यथा सौगतैरुच्यते, ततो ऽयं गौरयमपीति सामान्यबुद्धिर्न स्यात् । यदि तु गोत्वादिशाबलेयादिविशेषाननुवृत्तव्यावृत्तात्मनो ऽपहुत्य महासामान्यं स-

---

* मात्रदृष्टे चेति का. सं. पुस्तके २ पुस्तके च पाठः ।

न चाप्यन्यतरा भ्रान्तिरुपचारेण चेष्यते ।
दृढत्वात्सर्वदा बुद्धेर्भ्रान्तिस्तद्भ्रान्तिवादिनाम् ॥७॥
मुख्ययोश्चाप्यदृष्टत्वान्नोपचारेण कल्पना ।
बाह्याऽर्थविषयत्वं च बुद्धीनां प्रतिपादितम् ॥८॥
अन्योन्यापेक्षिता नित्यं स्यात्सामान्यविशेषयोः ।
विशेषाणां च सामान्यं ते च तस्य भवन्ति हि ॥९॥

---

न्मात्रमेव वस्त्वङ्गीक्रियते,यथा वेदान्तवादिभिरुच्यते, ततो* गौरयमश्वो ऽयं शाबलेयो ऽयं बाहुलेयो ऽयमिति विशेषबुद्धिर्न स्यात्; यद्यपि सामान्यसद्भावः प्रतिपादयितुमुपक्रान्तः तथापि न्यायतुल्यत्वाद्विप्रतिपत्तिसम्भवाच्च विशेषप्रतिपादनमपि कृतमिति ।

नन्वेकस्य सामान्यविशेषात्मकत्वविरोधादन्यतररूपं भ्रान्तमौपचारिकं वा, ऽत आह **न चेति**[७] । अभ्रान्तित्वे कारणमाह **दृढत्वा-दिति** । न चौपचारिकं, मुख्यस्य सामान्यस्य विशेषस्य च क चिदप्यदर्शनात्; मुख्यपूर्वत्वाच्चोपचारस्य, एकरूपार्थक्रियानिबन्धनोक्तिर्हि विलक्षणानामपि स्वलक्षणानामेकत्वोपचारो ऽभिमतः । न चार्थक्रियाणामप्येकरूपत्वं भवन्मते ऽस्ति, तासामपि व्यावृत्तस्वभावत्वात् सामान्याऽनभ्युपगमाच्च, क्रियैव तावद्भवतां नास्तीति दूरापास्तं तत्सामान्यं, तस्मान्नौपचारिकमित्याह **मुख्ययोरिति**[८] ।

अथाऽसतोरपि बहिः सामान्यविशेषयोर्ज्ञानाकारयोः सद्भावात्तन्निबन्धनं बुद्धिद्वयं, तत्राह **बाह्येति** । किं चाऽन्यतररूपाऽभ्युपगमे तदाक्षेपादेवेतरदपि रूपं सिध्यतीत्याह **अन्योन्येति**[९] । कथमि-

---

* तथेति २ पु. पा. ।

निर्विशेषं न सामान्यं भवेच्छशविषाणवत् ।
सामान्यरहितत्वाच्च विशेषास्तद्वदेव हि ॥१०॥
तदनात्मकरूपेण हेतू वाच्याविमौ पुनः ।
तेन नाऽत्यन्तभेदोऽपि स्यात्सामान्यविशेषयोः ॥११॥
सामान्यबुद्धिशक्तत्वं विशेषेष्वेव यो वदेत् ।
विना वस्त्वन्तरात्तेन वाच्यशक्तिस्तु कीदृशी ॥१२॥

---

त्याह विशेषाणामिति । समानानां हि भावः सामान्यं, तत्कथमसत्सु बहुषु विशेषेषु स्यात् । इदं च विशेषाणां विशेषत्वं यत्समानात्मनो भावान् विशिंषन्ति, तेनाऽन्यतरेण विनेतरस्यात्मलाभाऽभावात्तस्यापि सिद्धिरिति ।

तदेवमुपपादितं द्व्याकारत्वं प्रयोगेण दर्शयति निर्विशेषमिति[१०] । निर्विशेषं परकल्पितं सामान्यं धर्मि नास्तीति साध्यं, तथा निःसामान्या विशेषा न सन्तीति विशेषरहितत्वात् सामान्यरहितत्वादिति हेतुद्वयम् । इमावेव हेतू विशेषाऽनात्मकत्वात् सामान्याऽनात्मकत्वादित्येवंरूपेण वक्तव्यावपीत्याह तदनात्मकेति[११] । किं पुनरेवंवचने प्रयोजनम्, अत आह तेनेति । ये ह्यङ्गीकृत्यैव सामान्यविशेषावत्यन्तभिन्नौ सङ्गिरन्ते तान्निराकर्तुमेवंवचनम् । यदा हि सामान्यविशेषाऽनात्मकस्याऽविद्यमानत्वं साधितं भवति तदाऽवश्यं विद्यमानस्य तदात्मकत्वेन भवितव्यमिति ।

शाक्यास्त्वाहुः, अवश्यं तावदङ्गीकृत्यापि सामान्यं तस्य तुल्याकारबुद्धिजननशक्तिरङ्गीकर्तव्या, तद्वरं विशेषाणामेवोभयसिद्धानां सा शक्तिराश्रिता, किं सामान्येनेति; तदुपन्यस्यति सामान्येति[१२]

ग्राह्या किं वाप्यसंवेद्या भिन्नैका* वा तथैवच ।
गृह्यते यदि सैका च जातिरेवान्यशब्दिका ॥१३॥
भवेन्निर्विषया बुद्धिर्यदि शक्तिर्न गृह्यते ।
न हि सद्भावमात्रेण विषयः कश्चिदिष्यते ॥१४॥
परस्परविभिन्नत्वाद्विशेषा नैकबुद्धिभिः ।
गृह्यन्ते विषयाऽसत्त्वाच्छक्तिश्चैषां न विद्यते ॥१५॥
भिन्नत्वे वा ऽपि शक्तीनामेकबुद्धिर्न लभ्यते ।
विशेषशक्त्यभेदे च तावन्मात्रमतिर्भवेत् ॥१६॥

---

अन्तरादन्तेन। तदिदं विकल्पयति तेनेति । प्रतिव्यक्ति भिन्ना सर्वासु वैकेति। अथवा व्यक्तिभ्यो ऽन्या ऽनन्या वेति। अत्र दूषणमाह गृह्यतइति[१३] । सर्वव्यक्तिष्वेकेत्यर्थः। अग्राह्यत्वे दूषणमाह भवेदिति[१४] । कथमित्याह न हीति। प्रतीयमानतयैव हि विषयत्वं न सत्तामात्रेणेति ।

ननु न शक्तेर्विषयत्वं ब्रूमः, कस्तर्हि विषयः, स्वलक्षणान्येव । तेषां तु नानाभूतानामेकबुद्धिजननशक्तिकल्पनया विषयत्वं समर्थ्यते, न तु सैव विषय इत्यत आह परस्परेति[१५] । विषयाऽसत्त्वान्न हि भिन्नानामेकबुद्धिविषयत्वं सम्भवति, विषयत्वे वा भिन्नत्वं न स्यात्, कथं ह्यबाधितया प्रत्यक्षबुद्ध्यैकत्वेनाऽवगम्यमानं भिन्नं स्यात्। शक्तिस्तु विद्यमाना ऽप्यगृह्यमाणा विषयत्वेन न विद्यतएवेति। अथ गृह्यतएव शक्तिः, सा तु प्रतिव्यक्ति भिन्ना, तत्राह भिन्नत्वइति[१६]। व्य-

---

* संवेद्येति ३ पु. पा. ।

भिन्ना विशेषशक्तिभ्यः सर्वत्राऽनुगता ऽपि च ।
प्रत्येकं समवेता च तस्माज्जातिरपीष्यताम् ॥ १७ ॥
तेनात्मधर्मो भेदानामेकधीविषयो ऽस्ति नः* ।
सामान्यमाकृतिर्जातिः शक्तिर्वा सो ऽभिधीयताम् ॥१८॥
ननु भिन्ने ऽपि सत्तादौ सामान्यमिति जायते ।
बुद्धिर्विना ऽपि सामान्यादन्यस्मात्सा कथं भवेत् ॥१९॥
वनोपन्यासतुल्यो ऽयमुपन्यासः कृतस्त्वया ।
भ्रान्तित्वेन हि नैतस्या भ्रान्तिर्गोत्वादिधीरपि ॥२०॥
शब्दात्पूर्वं हि सर्वेषु† गवादाविव नैकधीः ।
वस्तुत्वं चात्र सामान्यं धर्मं के चित्प्रचक्षते ॥२१॥

---

क्त्यनन्यत्वे शक्तेरयमेव दोष इत्याह विशेषेति । उपसंहरति भिन्नेति[१७] । व्यवहारस्तु यथारुचि क्रियताम् । अस्ति तावत्स्वलक्षणादनतिभिन्नं सामान्यरूपं वस्त्वित्याह तेनेति[१८] ।

चोदयति नन्विति[१९] । न हि सामान्ये ऽप्यपरं सामान्यमस्ति, अनवस्थाप्रसङ्गात् । अतो ऽवश्यं गोत्वादिषु सामान्यं सामान्यमित्येकबुद्धिर्भ्रान्तिरित्यङ्गीकर्तव्यं, तद्वद्गोत्वादिबुद्धिरप्यस्त्विति । परिहरति वनेति[२०] । कथमित्याह भ्रान्तित्वेनेति । यथा हि वनबुद्धेर्मिथ्यात्वात् वृक्षबुद्धेर्गोत्वादिबुद्धेर्वा न मिथ्यात्वं, निरस्तत्वात् माहायानिकपक्षस्य, तथा सामान्यबुद्धेर्मिथ्यात्वे ऽपि गोत्वादिबुद्धेर्न मिथ्यात्वमिति । किं च, शब्दैक्यनिबन्धनैव सामान्येष्वेकबुद्धिर्न ह्यशाब्दज्ञस्य गोत्वं दृष्ट्वा ऽश्वत्वमुपलभमानस्यास्ति प्रत्यभिज्ञानं, न च

---

* व इति २ पु. पा. । † सर्वेषामिति २ पु. पा. ।

एवं तु कल्प्यमाने स्यात्सामान्यानामनन्तता।
पुनस्तेन सहान्येषु सामान्यमतिरास्ति हि ॥२२॥
विशेषेष्वपि वस्तुत्वात्सामान्यमिति धीर्भवेत्।
सत्तादिष्विव, तेनैतत्सामान्यं नोपपद्यते ॥२३॥
तस्मादेकस्य भिन्नेषु या वृत्तिस्तन्निबन्धनः।
सामान्यशब्दः सत्तादावेकधीकरणेन वा ॥२४॥
पिण्डेष्वेव च सामान्यं नाऽन्तरा गृह्यते यतः।
न ह्याकाशवदिच्छन्ति सामान्यं नाम किं चन ॥२५॥

---

प्रमाणाऽदृष्टे पदप्रामाण्यं सम्भवतीति युक्तं भ्रान्तित्वम्। अस्ति तु शावलेयादावेकरूपं प्रत्यभिज्ञानं, तदाह शब्दादिति[२१]।

केचित्त्वस्त्येव सामान्येष्वपि वस्तुत्वं नाम सामान्यमित्याहुः, तदाह वस्तुत्वमिति। निराकरोति एवं त्विति[२२]। कथमित्याह पुनरिति।

तदेवं विशेषेभ्यो व्यावृत्तं गोत्वादिषु चाऽनुगतं सामान्यं नास्तीत्युक्तम्। यदि तु यदेवेदं द्रव्यगुणकर्माऽवान्तरसामान्येष्वनुगतं महासामान्यं वस्तुत्वं नाम तन्निबन्धनैव गोत्वादिष्वेकसामान्यबुद्धिरित्युच्यते, तत्राह विशेषेष्विति[२३]। उपसंहरति तेनेति। कथं तर्ह्यसति सामान्ये भिन्नेषु गोत्वादिष्वेकसामान्यशब्दप्रवृत्तिरत आह तस्मादिति[२४]।

तत्पुनरिदं सामान्यं केचित्सर्वगतमिच्छन्ति, केचित् पिण्डमात्रगतं; तत्र निर्णयमाह पिण्डेष्विति[२५]। कथमित्याह नान्तरेति। इतश्चैवमित्याह न हीति। न व्योमादिवत्स्वतन्त्रं किमपि तत्त्वं

यद्वा सर्वगतत्वे ऽपि व्यक्तिः शक्त्यनुरोधतः ।
शक्तिः कार्याऽनुमेया हि व्यक्तिदर्शनहेतुका ॥२६॥
तेन यत्रैव दृश्येत व्यक्तिः शक्तं तदेव तु ।
तेनैव च न सर्वासु व्यक्तिष्वेतत्प्रतीयते ॥२७॥
भिन्नत्वे ऽपि हि कासां चिच्छक्तिः काश्चिदशक्तिकाः ।
न च पर्यनुयोगो ऽस्ति वस्तुशक्तेः कदा चन ॥२८॥
वह्निर्दहति नाऽऽकाशं को ऽत्र पर्यनुयुज्यताम् ।
न चाऽन्या मृग्यते युक्तिर्यथा संदृश्यते* तथा ॥२९॥

---

सामान्यं नाम, पिण्डस्वरूपं हि तत्कथं रूपिणं विहाय तिष्ठेदिति ।

शक्यं वा वैशेषिकाऽभिमतं सर्वगतत्वं समर्थयितुमित्याह यद्वेति[२६]। नाऽन्तरा गृह्यतइति संबन्धः । सर्वगतमपि सामान्यम् अभिव्यक्तिशक्तिमतीषु व्यक्तिष्वेव गृह्यते नान्तरेति । कथं व्यक्तीनामेव शक्तिरवगम्यते, ऽत आह शक्तिरिति । अभिव्यक्तथाख्यकार्यदर्शनाऽनुमेया हि शक्तिः, अतो यत्रैवाऽभिव्यक्तिर्दृश्यते तदेव शक्तामिति । संबद्धं सर्वगतमपि हि शक्त्यनुरोधादेव चाऽन्तरात्ववत् कार्यादिष्वपि न प्रतीयतइत्याह तेनेति[२७] । एतदेव विवृणोति भिन्नत्वइति[२८] । यद्यपि सर्वेभ्यः सामान्येभ्यः सर्वा व्यक्तयो भिन्नाः, तथापि काश्चिदेव कस्यचिदभिव्यक्तौ शक्ता, न सर्वाः सर्वेषामिति ।

शक्तिव्यवस्थैव किं निबन्धनेत्यत आह न चेति । अत्रैव दृष्टान्तमाह वह्निरिति[२९] । शब्दशक्तिर्वा किमिति न पर्यनुयुज्यते, न हि युक्त्या विना ऽग्निरेव दहति नाऽऽकाशमिति शक्यमभ्युपगन्तुम्, अत

---

* तद् दृश्यते इति ३ पु पा. ।

न हि युक्त्यन्तरं नास्तीत्येतज्ज्ञानमनर्थकम् ।
धर्मश्चाऽव्यभिचार्यस्य न मृग्य उपलक्षणे ॥३०॥
नाऽनुमानाऽवगम्यं तत्, प्रत्यक्षे लक्षणेन किम् ।
'स्वाभाविकश्च सम्बन्धो जातिव्यक्त्योर्न हेतुमान् ॥३१॥
तेनैतस्य प्रसिद्ध्यर्थं नाऽन्यत्सामान्यमिष्यते ।
शक्तिसिद्धिवदेतस्य स्वभावो ऽत्र न वार्यते' ॥३२॥
यद्वा नैमित्तिकत्वे ऽपि तावन्मात्रप्रतीक्षणात् ।
विशेषेष्वेव लब्धेषु केषु चिन्नाऽन्यवाञ्छनम् ॥३३॥

---

आह न चाऽन्येति। दर्शनाऽसिद्धे वस्तुनि युक्तिरन्वेषणीयेति। कथमित्याह न हीति[३०]। दर्शितं हि चोदनासूत्रे स्वतःप्रामाण्यवादे 'न चाऽनुमानतः साध्या शब्दादीनां प्रमाणते'ति। अनर्थकमप्रमाणकमित्यर्थः। भवतु कासां चिच्छक्तिः, कथं तु ज्ञायते, एवंधर्मिकया व्यक्त्येदं सामान्यं व्यज्यतइति, तत्राह धर्म इति। यद्यनुमानगम्यं सामान्यं स्यात् ततो ऽव्यभिचारि लिङ्गं स्वोपलक्षणायाऽपेक्षेत, तत्तु प्रत्यक्षं, किं लक्षणेनेति*।

ननु सर्वगताया अपि जातेर्व्यक्तिविशेषसंबन्धो दृश्यते, अतो ऽवश्यं संबन्धहेतुना भवितव्यं, न च व्यक्तयो नानारूपत्वादेकरूपस्य सम्बन्धकारणं भवन्तीति सामान्यान्तरं कल्पनीयं, तस्याऽसंबद्धस्य हेतुत्वाऽनुपपत्तेस्तत्संबन्धार्थं सामान्यान्तरं कल्प्यमिति अनवस्था स्यात्, अत आह स्वाभाविक इति[३१] सार्द्धेन। यथा ह्यभिव्यक्तिशक्तिः स्वाभाविकी तथा संबन्धस्यापि स्वभाव एव हेतुः, काश्चिद्व्यक्तयः किं चित्सामान्यं स्वभावादेवात्मना संबध्नन्तीति।

---

* किमुपलक्षणेनेति १ पु. पा.

न व्यञ्जन्त्यपरे कस्माद्यतस्तेषु न दृश्यते ।
तेभ्यो ऽपि न निवृत्त्यर्थं मृग्यो हेतुः स्वभावतः ॥३४
सामान्यं नाऽन्यदिष्टं चेत्तस्य वृत्तेर्नियामकम् ।
गोत्वेनाऽपि विना कस्माद्गोबुद्धिर्न नियम्यते ॥३५॥
यथा तुल्ये ऽपि भिन्नत्वे केषु चिद्वृत्त्यपेक्षिता* ।
गोत्वादेरनिमित्ते ऽपि तथा बुद्धिर्भविष्यति ॥३६॥

---

कथं पुनः कादाचित्कस्य निमित्तमन्तरेण सिद्धिरत आह यद्वेति[३३]। संवन्धस्य निमित्तमात्रमपेक्षितं, तच्च विशेषा एव के चिद्भवन्तीति । चोदयति न व्यञ्जन्तीति[३४]। व्यञ्जन्तीति चाऽभिव्यक्तिहेतुः संवन्धो लक्ष्यते, व्यक्तिरूपाऽविशेषात् कर्कादयो† ऽपि गोत्वसंबन्धे निमित्तं स्युरिति । परिहरति यत इति। येनैव हेतुना सर्वगतमपि गोत्वं कर्कादिषु‡ न दृश्यते तेनैव न तेषु वर्तत इति। तमेव हेतुं दर्शयति तेभ्य इति । अनभिव्यञ्जकत्वे ऽपि स्वभाव एव हेतुरेवं तेभ्यो निवृत्त्यर्थमपि स्वभावतो ऽन्यो हेतुर्न मृग्यः, तेभ्यो निवृत्तिस्तैरसम्बन्धित्वं न तु तत्राऽभावः, सर्वगतत्वाऽभ्युपगमात्। सर्वगतमपि हि सामान्यं केषु चिद्विशेषेषु समवेतं तेष्वेवाऽभिव्यज्यत इति हि वैशेषिकं दर्शनमिति ।

चोदयति सामान्यमिति[३५] । तदेव विवृणोति यथेति[३६] । प-

---

* वृत्त्यवृत्तितेति २ पु. पा. ।

† कर्मादयो ऽपीति १ पु. पा. ।

‡ कर्मादिष्वपीति १ पु. पा. ।

विषयेण हि बुद्धीनां विना नोत्पत्तिरिष्यते ।
विशेषादन्यदिच्छन्ति सामान्यं तेन * तद् ध्रुवम् ॥३७॥
ता हि तेन विनोत्पन्ना मिथ्याः स्युर्विषयादृते ।
न त्वन्येन विना वृत्तिः सामान्यस्येह दुष्यति ॥३८॥
अनिष्यमाणे सामान्ये वृत्तिः शब्दाऽनुमानयोः ।
नैव स्यान्न हि सम्बन्धो भेदैरानन्त्यतो भवेत् ॥३९॥
अनुभूततया चाऽसौ पुरुषस्योपयुज्यते ।
जातिव्यक्त्योस्तु सम्बन्धे नाऽनुभूत्या प्रयोजनम् ॥४०॥

---

रिहरति विषयेणेति[३७] । ननु यथैव विशेषाणां वृत्तौ कारणत्वम्, एवं बुद्धिविषयत्वं किं न भवत्यत आह ता हीति[३८] । कारणत्वं हि विलक्षणानामप्येकत्र युक्तम्, एकरोगशान्ताविव भेषजभेदानाम्, अतो विना ऽपि सामान्यान्तरेण गोत्वादिवृत्तिर्न दुष्यति, विषयत्वं तु प्रतिभासमानतया । न च नानात्मनामेकतया प्रतिभासः सम्भवति, सम्भवे वा भ्रान्तित्वं, तच्च हेतुद्वयाऽभावादयुक्तमिति । न केवलं तासां मिथ्यात्वं, शब्दाऽनुमानयोरपि स्यादित्याह अनिष्यमाणइति[३९] । कारणमाह न हीति ।

नन्वनन्तत्वादेव विशेषाणां जात्या ऽपि सम्बन्धो न शक्यते ग्रहीतुम्, अतः कथं ते जातिमभिव्यञ्जन्ति, इत्यत आह अनुभूततयेति[४०] । शब्दाऽर्थयोर्लिङ्गलिङ्गिनोः सम्बन्धो ज्ञाततया कारणं, जातेस्तु प्रत्यक्षाया व्यक्तिसम्बन्धः सत्तामात्रेण कारणमिति । यदि विलक्षणानामप्येकसामान्याऽनुवर्त्तनशक्तिरस्ति, तर्हि सैवैकबुद्धेर्निमित्तं भवत्यत

---

* सामान्यत्वेनेति १ पु. पा. ।

'सिद्धे विषयरूपे च गोत्वादाविन्द्रियैः पुनः ।
अर्थापत्त्युपलब्धा स्याच्छक्तिरेका नियामिका ॥४१॥
न चाऽऽत्महेतुमेवाऽसौ सिद्धं * बाधितुमर्हति' ।
शक्तिश्च नैतया बुद्ध्या नेन्द्रियैः सा हि गृह्यते ॥४२॥
सामान्यान्तरयोगानामनिष्टा या च वर्ण्यते† ।
तया सामान्यनाशः स्यात्स च दृष्टेन बाध्यते ॥४३॥
सम्बन्धस्तस्य हेतुर्वा तद्ग्रहे न च कारणम् ।
स्वरूपतो गृहीते ऽर्थे पश्चादेतद्विकल्प्यते ॥४४॥

---

आह सिद्धे इति[४१] सार्द्धेन । सत्यामपि तावच्छक्तौ निर्विषयबुद्ध्ययोगाद् विषयभूतं सामान्यमङ्गीकर्त्तव्यमेव, तत्सत्तैव तु सामान्यसिद्ध्यधीना तदभावे दुर्लभेति ।

अथ विषयत्वमपि शक्तेरेवोच्यताम्, अत आह शक्तिरिति । गृह्यतइति सम्बन्ध इति। कारणमाह नेन्द्रियैरिति[४२] । किं च, येयं सम्बन्धहेतुसामान्यान्तराऽपेक्षायामनवस्था ऽऽपाद्यते, किं तया भवतश्चिकीर्षितं, सामान्यविनाश इति चेन्न, अनवस्थासहस्रेणापि प्रत्यक्षदृष्टस्य तस्य विनाशाऽसम्भवादित्याह सामान्यान्तरेति[४३] ।

स्यादप्ययं सामान्यनाशः, यदि सम्बन्धतद्धेतुग्रहणाऽपेक्षं सामान्यग्रहणं स्यात्, न तु तदस्तीत्याह सम्बन्ध इति[४४] । कारणमाह स्वरूपत इति । ननु सास्नादिविशिष्टा आकृतिरिति वदता सा-

---

* सिद्धामिति १ पु. पा. ।

§ अनिष्टेयं च वर्ण्यते इति २ पु. पा. । सामान्यान्तरयोगेनाप्रतिष्ठा या च वर्ण्यतइति ३ पु. पा. ।

सास्नाद्येकार्थसम्बन्धि गोत्वमित्युपलक्षणम् ।
न च स्वसमवाय्येव केवलं चिह्नमिष्यते ॥४५॥
सास्नादिभ्यस्तु पिण्डस्य भेदो नाऽत्यन्ततो* यदा ।
सामान्यस्य च पिण्डेभ्यस्तदा स्यादेतदुत्तरम् ॥४६॥
कस्मात् सास्नादिमत्स्येव गोत्वं यस्मात्तदात्मकम् ।
तादात्म्यमस्य कस्माच्चेत् स्वभावादिति गम्यताम् ॥४७॥

---

स्नात्वादिसामान्यान्तरग्रहणाऽपेक्षं गोत्वादिसामान्यग्रहणमित्युक्तं, नाऽगृहीतविशेषणा विशेष्ये बुद्धिरिति न्यायात्, अतः कथमनपेक्षं गोत्वग्रहणमित्यत आह सास्नादीति[४५] । को गोशब्दस्यार्थ इति पृष्टे तदुपलक्षणमात्रतया तदेकार्थसम्बन्धिसास्नाद्युपादानं, न तु तद्विशिष्टमेव गोत्वरूपमनेन दर्शितं, यतस्तद्ग्रहणाऽपेक्षं ग्रहणं स्यादिति ।

कथं पुनर्गोत्वाद्यसमवेतं सास्नादि तदुपलक्षणमत आह न चेति । सम्बन्धमात्रनिमित्तमुपलक्षणमित्यभेदाश्रयणेन वा पिण्डात्मनां सास्नादीनां तदात्मिकया जात्या ऽस्त्येव तादात्म्यमित्याह सास्नादिभ्य इति[४६] ।

एवं भाष्यसमर्थनाय स्वपक्षमेव तादात्म्यमुपक्रम्य यदुक्तं कः सामान्यविशेषयोः सम्बन्धहेतुरिति, तदपि स्वमतेनैव परिहरति कस्मादिति†[४७]। अस्मिन् प्रश्ने ऽपि‡ या तदेकार्थसम्बन्धिता तस्यां तादात्म्यमेवोत्तरं देयमिति। तदेव कस्मादिति पृच्छतः सम्बन्धपदेव

---

* नात्यन्तिक इति २ पु. पा. ।

† तस्मादितीति २ पु. पा. ।

‡ पक्षे ऽपीति २ पु. पा. ।

उपलब्ध्यनुसारेण व्यवस्थासिद्धिरीदृशी ।
स्वतो गोत्वादिभेदस्तु न तु व्यञ्जकभेदतः ॥४८॥
मा भूद् द्रुतादिवन्मिथ्या 'व्यञ्जकस्य तु किंकृतः ।
भेदो हस्त्यादिपिण्डेभ्यः' स्वतश्चेदिह तत्समम् ॥४९॥
व्यङ्ग्यजातिविशेषाच्चेत् प्राप्तमन्योन्यसंश्रयम् ।
तस्मात् स्वाभाविको भेदो जातिव्यक्त्योः प्रतीयते॥५०॥

---

स्वाभाविकत्वमुत्तरमित्याह तादात्म्यमिति । काश्चिद्व्यक्तयः स्वकारणैर्जातिविशेषात्मिका एव जायन्ते । किमत्र प्रमाणं, तद्दर्शयति उपलब्धीति[४८] ।

केचित्त्वङ्गीकृत्यैव सामान्यविशेषभेदं सामान्येष्ववान्तरभेदमपलपन्ति, वस्तुत्वमेवैकं महासामान्यं व्यञ्जकभेदाद्गोत्वहस्तित्वात्मना भिन्नमाभासते, मुखमिवाऽऽदर्शादिभेदाद्वर्णवद्वा ध्वनिभेदादिति; तान् प्रत्याह स्वत इति। कारणमाह मा भूदिति[४९] । मिथ्यात्वं चाऽयुक्तं, हेतुद्वयाऽभावादिति। किं च, व्यञ्जकस्य शाबलेयादिपिण्डस्य हस्त्यादिपिण्डेभ्यो भद्रमन्द्रादिभ्यः किंनिबन्धनो भेद इति वाच्यमित्याह व्यञ्जकस्येति पादद्वयेन ।

शङ्कते स्वत इति । निराकरोति इहेति । इहापि शाबलेयादिष्वप्यस्त्येव मिथो भेदः, तद्यदि पिण्डभेदमात्रात् शाबलेये भद्रे मन्द्रे च वस्तुत्वमेकं गोत्वहस्तित्वरूपेण नाना दृश्यते, ततः शाबलेयबाहुलेययोरपि मिथो भेदात्तयोरपि जातिनानात्वं दृश्येत, ततो हस्त्यादिपिण्डेभ्यो वैलक्षण्यं* शाबलेयादिष्वनुवृत्तं वक्तव्यमिति सिद्ध्यत्यवान्तरसामान्यमिति ।

---

* विलक्षणमिति १ पु. पा. ।

अनेकाऽनन्यवृत्तित्वान्न सामान्यविशेषयोः ।
एकवस्त्वात्मता युक्ता किं चित्तेनौपचारिकम् ॥५१॥
भिन्नेभ्यश्चाप्यभिन्नत्वाद्भेदस्तत्स्वात्मवद्भवेत् ।
एकस्माद्वा ऽप्यभिन्नत्वाद्व्यक्त्येकत्वं प्रतीयते* ॥५२॥
एकाऽनेकत्वमेकस्य तथा ऽन्याऽनन्यता कथम् ।
तत्सामान्यं विशेषश्चेत्येवमादि च दुष्करम् ॥५३॥

---

अत्र किं चिदाशङ्कते व्यङ्ग्येति[५०]। दूषयति प्राप्तमिति। उपसंहरति तस्मादिति।

चोदयति अनेकेति[५१]। न तावद्वैशेषिकादिवज्जातिव्यक्त्योर्भिन्नयोः समवायसम्भवः, प्रतीत्यननुगुणत्वात्। न हीह गोत्वमिति कस्य चित्कदा चिदवगतिः, अयं गौरित्यपर्यायबुद्धिद्वयसामानाधिकरण्यदर्शनात्। एकं वस्तु द्विरूपं भवद्भिरङ्गीकृतं, न च तथा सम्भवति, विरोधात्। अनेकवृत्ति सामान्यम्, अनन्यवृत्तिर्विशेषः, कथमेकमनेकवृत्ति अनन्यवृत्ति च स्यात्। तस्माज्ज्ञानाऽऽकारं सामान्यमलीकं वा स्वलक्षणं वा भासमानमनुभासते, शब्दमिव प्रतिशब्दः, वरं† पूर्वोक्तौ भ्रान्त्युपचारावेवाश्रिताविति। किं चाऽभिन्नत्वे रूपद्वयस्यापि हानिरिति प्रयोगेण दर्शयति भिन्नेभ्य इति[५२]। सामान्यं प्रतिपिण्डं भिन्नं भिन्नेभ्यो ऽनन्यत्वात्पिण्डस्वरूपवत्। एवं च सामान्यरूपमेवाऽपहारितं, तस्याऽनुगतस्व‡रूपत्वात्। तथा व्यक्तयः सर्वैकरूपाः सामान्यादनन्यत्वात् सामान्यरूपवत्। एवं च विशेषरूप-

---

* प्रसज्यते इति ३ पु. पा. ।

† वरमिति नास्ति २ पु. ।

‡ स्वशब्दो नास्ति १ पु. ।

विरोधस्तावदेकान्ताद्वक्तुमत्र न युज्यते* ।
सामान्याऽनन्यविज्ञाते विशेषे नैकवृत्तिता† ॥५४॥
सामान्याऽनन्यवृत्तित्वं विशेषाऽऽत्मैकभावतः ।
एवञ्च परिहर्तव्या भिन्नाऽभिन्नत्वकल्पना ॥५५॥
केन चिद्ध्यात्मनैकत्वं नानात्वं चाऽस्य केन चित् ।
सामान्यस्य तु यो भेदं ब्रूते तस्य विशेषतः ॥५६॥

---

स्यैवाऽपहारः, तस्य प्रतिपिण्डं भिन्नरूपत्वादिति । एवं विरोधान्तराणि दर्शयति एकेति[५३] । परिहरति विरोध इति[५४] ।

कथमित्याह सामान्येति । त्वया तावदपर्यायं बुद्धिद्वयं सामानाधिकरण्यमित्युक्तं तदपर्यायत्वात्तद्विषयस्य, नानात्वं सामानाधिकरण्यं चैकत्वं प्रतीतिसिद्धमबाधितं न शक्यमन्यथाकर्त्तुम्, अत एव विरोधो ऽपि नास्ति, यदि ह्यनेकवृत्त्येव सामान्यं स्यात्, अनन्यवृत्तय एव विशेषाः, तयोरेकत्वं विरुध्यते । यदा तु विशेषा अपि सामान्यात्मना ऽनेकवृत्तयः, सामान्यं च विशेषात्मना ऽनन्यवृत्ति, तदा को विरोध इति ।

यत्त्वन्याऽनन्यतैव कथमेकस्येत्युक्तं, तत्राह एवमिति[५५] । एतदेव दर्शयति केन चिदिति[५६] । गोत्वं हि शावलेयात्मना बाहुलेयाद्भिद्यते, स्वरूपेण च न भिद्यते, तथा व्यक्तिरपि गुणकर्मजात्यन्तरात्मना गोत्वाद्भिद्यते, स्वरूपेण च न भिद्यते । तथा व्यक्त्यन्तरादपि व्यक्तिः जात्यात्मना न भिद्यते, स्वरूपेण च भिद्यतइति । अपेक्षाभे-

---

* शक्यते इति २ पु. पा. ।
† अनेकवृत्तितेति २ पु. पा. ।

दर्शयित्वा ऽभ्युपेतव्यं, विशेषैक्यं च जातितः ।
यथा कल्माषवर्णस्य यथेष्टं वर्णनिग्रहः ॥५७॥
चित्रत्वाद्वस्तुनो ऽप्येवं भेदाऽभेदाऽवधारणम्* ।
सामान्यांशे तु निष्कृष्य भेदो येन प्रसाध्यते ॥५८॥
तस्य हेतोरासिद्धत्वं सिद्धश्चेत् सिद्धसाधनम्† ।
भेदेभ्यो ऽनन्यंरूपेण सामान्यं गृह्यते यदा ॥५९॥

---

दादविरोधः, समाविशन्ति हि विरुद्धान्यपि एकत्वाऽपेक्षाभेदात्; एकमपि हि किं चिदपेक्ष्य ह्रस्वं किं चिदपेक्ष्य दीर्घं, तथैको ऽपि चैत्रो द्वित्वाऽपेक्षया भिन्नो ऽपि स्वात्माऽपेक्षया न भिद्यते। अनेनैकाऽनेकत्वमपि परिहर्तव्यं, तदेव हि वस्तु स्वरूपेण सर्वत्र सर्वदा चैकमपि शाबलेयादिरूपेणाऽनेकं भवतीति न विरोध इति ।

यत्तु सामान्यस्य भेदे विशेषाणां चैकत्वे प्रयोगद्वयमुक्तं, तत्र सिद्धसाधनमित्याह सामान्यस्येति । एतदेव दृष्टान्तेनोपपादयति यथेति[५७] । नानावर्णे हि वस्तुनि य एव वर्णो निष्कृष्य दर्शयितुमिष्यते स एव शक्यो दर्शयितुम्, एवं नानारूपे वस्तुनि सर्वस्य भेदाऽभेदादेः सम्भव इति । यस्तु सामान्यांशं निष्कृष्य भेदं साधयेत्, तस्य भिन्नेभ्यो ऽभिन्नत्वादिति हेतुरसिद्धः स्यात्, सिद्धत्वे वा तदेव सिद्धसाधनं स्यादित्याह सामान्येति[५८] ।

किं पुनरनुवृत्तिव्यावृत्तिभेदाऽभेदादिभिर्नानारूपं वस्तु सर्वदैव तथा गृह्यते, नेत्याह भेदेभ्य इति[५९] । अथ व्यावृत्त्यात्मसु विशेषेषूद्भूतेषु तद्रूपे वस्तुनि गृह्यमाणे ऽनुवृत्तिरूपं सामान्यं किमवश्यं

---

* अवधारणेति २ पु. पा. ।

† सिद्धसाध्यतेति २ पु. पा. ।

तदा विशेषमात्रेण वस्तु प्रत्यवभासते ।
तदुद्भूत्या च सामान्यं तद्भावाऽनुगुणं स्थितम् ॥६०॥
सदप्यग्राह्यरूपत्वादसद्वत् प्रतिभाति नः ।
विशेषानपि सामान्याद्यदा भेदेन बुध्यते ॥६१॥
तदा सामान्यमात्रत्वमेवमेव प्रतीयते ।
यदा तु शबलं वस्तु युगपत् प्रतिपद्यते ॥६२॥
तदा ऽन्याऽनन्यभेदादि सर्वमेव प्रलीयते ।
न च तत्तादृशं कश्चिच्छब्दः शक्नोति भाषितुम् ॥६३॥
सामान्यांशानपोद्धृत्य पदं सर्वं प्रवर्त्तते ।
समस्तवस्त्वपेक्षां च पदार्थानामपोद्धृतिम् ॥६४॥

---

भवत्यत आह तदुद्भूत्येति[६०] । तदानुगुण्येन लीनं स्थितं भवतीति। न तु तावता ऽनुवृत्तिर्नास्तीत्याह सदपीति[६१] । कदा चित्तु सामान्यमेवोद्भूतं गृह्यतइत्याह विशेषानिति । सामान्यमात्रत्व,मनुवृत्तिमात्रत्वमित्यर्थः । एतच्च सविकल्पकवेलायामुक्तं, निर्विकल्पकवेलायां तु सर्वाऽऽकारं वस्तु अन्याऽनन्यभेदाऽभेदादिविकल्पशून्यं संमुग्धं गृह्यतइत्याह यदा त्विति[६२] ।

यद्येकमेव वस्त्वनेकाऽऽकारं तर्हि तादृगेव शब्दोऽभिदधत् सामान्यमात्राऽभिधायी न स्यादत आह न चेति[६३] । कीदृशं तु भाषते, ऽत आह सामान्यांशानिति[६४]। अत एव के चित् शब्दस्याऽर्थोऽसंस्पर्शित्वं मन्यन्तइत्याह समस्तेति। नानारूपे वस्तुन्येकरूपावापोद्धारौ,मृषैवाऽपोद्धृताऽभिधायी च शब्दः, तेनाऽसौ न वस्तुसंस्प-

केचिदाहुरसद्रूपामंशत्वं तु न वार्यते ।
सारूप्यमेव सामान्यं पिण्डानां येन कल्प्यते ॥६५॥
तेन सारूप्यशब्देन किं पुनः प्रतिपद्यते ।
समानरूपभावश्चेज्जातिः सा ऽस्माभिरिष्यते ॥६६॥
सादृश्यमथ सारूप्यं कस्य केनेति कथ्यताम् ।
न तावच्छाबलेयेन बाहुलेयादयः समाः ॥६७॥
विशेषरूपतो, ये ऽपि तत्संस्थानादिभिः समाः ।
शाबलेय इवेति स्यात्तत्र बुद्धिर्न गौरिव ॥६८॥
शाबलेयो ऽयमिति वा भ्रान्त्या गौरिति नास्ति धीः* ।
शाबलेयस्वरूपं च न गौरित्यवतिष्ठते ॥६९॥

---

र्शीति। निराकरोति अंशत्वमिति[६५]। अपोद्ध्रियमाणमपि सामान्यं वस्त्वंश एवेति ।

एवं स्वमतेन जातिरूपं सामान्यं साधयित्वा परमते सारूप्यं निराकर्त्तुं पृच्छति सारूप्यमिति । सामान्यमेकरूपत्वं चेत्तदिष्टमेवेत्याह समानेति[६६]। सादृश्यं तु नास्त्येवेत्याह सादृश्यमिति[६७] रूपतो[६८]ऽन्तेन। नन्वस्ति तावत् तेषां किं चित्संस्थानादिसामान्यम, अत आह ये ऽपीति । यदि तु भ्रान्तिरियमित्युच्यते, ऽत आह शाबलेय इति[६९]। ननु शाबलेयो गौः,अतः शाबलेयो ऽयमिति भ्राम्यतो युक्तैव गौरिति भ्रान्तिरत आह शाबलेयेति । सत्यं, यः शाबलेयः स गौः, न तु शाबलेयरूपमेव गोरूपमिति ।

---

* नास्ति तु इति १—२ पु. पा. ।

तदन्येषु हि गोबुद्धिर्न स्यात् सुसदृशेष्वपि* ।
दृश्यते सा न चाऽन्यत्र गोरूपं तत्र विद्यते ॥७०॥
न चान्यो गौः प्रसिद्धो ऽस्ति† यत्सादृश्येन धीर्भवेत्‡ ।
न चापि स इति ज्ञानं सदृशेष्वस्ति सर्वदा ॥७१॥
सर्वपुंसामतो भ्रान्तिर्नैषा बाधकवर्जनात् ।
सर्वज्ञानानि मिथ्या च प्रसज्यन्ते ऽत्र कल्पने ॥७२॥
विशेषग्रहणाऽभावादेव गौः कश्च कथ्यताम् ।
बभूव यद्यसौ पूर्वमस्मदादेस्तदग्रहात् ॥७३॥

---

कारणमाह तदन्येष्विति[७०] । यदि हि शाबलेयरूपमेव गोरूपं स्यात्, ततो ऽन्ये ये शाबलेयेन सुसदृशाः पिण्डाः तेष्वभ्रान्तानां यथा शाबलेयबुद्धिर्नास्ति, नेमे शाबलेया इति प्रतीतेः, तथा गोबुद्धिरपि न स्यात्, दृश्यते चासौ; न च भवतः शाबलेयादिरूपाप्रतिरिक्तं तदन्येष्वनुगतं गोरूपमस्तीति। यदि तु गौरित्येवंरूप एकः कश्चित्पिण्डो ऽस्ति,तत्सादृश्याच्चाऽन्येषु तत्त्वभ्रान्त्या गोबुद्धिरित्यत आह न चेति[७१] भ्रान्तित्वमप्ययुक्तमित्याह न चापीति । तदभावे§ च भ्रान्तित्वे ऽतिप्रसङ्ग इत्याह सर्वेति[७२] । किं च, को ऽसावेको गोरूपः पिण्ड इति न निर्धार्यते, सर्वेषु शाबलेयादिरूपविशेषस्य|| गोरूपस्य सा-

---

* विसदृशेष्वपीति ३ पु. पा. ।

† प्रसिद्धस्ते इति ३ पु. पा. ।

‡ गौर्भवेदिति २ पु. पा. ।

§ तदभावेनेति २ पु. पा. ।

|| रूपविशेषेषु इति पाठान्तरम् ।

साद्दश्याऽवधृतिर्नास्तीत्यतो गोधीर्न लभ्यते ।
न चाऽवयवसामान्यैर्विना साद्दश्यकल्पना ॥७४॥
सामान्यप्रत्ययोत्पादो न विशेषेषु जायते ।
व्यक्तितश्चाऽतिरेको ऽस्य स्यान्न वेति विचारिते ॥७५॥
सामान्यमेव साद्दश्यं भवेद्वा व्यक्तिमात्रकम् ।
तेन नाऽत्यन्तभिन्नो ऽर्थः सारूप्यमिति वर्णितम् ॥७६॥
ग्रन्थे विन्ध्यनिवासेन* भ्रान्तेः साद्दश्यमुच्यते ॥

इत्याकृतिवार्तिकम् ॥

---

मान्यस्य† प्रतीतेरित्याह विशेषेति[७३] । यदि तु जगदादावेको गोरूपः पिण्डः प्रजापतिना सृष्टः, तत्साद्दश्याच्चाऽद्यतनेषु तत्त्वभ्रान्त्या गौरित्युच्यते, ऽत आह वभवेति । न हि तदग्रहणे तत्सद्दशेषु तत्त्वभ्रान्तिः संभवतीति ।

जात्यनङ्गीकारे च साद्दश्यमपि दुर्लभमित्याह न चेति[७४] । अथाऽसत्येवाऽवयवसामान्ये ऽवयवा एव सामान्यबुद्ध्या गृह्यमाणाः साद्दश्यमुपकल्पयिष्यन्त्यत आह सामान्येति[७५] । न हि भिन्नानामेकबुद्धिविषयत्वं संभवतीति दर्शितम् ।

ननु तत्त्वान्तरमेव साद्दश्यं नाऽवयवसामान्यानीत्यत आह व्यक्तीति । सामान्यमेव हि व्यक्त्यतिरिक्तं द्दश्यते, न तत्त्वान्तरमिति विन्ध्यवासिमतमपि न तत्त्वतो ऽवगतमित्याह तेनेति[७६] । समानानां रूपं सामान्यं, न त्वत्यन्ताभिन्नमिति ।

इति श्रीपार्थसारथिमिश्रविरचिते न्यायरत्नाकरे आकृतिवादः समाप्तः ॥

---

* स्वग्रन्थे विन्ध्यवासेनेति २ पु. पा. ।

† सामान्यप्रतीतेरिति २ पु. पा. ।

अथाऽपोहवादः ।

अगोनिवृत्तिः सामान्यं वाच्यं यैः परिकल्पितम् ।
गोत्वं वस्त्वेव तैरुक्तमगोऽपोहगिरा स्फुटम् ॥१॥
भावान्तरमभावो हि पुरस्तात् प्रतिपादितः ।
तत्राऽश्वादिनिवृत्त्यात्मा भावः क इति कथ्यताम् ॥२॥
नेष्टो ऽसाधारणस्तावद्विषयो निर्विकल्पनात् ।
तथा च शाबलेयादेरसामान्यप्रसङ्गतः ॥३॥

---

अथाऽपोहवादः ।

सौगतसमयसिद्धमपोहरूपं सामान्यं निराकरोति अगोनिवृत्तिरिति[1]। ये त्वाहुः, न तावद्व्यावृत्तरूपाणामत्यन्तविलक्षाणां स्वलक्षणानामनुवृत्तः कश्चिदात्मा संभवति, न च स्वलक्षणान्यविकल्पत्वादानन्त्यव्यभिचाराभ्यां शब्दाभिधानीयकं लभन्ते ; अतो ऽतद्व्यावृत्तिरेव सर्वाऽनुगता शब्दार्थ इति । यथा शाबलेयस्याऽगोव्यावृत्तिरेवं बाहुलेयस्यापीति । यथाहुः—

यद्रूपं शाबलेयस्य बाहुलेयस्य नास्ति तत् ।
अतद्रूपपरावृत्तिर्द्वयोरपि न भिद्यते ॥ इति ।

एष च प्रयोगः, यदत्यन्तविलक्षणानां सादृश्याऽऽपादकं तदन्यव्यावृत्तिरूपं दृष्टं,यथा गवाश्वकुञ्जराणामनुष्ट्रत्वं, तथा गौरयमिति विकल्पाकारो विलक्षणानां शाबलेयादीनां सादृश्यमापादयतीति स्वभावहेतुः, तस्मादगोनिवृत्तिरेव सामान्यं शब्दवाच्यमिति । तैर्गोत्वं वस्त्वेव शब्दान्तरेणाऽभिहितं, नाऽर्थान्तरम् । अयं च वक्ष्यमाणाऽनेकयुक्तिसंक्षेपश्लोक इति । कथमित्याह भावान्तरमिति[2] ।

न चाऽगोनिवृत्तिरूपस्याऽभावस्याऽऽश्रयभूतं भावान्तरं भवन्मते संभवतीत्याह तत्रेति । न तावदसाधारणं तस्य निर्विकल्पकस्य

शाबलेयादिरूपं हि न सामान्यं परस्परम् ।
न वैकमितरेषां वस्तत्राऽनन्तार्थता भवेत् ॥४॥
न च साक्षाद्विशेषस्य ते ऽपोह्या इति युक्तिमत् ।
न शाबलेयविज्ञानमगोव्यावृत्तिबन्धनम् ॥५॥
निवृत्त्या बाहुलेयादेस्तद्विज्ञानं प्रवर्तते ।
कुर्यादगोनिवृत्तिं चेन्नाऽपोहेताऽऽत्मवद्धि तान् ॥६॥

---

वस्तुरूपेणापि सामान्येन विकल्पयितुमशक्यस्य कथमवस्तुरूपया निवृत्त्या विकल्पनमित्याह नेष्ट इति[३] । ये ऽप्यमी शाबलेयादयो ऽवान्तरविशेषास्ते ऽपि नाऽगोनिवृत्त्यात्मनो गोविकल्पस्याऽवलम्बनमित्याह तथेति । कारणमाह असामान्येति । एतदेव विवृणोति शाबलेयेति[४] । सकलशाबलेयबाहुलेयाद्यनुगतं सामान्यं गोशब्दवाच्यं, न च शाबलेयबाहुलेयरूपाणीतरेतरत्राऽनुवर्त्तन्ते, नाऽप्येषामन्यतमं शाबलेयं बाहुलेयं वेतरेष्वनुवर्त्तते, तत्र बहूनां शाबलेयादिरूपाणामभिधानादनेकार्थता शब्दस्येति ।

इतश्च न शाबलेयादिरूपम् अगोव्यावृत्त्यात्मना गोशब्दस्याऽभिधेयमित्याह न चेति[५] । एवं शाबलेयादिविशेषरूपस्यैवाऽगावो ऽश्वादयो ऽपोह्याः स्युः, न तु तत्तथेति । कथमित्याह न शाबलेयेति । तर्हि किं व्यावृत्तिनिबन्धनं तदत आह निवृत्त्येति[६] ।

एवमप्यगोऽपोहे को दोषो, ऽत आह कुर्यादिति । शाबलेयस्तावदशाबलेयरूपबाहुलेयाद्यपोहेन प्रतीयते । यदि त्वगोऽपोहेन प्रतीयेत ततो बाहुलेयादीन् गोरूपानात्मवदेव नाऽपोहेदिति । यदि तु गोरूपेण बाहुलेयं नाऽपोहते ऽशाबलेयत्वरूपेण त्वपोहते इत्युच्यते, तन्न,

तेनांशेनाऽनपोहश्च स्वरूपेणाऽप्यपोहनम् ।
कल्प्यते चेद्विरोधः स्यात्सममाक्षेपवारणे ॥७॥
तस्मात्प्रात्यात्मिकै रूपैरगोऽपोहो न युज्यते* ।
समुदाये ऽपि नैतेषामगोव्यावृत्तिसम्भवः† ॥८॥
'सर्वोपलब्धौ तद्बुद्धिर्व्यासज्यैवं प्रवर्तते‡ ।
न प्रत्येकं भवेदेषा' न समस्तेष्वशक्तितः ॥९॥
तस्मात् सर्वेषु यद्रूपं प्रत्येकं परिनिष्ठितम् ।
गोबुद्धिस्तन्निमित्ता स्याद्गोत्वादन्यच्च नास्ति तत् ॥१०॥

---

शाबलेयरूपमेव त्वगोव्यावृत्त्या ऽपि गृह्यते भवताम् , न हि तत्राऽपरं गोरूपमस्ति, तेनैकेनैव शाबलेयेन बाहुलेयस्याक्षेपात् संप्रहाद्वारणाच्च विरोधः स्यात्तदाह तेनेति[७] । उपसंहरति तस्मादिति[८] । प्रात्यात्मिकैः शाबलेयादिरूपैरिति ।

अथ शाबलेयादिसमुदायो ऽगोव्यावृत्त्यात्मना गोविकल्पाऽवलम्बनमत आह समुदाय इति । कारणमाह सर्वेति[९] पादत्रयेण । प्रतिपिण्डं भवन् गोविकल्पः कथं समुदायालम्बनं स्यादिति । अशक्यश्चाऽनेकपिण्डसमुदायो ग्रहीतुमित्याह न समस्तेष्विति । उपसंहरति तस्मादिति[१०] ।

---

* न कल्पते इति पाठान्तरम् ।

† बन्धनामिति १ पु. पा. ।

‡ प्रसज्यते इति ३ पु. पा. ।

ननु च प्रागभावादौ सामान्यं वस्तु नेष्यते ।
सत्तैव ह्यत्र सामान्यमनुत्पत्त्यादिरूषिता ॥११॥
तामुत्पत्त्याद्यनुस्यूतां सत्तेति प्रतिजानते ।
अन्याऽपोहाऽनुविद्धा तु सैवाऽभावः प्रतीयते ॥१२॥
अनित्यत्वं विनाशाख्यक्रियासामान्यमुच्यते* ।
अब्राह्मणत्वं किं तु स्याद्भिन्नेषु क्षत्रियादिषु ॥१३॥

---

चोदयति नन्विति[११] । प्रागभावादिचतुष्टये ह्यभावत्वमेव सामान्यं, न वस्तुरूपं सामान्यमस्ति, यद् भावात्मना गृह्येतेति । परिहरति सत्तेति । सर्वो ह्यभावो भावाऽऽश्रित एव, अतस्तत्रापि भावत्वसामान्यमेवाऽनुत्पत्त्यादिपर्यायप्रागभावादिरूपितं वस्तुरूपं सामान्यमिति ।

कथमभावबुद्धेर्भावालम्बनत्वं, विपरीतत्वादत आह तामिति[१२]। स्वरूपपररूपाभ्यां सदसदात्मकं वस्त्विति दर्शितम्, अतः क्षीरसत्तैव याः क्षीरस्योत्पत्तिप्रभृतिक्रियाः, प्राग्विनाशात् ताभिरनुस्यूता सत्तेति प्रतीयते, दध्याद्यपोहेनाऽनुविद्धा सैवाऽभावबुद्ध्या गृह्यते इति ।

एवमभावसामान्यबुद्धेः सत्तालम्बनत्वमुक्तम्, अभावविशेषबुद्धेरपि सैवाऽऽलम्बनमित्याह अनित्यत्वमिति[१३] । अनित्यत्वं प्रध्वंसाभावः, तच्च विनाशाख्यं क्रियासामान्यं, तदनुविद्धा सत्तेत्यर्थः । बुद्धिध्वंसविशिष्टात्मसत्तैव बुद्धेरनित्यत्वं, सैव तदनुत्पत्तिविशिष्टा बुद्धेः प्रागभाव इति । अगोऽपोहनादितराऽभावेनाऽनुविद्धा सत्तैव शाबलेयाद्यनुगता निवृत्तिरिति चेत्, न, भवन्मते सत्ता ऽपि वस्तुरूपा नास्ति, तद्भावे वा गोत्वेन किमपराद्धमिति ।

---

* इष्यते इति २ पु. पा. ।

पुरुषत्वं चतुःसंस्थं* विशेषेषु च नास्तिधीः ।
सामान्यप्रत्ययश्चैषु प्रत्येकमुपजायते ॥१४॥
तेनात्र ब्राह्मणाऽभावः सामान्यं स्यादवस्तु तत् ।
गोत्वादावपि तेनैव सामान्यप्रत्ययो भवेत् ॥१५॥
कैश्चित्त्वत्रैकशब्दत्वमक्षादाविव कल्पितम् ।
जातित्रयस्य, नैवं तु† सम्भवत्यघटादिषु ॥१६॥
नात्र ह्यनन्तके भेदे साधारण्यं निरूप्यते ।
तस्मात् क्रियागुणाः के चिद्धेतवो ऽनन्यवर्तिनः ॥१७॥

---

चोदयति अब्राह्मणत्वमिति । त्रिष्वप्यस्त्येवाऽब्राह्मण इति सामान्यबुद्धिः, न च तेष्वस्ति वस्तुरूपं सामान्यमिति । पुरुषत्वाऽवलम्बनत्वे ब्राह्मणो ऽप्यब्राह्मणबुद्ध्या गृह्येतेत्याह पुरुषत्वमिति[१४]। क्षत्रियत्वादिकं तु विशेषरूपं नालम्बनं, त्रयसाधारणत्वात्तद्बुद्धेरित्याह विशेषेष्विति । न च त्रयसमुदायालम्बनत्वमेकैकविषयत्वादब्राह्मणबुद्धेरित्याह सामान्येति । उपसंहरति तेनेति[१५] ।

एवं गवादावप्यभावात्मकमेव सामान्यमस्तु सामान्यबुद्धेरालम्बनमित्याह गोत्वादाविति । तदेकेषां मतेन समाधत्ते कैश्चिदिति[१६] स्याऽन्तेन । नेयं सामान्यालम्बना बुद्धिः, क्षत्रियादिविशेषालम्बनैवेयं, शब्द एवात्र साधारणो नाऽर्थ इति । इदं तु प्रतीतिविरुद्धम अघटादिषु न संभवतीत्याह नैवमिति । कथमित्याह नात्रेति[१७] । परिमितेषु क्षत्रियादिषु शक्येतापि साधारणशब्दत्वं, वृक्षादिष्वनन्तेष्वघटादिशब्दस्य साधारणत्वं दुरधिगममिति ।

---

* चतुर्ष्व हीति ३ पु. पा. चतुष्के हीति १–४ पु. ।
† नैतत्तु इति १ पु. पा. ।

पुरुषत्वं नञा चैतद् ब्राह्मणेभ्यो निवार्तितम् ।
चातुर्वर्ण्यप्रसक्तं सद्गम्यते ऽर्थादिभिर्यथा ॥१८॥
यद्यप्यत्रान्तरा नास्ति त्रिषु जातिर्व्यवस्थिता ।
नञ्सामर्थ्यान्नरत्वं तु* त्र्याधारं संप्रतीयते ॥१९॥
शब्दसामर्थ्यभेदेन वर्णेषु मतिभिन्नता ।
पुंस्त्वे त्रिचतुराऽऽधारे पर्युदासस्वरूपतः ॥२०॥
दूराऽन्तिकेक्षणे शक्तिर्गृध्रवायसचक्षुषोः ।
यथा रूपे तथा पुंस्त्वे पुमब्राह्मण†शब्दयोः ॥२१॥

---

तस्मादेवं वाच्यमित्याह तस्मादिति । इदमपि अघटादिषु अव्यापकमेव, यथा ब्राह्मणाऽवर्त्तिनः क्षत्रियादिष्वनुगताः शस्त्रधारणादयः सन्ति न तथा घटादिभ्यो व्यावृत्ता वृक्षादिष्वनुगताः के चिद्भवन्ति । तस्मादेवं वक्तव्यमित्याह पुरुषत्वमिति[१८] । चतुस्संस्थमपि पुरुषत्वं यथा पुरुषमानय सुरां विवोढुमित्यस्माच्छूद्रः प्रतीयते तथा ऽत्र नञ्सामर्थ्याद् ब्राह्मणेभ्यो व्यावृत्तं क्षत्रियादित्रयाविषयं प्रतीयते इति । एतदेव विवृणोति यद्यपीति[१९] ।

ननु सत्यपि नञि यदि पुंस्त्वमेव प्रतीयते ततः पुंशब्दादिवाऽब्राह्मणशब्दादपि चतुर्षु वर्णेषु तन्मतिः स्यात्, कथं मतिभेदो, ऽत आह शब्देति[२०] । अब्राह्मणशब्देन नञ्सामर्थ्यात् ब्राह्मणपर्युदासेन त्र्याधारे पुंशब्देन स्वरूपतश्चतुराधारे पुंस्त्वे प्रतिपाद्यमाने युक्तो वर्णेषु मतिभेद इति । न च वाच्यं, कथमेकस्मिन्नेव पुंस्त्वे कस्य चिच्चतुराधारे शक्तिः कस्य चित् त्र्याधारे इति, गृध्रवायसचक्षुषोरेकस्मिन्नेव

---

* नञामर्थान्तरत्वं तु इति १ पु. पा. ।

† पुनर्ब्राह्मणेति २ पु. पा. ।

ब्राह्मणव्यतिरिक्ताऽर्थवृत्ति पुंस्त्वमितीदृशम् ।
वाक्यं यत्र प्रवर्तेत तत्राऽब्राह्मणधीपदे* ॥२२॥
पार्थिवत्वादिसामान्यमेवमेवाऽघटादिषु ।
घटत्वादिविनिर्मुक्तं विषयः संप्रतीयते ॥२३॥
असाधारणभावाच्च नञा शब्दो विशेषितः ।
तावन्मात्रेण रहिते सामान्ये व्यवतिष्ठते ॥२४॥

---

रूपे शक्तिवैषम्यदर्शनादित्याह दूरेति[२१] । कथं पुनरेकमेवाऽब्राह्मणपदं ब्राह्मणं पर्युदस्यति, पुंस्त्वं च प्रतिपादयति, अत आह ब्राह्मणेति[२२] ।

शक्नोति हि समासपदं साऽवयवत्वाद्विग्रहवाक्यार्थे वर्त्तितुम्, अतो ब्राह्मणपदसमभिव्याहृतेन नञा तदभावं प्रतिपादयता तत्संबद्धं पुंस्त्वं लक्षणया प्रतिपाद्यते, यावदुक्तं भवति ब्राह्मण्याऽभावयुक्तः पुमानिति, तावदब्राह्मण इति; एवमघटादावपि घटत्वाद्यभावयुक्तं पार्थिवत्वादिकं प्रतिपाद्यतइत्याह पार्थिवत्वादीति[२३] ।

किं पुनर्ब्राह्मण्याऽभावयुक्तं पुंस्त्वमेव लक्ष्यते, न पुनर्वस्तुमात्रम्, अत आह असाधारणेति[२४] । ब्राह्मणशब्देन हि श्रुत्या ब्राह्मण्यमभिधीयते, तदविनाभावेन पुंस्त्वप्राणित्वादयः प्रतीयन्ते, तदस्य यदसाधारणमभिधेयं ब्राह्मण्यं तदभावे नञा प्रतिपादिते तद्विशेषितं ब्राह्मणपदं तन्मात्ररहिते सामान्ये ऽवतिष्ठते, ब्राह्मण्यमेव नञो बलेन हातव्यम्, अन्यच्च सर्वं पुंस्त्वादिकं प्रतिपन्नं न हातव्यं, क्षत्रियादिग्रहणेन च ब्राह्मण्याऽतिरिक्तं सर्वं गृहीतं भवति, वस्तुत्वादिग्रहणे तु पुंस्त्वादिकमगृहीतं स्यात्, न तद्युक्तमिति ।

---

* ब्राह्मणधीः पदे इति १ पु. पा. ।

विशेषे प्रतिषिद्धे हि सामान्यं यदनन्तरम् ।
सामान्याकाङ्क्षिणं शब्दं निरुणद्धि तदात्मनि ॥२५॥
प्रथमाऽतिक्रमे तस्य कारणं नैव विद्यते ।
ब्राह्मणत्वादतो ऽपेतं नरत्वमवशिष्यते ॥२६॥
व्युदस्य ब्राह्मणत्वं न नञि जाते विशेषणे ।
नरत्वोदसनं यत्तु कल्पेताऽश्रुतमेव तत् ॥२७॥
'तस्माद्यस्यैव ते भेदा निषिद्धारेस्तदर्थतः ।

---

इतश्च क्षत्रियादिग्रहणमेव युक्तं, न वस्तुमात्रग्रहणमित्याह विशेषे इति[२५]। कक्षाभेदेन हि सत्त्व,द्रव्यत्व,पार्थिवत्व,प्राणित्व,पुंस्त्व, ब्राह्मणत्वा,दिसामान्यानि वर्त्तन्ते, पूर्वपूर्वाऽपेक्षयोत्तरोत्तरो विशेषो भवति। तदिह पुंस्त्वविशेषे ब्राह्मण्ये नञा पर्युदस्ते तदभावयुक्तसामान्याऽपेक्षः शब्दस्तदनन्तरेण पुंस्त्वेनाऽनुरुध्यते, तस्यैव प्रथमं प्रतीतेरिति।

भवतु प्रथमं प्रतीतिः, तथापि किमिति तत्रैवाऽवतिष्ठते, ऽत आह प्रथमेति[२६]। तेन ब्राह्मण्यान्निवृत्तं नरत्वमेवाऽब्राह्मणपदस्य प्रतिपाद्यमवशिष्यतइत्याह ब्राह्मणत्वादिति। ननु श्रुत्यवगतमिव ब्राह्मण्यमर्थोऽवगतमपि पुंस्त्वं किं नञा न प्रतिषिध्यते, ऽत आह व्युदस्येति[२७]। न हि श्रौतं ब्राह्मण्यं प्रतिषिध्य पुनर्लाक्षणिकं पुंस्त्वं नञा शक्यं निषेद्धुं, सकृदुच्चारितस्य द्विरभिधानाऽसम्भवात्। अश्रुतम्, अशाब्दमित्यर्थः। उपसंहरति तस्मादिति[२८] पादत्रयेण। यस्य पुंस्त्वस्य विशेषो ब्राह्मण्यं नञा निषिध्यते तदेव पुंस्त्वं प्रतीयते, तच्च प्रतीयमानं निर्विशेषाऽवस्थानाऽसम्भवात् अर्थात् क्षत्रियादिभेदान्तरस्थं प्रतीयतइति।

भेदान्तरस्थं सामान्यं' लोके ऽप्येवं प्रतीयते ॥२८॥
प्रसङ्गिन्यां च तद्बुद्धौ निषेधो ऽर्थादपीष्यते ।
तन्मात्ररहिते चार्थे सादृश्यात्तन्मतिर्भवेत् ॥२९॥
सादृश्यमेव वा वाच्यमिष्टमब्राह्मणादिषु ।
तच्चाऽवयवसामान्याद विना ऽप्येतेन लक्ष्यते ॥३०॥

---

लोके ऽप्यब्राह्मणपदात् क्षत्रियादिष्वेव प्रतीतिः न वस्तुमात्रइत्याह लोकइति । किमिति पुनर्भेदान्तरस्थमेव प्रतीयते, न पुनर्ब्राह्मणस्थमपि; निषेधादिति चेत्, न, नञो ऽत्र पर्युदासवृत्तित्वेन निषेधकत्वाऽभावात्, अत आह प्रसङ्गिन्यामिति[२९] । पर्युदासवृत्तिरपि नञ् अर्थतः प्रतिषेधफल एव, न हि ब्राह्मण्याऽभावयुक्तं ब्राह्मणे भवतीति । इतश्च क्षत्रियादिष्वेव वृत्तिर्न वस्तुमात्रइत्याह तन्मात्रेति । ब्राह्मण्यमात्ररहितवस्त्वन्तरापेक्षायां सादृश्यात् क्षत्रियादिष्वेव मतिः शीघ्रं भवतीति ।

एवं तावदभाववाचित्वे ऽपि नञो ऽतिप्रसङ्गनिराकरणेन क्षत्रियादिष्वेव प्रवृत्तिः समर्थिता । यदि त्वेवमप्यतिप्रसङ्गः स्यात् ततो ऽब्राह्मणपदाल्लोके क्षत्रियादिष्वेव प्रतीतेरभाववत्सादृश्यमपि नञो वाच्यमङ्गीक्रियताम्, अब्राह्मणो ब्राह्मणसदृश इत्यर्थः । तदिदमाह सादृश्यमिति[३०] । किमस्ति ब्राह्मणसादृश्यमितरेषां, बाढमित्याह तच्चेति । सादृश्यमित्यर्थः । नन्वघटादिषु न घटाऽवयवसामान्ययोगः शरावादेरस्त्यत आह विना ऽपीति । विना ऽप्यवयवसामान्येन सम्बन्धिसामान्यमात्रेणापि सादृश्यं दृश्यतइत्युक्तमुपमाने, अस्ति च मार्त्तिकत्वादिना घटसादृश्यं शरावादेरिति ।

क चिद्विना ऽपि सादृश्यात् साहचर्यादिहेतुका ।
नञ्युक्तशब्दवृत्तिः स्याद् यथा वक्ष्यत्यनीक्षणे ॥३१॥
ईक्षणव्यतिरिक्ता हि क्रिया तत्राप्यपेक्षिता ।
प्रत्यासत्तेर्न संकल्पमतिक्रम्य प्रतीयते ॥३२॥
नामधात्वर्थयोगी च नैव नञ् प्रतिषेधकः ।
वदतो ऽब्राह्मणाऽधर्मावन्यमात्रविरोधिनौ ॥३३॥
यत्राप्याख्यातसम्बन्धात् प्रतिषेधः प्रतीयते ।
तत्रौदासीन्यवस्त्वेवं प्रतिपत्ता ऽवलम्बते ॥३४॥

---

यत्र तर्हि नेक्षितेत्यादौ नास्त्येव सादृश्यं तत्र कथमत आह क चिदिति[३१] । न चायं नियमः सर्वत्र सादृश्यादेव नञि उक्तशब्दवृत्तिरिति, विना ऽपि तेन साहचर्यादिना ऽपि सा सम्भवत्येव । तत्र हीक्षणसमभिव्याहृतेन नञा तदभावं प्रतिपाद्य तत्सहचरितस्तद्धेतुभूतसंकल्पो नेक्ष्यइत्येवंविधो लक्ष्यते, न ह्ययमीक्षणप्रतिषेधः किं त्वनीक्षणविधिः, व्रतप्रक्रमादिति वक्ष्यतइति । एतदेव विवृणोति ईक्षणेति[३२] ।

ननु प्रतिषेधवाचिनो नञः कथमर्थान्तरे वृत्तिरत आह नामेति[३३]। न सर्वत्रास्य निषेधवचनत्वम् आख्यातयोगी अयं प्रतिषेधमभिधत्ते, न नामयोगी धात्वर्थयोगी वेति। तद्‌योगिनस्तर्हि किमभिधेयम्, अत आह वदत इति। सम्भवति चाऽभाववचनस्यापि लक्षणया ऽन्यमात्रे विरुद्धे च प्रवृत्तिरिति ।

यत्र तर्हि न पिबेदित्यादावाख्यातमात्रयोगी नञ् तत्र प्रतिषेध-

तस्माद्वस्तुन्यपोहाः स्युरपि चाऽवस्तुकल्पने ।
प्रागन्त्येभ्यो विशेषेभ्यो न किं चिद्वस्तु लभ्यते ॥३५॥
न चान्त्यैः* र्व्यवहारो ऽस्ति शक्यं नैषां निरूपणम् ।
अपोहशब्दवाच्या ऽथ शून्यता ऽन्यप्रकारिका† ॥३६॥
तस्यां चाऽश्वादिबुद्धीनामात्मांशग्रहणं भवेत् ।
तत्राऽन्याऽपोहवाच्यत्वं मुधैवाऽभ्युपगम्यते ॥३७॥
सामान्यं वस्तुरूपं हि बुद्ध्याकारो भविष्यति ।
शब्दार्थो ऽर्थोऽनपेक्षो हि वृथा ऽपोहः प्रकल्पितः॥३८॥

---

भात्रपर्यवसानान्न वस्त्वालम्बनत्वमत आह यत्रेति[३४] । औदासीन्यं क्रियारहितमात्मस्वरूपमेव, तच्च वस्त्विति । उपसंहरति तस्मादिति[३५] । यदा ऽभावबुद्धेरभावविशिष्टं वस्त्वेवाऽऽलम्बनं नाऽभावमात्रं तदा ऽवश्यमसाधारणशाबलेयादेरालम्बनत्वाऽनुपपत्तेरन्यद्गोत्वं वस्त्वेवाऽऽलम्बनमापद्यतइति ।

दूषणान्तरमाह अपि चेति । सर्वं सामान्यमवस्त्वात्मकमिति कल्पने प्राक् परमाणुभ्यो न किं चिद्वस्तु लभ्यते, द्व्यणुकस्यापि द्वयोः सामान्यरूपत्वादिति । ततः किमित्यत आह न चेति[३६] । न ह्यप्रत्यक्षैर्व्यवहारः सम्भवतीति । किं च स्थूलाऽनुपपत्तिकल्प्याः परमाणवः, तदभावे ते ऽपि दुर्निरूपा इत्याह शक्यमिति ।

एवं च सौत्रान्तिकैरपि शून्यतैवाऽपोहवाचोयुक्त्या समाश्रिता स्यात्, इत्याह अपोहेति । ततः किमित्यत आह तस्यामिति[३७] । तथापि किमित्यत आह तत्रेति । कथं मुधेत्यत आह सामान्यमिति[३८] ।

---

* अन्यैरेति का. सं. पु. । † प्रकाशिकेति ४ पु पा. ।

वस्तुरूपा च सा बुद्धिः शब्दार्थेषूपजायते ।
तेन वस्त्वेव कल्पेत* वाच्यं बुद्ध्यनपोहकम् ॥३९॥
असत्यपि च बाह्ये ऽर्थे वाक्यार्थप्रतिभा यथा ।
पदार्थेऽपि तथैव स्यात् किमपोहः प्रकल्प्यते ॥४०॥
बुद्ध्यन्तराद्व्यवच्छेदो न च बुद्धेः प्रतीयते ।
स्वरूपोत्पादमात्राच्च नाऽन्यमंशं बिभर्ति सा ॥४१॥
भिन्नसामान्यवचना विशेषवचनाश्च ये ।
सर्वे भवेयुः पर्याया यद्यपोहस्य वाच्यता ॥४२॥

---

भवतु बाह्यार्थाऽनपेक्षो बुद्ध्याकार एव शब्दार्थः, सो ऽपि त्वपोह एव भवतु, कथं वस्तुरूपो, ऽत आह वस्तुरूपेति[३९] । बाह्यस्य हि वस्तुरूपस्य सामान्यस्य व्यतिरेकाऽव्यतिरेकादिविकल्पाऽसहत्वादभ्युपेत्याऽप्यपोहकल्पनां, बुद्धिमात्रकल्पितस्य तु शब्दार्थत्वे बुद्धेर्गौरित्येवंवस्तुरूपत्वात् यथाभासं वस्त्वात्मकमेव बुद्धिरूपं बुद्ध्यन्तराऽनपोहात्मकं वाच्यं युक्तं नाऽपोहरूपमिति । तत्रैव दृष्टान्तमाह असत्यपीति[४०] । वाक्यार्थो हि यथा बाह्यार्थोऽसम्भवाद् बुद्ध्याकारः कल्पितो नाऽपोहरूपः तथा पदार्थो ऽपीति ।

स्यादपि पदार्थस्याऽपोहरूपत्वं यदि, शब्दादुपजायमाना बुद्धिरगौर्न भवतीत्येवमगवात्मकबुद्धिव्यवच्छेदरूपा जायेत, सा तु गौरित्येवंस्वरूपेणैवोत्पद्यते न त्वन्याऽपोहं बिभर्त्तीत्याह बुद्ध्यन्तरादिति[४१] । दूषणान्तरमाह भिन्नेति[४२] ।

---

* कल्प्येतेति २ पु. पा. ।

ननु भेदादपोहानां प्रसङ्गो ऽयं न युज्यते ।
सामान्याऽपोहक्लृप्त्या चेद्वस्तुमात्रे समं तव ॥४३॥
'भिद्यन्ते मम वस्तुत्वात् सामान्यानि परस्परम् ।
असंकीर्णस्वभावानि न चैकत्वं वितन्वते* ॥४४॥
संसृष्टैकत्वनानात्वविकल्परहितात्मनाम् ।
अवस्तुत्वादपोहानां तव स्याद्भिन्नता कथम्' ॥४५॥
यदि वा भिद्यमानत्वाद्वस्त्वसाधारणांशवत् ।
अवस्तुत्वे त्वनानात्वात् पर्यायत्वान्न मुच्यते ॥४६॥
ननु चाऽपोह्यभेदेन भेदो ऽपोहस्य सेत्स्यति ।
न विशेषः स्वतस्तस्य परतश्चौपचारिकः ॥४७॥

---

चोदयति नन्विति[४३] । अथाऽपोहत्वेनैकत्वात् पर्यायत्वं, तद्वस्तुत्वेन जातीनामेकत्वात्तथाऽपि तुल्यमित्याह सामान्येति । परिहरति भिद्यन्तइति[४४] द्वयेन। वस्तुधर्मो हि भेदः, कथं तुच्छस्य† सर्वोपाख्यारहितस्याऽभावस्य स्यादिति । भेदे वा बलाद्वस्तुत्वं स्यादित्याह यदि वेति[४६] । अवस्तुत्वे तु तदवश्यं पर्यायत्वमित्याह अवस्तुत्वइति ।

चोदयति नन्विति[४७] । उक्तं च परैः—

ततस्माद्यतो यतो ऽर्थानां व्यावृत्तिस्तन्निबन्धना ।
जातिभेदाः प्रकल्प्यन्ते तद्विशेषाऽवगाहिनः ॥ इति ।

दूषयति न विशेष इति । न चौपचारिको ऽपर्यायतामापादय-

---

* वितन्यते इति १ पु. पा. । † कथं तु असौ २ पु. पा. ।

तेनैवाऽऽधारभेदेनाप्यस्य भेदो न युज्यते ।
'न हि सम्बन्धिभेदेन भेदो वस्तुन्यपीष्यते ॥४८॥
किमुताऽवस्त्वसंसृष्टमन्यतश्चाऽनिवर्तितम् ।
अनवाप्तविशेषांशं यत्किमप्यनिरूपितम्' ॥४९॥
तस्माद्यथैव भेदे ऽपि पिण्डानां नैव विद्यते ।
तथैवाऽपोह्यभेदे ऽपि नाऽनेको ऽयं भविष्यति ॥५०॥
भेदे वा प्रतिपिण्डं स्यादगोऽपोह, स्तथा सति ।
सामान्यं शाबलेयादेरिति नेष्टं प्रसिध्यति ॥५१॥
संसर्गिणो ऽपि चाऽऽधारा यं न भिन्दन्ति रूपतः ।
अपोह्यैः स बहिर्भूतैर्भिद्येतेत्यतिकल्पना ॥५२॥
'अगव्यश्वातिरेकः स्यादनश्वश्च गवाधिकः ।
शेषं हस्त्याद्यपोह्यं तु द्वयोरपि न भिद्यते ॥५३॥

---

ति, न ह्यभिन्नस्य सम्बन्धिभेदाद्वास्तवो भेदो भवति। अत एवाऽऽधारभेदादपि भेदो न भवतीत्याह तेनेति[४८] । एतदेव दृष्टान्तेनोपपादयति न हीति सार्द्धेन। यत् खलु केन चिदपि रूपेणाऽनिरूप्यमवस्तु, तस्याऽन्यसंसर्गो व्यावृत्तिर्वा नास्ति, नतरां तन्निबन्धना विशेषाऽवाप्तिरिति। उपसंहरति तस्मादिति[५०] ।

भेदे वा पिण्डभेदादपि भेदः स्यात्, ततश्च सामान्यरूपता हीयेतेत्याह भेदइति[५१] । यदि त्वपोह्यभेदादेव भेदो नाऽऽधारभेदादित्युच्यते, तत्राह संसर्गिण इति[५२]।

भवतु वा ऽपोह्यभेदाद्भेदः, अपोह्यभेदो ऽपि नास्तीत्याह अगवीति[५३] द्वयेन। गवाश्वयोर्हि बहवो ऽपि हस्तिसिंहादयो ऽपोह्या

तत्रैकभेदाद्भेदो ऽस्तु बह्वभेदादभिन्नता ।
भूयसां स्यात्सधर्मत्वमित्यभेदः प्रसज्यते' ॥५४॥
गौश्च हस्त्याद्यपोहेन नाऽश्वरूपाद्विशेष्यते ।
करोति तदपोहं चेदैकरूप्यं विरुध्यते ॥५५॥
सर्वशब्देषु चैकैकमपोह्यमतिरिच्यते ।
तत्र साधारणत्वेन तन्मात्राऽपोह्यता भवेत् ॥५६॥
ततो ऽश्वापोहरूपत्वात्सिंहादिः सर्व एव ते ।
तन्निमित्तमगोऽपोहं बिभ्रदुच्येत गौरिति ॥५७॥

---

भिद्यन्ते, अश्वमात्रमेव तु गोरपोह्योऽत्रगोष्वश्वाऽपोह्यादनश्वादधिकम्, अनश्वेषु गोमात्रम्, अतो बह्वनामपोह्यानामभेदादभेद एव गवाश्वयोः स्यादिति । गवाश्वमात्रमपि वा नाऽधिकमित्याह गौश्चेति[५५] । अपोह्यैकत्वनिबन्धनमेव हि शाबलेयादीनाम् एकजातीयत्वं, नान्यत्, गवाश्वयोरपि हस्त्यादिकमेकमपोह्यं; ततश्च गौरश्वेनाऽविशिष्टः समानजातीयः संपद्यते, तद्यदि गौरश्वमपोहेत समानजातीयत्वं विरुध्येत, अतो गौर्गवान्तरमिवाऽश्वमपि नाऽपोहेताऽश्वो ऽपि न गाम्, अतो गवाश्वयोर्न कश्चिदपि अपोह्यो ऽधिको ऽस्तीति ।

चोदयति सर्वेति[५६] । सर्वशब्देषु शब्दान्तरं प्रतियोगिनं गृहीत्वा ऽऽलोच्यमानेष्वेकैकमपोह्यं प्रतियोग्यपोह्यात् स्वाऽपोह्ये ऽतिरिच्यते, यथा गव्यश्वेन सहाऽऽलोच्यमाने गोरपोह्ये ऽश्वापोह्यादश्वमात्रमतिरिच्यते, अश्वापोह्ये च गोमात्रं, हस्त्यादिकं तु द्वयोः साधारणम्, असाधारणेन च व्यपदेशो भवति, अश्व एव च गोरसाधारण इति स एव गोरपोह्यो ऽर्थो न हस्त्यादिः, अश्वस्य गौरेवाऽपोह्यो न हस्त्यादिरिति । ततश्चाऽपोह्यभेदात्सिध्यति गवाश्वाऽपोहयोर्भेद इति ।

सर्वोऽपोह्यो यदीष्येत स वक्तव्यः कथं पुनः ।
'यदि प्रत्येकरूपेण नाऽपोह्याऽनन्तता भवेत् ॥५८॥
भिन्नत्वाच्चाप्यपोह्यानां भिन्नो ऽपोहः प्रसज्यते ।
तत्रैकस्मिन् भवेत्पिण्डे ऽनन्तजातिसमन्वयः ॥५९॥
ततो गौरिति सामान्यं वाच्यमेकं न सिध्यति ।
जात्यन्तरमतिश्चैषु भवेज्जात्यन्तरेष्विव' ॥६०॥
समुदायात्मना नापि भवेदेषामपोह्यता ।
समुदायो हि नैकेन विना धर्मेण जायते ॥६१॥

---

परिहरति तत इति[५७] । यद्यश्व एवाऽगौस्ततो येषामश्वो ऽपोह्यः ते सर्वे ऽप्यश्वाऽपोहनिमित्तम् अगवापोहं बिभ्रतो गावः स्युः, सिंहस्यापि गोवदेवाऽश्वेन सहाऽऽलोच्यमानस्याऽश्व एवाऽपोह्यः स्या त् ततश्चाऽगोरूपमश्वमपोहमानः सिंहो ऽपि गौः स्यात्, तथा गौरप्यसिंहरूपमश्वमपोहमानः सिंहः स्यात्, असाधारणाऽपोह्य एव हि गोः सिंहस्य वा ऽश्वः, तस्य चैकत्वेन कथं गोसिंहयोर्भेदः स्यादिति ।

शङ्कते सर्वेति[५८] । नाऽसाधारणमश्वमात्रं गोरपोह्यं, किंतु सर्वमेवाऽगोरूपं सिंहादिकं गोरपोह्यम्, अश्वस्यापि सर्वमश्वाऽतिरिक्तं, तत्र यद्यप्युभयोरप्यपोह्ययोर्हस्त्यादिकमभिन्नं, तथाप्येकत्र गवांशस्येतरत्र चाऽश्वांशस्याऽऽधिक्याद्यावतैव संघातयोर्भेदो भवतीति अपोह्यभेदादपोहभेदः सिद्ध्यतीति । तद्विकल्पयति स वक्तव्य इति । प्रत्येकाऽपोहे तावद्बहवो दोषाः स्युरित्याह यदीति सार्द्धद्वयेन । जात्यन्तरेषु गवादिष्विवेति ।

ननु समुदायरूपेणाऽपोह्यत्वमस्माभिरुच्यते, किमनभ्युपगताऽऽरोपेण दूषणमुच्यते, ऽत आह समुदायेति[६१] । कारणमाह समुदाय इति ।

नाप्येकदेशता तेषामस्ति नाप्येककालता ।
व्यतिरिक्तश्च संघातस्तेषां कश्चिन्न विद्यते ॥६२॥
यदि त्वव्यतिरिक्तः स्यादानन्त्यं तदवस्थितम् ।
यदि सामान्यरूपेण ते ऽपोह्यं ते, न वस्तुता ॥६३॥
कथं वा वस्त्वपोह्येत, नाऽभावो भावमृच्छति ।
अपोह्यमाने चाऽभावे भाव एवाऽवशिष्यते ॥६४॥
अपोह्यभेदक्लृप्तिश्च नाऽभावाऽभेदतो भवेत् ।
तद्भेदो ऽपोहभेदाच्चेत् प्राप्तमन्योन्यसंश्रयम् ॥६५॥

---

ततः किमित्याह नापीति[६२] । किं च, समुदायो ऽपि समुदायिव्यतिरिक्तो भवतां नास्त्येव, अव्यतिरेके तदवस्थमानन्त्यं स्यादित्याह व्यतिरिक्त इति ।

शङ्कते यदीति[६३] । अपोह्यते तेनाऽसर्वसामान्यं ह्यत्राऽगोत्वं तेन रूपेणाऽपोह्यते, न प्रत्येकं नापि समुदायात्मनेति ! दूषयति नेति । सामान्यं हि भवतामवस्त्विति । ततः किमित्याह कथमिति[६४] ।

कथं वा नाऽपोह्यते, ऽत आह नाऽभाव इति[६५] । यो ऽभावः सो ऽपोह्यः, न चाऽभावस्याऽपोहो ऽस्ति, नाप्यपोह्यत्वमिति । यत्र त्वभावस्याऽपोहः यथा इह भूतले घटो नास्तीति नेति, तत्र तदपोहेन भावः प्रतीयते, घटो ऽस्तीत्येव तत्राऽर्थो न स्वभावान्तरम् । तदिहाऽभावाऽपोहेन प्रतीयमानं गोत्वं वस्तुरूपमेव स्यात् । यथोक्तम् 'गोत्वं वस्त्वेव तैरुक्तमगोऽपोहगिरा स्फुटम्' इति । तदाह अपोह्यमानइति । अभावाऽपोहे चाऽपोह्यभेदो ऽपि नाऽवकल्पते, अभावभेदाऽभावादित्याह अपोह्येति ।

गोसामान्यस्य भिन्नत्वादगौरित्येष भिद्यते।
अगौरित्यस्य भेदेन गोसामान्यं च भिद्यते ॥६६॥
अगावो ऽश्वादयश्च स्युस्ते ऽप्यभावात्मकाः पुनः* ।
कर्काद्यपेक्षया† ते ऽपि तथेत्येवं न गम्यते ॥६७॥
किमपोह्यं, क चाऽपोहो गोपिण्डेष्वेवमेव च।
तत्र‡ स्याद्द्वयमप्येतदन्त्येषु परमाणुषु ॥६८॥
न चाऽन्त्येषु द्वयोरस्ति व्यवहारो भिदां प्रति।
'गवाश्वपरमाणूनां विशेषश्च न विद्यते ॥६९॥

---

शङ्कते तद्भेद इति। दूषयति प्राप्तमिति। तदेव दर्शयति गोसामान्यस्येति[६६]। संप्रत्येकाऽपोहे ऽप्यवस्तुत्वमपोह्यस्यास्त्ये-वेत्याह अगाव इति[६७] अपोह्य[६८]मन्तेन। अश्वसिंहादयो ऽपि व्य-क्त्यपेक्षया सामान्यरूपाः, व्यक्तयो ऽपि स्वविशेषाऽपेक्षया, स्वविशेषा अपि स्वाऽवयवाऽपेक्षया, ततश्चाऽऽपरमाणु§ सर्वं सामान्यरूपं, न किं चिद्वस्तुरूप||मपोह्यमस्तीति। तथा ऽपोहाऽऽधारो ऽपि वस्तुरूपो ना-स्तीत्याह क चेति। कारणमाह गोपिण्डेष्विति।

ततश्चाऽपोह्यत्वमपोहाऽऽधारत्वं च द्वयं परमाणुषु स्यात्, न त्वेत-द्युक्तमित्याह तत्रेति। न ह्याभिधानिके व्यवहारे परमाण्वन्तराऽपोहेन परमाण्वन्तराणि प्रतीयन्ते इति। अतश्च न परमाणुषु द्वयं, सजातीय-विजातीयविभागाऽसंभवादित्याह गवाश्वेति[६९]सार्धेन। न ह्यसति

---

* शुभा इति १ पु. पा.।
† कर्माद्यपेक्षयेति १ पु. पा.।
‡ तस्येति १ पु. पा.।
§ आपरमाणुभ्य इति २ पु. पा.।
|| रूपमेवेति २ पु. पा.।

स्वरूपजातिसंस्थानपरिमाणादिलक्षणः ।
किमपोह्यं क चाऽपोहस्तत्रापि न विशिष्यते' ॥७०॥
'न चाऽप्रसिद्धसारूप्यानपोहविषयात्मना ।
शक्तः कश्चिदपि ज्ञातुं गवादीनविशेषतः ॥७१॥
अपोह्यानपि चाऽश्वादीनेकधर्मान्वयादृते ।
न निरूपयितुं शक्तिस्तत्राऽपोहो न सिद्ध्यति' ॥७२॥

---

विशेषे केचिद्भिन्नजातीयत्वेनाऽपोह्याः केचित्समानजातित्वेनाऽनपोह्याऽऽधारा इति ग्रहीतुं शक्यतइति ।

न केवलं परमाणुष्वेवाऽयं दोषः, सत्स्वपि स्थूलेष्ववयविद्रव्येषु विधिरूपसामान्याऽनभ्युपगमे ऽपोह्याऽपोहकव्यवस्था न सिध्यत्येवेत्याह न चेति[71]द्वयेन। सर्वेषां हि सजातीयविजातायपिण्डानामविशिष्टः परस्परभेदः, तत्राऽसत्यां केषुचिदेकस्य धर्मस्याऽनुवृत्तौ के ऽपोह्याऽऽधाराः समानजातीयाः, के ऽपोह्या विजातीया इति कथं ज्ञायेरन्, तदज्ञाने च कथमपोहसिद्धिरिति ।

ननु जातिवदपोह एव केषांचित्पिण्डानामेकं रूपमस्तु, किं रूपान्तरेणाऽत आह न चेति[71]द्वयेन । जातिर्हि प्रत्यक्षा, सा येषु दृश्यते ते समानजातीयाः, येषु तु न दृश्यते, ते विजातीया, इति शक्यं विवेक्तुं, अपोहस्त्वप्रत्यक्षः, केवलं शब्दलिङ्गाऽवसेयः, शब्दलिङ्गयोश्चाऽन्वयाऽधीना प्रवृत्तिः, न चाऽन्वयग्रहणमसाधारणेन संभवति, तस्यातद्विषयत्वात्, तेन चाऽन्वयाऽग्रहणे ऽपोहः कथमनुमीयेत, न चाऽपोहेनाऽन्वयग्रहणं संभवति, तस्य प्रागन्वयग्रहणादनिष्पन्नत्वात्, अन्वयिग्रहणाधीनत्वात् अन्वयदर्शनस्य अदृष्टे चाऽन्वये कथं तयोः प्रामाण्यम्, अतो ऽपोहस्याऽदृष्टत्वात् तन्निबन्धनः सजातीयविजातीयविभागो न संभवतीति ।

न चाऽन्वयविनिर्मुक्ते* प्रवृत्तिर्लिङ्गशब्दयोः ।
ताभ्यां च न विना ऽपोहो न चाऽसाधारणे ऽन्वयः ॥७३॥
अपोहश्चाप्यनिष्पन्नः साहचर्यं क्व दृश्यताम् ।
तस्मिन्नदृश्यमाने च न तयोः स्यात् प्रमाणता ॥७४॥
न चाऽदर्शनमात्रेण ताभ्यां प्रत्यायनं भवेत् ।
सर्वत्रैव ह्यदृष्टत्वात्प्रत्याय्यं नाऽवशिष्यते ॥७५॥
अथाऽसत्यपि सारूप्ये स्यादपोहस्य कल्पना ।
गवाश्वयोरयं कस्मादगोऽपोहो न कल्प्यते ॥७६॥

---

ननु विपक्षाऽदर्शनमात्रेणाऽतद्व्यावृत्तिं तौ गमयतः, किमन्वयग्रहणेनाऽत आह **न चेति**[७५] । कारणमाह **सर्वत्रेति** । अदृष्टे ह्यन्वये विपक्षवत् सपक्षे ऽप्यदृष्टौ लिङ्गशब्दौ कथमिव साध्यं प्रतिपादयेयातां, यथैव हि गोशब्दो ऽश्वादिष्वगोषु अदृष्टस्तद्व्यावृत्तिं गमयति एवं गव्यप्यदृष्ट† इति तामपि व्यावर्त्तयन्न किं चित्प्रतिपादयेदिति ।

अथाऽदृष्टे ऽपि केषां चिदैकरूप्ये केषां चिदपोह्यत्वं केषां चिदपोहाऽऽश्रयत्वं कल्पयेत्, ततो व्यवस्था न स्यात्, इत्याह **अथेति**[७६] ।

तदेवं शाक्यमते तावदपोहस्य केन चिदप्यदृष्टत्वान्न तन्निबन्धनं सजातीयविजातीयत्वकल्पन‡मित्युक्तम् । यद्यपि चाऽस्मन्मताऽऽश्रयणेनाऽनुपलब्ध्याख्यप्रमाणान्तरगम्यो ऽपोहो न संबन्धग्रहणाऽपेक्षः, तथापि विधिरूपसामान्याऽभावे सजातीयविजातीयव्यवस्था न सिद्ध्य-

---

* नचान्वयविनिर्मुक्ता इति ३ पु. पा. ।

† अदृष्ट एवेति ३ पु. पा. ।

‡ विजातीयत्वं सुकरमिति २ पु. पा. ।

शाबलेयाच्च भिन्नत्वं बाहुलेयाऽश्वयोः समम् ।
सामान्यं नाऽन्यदिष्टं चेत् क्वाऽगोऽपोहः प्रवर्तताम् ॥७७॥
इन्द्रियैर्नाप्यगोऽपोहः प्रथमं व्यवसीयते ।
नाऽन्यत्र शब्दवृत्तिश्च किं दृष्ट्वा स प्रयुज्यताम् ॥७८॥
पूर्वोक्तेन प्रबन्धेन नाऽनुमाऽप्यत्र विद्यते ।
सम्बन्धाऽनुभवोऽप्यस्य तेन नैवोपपद्यते ॥७९॥

---

स्येवत्याह शाबलेयादिति[७७]। इतरेतराऽभावो ह्यपोहः सर्वेषां शाबलेयबाहुलेयकर्कादीनामविशिष्टः, न च शाबलेयादिष्वनुगतं कर्कादिभ्यश्च व्यावृत्तमस्ति किंचिद्वस्तुरूपं सामान्यं, तत्र यथैव शाबलेयबाहुलेययोः कर्कव्यावृत्तिः समानेति तन्निबन्धनं समानजातीयत्वं, तथा शाबलेयकर्कयोः बाहुलेयाद्व्यावृत्तिः समानेति केन विशेषेण क्वचिदपोहमवस्थाप्याऽन्यानपोह्यपक्षे स्थापयामः, व्यावृत्तिमात्रेण साम्ये त्वत्यन्तविलक्षणानामपि सर्षपवृक्षसिंहादीनामप्यश्वादिव्यावृत्तिसामान्यात् सजातीयत्वं स्यादिति ।

तदेवं प्रयुक्तोऽपि शब्दोऽगृहीतसंबन्धत्वान्नाऽपोहं गमयतीत्युक्तम् । प्रयोगोऽपि तस्य न सम्भवतीत्याह इन्द्रियैरिति[७८] । दृष्ट्वा ह्यर्थं प्रयोक्तारः शब्दं प्रयुञ्जते, न चेन्द्रियैरपोहो दृश्यते, यस्त्वपोहादन्योऽसाधारणः न तत्र शब्दप्रवृत्तिः, अतः कथं शब्दः प्रयुज्येतेति ।

अनुमानादवगम्य प्रयुज्यतइति चेत्, तत्राह पूर्वोक्तेनेति[७९] । दृश्याऽदर्शनं लिङ्गं, तदपि हि दर्शनाऽभावरूपत्वाद्दर्शनान्तराऽभावाऽपेक्षमित्यनवस्थाऽभाववादे दर्शितेति। प्रत्यक्षाऽनुमानाऽनवगम्यत्वेनैव संबन्धग्रहणमपि तेन सह शब्दस्य न संभवतीत्याह संबन्धेति ।

निवृत्तिवाचिनः शब्दा न प्रसिद्धाश्च यान् प्रति ।
तेषामगोरसिद्धत्वान्न सामान्यनिराक्रिया ॥८०॥
अगोशब्दाऽभिधेयत्वं गम्यतां च कथं पुनः ।
न दृष्टो यत्र गोशब्दः सम्बन्धाऽनुभवक्षणे ॥८१॥
एकस्मात्तर्हि गोपिण्डाद्यदन्यत्सर्वमेव तत् ।
भवेदपोह्यमित्येवं न सामान्यस्य वाच्यता* ॥८२॥
'सिद्धश्चाऽगौरपोह्येत गोनिषेधात्मकश्च सः ।
तत्र गौरेव वक्तव्यो नञा यः प्रतिषिध्यते ॥८३॥
स चेदगोनिवृत्त्यात्मा भवेदन्योन्यसंश्रयः' ।
सिद्धश्चेद् गौरपोह्याऽर्थं वृथा ऽपोहप्रकल्पना ॥८४॥

---

किं च, यदा ऽश्वादीनां प्रत्येकम् अपोह्यत्वमाबन्त्याश्च भवति तदवश्यमगोरूपेण तेषामपोह्यत्वं वक्तव्यं, गोनिवृत्त्यात्मकं चाऽगोरूपं, निवृत्तिश्चाऽप्रत्यक्षा शब्देनैवाऽवगन्तव्या, तत्र येषां निवृत्तिवाचिनो नञादयो न प्रसिद्धाः तेषामगोरसिद्धत्वान्न तद्व्यावृत्तिरूपो गोशब्दार्थः प्रतिभासेत, तेषामपि तु प्रतिभासते, अतो न शक्यं वस्तुरूपसामान्यनिराकरणमित्याह निवृत्तीति[८०] ।

किं च, को ऽयमगौः, यस्याऽपोहो दृश्यते, यो गोशब्दस्याऽनभिधेयः सो ऽगौः स्यात्, कस्य तदनभिधेयत्वमिति न ज्ञायतइत्याह अगोशब्देति[८१] । इतर आह न दृष्ट इति । दूषयति एकस्मादिति[८२] । अथ यो गोरन्यः सो ऽगौस्तत्राह सिद्ध इति[८३]सार्द्धेन । यदि त्वगोसिद्ध्यर्थं विधिरूपो गौरङ्गीक्रियते तत्र वृथा ऽपोहवागित्याह सिद्ध इति[८४] ।

---

* वाध्यतेति का.पा. ।

गव्यसिद्धे त्वगौर्नास्ति तदभावे च गौः कुतः* ।
नाऽऽधाराऽऽधेयवृत्त्यादिसम्बन्धश्चाप्यभावयोः ॥८५॥
न चाऽसाधारणं वस्तु गम्यते ऽपोहवत्तया ।
कथं वा परिकल्प्येत संबन्धो वस्त्ववस्तुनोः ॥८६॥
स्वरूपसत्त्वमात्रेण न च किं चिद्विशेषणम् ।
स्वबुद्ध्या रज्यते येन विशेष्यं तद्विशेषणम् ॥८७॥

---

इतरेतराश्रयं विवृणोति गव्यसिद्धइति[८५] । गोशब्देनाप्यगामनभिधाय तन्निवृत्तिमभिधातुमशक्नुवता ऽवश्यमगौरभिधातव्यः, स च गोनिषेधात्मा,नाऽनभिधाय गामभिधातुं शक्यत,इति प्रथमं विधिरूपगौरभिधातव्यः, तदिदमुक्तं 'गोत्वं वस्त्वेव तैरुक्त'मिति ।

अत्र भिक्षुणा जातिमात्रस्य जातिमत्संबन्धस्य जातिमतो वा ऽभिधाने दूषणानि दर्शितानि, तान्यपोहवादिनो ऽपि तुल्यानीति पश्चाद्वक्ष्यति; संप्रत्यपोहवदभिधाने ऽधिकमपि दूषणमपोहवादिनो दर्शयति नाऽऽधाराऽऽधेयेति । जातिवादिनो हि संभवति जातिविशिष्टा व्यक्तिरभिधेया, सा यदि परं गौरवान्नाऽभिधीयते, भवतस्त्वपोहविशिष्टं न किं चिदभिधेयं संभवति, न तावदपोहान्तरम्, अवस्तुनोराधाराधेयादिसंबन्धाऽभावेन मिथो विशेषणविशेष्यत्वाऽनुपपत्तेरिति । न चाऽसाधारणमपोहविशिष्टमभिधेयं, तस्य शब्दादप्रतीतेरित्याह न चेति[८६] । न चाऽसाधारणस्याऽपोहेन संबन्धो भवतीत्याह कथमिति ।

अथाऽनवगम्यमानस्य किमिति विशेष्यत्वं न भवत्यत आह स्वरूपेति[८७] । न हि सत्तामात्राऽवस्थितस्य किं चिद्विशेषणं संभ-

---

* इदमर्धत्रयं नास्ति १ पु. ।

न चाप्यश्वादिशब्देभ्यो जायते ऽपोहबोधनम् ।
विशेष्यबुद्धिरिष्टेह न चाऽज्ञातविशेषणा ॥८८॥
न चाऽन्यरूपमन्यादृक् कुर्याज्ज्ञानं विशेषणम् ।
कथं चाऽन्यादृशे ज्ञाते तदुच्येत विशेषणम् ॥८९॥
अथाऽन्यथा विशेष्ये ऽपि स्याद्विशेषणकल्पना ।
तथा सति हि यत्किं चित् प्रसज्येत विशेषणम् ॥९०॥
अभावरूपगम्ये च न विशेष्ये ऽस्ति वस्तुता ।
विशेषितमपोहेन वस्तु वाच्यं न ते ऽस्त्यतः ॥९१॥

---

वतीति । कीदृशस्य विशेषणमत आह स्वबुद्धेति । विशेषणाऽनुरक्ततया बुध्यमानस्य विशेषणं, न सन्मात्राऽवस्थितस्येति । न चाऽपोहस्य विशेषणत्वमपि संभवतीत्याह न चापीति[८८] । वस्त्वाकारा हि गवादिशब्दात्प्रतीतिः नाऽपोहरूपेति । ततः किमित्याह विशेष्येति ।

किं चाऽभावस्य विशेषणत्वे तदनुरूपमवस्त्वात्मकमेव विशेष्यज्ञानं स्यात्, तन्नास्तीत्याह न चेति[८९] । भावरूपे विशेष्यज्ञाने कथमभावस्य विशेषणत्वमित्याह कथमिति । अथ वस्तुरूपे विशेष्ये गम्यमानेप्यवस्त्वेव विशेषणं, ततो ऽप्यस्ति अतिप्रातिसङ्ग इत्याह अथेति[९०] । सति चाऽभावस्य विशेषणत्वे तदनुरूपमसाधारणमप्यवस्त्वेव स्यादित्याह अभावेति[९१] । उपसंहरति विशेषितामिति। एवं च वस्तुरूपमेव विशेषणमिति ।

या चेयं बौद्धस्य क्लिष्टाऽऽशा, वस्तुरूपं हि निर्विभागं सकलं प्रत्यक्षगृहीतं, न तत्र लिङ्गशब्दयोरपि प्रवृत्तिर्युक्ता पुनरुक्तत्वात्, अतो बलादपोहविशिष्टतयैव वस्तुनो विषयत्वमेपितव्यं, यथा ऽऽहुः—

यद्यप्यपोहनिर्मुक्ते न वृत्तिः शब्दलिङ्गयोः ।
युक्ता तथापि बुद्धिस्तु ज्ञातुर्वस्त्ववलम्बते ॥९२॥
न चाऽसाधारणं वस्तु बुद्धौ विपरिवर्त्तते ।
न चापि निर्विकल्पत्वात्तस्य युक्ता विशेष्यता ॥९३॥
शब्देनाऽगम्यमानं च विशेष्यमिति साहसम् ।
तेन सामान्यमेष्टव्यं विषयो बुद्धिशब्दयोः ॥९४॥
यदा चाऽशब्दवाच्यत्त्वान्न व्यक्तीनामपोह्यता ।
तदा ऽपोह्येत सामान्यं तस्याऽपोहाच्च वस्तुता ॥९५॥

---

एकस्याऽर्थस्वभावस्य प्रत्यक्षस्य सतः स्वयम ।
को ऽन्यो न दृष्टो भागः स्याद्यः प्रमाणैः परीक्ष्यते ॥ इति ।

तत्राह यद्यपीति[९२]। यद्यपि पौनरुक्त्याद्वस्तुरूपे वृत्तिरयुक्ता तथापि प्रतीतिस्तावत्पौनरुक्त्यमपौनरुक्त्यं वा ऽनादृत्य वस्त्वेवालम्बते, तत् पौनरुक्त्यमपि सोढ्वा यथाप्रतीति वस्तुरूपमेवालम्बनमङ्गीकुर्म इति ।

स्यादेतत्, अपोहविशिष्टमसाधारणं शब्दस्याऽभिधेयं, तच्च वस्तुरूपमिति तत्संसर्गादपोहो ऽपि वस्तुवदवभासतइति, तत्राह न चेति[९३] । अनुवृत्तं हि रूपं बुद्धौ शब्दाद्भासते ना ऽसाधारणं रूपमिति। न चाऽभिधेयत्वमपि तस्य युक्तमित्याह न चापीति। अनवगम्यमानमपि तदेवाऽपोहविशिष्टं शब्दाऽभिधेयमिति चेत्, तत्राह शब्देनेति[९४]। तदवश्यं गवादिबुद्धेः शब्दस्य च वस्तुरूपमेव सामान्यं विषय इत्याह तेनेति ।

इतश्च सामान्यस्य वस्तुत्वमित्याह यदा चेति [९५] । न हि व्यक्तीनामपोह्यत्वम्, अपोह्यं हि विकल्पबुद्धावारोपितम, शब्दाऽभिलाप-

नाऽपोह्यत्वमभावानामभावाऽभाववर्जनात् ।
व्यक्तो ऽपोहान्तरे ऽपोहस्तस्मात्सामान्यवस्तुनः ॥९६॥
अभावस्य च यो ऽभावः स चेत्तस्माद्विलक्षणः ।
भाव एव भवेन्नो चेद्गौरगौस्ते प्रसज्यते ॥९७॥
यद्यप्यन्येषु शब्देषु वस्तुनः स्यादपोह्यता ।
सच्छब्दस्य त्वभावाख्या*न्नाऽपोह्यं भिन्नमिष्यते॥९८॥
तत्राऽसतो ऽपि भावत्वमिति क्लेशो महान् भवेत् ।

---

संसर्गयोग्यश्च विकल्पविषयः, न च स्वलक्षणा व्यक्तयस्तद्योग्याः, तेन सामान्यमेवाऽश्वत्वादिकमपोह्यं, तस्य चाऽपोह्यत्वादेव वस्तुत्वमापद्यतइति। कथमपोह्यत्वाद्वस्तुत्वाऽऽपत्तिरत आह नाऽपोह्यत्वमिति[९६] ।

तत्सिद्धमपोह्यगोचरत्वे सामान्यस्य वस्तुत्वमित्याह व्यक्त इति। अगोनिवृत्त्यात्मकं यदपोहान्तरं तस्मिन् ग्रहीतव्ये वस्तुरूपस्यैवाऽश्वादिसामान्यस्याऽपोहः, अपोह्यत्वमित्यर्थः। ततश्च सर्वस्य सामान्यान्तरेणाऽपोह्यत्वाद्वस्तुरूपत्वमिति ।

यदि त्वपोह्यमपि त्वभावरूपमिष्यते ततस्तद्व्यावृत्तिरूपं गोत्वं ततो विलक्षणं चेद्वस्तुरूपमेव स्यात्, अविलक्षणत्वे ऽत्यन्तविपरीतस्वभावयोरपोह्याऽपोहयोः संकरः समाश्रितः स्यात्, इत्याह अभावस्येति[९७] । यद्यपि कथंचिद्गवादिशब्देष्वश्वादीनामपोह्यानां भावत्वं स्यात्, सच्छब्दे त्वसद्रूपस्याऽपोह्यत्वादवर्जनीयमभावत्वम्,अतस्तत्प्रतिपक्षात्मकं सत्त्वं वस्त्वेवेत्याह यद्यपीति [९८] ।

यद्यसतो ऽपि भावत्वमुच्येत ततो भावाऽभावयोरैक्यात् क्लेशः स्यादित्याह तत्रेति[९९] । किं चाऽसन्निवृत्तिरूपा सत्ता,सा सिद्धाया-

---

* भावाख्यादिति १ पु. पा. ।

तदसिद्धौ* न सत्ता ऽस्ति न चाऽसत्ता प्रसिध्यति॥९९॥
'न चापि वासनाभेदाद्भेदः सद्रूपता ऽपि वा।
अपोहानां प्रकल्प्येत' न ह्यवस्तुनि वासना॥१००॥
स्मृतिं मुक्त्वा न चास्त्यस्याः शक्तियोगः क्रियान्तरे।
तस्मान्नाऽन्यादृशे सा ऽर्थे करोत्यन्यादृशीं मतिम्॥१०१॥
भवद्भिः शब्दभेदो ऽपि तन्निमित्तो न लभ्यते।
न ह्यसाधारणः शब्दो वाचकः प्रागदृष्टितः॥१०२॥

---

मसत्तायां सिध्येत्, असत्ता ऽपि सन्निषेधात्मना ऽभावरूपा, अतो नाऽसिद्धायां सत्तायां सिध्येत्, इति इतरेतराश्रयत्वं स्यादित्याह तदसिद्धाविति।

शाक्यास्त्वाहुः, नाऽगोनिवृत्तिः असन्निवृत्तिरित्येवंरूपं शब्दार्थोऽवभासं ब्रूमः, येनेतरेतराश्रयः स्यात्, किं तु वस्तुरूपतयैव शब्दार्थो भासते, परीक्षकास्तु व्यावृत्तेष्वनुवृत्तं वस्तुरूपमसंभावयन्तो ऽतद्व्यावृत्तिरूपमाचक्षते, अनादिकालवासनावशाच्च व्यावृत्तिरूपमपि सद्रूपमिव भिन्नमिवाऽवभासते, अतो न पर्यायत्वं नेतरेतराश्रयत्वमिति, तत्राह न चापीति[१००] पादत्रयेण। कारणमाह न हीति। अनुभवजन्या हि वासना, वस्तुविषयश्चाऽनुभवो ऽसाधारणमेव वस्त्वति कथमवस्तुनि गोत्वादौ तद्भेदे वा वासना स्यादिति।

स्मृतिमात्रनिबन्धनत्वाच्च वासनायाः न वासनया ऽपोहेष्वभिन्नेष्ववस्तुरूपेषु वस्तुरूपा भेदाऽवभासिनी च मतिः संभवतीत्याह स्मृतिमिति[१०१]। वाच्याद्वाचकानामपि न वासनानिमित्तो भेदः सिध्यतीत्याह भवद्भिरिति[१०२]। स्वाभाविक एव शब्दभेद इति

---

* वृत्तिसिद्धाविति ३ पु. पा.।

भिन्नत्वाच्चापि नैवैका वासना तैः प्रकल्प्यते ।
न चास्ति शब्दवस्त्वेकं वासनां यत्करिष्यति ॥१०३॥
तत्र शब्दान्तराऽपोहे सामान्ये परिकाल्पिते* ।
तथैवाऽवस्तुरूपत्वाच्छब्दभेदो न कल्प्यते ॥१०४॥
वाचकानां यथा चैवं वाच्यवाचकयोर्मिथः ।
न चाप्यपोह्यभेदेन भेदो ऽस्तीत्युपपादितम् ॥१०५॥
'नाऽगृहीतश्च गमकः शब्दाऽपोहः कथं चन ।
प्रत्यक्षं न च तच्छक्तं न च स्तो लिङ्गवाचकौ॥१०६॥

---

चेन्न, वस्तुधर्मत्वाद् भेदस्य, वस्तुनश्चाऽसाधारणशब्दस्वलक्षणस्याऽगृहीतसंबन्धस्याऽनभिधायकत्वादित्याह न हीति । तेन वासनानिमित्त एव भेदो वक्तव्यो, न च तथा संभवतीत्याह भिन्नत्वादिति[103]। न हि प्रतिक्षणं भिन्नैः शब्दस्वलक्षणैरभिन्ना सामान्याकारा वासना संभवति, यतस्तन्निमित्तं सामान्यं तद्भेदो वा स्यादिति ।

न च वः सर्वाऽनुगतं वस्तुरूपं गोशब्दत्वसामान्यमस्ति, यतः सामान्याऽऽकारा वासना स्यादित्याह न चेति ।

ततश्चाऽगोशब्दाऽपोहात्मनि सामान्ये वाचकतया कल्प्यमाने वाच्यवदेव भेदाऽनवक्लृप्तिरित्याह तत्रेति[104] । वाच्यवाचकयोर्मिथो भेदो ऽप्येवमेव निराकार्य इत्याह वाचकानामिति[105] । अपोह्यभेदाद्भेद इति चेन्न, निराकृतत्वादित्याह न चाऽपीति । न च वाचकत्वमपि शब्दाऽपोहस्य संभवतीत्याह नाऽगृहीत इति[106] सपादेन ।

---

* कल्प्यते इति ३ पु. पा. ।

यतः स्याद् ग्रहणं तस्य' लिङ्गादीनां च कल्पने* ।
न व्यवस्थेति वाच्यैवं विना प्रत्यक्षमूलतः ॥१०७॥
न गम्यगमकत्वं स्यादवस्तुत्वादपोहयोः ।
भवत्पक्षे, यथा लोके खपुष्पशशशृङ्गयोः ॥१०८॥
वृष्टिमेघासतोर्दृष्ट्वा यद्यनैकान्तिकं वदेत् ।
वस्त्वेवात्रापि मत्पक्षे भवत्पक्षे ऽप्यदः कुतः ॥१०९॥
विधिरूपश्च शब्दार्थो येन नाऽभ्युपगम्यते ।
न भवेद्व्यतिरेको ऽपि तस्य तत्पूर्वको ह्यसौ ॥११०॥

---

सतोरपि लिङ्गशब्दयोरपोहरूपत्वादपरापरलिङ्गशब्दापेक्षायाम् ऽनवस्था वक्तव्या, न हि कस्य चिदपि लिङ्गस्य शब्दस्य वा प्रत्यक्षं मूलमस्तीत्याह लिङ्गादीनामिति[१०७] । व्यवस्था नेत्येवं वाच्येत्यन्वय इति । एवमुपपादितमवस्तुनो गम्यगमकत्वाऽभावं प्रयोगेण दर्शयति न गम्येति[१०८] ।

शङ्कते वृष्टीति[१०९] । परिहरति वस्त्वेवेति । वस्त्वेवाऽस्माकमभावः,भवतस्तु तुच्छाभाऽववादित्वात् क्व वस्तुसिद्धिरिति। वाच्यवदेव वाचके ऽपि विधिरूपे ऽनङ्गीकृते परस्पराश्रयापत्तिरित्याह विधिरूप इति[११०]। विधिरूपगोशब्दसिद्धौ तद्व्यतिरेको ऽगोशब्दसिद्धिः, तदभावे त्वगोशब्दाप्रसिद्धौ तदपोहात्मकगोशब्दाऽसिद्धिः, तत्सिद्धौ च गोशब्दसिद्धिः, इतीतरेतराश्रयः स्यात् । शब्दार्थ इति, शब्दरूपो ऽर्थ इति ।

---

* कल्प्यते इति २ पु.पा. ।

निषेधद्वययोगित्वादसतो या ऽप्यभावता ।
सवस्तुके भवेत्सा ऽपि न तुच्छे बुद्ध्यसंभवात् ॥१११॥
ननु युक्त्या ऽनयैवाऽयं वस्तुना ऽपि न भिद्यते ।
अपोहस्तेन दोषो ऽत्र पर्वोक्तो न भविष्यति ॥११२॥
सिद्धमेवं मदिष्टं स्यान्नैवाऽन्या गतिरस्ति हि ।
अभावे वस्तुबुद्धिर्वा यद्वा वस्तुन्यभावधीः ॥११३॥

---

अर्थाऽपोहवदेव शब्दाऽपोहस्यापि निराश्रयस्याऽवगमाऽनुपपत्ते-रसाधारणस्य चाऽविकल्पस्याऽऽश्रयत्वायोगाद् विधिरूपं सामान्यमाश्रयभूतमङ्गीकर्त्तव्यमित्याह निषेधेति[१११] । अगौर्न भवतीति नञ्द्वये-नाऽभावाऽभावो यः कथ्यते सो ऽपि सवस्तुके वस्तुरूपसामान्यस्य सद्भावे सति प्रतिपत्तुं शक्यते, न तुच्छे, निराश्रयस्याऽभावस्य बुद्ध्यसंभवादिति। यथा ऽर्थापोहे वर्णितम् 'अपोह्यमाने चाऽभावे भाव एवाऽवशिष्यते' इति, एतदपि शब्दाऽपोहे तुल्यमित्युच्यते । अभावाऽभावता हि वस्तुन एव भवति न तुच्छस्वभावस्य, न ह्यभावाऽभावबुद्धिरभावे संभवतीति ।

चोदयति नन्विति[११२] । अवस्तुत्वादपोह्यो ऽपोहान्तरान्न भिद्यतइत्यनयैव युक्त्या वस्तुनो ऽप्यपोह्यो न भिद्यते, वस्तूनि चाऽसाधारण्यान्द्भिन्नानीति तदभिन्नस्याऽपोहस्यापि भेदान्न पर्यायत्वादिदोष इति। परिहरति सिद्धमिति[११३] । वस्तुधर्मो ह्यभावो न ततो ऽत्यन्तं भिद्यतइत्यङ्गीक्रियमाणे अस्मदिष्टं वस्तुरूपमेव सामान्यं सिद्धं स्यादिति।

कथमित्याह नैवेति । न हि वस्तुरूपसामान्याऽङ्गीकरणं मुक्त्वा ऽन्या गतिरस्ति, यया ऽपोहस्याऽवस्त्वात्मकत्वं स्यात्, न ह्यसाधारणभेदमाश्रित्याऽपोहानां मिथो भेदः शक्यते समर्थयितुम्, अतिप्रसङ्गात्,

तत्राऽभावात्मकत्वे स्यान्निर्निमित्तैव वस्तुधीः ।
वस्तुन्यभावबोधस्तु सिध्यत्यन्यमपेक्ष्य तु ॥११४॥
अपोहमात्रवाच्यत्वं यदि चाऽभ्युपगम्यते ।
नीलोत्पलादिशब्देषु शबलार्थाऽभिधायिषु ॥११५॥
विशेषणविशेष्यत्वसामानाधिकरण्ययोः ।
न सिद्धि,र्न ह्यनीलत्वव्युदासे ऽनुत्पलच्युतिः ॥११६॥

---

एवं हि तद्वदेव प्रतिपिण्डमप्यपोहो भिद्येत, तत्र सामान्यरूपता न सिध्येदिति। तदेवमसाधारणाऽऽश्रयत्वाऽभावे सत्येतावानेवाऽऽवयोर्विवादो ऽवशिष्यते, किमभावात्मके सामान्ये भ्रान्त्या वस्तुबुद्धिः, किं वा वस्तुरूपे सामान्ये ऽश्वो न भवतीत्याद्यभावबुद्धिरिति । तदिदमाह अभावइति । तत्र निर्णयमाह तत्रेति[११४] । न हि निर्निमित्ता भ्रान्तिः संभवति, वासनायाश्च निमित्तत्वं निराकृतं, वस्तुनि त्वन्याऽपेक्षया युक्तैवाऽभावबुद्धिः, वस्तूनामितरेतराऽभावात्मकत्वात्, अतो विधिरूपमेव गोत्वादिसामान्यमिति ।

यत्तु भिक्षुणा जातिशब्दानां भेदवाचित्वमानन्त्यव्यभिचाराभ्यां निराकृत्य यदा योगस्य जातिमत्संबन्धस्य जातिमात्रस्य वा वाचकत्वं तदापि विशेषणवचनैर्नीलादिशब्दैरुत्पलादीनां विशेष्यत्वस्य तथा ऽपृथक्श्रुतेः सामानाधिकरण्यस्य चाऽनुपपत्तिरुक्ता —

न जातिशब्दो भेदानामानन्त्यव्यभिचारतः ।
वाचको योगजात्योर्वा भेदार्थैरपृथक्श्रुतेः ॥ इति ।

तदपोहमात्राऽभिधानेऽपि तुल्यमित्याह अपोहेति[११५]सिद्धि[११६]रन्तेन ।

तत्र विशेषणविशेष्यत्वाऽभावे कारणमाह न हीति । न ह्यनीलपोहाऽनुत्पलाऽपोहयोरितरेतरत्र समवायः, यतो विशेषणविशेष्य-

नापि तत्रेतरस्तस्मान्न विशेष्यविशेषणे ।
शब्दयोर्नापि ते स्यातामभिधेयाऽनपेक्षयोः ॥११७॥
सामानाधिकरण्यं च न भिन्नत्वादपोहयोः ।
अर्थतश्चैतदिष्येत कीदृश्याधयता तयोः ॥११८॥
न चाऽसाधारणं वस्तु गम्यते ऽन्यच्च* नास्ति ते ।
अगम्यमानमैकार्थ्यं शब्दयोः कोपयुज्यते ॥११९॥

---

त्वं स्यादिति। न चाऽर्थोऽनपेक्षयोः शब्दयोरेव तत्संभवति, अर्थद्वारत्वाच्छब्दसंबन्धस्येत्याह शब्दयोरिति[११७] । सामानाधिकरण्यं त्वेकार्थवृत्तित्वाद् भिन्नाऽपोहमात्रार्थाऽवसायिनो दूराऽपास्तमित्याह सामानाधिकरण्यमिति[११८] ।शब्दवाच्यार्थयोरैकाधिकरण्यात्तद्द्वारं शब्दयोः सामानाधिकरण्यमित्याशङ्क्याह अर्थत इति । तुच्छयोराधेयत्वाऽसंभव इति ।

कश्चाऽसावर्थो यो ऽपोहयोराधारः, न तावदसाधारणः, तस्याऽविकल्पकस्य शब्दादनवगतेः, वस्त्वन्तरं तु सामान्यं भवतां नास्त्येवेत्याह न चेति[११९] । नन्वनवगम्यमानो ऽप्यस्ति तावदेको ऽसाधारणो ऽपोहयोराधार इति स्यादेव सामानाधिकरण्यमत आह अगम्यमानमिति । श्रुत्या लक्षणया वैकमर्थमवगमयतोरेव शब्दयोः सामानाधिकरण्यं, वस्तुस्थित्यैकाधिकरणाऽर्थद्वयाऽभिधानं न सामानाधिकरण्योपयोगि, रूपरसादीनामपि सामानाधिकरण्यप्रसङ्गात्, अस्मत्पक्षे त्वर्थस्य विकल्पक्षमत्वात्, जातिगुणानां च वस्तुरूपाणां तादात्म्यादेकमर्थं जातिरूपेण गुणरूपेण च स्वतात्पर्यमवगमयतोर्नीलोत्पलशब्दयोर्युक्तं सामानाधिकरण्यं, रूपरसादीनां तु स्वा-

---

* अन्यस्येति ३ पु. पा. ।

अथाऽन्यापोहवद्वस्तु वाच्यमित्यभिधीयते ।
तत्रापि परतन्त्रत्वाद्व्याप्तिः शब्देन दुर्बला ॥१२०॥
'खण्डे भिन्नव्यपोह्यत्वाद् यथैव मधुरादिभिः ।
शुक्लादिव्याप्त्यभावेन नाऽऽक्षेपो न विशेषणम् ॥१२१॥

---

ऽभिधेयमात्रपराणां तद्रूपैकार्थपरत्वाऽभावान्न सामानाधिकरण्यमिति।

जातिमदभिधानेऽपि 'तद्वतो नाऽस्वतन्त्रत्वा'दित्यादिना सामानाधिकरण्याऽनुपपत्तिर्भिक्षुणा दर्शिता, सा ऽपोहवदभिधानेऽपि तुल्येति दर्शयति अथेति[१२०] । यदि हि स्वतन्त्र एव शब्दो द्रव्यस्वरूपमभिदध्यात् ततो यदेव सच्छब्देनाऽभिहितं द्रव्यं तदेवाऽन्यूनाऽनतिरिक्तं घटशब्देनाऽभिधीयतइति युक्तमेकार्थवृत्तित्वात्सामानाधिकरण्यं, यदा त्वपोह्यभेदानिबन्धनाभिन्नाऽपोहपरतन्त्रः शब्दस्तद्रूपाऽवच्छिन्नं द्रव्यमभिधत्ते तदा सच्छब्देनाऽसद्व्यावृत्त्यवच्छिन्नं द्रव्यमभिदधता नाऽघटादिव्यावृत्त्यंशोऽनभिधीयमानत्वाद्व्याप्यते, तथा घटशब्देनाप्यसद्व्यावृत्त्यंशो न व्याप्यते इति एकार्थवृत्तित्वाऽभावान्न सामानाधिकरण्यमिति ।

सत्यप्यभिधानप्रकारभेदे द्रव्यस्वरूपैक्यादेव सामानाधिकरण्यं सिध्यतीति चेन्न, अतिप्रसङ्गात् । एवं हि जातिगुणशब्दयोरिव गुणशब्दयोरपि अनपेक्षितजातिशब्दयोरेव सामानाधिकरण्यं स्यात्, ततश्च यथा मधुरः खण्ड इति, यथा च शुक्लः खण्ड इति, तथा शुक्लो मधुर इत्यपि स्यान्न चैवमस्ति,न तथा सन् घट इत्यपि स्यादित्याह खण्डइति[१२१] द्वयेन । व्याप्तिरभिधानं, तदभावान्नाऽऽक्षेपो न प्रतीतिः, अत एव न विशेषणविशेष्यत्वं, नापि सामानाधिकरण्यम्। यस्तु कदा चिच्छुक्लो मधुर इत्यपि प्रयोगः,स प्रकरणादिलब्धखण्डाद्यपर्यवसितार्थं, तदनादरेणाऽप्रयोगादिति ।

तथैवाऽसद्व्युदासांशविच्छिन्नाऽर्थोऽवधारणे ।
नाऽघटादिनिवृत्त्यंशव्याप्तिः शब्दात् प्रतीयते' ॥१२२॥
व्याप्तिश्चेदर्थरूपेण सत्तयैवं हि सा भवेत् ।
न घटत्वादिमानर्थः कश्चिन्न व्याप्यते तया ॥१२३॥
न च वस्तुतया व्याप्तिस्तया शब्दस्य वार्यते ।
प्रतीतिं प्रति तुल्यस्तु व्यापारो वस्त्ववस्तुनोः ॥१२४॥
निर्भागो ऽपि हि वस्त्वात्मा शब्दैर्भागेन गम्यते ।
न हि सच्छब्दविज्ञानाद्धटाद्यर्थः प्रतीयते ॥१२५॥

---

अथाऽसत्यपि गुणशब्दयोरीदृशे सामानाधिकरण्ये जातिशब्दयोर्जातिगुणशब्दयोश्चाऽसत्यामप्यभिधानतः परस्पराऽर्थव्याप्तावर्थव्याप्तिमात्रेण सामानाधिकरण्यं भवति, यो ह्यसद्रूपाऽपोहविशिष्टो ऽर्थः सच्छब्दाऽभिहितः सो ऽघटापोहमपि व्याप्नोति इत्युच्यते, तज्जातिपक्षे ऽपि समानमित्याह व्याप्तिरिति[१२३] । तामेव दर्शति न घटेति । तयेति, सत्ताविशिष्टेनाऽर्थेनेत्यर्थः ।

यदि परमेवमुच्येत, वस्तुरूपा तव सत्ता, मम त्वपोहरूपेति, तत्र न किं चिदित्याह न चेति[१२४] । तया सत्तया द्वारभूतया या ऽसच्छब्दस्य घटाद्यंशव्याप्तिः सा वस्तुतया वस्तुत्वेनाऽपराधेन न निवार्यतइति । प्रतीतितस्तु व्याप्तिः पक्षद्वये ऽपि तुल्येत्याह प्रतीतिमिति । प्रतीतिं प्रति यः शब्दस्य व्यापारः स यदि वस्तुरूपा सत्ता यदि वाऽवस्तुरूपा द्वेधा तुल्य एव, न हि सच्छब्दजन्या प्रतीतिः पक्षद्वये ऽपि घटशब्दार्थं न व्याप्नोतीति ।

ननु तव सभागं वस्तु, तस्यैकस्मिन् भागे प्रतीते ऽपि भागान्तरमप्रतीतं भवति, मम तु निर्भागत्वादसदपोहेनापि प्रतीतं सर्वात्मना प्रतीतमेवेति कथं प्रतीतेस्तुल्यत्वमत आह निर्भाग इति[१२५] । का-

तेनाऽनाक्षेपदोषो ऽस्ति भाक्तदोषश्च विद्यते ।
विशेषणत्वान्मुख्यत्वमपोहस्य हि जातिवत् ॥१२६॥
तस्मात्तद्वति गौणत्वान्नाऽभिधेयत्वसंभवः ।
अवस्तुत्वान्न मुख्यश्चे,न्न स्यादेवं विशेषणम् ॥१२७॥
'भेदाश्चाऽपोहवन्तः स्युस्तेषां चाऽवाच्यतोदिता ।
आनन्त्यव्यभिचाराभ्या'मन्यो नास्ति त्वपोहवान्॥१२८॥
नाऽपोहवत्त्वमन्यद्धि भेदाऽपोहान्तरे ऽस्ति ते ।
तच्चापि कल्प्यमानं स्यादभावो भाव एव वा ॥१२९॥

---

रणमाह न हीति । उपसंहरति तेनेति[१२६] । अनाक्षेपो, ऽप्रतीतिरिति ।

यदपि जातिमदभिधाने जातेरेव प्रथमाऽभिधानान्मुख्यत्वं तद्वांस्तु भाक्तः स्यादित्युक्तं, तदपि तुल्यमित्याह भाक्तेति । तदेव विवृणोति विशेषणत्वादिति । शङ्कते अवस्तुत्वादिति[१२७] । ततश्च तद्वानेव मुख्यो भवतीति । निराकरोति न स्यादिति । तत्र तद्विशिष्टाऽभिधानं दूराऽपास्तमिति ।

यदपि भिक्षुणोक्तं 'तद्वांस्तु भेद एवेष्टः स तु पूर्वं निराकृत' इति, तदपि तुल्यमित्याह भेदा इति[१२८] पादत्रयेण । न ह्यनन्तैः संबन्धग्रहणं संभवति, अगृहीतसंबन्धस्य च प्रत्यायकत्वे सर्वत्र प्रतीतिप्रसङ्ग इति । न च सकलभेदाऽनुगतो ऽपोहवान्नाम कश्चिदस्ति, यः शब्दार्थः स्यादित्याह अन्य इति ।

यदि त्वपोहवत्त्वसामान्यं शब्दार्थो, न भेदाः, तत्राह नाऽपोहवत्त्वमिति[१२९] । न हि भेदानामपोहस्य चाऽन्तरे मध्ये ऽपोहवत्त्वं नाम सामान्यमस्तीति ।

वस्तु चेज्जातिरेव स्यादवस्तुत्वे ऽपि पूर्ववत् ।
सम्बन्धो वैष कल्प्येत तस्य चेष्टा न वाच्यता॥१३०॥
न चैको ऽपोहवानर्थो वर्तते ऽर्थान्तरे क्वचित् ।
तस्मादपि न सामान्यं वाच्यं न च विशेषणम्॥१३१॥

---

उपेत्याप्याह तच्चापीति । पूर्ववदिति[130] अपोहमात्राऽभिधानवदित्यर्थः । अथ वा, ऽपोहवत्त्वं नामाऽपोहाऽपोहवतोः संबन्धः, कृत्तद्धितसमासेषु संबन्धाऽभिधानं भावप्रत्ययेनेति स्मरणात्। संबन्धस्य सामानाधिकरण्याऽनुपपत्त्या भवद्भिरेव वाच्यत्वं निराकृतमित्याह संबन्ध इति ।

एवं च यद्भिक्षुणोक्तं 'तद्वन्मात्रे ऽपि संबन्धः सत्ता वेति विचारित'मिति; तत्तस्यापि तुल्यमिति दर्शितमिति । यदुच्येत, न सर्वे ऽपोहवन्तः शब्दार्थाः, किं त्वेक एव सदादिरपोहवान् शब्दार्थः, अतो नाऽऽनन्त्यव्यभिचाराविति, ततस्तस्य सर्वेषु घटादिषु अभावात्तत्र सदादिशब्दानां वृत्तिर्न स्यात्, दृश्यते चासौ, इत्याह न चेति[131] । यस्मादेव चाऽन्यत्राऽवृत्तिस्तस्मात्सामान्यवाच्यता न स्यान्नापि घटादिशब्दैर्विशेषणत्वं सिद्ध्येदित्याह तस्मादिति । तदनेन यद्भिक्षुणोक्तं

तद्वानर्थो घटादिश्चेन्न घटादिषु वर्त्तते ।
सामान्यमर्थः स कथमिति तद्वदवाच्यता ॥ इति ;

तदपि तस्यापि तुल्यमिति दर्शितमिति ।

अत्र भिक्षुणा शङ्कितं, 'मा भूदन्यत्र वृत्तिरेकस्य तावद्वर्तमानस्य सच्छब्दस्य तद्गतविशेषाकाङ्क्षायामवान्तरजातिवचनैर्गवादिशब्दैर्विशेषणं भविष्यति यथा नीलादिगुणस्य प्रकर्षादिभिर्नीलतरो नीलतम इति, तदुक्तम् 'मा भूदर्थान्तरे वृत्तिर्यथैकत्राऽसितादिवत् प्रकर्षादिवि-

नात्मन्यविद्यमानत्वाद्विशेषो ऽपोहसूचकः ।
तस्मान्न तैर्विशेष्यत्वं प्रकृष्टत्वेन नीलवत् ॥१३२॥
अर्थाऽऽक्षेपो ऽपि नास्त्येत्र सन्देहाल्लिङ्गलिङ्गिवत् ।
न सामान्यात्मना ऽपोहस्तै र्विना न च सिद्ध्यति॥१३३॥
एवमेव त्वनाक्षेपः स्यादपोहेन वस्तुनः ।
यतः शशाविषाणे ऽपि तदपोहस्य संभवः ॥१३४॥

---

शिष्टत्व'मिति। एवं चाऽऽशङ्क्य दूषितं 'नैवं जातेरजातित' इति। नीलस्य ह्यस्ति प्रकर्षादिसंबन्धः, जातेस्तु जात्यन्तरेणाऽसंबन्धान्न तया विशेषणम्, न हि जात्यन्तरविशिष्टरूपत्वं जात्यन्तरे वर्त्तते द्रव्यस्वरूपमात्रवर्त्तित्वा'दिति, तदपि तुल्यमित्याह नाऽऽत्मनीति[१३२]। न ह्यसदपोहः स्वात्मन्यविद्यमानान् घटाद्यपोहान् सूचयति,न ह्येकाऽपोहविशिष्टो ऽपोहान्तरे वर्त्तते, यतस्तेन विशेष्येत प्रकर्षेणेव नीलादिरिति ।

तत्र पुनरसत्यपि साक्षाज्जात्या संबन्धे ऽस्ति तावदेकार्थसमवायसंबन्धः, तावता चाऽर्थात्पटत्वादिकमाक्षिपन्ती सत्ता तेन विशेष्यतइत्याशङ्क्य दूषितम् 'अर्थाक्षेपे ऽप्यनैकान्त'इति, तदपि समानमित्याह अर्थाक्षेप इति[१३३] । लिङ्गलिङ्गिवदिति वैधर्म्योपन्यासः। एतदेव दर्शयति न सामान्येति । न ह्यसदपोहो घटाऽपोहेन विना न सिद्ध्यति, घटादावपि संभवात्, अतः संदेहमात्रमेव घटे स्यादिति । तदेवमपोहवदभिधाने ऽपोहान्तरस्याऽनाक्षेपः, अपोहमात्राऽभिधाने त्वाधारभूतस्य वस्तुनो ऽप्यनाक्षेपः किमुताऽपोहान्तरस्येत्याह एवमिति[१३४] । वस्तुमात्रं तावज्जातिराक्षिपति, तुच्छस्त्वपोहस्तदपि नाक्षिपेत, शशविषाणे ऽपि संभवादिति ।

लिङ्गसंख्यादिसम्बन्धो न वा ऽपोहस्य विद्यते ।
व्यक्तेरव्यपदेश्यत्वात्तद्द्वारेणापि नास्त्यसौ ॥१३५॥
न ह्यसाधारणत्वेन सा ऽपोहेनापि गम्यते ।
न चाप्यगम्यमानस्य वस्तुनः स्याद्विशेष्यता १३६॥
लिङ्गसंख्याद्यपोहानां नोपकारः स्वरूपतः ।
वस्तुनश्चोपकार्यत्वं कथं शब्दैः प्रतीयते ॥१३७॥
न विना ऽनुपलब्ध्या च स्यादभावमतिः क चित् ।
न चाऽभावप्रमेयत्वं गोत्वादेरिह गम्यते ॥१३८॥

---

एवमपोहस्याऽर्थान्तरसामान्यैर्नीलादिभिश्च विशेषणत्वादि निरस्तं; लिङ्गसंख्यादिसंबन्धमपि निराकरोति लिङ्गेति[१३५] । न च व्यक्तिविशेषणत्वं तयोः संभवति, व्यक्तेरशब्दार्थत्वादित्याह व्यक्तेरिति।

ननु च शब्दाऽनभिधेया ऽपि व्यक्तिरपोहेनाऽर्थाद्गम्यमाना लिङ्गसंख्याभ्यां विशेष्यते, तवेव जातिव*दत आह न हीति[१३६] । मम हि विकल्पक्षमा व्यक्तिर्जात्यात्मकतया विकल्पाक्षिप्ता युक्तं यल्लिङ्गसंख्याभ्यां विशेष्यते, भवतस्तु सर्वविकल्पशून्या व्यक्तिः कथमिवाऽपोहेनापि गम्येत, सा ह्याक्षिप्यमाणा विकल्पिता स्यात्, न चाऽसाधारणत्वादसावभिलापसंसर्गयोग्या, नापि विकल्पगोचरेति ।

अथ शब्देनाऽपोहेन वा ऽनवगता अपि किमिति न लिङ्गादिना विशेष्यते, अत आह न चेति । उक्तमेवार्थं संक्षिप्य दर्शयति लिङ्गसंख्येति[१३७] । गोत्वाद्यपोहानां च तद्गता विशेषणत्वं† वस्तुनश्चाऽसाधारणस्य तैर्विशेष्यत्वं न शब्देनाऽवगन्तुं शक्यमिति । किं चाऽपोहात्मकत्वे गोत्वादेरनुपलब्धिवेद्यता स्यात्, न चासावस्ति, प्रत्यक्षा-

---

* तवेव जात्याक्षिप्तेति १ पु. पा. ।

† अपोहानां न तावद्विशेष्यत्वमिति १ पु. पा. ।

आख्यातेषु च नान्यस्य निवृत्तिः संप्रतीयते ।
न पर्युदासरूपं हि निषेध्यं तत्र विद्यते ॥१३९॥
न नेति ह्युच्यमानेऽपि निषेधस्य निषेधनम् ।
पचतीत्यनिषिद्धं तु स्वरूपेणाऽवतिष्ठते* ॥१४०॥
साध्यत्वप्रत्ययश्चात्र तथाभूतादिरूपणम् ।
निष्पन्नत्वादपोहस्य निर्निमित्तं प्रसज्यते ॥१४१॥
विध्यादावर्थराशौ च नाऽन्यापोहनिदर्शनम् ।
'नञश्चापि नञा युक्तादपोहः कीदृशो भवेत् ॥१४२॥
चादीनामपि नञ्योगो नैवास्तीत्यनपोहनम् ।
वाक्यार्थोऽन्यनिवृत्तिश्च व्यपदेष्टुं न शक्यते ॥१४३॥

---

ऽवगमादित्याह न विनेति[१३८]। पचत्यादिषु चाऽन्यव्यावृत्तिरसंभावनीयैवेत्याह आख्यातेष्विति[१३९] । कथमित्याह न पर्युदासेति । निषेध्यमपोह्यं भवती त्येवं पर्युदासरूपं न गम्यते, नामयोगी हि नञ् पर्युदासवृत्तिर्भवति, आख्यातयोगी प्रतिषेधमात्रपर्यवसायीति ।

यदि तु प्रतिषेधमेवाऽपोहेत, तत्राह नेति[१४०] । यदा हि न पचतीति पाकाऽभावमात्रं प्रतिपादितं नाऽगौरितिवदर्थान्तरमश्वादिकं तदा द्वितीयेन नञा आद्यनञर्थस्य‡ प्रतिषेधात् अप्रतिषिद्धः पचत्यर्थो विधिरूपेणाऽवतिष्ठतइति ।

साध्यादिप्रत्ययश्चाऽऽख्यातादावनुपपन्न इत्याह साध्यत्वेति[१४१]। उदाहरणान्तरमाह विध्यादाविति[१४२] । निमन्त्रणादीनां विभ-

---

* स्वरूपेणैव तिष्ठति इति १ पु. पा. ।

† अपोह्यमपचतीति १ पु. पा. ।

‡ प्रतिषेधस्येति २ पु. पा. ।

अनन्याऽपोहशब्दादौ वाच्यं न च निरूप्यते ।
प्रमेयज्ञेयशब्दादेरपोह्यं कुत एव तु' ॥१४४॥
अपोह्यकल्पनायां तु वरं वस्त्वेव कल्पितम् ।
ज्ञानाऽऽकारनिषेधाच्च नाऽन्तरार्थोऽभिधेयता ॥१४५॥
न चाप्यपोह्यता, तस्मान्नाऽपोहस्तेषु सिध्यति ।
एवमित्यादिशब्दानां न वा ऽपोह्यं निरूप्यते ॥१४६॥

---

क्त्वर्थानां च कर्मादीनामादिशब्देन ग्रहणमिति । उदाहरणान्तराणि दर्शयति नञ इति सार्द्धद्वयेन । यत्त्वत्र दिङ्नागेनोक्तम् 'अज्ञेयं कल्पितं कृत्वा ज्ञेयशब्दः प्रवर्त्तते' इति, तत्राह अपोह्येति[१४५] । विधिरूपमेव सामान्यं काल्पनिकमभिधेयमस्तु प्रतीत्यानुगुण्यादिति नापोह्यं कल्पयामः । नन्वपचत्याकारो ज्ञानमेवाऽपोह्यं तदपोहात्मकं च ज्ञानमेव पचत्यादेरभिधेयमिति चेत्, तत्राह ज्ञानाकारेति ता[१४६]ऽन्तेन। उपसंहरति तस्मादिति । उदाहरणान्तरमाह एवमिति । न ह्येनेवं नामेति किं चिदस्ति, प्रकारवचनत्वादेवंशब्दस्य, सर्वस्य च प्रकारभाक्त्वेनैवंभावाऽयोगादिति ।

अत्र हि भिक्षुणा भेदशब्दानां शिंशपापलाशादीनां मिथः सामानाधिकरण्याऽभावमुपपादयतोक्तं 'भेदो भेदान्तरार्थं तु विरोधित्वादपोहते' इति, भेदशब्दा ह्येकं वृक्षत्वसामान्यं विशिंषन्त इतरेतरमपोह्य व्रीहियवाविव यागं स्वात्मनि स्थापयन्तः परस्परविरोधिनो भवन्ति, विरोधाच्चाऽन्योन्याऽपोहेन वर्त्तन्ते, इतरेतराऽभावश्चाऽपोहः, कथं चेतरेतराऽभावात्मकाऽर्थद्वयाऽभिधायिनोः सामानाधिकर-

विरोधित्वेन भेदानामपोहो यदि कल्प्यते ।
विरोधोऽपोहतस्तत्र विरोधाच्चाप्यपोहनम् ॥१४७॥
न सामान्याऽपहारित्वं विधिरूपेण तत्र ते ।
पलशादीनपोह्याऽतो वृक्षं हरति शिंशपा ॥१४८॥
सामान्याद्यनपोहश्च नाऽविरोधेन कल्प्यते ।
न हि शब्दस्वरूपाणां स्याद्विरुद्धाऽविरुद्धता ॥१४९॥

---

ण्य'मिति, तद् दूषयति विरोधित्वेनेति[१४७]। विरोधादपोहं ब्रुवाणस्येतरेतराश्रयं, विरोधस्यैवाऽपोहाऽधीनत्वादिति ।

नन्वेकसामान्याऽपहाराद् विरोधो नाऽपोहादत आह न सामान्येति[१४८] । सत्यं, सामान्याऽपहाराद्विरोध,: अपहारस्त्वपोहपूर्वकः, न हि शिंशपाशब्दोऽपि विधिरूपं शिंशपात्वमभिधाय तेन वृक्षं विशिंषन् पलाशादिभ्यः परिहरति शिंशपाऽयं वृक्ष इति, किं त्वशिंशपारूपान् पलाशादीनपोह्य अतः पलाशादेर्वृक्षत्वमपहरति, स ह्यपोहवचनस्तेनैव वृक्षं विशिनष्टि नायं वृक्षः शिंशपेति, तेनाऽपोहपूर्वकः सामान्याऽपहारस्तन्निबन्धनश्च विरोधः; तदेवं सति यदि विरोधादपोहः कल्प्येत व्यक्तमितरेतराश्रयत्वमिति ।

यदपि सामान्यविशेषशब्दानां शिंशपावृक्षादीनां पर्यायाणां च तरुवृक्षादीनामविरोधेनाऽनपोहकत्वमुक्तम् 'अन्यत्वेऽपि न सामान्यभेदपर्यायवाचिना'मिति, तदपि दूषयति सामान्येति[१४९] । कथमित्याह न हीति । न ह्यर्थाऽनपेक्षाणां विरोधाऽविरोधौ, यतः कश्चित्किं चिदपोहेत किं चिन्नेति ।

मा भूदेवं, वस्तुनिबन्धनौ भविष्यतः, ययोरेकत्र वृत्तिसंभवः तयोरविरोधः, यथा तरुवृक्षशब्दयोः वृक्षशिंशपाशब्दयोश्च, ययोश्च न

न च वस्तुस्वरूपेण तस्य शब्दैरसङ्गतेः ।
प्राक् शब्दव्यापृतेर्नापि सा ऽपोहानां प्रतीयते ॥१५०॥
अन्येनाऽनवबुद्धे ऽर्थे सदा शब्दः प्रवर्तते ।
सामान्यात्मकता तस्य केन रूपेण गम्यते ॥१५१॥
शब्दाऽनुरूपतश्चेत् स्यादन्याऽपोहानिरूपणम् ।
भिन्नत्वाद् वृक्षतर्वादेरपोहः केन वार्यते ॥१५२॥
शब्दस्पृष्टेर्विना ऽपोहो न च लिङ्गेन गम्यते* ।
न विरुद्धाऽविरुद्धत्वं तस्य लिङ्गाच्च सिध्यति॥१५३॥

---

संभवति यथा शिंशपापलाशशब्दयोः, तयोर्विरोध इति चेत्, तत्राह न चेति[१५०] । न ह्यसाधारणं वस्तु शब्दाः स्पृशन्ति, येन व्यवस्था स्यादिति ।

अर्थाऽपोहानामेव वृक्षशिंशपादीनामविरोधः शिंशपापलाशादीनां च विरोधः, तन्निमित्तं शब्दानां विरुद्धाऽविरुद्धत्वमुच्येत, तत्राह प्रागिति । न हि शब्दात् प्रागपोहस्वरूपमपि गम्यते नतरां विरुद्धाऽविरुद्धतेति । शब्देनैवावगम्यतइति चेन्न,अगृहीतसंबन्धेन तेन तदवगमाऽसंभवात्, स्वरूपाऽनवगमादेव चाऽपोहानामयं सामान्याऽपोहो ऽयं विशेषाऽपोह इत्यपि न ज्ञायतइत्याह अन्येनेति[१५१]।

तदेवमर्थद्वारविरोधाऽवगमाऽसंभवे यदि शब्दस्वरूपभेदानुसारेणैव शिंशपापलाशादेरपोहः, स तरुवृक्षादेरपि स्यादित्याह शब्दाऽनुरूपत इति[१५२] ।

स्यादेतत्, प्रागेव शब्दादनुमानेनैवाऽपोहस्वरूपं तस्य सामान्यविशेषात्मकत्वं विरुद्धाऽविरुद्धत्वं चाऽवगम्यते, तदनुरूपं शब्दानां सा-

---

* इदमर्धत्रयं त्रुटितं का. पु. ।

अदृष्टत्वाद्व्युदासस्तु पुरस्तादेव वारितः।
'सामान्यशब्दो भेदेन नेष्यते वाचकात्मना ॥१५४॥
व्युदासस्तत्र दुर्वारः' कथं चिद्दृष्टता पुनः।
ब्राह्मणे क्षत्रियस्यापि पर्युदासः प्रसज्यते ॥१५५॥

---

मानाधिकरण्यादिव्यवस्थानमिति, तत्राह शब्दस्पृष्टेरिति[१५३]। शब्दवदेव लिङ्गमपि गृहीतसाध्याऽन्वयमेव साध्यं गमयति, न चाऽनवगतेनाऽपोहेनाऽन्वयग्रहणं संभवतीति।

यदपि भेदानामपोहे कारणान्तरमुक्तम् 'अदृष्टत्वाद्व्युदासो वा भेदानामितरेतर'मिति शिंशपाशब्दः पलाशादावदृष्टः तस्यापोहं करोतीति, तत्राह अदृष्टत्वादिति[१५४]।

'सर्वत्रैव ह्यदृष्टत्वात्प्रत्याख्यं नाऽवशिष्यत'इत्यत्रैतदुक्तम्, अगृहीताऽन्वयो हि पलाशवदेव शिंशपामप्यपोहेतेति, तत्र भिक्षुणा चोदितं 'सामान्यं स्याद्विशेषाऽपोहा'दिति, सामान्यशब्दो हि वृक्षादिः शिंशपाविशेषस्याऽवाचकत्वात्तत्राऽदृष्ट एवेति तमप्यपोहेदिति; तत्तावद्दर्शयति सामान्येति पादत्रयेण।

यत्त्वत्रोक्तं 'नाऽन्ययुक्तस्य दृष्टत्वा'दिति, तदयुक्तमित्याह कथं चिदिति[१५५]। जघन्यरूपा हि प्रकरणादिसहायस्य सामान्यशब्दस्य विशेषे वृत्तिर्न मुख्यरूपा, वाचकत्वाऽभावात्, तादृशी च वृत्तिः शौर्यादिशालिनि ब्राह्मणे क्षत्रियशब्दस्यापि दृष्टेति सो ऽपि ब्राह्मणं नाऽपोहेत, मुख्यरूपेण त्वदर्शनं सामान्यशब्दस्यापि विशेषे ऽस्त्येवेति सो ऽपि तमपोहेतेति।

अथ सामान्यं यं कं चन विशेषमपेक्षमाणं सर्वैरेव विशेषैः संबध्यते, न चाऽपोहते, यथा ऽऽहुः 'तन्मात्राऽऽकाङ्क्षणाद् भेदस्तत्सा-

आकाङ्क्षणादथाऽत्यागस्तुल्यो द्रव्यक्रियादिषु ।
वृक्षेणाऽतो ऽनपोहः स्यात्तिष्ठत्यादेरसंशयम् ॥१५६॥
पुरुषस्य तथा राज्ञो व्युदासे न विशेष्यता ।
अव्युदासत्वपक्षे च स्यान्नीलोत्पलतुल्यता ॥१५७॥

---

मान्येन नोज्झित' इति, तत्राह आकाङ्क्षणादिति[१५६] । क्रियाकारकयोरप्यस्ति मिथो ऽपेक्षा, तेन वृक्षे तिष्ठतीत्यधिकरणभूतस्य वृक्षस्य क्रियापेक्षत्वात् क्रियायाश्चाऽधिकरणाऽपेक्षत्वान्नाऽन्योन्याऽपोहः सिध्येत, न च नास्तीति वक्तव्यं, तथा सति वृक्षस्तिष्ठतीति सामानाधिकरण्यं स्यात्, वृक्षे तिष्ठतीति वैयधिकरण्यं न सिद्ध्येदिति ।

एवं सर्वेष्वपि व्यधिकरणगतेषु विशेषणविशेष्यत्वाऽनुपपत्तिः सामानाधिकरण्यप्रसक्तिर्वा दर्शयितव्येत्याह पुरुषस्येति[१५७] । आकाङ्क्षणादन्याङ्गं वदतो राज्ञः पुरुष इत्यत्र षष्ठ्यन्तो राजा यदि पुरुषमपोहेत तदवश्यमाकाङ्क्षा नास्तीत्यङ्गीकर्त्तव्यं, ततश्च विशेष्यत्वमपि पुरुषस्य न स्यात्, न ह्यनाकाङ्क्षितस्य विशेष्यत्वं सिद्ध्यति; अथ नाऽपोहेत तथा सत्येकार्थवृत्तित्वात् सामानाधिकरण्यं स्यात्, राज्ञः पुरुष इति वैयधिकरण्यं न सिध्येदिति ।

यत्तु भिक्षुणा 'विधौ वस्तुस्वरूपशब्दार्थत्वपक्षे वस्तुनो निर्भागत्वात्सर्वैः शब्दैः सर्वात्मकार्थग्रहणं स्यात्, यथैव वृक्षपार्थिवद्रव्यसज्ज्ञेयशब्देषु पूर्वपूर्वैः शब्दैरुत्तरोत्तरार्थेषु निर्णयो भवति तथोत्तरोत्तरैः पूर्वनिर्णयः स्यात्, न चैवमस्ति, ज्ञेयशब्दात्प्रभृति प्रातिलोम्येन चतुस्त्रिद्व्येकेषु संदेहादानुलोम्येनैव वृक्षशब्दात्प्रभृति चतुरादिषु निर्णयात्; अतो न वस्तुवचनाः शब्दा इत्युक्तं, यथा—

वृक्षत्वपार्थिवद्रव्यसज्ज्ञेयाः प्रातिलोम्यतः ।
चतुस्त्रिद्व्येकसंदेहे निमित्तं निश्चये ऽन्यथा ॥ इति,

'वृक्षत्वपार्थिवद्रव्यसंज्ञेयेषु यदुच्यते ।
प्रातिलोम्याऽऽनुलोम्येन विधौ सर्वोऽर्थबोधनम्॥१५८॥
तदयुक्तं, न सर्वो हि शब्दः सर्वत्र दृश्यते' ।
देशाऽविभागतो वृत्तिर्नेत्रस्यापि रसादिषु ॥१५९॥
ग्राहकत्वेन वृत्तिस्तु प्रतिजाति व्यवस्थिता ।
चक्षुरादिवदेवाऽत्र सङ्करो न भविष्यति ॥१६०॥
निवृत्तचेष्टे शब्दे च व्याप्त्यव्याप्तिकृतं पुनः ।
सत्त्वादेर्बोधकत्वं स्यादेकन्यूनाऽतिरेकतः ॥१६१॥
तत्रैव दोषः स्यादेष विशेषे यस्य वर्त्तते ।
सामान्यशब्दो, वाच्यानां भेदो नाप्यस्ति वस्तुनः॥१६२॥

---

तदनुभाष्य परिहरति वृक्षत्वेति[१५८] सार्द्धेन । स्यादेवं, यदि निर्भागं वस्तु स्यात्, तत्तु सभागमिति तत्र तत्र प्रतिपादितं, तत्रैकभागाऽभिधायिनां भागान्तराऽनवगतिर्युक्तैवेति ।

नन्वेकदेशस्थत्वाद्भागानामेकत्र वर्त्तमानः शब्दः कथमन्यत्र न वर्त्तेताऽत आह देशाऽविभागत इति[१५९]। अथ तत्राऽग्रहणशक्तिवशाद्व्यवस्था, सा इहापि तुल्यैव, चक्षुरादिवदेव प्रतिजाति व्यवस्थितैव शब्दानामपि शक्तिः, अतो न संकराऽऽपत्तिरित्याह चक्षुरादिवदिति[१६०] । यद्येवमानुलोम्येनापि तर्हि वृक्षादिशब्देनोत्तरोत्तराऽनिर्णयः स्यादत आह निवृत्तेति[१६१] । प्रत्युताऽपोहवादिन एवाऽयं दोष इत्याह तत्रैवेति शब्दो[१६२]ऽन्तेन। स्वलक्षणएव हि भवन्मते शब्दानां वृत्तिः, तच्चैकरूपमिति सर्वैरेकरूपैव प्रतीतिः स्यादिति ।

अपि चैकत्वनित्यत्वप्रत्येकसमवायिताः ।
निरुपाख्येष्वपोहेषु कुर्वतो ऽसूत्रकः पटः ॥१६३॥
तस्माद्येष्वेव शब्देषु नञ्योगस्तेषु केवलम् ।
भवेदन्यनिवृत्त्यंशः स्वात्मैवान्यत्र गम्यते ॥१६४॥
ज्ञेयार्थोऽन्याऽनपोहत्वं* प्रमाङ्गत्वात्त्वगादिवत् ।
येनोक्तं तस्य नञ्युक्तैः शब्दैः स्याद् व्यभिचारिता॥१६५॥
पक्षीकुर्याद्यदा सर्वांस्तदा ऽथाऽवीतहेतुभिः ।
अनैकान्तो विरोधश्च सर्वलोकप्रसिद्धितः ॥१६६॥

---

नन्वव्यपदेश्यं स्वलक्षणं, व्यावृत्तयस्त्वभिधेयाः, ताश्च भिन्नाः, कथमैकार्थ्यं शब्दानाम्,अत आह वाच्यानामिति । न हि वस्तुनः स्वलक्षणाख्यस्य व्यावृत्तिर्नाम* कथं चिदस्ति, व्यावृत्त्यभावव्यावृत्त्यभ्युपगमात्, सा न वस्तुनो व्यावृत्तीनां भेदाऽभावः प्रागेव दर्शित इति।

यो ऽपि जातिधर्माऽतिदेशो ऽपोहे कृतो 'जातिधर्मव्यवस्थिते'रिति, सो ऽयुक्त इत्याह अपि चेति[१६३] । उपसंहरति तस्मादिति[१६४] । अब्राह्मणशब्देष्वेवाऽपोहांशस्य वाच्यत्वाऽवगतिः, गवादिशब्दैस्तु रूपमेव लोके गम्यत इति तस्यैवाऽभिधेयत्वमिति ।

नैयायिकास्त्वनुमानेन गवादिशब्दानामपोहाऽभिधानं निराकुर्वन्ति, तदुपन्यस्य निरस्यति ज्ञेयार्थेति[१६५] । यदि तु नञ्योगिनो ऽपि पक्षीकुर्यात, तत्राह पक्षीकुर्यादिति[१६६] । अवीता हेतवो नाम विपक्षव्यावृत्तिमुखेन ये साध्यं गमयन्ति, यथा प्राणादयः, ते हि निरात्मकेभ्यो घटादिभ्यो व्यावृत्ता जीवच्छरीरस्य निरात्मकत्वाऽपोहेन सात्मकत्वं गमयन्ति, लोकविरुद्धं च नञ्योगिनामनपोहकत्वमिति । 'ज्ञेयार्थोऽन्याऽनपोहत्व'मिति च साध्यं विकल्पनीयं,

---

* स्वलक्षणाख्यसंख्यावृत्तिर्नामेति १—३ पु. पा. ।

नाऽपोहतइतीदं च कारकत्वेन चेद्भवेत् ।
केवलाऽपोहबुद्धेर्वा ततः स्यात्सिद्धसाध्यता ॥१६७॥
अथाऽन्यापोहवत्यर्थे वृत्तिर्नास्तीति साध्यते ।
ततः प्राक् पक्षबाधः स्याद्गोत्वे ऽथाऽश्वाद्यभावतः॥१६८॥
साध्यहीनश्च दृष्टान्तश्चक्षुराद्यपि तस्य हि ।
वर्त्तते ऽपोहवत्येव* तं यद्यपि न बुध्यते ॥१६९॥
अथाऽन्यापोहनिर्भासा न बुद्धिः सिद्धसाधनम् ।
अपोहरूपमप्येतद्वस्त्विवत्येव हि गम्यते ॥१७०॥
अथाऽपोहनिमित्ता ऽस्य वृत्तिरर्थे निषिध्यते ।
व्यतिरेकाऽङ्गतेष्टत्वात्पुनः प्राक् पक्षसाधनम्॥१७१॥

---

यदि तावत्कारणनिषेधः, ततः सिद्धसाध्यत्वं, ज्ञापको ऽप्यपोहस्य शब्दो न कारकम्, अथ केवलं निराश्रयमपोहं न बोधयति, तथापि सिद्धसाधनं, वस्त्वाश्रयत्वात्तस्येत्याह नाऽपोहतइति[१६७] । पक्षान्तरमाशङ्क्य निराकरोति अथेति[१६८] । भवता ऽभ्युपगतो गोत्वे ऽश्वत्वादीनामभाव इति दृष्टान्तश्च साध्यविकलः, चक्षुरादीनामप्यपोहमनवगमयतामपि तद्वति वृत्तेरविवाद इत्याह साध्यहीनश्चेति[१६९] । पक्षान्तरमाशङ्क्य निराकरोति अथेति[१७०] । कथमित्याह अपोहरूपमिति । अभावात्मकमपि सामान्यं वासनाबलाद्वस्त्वाकारेणैवाऽवगम्यतइति सौगतानामपि मतिरिति ।

पुनरप्यन्यदाशङ्क्य निराकरोति अथेति[१७१] । अपोहः, अन्यस्माद्व्यावृत्तिः, सा निमित्तमेव शब्दस्य स्वाऽर्थाभिधाने, अन्वयव्यति-

---

* अपोहवत्यर्थे इति २ पु. पा. ।

अनुमाने तथा चैतदित्यनैकान्तिको भवेत् ।
सन्देहबाधजातेन प्रत्यक्षेणापि चेतसा ॥१७२॥
विरुद्धता च हेतोः स्याच्छब्दः श्रोत्रादिवद्यतः ।
आत्माऽन्तःकरणाकाशैः स्ववाचित्वं* जहाति वः॥१७३॥
विधिरूपप्रवृत्तिर्वा शब्दो ऽपोहेन वर्त्तते ।
अनुमानाऽङ्गभूतत्वाद्यथैव प्रतिषेधकः ॥१७४॥
जातिं वा न ब्रवीत्येष व्यक्तिं वा तद्विशेषिताम्† ।
प्रमायामङ्गभूतत्वात् त्वक्श्रोत्रादि यथैव च ॥१७५॥

---

रेकयोस्तदङ्गत्वादिति। हेतुश्चानैकान्तिक इत्याह अनुमानइति[१७२]। लिङ्गस्यापि विपक्षव्यतिरेको ऽङ्गमेवेति ।

यश्चेदं स्थाणुर्वा पुरुषो वेति संदिहानस्य प्रत्यासीदतो ऽनुपलब्धिसहायेन्द्रियेण स्थाणुरेवायं न पुरुष इति संदेहबाधेन प्रत्यक्षज्ञानं जायते तेनाप्यनैकान्तिक इत्याह संदेहेति । विरुद्धश्च हेतुरित्याह विरुद्धता चेति[१७३] । कथमित्याह शब्द इति । यो हि लोकमनादृत्य नञ्योगिनामप्यपोहवाचित्वं निषेधति तं प्रत्यात्मादिशब्दानामप्यात्मादिवाचित्वनिषेधेनाऽयं हेतुरिष्टविघातकारीति ।

सप्रतिसाधनत्वं च दर्शयति विधिरूपेति[१७४] । भवतो यो विधिरूपाऽभिधायित्वेनाऽभिमतः सो ऽपोहमुखेन स्वप्रत्यये वर्त्तते,ऽनुमानाङ्गत्वादवीतहेतुवत्, तस्य हि दर्शिता ऽपोहमुखेन वृत्तिरिति । विरुद्धत्वमेव प्रकारान्तरेण दर्शयति जातिं वेति[१७५] । अभिधायकत्वनिषेधाच्च न साध्यविकलता दृष्टान्तस्येति । तस्माल्लोकाऽवग-

---

* आकाशस्ववाचित्वमिति १ पु. पा. ।
† विशेषितमिति १ पु. पा. ।

एवं साधनमार्गेण वाच्याऽवाच्यनिरूपणा ।
नाऽवतिष्ठतइत्यत्र कथ्यते लोकवर्त्मना ॥१७६॥

इत्यपोहवार्तिकम् ॥

अथ वनवादः ।

सास्नादिभिर्विशिष्टत्वमाकृतेरुच्यते कथम् ।
यदा ऽवयविसंबन्धि गोत्वं नाऽवयवे स्थितम् ॥१॥
एकाऽवयविसम्बन्धस्तेषां गोत्वेन विद्यते ।
तेनाऽसाधारणत्वात्ते स्युर्गोत्वस्योपलक्षणम् ॥२॥
पिण्डे सत्तादिजातीनां बह्वीनां समवेतता ।
ताभ्यो विशिष्यते गोत्वं सास्नादिभिरसंशयम् ॥३॥

---

त्यनुसारेण गवादिशब्दानां वस्त्वभिधेयत्वसिद्धिर्नाऽनुमानादित्याह एवमिति[७६] ।

इति श्रीपार्थसारथिमिश्रविरचिते न्यायरत्नाकरे अपोहवादः ॥

अथ घनवादः ।

"सास्नादिविशिष्टा आकृति"*रिति भाष्यमाक्षिपति सास्नादिभिरिति[१] । समाधत्ते एकाऽवयविसम्बन्ध इति[२] । गोशब्दाऽभिधेयां जातिमुपलक्षयितुं सास्नाद्युपादानम् । अस्ति हि तेषामेकाऽवयविसम्बन्धो जात्यन्तरेभ्यो ऽसाधारण्यं गोत्वेन, अतस्ते शक्नुवन्ति तदुपलक्षयितुमिति ।

किं पुनरुपलक्षणोपादानं प्रयोजनमत आह पिण्डइति[३] । स-

---

* शा. भा. पा. १४ पा. १७ ।

न चैते व्यञ्जकास्तस्य गुणवद्वा विशेषणम् ।
तथा हि* नाऽगृहीतेषु तेषु स्याद्गोत्वबोधनम् ॥४॥
तेषां च व्यञ्जकैः स्वैः स्यात् पुनर्ग्रहणकल्पना ।
तथा सत्यनवस्था स्यात् न स्या† द्गोत्वाऽवधारणम् ॥५॥
सर्वेषु च गृहीतेषु सास्नादिषु भवेन्मतिः ।
गोत्वे, न चैषु सर्वेषु युगपद्बुद्धिसंभवः ॥६॥
तस्मात् सद्भावमात्रेण महत्त्वादौ यथैव धीः‡ ।
क्रियते ऽवयवैः पिण्डे तथा जातिगुणादिषु ॥७॥

---

मुषिताऽनेकसामान्यसन्निधानात्पिण्डे कथं विनोपलक्षणेन गोशब्द-वाच्यं विविच्य निर्द्दिश्येतेति ।

काश्यपीयास्तु सास्नालाङ्गूलादि गोत्वे लिङ्गमिति पठन्तो व्यञ्ज-कत्वमेव सास्नादीनां मन्यन्ते, केचित्तु यथाश्रुतेन भाष्येण विशेष-णत्वं, तदुभयमयुक्तमित्याह न चैतइति[४] । कारणमाह तथा ही-ति । गृह्यते च दूरस्थैरगृहीतेष्वपि तेषु गोत्वम्, अतो नेमे नीलादि-वद्द्रव्यस्य गोत्वस्य विशेषणमिति ।

सास्नादिसामान्याऽपेक्षत्वे च गोत्वस्य तेषामपि व्यञ्जकभूतसा-मान्यान्तराऽपेक्षणादनवस्थेत्याह तेषां चेति[५] । इतश्च न तेषां व्य-ञ्जकत्वमित्याह सर्वेष्विति[६] । तस्माद्यथा सत्तामात्राऽवस्थितैरेवा-ऽवयवैरवयविनि महत्त्वं बोध्यते तथा ऽवयविस्वरूपे तत्समवेते च गोत्वादौ ग्रहणं न तु तद्ग्रहणाऽपेक्षम्, अन्यथा परमाणुग्रहणाऽपेक्षम-वयविग्रहणं स्यादित्याह तस्मादिति[७] ।

---

* ताथापीति १ पु. पा. । † अनवस्थानात्तस्मादिति १ पु. पा. ।
‡ प्रकृत्यादेर्यथैव धीरिति १ पु.पा. । महत्त्वादिवदेव धीरिति २ पु.पा. ।

यद्येवमगृहीतेषु तेषु किं सा न जायते ।
तद्देशव्यतिरेकेण ग्राह्यं येन न विद्यते ॥८॥
गृह्यमाणे तु गोत्वादौ नान्तरीयकहेतुकः ।
सास्नादेः कस्य चिद्बोधस्तद्देशत्वेन जायते ॥९॥
तदनत्यन्तभेदाद्वा तद्विशिष्टेति कीर्त्यते ।
बाधः पराऽनुमानस्य न प्रत्यक्षेति बोध्यते* ॥१०॥

---

चोदयति यद्येवमिति[८] । यद्यपि सर्वे अवयवा न गृह्यन्ते, के चित् तावत् दूरस्थैरपि गृह्यन्ते, तदनभिव्यङ्ग्यत्वे कं चिदप्यवयवमगृहीत्वा गोत्वधीर्जायेतेति । परिहरति तद्देशेति । तदेव विवृणोति गृह्यमाणइति[९] । समानदेशानि ह्यवयवाऽवयवितत्सामान्यानि, तेन गृह्यमाणे गोत्वे तत्तुल्योपलम्भयोग्यस्य कस्य चिदवयवस्य तत्सामान्यस्य वा नान्तरीयकं ग्रहणं भवतीति ।

यद्वा न व्यवच्छेदमात्रेणोपलक्षणपरो ऽयं विशेषणशब्दः, किं तु यथाश्रुतो ऽपि शक्यते व्याख्यातुमित्याह तदिति[१०] । न चात्र 'सास्नाद्येकार्थसम्बन्धि' इत्यादिना पौनरुक्त्यमाशङ्कितव्यम् । इदमेव च भाष्यव्याख्यास्थानम्, इहत्यमेव तु तत्राऽनवस्थापरिहाराय नीतमिति ।

"न प्रत्यक्षा सती साध्या भवितुमर्हति, रुचकः स्वस्तिको वर्द्धमानक इति हि प्रत्यक्षं दृश्यत"† इति भाष्यार्थमाह बाध इति । यत्परैर्नन्वाकृतिः साध्या ऽस्ति वा न वेत्यनेनाऽऽकृत्यभावे ऽनुमानमन्तर्णीतं, तस्यानेन प्रत्यक्षविरोधो ऽभिधीयतइति । किं पुनस्तदनुमानं, त-

---

* चोच्यते इति १ पु. पा. ।
† शा. भा. पृ. १४ प. १९ ।

परेषां साधनं ह्यत्र नाऽऽकृतिः पिण्डतः पृथक्।
तद्धीहानावविज्ञानात्पङ्क्तियूथवनादिवत् ॥११॥
सर्वत्र लोकसिद्धत्वान्न वाच्यं साधनं स्वयम्।
निषेधतां परेषां तु विरोधं लोकतो वदेत् ॥१२॥
विसंवादो न दृश्येत यदि प्रत्यक्षता ऽऽकृतेः।
प्रमाणे ऽपि विसंवादात्तार्किकेषु कुतो न्वियम्* ॥१३॥
रूपादावपि तेषां हि प्रत्यक्षत्वेन संमते।
विवादो, नैव लोकस्तु जातौ विप्रतिपद्यते ॥१४॥
व्यवहारा हि दृश्यन्ते सामान्याऽर्थनिबन्धनाः।
दधितक्रादिदानादौ कौण्डिन्यब्राह्मणादिषु ॥१५॥

---

दू दर्शयति परेषामिति[११]। किं पुनः स्वयं साधनमनभिधाय दूषणमेवोच्यते, ऽत आह सर्वत्रेति[१२]। लोकप्रसिद्धपदार्थव्यवहारिणामस्माकं न कश्चिदपि पदार्थः साधयितव्यः, प्रसिद्धं तु तर्काभासैरपन्हुवानेभ्यो लोकप्रसिद्धप्रत्यक्षेण विरोध एव वक्तव्य इति।

चोदयति विसंवाद इति[१३]। दृश्यते तु विसंवादो, ऽतो नूनमप्रत्यक्षेयमिति। परिहरति प्रमाणे ऽपीति। सर्वप्राणिप्रसिद्धे ऽपि प्रत्यक्षादिप्रमाणे ऽस्त्येव तार्किकाणां विसंवादः, तद्यथा निरालम्बनवादिना प्रत्यक्षगम्यरूपादेरपन्हवात्, अतः कुतस्तदीयविसंवादस्याऽऽदरणम्, अनादरणीय एव हि स इति। तदेव दर्शयति रूपादाविति दो[१४]ऽन्तेन। महाजनस्य तु नास्त्येव जातौ विप्रतिपत्तिरित्याह नैवेति। कथमवगम्यतइत्याह व्यवहारा इति[१५]।

---

* इदमिति २ पु. पा.।

आकृतिर्जातिरेवाऽत्र संस्थानं न प्रकल्प्यते।
न हि वाय्वग्निशब्दादौ किंचित्संस्थानमिष्यते ॥१६॥
अन्यदन्यच्च संस्थानं प्रतिपिण्डं प्रतीयते।
संयोगात्मकतायां तु विभागेषु विनश्यति ॥१७॥
अथ संस्थानसामान्यमश्वादावपि तत्समम्।
न गोत्वेन विना ह्येतद् व्यवच्छिन्नं प्रतीयते ॥१८॥
'सर्वप्रतिकृतीनां च संस्थाने सत्यपीदृशे।
न गोत्वादिमतिर्दृष्टा, तस्माज्जातिः पृथक् ततः ॥१९॥

---

विशेषेण हि सामान्यस्य बाधमाश्रयन्तो ब्राह्मणशब्दस्य सामान्यवाचित्वं मन्यन्ते, केचिच्च रुचकाद्युदाहरणादाकृतिं संस्थानं मन्यन्ते तदेव सामान्यमिति मन्वानाः, तान्प्रत्याह आकृतिरिति[१६]। कारणमाह न हीति। नानासंस्थानपरिणामेषु वाय्वादिष्वस्ति वायुत्वादिप्रत्यभिज्ञा, या संस्थानव्यतिरेकं जातेः साधयतीति।

शाबलेयादौ च प्रतिपिण्डं भिन्नं संस्थानं, तत्कथं सामान्यं स्यादित्याह अन्यदिति[१७]। इतश्च न तत्सामान्यमित्याह संयोगेति। शङ्कते अथेति[१८]। निराकरोति अश्वादाविति। अथ सत्ता ऽवान्तरसामान्यमुच्यते, न तद् गोत्वजातेरस्तीत्याह न गोत्वेनेति। चित्रे ऽपि मनुष्यगवादिसंस्थानसद्भावात्तत्रापि गोत्वादिप्रतीतिः स्यादित्याह सर्वेति[१९] पादत्रयेण। उपसंहरति तस्मादिति। संस्थानात् पृथग्भूता जातिरेवाऽऽकृतिरिति।

इदं च जातिपरत्वमाकृतिशब्दस्योपक्रमे ऽप्युक्तम इदानीमुपपादितं, भाष्यकारो ऽप्याकृत्यधिकरणे दर्शयिष्यति "द्रव्यगुणकर्मणां

रुचकादिषु सामान्यं रुचकत्वाद्युदाहृतम् ।
भिन्नेषु चैषु सामान्यं सुवर्णत्वं प्रतीयते ॥२०॥
'वर्धमानकभङ्गे च रुचकः क्रियते यदा ।
तदा पूर्वाऽर्थिनः शोकः प्रीतिश्चाप्युत्तराऽर्थिनः ॥२१॥
हेमार्थिनस्तु माध्यस्थं तस्माद्वस्तु त्रयात्मकम्' ।
नोत्पादस्थितिभङ्गानामभावे स्यान्मतित्रयम् ॥२२॥
'न नाशेन विना शोको नोत्पादेन विना सुखम् ।
स्थित्या विना न माध्यस्थ्यं' तेन सामान्यनित्यता॥२३॥
मुद्गमाषतिलादौ च यत्र भेदो न लक्ष्यते ।
तत्रैकबुद्धिनिर्ग्राह्या जातिरिन्द्रियगोचरः* ॥२४॥

---

सामान्यमात्रमाकृति"रिति । न हि गुणकर्मसु संस्थानं संभवतीति । रुचकाद्युदाहरणमपि संस्थानाऽतिरिक्तसामान्याऽभिप्रायमेवेत्याह रुचकादिष्विति[20]। त्रयाऽनुगतसुवर्णत्वाऽभिप्रायं चेदमित्याह भिन्नेष्विति । एवं च संस्थानाऽभिप्रायत्वं दूराऽपास्तं, न हि भिन्नेषु रुचकादिसंस्थानेष्वनुवर्त्तमानं सुवर्णत्वं संस्थानं भवतीति । सुवर्णत्वमेव रुचकत्वादिविशेषाऽनुगतमुपपादयति वर्द्धमानेति[21]सार्द्धेन। त्रयात्मक, मुत्पत्तिस्थितिविनाशधर्मात्मकमित्यर्थः । तदेवोपपादयति नोत्पादेति[22] । एतदेव विवृणोति न नाशेनेति[23] पादत्रयेण ।

यतश्च संस्थानस्य उत्पत्तिनाशयोरपि न सामान्यस्यापि नाशोत्पत्ती, न च हेत्वन्तरं तस्य विनाशकमुत्पादकं वा ऽस्ति, अत एव नित्यता ऽपि सामान्यस्य सिद्धेत्याह तेनेति । इतश्च सामान्यं संस्थानमित्याह मुद्गेति[24] । संहतस्थापितेषु मुद्गादिषु संस्थानभे-

---

* गोचरा इति का. पा. पु. ।

आराद्दृष्टे च पुरुषे संदेहो ब्राह्मणादिषु ।
न स्याद्यदि न गृह्येत सामान्यं चक्षुरादिना ॥२५॥
तस्योपलक्षणं चापि क चित्केन चिदिष्यते ।
रूपादीनां* विशेषेण देशकालाद्यपेक्षया ॥२६॥
सुवर्णे व्यज्यते रूपात्ताम्रत्वादेरसंशयम् ।
तैलाद् घृतं विलीनं च गन्धेन च रसेन च ॥२७॥
भस्मप्रच्छादितो वह्निः स्पर्शनेनोपलभ्यते ।
अश्वत्वादौ † च दूरस्थे निश्चयो जायते स्वनैः‡ ॥२८॥
संस्थानेन घटत्वादि ब्राह्मणत्वादि योनितः ।
क चिदाचारतश्चापि सम्यग्राजाऽनुपालितात् ॥२९॥

---

दमनुपलक्षयन्तो ऽपि दूरस्थाः पुरुषा मुद्गत्वादिकमेवैकबुद्धिगोचर-मिन्द्रियेण बुध्यन्तइति ।

इतश्च प्रत्यक्षं सामान्यमित्याह आरादिति[२५] । वस्तुमात्रनिबन्धनो हि सन्देहो न ब्राह्मणादिष्वेवाऽवतिष्ठेत, अतो गोत्वादिभ्यो व्यावृत्तं ब्राह्मणादिषु चाऽनुवृत्तं नरत्वं नाम सामान्यं,यत्प्रत्यक्षवतामयं सन्देह इति ।

यदि प्रत्यक्षा जातिः किमिति तर्हि नरत्वादिवद् ब्राह्मणत्वादिकमपि सहसैव न गम्यते,ऽत आह तस्येति[२६-२९] चतुर्भिः । योनितो मातापितृसम्बन्धात्, यथा च मातापितृज्ञानाऽपेक्षं ब्राह्मण्यादेः प्रत्यक्षत्वं तथा ऽर्थवादाऽधिकरणे स्वयमेव वक्ष्यति । क चिच्च देशे सम्यग् राज्ञा ऽनुपालितादपि आचाराद् ब्राह्मण्यादिनिर्णयः स च देशा-

---

* रूपादिनेति का. पा. । † अश्वत्थादौ इति १ पु. पा. ।
‡ ध्वनैरिति १ पु. पा. ।

प्रत्येकसमवेतत्वं दृष्टत्वान्न विरोत्स्यते ।
तथा सत्यपि नानात्वं नैकबुद्धेर्भविष्यति ॥३०॥
न हि संबन्धिभेदेन स्वरूपैकत्वबाधनम् ।
विभुत्वाऽवयवाऽभावौ प्रतिपाद्यौ च शब्दवत् ॥३१॥
यथा च व्यतिरेकैव दृश्यमाना पुनः पुनः ।
कालभेदे ऽप्यभिन्नैव जातिर्भिन्नाऽऽश्रया सती ॥३२॥
कार्त्स्न्योऽवयवशो वृत्तिः प्रष्टुं जातौ न युज्यते ।
न हि भेदविनिर्मुक्ते कार्त्स्न्यभागविकल्पनम् ॥३३॥

---

ऽपेक्षः, यस्तु वसन्ताऽऽधानादिना ब्राह्मण्यादिनिश्चयः स कालाऽपेक्षः, सर्वत्र रूपाद्यपेक्षैरिन्द्रियैरेव सुवर्णत्वादिनिश्चयः, अपरोक्षाभासात्विति।

किं पुनरियं जातिः प्रत्येकं पिण्डेषु वर्त्तते, व्यासज्य वा, न तावदेका प्रत्येकमनेकत्र युगपदलं वर्त्तितुं; व्यासज्यवृत्तिर्नाम परस्परसापेक्षेषु वृत्तिः, सा कथमतीताऽनागतवर्त्तमानेषु अनन्तेषु पिण्डेषु सम्भवेत्, प्रत्येकं च गोबुद्धिर्न स्यादत आह प्रत्येकेति[३०]। दृश्यते हि प्रतिपिण्डं जातिरियं गौरियमपीति। न चैतावता एकत्वहानिरित्याह तथेति।

किमियं विभुः प्रादेशिकी वा, तथा साऽवयवा निरवयवा वेति बुभुत्सायामाह विभुत्वेति[३१]। शब्दस्य च विभुत्वं शब्दाऽधिकरणे, अनवयवत्वं च स्फोटे प्रतिपादितं, तद्वज्जातावपि; विभुत्वं च देशाऽनवच्छेदो न सर्वगतत्वमिति सम्बन्धिभेदान्न भेद इति। एतदेव दृष्टान्तेनोपपादयति यथा चेति[३२]। यदप्यपरं पृष्टं, किं कार्त्स्न्येन सैकैकत्र वर्त्तते भूतकण्ठगुणवत् स्नक्सूत्रवद्वा ऽवयवश इति; सो ऽयं प्रश्नाऽनवसर एव जातावित्याह कार्त्स्न्येति[३३]। कथमित्याह न हीति।

तस्माद्व्यक्तिषु जातीनां वृत्ति*रस्तीति गम्यते ।
विशेषाऽवसराऽभावात्तन्मात्रैवाऽवतिष्ठते ॥३४॥
या चाऽवयवशो वृत्तिः स्रक्सूत्रादिषु दृश्यते ।
भूतकण्ठगुणादे†श्च प्रतिपिण्डं समाप्तितः ॥३५॥
तत्राऽवयवयोगित्वमविभुत्वं च कारणम् ।
आकृतेस्तदभावेन न प्रसक्तमदो द्वयम् ॥३६॥
न च द्वैविध्यमेवेति वृत्तेरस्ति नियामकम् ।
त्रिविधा ऽपि हि दृष्टत्वात्संभवेद् द्विविधा‡ यथा ॥३७॥

---

यत्र हि स्वरूपतो ऽवयवशो वा भेदस्तत्रैतद्युक्तं, भेदाऽपेक्षो हि कृत्स्नशब्दः, तदिदं द्वयमप्यनवयवायामेकस्यां जातौ अनवसरमेवेति ।

यदि न द्वेधापि वर्त्तते, कथं तर्हि वर्त्तते, ऽत आह तस्मादिति[३४] । वृत्तिरेवात्र प्रमाणवती, न विशेष इति ।

कथं पुनः स्रक्सूत्रादिषु दृष्टो विशेषो जातौ नाङ्गीक्रियते, ऽत आह या चेति[३५-३६] द्वयेन । कण्ठगुण; कण्ठभूषणं हारादि, प्रतिपिण्डं समाप्तिः कार्त्स्न्यम्, एकत्रवृत्तस्याऽन्यत्रावृत्तिः, सा चाऽविभूनां हारादीनां, जातिस्तु विभुः, सा एकत्राऽविकला ऽपि वृत्ता ऽन्यत्राप्यविकला आश्रयान्तराऽनपेक्षैव वर्त्तते, तथा दर्शनात्, इदमेव हि विभुत्वमिति ।

ननु द्वैविध्यव्याप्ता वृत्तिः व्यापकनिवृत्त्या जातेर्निवर्तेत, अत आह न चेति[३७] । व्याप्तिरेवात्र नास्ति, प्रकारान्तरस्यापि प्रत्यक्षेण जातौ दृष्टत्वाद्द्वैविध्यवदेव तस्य सम्भव इति । अथ जातेरन्यत्र प्रकारा-

---

* व्यक्तिरिति १ पु. पा. ।

† गणादेरिति का. पा. पु. । ‡ दृष्टत्वासंभवे द्विविधः इति का. पु. ।

इतरत्र न दृष्टं चत् स्त्रगादिष्वपि तत्समम् ।
नैव ह्यन्योन्यतुल्यत्वं तयोर्नाप्यनया सह ॥३८॥
न ह्यन्यस्मिन्नदृष्टत्वाद्वन्हेरौष्ण्यं प्रणश्यति* ।
न चाऽनुमानगम्येयं वाञ्छेद्येन निदर्शनम् ॥३९॥
स्वरूपतश्च दृष्टाया वृत्तेर्न पररूपतः ।
निराक्रियोपपद्येत तद्विशेषमपश्यताम् ॥४०॥
अङ्गाऽङ्गाऽसंभवाच्चापि या प्रधाननिराक्रिया ।
सा ऽयुक्तैवा,ऽनुमानेन प्रत्यक्षज्ञानबाधनात्† ॥४१॥
तस्मादसंभवो यस्य तन्मात्रस्यैव बाधनम्‡ ।
युक्तं न तावता ऽन्यो ऽपि संभवन् बाधमर्हति ॥४२॥

---

न्तरं न दृष्टमिति चेत्, तत्तुल्यं स्त्रगादिष्वपीत्याह इतरत्रेति[३८]। तदेव विवृणोति नैवेति। न चैकत्र दृष्टस्याऽन्यत्राऽदर्शनादभावो भवति, अनैकान्तिकत्वादित्याह न हीति[३९]।

स्यादप्यत्र निदर्शनाकाङ्क्षा, यद्यनुमानगम्येयं वृत्तिः स्यात्, न त्वेतदस्तीत्याह न चेति। सा तु प्रत्यक्षगम्येति। नन्वात्मीयेनाऽसाधारणरूपेण प्रत्यक्षदृष्टाया वृत्तेर्वृत्त्यन्तररूपाऽदर्शनेन निराकरणं युक्तं, तस्मादस्याप्यविशेषादित्याह स्वरूपत इति[४०]। ततश्चाऽयुक्तमिदमित्याह अङ्गाङ्गेति वा[४१]ऽन्तेन। जातेरङ्गं वृत्तिस्तदङ्गं च कार्त्स्न्यादिप्रकारः तदसम्भवात् यज्जातिनिराकरणं तन्न युक्तमिति। उपसंहरति तस्मादिति[४२]।

---

* अन्ये ऽन्यतुल्यत्वमिति १ पु. पा.।

† विनश्यतीति १ पु. पा.। ‡ बाधनम् इति का. पु. पा.।

§ असंभवो यत्र तन्मात्रस्यैव बाधनमिति का. पा.।

तेन वैशेषिकोक्ता ऽपि जातिः सर्वगता सती ।
व्यज्यते यत्र पिण्डेन वर्णवत्तत्र गृह्यते ॥४३॥
तस्मात्पिण्डेषु गोबुद्धिरेकगोत्वनिबन्धना ।
गवाभासैकरूप्याभ्यामेकगोपिण्डबुद्धिवत् ॥४४॥
न शाबलेयाद्गोबुद्धिस्ततो ऽन्यालम्बना ऽपि वा ।
तदभावे ऽपि सद्भावाद् घटे पार्थिवबुद्धिवत् ॥४५॥
प्रत्येकसमवेताऽर्थविषया वा ऽपि गोमतिः ।
प्रत्येकं कृत्स्नबुद्धित्वात् प्रत्येकव्यक्तिबुद्धिवत् ॥४६॥
प्रत्येकसमवेता ऽपि जातिरेकैकबुद्धितः ।
नञ्युक्तेष्वपि वाक्येषु ब्रह्मणादिनिवर्तनम् ॥४७॥

---

एवं स्वमतेन व्यक्तिदेशमेव सामान्यमाश्रित्य दूषणं समाहितं, यदा तु वैशेषिकपक्षेण सर्वगतत्वं जातेस्तदा ऽप्यदोष इत्याह तेनेति[४३] । येनैव दर्शनबलेन प्रकारान्तरं वृत्तेराश्रितं, तेनैव सर्वगताया अपि जातेः केषु चित्पिण्डेषु प्रत्येकसमवायवृत्त्या ऽभिव्यक्तिं कार्त्स्न्यैभागविकल्पशून्यामाश्रित्य क चिद्ग्रहणं समर्थ्यत इति ।

तदेवमुपपादितां जातिं प्रयोगेण दर्शयति तस्मादिति[४४]। एकालम्बनत्वमेव साध्यं, गोत्वग्रहणं चाऽनुवादः, गवाभासत्वादेकरूपत्वादिति च हेतुद्वयं, यत् खलु गवाभासमेकरूपं वा ज्ञानं तदेकालम्बनं, यथैकपिण्डे गोबुद्धिरिति । प्रयोगान्तरमाह न शाबलेयादिति[४५] । प्रत्येकसमवाये ऽपि प्रयोगमाह प्रत्येकेति[४६] । तथा सत्यपि नानात्वं नेत्यत्र प्रयोगमाह प्रत्येकेति[४७] ।

यच्च सादृश्यरूपत्वं सामान्ये निराकृतं, तत्रापि प्रयोगमाह न

न च सादृश्यविषया गोधीस्ताद्रूप्यजन्मतः ।
प्रामाण्ये सति यद्वाद्धि* प्रत्यभिज्ञैकवस्तुनि† ॥४८॥
नैकरूपमतिर्गोत्वे मिथ्या वक्तुं च शक्यते ।
नाऽत्र कारणदोषो ऽस्ति बाधकप्रत्ययो ऽपि वा ॥४९॥
यदा व्यक्त्यतिरेकेण ग्राह्यत्वादन्यता ऽऽकृतेः ।
वनवन्नास्त्यनैकान्तात्तत्राऽसम्बद्धता‡ कथम् ॥५०॥
साधनं चेन्मयोच्येत युज्येत व्यभिचारिता ।
दूषणत्वधिया त्वेतदसम्बद्धत्वमुच्यते ॥५१॥

---

चेति[४८] । प्रामाण्ये सतीति हेतुविशेषणं सादृश्यनिमित्तभ्रान्त्या व्यभिचारो मा भूदिति । व्यामोह इति चेत्, नाऽसति प्रत्ययविपर्यासे व्यामोह इति । भाष्यार्थमाह नैकेति[४९] ।

"असत्यर्थान्तरे एवंजातीयके भवति प्रत्ययः पङ्क्तिर्यूथं वनमिति यथेति चे"§दिति चोद्यस्योत्तरभाष्यम् "असंबद्धमिदं वचनमुपन्यस्त"‖मिति, तदाक्षिपति यदेति[५०] । यत्खलु व्यक्त्यतिरेकेण ग्रहणं जातिसद्भावे साधनं सिद्धान्तिनोक्तं तस्याऽनैकान्तिकत्वमतो नोच्यते, वनस्य वृक्षव्यतिरेकेण गृह्यमाणस्याप्यसत्त्वात्, तत्कथमसंबद्धत्वमिति । समाधत्ते साधनमिति[५१] । न ह्यस्माभिः साधनमु-

---

* यद्विद्धीति १ पु. पा. ।

† वस्तु इति ३ पु. पा. ।

‡ असंबन्धेतेति ३ पा. पु. ।

§ शा. भा. पृ. १४ प. २२ ।

‖ शा. भा. पृ. १४ प. २३ ।

नास्तित्वहेतोरुक्तैषा प्रत्यक्षेण विरुद्धता ।
परस्य साधनं ह्यत्र यत्तत्पूर्वमुदाहृतम् ॥५२॥
प्रत्यक्षाऽऽभासता चात्र नैवास्ति वनबुद्धिवत् ।
कस्य चिन्न हि मिथ्यात्वात्सर्वं मिथ्येत्यसङ्गतिः ॥५३॥
यथा वनादिबुद्धीनां मिथ्यात्वान्न रसादिधीः ।
मिथ्यैवं जातिबुद्धिः स्याद्विशेषो वा ऽभिधीयताम् ॥५४॥
वृक्षेभ्यो व्यतिरेकेण वने यैकमतिर्भवेत् ।
दूरत्वदोषात्तत्र स्यादाकृतौ तु न विद्यते ॥५५॥
संनिकृष्टस्य वृक्षेषु बुद्ध्येकत्वं निवर्तते ।
केन चित्तु प्रकारेण जातिबुद्धिर्न नश्यति ॥५६॥

---

क्तं, किं तु प्रत्ययविरोधाख्यं दूषणं, तस्य व्यभिचारोपन्यासो ऽसंबद्ध एव, न हि प्रत्यक्षमव्यभिचाराऽपेक्षमिति । कस्य पुनरिदं दूषणम्, अत आह नास्तित्वेति[५२] । कः पुनरसावित्याह परस्येति ।

अथ वनबुद्धिवज्जातिबुद्धेरपि प्रत्यक्षाभासत्वान्न तद्विरोधो हेतुदूषणमित्युच्यते, ऽत आह प्रत्यक्षेति[५३] । कथमित्याह कस्य चिदिति । ततश्च पुनरप्यसंगतिः असंबद्धत्वमिति । अत्रैव दृष्टान्तमाह यथेति ।

नन्वेवमपि वनबुद्धेर्जातिबुद्धेश्च विशेषो वक्तव्यः, येन प्रामाण्याऽप्रामाण्ये व्यवतिष्ठेते, तत्राह वृक्षेभ्य इति[५५] । दोषसद्भावे न विशेष इति कथमवगम्यते, दूरत्वदोषादित्यत आह सन्निकृष्टस्येति[५६] । जातिबुद्धिस्तु न कथं निवर्त्ततइत्याह केन चिदिति । ननु वनमध्यस्थस्यापि वनमित्येकरूपा वनशब्दाद् बुद्धिरुपजायते,

'यैकत्वधीर्विना शब्दात्सैवं तावन्निराकृता ।
वनशब्दाऽनुरक्ता तु मध्यस्थस्यापि जायते ॥५७॥
मिथ्यात्वकल्पना त्वस्याः प्रत्यक्षादेरसंभवात् ।
जातिः सर्वप्रमाणैस्तु तद्रूपैवाऽवगम्यते' ॥५८॥
प्रमाणान्तरदृष्टे च पदमर्थे प्रयुज्यते ।
तस्माद् दृष्टे प्रयुक्तस्य मिथ्यात्वं स्याद्वनादिषु ॥५९॥
केचिन्नित्यं वनैकत्वं शब्दगम्यं समाश्रिताः ।
अन्यैः सङ्गत्यभावे ऽपि* सत्यं तत्स्याद्रसादिवत् ॥६०॥

---

तस्याः कथं दूरत्वादिदोषेण प्रामाण्यं निराक्रियते, तदभावे ऽपि चाऽप्रामाण्ये जातिबुद्धिरपि तथा स्यादित्यत आह यैकत्वेति[५७-५८]-द्वयेन। या तावद् दूरस्थस्येन्द्रियजन्या वृक्षाऽतिरिक्तैकवनाऽवभासिनी बुद्धिः सोक्तेन प्रकारेण निराकृता, या तु वनशब्दजन्यैकबुद्धिः सा सत्यं मध्यस्थस्यापि जायते, तस्यास्तु प्रत्यक्षादिमूलाऽभावान्मिथ्यात्वं, जातिबुद्धिस्तु प्रत्यक्षादिसद्भावान्न मिथ्येति ।

ननु किं मूलान्तरेण, शब्द एव मूलं भविष्यत्यत आह प्रमाणान्तरेति[५९] । न हि पदं स्वातन्त्र्येण प्रमाणं, प्रमाणान्तरदृष्टाऽनुवादमात्रत्वात्, अतस्तदभावे तस्य मिथ्यात्वमिति ।

केचित्तु वनैकत्वं वनशब्दैकगम्यं सत्यमेव, अतो न तद्दृष्टान्तेन जातेर्मिथ्यात्वमित्याहुः; तदुपन्यस्यति केचिदिति[६०] । न च प्रमाणान्तरसंगत्यभावान्मिथ्यात्वं, रसादीनां श्रोत्रादिसंगत्यभावान्मिथ्यात्वप्रसङ्गादित्याह अन्यैरिति ।

---

* अभावेनेति १ पु. पा. ।

मिथ्यात्वं यदसङ्गत्या तदज्ञाने* प्रसज्यते ।
ज्ञायमानस्य† दोषस्तु न तु कश्चिदसङ्गतेः ॥६१॥
प्रमाणान्तरगम्ये ऽर्थे पदं नित्यं प्रयुज्यते ।
धर्मो ऽयं न च‡ सर्वेषां पदानामभ्युपेयते ॥६२॥
अस्त्येव सङ्गतिश्चात्र वृक्षा हि बहवो वनम् ।
ते प्रमाणान्तराज्ज्ञाताः संख्या चैषा ऽन्यवस्तुनि ॥६३॥
नाऽनेकस्यैकशब्द्यं चेदेकशेषवदिष्यताम् ।

---

ननु प्रमाणान्तरसङ्गत्या विना न पदस्य स्वातन्त्र्येण प्रामाण्यं सम्भवति, इन्द्रियादिवत्,अतो मिथ्यात्वं स्यादत आह मिथ्यात्वमिति[६१] ।यदेतदसङ्गतार्थस्य पदस्याऽप्रामाण्यं न तद्वाचनिकं, किं त्वनवगतार्थे पदस्य सम्बन्धग्रहणाऽसम्भवादगृहीतसम्बन्धादपि ज्ञानं जायते, ततस्तस्य स्वतः प्रामाण्यान्नाऽसङ्गत्यार्तिक चिद् दुष्यति, जायते च वनशब्दादेकवनज्ञानमिति न मिथ्यात्वमिति । नन्वेवं प्रमाणान्तराऽवगतविषयं पदमिति सिद्धान्तहानिः स्यादत आह प्रमाणान्तरेति[६२] । नायं सिद्धान्तः सार्वत्रिकः क्व चिदपोह्यतापीति । वनशब्दो वा कथमगृहीतसम्बन्धो ऽर्थं प्रत्याययति, सथा सति प्रथमश्रवणे ऽपि प्रत्याययेत, तस्मादयुक्तो ऽयं पक्ष इति मत्वा पक्षान्तरमाह अस्त्येवेति ता[६३]ऽन्तेन। एकवचनाऽभिधेयेष्वेकत्वसंख्या घटादिवस्त्वन्तरेषु ज्ञातैवेत्याह संख्या चेति ।

शङ्कते नाऽनेकेति[६४] । न हि सकृदुच्चरितेन प्रातिपदिकेना-

---

* अज्ञानादिति ३ पु. पा. ।

† जायमानस्येति १ पु. पा । ‡ धर्मो यत्र चेति का. पा. ।

तत्र संख्याविवृद्धिश्चेदस्तु तन्मात्रवर्जनम् ॥६४॥
तस्मात् सामान्यदृष्टेन सिद्धैकत्वस्य सङ्गतिः ।
तेनाऽन्याऽनवगम्यापि संख्या स्यात् सूर्ययानवत् ॥५५॥
के चिद्बहुत्वसामान्यमाहुर्वृक्षाश्रितं वनम् ।
तत्र चैकत्वमस्त्येव वनत्वं वा ऽपि विद्यते ॥६६॥

---

ऽनेकेषामभिधानं संभवतीति। परिहरति एकशेषेति । ये ह्यनेका-र्था अक्षादिशब्दाः ते कृतैकशेषा युगपदपि बहूनर्थानभिदधत्येवेति।

पुनः शङ्कते तत्रेति । अनेकाऽर्थवचनाद् द्विवचनं बहुवचनं वा दृष्टमेकशेषे, तत्कथमेकवचनं वनशब्दादिति। परिहरति अस्त्विति। एकत्वाऽभिधाय्येकवचनम्, इह तदसंभवात्तद्वर्जनं ग्रहाद्येकवचनवत् प्रातिपदिकप्रयोगाऽसंभवात् साधुत्वमात्रार्थं भविष्यति, यद्वा वृक्षेष्व-प्येकत्वम् अस्त्येवेत्याह तस्मादिति[६५] । तस्मादेकवचनाल्लिङ्गादे-व सामान्यतोदृष्टेन वृक्षेष्वप्येकत्वसंगतिः सिद्ध्यति, एकार्थवचना-देकवचनं दृष्टं, वनशब्दादप्येकवचनं दृश्यते, अतस्तदभिधेये ऽस्त्ये-कत्वमिति ।

न च वाच्यं, कथं केवलेन सामान्यदृष्टेनोऽर्थसिद्धिरिति, सूर्यग-त्यादिषु दर्शनादित्याह तेनेति । सामान्यदृष्टेनेत्यर्थः। न त्विदं यु-क्तं, न हि वृक्षेष्वेकत्वं शक्यमनुमातुं, प्रत्यक्षविरोधात्, अतः पक्षा-न्तरमाह के चिदिति[६६] । यथेष्टं चात्र विशेषणविशेष्यत्वं, वृक्षा-श्रयं वा बहुत्वं बह्वाश्रयं वा वृक्षत्वमिति । तस्य चैकत्वमस्तीत्येक-वचनोपपत्तिरित्याह तत्रेति । यद्वा ऽस्त्येव* वृक्षेष्वेकदेशस्थेषु वनत्वमित्येकवचनोपपत्तिरित्याह वनत्वमिति ।

---

* अस्त्येवेति नास्ति १ पु. ।

विना ऽप्येकाश्रयत्वेन यथैवाऽवयवी तथा ।
असंयुक्तैरभिव्यक्तिर्दृष्टत्वान्न विरोत्स्यते ॥६७॥
अन्यत्रापि च तद्बुद्धेः सामान्यं तद्भविष्यति ।
यथा च भ्रमणत्वादिभङ्गिष्ववयवेष्वपि ॥६८॥
व्यक्तं नानाऽऽश्रयत्वे ऽपि गृह्यते वनता तथा* ।
यद्वैककार्यहेतुत्वादेकगोशब्दवद्वनम् ६९॥

---

नन्वेकाश्रयमन्तरेण कथं वनशब्दसामान्यमत आह विना ऽपीति[६७]। ननु संयुक्तेष्ववयवेषु सम्भवति अवयवी,† वृक्षेष्वसंयुक्तेषु कथं वनत्वं नाम सामान्यं वर्त्तेत, अत आह असंयुक्तैरिति । किं पुनः प्रमाणं वनत्वसामान्यस्य सद्भावे, ऽत आह अन्यत्रापीति[६८] । अस्ति हि सर्वेषु वनेषु वनं वनमिति प्रत्यभिज्ञेति । दृष्टा चाऽसंयुक्तेष्वपि वहुषु सामान्यस्य वृत्तिरित्याह यथेति । भङ्गिष्वयुगपद्भूतेष्वपि तत्सामान्यमभिव्यज्यते किमुताऽभङ्गिष्विति ।

यस्तु मन्यते, एकदेशस्थवहुवृक्षोपाधिकृतैवेयं वनमिति बुद्धिरतो निष्प्रमाणकं वनत्वमिति; तं प्रति पक्षान्तरमाह यद्वेति[६९]। यथा ह्येकमर्थप्रतिपत्तिलक्षणं कार्यं संहत्य कुर्वन्तो गकारादयो वर्णाः संघातवाचिना गोपदेनाऽभिधीयन्ते, संघातत्वाच्चैकवचनं पदमिति, यथा वृक्षाः संहत्य स्वविषयमेकं ज्ञानाख्यं कार्यं कुर्वन्तः संघातवाचिना वनशब्देनैकवचनान्तेनाऽभिधीयन्ते, एककार्यहेतुत्वं चोपलक्षणार्थम, एककार्यकरणेनैकदेशकालाऽवस्थानेन वा समुदायमापन्नाः समुदायवचनेन वनादिशब्देनैकवचनान्तेनाऽभिधीयन्ते, अस्ति हि समुदायिष्वेकोपाधिवशीकृतेष्वेकबुद्ध्युपारूढेषु समुदायो नाम व्यास-

---

* यथेति का. पा. । † अवयवित्वमिति १ पु. पा. ।

नित्यं ये व्यस्तविज्ञाता* वृक्षा नेष्टा हि ते वनम् ।
यद्वा लक्षणयैकत्वं देशकालक्रियादिभिः ॥७०॥
द्रव्यैकत्वाद्विना ऽपीष्टं पङ्क्तियूथवनादिषु ।
वृक्षाणां समुदाये च वनधीर्जायते यथा ॥७१॥
नैवं गोसमुदाये ऽपि गोत्वधीरुपजायते ।
यादृशी वृक्षधीस्तत्र गोत्वधीरपि तादृशी ॥७२॥
वनवन्नाऽपृथक्सिद्धेः† समुदायत्वकल्पना‡ ।

---

ज्यवर्त्ती गुणविशेष इति । युक्तं चैतदित्याह नित्यमिति[७०] । ये व्यस्तविज्ञाता § अनेकज्ञानहेतवो, नाऽप्येकस्मिन् देशे काले वा ऽवस्थितास्ते वनमिति नोच्यन्तइति ।

पक्षान्तरमाह यद्वेति । पूर्वं समुदायवचनत्वमाश्रित्य तदेकत्वादेकवचनं समर्थितम, इदानीं समुदायिवचनमङ्गीकृत्य तेषां बहुत्वे ऽपि यदेषां समुदायोत्पत्तिकारणं देशकालक्रियादिकं तल्लक्षितं तदेकत्वादेकं व न॥ मित्युच्यते, तेनाऽन्तरेण द्रव्यैकत्वं लक्षणयैकवचनोपपत्तिः । आदिशब्देन वृक्षत्वसामान्योपादानमिति । तदेवं वनस्य सत्यत्वात् तद्दृष्टान्तेनाऽऽकृतेर्मिथ्यात्वमित्युक्तम । यदि परमेवमुच्येत, वनबुद्धिवद्गोबुद्धिरपि पिण्डसमुदायालम्बना भवतु, किं जात्येति, तत्राह वृक्षाणामिति[७१] । कथमित्याह यादृशीति[७२] । वनबुद्धिर्हि अपृथग्भूतेषु वृक्षेषु सिध्यन्ती युक्तं समुदायालम्बना भवति, गोबुद्धिस्तु नैवमिति ।

---

* विज्ञाना इति का. पा. ।

† सिद्धेरिति ३ पु. पा. । ‡ प्रकल्पितेति ३ पु. पा. ।

§ व्यस्ता इति ३ पु.पा. । ॥ तल्लक्षितं तदेकवचनमिति १ पु. पा. ।

न च सास्नादिसंघातस्तद्बुद्ध्यालम्बनं भवेत् ॥७३॥
क्षीणेषु पिण्डबुद्धेषु तत्सामान्ये हि* गोत्वधीः ।
तेनाऽवयव्यभावे ऽपि सामान्यं व्यतिरिच्यते ॥७४॥
पूर्वोक्तादेव तु न्यायात्सिध्येदत्रा†वयव्यपि ।
तस्याप्यत्यन्तभिन्नत्वं न स्यादवयवैः सह ॥७५॥
व्यक्तिभ्यो जातिवच्चैष न निकृष्टः‡ प्रतीयते ।
'कैश्चिदव्यतिरिक्तत्वं कैश्चिच्च व्यतिरिक्तता ॥७६॥

---

अथ सास्नादिसमुदायालम्बनेत्युच्यते, ऽत आह न चेति[७३] । कारणमाह क्षीणेष्विति[७४] । सास्नादयो हि समुदिताः पिण्डबुद्धिमेव जनयन्ति, गोबुद्धिस्त्वनेकपिण्डाऽनुवृत्तं सामान्यमेवालम्बतइति । तेन यद्यवश्यं समुदायालम्बनत्वं वक्तव्यम्, अतः पिण्डबुद्धिमेवाश्रित्याऽवयव्येवाऽपह्नूयतां, सामान्यं त्वनेकसमुदायाऽनुगतं ततो व्यतिरिच्यतएवेत्याह तेनेति । परमार्थतस्त्ववयव्यपह्नवनमपि न संभवतीत्याह पूर्वोक्तादिति[७५] । यथैव भिन्नेष्वेकबुद्धिसद्भावात्सामान्यं सिध्यति तथा ऽवयवेषु भिन्नेषु देवदत्तो ऽयं घटो ऽयमित्येकद्रव्याऽवभासादस्त्येवाऽवयवेभ्यो भिन्नो ऽवयवीति ।

किमत्यन्तभिन्नो ऽवयवी,नेत्याह तस्यापीति । कस्मादित्याह व्यक्तिभ्य इति[७६] । तन्तव एव हि संयोगविशेषवशेन एकद्रव्यत्वमापन्नाः पटो ऽयमित्येकाकारया बुद्ध्या गृह्यन्ते, अतो ऽवस्थामात्रादेवाऽवयवेभ्यो ऽवयविनो भेदो न त्वत्यन्तभेद इति ।

---

* सामान्येष्विति २ पु. पा. ।

† तत्रेति २ पु. पा. । ‡ निष्कृष्ट इति का. सं. पु. ।

दृषिता साधिता वापि न च तत्र* बलाऽबलम् ।
कदा चिन्निश्चितं कैश्चित्तस्मान्मध्यस्थता वरम्' ॥७७॥
ततो ऽन्याऽनन्यते तस्य स्तो नस्तश्चेति कीर्त्यते ।
तस्माच्चित्र†वदेवास्य‡ मृषा स्यादेकरूपता§ ॥७८॥
'वस्त्वनेकत्ववादाच्च‖ न सन्दिग्धाऽप्रमाणता ।
ज्ञानं सन्दिह्यते यत्र तत्र न स्यात्प्रमाणता ॥७९॥

---

ये चैकान्तिकं भेदमभेदं वा ऽन्वयविनः समाश्रयन्ते तैरेवायमनेकान्तवादः साधित इत्याह कैश्चिदिति सार्द्धेन । उभयोक्तयुक्तिबलादेवोभयसिद्धिरिति । यतश्चाऽन्यत्वमनन्यत्वं च द्वयं सदसत्तया न शक्यं दर्शयितुम्, अतश्चित्रवदनेकरूपत्वादत्रैकरूपाऽभ्युपगमो मृषेत्याह तत इति[७८] ।

नन्वेवमन्याऽनन्यत्ववादिनामन्यतमस्याऽनवधारणात् स्थाणुर्वा पुरुषो वेतिवत्सन्देहान्न किं चिदप्यन्याऽनन्यत्वादिकं¶ बाधितं किं सिध्येदत आह वस्त्विति[७९] सार्द्धेन । वस्तुविषयो ह्यस्माकमनेकान्तवादो नैकाकारं वस्त्विति, यत्र तु ज्ञानमेवाऽवस्तुरूपमनेकमवभासते किमयं स्थाणुः किं वा पुरुष इति, तत्र संशयादप्रामाण्यं भवति ; इह त्वनेकरूपमेव वस्त्विति निर्णयात्कुतो ऽप्रामाण्यमिति ।

---

* भवेत्तत्रेति २ पु. पा. ।

† चित्रविदिति का. सं. पु. ।

‡ अत्रेति २ पु. पा. ।

§ तत्र स्यादप्रमाणतेति पाठान्तरम् । स्यान्न प्रमाणतेति का. सं. पु. पा ।

‖ अनेकान्तवादादिति २ पु. पा. ।

¶ संदेहात् किं चिदप्यन्यत्वादिकमिति १ पु. पा. ।

इहाऽनैकान्तिकं वस्त्वित्येवं ज्ञानं सुनिश्चितम् ।
निष्कृष्याऽवयवान् बुद्ध्या या ऽवयव्यप्रतीतता* ॥८०॥
बुद्धिस्थत्वाद्विनाशस्य सौलूक्यस्यापि युज्यते ।
वृत्तिश्चाऽवयवेष्वस्य व्यासज्यैव प्रतीयते† ॥८१॥
ततः कात्स्न्यादिसंप्रश्नः प्रत्याख्येयो ऽत्र जातिवत् ।
सास्नादिगुण‡हेतुश्चेन्नाऽन्यस्मिन् गोत्वधीर्भवेत् ॥८२॥
भिन्न एव हि सास्नादिः पिण्डात्पिण्डान्तरे यतः ।
न चाऽवयवसामान्यं परेषामुपपद्यते ॥८३॥

---

यत्त्वभेदवादिभिरुक्तं, यदा ह्येकैकशस्तन्त्वादयो ऽवयवा बुद्ध्या निष्कृष्यन्ते तदा ऽवयवी नाम न कश्चित्प्रतीयते, तस्मान्नाऽस्याऽवयवेभ्यो भेद इति, तदयुक्तं, भेदपक्षे ऽपि इयमवयवेषु निष्कृष्टेष्ववयविप्रतीतिरुपपन्नैव, संयुक्ताऽनेकाऽवयवव्यासङ्गी ह्यसौ, तेषु निष्कृष्यमाणेषु तस्यापि विनाशो बुद्धिस्थो भवति; तदाह निष्कृष्येति[८०] ।

वृत्तिविकल्पं परिहरति वृत्तिरिति[८१] । सापेक्षेष्वनेकेषु वृत्तिर्व्यासज्यवृत्तिरिति । यदपि विकल्पान्तरं किं कात्स्न्येनैकैकत्र वृत्तिः किंवा ऽवयवश इति, तज्जातिवदेवात्रापि अनवकाशमेव, 'न हि भेदविनिर्मुक्ते कात्स्न्यभागविकल्पन'मिति ह्युक्तं, न ह्यवयविनो ऽप्यवयवेषु वर्त्तितुमवयवान्तराणि सन्ति, तदाह तत इति[८२] ।

पुनर्जातिप्रतीतिमेवोपसंक्रम्य सास्नादिसमुदायालम्बनत्वे दोषमाह सास्नादीति[८२] । कारणमाह भिन्न इति[८३] । अथ सास्ना-

---

* अप्रतीतितेति २ पु. पा. ।

† प्रसज्यते इति २ पु. पा. ।

‡ गणेति का. सं. पु. ।

तस्मात् सास्नादितो ऽन्येन गोत्वधीरुपजन्यते ।
वनान्तरेषु या बुद्धिर्वनमित्युपजायते ॥८४॥
तस्यास्तदेव वृक्षत्वं ग्राह्यं बह्वाश्रयं विदुः ।
एकत्वे ऽप्याकृतेर्यद्वद्बहुत्वं व्यक्त्यपेक्षया ॥८५॥
बहुत्वे हि तथा व्यक्तेरेकत्वं जात्यपेक्षया ।
एकानेऽकाऽभिधाने च शब्दा नियतशक्तयः ॥८६॥

---

दित्वाद्यवयवसामान्यानां यः समुदायः तदालम्बनमेवेयम् अतो ऽन्यत्रापि भवतीत्युच्यते, तत्राह न चेति । उपसंहरति तस्मादिति[८४] । वनबुद्धिरपि तर्हि वनान्तरेष्वपि संभवन्ती न समुदायालम्बना स्यादत आह वनान्तरेष्विति । अस्ति ह्यस्माकं वृक्षत्वं बहुत्वसामान्यं समुदायसामान्यं च, अतः सर्वेषु वनेषु वृक्षगतबहुत्वोपाधिकृता वृक्षसमुदायकृता वा वनबुद्धिर्युक्तेति ।

स्यादप्येवं वृक्षस्थितबहुत्वाऽभिधाने बह्वाश्रयं वृक्षत्वाऽभिधाने तत्समुदायाऽभिधाने च वनमित्येकवचनं; यदा हि वृक्षा हि बहवो वनमिति पक्षः तदा किमनुपपन्नमेव एकवचनं, नेत्याह एकत्व-इति[८५] । यथा हि जातेर्व्यक्त्यात्मना बहुत्वम्, एवं व्यक्तीनामप्यस्ति जात्यात्मनैकत्वं, जातिग्रहणं देशादीनामपि उपलक्षणार्थमिति। भवत्वेवं, बहुवचनमपि तु स्वसंख्यावशेन किमिति न भवति, ततश्चैकस्मिन्नपि वृक्षसमुदाये वनानीत्यपि प्रयोगः स्यादत आह एकेति[८६] ।

नियतशक्तयो हि शब्दाः, केचिदेकत्वेनैवाऽवच्छिन्नमर्थं वदन्ति, केचित्तु बहुत्वेनैव, केचिदुभयथा ऽपि प्रयोगभेदेन वदन्तीति, त-

केचिद्व्यक्तिं त्वसंख्याकां गमयन्त्यम्बरादिषु ।
एको व्रीहिः सुनिष्पन्न इति जातिं* स्वसंख्यया ॥८७॥
पत्नीसंनहनादौ तु व्यक्तिमाकृतिसंख्यया ।
कपिञ्जलादिजातेस्तु प्रतीतिर्व्यक्तिसंख्यया† ॥८८॥
व्यक्तिजाती वदन्त्यन्ये द्रव्याऽवयवसंख्यया ।
अस्मानिति यथैकस्मिन् पाशानदितिरित्यपि ॥८९॥
तत्र व्रीह्यादिशब्दानां संख्यायोगो यथारुचि ।
वनदारादिशब्दास्तु प्रवर्तन्ते व्यवस्थया ॥९०॥

---

त्रोदाहरणानि दर्शयति केचिदिति[८७-८९] त्रयेण । व्रीहिशब्दश्चाऽन्येषामपि जातिशब्दानां वृक्षादीनामुपलक्षणार्थः, पत्नीशब्दोऽप्यौपाधिको यज्ञस्वामिन्यां प्रवर्तमानो व्यक्तिवचनः, स चाऽऽकृतिसंख्यया व्यक्तिमवच्छिनत्ति, पत्नीः संनह्येति अस्मिन्मन्त्रे द्वयोर्बहुत्वैकवचनस्यैव प्रयोगात् आकृतिसंख्यावाचिना शब्देन प्रवृत्तिनिमित्तं यज्ञस्वामित्वमेवोच्यते, न हि पत्नीत्वं नामाऽऽकृतिरस्ति । अस्मानिति व्यक्तिमवयवसंख्यया; अदितिः पाशानित्यत्र मन्त्रे जातिवचनः पाशशब्द एकस्मिन् पाशे बहुवचनान्तः प्रयुज्यमानो जातिं द्रव्याऽवयवसंख्यया वक्ति । यद्यपि चाऽयं प्रयोगसमवेतपाशव्यक्तिपरः न तु कपिञ्जलवज्जातिमात्रपरः, तथापि जात्यभिधायीति कृत्वा जातिं द्रव्याऽवयवसंख्यया वक्तीत्युक्तमिति ।

ये चैते व्रीह्यादिशब्दास्ते प्रयोगभेदेन यथारुचि संख्यान्तरं भजन्त इत्याह तत्रेति[९०] । वनदारादिशब्दास्तु व्यवस्थितसंख्याव-

---

* जातिं त्विति ३ पु. पा. । † इदमर्धत्रयं त्रुटितं का० सं.पु. ।

जङ्गमे स्थावरे चाऽर्थे यथा यूथवनादयः ।
तत्र व्यक्तौ च जातौ च दारादिश्चेत्प्रयुज्यते ॥९१॥
व्यक्तेरवयवानां च संख्यामादाय वर्तते ।
वनशब्दः पुनर्व्यक्तीर्जातिसंख्या*विशेषिताः ॥९२॥
बह्वीराहाऽथ वा जातिं बहुव्याक्तिसमाश्रयाम्† ।
एवं पङ्क्त्यादिशब्दानां संयोगादि विशेषणम् ॥९३॥

---

वना इत्याह वनेति । एतदेव दृष्टान्तेनोपपादयति जङ्गमइति[९१]।

कीदृशी पुनर्दारादिशब्दानां व्यवस्था, तां दर्शयति तत्रेति । दारशब्दो हि सर्वदा बहुवचनान्तः सन् यदैकव्यक्त्यभिप्रायेण प्रयुज्यते तदा ऽवयवसंख्यया व्यक्तेर्भेदमाचष्टे, यदा त्वविवक्षितव्यक्तिभेदो दारमात्रपरः तदा व्यक्तिभेद इति ।

वनशब्दस्य त्वेकसंख्यैव व्यवस्थितेत्याह वनशब्द इति[९२]। जातिग्रहणं बहुत्वदेशसमुदायानामुपलक्षणार्थम । यस्तु भिन्नेषु वनेषु वनानीति प्रयोगः स देशबहुत्वं जातावुपचर्य क्रियते, द्रव्यसमुदायवचनत्वे लक्षितदेशाद्यभिप्रायत्वे वा वनस्य तद्भेदादेव युक्तं बहुवचनमिति ।

वनन्यायमेव पङ्क्तावतिदिशति एवमिति[९३] । संयुक्तेषु परिगृहीतविततिविशेषेषु पङ्क्तिबुद्धिरिति तादृगुपाध्येकत्वात् पङ्क्त्योरेकपङ्क्तिबुद्धिरिति ।

---

* संस्थेति १ पु. पा. ।

† समाश्रितामिति २ पु. पा. ।

सर्वेषां किं चिदस्तीति न निरालम्बनैकधीः ।
तुल्यं* प्रत्यक्षया ऽऽकृत्या वने यत्तदसद्यदि ॥९४॥
वृक्षास्तत्र तया तुल्या इति शून्यत्ववादिता ।
प्रत्यक्षाऽऽभासगम्यत्वाद् वृक्षेभ्यो ऽन्यत्तु यद्वनम्॥९५॥
नाऽऽकृत्या सह तस्यास्ति स्पर्द्धा प्रत्यक्षगम्यया ।
अथाऽऽकृत्या वनं तुल्यं सद्भावेन प्रसज्यते† ॥
जातिपक्षविमोकेन वनसिद्धान्तदूषणम् ॥९६॥

---

उक्तमेवाऽर्थं संक्षिप्य भाष्यारूढं करोति तुल्यमिति[९४] । सो ऽयं "किमसति वने"‡इत्यादे "र्महायानिकः पक्षः§" इत्यन्तस्य भाष्यस्यार्थः । "यदि वने ऽन्येन हेतुने" त्यादे "र्वैषम्य"॥ मित्यन्तस्य भाष्यस्यार्थमाह प्रत्यक्षेति[९५] ।

"अथ किमाकृतिसद्भाववादी¶" त्यादे "र्नास्तीत्यवगम्यत"** इत्यन्तस्य भाष्यस्यार्थमाह अथेति[९६] ।

पूर्वं वृक्षाऽतिरिक्तस्य वनस्य बाधकप्रत्ययादसत्त्वमुपपाद्य पुनरपि वनादिषु नैव प्रत्ययविपर्यास इत्यादिना भाष्येण सत्त्वमुप-

---

* अलमिति २ पु. पा. ।

† तद्भावेन प्रसज्यते इति का. स. पा. ।

‡ शा. भा. पृ. १४ प. २४ ।

§ शा. भा. पृ. १५ प. १ ।

॥ शा. भा. पृ. १५ प. ८ ।

¶ शा. भा. पृ. १५ प. १ ।

** शा. भा. पृ. १५ प. ८ ।

इति निगदितमेतल्लोकसिद्धैः पदार्थै-
र्व्यवहृतिरिह शास्त्रे न स्वतन्त्राऽभ्युपेतैः ।
भवति च जनदृष्ट्या जातिपङ्क्त्यादिभेदो
यदि तु न घटते ऽसौ नैव बाधो ऽस्ति कश्चित् ॥१७॥

इति वनवादः समाप्तः ॥

अथ सम्बन्धाऽऽक्षेपपरिहारः ।

भवेतां नाम शब्दार्थौ यावेतावुदितौ त्वया ।
यदर्थस्तु प्रयासो ऽयं स सम्बन्धो निरूप्यताम् ॥१॥
पूर्वमेवोपदिष्टः सन् सम्बन्धः किं तु पृच्छ्यते ।
स्वरूपाऽकथनाच्चैतदुत्तरं नोपपद्यते ॥२॥

गतं, तस्याऽभिप्रायमाह इतीति[१७] । त्रिलोकप्रसिद्धपदार्थव्यवहारिणो मीमांसकाः, नैषां पृथिव्यादिवत् स्वतन्त्राऽभ्युपेताः पदार्थाः सन्ति, न च वनादयो भवन्ति लोकदृष्टाः । जातेः पङ्क्त्यादीनां च सत्यमिथ्यात्वरूपो विशेष इति 'पूर्वं यदि वनेऽन्येने'त्यादिनोक्तम् । यदि तु नाऽयं विशेषो घटतइति कश्चिदभिनिविशेत तं प्रतीदं भाष्यम् "अथ वनादिष्विति" वनस्य सद्भावे ऽपि न का चिदस्माकं क्षतिरिति ॥

इति श्रीपार्थसारथिमिश्रविरचिते न्यायरत्नाकरे वनवादः समाप्तः ॥

अथ संबन्धाऽऽक्षेपपरिहारः ।

"अथ सम्बन्धः क"* इति भाष्यम्, तस्यार्थमाह भवेतामिति[१] । एतदेव विवरीतुं पृच्छति पूर्वमिति[२] । संज्ञासंज्ञिलक्षणः सम्बन्धः

* शा. भा. प. १९ प. १९ ।

किमौषधं ज्वरस्येति पृष्टो यदि वदेदिदम् ।
येनासौ नश्यतीत्येवं किं तेन कथितं भवेत् ॥३॥
तत्र केचिद्वदन्त्येव पूर्वत्राऽपरितोषतः ।
प्रश्नः पुनरुपक्रान्तः सम्बन्धान्तर*मिच्छता ॥४॥
यः संज्ञासंज्ञिसम्बन्धः स प्रतीत्युत्तरो यतः ।
सा चाऽन्यपूर्विका तस्मान्नास्य प्रत्यायनाऽङ्गता ॥५॥
अजानानो ऽपि संज्ञात्वं सम्बन्धान्तरदर्शनात् ।
बुध्यते ऽर्थं ततः पश्चात् कश्चित्संज्ञेति मन्यते† ॥६॥
तमेवान्यो ऽविनाभावमत्र सम्बन्धमिच्छति ।
न हि तस्माद्विना शब्दे ज्ञाते स्यादर्थबोधनम् ॥७॥

---

कथित एवेति । यदपि यच्छब्दे विज्ञाते ऽर्थो विज्ञायतइत्युक्तं, तदप्य-युक्तमित्याह स्वरूपेति । येन सम्बन्धेन शब्दे विज्ञाते ऽर्थो विज्ञा-यते स कीदृग्रूप इति प्रश्नस्य नेदमुत्तरं युक्तं, येन शब्दे विज्ञाते ऽर्थो विज्ञायते स सम्बन्ध इति, न ह्यनेन स्वरूपं कथितं भवति । अत्रैव दृ-ष्टान्तमाह किमौषधमिति[३] ।

तत्र केषांचिन्मतेन प्रश्नाऽभिप्रायमाह तत्रेति[४] । किमित्यपरि-तोषः, अत्राह यः संज्ञेति[५] । सम्बन्धग्रहणपूर्विका हि प्रतीतिः, संज्ञात्वं तु प्रतीत्युत्तरकालभावि न प्रतीत्यङ्गमिति । उत्तरकालमेव संज्ञात्वस्य दर्शयति अजानान इति[६] । कश्चिज्जिज्ञासुः, अन्यस्तु पश्चादपि न बुध्यते, ऽतो ऽनुपयोग्येव संज्ञात्वमिति । किं पुनस्तत्स-म्बन्धान्तरं यदभिधित्सया प्रश्नान्तरम, अत आह तमेवेति[७] ।

---

* सम्बन्धोत्तरमिति का. पा. । † गम्यते इति २ पु.पा. ।

तत्त्वयुक्तं न भाष्ये ऽस्ति तादृक्सम्बन्धकीर्तनम् ।
यदि ह्येतावतोच्येत किं नाऽनुक्तः प्रतीयते ॥८॥
प्रत्युक्तश्चाऽविनाऽभावं* संज्ञा लोकात्तु गम्यते ।
संज्ञेत्यगम्यमाने ऽपि गमकत्वं प्रतीयते ॥९॥
तस्मात्स एव शब्दाऽर्थचिन्ताव्यवहितो ऽधुना ।
नित्याऽनित्यविचारार्थं सम्बन्धः स्मार्यते† पुनः ॥१०॥

---

कथं पुनरसावनेन भाष्येणोक्तो भवति, इत्यत आह न हीति । यतः शब्दे ज्ञाते ऽर्थो ज्ञायते स सम्बन्ध इत्युक्तं, न चाऽविनाभावाद्विना वस्त्वन्तरे ऽवगते वस्त्वन्तरं ज्ञायतइति । तदिदं दूषयति तत्त्वयुक्तमिति[८] । न हि भाष्ये अविनाभावकीर्त्तनमस्ति । यदि तु यच्छब्दे विज्ञातइत्येतावतैवासावुक्तः स्यात् तत एव तावतापि विना ऽसावुक्त इति किमिति नोच्यते, न ह्यप्रतिपादकस्य सदसद्भावयोः कश्चिद्विशेष इत्याह यदि हीति । यदि ह्यविनाभावादिह प्रतीतिः सम्भवेत्, यदि संज्ञात्वं प्रतीतेः प्रागनवगतं स्यान्न प्रतीत्यङ्गं स्यात्,ततो ऽस्यानेनैवाऽविनाभाव उक्तः स्यात्,तदभिधित्सया पुनः प्रश्नः स्यात्,न तु तदुभयमस्तीत्याह प्रत्युक्त इति[९] ।

यत्तूक्त'मजानानो ऽपि संज्ञात्व'मिति तत्राह संज्ञेति । यद्यपि संज्ञेत्येवं विकल्प्य न गृह्यते तथापि गमकत्वं प्रागेव प्रतीतेर्वृद्धव्यवहारे ऽवगम्यते, गमकत्वमेव चेन्द्रियादिविलक्षणं संज्ञात्वमिति संज्ञात्वमेवाऽवगतं भवति, अतः संज्ञैव प्रतीत्यङ्गमिति नाऽपरितोषः, ततो न

---

* अपि नाभावम् इति का. सं. पु. ।

† स्मर्यते इति ३ पु. पा. ।

यच्छब्दे ज्ञातइत्येवं शक्तिरेवाऽत्र कीर्त्यते ।
कर्तृत्वं करणत्वं* वा यत्तस्याऽर्थोऽभिधां प्रति ॥११॥
स्वतो नैवाऽस्ति शक्तत्वं वाच्यवाचकयोर्मिथः ।
प्रतीतिः समयात्पुंसां भवेदाक्षिनिकोचवत् ॥१२॥
समयः प्रतिमर्त्यं वा प्रत्युच्चारणमेव वा ।
क्रियते जगदादौ वा सकृदेकेन केन चित् ॥१३॥
प्रत्येकं वा ऽपि सम्बन्धो भिद्येतैको ऽथ वा भवेत् ।
एकत्वे कृतको न स्याद्, भिन्नश्चेद्भेदधीर्भवेत् ॥१४॥

---

सम्बन्धान्तराऽभिधित्सया पुनः प्रश्नो नाप्यविनाभावसम्बन्धो ऽनेनोच्यते इति । किमर्थं तर्हि पुनः प्रश्नोत्तरमत आह तस्मादिति[१०] ।

यत्तु स्वरूपाऽकथनान्नोत्तरं युक्तमिति, तत्राह यच्छब्दइति[११] । शक्तिस्वरूपमेव दर्शयति कर्तृत्वमिति । यदेवाऽभिधानक्रियां प्रति कर्तृत्वं करणत्वं वा तदेव शक्तिसंज्ञागमकत्वादिपर्यायमनेन भाष्येणोक्तम् । अयं च भाष्यार्थः यच्छब्दज्ञानादर्थज्ञानम् , अयं सम्बन्धश्च ज्ञाप्यज्ञापकत्वमेव सम्बन्ध इत्यर्थः स तु कृतक इति पूर्वमुपपादितम्, इति चानुभाषणात् स एवायं सम्बन्ध इति गम्यते । न हि सम्बन्धान्तरस्य कृतकत्वं पूर्वमुक्तमिति ।

अनुभाषणभाष्यार्थमाह स्वत इति[१२] । तमिमं समयं निराकर्त्तुं विकल्पयति समय इति[१३] । प्रतिमर्त्यपक्षमपि विकल्पयति प्रत्येकमिति[१४] । एकत्वे तावत्कृतकतैव न स्यात्, न ह्येकस्य बहुभिः

* कारणत्वमिति का. सं. पु. ।

भिन्नत्वे प्रतिसम्बन्धं शक्तिः कल्प्या ऽभिधा प्रति ।
एकस्मिन् ज्ञातशक्तौ वा नाऽन्येनाऽर्थमतिर्भवेत् ॥ १५॥
अथ यो यस्य पुंसः स्यात् स तेन प्रतिपद्यते ।
यस्याऽनेकेन सम्बन्धः कृतस्तस्य कथं भवेत् ॥१६॥
एकाऽर्थानां विकल्पश्चेन्नेतराऽत्यन्तबाधनात् ।
समुच्चयो ऽपि नैतेषां व्यवहारे ऽवगम्यते ॥१७॥

---

क्रिया सम्भवतीत्याह एकत्वइति । भेदस्तु संविद्विरुद्ध इत्याह भिन्नश्चेदिति । भिन्नत्वे च तेषामर्थप्रतीतिकारणत्वादनेकशक्तिकल्पना स्यादित्याह भिन्नत्वइति[१५] । किं च, यस्य केन चिद्वक्त्रा संवन्धः कृतः स वक्त्रन्तरप्रयुक्तात् शब्दादर्थं न प्रतिपद्येत, न ह्यन्यस्मिन् संवन्धे ज्ञातशक्तावन्यस्मादज्ञातशक्तिकादर्थप्रतीतिः संभवतीत्याह एकस्मिन्निति ।

शङ्कते अथेति[१६] । वक्त्रन्तरेणापि प्रयुक्ते शब्दे स्वसम्बन्धाऽनुसारेणाऽर्थं श्रोता बुध्यतइति । निराकरोति यस्येति । यस्याऽनेकैः पुरुषैरनेके सम्बन्धा नानाऽर्थविषयाः कृताः तस्य कथं संकेतःसम्बन्धेन प्रतिपद्येत ।

शङ्कते एकार्थानामिति[१७] । एकशब्दविषया अपि सम्बन्धा विकल्पन्तइति । निराकरोति नेति । यत्र ह्येकस्य शब्दस्याऽनेकैरार्यैरनार्यैश्च नानार्थसम्बन्धः कथ्यते यथा पीलुशब्दस्याऽऽर्यैर्वृक्षसम्बन्धो म्लेच्छैश्च हस्तिसम्बन्धः, तत्र म्लेच्छोक्तस्याऽत्यन्तबाधः क्रियते, विकल्पे हि वृक्षो वा हस्ती वा ऽभिधेय इति गम्येतेति ।

किं चिदेवैकमादाय व्यवहारो हि दृश्यते ।
बहुभिः कृतसम्बन्धे न चैको गमको भवेत् ॥१८॥
शब्दाऽर्थयोरभेदे ऽपि पुंबहुत्वे ऽपि कर्तरि ।
नायं वेति मतिर्दृष्टा विकल्पो ऽतो न युज्यते ॥१९॥
गोशब्दे सकृदुक्ते च भिन्नेषु प्रतिपत्तृषु ।
विकल्प्यमाने सम्बन्धे कश्चिद्बुध्येत नेतरे* ॥२०॥
समुच्चयो नृभेदाच्चेन्न वक्त्रैक्यादसंभवात् ।
वक्तृश्रोतृधियोर्भेदाद् व्यवहारश्च दुष्यति ॥२१॥

---

नापि समुच्चय इत्याह समुच्चय इति । समुच्चये ऽप्युभावर्थाविति गम्येत, न चैवमस्तीति । कथमित्याह किं चिदिति[१८] । न चायं नियमः कृतकत्वपक्षे उपपन्न इत्याह बहुभिरिति । यथाऽवस्थितसम्बन्धकथनेन ह्याप्ताऽनाप्तविभाग उपयुज्यते, स्वयमपूर्वसम्बन्धे बहुभिः कृते न कश्चिदाप्ताऽनाप्तयोर्विशेष इति न नियमेनैकस्यैव गमकत्वं सिद्ध्येदिति । संविद्विरुद्धश्च विकल्प इत्याह शब्दार्थयोरिति[१९] । यत्र हि तस्यैव शब्दस्य तेनैवाऽर्थेन बहुभिः पुरुषैर्बहवः सम्बन्धाः कृताः, तत्र व्यवहारकाले कर्त्तरि प्रतिपत्तरिति व्रीहियवादिवदयं वा सम्बन्ध उपादेयो ऽयं वेति अयं वेति विमर्शो भवेत्, स च न दृष्ट इति । इतश्च न विकल्प इत्याह गोशब्दइति[२०] ।

शङ्कते समुच्चय इति[२१] । एकपुरुषगामिनां ह्येकार्थत्वाद् विकल्पो, भिन्नपुरुषगामिनां तु तत्प्रतिपत्तिकार्यभेदात्समुच्चय एव भव-

---

* नेतरः इति का. सं. पु. ।

वक्तुरन्यो हि सम्बन्धो बुद्धौ श्रोतुस्तथाऽपरः ।
'श्रोतुः कर्तुं च सम्बन्धं वक्ता कं प्रतिपद्यताम् ॥२२॥
पूर्वदृष्टो हि यस्तेन श्रोतुर्नैव करोति तम्* ।
यं करोति नवं सोऽपि न दृष्टः प्रतिपादकः' ॥२३॥
सर्वथा श्रोतृसिद्धिश्चेदसिद्धं नेतरो वदेत् ।
घटादावपि तुल्यं चेन्न सामान्यप्रसिद्धितः ॥२४॥

---

तीति। परिहरति नेति । वक्ता ह्येकमेव सम्बन्धं मनसि निधाय शब्दं प्रयुङ्क्ते, स यस्याऽनुगुणः स एव प्रतिपद्येत, अन्ये तु कथं तेन प्रतिपद्येरन्निति ।

यदि त्वेकस्मिन्नपि सम्बन्धे वक्तुर्बुद्धिस्थे श्रोतारः स्वीयैरेव सम्बन्धैर्बुध्यन्तइत्युच्यते, तथा सति वक्तृश्रोत्रोः सम्बन्धबुद्धिभेदादार्यम्लेच्छयोरिव न संव्यवहारः सिध्येदित्याह वक्तृश्रोत्रिति । एतदेव दर्शयति वक्तुरिति[22] । सत्यपि सम्बन्धभेदे अर्थाऽभेदाददोष इति चेत्, न, प्रमाणाऽभावात्। न हि स्वतन्त्रेषु सम्बन्धेषु प्रमाणमर्थैक्ये ऽस्ति, पारतन्त्र्ये चाऽपौरुषेयत्वं स्यादिति। अतश्च न प्रतिमर्त्यं सम्बन्धकरणमित्याह श्रोतुरिति सार्द्धेन ।

शङ्कते सर्वथेति[24] । येन केनाऽपि पूर्वदृष्टेनाऽभिनवेन वा श्रोतुरर्थप्रतीतिसिद्धेः किं विकल्पेनेति । परिहरति असिद्धमिति । बुद्धिपूर्वकारी हि सम्बन्धकर्त्ता नाऽज्ञातसामर्थ्यमभिनवं करोति, न पूर्वदृष्टं, कृतस्य करणाऽयोगादिति ।

चोदयति घटादाविति । परिहरति न सामान्येति । एत-

---

* तेन न श्रोतुर्न करोत्यसौ इति २ पु. पा. ।

'यद्यपि ज्ञातसामर्थ्या व्यक्तिः कर्तुं न शक्यते।
क्रियते या न तस्याश्च शक्तिः कार्ये ऽवधारिता ॥२५॥
तथाऽप्याकृतितः सिद्धा* शक्तिरुच्चारणादिषु' ।
तस्या न चाऽऽदिमत्ताऽस्ति सम्बन्धस्त्वादिमांस्तव॥२६॥
यदि तत्रापि† सामान्यं नित्यमभ्युपगम्यते ।
तथाऽप्यस्मन्मतं सिद्धं न तु ह्याकारसंभवः‡ ॥२७॥
शक्तिरेव हि सम्बन्धो भेदश्चाऽस्या न विद्यते§ ।
सा हि कार्याऽनुमेयत्वात् त्वद्भेदमनुवर्तते ॥२८॥

---

देव चोद्यं विवरणपूर्वकं विवृणोति यद्यपीति[२५] सार्द्धेन । एवंजातीयकर्मीदृक्कार्यकमिति ज्ञात्वा तादृशकार्योऽर्थिनस्तज्जातीयपदार्थकरणं नाऽनुपपन्नमिति। न चाऽऽकृतेः प्राक् कथं सामर्थ्यसिद्धिरिति वाच्यम्,आकृतेरनादित्वादित्याह तस्या इति[२६] ।न चेयं विधा सम्बन्धे संभवति, तस्याऽऽदिमत्ताऽभ्युपगमात्, इत्याह सम्बन्ध इति।

शङ्कते यदीति[२७] ।परिहरति तथापीति । सामान्यमेव हि सर्वत्राऽव्यभिचाराच्छब्दाऽर्थावगमोपायः स्यात्, तच्चाऽपौरुषेयमिति सिद्धं नः समीहितमिति। किमयमेव पक्षो, नेत्याह न त्विति। कथमित्याह शक्तिरिति[२८] । कथं न विद्यते, ऽत आह सा हीति ।

---

* सिद्धः इति १ पु. पा. ।

† तस्यापीति २ पु. पा. ।

‡ न बुद्ध्याकारसंभव इति १ पु. पा. ।

§ दृश्यते इति २ पु. पा. ।

अन्यथाऽनुपपत्त्या च शक्तिसद्भावकल्पनम् ।
न चैकयैव सिद्धे ऽर्थे बह्वीनां कल्पनेष्यते* ॥२९॥
'सम्बन्धाऽऽख्यानकाले च गोशब्दादावुदीरिते ।
के चित्सम्बन्धबुद्ध्या ऽर्थं बुद्ध्यन्ते नाऽपरे तथा ॥३०॥
तत्र सम्बन्धनास्तित्वे सर्वो ऽर्थं नाऽवधारयेत्' ।
अस्तित्वे सर्वबोधश्चेन्न कैश्चिदनुपग्रहात् ॥३१॥
ज्ञापकत्वाद्धि सम्बन्धः स्वाऽऽत्मज्ञानमपेक्षते ।
तेनाऽसौ विद्यमानो ऽपि नाऽगृहीतः प्रकाशकः ॥३२॥
विद्यमानस्य चाऽर्थस्य दृष्टमग्रहणं क चित् ।
न त्वत्यन्ताऽसतो ऽस्तित्वं कांश्चित्प्रत्युपपद्यते ॥३३॥
विरुद्धौ सदसद्भावौ न स्यातामेकवस्तुनि ।
ननु तुल्यं विरोधित्वं ज्ञाताऽज्ञातत्वयोरपि ॥३४॥

---

इतश्चैवमित्याह अन्यथेति[२९] । इतश्च न सम्बन्धस्य कृतकतेत्याह सम्बन्धेति[३०] सार्द्धेन ।

शङ्कते अस्तित्वइति[३१] परिहरति न कैश्चिदिति । नन्वगृहीतो ऽपि तावदस्तीति किं नाऽर्थं प्रत्याययति, अत आह ज्ञापकत्वादिति[३२] । ज्ञापकस्य हि ज्ञानाऽपेक्षा ऽपि लिङ्गादौ दृष्टा, तेन विद्यमानस्यापि युक्तमप्रकाशकत्वमिति । नन्वग्रहणमेव विद्यमानस्य कथम्,अत आह विद्यमानस्येति[३३]। ननु यथा कैश्चिद् गृह्यमाणत्वात् सत्त्वम्, एवमसत्त्वमपि सम्बन्धस्याऽगृह्यमाणत्वात् किं न स्यादत आह न त्विति । कारणमाह विरुद्धाविति[३४] ।

---

* सा हीत्याद्यर्धत्रयं त्रुटितं का० सं. पुस्तके १ पु. च ।

ज्ञानं हि पुरुषाऽऽधारं तद्भेदान्न विरोत्स्यते ।
पुरुषान्तरसंस्थं च नाऽज्ञानं तेन बाध्यते ॥३५॥
सम्बन्धाऽऽधारतायां च विरोधः सदसत्त्वयोः ।
प्रत्युक्तत्वाच्च भेदस्य तद्वशान्नाऽविरोधिता ॥३६॥
'अन्धाऽनन्धसमीपस्थः शुक्लो ऽन्धैर्नाऽवगम्यते ।
गम्यते चेतरैस्तस्य सदसत्त्वेन तावता ॥३७॥
शक्त्यशक्त्योर्नराणां तु भेदात्तत्राऽविरोधिता' ।
न ह्यन्यो दर्शनस्यास्ति सम्बन्धा*द्धेतुरत्र हि ॥३८॥

---

चोदयति नन्विति । परिहरति ज्ञानमिति[३५] । सापेक्षं ज्ञाताऽज्ञातत्वं, तदेकस्यापि भिन्नपुरुषाऽपेक्षया ज्ञातत्वमज्ञातत्वं वा विरुद्धं, न ह्येकपुरुषगतं ज्ञानम् इतरगतेनाऽज्ञानेन विरुध्यते, नाप्यज्ञानं ज्ञानेन विरुध्यतइत्याह पुरुषान्तरेति । सदसत्त्वयोस्त्वेकसम्बन्धाऽऽधारत्वादापेक्षिकत्वाऽभावाच्चास्ति विरोध इत्याह सम्बन्धेति[३६] ।

अथ सम्बन्धस्यापि प्रतिपुरुषं भेदादविरोध इत्युच्यते, ऽत आह प्रत्युक्तत्वादिति । 'शक्तिरेव हि सम्बन्धो भेदश्चास्या न विद्यते' इत्यत्र निराकृत इति । अत्रैव दृष्टान्तमाह अन्धेति[३७] सार्द्धेन । अन्धाऽनन्धभेदाद् ग्रहणशक्त्यशक्त्योरविरोधित्वमिति । मा भूतां सम्बन्धस्य सत्त्वाऽसत्त्वे, कैश्चिदग्रहणादसत्त्वमेव किं न भवत्यत आह न हीति[३८] । असतो ऽपि ग्रहणं निर्हेतुकं स्यादग्रहणं तु सत्त्वे ऽप्यु-

---

* तत्सत्त्वादिति १ पु. पा. ।

एवमेवेन्द्रियैस्तुल्यं व्यवहारोपलम्भनम् ।
येषां* स्यात्ते ऽवभोत्स्यन्ते ततोऽर्थं नेतरे ऽन्धवत्†॥३९॥
आधानवत्सकृच्चैतत्तन्त्रेणोपकरिष्यति ।
स्मरणं भेत्स्यते चास्य वह्निप्रणयनादिवत् ॥४०॥
सर्वेषामनभिज्ञानां‡ पूर्वपर्वप्रसिद्धितः ।
सिद्धः सम्बन्ध इत्येवं सम्बन्धादिर्न विद्यते ॥४१॥
प्रत्युच्चारणनिर्वृत्तिर्भाष्यएव निराकृता' ।

---

पपन्नमित्युक्तमिति । ननु शुक्लस्य ग्रहणोपायश्चक्षुस्तदभावादन्धस्याऽग्रहणं युक्तं, सम्बन्धस्य तु को ग्रहणोपायो यदभावादसौ कैश्चिन्न गृह्यते, ऽत आह एवमिति[३९] ।

नन्वेवमर्थप्रतिपत्त्यङ्गं सम्बन्धग्रहणं प्रतिप्रयोगमावर्त्तनीयं स्यादत आह आधानवदिति[४०] । इदमपि ह्याधानवदं कर्मकालत्वादगृह्यमाणविशेषतन्त्रमिति । नन्वेवं विस्मृतसम्बन्धो ऽप्यर्थं प्रतीयादत आह स्मरणमिति । तत्र खलु कर्मकाले प्रणयनवदावर्त्तनीयमिति ।

यदा चाऽद्यत्वे ऽनभिज्ञान् प्रति सम्बन्धे कथ्यमाने ऽभिज्ञानां सम्बन्धबुद्ध्याऽर्थबुद्धिः, एवं तेषामपि यदा ऽनभिज्ञता तदापि ततः पूर्वेषां प्रसिद्धिरस्तीति पूर्वसिद्ध एव सम्बन्धो गम्यते, न हि सिद्धस्य कारणं सम्भवतीत्येवमनादिरेव सम्बन्ध इत्याह सर्वेषामिति[४१] ।

प्रत्युच्चारणं तु सम्बन्धस्य निर्वृत्तिः शब्दाऽधिकरणे भाष्यकारेणैव "नैकेनोच्चारणयत्नेन स्वार्थसम्बन्धः संव्यवहारश्च शक्यते कर्त्तु"मिति

---

* तेषामिति का. सं. पु. ।

† ततो ऽर्थानन्तरे ऽन्धवदिति १ पु. पा. ।

‡ अनभिज्ञानमिति २ पु. पा. ।

सर्गादौ च क्रिया नास्ति तादृक्कालो हि नेष्यते॥४२॥
'यदि त्वादौ जगत् सृष्ट्वा धर्माऽधर्मौ ससाधनौ।
यथा शब्दार्थसम्बन्धान् वेदान् कश्चित्प्रवर्तयेत् ॥४३॥
जगद्धिताय वेदस्य तथा किं चिन्न दुष्यति'।
सर्वज्ञवत्तु दुस्साधमित्यत्रैतन्न संश्रितम् ॥४४॥
यदा सर्वमिदं नाऽऽसीत् क्वाऽवस्था तत्र गम्यताम्।
प्रजापतेः क्व वा स्थानं किंरूपं च प्रतीयताम् ॥४५॥

---

घटता निराकृतेत्याह प्रत्युच्चारणेति[४२]। जगदादिपक्षस्त्ववशिष्यते, स एव पूर्वपक्षो भाष्यकारेणोपन्यस्तः "केनापि पुरुषेण शब्दानामर्थैः सह सम्बन्धं कृत्वा संव्यवहारार्थं वेदाः प्रणीता"*इति। इतरौ तु पक्षावतिमन्दावपि सम्भावनामात्रेणोपन्यस्य निरस्तौ, तमिदानीं निराकरोति सर्गादाविति। कारणमाह तादृगिति।

चोदयति यदि त्विति[४३] सार्द्धेन। एवमपि वैशेषिकादिवद्वेदप्रामाण्यसिद्धेस्तन्निराकरणं व्यर्थम्, अयं च प्रजापतिर्वा इदमेक एवाग्र आसीत्प्रजापतिर्वेदानसृजतेत्याद्यर्थवादेषु पुराणेषु केषु चिदुपवर्णितः सृष्टिप्रकारो ऽत्राऽनुकीर्तितः। अत्र च परमाण्वाकाशादीनामप्यस्ति सृष्टिरिति। परिहरति सर्वज्ञवदिति[४४]। यदा हि सर्वस्य ज्ञाता न सम्भवति ज्ञानकारणाऽभावात्, तथा कर्त्ता ऽपि, क्रियाकारणाऽसम्भवात्, असम्भवश्च सर्वाऽभावाऽभ्युपगमादिति।

एतदेव प्रपञ्चयितुमारभते यदेति[४५]। सा खलु तादृशी जगदवस्था न कथं चिद्बुद्धावारोपयितुमपि शक्यते, नतरां निर्णेतुमिति। यश्चायं समस्तस्य स्रष्टा प्रजापतिः स तदा क्वाऽवतिष्ठते,

---

* शा. भा. पृ. १५ प. १७।

ज्ञाता च कस्तदा तस्य यो जनान् बोधयिष्यति ।
उपलब्धेर्विना चैतत्कथमध्यवसीयताम् ॥४६॥
प्रवृत्तिः कथमाद्या च जगतः संप्रतीयते ।
शरीरादेर्विना चास्य कथमिच्छा ऽपि सर्जने† ॥४७॥
शरीराद्यथ तस्य स्यात्तस्योत्पत्तिर्न तत्कृता ।
तद्वदन्यप्रसङ्गो ऽपि नित्यं यदि तदिष्यते ॥४८॥
पृथिव्यादावनुत्पन्ने किम्मयं तत्पुनर्भवेत् ।
प्राणिनां प्रायदुःखा च सिसृक्षा ऽस्य न युज्यते ॥४९॥

---

नापि तस्याऽऽधारः संभवति, पृथिव्यादीनामसम्भवात् । किमाकृतिश्चासौ, न तावदशरीरः, तथा सति सिसृक्षया प्रयत्नाद्वैरसंभवात् । नापि शरीरी, तस्य भौतिकत्वात्, भूतादीनां च तदानीमभावादित्याह प्रजापतेरिति ।

सर्वाऽभावे च न किंचिदप्यस्य स्रष्टुः सर्गस्य वा ज्ञाता संभवति; यो ऽन्येभ्यः कथयेदित्याह ज्ञातेति[४६]। मा ज्ञायीति चेत्, तत्राह उपलब्धेरिति । सर्वाऽभावे च निःसाधनस्य प्रवृत्तिराद्या न संभवतीत्याह प्रवृत्तिरिति[४७] । इच्छामात्रेण भगवतो जगन्निष्पत्तिः किंप्रवृत्त्येति चेत्, नाऽशरीरस्येच्छा ऽपि संभवतीत्याह शरीरादेरिति।

शङ्कते शरीरादीति[४८] । निराकरोति तस्येति। न ह्यशरीरस्य शरीरोत्पादने ऽपीच्छा प्रीतिर्वा संभवतीति । तदुत्पत्त्यर्थं च शरीरान्तराऽभ्युपगमे ऽनवस्थेत्याह तद्वदिति ।

शङ्कते नित्यमिति। नित्यत्वं तावन्न संभवतीति वक्ष्यति, तदुपेत्याप्याह पृथिव्यादीति[४९] । किं च, दुःखप्रायं जगद्दृश्यते, न चैवं-

---

† वर्जने इति का. सं. पु. पा. ।

साधनं चास्य धर्मादि तदा किं चिन्न विद्यते ।
न च निस्साधनः कर्ता कश्चित्सृजति किं चन ॥५०॥
नाऽऽधारेण विना सृष्टिरूर्णनाभेरपीष्यते ।
प्राणिनां भक्षणाच्चापि तस्य लाला प्रवर्त्तते ॥५१॥
अभावाच्चाऽनुकम्प्यानां नाऽनुकम्पा ऽस्य जायते ।
सृजेच्च शुभ*मेवैकमनुकम्पाप्रयोजितः†॥५२॥

---

प्रायदुःखा ऽपि सिसृक्षा हितकामस्य संभवति, तस्मादीदृशमेवेदं सर्वदा जगत्, न तु केन चिद्बुद्धिपूर्वकारिणा निर्मितमित्याह प्राणिनामिति ।

तदेवमिच्छा ऽपि न संभवतीत्युक्तं, संभवन्त्यामपि न तन्मात्रेण कार्याऽऽरम्भः संभवति, संप्रत्यसंभवात्, न च तदा साधनान्तरमस्ति, क्षेत्रज्ञगतौ धर्माऽधर्मौ साधनमिति चेन्न, तयोरपि प्राक् सृष्टेरभावात्; उक्तं हि 'यदि त्वादौ जगत्स्रष्टा धर्माऽधर्मौ ससाधना'विति, तत्राह साधनमिति[५०] ।

किं च, धर्माऽधर्ममात्रेणापि न कार्यसृष्टिः संभवति, दृष्टमपि मृत्तन्त्वादिकमुपादाय घटादिषु प्रवर्त्तते, प्रजापतिस्तु दृष्टसाधनरहितः कथं सृष्टौ प्रवर्त्तेतेत्याह न चेति । नन्वसाधनस्याप्यूर्णनाभेः कोशसृष्टिर्दृष्टा, ऽत आह नाऽऽधारेणेति[५१]। उपादानमपि तस्याऽस्त्येवेत्याह प्राणिनामिति । किं च, अनुकम्पानिमित्ता ऽस्य सृष्टिरिष्यते, दुःखदर्शननिमित्ता चाऽनुकम्पा, न चाऽशरीरिणामात्मनां मुक्तात्मनामिव किं चिद् दुःखमस्ति, येनाऽनुकम्प्येरन्, अतो ऽनुकम्प्याऽभावाद् नाऽनुकम्पा संभवतीत्याह अभावादिति[५२] ।

---

* अशुभमिति १ पु. पा. ।

† प्रयोजन इति १ पु. पा. ।

अथाऽशुभाद्विना सृष्टिः स्थितिर्वा नोपपद्यते ।
आत्माधीनाऽभ्युपाये हि भवेत्किं नाम दुष्करम् ॥५३॥
तथा चाऽपेक्षमाणस्य स्वातन्त्र्यं प्रतिहन्यते ।
जगच्चाऽसृजतस्तस्य किं नामेष्टं न सिध्यति ॥५४॥
प्रयोजनमनुद्दिश्य न मन्दो ऽपि प्रवर्तते ।
एवमेव प्रवृत्तिश्चेच्चैतन्येनाऽस्य किं भवेत् ॥५५॥
क्रीडार्थायां प्रवृत्तौ च विहन्येत कृतार्थता ।
बहुव्यापारतायां च क्लेशो बहुतरो भवेत् ॥५६॥

---

अथाऽसत्यपि दुःखे सुखस्याप्यभावात् तन्निमित्ता ऽनुकम्पा, तथा तर्हि तादृश्या सुखमेवैकं सृजेदित्याह सृजेदिति[५२]। शङ्कते अथाऽशुभादिति[५३]। निराकरोति आत्मेति। अथ दुष्करैवाऽस्य दुःखेन विना सुखसृष्टिरित्यपेक्षतएव दुखं, ततः स्वातन्त्र्यस्य हानिरित्याह तथा चेति[५४]।

जगत्सर्गे चाऽस्य प्रयोजनमपि नास्तीत्याह जगदिति। मा भूदिति चेत्, तत्राह प्रयोजनमिति[५५]। तद्रहितप्रवृत्तौ वा बुद्धिमत्त्वहानिरित्याह एवमिति। क्रीडार्था प्रवृत्तिरिति चेत्, तत्राह क्रीडार्थायामिति[५६]। क्रीडा हि विनोदजसुखार्थैव नराणां, नचासावाप्तसुखस्य सम्भवति, तदनयासौ कृतार्थतालक्षणमैश्वर्यं न सिद्ध्येदिति।

क्रीडा चाऽल्पीयसो रमयति, समस्तभूधरादिविषयस्तु महाव्यापारो ऽतिक्लेशरूपः क्रीडार्थ इति न चित्तमनुरञ्जयतीत्याह बह्विति।

संहारेच्छापि चैतस्य भवेदप्रत्ययात् पुनः ।
न च कैश्चिदसौ ज्ञातुं कदा चिदपि शक्यते ॥५७॥
स्वरूपेणोपलब्धे ऽपि स्रष्टृत्वं नाऽवगम्यते ।
सृष्ट्याद्याः प्राणिनो ये च बुध्यन्तां किं नु ते तदा* ॥५८॥
कुतो वयमिहोत्पन्ना इति तावन्न जानते† ।
प्रागवस्थां च जगतः स्रष्टृत्वं च प्रजापतेः ॥५९॥
न च तद्वचनेनैषां प्रतिपत्तिः सुनिश्चिता ।
असृष्ट्वा ऽपि ह्यसौ ब्रूयादात्मैश्वर्यप्रकाशनात् ॥६०॥

---

यदि चाऽनुकम्पानिमित्ता सिसृक्षा, संजिहीर्षा तर्हि किंनिमित्ता स्यात्, सा ऽप्यनुकम्पाऽधीनेति चेन्न, विरुद्धयोः सिसृक्षाजिहीर्षयोरेकहेतुकत्वापत्तेरित्याह संहारेति[५७]। 'ज्ञाता च कस्तदा तस्ये'त्यत्र सृष्टिकाले सर्वस्याऽभावान्नास्य ज्ञाता सम्भवतीत्युक्तम्, उत्तरकाले ऽपि न स्रष्टुः कैश्चिदपि कदा चिदप्यवगतिः सम्भवतीत्याह न चेति।

ननु पुरुषान्तरवत् स्रष्टा ऽपि शक्यते एव ज्ञातुमत आह स्वरूपेणेति[५८]। यद्यप्यद्यतनैः स्रष्टृत्वं ना ऽवगम्यते, सृष्ट्याद्यैस्तु गम्यतइति चेत्, तत्राह सृष्ट्याद्या इति। न किं चिद्बुध्यन्तइति। एतदेव दर्शयति कुत इति[५९]। आत्मन एव तावत्प्रजापतेरुद्भवं न जानन्ति नतरां जगत इति। कथमित्याह प्रागिति।

यदि हि प्रागसदवस्थं जगत् सृष्टा प्रजापतेर्व्यापाराऽनन्तरं च तदुत्पत्तिं पश्येयुः, तदा ऽवगच्छेयुः स्रष्टृत्वं, न च सृष्ट्युत्तरकालैस्तैः प्रागवस्था शक्यते ज्ञातुं, तदज्ञानाच्च स्रष्टृत्वे ऽप्यज्ञानमेवेति। प्रजापतिवचनादवगच्छन्तीति चेत्, न, हेतुदर्शनादित्याह न चेति[६०]।

---

* बुध्यन्ते किं नु ते सदा इति १ पु. पा. । † जायते इति ३ पु. ।

'एवं वेदोऽपि तत्पूर्वस्तत्सद्भावादिबोधने ।
साशङ्को न प्रमाणं स्या'न्नित्यस्य व्यापृतिः कुतः॥६१॥
यदि प्रागप्यसौ तस्मादर्थादासीन्न तेन सः ।
सम्बद्ध* इति तस्याऽन्यस्तदर्थोऽन्यप्ररोचना†॥६२॥
स्तुतिवाक्यकृतश्चैष जनानां मतिविभ्रमः‡ ।
पौर्वापर्याऽपरामृष्टः शब्दोऽन्यां कुरुते मतिम् ॥६३॥
उपाख्यानादिरूपेण वृत्तिर्वेदवदेव नः§ ।
धर्म्मादौ भारतादीनां भ्रान्तिस्तेभ्योऽप्यतो भवेत् ॥६४॥

---

वेदवचनात् तद्यवगच्छामः, प्रजापतिर्वा इदमेक एवासीत्सोऽकामयत प्रजाः पशून् सृजेयेत्युपक्रम्य ततो वै स प्रजाः पशूनसृजतेति श्रुतेः ।

अत्राह एवमिति[६१] पादत्रयेण । वेदोऽपि प्रजापतिकृतश्चेत्पूर्ववदेवाऽनाश्वास इति । नित्यत्वे भूतप्रजासर्गव्यापारो न सम्भवतीत्याह नित्यस्येति । कथं न व्यापारो, ऽत आह यदीति[६२] । कथं हि सृष्टेः प्राग्विद्यमानस्याऽसृजतेत्यन्तस्य यथाश्रुतेनाऽर्थेन सम्बन्धः स्यात्; तस्मादन्य एव विध्यन्तरप्ररोचनारूपस्तस्याऽर्थ इति ।

ननु सर्वलोकप्रसिद्धिविरुद्धोऽयं सृष्ट्यपलापो, ऽत आह स्तुतीति[६३] । प्रमाणमूला हि प्रसिद्धिरबाधिता स्यात्, इयं त्वन्यपराद्वाक्यादुपजाता भ्रान्तिरेवेति । भवति च पौर्वापर्याऽपरामृष्टाच्छब्दाद् भ्रान्तिरित्याह पौर्वापर्येति । इदं चाऽपरं लोके भ्रान्तिकारणमित्याह उपाख्यानादीति[६४] । धर्मविधावधर्मनिषेधे च सृष्ट्याद्युपादानक्रमेण वेदवत्प्रवृत्तिर्भारतादीनामिति ।

---

* संबन्ध इति २ पु. पा. । † तदार्थान्य प्ररोचन इति का.सं.पु. ।

‡ जनानामतिविभ्रम इति का. सं. पु. १ पु. च पाठः ।

§ एव चेति १ पु. पा. ।

आख्यानाऽनुपयोगित्वात्तेषु सर्वेषु विद्यते ।
स्तुतिनिन्दाऽऽश्रयः कश्चिद्वेदस्तच्चोदितोऽपि वा ॥६५॥
वेदस्याऽऽदि*प्रवृत्तौ च नाऽकृतत्वमतिर्भवेत् ।
प्रलयेषु स्थिति†श्चास्य साशङ्का स्यात्प्रजापतौ ॥६६॥

---

किमिति पुनरियं भ्रान्तिः, किं स्वार्थपरत्वं तेषां न सम्भवति, अत आह आख्यानेति[६५] । तेष्वपि ह्यस्त्येवाऽध्ययनविधिस्थानीयो विधिः, यथा तावद्भारते श्रावयेच्चतुरो वर्णानिति, अतोऽवश्यं प्रयोजनवदर्थपरत्वादुपाख्यानमात्रस्याऽनुपयोगादन्यस्तुत्यर्थत्वमङ्गीकर्त्तव्यं, तत्र क चिद्वैदिका एव विधयोऽग्निहोत्रादयो भारतादिषु श्रूयन्ते, क चिद्भारतादिचोदिताः स्मार्त्तविधयस्तेनाऽन्यपरा एव तत्रापि सृष्ट्यादिवादा इति ।

इतश्चाऽऽदिप्रवृत्तौ सत्यां न वेदस्याऽनादित्वं सम्भवतीत्याह वेदस्येति[६६] । ननु प्रजापतिः प्रागप्यासीदेव, अतस्तस्मिन्वेदोऽवतिष्ठतां, कथमनित्यत्वमत आह प्रलयेष्विति । उक्तं हि चोदनासूत्रे सर्वज्ञनिराकरणानन्तरं न हि तत्रापि विश्रम्भ इति । वैशेषिकास्त्वाहुः, अनादिरयं सृष्टिप्रलयप्रवाहः, ब्राह्ममानेन वर्षशतान्ते भगवतो महेश्वरस्य समस्तजगत्संहारेच्छा भवति, तदिच्छावदीश्वरात्मसंयोगात्परमाणुषु विभागकर्माण्युत्पद्यन्ते, तैश्च सर्वेषु मिथो विभक्तेषु यावद्द्व्यणुकं सर्वाऽवयविनाशात् परमाणव एव केवलाः पार्थिवाऽऽप्यतैजसवायवीया व्योमकालदिगात्ममनांसि चाऽवतिष्ठन्ते, धर्माऽधर्माश्च तावन्तं कालमीश्वरेच्छाप्रतिबद्धाः फलमप्र-

---

* वेदस्यापीति ३ पु. पा. ।

† स्थित इति १ पु. पा. ।

कर्तृसर्गविनाशानामथाऽनादित्वकल्पना ।
सैवं युक्ता यथेदानीं भूतानां दृश्यते क्रमात् ॥६७॥
प्रलये ऽपि प्रमाणं नः सर्वोच्छेदात्मके* न हि ।
न च प्रयोजनं तेन स्यात्प्रजापतिकर्म्मणा ॥६८॥
न च कर्मवतां युक्ता स्थितिस्तद्भोगवर्जिता ।
कर्मान्तरनिरुद्धं† हि फलं न स्यात्क्रियान्तरात् ॥६९॥

---

यच्छन्तस्तेषु तेष्वात्मस्ववतिष्ठन्ते, पुनस्तावति काले गते तस्यैव भगवतः कर्मोपभोगशून्यानात्मनो दृष्ट्वा ऽनुकम्पापरवशस्य सिसृक्षा भवति, ततः सिसृक्षावदीश्वरात्मसंयोगात् परमाणुषु कर्मोत्पत्तेस्तद्वशान्मिथः संयुक्तैस्तैर्द्व्यणुकादिक्रमेण पृथिव्यादय आरभ्यन्ते, ततस्तदिच्छावशादेवाऽपगतप्रतिबन्धैरभिव्यक्तसामर्थ्यैर्विविधैः कर्मभिर्विविधाऽनेकनरपश्वादिभेदभिन्नं भूतजातमारभ्यते, ततः स एव महेश्वरो धर्माऽधर्मप्रतिपादनाय वेदान् सृजति । तदेवं प्रतिसर्गमन्ये ऽन्ये च वेदाः, प्रवाहतस्तु वेदाः सृष्टिप्रलयाश्चाऽनादयः, कर्त्ता च महेश्वरो ऽनादिरेव, इह च परमाणूनामुपादानत्वान्नाऽनुपादानत्वं सृष्टेरिति ।

तदिदमाशङ्कते कर्त्रिति[६७] । निराकरोति सैवमिति । एवं हि दृष्टाऽऽनुगुण्यं भवति, समस्तस्य तु युगपत्सृष्टिविनाशः कल्प्यमानो न दृष्टाऽनुगुणो भवति, इति । सृष्टिवदेव प्रलये ऽपि न किं चित्प्रमाणं सम्भवतीत्याह प्रलये इति[६८] । न तावत्तद्वचनमनाश्वासात्, न वेदवचनं तस्यापि तत्कृतत्वादिति । सर्गवच्च संहारो ऽपि निष्प्रयोजनत्वान्न बुद्धिपूर्वकारिणः सम्भवतीत्याह न चेति । इतश्च सर्गप्रलयावनुपपन्नावित्याह न चेति[६९] ।

---

* सर्वोच्छेदात्मन इति २ पु. पा. । † निबद्धमिति २ पु. पा. ।

सर्वेषां तु फलाऽपेतं न स्थानमुपपद्यते ।
न चाप्यनुपभोगो ऽसौ कस्य चित्कर्म्मणः फलम् ॥७०॥
अशेषकर्मनाशे वा पुनः सृष्टिर्न युज्यते ।
कर्म्मणां वा ऽप्यभिव्यक्तौ किं निमित्तं* तदा भवेत् ॥७१॥
ईश्वरेच्छा यदीष्येत सैव स्याल्लोककारणम् ।
ईश्वरेच्छावशित्वे हि निष्फला कर्मकल्पना ॥७२॥

---

यत्तूक्तमीश्वरेच्छाप्रतिबद्धत्वात्कर्माणि न फलन्तीति, तत्राह कर्मान्तरेति । कर्मान्तरेण हि प्रवृत्तफलेनाऽवरुद्धं कर्मान्तरं फलं न ददात्यपि । सर्वकर्मणां तु फलमददतामीश्वरेच्छामात्रेण प्रतिबद्धानामवस्थानमप्रमाणकमिति । न च सर्वफलाऽनुपभोगः कस्य चित्कर्मणः फलं, यत्प्रतिबन्धादन्यानि फलं न दद्युरित्याह न चेति[७०]।

अथ सर्वाण्येव सर्वेषां कर्माणि विनष्टानीत्युच्यते, ततः पुनःसृष्टिरयुक्ता स्यादित्याह अशेषेति[७१] । यदपि कर्मभिरभिव्यक्तैर्भूतानि सृज्यन्ते इत्युक्तं, तत्राह कर्मणामिति ।

शङ्कते ईश्वरेति[७२] । निराकरोति सैवेति । एतदेवोपपादयति ईश्वरेति । यदा हीश्वरेच्छा वशिनी, तद्वश्यं सर्वं, ततः सैव भूतसृष्टेर्निमित्तमस्तु, किमन्तर्गडुना कर्मणेति ।

अपि चेश्वरेच्छापि कार्या चेन्नाऽनपेक्षितनिमित्तान्तरा सम्भवति, ईश्वरमात्रस्य प्रागपि भावेन व्यभिचारादहेतुत्वात्, कर्मणां चेश्वरेच्छातः प्राक् प्रतिबद्धानामहेतुत्वात्, तद्धेतुत्वे चेतरेतराश्रयप्रसङ्गात्,

---

* क निमित्तमिति १ पु. पा. ।

न चाऽनिमित्तया युक्तमुत्पत्तुं हीश्वरेच्छया ।
यद्वा तस्या निमित्तं यत्तद्भूतानां भविष्यति ॥७३॥
संनिवेशविशिष्टानामुत्पत्तिं यो गृहादिवत् ।
साधयेच्चेतनाऽधिष्ठां* देहानां तस्य चोत्तरम् ॥७४॥
कस्य चिद्धेतुमात्रत्वं यद्यधिष्ठातृतेष्यते ।
कर्म्मभिः सर्वजीवानां तत्सिद्धेः सिद्धसाधनम् ॥७५॥

---

इत्यभिप्रायेणाह न चेति[७३] । यदि त्वस्ति किं चिदिच्छाया निमित्तमित्युच्यते, तत्तर्हि नित्यमनित्यं वा, नित्यत्वे प्रागपि सृष्टिप्रसङ्गः, इतरथा तस्याऽपरापरहेत्विच्छायामनवस्था; अस्तु वा कश्चिदिच्छाया हेतुः, स एव तु भूतानां कारणं भविष्यतीति किमान्तरालिकयेच्छया तयेत्याह यद्वेति ।

संप्रति परेषां प्रत्यवस्थानमनुभाषते संनिवेशेति[७४] । भूधरदेहदूर्वाङ्कुरादयो ये ऽपि विप्रतिपन्नचेतनकर्तृकास्ते सर्वे चेतनाऽधिष्ठानोत्पत्तयः, संनिवेशविशिष्टत्वात्सावयवत्वादित्यर्थः । गृहघटादिवत् । अत्र च प्रसिद्धोत्पत्तीनां देहादीनां चेतनाऽधिष्ठानमात्रं साध्यम्, अप्रसिद्धोत्पत्तीनां तु भूधरादीनामुत्पत्तिरेव चेतनाधिष्ठानविशेषिता साध्यते । यत्तु प्रसिद्धोत्पत्तिकमसन्निवेशविशिष्टं कर्मादि तस्याऽप्युत्पत्तिवृत्तिमत्त्वादेव घटाद्युत्पत्तिवत् चेतनाधिष्ठितता साध्यते । तत्सिद्धं सर्वज्ञेश्वरकर्तृत्वं विश्वस्येति यो वदति तस्य वक्ष्यमाणमुत्तरमिति ।

तदिदानीमुत्तरमाह कस्य चिदिति[७५] । यदि हेतुत्वमात्रमधिष्ठातृत्वं ततः सर्वेषां जीवानां क्षेत्रज्ञानां कर्मभिर्द्वारभूतैरस्त्येव

---

* चेतनाधिष्ठेति का. सं. पु. ।

इच्छापूर्वकपक्षे ऽपि तत्पूर्वत्वेन कर्म्मणाम् ।
इच्छाऽनन्तरसिद्धिस्तु दृष्टान्ते ऽपि न विद्यते ॥७६॥
अनेकान्तश्च हेतुस्ते तच्छरीरादिना भवेत् ।
उत्पत्तिमांश्च तद्देहो देहत्वादस्मदादिवत् ॥७७॥
अथ तस्याप्यधिष्ठानं तेनैवेत्यविपक्षता ।
अशरीरो ह्यधिष्ठाता नाऽऽत्मा* मुक्तात्मवद्भवेत् ॥७८॥

---

सर्वं कार्यजातं प्रति हेतुत्वं, कर्मनिमित्तं हि सर्वं कार्यजातं, सिद्धं च पृथिव्यादेरपि खननपूरणादिभिः कथं चिन्नाशोत्पादवत्त्वम; अतो ऽनेनाऽनुमानेन कृत्स्नस्यैकेन सर्वज्ञेन निष्पत्तिः, नापि युगपत्सिध्यतीति। अथ चेतनेच्छापूर्वकत्वं तदधिष्ठातृत्वं, तथापि सिद्धसाधनमित्यनुषङ्गेणाह इच्छेति[७६]। कथमित्याह तत्पर्वत्वेनेति। अथ चेतनेच्छाऽऽनन्तर्यं, ततः साध्यहीनो दृष्टान्तः, न हि गृहादीनामिच्छाऽनन्तरं निष्पत्तिरस्तीत्याह इच्छेति।

किं चायमीश्वरः सशरीरो वा स्यादशरीरो वा, सशरीरत्वे तावत्ततः शरीरेणैव हेतुरनैकान्तिकः, न हि तच्चेतनाधिष्ठितं, चेतनान्तरस्याऽधिष्ठातुरभावादित्याह अनेकान्त इति[७७]। सविशेषणो ऽयं हेतुरुत्पत्तिमत्त्वे सति सन्निवेशविशिष्टत्वादिति। न चेश्वरशरीरमुत्पत्तिमदिति नानैकान्तिकत्वमिति चेन्न, तस्यापि भवदुक्तेनैव संनिवेशविशिष्टत्वेन भूधरादिवदुत्पत्तिसिद्धेः, विशेषतश्च शरीरादीत्याह उत्पत्तीति।

शङ्कते अथेति[७८]। विपक्षे वर्त्तमानो हेतुरनैकान्तिको भवेत्, न चेश्वरशरीरं विपक्षः, तस्यापि ईश्वराऽधिष्ठितत्वादिति। निराकरोति

---

* नासौ इति १ पु. पा.

कुम्भकाराद्यधिष्ठानं घटादौ यदि चेष्यते ।
नेश्वराऽधिष्ठितत्वं स्यादस्ति चेत् साध्यहीनता ॥७९॥
यथासिद्धे च दृष्टान्ते भवेद्धेतोर्विरुद्धता ।
अनीश्वरविनाश्यादिकर्तृमत्त्वं प्रसज्यते ॥८०॥

---

अशरीर इति । स्वशरीरमधितिष्ठन्नसौ अशरीरः सन्नधितिष्ठेत्, शरीरान्तराऽभावात्; न चाऽशरीरस्य मुक्तात्मवदधिष्ठातृत्वं सम्भवति, ततश्चाऽस्मदादिदेहदूर्वाङ्कुरादिष्वपि नाऽशरीरस्याऽधिष्ठातृत्वं सम्भति, प्रयत्नवशेन हि कुम्भकारादीनां घटादिष्वधिष्ठातृत्वं दृश्यते । न चाऽशरीरस्य प्रयत्नः सम्भवति, शरीरसंयोगाऽपेक्षत्वात्प्रयत्नस्य सर्वगतानामप्यात्मनां शरीरप्रदेशएव प्रयत्नदर्शनात्; नित्यो ऽस्य प्रयत्न इति चेत्, न, अस्मदादिप्रयत्नवदनित्यत्वाऽनुमानात् । तद्द्यं प्रयोगः, देहादयो न चेतनकर्तृकाः शरीरकर्तृकत्वविरहात् व्योमवत्, तथा तएव नाऽशरीर्यधिष्ठातृका, न नित्यप्रयत्नाधिष्ठातृका वा, वस्तुत्वाद्व्योमवादिति । तेनाऽवश्यमीश्वरस्याऽधिष्ठातृत्वे शरीरमङ्गीकर्त्तव्यं, शरीरं च दूर्वाऽङ्कुरादिषु दृश्यादर्शननिरस्तम; अतः सशरीरो ऽशरीरो वा नाऽधिष्ठाता देहादिषु चेतनः शक्यो ऽनुमातुमिति ।

दृष्टान्तो ऽपि विकल्पनीयः, किं घटस्य कुम्भकाराऽधिष्ठितत्वाऽभिप्रायेण चेतनाऽधिष्ठितत्वमुच्यते, किं वेश्वराऽधिष्ठितत्वाऽभिप्रायेण, प्रथमपक्षे देहादीनामपि घटवन्नेश्वरकर्तृत्वं सिद्ध्येदित्याह कुम्भेति[७९] । उत्तरत्र तु साध्यहीनो दृष्टान्तः, न हि नो घटादावीश्वराऽधिष्ठानं सिद्धमित्याह अस्तीति ।

अथेश्वराऽनीश्वरसाधारण्येन चेतनाऽधिष्ठानमात्रं साध्यते, तत्र च घटो दृष्टान्तो भवत्येवास्ति तस्याऽनीश्वराधिष्ठितस्यापि चेतनाऽधिष्ठितत्वमिति; तत्राप्याह यथासिद्धइति[८०] । एवमपि यथासिद्ध-

कुलालवच्च नैतस्य व्यापारो यदि कल्पते* ।
अचेतनः कथं भावस्तदिच्छामनुरुध्यते ॥८१॥
तस्मान्न परमाण्वादेरारम्भः स्यात्तदिच्छया ।
पुरुषस्य च शुद्धस्य नाऽशुद्धा विकृतिर्भवेत् ॥८२॥
स्वाधीनत्वाच्च धर्मादेस्तेन क्लेशो न युज्यते ।
तद्वशेन प्रवृत्तौ वा व्यतिरेकः प्रसज्यते ॥८३॥

---

स्यैव दृष्टान्तस्याऽङ्गीकरणाद्विरुद्धता स्यादिति । विरोधमेव दर्शयति अनीश्वरेति । शक्यते हि वक्तुं, देहादिकं नेश्वरकर्तृकं चेतनोपादानत्वाद् घटादिवदिति, अथ घटस्याप्यस्त्येवेश्वरकर्तृकत्वम्, एवं सति तद्वदेव देहादीनामप्यनेकचेतनाऽधिष्ठानाऽनुमानान्नेश्वरैक्यं सिद्ध्येदिति ।

दूषणान्तरमाह कुलालवदिति[८१] । यदा हि शरीरी दृश्याऽदर्शननिरस्तस्तदा ऽवश्यमशरीरस्यैवाऽधिष्ठातृत्वं, न चाऽशरीरस्य प्रयत्नः सम्भवतीत्युक्तम्, अप्रयत्नश्च कथमधितिष्ठेत्, इच्छामात्रेणेति चेन्नेच्छाप्यशरीरे सम्भवतीत्युक्तं मुक्तात्मवत्;उपेत्यापि ब्रूमः,कथमचेतनाः परमाणवश्चेतनेच्छामात्रेण प्रवर्त्तेरन्, चेतनो हि भृत्यो राजेच्छामात्रेणापि प्रवर्त्तत इति । उपसंहरति तस्मादिति[८२] ।

अन्यन्मतम्, आत्मैवैको जगदादौ तिष्ठति, स एव स्वेच्छया व्योमाऽनिलाऽनलजलभूमिरूपेण परिणमन् विश्वं प्रपञ्चमारभत इति, तदपि निराकरोति पुरुषस्येति । ज्ञानानन्दस्वभावः कथमिव विना कारणेन जडरूपं दुःखात्मकं च विकारमनुभवति, धर्माऽधर्मपारवश्यादिति चेत्तत्राह स्वाधीनत्वादिति[८३] । सर्वशक्तिः

---

* कल्पते इति २ पु. पा. ।

स्वयं च शुद्धरूपत्वादसत्त्वाच्चाऽन्यवस्तुनः ।
स्वप्नादिवदविद्यायाः प्रवृत्तिस्तस्य किंकृता ॥८४॥
अन्येनोपप्लवे* ऽभीष्टे द्वैतवादः प्रसज्यते ।
स्वाभाविकीमविद्यां तु नोच्छेत्तुं कश्चिदर्हति ॥८५॥
विलक्षणोपपाते हि नश्येत् स्वाभाविकी क चित् ।
न त्वेकात्माऽभ्युपायानां हेतुरस्ति विलक्षणः ॥८६॥

---

पुमानत्यन्तस्वतन्त्रः कथं धर्माऽधर्मवशः स्यात्, तावेव हि तदधीनौ, अतो न तद्वशेन क्लेशाऽनुभवः सम्भवतीति ।

किं चाऽऽत्मैवैको जगदादौ तद्व्यतिरिक्तं न किं चित्, अतो धर्माऽधर्मावपि तदानीं न विद्येते, कथं ताभ्यां क्लेशः, तत्सद्भावे वा व्यतिरेकापत्तिरित्याह तद्वशेनेति ।

ये त्वाहुः, नैवं परिणामं ब्रूमः, किं त्वपरिणत एवासावविद्यावशेन परिणतमिव प्रपञ्चरूपेणाऽऽत्मानं स्वप्नवत् पश्यतीति, तान् प्रत्याह स्वयमिति[८४] । भ्रान्तिर्ह्यविद्या, सा च कारणाऽधीना, न च शुद्धविद्यास्वभावः पुमांस्तस्याः कारणं,वस्त्वन्तरं च नास्त्येवेति नाऽविद्यायाः प्रवृत्तिः सम्भवति, यन्निबन्धना सृष्टिर्भवेत्, वस्त्वन्तरोपप्लवे स्वाऽद्वैतापत्तिरित्याह अन्येनेति[८५] ।

स्वाभाविकी तस्याविद्या ऽनादिश्च, अतो न कारणापेक्षेति चेत्तत्राह स्वाभाविकीमिति । अत्र तावदिदमेव वक्तव्यं, विद्यास्वभावं ब्रह्म कथमविद्यास्वभावं स्यात्, न ह्येकस्य विरुद्धोभयस्वभावत्वं सम्भवतीति । यदि च स्वाभाविक्यविद्या, नाऽसौ केन चिदुच्छेद्येत, तत्राऽनिर्मोक्षप्रसङ्ग इति ।

---

* अन्यो नोपप्लवे इति का. सं. पु ।

पुमानकर्ता येषां तु तेषामपि गुणैः क्रिया ।
कथमादौ भवेत्तत्र कर्म तावन्न विद्यते ॥८७॥
मिथ्याज्ञानं न तत्रास्ति रागद्वेषादयो ऽपि वा* ।
मनोवृत्तिर्हि सर्वेषां न चोत्पन्नं तदा मनः ॥८८॥

---

यदि स्वाभाविक्यप्यविद्या श्यामतेव पार्थिवाणूनामग्निसंयोगेन ध्यानादिनोच्छेद्येत, अत आह विलक्षणेति[८६] । न ह्यग्निसंयोगवद् ध्यानाद्युपायान्तरमात्माऽद्वैतवादिनामस्ति, यदविद्यामुच्छिन्द्यात् ; निरस्तश्चायं पक्षो निरालम्बनवादेन ।

सांख्यास्त्वाहुः, पुरुषो न कस्य चित्कर्त्ता, भोक्ता तु केवलं, गुणास्तु सत्त्वरजस्तमांसि अव्यक्तप्रधानप्रकृत्यादिमहदादिरूपेण परिणता महाभूतान्तं प्रपञ्चमारभन्त इति; तदुपन्यस्य दूषयति पुमानिति भवे[८७]दन्तेन । न हि प्रागविकृतानां सृष्टिकाले विना कारणं विकारः सम्भवतीति । अस्ति कारणान्तरं धर्माऽधर्मावविद्या रागद्वेषौ चेति चेत्, तेषां तदानीमभावात्, इत्याह तत्रेति । अभावं दर्शयति मनोवृत्तिरिति[८८] । मनःसंज्ञकस्य ह्यन्तःकरणस्य वृत्तिविशेषाः सर्वे पूर्वोक्ताः कर्मादयः सांख्यैरिष्यन्ते, न च तदानीं मनो ऽस्ति, तद्ध्याऽऽहंकारिकम्, इन्द्रियाणां तन्मात्राणां चाऽहंकारविकारत्वात्, अहंकारश्च महतो विकारः, महांश्च आद्यः प्राकृतो विकारः, तेन यदा प्रकृतिर्महदादिविकारं नारभते तदा न सन्त्येव धर्मादयो, वर्त्तन्ते अत्रेति वृत्तिः, मनो हि तेषां वृत्तिः स्थानमित्यर्थः ।

---

* अपि चेति १ पु. ।

कर्मणां शक्त्यवस्थानां यैरुक्ता बन्धहेतुता।
सा न युक्ता न कार्यं हि शक्तिस्थात्कारणाद्भवेत्॥८९॥
दाधिशक्तिर्न हि क्षीरे दाधिकारम्भ*मर्हति।
दध्यारम्भस्य सा हेतुस्ततोऽन्या† दाधिकस्य तु॥९०॥
कारणाच्छक्त्यवस्थाच्च यदि कार्यं प्रजायते।
बन्धः पुनः प्रसज्येत फले दत्तेऽपि कर्म्मणा॥९१॥
शक्त्यवस्थत्वमेवेष्टं विनाशेऽपि हि कर्म्मणाम्।
प्राक्चापि शक्तिसद्भावादनुष्ठानं वृथा भवेत्॥९२॥

---

ननु कर्म स्थूलरूपेणाऽविद्यमानमपि शक्त्यात्मना विद्यमानं गुणानां क्रियोत्पत्तौ निमित्तं भविष्यति, शक्त्यभिप्रायमेव त्वधिकारो बन्धहेतुरित्येतदपि वचनं केचिन्मन्यन्ते, तदनुभाष्य दूषयति कर्मणामिति[८९]।

कथं न शक्त्यवस्थं स्वकारणं स्वकार्यं करोति, अत आह दधीति[९०]। क्षीरे ह्यस्ति दधिशक्तिः, सर्वकार्याणां शक्त्यात्मना कारणाऽवस्थानाऽभ्युपगमात्, न च सा दाधिकं तत्राऽऽरभते, स्थूलरूपदध्यारम्भस्यैव सा हेतुः, तत्राऽन्या दध्यवस्थिता दाधिकशक्तिरेव दाधिकस्य हेतुरिति। शक्त्यवस्थस्य कारणस्य कार्याऽऽरम्भहेतुत्वेऽयमपि दोषः स्यादित्याह कारणादिति[९१]। कथमित्याह शक्त्यवस्थत्वमिति[९२]। सत्कार्यवादिनो हि अनुत्पन्नानामिव विनष्टानामपि शक्त्यात्मना ऽवस्थानमेवेष्टं, न त्वत्यन्ताऽविद्यमानत्वमिति। अयं चाऽपरो दोष इत्याह प्रागिति। किं च, रागादयोऽपि बन्धकारणत्वेन

---

* दधिकारम्भमिति का. सं. पु.।

† दध्यारम्भस्य हेतुः स्यात् तत्रान्येति ३ पु. पा.।

शक्त्यवस्थं च रागादि किं नेष्टं बन्धकारणम् ।
कर्म्माऽदत्तफलत्वाच्चेन्नाऽव्यक्तिमपि तद् व्रजेत्* ॥९३॥
तच्छक्त्यप्रतियोगित्वान्न ज्ञानं मोक्षकारणम् ।
कर्मशक्त्या न हिं ज्ञानं विरोधमुपगच्छति ॥९४॥
यद्यप्यज्ञानजन्यत्वं कर्म्मणामवगम्यते ।
रागादिवत् तथाप्येषां न ज्ञानेन निराक्रिया ॥९५॥

---

दृश्यन्ते, ते च सृष्टिकाले शक्त्यात्मना विद्यन्तइति । केन विशेषेणाऽधिकारो बन्धहेतुः, कर्मशक्तिरेव हि सर्गनिमित्तमित्युच्यते, तदाह शक्त्यवस्थमिति[९३] ।

शङ्कते कर्मेति । कर्म खलु पूर्वसृष्टावनुष्ठितमदत्तफलमवस्थितम्, अतस्तदेव बन्धहेतुरिति । निराकरोति नाव्यक्तिमिति । नाऽनुष्ठितस्याऽव्यक्तिः फलाऽदानं वा सम्भवतीत्युक्तमेवेति नाऽदत्तफलस्यैव शक्त्यवस्था बन्धहेतुर्वक्तव्या, सा च रागादीनामप्यविशिष्टेति ।

शक्त्यवस्थस्य बन्धहेतुत्वे प्रकृतिपुरुषविवेकज्ञानं न मोक्षसाधनं स्यादित्याह तच्छक्तीति[९४] । कर्मशक्तेरप्रतियोगि ज्ञानमविनाशकमित्यर्थः । तदेव दर्शयति कर्मशक्त्येति ।

ननु रागादीनामिव कर्मणामप्यज्ञानमेव निदानम्, अतो निष्पन्ने ज्ञाने कर्मनिरोधान्मोक्षः सिद्ध्यत्येव,अत आह यद्यपीति[९५] । यद्यपि निष्पन्ने ज्ञाने न कर्माऽनुष्ठीयेत, तथापि शक्त्यवस्थानां कर्मणां ज्ञानेनाऽनिराकरणाद्बन्धः स्यादेवेति ।

---

* तद्भवेदिति २ पु. पा. ।

कर्मक्षयो हि विज्ञानादित्येतच्चाऽप्रमाणवत्* ।
फलस्याऽल्पस्य वा दानं राजपुत्राऽपराधवत् ॥९६॥
अद्यत्वे ऽपि हि शक्तिस्थं यदि स्यात् कर्म कारणम् ।
ततः प्रधानकाले ऽपि युज्यते कारणाऽभिधा ॥९७॥
मनोवृत्तिरिदानीं तु हेतुर्नास्ति च सा तदा ।
मनसां सङ्कराच्चापि तदा स्यात् कर्म्मसङ्करः ॥९८॥

---

अथ शक्त्यवस्थमपि कर्म ज्ञानेन क्षीयतइत्युच्यते, न तत्र प्रमाणमस्तीत्याह कर्मक्षय इति[९६] । न हि ज्ञानमपि वस्तुस्वभावाऽन्यथाकरणक्षमम्, अयं च वस्तूनां विनाशो यच्छक्त्यात्मना ऽवस्थानं, न ह्यन्यादृशो विनाशः क्व चिदपि सम्भवति, स कथं ज्ञानेन क्रियते; ज्ञानाऽग्निः सर्वकर्माणि भस्मसात्कुरुते तथेति वचनं तु स्थूलकर्मविनाशाऽभिप्रायमिति ।

यदप्युच्यते, ज्ञानिनः कर्माण्यल्पमेव फलं दत्त्वा निवर्तन्ते, यथा राजपुत्रस्याऽपराधे दण्डो ऽल्पो भवतीति, शक्तिस्थस्य फलदायित्वं निष्प्रमाणकमेव, न ह्यल्पे फले दत्ते† ऽपि शक्त्यवस्थानं नश्यतीत्याह फलस्येति । यद्यद्यत्वे ऽपि कर्मणः शक्त्यवस्थस्य बन्धहेतुत्वं स्यात्ततः प्रधानकाले ऽपि तस्य बन्धहेतुत्वं स्यात्, न तु तदस्तीत्याह अद्यत्वइति[९७] । यदा प्रधानाऽवस्थागतं जगत् तदैवेत्यर्थः ।

कस्य तर्हीदानीं बन्धहेतुत्वं, तद् दर्शयति मनोवृत्तिरिति[९८] । मनोवृत्तिर्यागाऽनुष्ठानजन्याऽपूर्वस्थानीया संप्रति बन्धहेतुः, न चासौ

---

* निष्प्रमाणकमिति ३ पु. पा. ।

† दत्ते इति नास्ति १ पु. ।

तस्मान्नैषो ऽधिकाराख्यो बन्धहेतुः प्रकल्पते* ।
योग्यत्वे ऽप्यधिकाराख्यो विप्रयोगो न युज्यते ॥९९॥
चैतन्यं योग्यता पुंसः प्रकृतेस्तदनात्मता ।
भोक्तृभोग्यत्वयोस्ते च न ताभ्यामपगच्छतः ॥१००॥
उत्पत्तौ कर्म्मणां चेष्टमज्ञानं कारणं यदि ।
तन्नाशात् स्यादनुत्पत्तिस्तेषां न फलवर्जनम् ॥१०१॥

---

तदा ऽस्ति, मनसो ऽभावादिति । सन्तु वा तदा ऽपि मनांसि, तानि तु संकीर्णानि, न तान्यात्मभिर्निष्कर्मभिर्निःशरीरैर्विविच्य स्वीकृतानि, तेन मनोगतान्यपि कर्माणि संकीर्येरन्, अतश्च सर्वाणि सर्वान् पुंसः पूर्वसृष्टौ मुक्तान् बद्धांश्चाऽविशेषेण बध्नीयुरित्याह मनसामिति । तस्माच्च शक्त्यवस्थां ऽधिकारशब्दवाच्या बन्धहेतुरित्याह तस्मादिति[९९] ।

अन्ये त्वधिकारो बन्धहेतुरित्यत्राऽधिकारशब्देन योग्यत्वमभिधीयतइत्याहुः, तत्रापि मोक्षाऽनुपपत्तिरित्याह योग्यत्वइति । कथं न युज्यते, ऽत आह चैतन्यमिति[१००] । पुंसो हीदमेव योग्यत्वं भोक्तृत्वे यच्चैतन्यं, तच्च पुंसो न कदा चिदपगच्छति, तदेव हि पुंसो रूपम्, इदमेव प्रकृतेर्भोग्यत्वयोग्यत्वं यदचैतन्यं, तदपि न तस्याः कदा चिदपगच्छति, तेन तयोर्भोग्यत्वभोक्तृत्वसम्बन्धाऽनपायात् कथं वियोग इति ।

एवं च यदुच्यते कर्मनिमित्तो बन्धः, कर्म त्वज्ञाननिमित्तम्, उत्पन्ने तु प्रकृतिपुरुषविवेकज्ञाने कारणाऽभावात्कर्मोऽनुत्पत्तौ बन्धाऽभावान्मोक्षसिद्धिरिति; तदप्ययुक्तमित्याह उत्पत्ताविति[१०१] । कर्मो-

---

* प्रकल्प्यते इति १ पु. पा. ।

ज्ञानं मोक्षनिमित्तं च गम्यते नेन्द्रियादिना ।
न च साङ्ख्यादिविज्ञानान्मोक्षो* वेदेन चोद्यते॥१०२॥
आत्मा ज्ञातव्य इत्येतन्मोक्षार्थं न च चोदितम् ।
कर्मप्रवृत्तिहेतुत्वमात्मज्ञानस्य लक्ष्यते ॥१०३॥
विज्ञाते चाऽस्य पारार्थ्ये या ऽपि नाम फलश्रुतिः ।
सा ऽर्थवादो भवेदेव न स्वर्गादेः फलान्तरम् ॥१०४॥

---

ऽनुत्पत्तिरेव हि ज्ञानात्स्यात्, न तु फलवर्जनं न बन्धाऽभाव इत्यर्थः । कर्मनिमित्तो हि बन्धः कर्मनिवृत्तौ नश्येत्, योग्यतामात्रनिबन्धनस्तु बन्धः, तस्य विज्ञाने सत्यपि योग्यत्वाऽनपायात् न निवर्त्ततेति । नन्वेवं ज्ञानस्य मोक्षनिमित्ततैव न स्यात्, अतस्तद्बलात् सत्यपि योग्यत्वे मोक्षसिद्धिः कल्प्यते, सत्यम्, अत एव योग्यत्वं बन्धहेतुः, सत्यपि तस्मिन्नात्मज्ञस्य बन्धाऽभावात्, अतः कर्मैव बन्धहेतुरिति ।

यदपि विवेकज्ञानस्य मोक्षनिमित्तत्वं सांख्यैरुक्तं, तदपि निष्प्रमाणकमित्याह ज्ञानमिति[१०२] । वेदात् तत् स्यादिति चेत्, अत आह न चेति । द्विविधं ह्यात्मज्ञानमुपनिषत्सूपदिश्यते, देहाद्विवेकज्ञानमविनाशी वा अरे ऽयमात्मेत्यादि, अथाऽऽत्मानमुपासीतेति प्राणायामाद्यङ्गोपेतमुपासनात्मकं ज्ञानं, तत्र यत्सांख्यादिभिर्मोक्षसाधनत्वेनाऽऽश्रितं विवेकज्ञानं तद्वेदेन मोक्षार्थं न चोदितमिति ।

नन्वात्मा ज्ञातव्य इति विवेकज्ञानविधावप्यपुनरावृत्तिर्वाक्यशेषे श्रूयते, ऽत आह आत्मेति[१०३] । कथमित्यत आह कर्मेति । विवेकज्ञानस्य पारलौकिकफलेषु ज्योतिष्टोमादिषु वृत्तिरध्ययनस्येव प्रयोजनं दृष्टमेवेति नाऽदृष्टफलाऽपेक्षेति । निर्ज्ञाते च ज्ञानस्य कर्मप्र-

---

* विज्ञानं मोक्षे इति १ पु. पा. ।

सुखोपभोगरूपश्च यदि मोक्षः प्रकल्प्यते ।
स्वर्ग एव भवेदेष पर्यायेण, क्षयी च सः ॥१०५॥
न हि कारणवत्किंचिदक्षयित्वेन गम्यते ।
तस्मात्कर्मक्षयादेव हेत्वभावे न मुच्यते ॥१०६॥
न ह्यभावात्मकं मुक्त्वा मोक्षनित्यत्वकारणम् ।
न च क्रियायाः कस्याश्चिदभावः फलमिष्यते ॥१०७॥

---

वृत्तिहेतुतया कर्मफलस्वर्गाद्यर्थत्वे वाक्यशेषस्था फलश्रुतिः पर्णमयीन्यायेनाऽर्थवादमात्रं स्यात्, न फलान्तरमलं बोधयितुमित्याह विज्ञातइति[१०४] । उपासनात्मकस्य तु ज्ञानस्य कर्मणि पुरुषे च दृष्टप्रयोजनाऽभावात् अदृष्टाऽपेक्षायां श्रुत्याद्यभावेन क्रत्वर्थत्वाऽभावाद्वाक्यशेषोपनीताऽभ्युदयनिःश्रेयसफलतया रात्रिसत्रवत्पुरुषार्थत्वमेवेति व्याकरणाऽधिकरणे वक्ष्यतीति ।

मोक्षसाधनत्वं सांख्यज्ञानस्य निराकृतं, प्रसङ्गान्मोक्षरूपमपि सांख्याऽभिमतं निराकरोति सुखेति[१०५] । कथमित्याह न हीति[१०६] । भावरूपं सर्वमुत्पत्तिधर्मकं घटादि क्षयधर्मकमेव, अतो न सुखात्मिका मुक्तिरात्मज्ञानेन क्रियते इति ।

कुतस्तर्हि मुक्तिः किंरूपा च, अत आह तस्मादिति । शरीरसम्बन्धो बन्धः, तदभावो मोक्षः, तेन निष्पन्नानां देहानां यः प्रध्वंसाऽभावः यश्चाऽनुत्पन्नानां प्रागभावः स मोक्षः, कर्मनिमित्तश्च बन्धः कर्मक्षयादेव न भवतीति ।

सिध्यति चाऽभावात्मकत्वे मोक्षस्य नित्यता, न त्वानन्दात्मकत्वे, इत्याह न हीति[१०७] । यदि त्वभावरूपस्यापि मोक्षस्य प्रा-

तत्र ज्ञाताऽऽत्मतत्त्वानां भोगात् पूर्वक्रियाक्षये ।
उत्तरप्रचया*ऽसत्त्वाद्देहो नोत्पद्यते पुनः ॥१०८॥
कर्मजन्योपभोगार्थं शरीरं न† प्रवर्तते ।
तदभावे न कश्चिद्धि हेतुस्तत्राऽवतिष्ठते ॥१०९॥
मोक्षार्थी न प्रवर्तेत तत्र काम्यनिषिद्धयोः ।
नित्यनैमित्तिके कुर्यात् प्रत्यवायजिहासया ॥११०॥

---

नमेव साधनमित्युच्यते, ऽत आह न चेति । यदि च न क्रियाफलमभावः, कुतस्तर्हि तत्सिद्धिः, ननु कर्मक्षयादेव, सत्यम,स एव तु कुतः सिद्ध्यति, अत आह तत्रेति[१०८] । यो हि देहाद् विविक्तमनन्तमजरममरमदुःखमात्मानं जानाति तस्य देहसंप्रयोगविरक्तस्य पूर्वकृतानां कर्मणां फलोपभोगेन क्षयात्तन्निमित्ते शरीरे पतिते ऽनागतानां च कर्मणामननुष्ठानादेवाऽसत्त्वाद्देहान्तराऽनुत्पत्तेरत्यन्ताऽसम्बन्धः शरीरेण भवति ।

नन्वसत्यपि कर्मणि मातापितृसंयोगादेव शरीरनिष्पत्तेर्न मोक्षसिद्धिरत आह कर्मेति[१०९] । धर्माऽधर्मसहितो मातापितृसंयोगः शरीरहेतुर्न तन्मात्रमिति ।

तेन मोक्षाऽर्थिभिर्न विवेकज्ञानमात्रेण कृतार्थंमन्यमानैः स्थातव्यं, किं त्वेवं कर्त्तव्यमित्याह मोक्षार्थीति[११०] । काम्यनिषिद्धे हि स्वफलयोरभ्युदयप्रत्यवाययोरुपभोगाय शरीरमारभेते, न शरीरारम्भं परिजिहीर्षता तेन कर्त्तव्ये, नित्यनैमित्तिके च पूर्वकृताऽधर्मक्षयाय कर्त्तव्ये, तदैव चाऽऽत्मोपासनस्यापि पूर्वकृतकर्मक्षयद्वारेणैव मो-

---

* प्रचयेति का. सं. पु. ।

† नः इति १ पु. पा. ।

प्रार्थ्यमानं फलं ज्ञातं न चाऽनिच्छोर्भविष्यति ।
आत्मज्ञे चैतदस्तीति तज्ज्ञानमुपयुज्यते ॥१११॥
सर्गप्रलयविज्ञानं समस्तजगदाश्रयम् ।
स्वशरीरविदां पुंसां नाऽऽधिक्येनोपयुज्यते ॥११२॥

---

क्षसाधनत्वम्, उपासनाऽभिप्रायमेव च ज्ञानाऽग्निः सर्वकर्माणि भस्मसात् कुरुते तथेति भगवद्वासुदेववचनं न विवेकज्ञानाऽभिप्रायमिति।

ननु नित्यान्येवाऽग्निहोत्रादीनि स्वर्गार्थान्यपीति तानि कुर्वतः कथं मोक्षो, ऽत आह प्रार्थ्यमानमिति[१११] । सत्यं, तानि तु फलाऽभिसंधिकृतानि स्वफलदानेन पुरुषं बध्नन्ति, न त्वनभिसंधिकृतानीति । तथा च भगवान् श्रीवासुदेवः, अनाश्रितः कर्मफलं कार्यं कर्म करोति यः, इति ।

यत्तु विवेकज्ञाने विधिवाक्यशेषे ऽपुनरावृत्तिश्रवणं, तदर्थवादमात्रमित्युक्तम्, अर्थवादस्यालम्बनं दर्शयति आत्मज्ञ इति। देहविविक्ताऽऽत्मज्ञ एव हि देहसम्बन्धे वैराग्याद्यथोक्तमोक्षोपायाऽनुष्ठानेन मुक्तो भवतीति तदालम्बनो ऽर्थवाद इति ।

यथा ऽऽत्मज्ञानस्य मोक्षार्थत्ववचनमर्थवादमात्रम्, एवं समस्तजगदाश्रयं सृष्टिप्रलयवचनमपीति प्रागेवोक्तं, तत्र कारणमाह सर्गेति[११२] । स्वशरीराणि नित्यताज्ञानमात्रेण स्वर्गमोक्षार्थप्रकृतिसिद्ध्यर्थे समस्तजगदाश्रयं सर्गप्रलयविज्ञानम्, अवश्यं च स्वाध्यायविध्यध्यापितस्योपनिषद्भागस्य प्रयोजनवदर्थपरता वक्तव्या, तेन दैवप्रभावकथनार्थो ऽयं सृष्टिप्रलयवादः; समस्तपुरुषकाराऽभावे ऽपि सृष्टिकाले दैववशेनैव सर्वं प्रवर्त्तते, प्रलयकाले च सत्यपि पुरुषकारे दैवोपरमादेवोपरमति, तस्माद्धर्माऽनुष्ठानएव यतितव्यमित्येतत्परं सृष्टिप्रलयवचनमिति ।

तस्मादद्यवदेवाऽत्र सर्गप्रलयकल्पना ।
समस्तक्षयजन्मभ्यां न सिध्यत्यप्रमाणिका ॥११३॥
सर्वज्ञवन्निषेध्या च स्रष्टुः सद्भावकल्पना ।
'न च धर्मादृते तस्य भवेल्लोकाद्विशिष्टता* ॥११४॥
न चाऽननुष्ठितो धर्मो नाऽनुष्ठानमृते मतेः† ।
न च वेदादृते सा स्याद्वेदो न च पदादिभिः ॥११५॥
तस्मात् प्रागपि सर्वे ऽमी‡ स्रष्टुरासन् पदादयः' ।
स्यात्तत्पूर्वकता चाऽस्य चैतन्यादस्मदादिवत् ॥११६॥

---

उपसंहरति तस्मादिति[११३] । यथा च बुद्धादेः सर्वज्ञत्वं पुरुषत्वादस्मदादिवन्निषिद्धम, एवं प्रजापतेरपि स्रष्टृत्वं निषेध्यमित्याह सर्वज्ञवदिति[११४] ।

सतोरपि सृष्टिप्रलययोः पदपदार्थसम्बन्धस्य वेदानां च न कृत्रिमत्वमित्याह न चेति द्वयेन । न हि स्रष्टुरस्मदादिभ्यो ऽतिशयः सहजः सम्भवति पुरुषत्वादस्मदादिवदेव, अतो धर्मनिमित्तो वक्तव्यः, न चाऽननुष्ठितो धर्मः कार्यं करोति, न चाऽसति ज्ञाने ऽनुष्ठानं सम्भवति, न च वेदादृते ज्ञानं, न च वेदः पदपदार्थसम्बन्धैर्विना शक्तोत्यर्थमवबोधयितुम, अतः प्रागपि सृष्टेः सन्त्येव पदादयः, यथाह मनुः—

सर्वेषां च स नामानि कर्माणि च पृथक् पृथक् ।
वेदशब्देभ्य एवादौ पृथक् संस्थाश्च निर्ममे ॥ इति ।

ततः स्रष्टुर्वेदपूर्वत्वमित्याह स्यादिति[११६] ।

---

* लोकविशिष्टतेति ३ पु. पा. ।

† मितेरिति पाठान्तरम् । ‡ सर्वे वेति का. सं. पु. ।

एवं ये युक्तिभिः प्राहुस्तेषां दुर्लभमुत्तरम् ।
अन्वेष्यो व्यवहारो ऽयमनादिर्वेदवादिभिः ॥११७॥
प्रत्यक्षादावुपक्षीणे यो ऽनुमानेन डित्थवत् ।
सम्बन्धित्वान्नियोक्तारं गवादावपि कल्पयेत् ॥११८॥
गवादिशब्दसम्बन्धं सर्वो ऽन्यस्मात् प्रपद्यते ।
मद्वत्तद्व्यवहारित्वा*त्तस्यैतत्प्रतिसाधनम् ॥११९॥
देवदत्तादिशब्दे ऽपि प्रसक्तैवमनादिता ।
सम्बन्धस्य बलीयस्त्वाद दृष्टबाधान्निवर्तते ॥१२०॥
तत्रापि शक्तिनित्यत्वं, नियोगस्य त्वनित्यता ।
तद्गताच्चाप्यनित्यत्वाच्छक्तौ भ्रान्तिः प्रवर्तते ॥१२१॥
गवादिषु तु न भ्रान्तिर्नियोगाऽनादिता यतः ।
यो यो गृहीतः सर्वस्मात्पूर्वं सम्बन्धदर्शनात् ॥१२२॥

---

एवं स्रष्टुर्वेदपूर्वत्वं साधयतां न किंचिदुत्तरं भवति, तेन सत्यपि सर्गे सुप्तप्रतिबुद्धन्यायेनाऽनादिरेव वेदव्यवहार इत्याह एवमिति[११७] । एवं सम्बन्धरि प्रत्यक्षादिषु निराकृतेषु पुनरनुमानान्तरमुपन्यस्यति प्रत्यक्षादाविति[११८] । दूषयति गवादीति[११९] ।

चोदयति देवदत्तेति स्या[१२०]ऽन्तेन । परिहरति बलीयस्त्वादिति । यद्वा तत्रापि नित्यैव शक्तिः, प्रयोगमात्रमनित्यं, तदनित्यतया च शक्तावनित्यत्वभ्रान्तिर्भवति, परमार्थतस्तु नित्यैव सा, अतः सिद्धसाधनमिति ।

परमतेनाह तत्रेति[१२१] । गवादिषु भ्रान्तिरपि नास्ति, प्रयोग-

---

* महत्तद्व्यवहारित्वादिति का. सं. पु. ।

सिद्धः सम्बन्ध इत्येवं सम्बन्धादिर्न विद्यते ।
यदा चाऽऽप्तप्रणीतत्वा*च्छब्दो ऽर्थं प्रतिपादयेत्† ॥१२३॥
न स्वशक्त्या तदाप्तत्वं मितौ‡ न स्मर्यते कथम् ।
यथा बौद्धादयो यावद्बुद्धाद्युक्तं न जानते ॥१२४॥
न तावत्प्रतिपद्यन्ते बोधे वाक्येन सत्यपि ।
समये कथ्यमाने ऽन्यैरस्मरन्तो ऽपि§ पाणिनिम् ॥१२५॥

---

स्याप्यनादित्वादित्याह गवादिष्विति[१२२] । कथमनादिरतो ऽत्राह यो य इति ।

अत्र भाष्यकारेण संम्बन्धरि प्रत्यक्षं प्रमाणं नास्ति इत्युक्त्वा चिरवृत्तत्वात् प्रत्यक्षाऽविषयत्वमाशङ्क्य "चिरवृत्तः सन् न स्मर्येते"॥त्युक्तं, तस्यार्थमाह यदेति[१२३] । यदा हि कश्चित् पदपदार्थसम्बन्धं कृत्वा धर्माऽधर्मप्रतिपादनाय वेदवाक्यानि कृतवान् तदा ऽवश्यमसौ सम्बन्धस्य कर्त्ता, स एव च तैः पदैर्वेदवाक्यरचनात्मकं व्यवहारं करोतीति समयव्यवहारयोरेककर्तृत्वं प्रतिपत्तृभिः स्मर्त्तव्यं,तथा च वाक्यादर्थं प्रतिपद्यमानानामवश्यं वाक्यकर्त्तुराप्तत्वं स्मर्त्तव्यं, तदधीनत्वादर्थनिश्चयस्य, न च वेदादर्थं प्रतिपद्यमानाः समयकर्त्तारं तेन सह वेदकर्त्तुरेकत्वं तस्य चाप्तत्वं स्मरन्तो दृश्यन्तइति ।

कर्त्तुराप्तत्वं स्मर्त्तव्यमित्यत्र दृष्टान्तमाह यथेति[१२४] । समयव्यवहारयोरेककर्तृत्वस्मरणे भाष्यकारेण "न हि विस्मृते वृद्धिरादैजिति सूत्रस्य कर्त्तरि वृद्धिर्यस्याऽचामादिस्तद् वृद्धमिति किं चित्प्रतिपद्येत"¶ इति दृष्टान्तो दर्शितः, तमाक्षिपति समयइति[१२५]। वृद्धिरा-

---

* प्रतीतत्वादिति ३ पु. पा. ।
† इदमर्धं त्रुटितं ३ पु. ।
‡ आप्तत्वमितः इति पाठान्तरम् ।
§ असमन्तो ऽपीति का. सं. पु. ।
|| शा. भा. पृ. १५ प. २३ ।
¶ शा. भा. पृ. १६ प. ११ ।

आदैच:* प्रतिपद्यन्ते वृद्धिं कर्त्तुं स्मृतिर्वृथा ।
सूत्रस्थः पाणिनिस्तत्र स्वसंज्ञां प्रतिपादयेत् ॥१२६॥
गौः सास्नादिमतीत्येवं वाक्यं त्वत्र न विद्यते ।
असम्बन्धाच्च सर्वेषामेवं कर्तुमसम्भवः॥१२७॥
तस्मान्न प्रतिपत्तिः स्यात् कथं चित् कर्तृवर्जिता ।
दृष्टार्थव्यवहारत्वाद्वृद्ध्यादौ सम्भवेदपि ॥१२८॥

---

दैजिति समयाऽनुसारेण वृद्धिर्यस्याचामादिरिति व्यवहार इति केन चित्कथिते पाणिनिमस्मरन्तो ऽपि वृद्धिमादैचः प्रतिपद्यन्तइति । समाधत्ते सूत्रस्थ इति[१२६] । यद्यपि पाणिनिरित्येवं न स्मर्यते तथापि यः समयस्य कर्त्ता स एव व्यवहर्तेत्येवं स्मर्यतएवेति । न त्वेवं गवादिशब्देष्वस्ति, न हि सास्नादिमती गौरित्येवं समयवाक्यमस्ति, यदनुसारित्वं गामानय गामालभेतेति लोकवेदव्यवहाराणां स्मर्येतेत्याह गौरिति[१२७] ।

किं च, सर्वशब्दानामर्थसम्बन्धाऽभावात्समयो ऽपि न सम्भवति, न ह्यप्रसिद्धे सास्नादिशब्दार्थे सास्नादिमती गौरिति वाक्यवचनं सम्भवतीत्याह असम्बन्धादिति । प्रकृतं कर्तृस्मरणमुपसंहरति तस्मादिति[१२८] । किं च, दृष्टार्थेषु संज्ञापरिभाषार्थेषु वृद्धिर्यस्याऽचामादिस्तद् वृद्धमित्येवमादिषु व्यवहारेषु यद्यपि विना समयव्यवहारयोरेककर्तृत्वस्मरणेनाऽऽसत्वस्मरणेन चाऽर्थप्रतिपत्तिः सिध्येत्, तथापि यो धर्माय शब्दनियमः स न विना पाणिनिस्मरणेन सिद्ध्यतीत्याह दृष्टार्थेति ।

---

* आदेवः इति का. सं. पु. ।

धर्म्मीय नियमोऽत्रापि न विना पाणिनेर्भवेत् ।
आकाराऽनुगमो यो हि वृद्ध्या स्यादाश्वलायने ॥१२९॥
नाऽसावपाणिनीयत्वे साधुरित्यवगम्यते ।
दृष्टे भवतु मा वा भूत् कर्तृसंप्रतिपन्नता ॥१३०॥
वैदिको व्यवहारस्तु न कर्तृस्मरणादृते ।
दुर्गेषु गवि गोशब्दप्रयोगो गम्यते* कथम् ॥१३१॥
गत्वा चेत्केन चिद् दृष्टः सम्बन्धः किं न गच्छति ।
ईश्वरत्वाद्गतिश्चास्य न क्व चित्प्रतिबध्यते† ॥१३२॥

---

नियमोदाहरणमाह आकारेति[१२९] । यो हि किति चेत्यादिवृद्धिविधानादाश्वलायनादिषु पदेष्वत्रामादरकारस्याऽऽकारानुगमो नासावसति पाणिनीयत्वस्मरणे साधुरिति निश्चीयतइति । एवं गामानयेत्यादिषु मा नाम समयकर्त्तुर्व्यवहारकर्त्तुश्च संप्रतिपत्तिर्भूत्, वेदेऽपि प्रतिपत्तिमात्रं विनापि संप्रतिपत्त्या सिद्ध्यतु नाम, व्यवहारस्तु यो ऽग्निहोत्राद्यनुष्ठानात्मकः सो ऽदृष्टार्थो वाक्यैकप्रमाणको नाऽसति वाक्यकाराऽऽप्तत्वस्मरणे सिद्ध्येत्, तदवश्यं स्मर्त्तव्यस्य वेदानां सम्बन्धानां च कर्त्तुरस्मरणाद्योग्याऽनुपलम्भनादभावे ऽवधारिते सिद्धं वेदानां संबन्धानां चनित्यत्वमित्याह दृष्टइति[१३०] ।

अव्यतिरेकश्चेति‡ सूत्रं वृत्तिकारेण द्विधा व्याख्यातं, देशाव्यतिरेके कालाऽव्यतिरेके च, तत्र प्रथमव्याख्यानं दूषयति दुर्गेष्विति[१३१] । शङ्कते गत्वेति[१३२] । दूषयति संबन्धेति । विशे-

---

* कल्प्यते इति १ पु. का. सं. पु. च ।

† प्रतिहन्यते इति २ पु. पा. । ‡ जै. सू. अ. १ पा. १ सू. ५ ।

बहूनां कार्यतश्चापि सङ्गानं केन* वार्यते ।
एकत्र कथितं† चापि लोकेनाऽन्यत्र नीयते ॥१३३॥
वृद्धादिवदतो व्याख्या द्वितीयैवाऽत्र शोभना ।
कांश्चित्प्रसिद्धसम्बन्धानभ्युपेत्य वदेद्यदि‡ ॥१३४॥
सम्बन्धकरणं, तत्र के सिद्धा इति दुर्वदम् ।
न तावदन्यएवासन् शब्दा§ इति हि युक्तिमत्॥१३५॥

---

यतश्चाऽष्टगुणैश्वर्य्यसंपन्नस्य सम्बन्धुरप्रतिहतगतित्वात्सम्भवति दु-र्गगमनमित्याह ईश्वरत्वादिति ।

यदप्युक्तं, बहवः सम्बन्धारः कथं संगंस्यन्तइति, तदप्याक्षिप-ति बहूनामिति[१३३] । सर्वत्रैकरूपशब्दार्थव्यवहारदर्शनात्सङ्गान-मनुकल्पमिति । मा भूद्वा सर्वदुर्गगमनं बहूनां वा संप्रतिपत्तिस्तथा-पि सम्भवत्यैकरूप्यमित्याह एकत्रेति व[१३४]दन्तेन । तस्माद् द्विती-यैव व्याख्या संमतेत्याह अत इति ।

भाष्यकारेण सर्वेषामप्रसिद्धत्वे सम्बन्धक्रियैव नोपपद्यतइत्यु-क्तं, तत्र किं चिदाशङ्कते कांश्चिदिति करण[१३५]मन्तेन । त-द्विकल्प्य दूषयति तत्रेति । न तावदद्यतनेभ्यो गवादिभ्यो ऽन्ये शब्दाः प्रागासंस्तैश्च तेषां सम्बन्धकरणमयुक्तं, शब्दान्तरसद्भावे प्र-माणाऽभावादित्याह न तावदिति ।

---

* सङ्गानेकेनेति का. सं. पु. ।

† कथितश्चापीति १ पु. ।

‡ भवेद्यदीति पु. १ प. ।

§ एवासच्छब्दा इति १ पु. ।

विशेषो ऽद्यतनानां च गवादीनां न दृश्यते ।
शब्दाऽर्थाऽनादितां मुक्त्वा सम्बन्धाऽनादिकारणम् ॥ १३६॥
न स्यादन्यदतो वेदे सम्बन्धादिर्न विद्यते ।
उपायरहितत्वेन सम्बन्धकरणाऽनुमा* ॥१३७॥
अनाख्यानाऽनुमानं† तु दृष्टेनैव विरुध्यते‡ ।
वृद्धानां दृश्यमाना च प्रतिपत्तिः पुनः पुनः ॥१३८॥

---

अथ त्वद्यतनेष्वेव कांश्चित्प्रसिद्धसम्बन्धानङ्गीकृत्य तैरितरेषां सम्बन्धकरणमुच्येत तदपि इमे प्रसिद्धसम्बन्धा नेमइति विशेषाऽग्रहणादयुक्तमित्याह विशेष इति[१३६] । इतश्च नित्यः सम्बन्ध इत्याह शब्दार्थेत्यन्य[१३७]दन्तेन । यदा हि शब्दार्थयोरनादित्वं शब्दाऽधिकरणाऽऽकृतिवादयोः सिद्धं तदैवाऽनर्थकस्य शब्दस्य प्रयोगाऽसम्भवात् सम्बन्धाऽनादिता ऽपि सिद्धैवेति । उपसंहरति अत इति । वेदइति वैदिकानां गवादीनां, न तु गाव्यादीनां देवदत्तादीनां चेति।

"स्यादेतत्, असिद्धसम्बन्धा बाला वृद्धेभ्यः कथं प्रतिपद्यन्त"‡ इति चोद्यभाष्यं, तस्यैवोत्तरं "न हि दृष्टे ऽनुपपन्नं नाम"§ति, तद् व्याचष्टे उपायेति। नाऽप्रसिद्धार्थैः सम्बन्धकरणाय वाक्यरचना सम्बन्धकारस्य सम्भवति, प्रसिद्धसम्बन्धाख्यानाय तु सम्भवत्येव कथयितुः प्रसिद्धत्वाद्वाक्यरचना, यदि परं प्रतिपत्तॄणामप्रसिद्धसमस्तशब्दार्थानां न कथं चन वाक्यादर्थप्रतीतिः सम्भवतीत्युच्येत तच्च दृष्टविरुद्धमिति ।

अप्रसिद्धश्चाऽवगतेरुपायाऽभावः, तर्ह्यवश्यं कथनवाक्येनैव सम्बन्धग्रहणं व्यवहाराऽनुमिता ऽपि शब्दानन्तरभाविन्यर्थप्रतिपत्तिः

---

* संम्बन्धकरणाऽनुमेति १ पु.पा. । † अनाख्याताऽनुमानामिति ३ पु.।
‡ शा. भा. पृ. १० प. २१ । § शा. भा. पृ. १७ प. २२ ।

उपाय इति तद्वानिरसिद्धा ऽवगतिं प्रति ।
हस्तसंज्ञाद्युपायो हि सिद्धो नाऽऽद्यक्रियासु नः ॥१३९॥
न ह्यसौ ज्ञातसामर्थ्यो विना ऽन्यैर्व्यवहर्तृभिः ।
'शब्दवृद्धाऽभिधेयांश्च प्रत्यक्षेणात्र पश्यति ॥१४०॥
श्रोतुश्च प्रतिपन्नत्वमनुमानेन चेष्टया ।
अन्यथाऽनुपपत्त्या च बुध्येच्छक्तिं द्वयाऽऽश्रिताम्'* ॥
अर्थापत्त्या ऽवबुद्ध्यन्ते सम्बन्धं त्रिप्रमाणकम् ॥१४१॥

इति सम्बन्धाऽऽक्षेपपरिहारः ॥

---

पुनः पुनर्दृश्यमाना सम्भवत्येव शब्दार्थसम्बन्धाऽवगतेरुपाय इत्याह वृद्धानामिति[१३८] ।

ननु सम्बन्धकरणस्यापि न वाक्यमेवोपायः, हस्तनिर्देशादेरप्युपायस्य सम्भवादत आह हस्तेति[१३९] । हस्तसंज्ञादयो ऽपि हि प्रसिद्धसम्बन्धा एवाऽर्थं प्रतिपादयेयुरिति । न च सर्गकाले ते ऽपि प्रसिद्धसम्बन्धा इति । कथमित्याह न हीति[१४०] । यदा हि कस्यचिद्धस्तचेष्टाविशेषादनन्तरमन्यस्याऽर्थविशेषविषयो व्यवहारो दृश्यते तदा सम्बन्धो गृह्यते, न च जगदादौ व्यवहर्त्तारः के चित् सन्ति, तत्र कथमसिद्धार्थसम्बन्धान् हस्तसंज्ञाविशेषानर्थविशेषप्रतिपत्त्यर्थमीश्वरः प्रयुञ्जीत, प्रतिपत्तारो वा ततो ऽर्थं प्रतिपद्येरन्निति।

केन पुनः प्रमाणेन वृद्धव्यवहारे सम्बन्धग्रहणम्,अत आह शब्देति सार्द्धेन। तदेवं प्रमाणत्रयाऽधीनं सम्बन्धमर्थापत्त्या साक्षाद्बुध्यन्ते, प्रत्यक्षाऽनुमाने तु तदुत्पादे नोपयुज्येते इत्याह अर्थापत्त्येति[१४१] । तदेवमकृत्रिमः शब्दाऽर्थयोः संज्ञासंज्ञिलक्षणः सम्बन्धः ॥

इति श्रीपार्थसारथिमिश्रविरचिते न्यायरत्नाकरे सम्बन्धपरिहारः समाप्तः ॥

---

* द्वयात्मिकामिति पाठान्तरम् ।

## अथ चित्राऽऽक्षेपपरिहारः ।

चित्रादिनिष्फलत्वे ऽपि* यदुक्तं साधनद्वयम् ।
तत्र हेतोरसिद्धत्वमानन्तर्यं ह्यचोदितम् ॥१॥
आनन्तर्यश्रुतिश्चात्र सामर्थ्यादपि नेष्यते ।
नाऽविशेषा फलोत्पत्तिः कर्मणा नोपपद्यते ॥२॥
'कर्मणां चापि वैचित्र्याद् देशकालाद्यपेक्षणात् ।
कस्य चिच्चाऽर्द्धभुक्तत्वात्कर्माऽन्यत्प्रतिबध्यते ॥३॥

---

### अथ चित्राक्षेपपरिहारः ।

स्वपक्षं साधयित्वा ऽधुना पूर्वोक्तमाक्षेपमनुभाष्य परिहरति चित्रादीति[१] । निष्फलत्वे ऽपि यदुक्तं साधनद्वयं तत्र हेतोरसिद्धत्वमानन्तर्यं ह्यचोदितमिति साधनत्रयं पूर्वमुक्तं, चित्रादिचोदनानामप्रामाण्यार्थम् एकं, चित्रादिनिष्फलत्वार्थं द्वयं, न वा पशुफला चित्रा, ते ऽपि तत्साध्या न भवन्तीति, तदस्मिन् द्वये हेतोरसिद्धत्वमानन्तर्ये फलदानकालत्वेन चोदिते स्वकाले फलाऽदानं सिध्येत्, तदा च कालान्तरे फलस्याऽप्रमाणकत्वात्तदुत्पत्तावसद्भावो ऽपि सिध्येत्, आनन्तर्याऽचोदने तु कालान्तरे ऽपि फलदानसम्भवात् स्वकाले अदाने तदुत्पत्तावसद्भावश्चाऽसिद्ध इति ।

यत्तु सामर्थ्यादानन्तर्यं चोदितमित्युक्तं,तत्राह आनन्तर्येति[२] । कारणमाह नाऽविशेषेति । भवति हि कृष्यादिवत् कालान्तरे ऽपि फलमिति । नन्वानन्तर्ये ऽचोदिते ऽपि पाकादिवत्सम्भवात् किमित्यनन्तरं पशवो न भवन्त्यत आह कर्मणामिति[३] सार्द्धेन । कानि चि-

---

* साधनत्वेनेति का. पा. २ पु. पा. ।

तेनाऽऽनन्तर्यनिष्पत्तिः फलस्येहाऽप्रमाणिका' ।
प्रत्यक्षादिविसंवादो न शब्दे दोषमासजेत् ॥४॥
आनन्तर्यविसंवादो नाऽविशेषप्रवर्त्तिनीम् ।
चोदनां बाधितुं शक्तः स्फुटाद्विषयभेदतः ॥५॥
या तु मर्दनसाधर्म्यादानन्तर्याऽनुमा कृता ।
बाध्यते ऽनुपलब्ध्या ऽसौ समानविषया यतः ॥६॥
दृष्टाऽर्थस्यापि सेवादेरायातमपि सत्फलम् ।
उत्पद्यते चिरेणैव प्रतिबन्धेन केन चित् ॥७॥
उप्तमात्रे न हि व्रीहौ फलमुत्पद्यते क चित् ।
अथाऽङ्कुरो ऽपि तत्र स्यात्स्वर्गो ऽप्यस्तीति गम्यताम् ॥८॥

---

स्वत एव विप्रकृष्टफलानि कृष्यादिवत्, कानि चिद्देशकालाऽपेक्षत्वाद् विलम्बन्ते, कानि चिद् विरुद्धफलेन कर्मान्तरेण लब्धवृत्तिना ऽर्द्धभुक्तेन प्रतिबन्धात्स्वफलमददत्यवतिष्ठन्ते, तेनाऽऽनन्तर्यं नाऽवश्यम्भावीति ।

यत्तु प्रत्यक्षादिविसंवादाच्चित्रादिचोदनानामप्रामाण्यमुक्तं, तत्परिहरति प्रत्यक्षादीति[४] । कथमित्याह आनन्तर्येति[५] । आनन्तर्यविषयो हि प्रत्यक्षविसंवादः, नाऽसावविशेषप्रवर्त्तनीं चोदनां बाधते, विषयभेदात् । एवं च यत्साधनमुक्तं 'प्रत्यक्षाद्यविकारे ऽपि तैरर्थाऽसङ्गतिर्यत'इति, तदप्यसिद्धं, चोदनाऽर्थे प्रत्यक्षादेरनधिकारात् । यदि त्वनन्तरफलत्वमेव चित्रायाः साध्यते, न निष्फलत्वं, तत् प्रत्यक्षाऽनुपलब्ध्या समानविषयया बाध्यतइत्याह या त्विति[६] ।

कर्मान्तरप्रतिबन्धात् फलविलम्बस्योदाहरणमाह दृष्टार्थस्येति[७] । स्वामिप्रसादादावुपनतमपि दृष्टेनाऽदृष्टेन वा प्रतिबन्धान्न सहसा निष्पद्यतइति । कर्मवैचित्र्याद्विलम्बनस्योदाहरणमाह उप्तेति[८] ।

स्थूलीभूतश्चिरेणैष भोग्यत्वं प्रतिपद्यते ।
सर्वस्योत्पद्यमानस्य क्रमः स्वाभाविकः स्थितः ॥९॥
अनन्तरफलत्वं तु चित्रादेर्यदि साध्यते ।
ततः स्यात्सिद्धसाध्यत्वमन्यदा न फलं भवेत् ॥१०॥
'व्यभिचाराच्च सेवादेः पश्वादेः साधनान्तरम् ।
किमप्यदृष्टमस्त्येव तत्राऽन्यन्निष्प्रमाणकम् ॥११॥
ईश्वरेच्छाऽधिकारादिशब्दालिङ्गादिवर्जनात् ।
कृतं कदा चिच्चित्रादिशब्देन त्ववगम्यते' ॥१२॥

---

शङ्कते अथेति । परिहरति स्वर्गोऽपीति । स्वर्गग्रहणमनास्थया पश्वादिविषयत्वादाक्षेपसमाधानयोः, अस्ति हि चित्रादिष्वपि पश्वादिफलस्याऽङ्कुरस्थानीयमपूर्वं शास्त्रार्थोऽवधारणवेलायामेव तद्ववगम्यते, अनेकाऽङ्गप्रधानानां विना ऽपूर्वेण साहित्याऽसम्भवात्, शक्यते चाऽनन्तरफलाऽनुपलम्भादेव प्रागनन्तर्भावितमपूर्वं पश्चादन्तर्भावयितुमिति ।

यद्यङ्कुरात्मना निष्पन्नं फलं, किमिति तर्हि तदैव न भुज्यते, अत आह स्थूलीभूत इति[९] । ननूत्पद्यमानं तत्सहसैव स्थूलात्मना किं नोत्पद्यते, अत आह सर्वस्येति । दृष्टा हि वृक्षादीनां सूक्ष्माऽङ्कुरादिक्रमेणोत्पत्तिरिति ।

यस्त्वनन्तरफलाऽनुपलम्भाच्चित्रादीनामनन्तरफलाऽभावमात्रं साध्यते, ततः सिद्धसाधनत्वमित्याह अनन्तरेति[१०] ।

यच्च "कालान्तरे फलस्याऽन्यत् प्रत्यक्षं कारणमस्ति"* इति चोद्यस्योत्तरं भाष्यं "तच्चैव हि तत्र कारणं शब्दश्चेति"† तदुपपादयति व्यभिचारादिति[११] द्वयेन । अधिकारः सांख्यैरुक्तो,ऽधिकारो बन्धहेतुरिति ।

---

* शा. भा. पृ. १८ प. १४ । † शा. भा. पृ. १८ प. १९ ।

निर्निमित्ता न चोत्पत्तिर्न हि सर्वाऽप्रमाणता ।
बोधयन् न च शब्दो ऽत्र प्रामाण्यादतिवर्त्तते* ॥१३॥
येषां त्विहफलान्येव चित्रादीनीति कल्पना ।
निर्निमित्तं फलं तेषां स्यादिहाऽकृतकर्म्मणाम् ॥१४॥
चित्रादीनां फलं तावत्क्षीणं तत्रैव† जन्मनि ।
न च स्वर्गफलस्येह कश्चिदंशो ऽनुवर्तते ॥१५॥

---

ये त्वाहुः, स्वाभाविक्यैव सर्वोत्पत्तिमतामुत्पत्तिः, किमत्र दृष्टेनाऽदृष्टेन वा कारणेनेति, तान् प्रत्याह निर्निमित्तेति[१३]। कारणमाह न हीति । सर्वाणि हि प्रमाणानि कार्यकारणभावं बोधयन्ति, मर्दनसुखादीनां कार्यकारणत्वं प्रत्यक्षेणाऽवगम्यते, अन्येषामनुमानादिभिः, न च तेषामप्रामाण्यम्, अतो निर्निमित्तोत्पत्तिः स्यादिति ।

भवत्वनन्तरभाविनां प्रतिग्रहादीनां पश्वादिकारणत्वं प्रत्यक्षाद्यवगमात्, चित्रादीनां तु कथम्, अत आह बोधयन्निति । शब्दप्रामाण्यात् तेषामपि कारणत्वमिति ।

एवं तावदानन्तर्याऽभावे ऽपि चित्रादीनां पश्वादिफलत्वं समर्थितम्, इदन्तु चिन्त्यं, किमिहैव जन्मनि चित्रादीनां फलम्, उतेह वा जन्मान्तरे वेति । भर्तृमित्रादयस्त्विहैवेति मन्यन्ते । तथा च योगसिद्ध्यधिकरणे वक्ष्यतइति, तान् प्रत्याह येषां त्विति[१४] । कथं निर्निमित्तमित्याह चित्रादीनामिति[१५] ।

नन्वामुष्मिकस्वर्गफलज्योतिष्टोमादिकर्मशेषेणेहाऽकृतकर्मणामपि पश्वादिफलं सिद्ध्यति, तथा च गौतमः 'स्वधर्मनिष्ठाः प्रेत्य कर्मफ-

---

* अनिवर्तते का. सं. पु. । † तत्रत्येति १ पु. पा. ।

नैव ह्यन्यफलं कर्म साधयेन्नः फलान्तरम् ।
गौतमीये ऽपि* तच्छेषस्तस्माच्चित्राद्यपेक्षया ॥१६॥
स्वाभाविकत्वे सिद्धे च कर्माऽनन्तरभाव्यपि ।
फलं क्रियानिमित्तत्वं न कथं चित्प्रपद्यते ॥१७॥
तत्र म्लेच्छादिवत्सर्वे कर्माऽकृत्वा ऽपि वैदिकम् ।
फलं लभन्तइत्येवं नष्टा वेदप्रमाणता ॥१८॥
अनन्तरं नियोगेन पश्वादि च† भवेद्यदि ।
प्रत्यक्षफलतैव स्यात् त्रिवृत्यानविरेकवत्‡ ॥१९॥
जन्मान्तराऽनुभूतं च न स्मर्यतइतीदृशम् ।
न भाष्यं न च सूत्रं स्यादप्राप्ते शास्त्रमर्थवत्§ ॥२०॥

---

लमनुभूय ततः शेषेण विशिष्टजात्यादिमन्तो जन्म प्रतिपद्यन्त'इति, अत आह न चेति । कथमित्याह नैव हीति[१६] । कथं तर्हि गौतमवचनम्, अत आह गौतमीये ऽपीति । ततो निर्निमित्तमेवेह अकृतकर्मणां पश्वादिकं स्यादिति । ततः को दोषः, अत आह स्वाभाविकत्वइति[१७] । अनन्तरभाविनो ऽपि फलस्य स्वाभाविकत्वसम्भवादानन्तर्यं काकतालीयं स्यादिति । ततश्च वेदाऽप्रामाण्यं स्यादित्याह तत्रेति[१८] ।

दोषान्तरमप्यैहिकत्वे दर्शयति अनन्तरमिति[१९] । इहैव जन्मनीत्यर्थः । एवं च सूत्रभाष्यविरोधः स्यादित्याह जन्मेति[२०] ।

---

* गौतमे ऽपि चेति का. सं. पु. । † पश्वादिवेति का. सं. पु. ।
‡ त्रिवृत्या न विरेकवदिति का. सं. पु. ।
§ सूत्रं च स्यादप्राप्ते ऽत्र शास्त्रवदिति का. सं. पु. ।

तस्मात्कालाऽविशेषेण चोदनार्थो यथा स्थितः ।
स तथैवाऽनुगन्तव्यो नाऽधिको निष्प्रमाणकः* ॥२१॥
सर्वेषां कर्मवैगुण्यात्फलाऽभावं वदन्ति ये ।
आनन्तर्यमुपेत्यैव ते स्वाभाविकवादिनः ॥२२॥
स्वर्गस्याऽऽमुष्मिकत्वं तु षष्ठाद्ये स्थापयिष्यते† ।
पश्वादेर्नियमाऽभावो योगसिद्धिरितीह तु ॥२३॥
यदा कदा चिद्भवदेतदिष्यते
फलं हि पश्वादि न साम्परायिकम् ।

---

स्मृत्यधिकरणे जन्मान्तराऽनुभूतं च न स्मर्यतइति च वदन् भाष्यकारो नैवंजातीयकानामैहिकफलत्वनियमो ऽस्तीति दर्शयति। जैमिनिरपि प्रमाणान्तराऽप्राप्ते शास्त्रमर्थवदिति दर्शयतीति। तस्माद्यथाचोदनमविशेषितकालमेव फलं न त्विहैवेति कालाऽऽधिक्यं प्रमाणवदित्याह तस्मादिति[२१]।

ये ऽप्यत्तपादीयाश्चित्रादीनामैहिकफलत्वमेवाऽभ्युपयन्तः किमिति तर्हि तत्कारिणां सर्वेषामनन्तरमेव फलं न भवतीति चोद्यं वैगुण्येन समादधत, तन्मते ऽपि पूर्ववदिहाऽकृतकर्मणां फलं स्वाभाविकमेवोपपद्यतइत्याह सर्वेषामिति[२२]। नन्वेवं स्वर्गस्यापि कालाऽविशेषाऽश्रवणादनियमः स्यादत आह स्वर्गस्येति[२३]।

ननु पश्वादीनामप्यैहिकत्वं योगसिद्ध्यधिकरणे वक्ष्यते, अत आह पश्वादेरिति। एतदेव विवृणोति यदेति[२४]। तत्र हि पश्वादीनां साम्परायिकपर्यायाऽऽमुष्मिकत्वमेवेति पूर्वपक्षं विधायैहिकत्वमप्य-

---

* न प्रमाणक इति का. सं पु.। † साधायिष्यते इति १ पु.पा.।

तथा*स्थितस्यैव हि तस्य साधनं
विधीयते यो ऽपि भृशं त्वराऽन्वितः ॥२४॥
साधारणं यत्तु फलं बहूनां
स्वभावतस्तादृशमेव चेष्टम् ।
सर्वस्य वा ऽऽसन्नतयैव काम्यं
वृष्ट्यादि तच्चैहिकमेव युक्तम् ॥२५॥
कमिपद†मविशिष्टं यद्यपि श्रूयते वा‡
भवति फलविशेषो नाऽन्यथा काम्यते हि§ ।

---

स्तीति सिद्धान्तितम्। यद्यपि शब्दो न श्रूयते न सांपरायिकत्वनियम-निराकरणेन यदाकदाचिद्भवत्वेनाऽनियम एव पश्वादीनां वक्ष्यते, न त्वैहिकत्वमिति। यस्त्वन्यतं त्वरितो ऽद्यैव मे पशवो भूयासुरिति कामयते तस्यैव वा किं तदैव फलं भवति, नेत्याह तथास्थितस्येति। यदा कदा चिद् भवतः साधनं नाऽतित्वरिताऽपेक्षया ऽन्यादृशं भवतीति।

किमेष एवोत्सर्गः, स्वर्गादन्यदिह वा ऽमुत्र वेति, नेत्याह साधारणमिति[२५]। यत्खलु वृष्ट्यादिकं स्वभावत एव बहुसाधारणं तद्यथैव सर्वेषामिष्टं तथैवेष्यते, सर्वेषां चाऽऽसन्नतयैवेष्टं, न हि यदा कदा चिद्भवन्ती वृष्टिः केन चित्प्रार्थ्यते, तस्मात्तदैहिकमेवेति।

---

* यथेति १ पु. पा.।

† किमपदमिति का. सं. पु.।

‡ श्रूयते ऽर्थादिति का. सं. पु.।

§ काम्यतेष्टेति पाठान्तरम्।

फलति यदि न सर्वं तत्कदा चित्तदैव
ध्रुवमपरमभुक्तं कर्म शास्त्रीयमास्ते ॥२६॥

इति चित्रापरिहारः ॥

---

ननु चित्रादिवदेवात्रापि कमिपदमविशिष्टमेव श्रूयते, न ह्यनन्तरवृष्टिकाम इति श्रुतिरस्ति, अत आह कमिपदमिति[२६]। यथास्थितफलकामनाऽनुवादेन हि साधनं विधीयते, सर्वश्च प्रत्यासन्नमेव वृष्ट्यादिकं कामयते, पश्वादिकं तु न कामनास्वभावेन शक्यं नियन्तुम्, अविशेषेण तत्कामनासम्भवात्; अतस्तदनियतवृष्ट्यभिचारराष्ट्रोपद्रवशमनादिकं त्वैहिकमेवेति।

किमिति तर्हि सर्वथैव कृतायां कारीर्यां वृष्टिर्नाऽनन्तरमेवोत्पद्यते, अत आह फलतीति। वृष्टिविरुद्धफलेन शास्त्रप्रतिषिद्धेन केन चित् प्रबलेन कर्मणा जन्मान्तराऽनुष्ठितेन प्रतिबन्धस्तदा कल्प्यते, न प्रतिबन्धादसाधयतः साधनत्वहानिरिति न शास्त्राऽप्रामाण्यम्, एवं च नियमेनाऽनन्तरफलाऽनुत्पत्तेर्न त्रिवृत्पानविरेकवदन्वयव्यतिरेकाऽवगम्यं फलमिति न शास्त्रप्रामाण्यव्याघातः। सर्वेषां चैहिकत्वे स्वर्गाऽतिरिक्तानां प्रतिबन्धस्याप्यैहिकफलत्वात् जन्मान्तराऽनुष्ठितस्येह जन्मनि प्रतिबन्धकत्वाऽसम्भवान्नियमेनाऽनन्तरफलनिष्पत्तेरशितपीतविरेकतुल्यत्वं स्यादिति दोषः। कथं तर्हीहाऽकृतकारीर्यादिकर्मणां वृष्टिनिष्पत्तिः, कर्मान्तरादिति ब्रूमः। यत्खल्वश्वादिफलं कर्म जन्मान्तराऽनुष्ठितं तत्स्वफलोत्पादनाय शरीरमिव वृष्ट्यादिकमारभत इति ॥

इति श्रीपार्थसारथिमिश्रविरचिते न्यायरत्नाकरे चित्राक्षेपपरिहारः समाप्तः ॥

अथाऽऽत्मवादः ।

साक्षाद्यद्यपि सम्बन्धो नाऽऽत्मनो यज्ञसाधनैः ।
तथापि लक्षणावृत्त्या शरीरद्वारको भवेत् ॥१॥
प्रत्यक्षत्वं च देहस्थं भाक्तमात्मनि कल्पितम् ।
आत्मनः स्वर्गयानं वा शरीरस्योपचर्य्यते ॥२॥
नैरात्म्येनात्र चाऽऽक्षिप्ताः सर्वा एव हि चोदनाः ।
साध्यसाधनसम्बन्धस्तदुक्तो न हि सिद्ध्यति ॥३॥
ता हि कर्तुः फलेना*हुः सम्बन्धं क्वापि जन्मनि ।
न च विज्ञानमात्रत्वे भोक्तृकर्तृत्वसम्भवः ॥४॥

---

अथ आत्मवादः ।

"यत्तु दृष्टविरुद्धं वचनमुपन्यस्तं तत्स एष यज्ञायुधी यजमानोऽञ्जसा स्वर्गं लोकं यातीति प्रत्यक्षं शरीरकमुपदिशतीति, उच्यते, शरीरसम्बन्धाद्यस्य तच्छरीरं सोऽपि तैर्यज्ञायुधैर्यज्ञायुधी"†ति भाष्यार्थमाह साक्षादिति[१] । यज्ञायुधिशब्देन स्वाऽभिधेयशरीरद्वारेण तद्वानात्मा लक्ष्यतइति न प्रत्यक्षविरोध इति । एष इति शब्देनोक्तमपि प्रत्यक्षं देहस्थमेवाऽऽत्मन्युपचर्यतइत्याह प्रत्यक्षत्वमिति[२] । यद्वा एषयज्ञायुधिशब्दौ श्रुतिवृत्तावेव, स्वर्गयानं त्वात्मगतं, यजमानत्वं च शरीरे उपचर्यतइत्याह आत्मन इति ।

भाष्यकारेण "को ऽसावन्य"‡इत्यादिना ज्ञानदेहाऽतिरिक्ताऽऽत्मप्रतिपादनं कृतं, तत्किमर्थं, यज्ञायुधिवाक्यं ह्यादित्ययूपादिवाक्यवदर्थवादतया नेतुं शक्यम्, अत आह नैरात्म्येनेति[३] । कथमित्याह साध्येति । तदेव कथमित्याह ता हीति[४] । स्वर्गकामचोदनाभिर्भि-

---

* कर्तृफलेनेति ३ पु. पा. । † शा. भा. पृ. १८ प. १६ ।
‡ शा. भा. पृ. १८ प. १७ ।

शरीरविनिपाताच्च परं नाऽन्यद्यदेष्यते ।

अदत्तफलइष्टयादौ तदा तद्वचनं मृषा' ॥५॥

तस्माद्वेदप्रमाणार्थमात्मा ऽत्र प्रतिपाद्यते ।

यद्यपि प्रकृतं वाक्यं व्याख्यायेताऽर्थवादतः ॥६॥

शरीरेन्द्रियबुद्धिभ्यो व्यतिरिक्तत्वमात्मनः ।

नित्यत्वं चेष्यते, शेषं शरीरादि विनश्यति* ॥७॥

'नित्यः कर्तृत्वभोक्तृत्वे प्रतिपन्नो ऽपि सन् यदा ।

न कर्मफलसम्बन्धं भोगकाले ऽवबुध्यते ॥८॥

---

र्हि स्वर्गस्याऽऽमुष्मिकत्वात् क्वापि जन्मनि फलोपभोगो बोध्यते, सो ऽपि कर्तुर्नान्यस्येति । तथापि किमित्याह न चेति सार्द्धेन । ज्ञानमात्रत्वे तावत्तेषां क्षणिकत्वात् कर्तृभोक्तृत्वे एव तावदनुपपन्ने, किं पुनः कर्तुरेव भोक्तृत्वं; शरीरचैतन्ये तावत्तद्विनिपातादूर्द्ध्वमन्यस्य कस्य चिद्भोक्तुरसम्भवादिष्ट्यादेश्चाऽदत्तफलत्वात्तद्वचनस्याऽप्रामाण्यं स्यादिति । उपसंहरति तस्मादिति[६] । यज्ञायुधिवाक्यसमर्थनच्छलेन वेदप्रामाण्यार्थमेवेदमिति तत्प्रतिपादनमिदानीं संक्षिप्य दर्शयति शरीरेत्यादिते[७]ऽन्तेन ।

यदि नित्यः, कथं तर्हि तान्येवानु विनश्यतीति विनाशितावचनमुपनिषत्सु, अत आह शेषमिति । विनाशवचनं तु शरीरेन्द्रियादिविषयमिति वक्ष्यतइति ।

चोदयति नित्य इति[८]द्वयेन । न तावन्नित्यस्य समस्ताऽर्थक्रियाविरहिणः कर्तृत्वभोक्तृत्वे सम्भवतः, सम्भवेतां वा, तथापि

---

* विनाशि चेति ३ पु. पा. ।

मया यत्तु कृतं कर्म तस्येदं भुज्यते फलम् ।
शुभाऽशुभं मयैवेति तदा को ऽस्य रसो* भवेत्' ॥९॥
अपरामृश्यमाने हि स्वकर्मप्रत्यये फले ।
न विशेषो भवेत्कश्चित् स्वपराऽऽत्मोपभोगयोः ॥१०॥
कुर्वन्नप्यशुभं कर्म्म तेनैवं चिन्तयेन्नरः ।
न स्मरिष्यामि भोगे ऽहमिति नैतद्विवर्जयेत् ॥११॥
तत्र नित्यत्वपक्षे ऽपि कृतनाशाऽकृताऽऽगमौ ।
फलतस्तुल्यरूपौ चेद् वृथा तत्प्रतिपादनम् ॥१२॥
नैष दोषो, न भोगे हि स्मृतिर्न उपयुज्यते ।
न प्रवृत्तिर्निवृत्तिर्वा भोगकाले स्मृतेर्भवेत् ॥१३॥

---

फलभोगकाले मत्कृतस्याऽमुष्य कर्मणः फलमिदमुपभुज्यतइति अपरामृशतः कर्मण्यनुरागाऽभावान्नाऽनुष्ठानं स्यादिति । एतदेवोपपादयति अपरामृश्यमानइति[१०] । स्वकर्मकारणकं फलमपरामृशतां स्वोपभोगे वा परोपभोगे वा न कश्चिद्विशेषः स्यादुभयत्राप्यननुष्ठानात्, यो ह्यस्य कर्मणः साधनत्वं फलकाले ऽनुसन्धास्यामीति निरूपयति स एव कर्मा ऽनुतिष्ठति नान्य इति ।

एवं निषिद्धमपि न वर्जयेदित्याह कुर्वन्निति[११] । ततश्चाऽनित्यपक्षवन्नित्यत्वे कृतनाशाऽकृताऽऽगमौ फलतः स्याताम्, अननुष्ठानस्य तुल्यत्वात् वृथा नित्यत्वप्रतिपादनमित्याह तत्रेति[१२] । किमिदं कृतनाशाऽकृताऽऽगमाविति, कर्तुः कृते कर्मणि नाशो भोक्तुश्चाऽकृते कर्मण्यागम इति । परिहरति नैष इति[१३] । कथं नोपयुज्यते,

---

* को ऽस्वरस इति ३ पु. पा. ।

तदङ्गं* यः परामर्शस्तदस्तित्वं च मृग्यते ।
प्राक् प्रवृत्तेस्तु† सो ऽस्त्येव विदुषां शास्त्रतः स्फुटः॥१४॥
पश्चादपि च शास्त्रज्ञा विमृशन्त्येव के चन ।
तेषामेवाऽधिकारश्च मा भूदविदुषां तु सः ॥१५॥
परामर्शश्च सर्वत्र नास्ति सर्वप्रमाणकः।
न चाऽन्येनाऽपरामृष्टे स्यादन्यस्याऽप्रमाणता ॥१६॥
नाऽवबुध्येत यस्त्वेवं ममाऽस्मात्कर्म्मणः फलम् ।
भविष्यतीत्यविद्वत्त्वाद्दैवादेवाऽत्र‡ न क्रिया ॥१७॥

---

अत आह न प्रवृत्तिरिति । प्रवृत्त्युत्तरकालो हि भोगः, तत्कथं भोगकाले परामर्शः प्रवृत्तावुपयुज्येतेति ।

यस्तु साक्षात्प्रवृत्यङ्गं समीहितसाधनत्वपरामर्शः, सो ऽस्त्येव प्राक् प्रवृत्तेः शास्त्रेणेत्याह तदङ्गमिति[१४] । यदि त्ववश्यं भोगकाले परामर्शेन प्रयोजनं, सो ऽप्यस्त्येव विदुषामित्याह पश्चादपीति[१५] । अविदुषां नास्तीति चेत्, सत्यं, स त्वदोष इत्याह तेषामिति। न शास्त्रादन्येन प्रमाणेन परामर्शो ऽस्तीति चेत्, सो ऽप्यदोष इत्याह न चेति[१६] ।

तदेवमनुष्ठानकालपरामर्शो न भोगकालपरामर्शः, सो ऽपि चास्त्येव विदुषामित्युक्तं, यः साधनत्वमनुष्ठानकाले न वेत्ति, तस्याऽविद्वत्त्वादेवाऽनधिकारादननुष्ठानमिष्टमेवेत्याह नाऽवबुध्येतेति[१७] ।

---

* तदसमिति का. सं. पु. ।

† प्राग् वृत्तेरिति १ पु. पा. । ‡ अस्येति का. पा. ।

अपरामृश्यमाने ऽपि स्वापकाले सुखाऽऽश्रये।
संभोगे* मृदुशय्यादौ प्राक्प्रवृत्तिश्च दृश्यते ॥१८॥
भोगकाले ऽनुसंदध्यात्फलं यदि तु कश्चन।
रथादिकर्मवद्यागे शास्त्रं स्यादप्रकल्पकम्† ॥१९॥
'तत्र नित्यविभुत्वाभ्यामात्मानो निष्क्रिया यदि।
सुखदुःखाऽविकार्याश्च‡ कीदृशी कर्तृभोक्तृता॥२०॥

---

यदुक्तं, न भोगकालपरामर्शो ऽङ्गमिति, तत्रोदाहरणमाह अपरामृश्येति[१८]। स्वापकालसुखस्याऽऽश्रयो यः साधनं शयनादिः तस्मिन् सम्भोगवेलायां§ स्वापवेलायामपरामृश्यमाने ऽपि प्राक् प्रवृत्तिर्दृष्टेति, प्रत्युत भोगकालाऽपरामर्शात्, एतदेव वेदस्य प्रामाण्यमन्यथा तन्न स्यादित्याह भोगकालइति[१९]। भोगकालपरामर्शे ह्यन्वयव्यतिरेकाऽवगम्यं फलं स्यात्, ततश्च यथा रथादिकर्मणां लोके कर्मणि वेदवत्ततो ऽधिपुरुषज्ञानमिति शास्त्रीयत्वमाशङ्क्य 'अशास्त्रात्तूपसंप्राप्तिः शास्त्रं स्यादप्रकल्पक'मित्यशास्त्रीयत्वं वक्ष्यतइति। तथा ऽग्निहोत्रादीनां स्यादिति। चोदयति तत्रेति[२०]द्वयेन। विभोस्तावत्संयुज्यमानवियुज्यमानदेशाऽसम्भवेन स्पन्दितुमसामर्थ्यान्न कर्तृत्वं सम्भवति, तथा नित्यस्याऽप्रच्युतप्राच्यरूपत्वात्प्रागिवाऽविक्रियस्य सुखादिना चाऽविक्रियमाणस्य कथं कर्तृभोक्तृत्वे स्याताम्, अथ क्रियाऽवस्थायां सुखाद्यवस्थायां च प्राच्यमकर्तृत्वरूपमभोक्तृत्वरूपं च हित्वा कर्तृत्वभो-

---

* संभङ्गे इति का. पा.।

† अप्रमाणकमिति का. पा.। ‡ दुःखादिकार्यस्येति २ पु. पा.।

§ सम्भोगवेलायामिति नास्ति २ पु.।

अथ कर्तृत्ववेलायां दुःखादेश्चापि जन्मनि ।
प्राग्रूपादन्यथात्वं स्यान्नित्यता ऽस्य विरुध्यते' ॥२१॥
नाऽनित्यशब्दवाच्यत्वमात्मनो विनिवार्यते ।
विक्रियामात्रवाचित्वे न ह्युच्छेदो ऽस्य तावता ॥२२॥
स्यातामत्यन्तनाशे ऽस्य कृतनाशाऽकृताऽऽगमौ ।
न त्ववस्थान्तरप्राप्तौ लोके बालयुवादिवत् ॥२३॥
'अवस्थान्तरभाव्येतत्फलं मम शुभाऽशुभम् ।
इति ज्ञात्वा ऽनुतिष्ठंश्च विजहच्चेष्टते* जनः ॥२४॥

---

कृत्वाभ्यां विक्रियेत, ततश्च कर्मवदनित्यः स्यात्, प्रच्युतप्राच्यरूपत्वात्, स हि विकारस्ततो ऽन्यश्चेत्ततो ऽसौ प्रागिवाऽकर्तैव स्यात्, अनन्यश्चेत्, तद्वदेवोत्पत्तिधर्मकत्वादनित्यः स्यादिति ।

परिहरति नाऽनित्येति[२२]। विभोस्तावत्कर्तृत्वमुपपादयिष्यते, नित्यस्य त्वविक्रियत्वेन सत्यं न कर्तृत्वभोक्तृत्वे, स तु प्राच्यमौदासीन्यं हित्वा कर्तृत्वभोक्तृत्वाभ्यां विक्रियत एव, न त्वेवमनित्यः स्यात्, यदि विकारमात्रमनित्यत्वं, तदस्तु, न हि विकारमात्रेण स्वरूपोच्छेदो भवति, प्रत्यभिज्ञानात्, अन्याऽनन्यविकल्पश्च सर्वत्राऽनेकान्तवादाऽऽश्रयणेन परिहर्त्तव्य इति ।

नन्वसत्यपि स्वरूपोच्छेदे ऽवस्थात्मनो ऽस्त्येवोच्छेद इति कृतनाशाऽकृताऽऽगमौ स्याताम्, अत आह स्यातामिति[२३]। 'लोके बालयुवादिव'दित्येतद्विवृणोति अवस्थान्तरेति[२४] सार्द्धेन । एवमप्य-

---

* ईक्षते इति २ पु. पा. ।

अनवस्थान्तरप्राप्तिर्दृश्यते न च कस्य चित्' ।
अनुच्छेदात्तु नाऽन्यत्वं भोक्तुर्लोको ऽवगच्छति*॥२५॥
सुखदुःखाद्यवस्थाश्च गच्छन्नपि नरो मम ।
चैतन्यद्रव्यसत्तादिरूपं नैव विमुञ्चति ॥२६॥
दुःखिनः सुख्यवस्थायां नश्येयुः सर्व एव ते ।
दुःखित्वं चाऽनुवर्तेत विनाशे विक्रियात्मके ॥२७॥
तस्मादुभयहानेन व्यावृत्त्यनुगमात्मकः ।
पुरुषो ऽभ्युपगन्तव्यः कुण्डलादिषु सर्पवत् ॥२८॥
न च कर्तृत्वभोक्तृत्वे पुंसो ऽवस्थासमाश्रिते ।
तेनाऽवस्थावतस्तत्त्वात्कर्त्तैवाऽप्नोति तत्फलम् ॥२९॥

---

यस्थावतो ऽनुच्छेदात्ततो न कर्तृभोक्त्रोरन्यत्वं लौकिका मन्यन्तइत्याह अनुच्छेदादिति[२५] ।

किं पुनस्तद् रूपं येनाऽऽगमाऽपायिनीष्ववस्थासु पुमाननुवर्तते, तद्दर्शयति सुखेति[२६] । यस्त्ववस्थान्तररूपविकाराऽऽपत्तिमात्रे स्वरूपोच्छेदं, स्वरूपाऽनुवृत्तौ वा अवस्थानामनुवृत्तिमातिष्ठते, तस्यायं दोष इत्याह दुःखिन इति[२७] । तस्मादैकान्तिकीमनुवृत्तिं व्यावृत्तिं च हित्वा कथं चिदनुवृत्तिः कथं चिद् व्यावृत्तिः स्वर्णस्येव† कुण्डलादिषु पुंसो ऽभ्युपगन्तव्येत्याह तस्मादिति[२८] ।

एवमपि स्यातां कृतनाशाऽकृताऽऽगमौ, यद्यवस्थानां कर्तृत्वं भोक्तृत्वं च स्यात्, न तु तदस्तीत्याह न चेति[२९] । यद्वा अवस्थापि

---

* अधिगच्छतीति का. पा. ।

† सर्पस्येवेति २ पु. पा. ।

न चाऽवस्थान्तरोत्पादे पूर्वा ऽत्यन्तं विनश्यति ।
उत्तराऽनुगुणत्वात्* तु सामान्यात्मनि लीयते ॥३०॥
स्वरूपेण ह्यवस्थानामन्योन्यस्य विरोधिता ।
अविरुद्धस्तु सर्वासु सामान्यात्मा प्रवर्त्तते ॥३१॥
'नैरात्म्यवाद†पक्षे तु पूर्वमेवाऽवबुध्यते ।
मद्विनाशात् फलं‡ न स्यान्मत्तो ऽन्यस्याथ वा भवेत्॥३२॥
इति नैव प्रवृत्तिः स्यान्न च वेदप्रमाणता' ।
जन्मान्तरे ऽभ्युपेते ऽपि ज्ञानमात्रात्मवादिनाम् ॥३३॥

---

नाऽत्यन्तं नश्यतीत्याह न चेति[३०] । किं तर्हि नोपलभ्यते, ऽत आह उत्तरेति । उत्तराऽवस्थोत्पत्त्यानुगुण्याय स्वरूपेणैव यो ऽवस्थानां साधारणः पुमांस्तस्मिन् लीयते, तेन रूपेणाऽवतिष्ठत इत्यर्थः ।

नन्ववस्थानामौदासीन्यकर्तृत्वादीनां मिथो विरोधात्पूर्वस्यां धर्मिरूपेण व्यवस्थितायामुत्तरस्याः कथं निष्पत्तिः, अत आह स्वरूपेणेति[३१] ।

एवं नित्याऽऽत्मपक्षे सिद्ध्यति वेदप्रामाण्यमित्युक्तं, ज्ञानमात्रे शरीरमात्रे वा न सिध्यतीत्यर्थवन्नित्याऽऽत्मप्रतिपादनमित्याह नैरात्म्येति[३२] सार्द्धेन । शरीरपक्षे तद्विनिपातात् परं न किं चिदस्तीति फलं नैव स्यात्, ज्ञानसन्ताने तु भवदन्यस्यैव स्यादिति ।

---

* गुणार्था इति का. पा. !

† नैवात्मवादेति १ पु. पा. ।

‡ मद्विना मत्फलमिति का. पा. ।

इति नैव प्रवृत्तिः स्यान्न च वेदप्रमाणता ।
'जन्मान्तरे ऽभ्युपेते ऽपि ज्ञानमात्रात्मवादिनाम् ॥३३॥
ज्ञानानां क्षणिकत्वाद्धि कर्तृभोक्त्रन्यता भवेत् ।
निष्क्रियत्वाऽविभुत्वा*भ्यां न च देहान्तराऽऽश्रितिः' ३४॥
कर्ता य एव सन्तानो ननु भोक्ता स एव नः ।
विज्ञानक्षणभेदस्तु त्वदवस्थान्तरैः समः ॥३५॥
कर्तृत्वमेव दुःसाधं दीर्घकालेषु कर्म्मसु ।
सत्सु† ज्ञानसहस्रेषु कुलकल्पोपमं हि तत् ॥३६॥
व्यतिरिक्तो हि सन्तानो यदि नाऽभ्युपगम्यते ।
संतानिनामनित्यत्वात् कर्ता कश्चिन्न लभ्यते ॥३७॥

---

ननु ज्ञानमात्रवादिनो जन्मान्तरं भवत्येव, तद्भवतामपि सिद्धौ किं नित्येनात्मना, अत आह जन्मान्तरे इति सार्द्धेन । सम्भवत्यपि जन्मान्तरे कर्तृभोक्तृत्वमपरिहार्यं, न तु जन्मान्तरमपि सम्भवति, ज्ञानानां निष्क्रियत्वात् अविभुत्वाच्च देहान्तरप्राप्त्यसम्भवादिति ।

चोदयति कर्त्तेति[३५] । विज्ञानानि भिन्नानीति चेत्, तत्राह विज्ञानेति । परिहरति कर्तृत्वमेवेति[३६] । यदेकेनाऽऽरब्धं पुत्रपौत्रादिभिः समाप्यते स कुलकल्प इति ।

ननु सन्तानः स्थायी कर्त्ता भविष्यति, अत आह व्यतिरिक्तो हीति[३७] । न हि सन्तानो नाम ज्ञानाऽतिरिक्तः कश्चिद् बौद्धैरिष्यते,

---

* नियतत्वविभुत्वेति का. सं. पु. ।

† यान्सु इति २ पु. पा. ।

भोक्तुरत्यन्तभेदाच्च प्रसज्येताऽकृताऽऽगमः ।
कृतनाशं तु न ब्रूमः कृतं नैव हि केन चित् ॥३८॥
सन्तानाऽनन्यतायां तु वाचोयुक्त्यन्तरेण ते ।
तत्र चोक्तं, न चाऽवस्तु सन्तानः कर्तृतां व्रजेत् ॥३९॥
सन्तानक्षणिकत्वे च तदेवाऽक्षणिकस्त्वथ* ।
सिद्धान्तहानि,रेवं च सो ऽपि द्रव्यान्तरं† भवेत् ॥४०॥

---

ततः सन्तानिमात्रापातान्न कर्त्ता कश्चित् स्यादिति । अयं च दोषः स्यादित्याह भोक्तुरिति[३८] । कृतनाशः किं नोच्यते, अत्राह कृतनाशमिति ।

अथाऽस्त्येव सन्तान इत्युच्यते, स यद्यव्यतिरिक्तः ततः सन्तानवाचोयुक्त्या तएव सन्तानिन उक्ताः, तत्र चोक्तमेव दूषणमित्याह सन्तानेत्युक्त[३९]मन्तेन । अथ व्यतिरिक्तः स्थायी च, ततः सर्ववस्तूनां क्षणिकत्वात् स्थायी सन्नप्ययमवस्तु स्यात्, न चाऽवस्तुनः कर्तृत्वं सम्भवतीत्याह न चेति । अथ व्यतिरिक्तो ऽपि क्षणिक उच्यते, तथापि तदेव दूषणं, दीर्घकालेषु कर्मसु कर्तृत्वं न स्यादकृताऽऽगमश्च स्यादित्याह सन्तानेत्येवा[४०]ऽन्तेन । अथ वस्त्वेव सन्नक्षणिक इत्युच्येत, तत्राह अक्षणिक इति हानिरन्तेन ।

योगाचाराणां च सन्तानाऽभ्युपगमे परो ऽपि दोषो ज्ञानाऽतिरिक्तवस्त्वापत्तिरित्याह एवं चेति । यदि तु सन्तानिभिरभिन्ना एका च सन्ततिः ततो ग्राह्यग्राहकयोर्ज्ञानांऽव्यतिरेके यदुक्तम्, एक-

---

* तथेति १ पु. पा. ।

† व्यक्त्यन्तरमिति २ पु. पा. ।

एका चाऽव्यतिरिक्ता च सन्तानिभ्यो ऽथ सन्ततिः ।
भेदाऽभेदौ प्रसङ्क्तव्यौ ग्राह्यग्राहकयोर्यथा ॥४१॥
तस्मादत्यन्तभेदो वा कथं चिद्वापि भिन्नता* ।
सन्तानस्येत्ययं चात्मा स्याद्वैशेषिकसांख्ययोः ॥४२॥
सन्तानो ऽयं स एवेति न त्वभेदा†द्विना भवेत् ।
वायुदीपादिसन्ताने वायुत्वादिर्न भिद्यते ॥४३॥
ज्ञानत्वेनाप्यभिन्नत्वं‡ शून्यवादे निराकृतम् ।
तथैव कर्मभिर्वेष्टा फलार्थं चित्तवासना ॥४४॥

---

ज्ञानादनन्यत्वात् अनयोरप्यभेदो भिन्नाभ्यामभेदाद्वा ज्ञानस्यापि भेद इति, तदेवापादयितव्यमित्याह एका चेति[४१] ।

तदयं सन्तानो यद्यत्यन्तभिन्नो यदि वा कथं चिद्भिन्नो द्वेधापि वैशेषिकादिसंमत एवाऽऽत्मा शब्दान्तरेणोक्तः स्यादित्याह तस्मादिति[४२] । किं चाऽभिन्नरूपान्तरेण सन्तानवागपि न सम्भवतीत्याह सन्तान इति । कथमित्याह वाय्विति[४३] । भवत्वत्रापि ज्ञानत्वेनाऽभेद इति चेत्, तत्राह ज्ञानत्वेनेति[४४] । तदेवमसति नित्ये पुंसि न कर्त्तुः फलं सम्भवतीत्युक्तम्, इदं च न सम्भवतीत्याह तथैवेति । क्षणिकानि चैत्यवन्दनादिकर्माणि न कालान्तरे फलं जनयितुमलं, तथा ऽपूर्वस्थानीया चित्ताधारा वासना फलसिद्ध्यर्थं भवद्भिरङ्गीकृता, सा ऽपि क्षणिकानां वास्यवासकभावाऽसम्भवान्निरालम्बनवादे निराकृतेति ।

---

* अभिन्नतेति का पु. पा. ।

† न च भेदादिति ३ पु. पा । ‡ ज्ञानत्वेनाप्यभिन्नत्वमिति पाठान्तरम् ।

न चात्र वासनाकालं किं चिच्चित्तमवस्थितम् ।
अवस्तुत्वाच्च सन्तानः कर्मभिर्नैव* वास्यते ॥४५॥
तत्पारम्पर्यजाते ऽपि भुञ्जाने कर्मणः फलम् ।
तादात्म्येन विना स्पष्टौ कृतनाशाऽकृतागमौ ॥४६॥
सन्तानान्तरजेभ्यश्च यो हेतुफलभावतः ।
विशेषः सो ऽपि दुस्साधः परिहारो न चाऽनयोः॥४७॥

---

व्यर्था चेयं वासना, तया वासितस्य चित्तस्य यावत्फलकालमवस्थानाऽभावादित्याह न चेति[४५] । सन्तानो वास्यतइति चेत्, न, तस्य नित्यत्वे च क्रियाविरहिणो ऽवस्तुत्वात्, क्षणिकत्वे ऽपि दोषतादवस्थ्यादित्याह अवस्तुत्वादिति ।

अथ क्षणिकज्ञानाधारा ऽपि तद्विनाशे विनश्यन्त्यपि तज्जन्यज्ञानान्तरे वासनान्तरं जनयति तदपि वासनान्तरं, तदेवं वासनापरम्परायामन्तिमवासनाधारं ज्ञानं फलभोक्तृरूपं ज्ञानं जनयतीत्युच्यते, तदस्तु तावदेवमपि कृतनाशाऽकृताऽऽगमौ तदवस्थावेव, न ह्येवमपि कर्तृभोक्त्रोस्तादात्म्यमस्तीत्याह तत्पारम्पर्येति[४६] ।

यदपि कर्तृभोक्त्रोरन्यत्वाऽविशेषे ऽपि सन्तानान्तरजानां भोक्तृत्वप्रसङ्गपरिहाराय हेतुफलभावकृतो विशेषः परैरुक्तः सो ऽपि दुःसाधन एव, क्षणिकानां हेतुफलभावस्य निरालम्बनवादे निराकृतत्वादित्याह सन्तानान्तरेति दुःसाधो[४७]ऽन्तेन । सत्यपि तस्मिन् विशेषे कृतनाशाऽकृतागमावपरिहृतावित्याह परिहार इति ।

यदा च हेतुफलभावो नास्ति तदा प्रकारान्तरेणैकभूमिसम्बन्धेन ज्ञानत्वेन वा कर्तृभोक्त्रोरेकत्वमुच्यताम्, एवमपि कथं चिदेकत्वं

---

* कर्मभिर्नैवेति १ पु. पा. ।

तस्मिन्नसत्यपि ब्रूयाः परिहारं त्वमन्यथा ।
समानपृथिवीत्वासज्ज्ञानत्वाद्यविशेषतः ॥४८॥
समान इति नाप्येतदेकत्वाऽनुगमाद्विना ।
तेन यच्चित्तजं* तस्य सन्तान इति वो मृषा† ॥४९॥
न हि यच्छब्दतच्छब्दौ वर्तेते भिन्नवस्तुनि ।
तेनैकात्मकतैष्टव्या तत्सन्तानात्म‡वादिभिः ॥५०॥
नन्वन्यत्वं§ विदन्तो ऽपि|| पुत्रादिफलसिद्धये ।
प्रवर्तन्ते यथा तद्वज्ज्ञानसन्तानिनो ऽपि नः ॥५१॥

---

दर्शितं भवति, ततश्च सन्तानान्तरे ऽपि अतिप्रसङ्गः स्यादित्याह तस्मिन्निति[४८] । न चेदमप्येकत्वं सम्भवति, न हि क्रियावस्थाया-म भोगावस्थायां वा एका पृथिवी ज्ञानत्वं वा ऽनुसंहितं सर्वक्षणिक-वादिनामस्तीत्याह समान इति[४९] ।

यदप्युच्यते, यस्माच्चित्तात्कर्तृचित्तं जातं भोक्तृचित्तमपि तत्सं-तानः, तेनैकस्मादेव चित्तात्साक्षात्परम्परया वा जातयोः कर्तृभो-क्त्रोरस्ति तज्जन्यतयैककर्तृत्वमिति; तदपि तेनैव एकाकारानुगमाभावेन मृषेत्याह तेनेति । एतदेव दर्शयति न हीति[५०] । न तच्चित्त-जत्वं नामैकमनुगतं सम्भवति, तदभावे च यद्रूपः कर्ता तद्रूपो ऽसौ भोक्तेति यत्तच्छब्दौ न सम्भवत इति । उपसंहरति तेनेति ।

चोदयति नन्विति[५१] । ततश्च सतोरपि कृतनाशाऽकृताऽऽग-

---

* चित्रजमिति का. पा. । † वृथेति का. पा. ।
‡ तत्सन्तानात्मेति १ पु. पा. । § न त्वन्यत्वमिति १ पु. पा. ।
|| विदित्वा ऽपीति २ पु. पा. ।

अन्यत्वे च समाने ऽपि यथा वंशान्तरोद्भवाः ।
न लभन्ते फलं तद्वत्सन्तानान्तरजाः क्षणाः ॥५२॥
न तावद्बुद्धिरत्रैव,मपि चाऽऽत्मफलेच्छया ।
पुत्रादिभरणे वृत्तिः स्यात्तदप्यत्र नास्ति ते ॥५३॥
फलान्तरमनुद्दिश्य न च पुत्रादि बिभ्रति ।
विनष्टस्य तु नाऽऽत्मीयसन्तानभरणात्फलम् ॥५४॥
'यस्त्वनेनैव मार्गेण फलान्तरमपीच्छति ।
स्वसन्तान्यन्तरैर्*भोग्यं तत्सन्तान्युपकारकम्† ॥५५॥

---

मयोर्न दोष इति । न चैतावता सन्तानान्तरजस्यापि फलं सम्भवतीत्याह अन्यत्वइति[५२] । परिहरति न तावदित्येव[५३]मन्तेन । संविदेवाऽत्र परिपन्थिनीति । दृष्टान्तश्चाऽसिद्ध इत्याह अपि चेति । वार्द्धके हि पिता पुत्रमुपजीवति; तथा च

वृद्धौ च मातापितरौ साध्वी भार्या सुतः शिशुः ।
अप्यकार्यशतं कृत्वा भर्त्तव्या मनुरब्रवीत् ॥

इति वचनाददृष्टमप्यस्तीति । एतदेव विवृणोति फलान्तरमिति[५४] । यदि त्वस्त्येवात्रापि स्वसन्तान्युपकारजं फलान्तरं तदपि हि परस्ताद्भाविभिः सन्तान्यन्तरैरपि भुज्यतां, मा नाम विनष्टेन कर्त्रा भुज्यतामिति चेत्;न, तस्यापि कर्तृगामित्वाऽभावात् ततः परमपि फलान्तरमपेक्ष्यं ततः परमपि तथेत्यनवस्था स्यादिति । दूरगमने ऽपि स्वोपभोगाऽभावात्; न हि दूरवर्त्यपि सन्तानी कर्त्तुरात्मसमो भवती-

---

* स्वसन्तान्यतरैरिति १ पु. पा. । † उपकारजमिति १ पु. पा. ।

अनवस्थेदृशी तस्य स्वोपभोगादृते भवेत् ।
नैव ह्यन्यो ऽपि सन्तानी कश्चित्तस्याऽऽत्मवन्मतः'॥५६॥
यावद्यावच्च दूरस्थे सन्तानिनि फलं भवेत् ।
तावत्तावच्च तन्नश्येत्सुतरां विप्रकर्षतः ॥५७॥
भरणं यदपत्यानां तिर्यगादिषु दृश्यते ।
अज्ञानं शरणं तत्र प्राज्ञानां तु न युज्यते ॥५८॥
देहान्तरे च बुद्धीनां सञ्चारो नोपपद्यते ।
पूर्वदेहाद्बहिर्भावो न च तासां प्रतीयते ॥५९॥
'वायुना प्रेर्यमाणं हि ज्वालाद्यन्यत्र सञ्चरेत् ।
बुद्धेः कारणदेशात्तु प्रेरणं नास्ति केन चित् ॥६०॥

---

त्याह यस्त्विति[५६]द्वयेन । प्रत्युत दूरगमनात्सुतरामात्मीयत्वे नश्ये-दित्याह यावदिति[५७] ।

नन्वसत्यपि फलान्तरे ऽपि तिर्यञ्चो ऽपत्यं बिभ्रति, अत आह भर-णमिति[५८]। एवं तावद्यदुक्तं 'जन्मान्तरे ऽभ्युपेते कर्तृभोक्त्रन्यता भवे'-दिति, तद्विवृतम् । यत्तु 'निष्क्रियत्वाऽविभुत्वाभ्यां न च देहान्तरा-गतिः' इति, तद्विवृणोति देहान्तरेणेति[५९]।

न केवलं देहान्तरसंयोगो न सम्भवति, पूर्वदेहवियोगो ऽपि न सम्भवतीत्याह पूर्वेति । कारणमाह वायुनेति[६०]सार्द्धेन । न ह्यमू-र्त्ताया बुद्धेः स्वयमुत्प्लवः परेण वा प्रेरणं सम्भवतीति । अमूर्त्तत्वा-देव च न जीवद्देहे ऽपि गमनं बुद्धेः सम्भवति, तेन शरीरे गच्छति

अमूर्तत्वात्स्वयं नासावुत्प्लुत्याऽन्यत्र गच्छति' ।
जीवद्देहे* ऽपि तेनास्या गमनं नोपपद्यते ॥६१॥
अन्तराभवदेहस्तु निषिद्धो विन्ध्यवासिना ।
तदस्तित्वे प्रमाणं हि न किं चिदवगम्यते ॥६२॥
सहसा जायते तच्च सहसैव विनश्यति ।
सूक्ष्मरूपादियुक्तं चेत्युत्प्रेक्षामात्रमेव तत् ॥६३॥
सत्यपि ज्ञानसञ्चारस्तत्र स्यान्निष्प्रमाणकः ।
तेन चाऽन्यशरीरेषु पुनर्निक्षेपकल्पना ॥६४॥
कललादिषु विज्ञानमस्तीत्येतच्च साहसम् ।
असञ्जातेन्द्रियत्वाद्धि न तत्राऽर्थो ऽवगम्यते ॥६५॥

---

सति बुद्धिस्तस्मान्निःसृता तत्रैव तिष्ठेत्, तया च विना शरीरं गच्छदचेतनं स्यादित्याह जीवद्देहे ऽपीति[६१] ।

यदप्यातिवाहिकं नाम शरीरं पूर्वोत्तरदेहयोरन्तराले ज्ञानसन्तानसन्धारणार्थं कल्प्यते, तदपि विन्ध्यवासिना निराकृतमित्याह अन्तरेति[६२] । तदेव निराकरणं दर्शयति तदस्तित्वइति । तदुत्पत्तिविनाशयोरनुपलब्धेश्च न किं चित्कारणमस्तीत्याह सहसेति[६३] । सत्यपि तस्मिन् ज्ञानस्याऽमूर्त्तस्य तत्र संचारः तेन च देहान्तरे निक्षेपो निष्प्रमाणक एवेत्याह सत्यपीति[६४] ।

ज्ञानसंचारे च कललमांसाद्यवस्थायामपि ज्ञानमस्तीत्यङ्गीकर्त्तव्यं, तच्च साहसमित्याह कललादिष्विति[६५] । कथं साहसमि-

---

* जीवद्देहे इति १ पु. पा. ।

न चार्थोऽवगते*रन्यद्रूपं ज्ञानस्य युज्यते† ।
मूर्छादावपि तेनाऽस्य सद्भावो नोपपद्यते ॥६६॥
न चापि शक्तिरूपेण तदा धीरवतिष्ठते ।
निराश्रयत्वाच्छक्तीनां स्थितिर्न ह्यवकल्पते ॥६७॥
यदि भूतेन्द्रियाऽऽधारा ज्ञानशक्तिर्भवेत्ततः ।
तच्चैतन्यं प्रसज्येत न च जन्मान्तरं भवेत् ॥६८॥
परिणामविवेकाद्यैः शक्त्यभिव्यक्त्यनुग्रहात् ।
तेभ्य एव भवेद्बुद्धिर्न बुद्ध्यन्तरपूर्विका ॥६९॥

---

स्याह असंजातेति । विना ऽप्यर्थाऽवभासेन न संविन्मात्ररूपेण ज्ञानं तस्यामपि दशायामवतिष्ठतइति चेत्,तत्राह न चेति[६६] । प्रकाशजननमेव हि ज्ञानस्य स्वरूपं, न च तदसति प्रकाश्ये सम्भवति, स्वांशप्रकाशश्च विज्ञानवादे निराकृत इति ।

कथं तर्हि मूर्छासुषुप्तितुरीयेषु, न हि तत्राप्यर्थाऽवबोधो ऽस्ति, अत आह मूर्छादाविति । तत्रापि नास्त्येव विज्ञानमिति । अथ स्वरूपेणाऽनवस्थिता ऽपि सा शक्तिरूपेण तास्ववस्थासु धीरवतिष्ठतइत्युच्यते, ऽत आह न चापीति[६७] । कारणमाह निराश्रयत्वादिति । आत्मा न तावद्भवतामस्ति, तद्यदि भूतेन्द्रियाधारा स्यात्ततस्तच्चैतन्यप्रसङ्गात् जन्मान्तराऽनुपपत्तिः, चितिशक्त्याधारत्वमेव चैतन्यमित्याह यदीति[६८] । भूतचैतन्ये समनन्तरप्रत्ययात् जन्यत्वमपि बुद्धीनां न स्यादिति आह परिणामेति[६९] । भूतानां हि

---

* न चाथ विगतेरिति का. सं. पु. ।

† गम्यते इति २ पु. पा. ।

तथैवोत्तरकाले ऽपि पूर्वबुद्धेर्यदुच्यते ।
बुद्ध्यन्तरप्रसूतत्वं दृष्टान्तो ऽत्र न विद्यते ॥७०॥
अथाऽऽधारविनिर्मुक्ता शक्तिः स्यात् कललादिषु* ।
पश्चाद्विज्ञानसिद्ध्यर्थमात्मा शक्त्यभिधो भवेत् ॥७१॥
शक्त्याधारप्रक्लृप्तौ वा नाऽऽत्मनो ऽन्यः प्रकल्प्यते ।
ज्वालाबुद्बुदवद् वृत्तिर्न चाधाराद्विना धियाम् ॥७२॥

---

चिच्छक्तियोगे तेभ्य एव घटादिपरिणामाद्विविक्तात् शरीराकारपरिणामाच्छक्त्यभिव्यक्तिरूपादनुग्रहादिन्द्रियादिसहायाद्बुद्धिरुत्पद्यते, न समनन्तरप्रत्ययादिति ।

यदा चैवं भूतेभ्य एव सर्वबुद्धीनामुत्पत्तिः न बुद्ध्यन्तरात् तदा यत् कललबुद्बुदमूर्छादिष्वपि ज्ञानसिद्ध्यर्थं परैरनुमानमुक्तम्, उत्तरकाले हि जातस्य मूर्छादिभ्यश्चोत्थितस्य या बुद्धयः ता द्वितीयादिबुद्धयो बुद्ध्यन्तरप्रसूता दृष्टा इति पूर्वस्या अपि बुद्ध्यन्तरं कारणमनुमीयते तस्या अपि बुद्ध्यन्तरमित्येवं कललादिष्वपि बुद्धिसिद्धिरिति; तत्र दृष्टान्तः साध्यविकलः,† अस्मन्मते ऽप्यसत्यपि भूतचैतन्ये ऽस्यैव साध्यवैकल्यमिति, द्वितीयादिबुद्धीनामपीन्द्रियाद्यनुगृहीतात्मनिमित्तत्वाद् बुद्ध्यन्तरप्रसूतत्वाभावादित्याह तथेति[७०] ।

यदि तु विनैवाऽऽधारेण चितिशक्तिरवतिष्ठेत तदा शक्त्यात्मैव शब्दान्तरेणोक्तः स्यादित्याह अथेति[७१] । अथ शक्तेराधारः कश्चित्कल्प्यते तथाप्यात्मैवासौ नान्य इत्याह शक्तीति[७२] ।

---

* कलनादिष्विति का. सं. पु. ।

† अस्मन्मते इत्यादिग्रन्थः कुण्डलितः ३ पु. ।

ज्ञानशक्तिस्वभावो ऽतो नित्यः सर्वगतः पुमान् ।
देहान्तरक्षमः कल्प्यः सो ऽगच्छन्नेव योक्ष्यते ॥७३॥
यजमानत्वमप्यात्मा सक्रियत्वात्प्रपद्यते ।
न परिस्पन्द एवैकः क्रिया नः कणभोजिवत् ॥७४॥
न च स्वसमवेतैव कर्तृभिः क्रियते क्रिया ।

---

यदुक्तम, अमूर्त्तत्वान्निष्क्रिया बुद्धिर्न देहान्तरसंचारक्षमेति, तदयुक्तं, न हि मूर्त्तानामपि क्रियावशाद्देहान्तरप्राप्तिः क्षणिकानां क्रियाऽसम्भवात्सदृशेषु क्षणेषु उत्तरोत्तरदेशे सन्तन्यमानेषु क्रियाविकल्पो भवति ज्वालावज्जलबुद्बुदवच्च, तथैव बुद्धीनामपि देहान्तरप्राप्तिर्न सिद्ध्यति, जीवद्देहे ऽप्येवं देशान्तरप्राप्तिः समर्थनीया, अत आह ज्वालेति । जलाधारा हि बुद्बुदसन्ततिः, वर्त्याधारा च ज्वाला, न च बुद्धीनामाधारो ऽस्ति, व्योमाधारत्वे तच्चैतन्यप्रसङ्गः, मूर्त्तानां च क्रिया प्रत्यक्षादिप्रमाणसिद्धा न शक्या ऽपलपितुं, क्षणभङ्गस्तु शब्दाधिकरणे निराकरिष्यतइति ।

तदवश्यं कृतनाशाऽकृताऽऽगमपरिहाराय नित्यः पुमान् प्रतिपादयितव्यः, स च भोक्तृत्वसिद्ध्यर्थं चेतनः, देहान्तरप्राप्तये च सर्वगतः, सर्वगतो ह्यसावगच्छन्नेव शक्नोति देहान्तरेण संबन्धुम, अयमेव तस्य शरीरेण संबन्धो यद्भोगायतनत्वेनात्मसात्करणमित्याह ज्ञानेति[७३] ।

ननु विभुश्चेन्निष्क्रियः, कथं कर्त्ता, कर्त्ता न चेत् कथं कर्तृवाचिना यजमानशब्देनोच्येत यज्ञायुधी यजमान इति, तदुक्तं 'न चास्य यजमानत्व'मिति, अत आह यजमानत्वमिति[७४] । कथं विभोः सक्रियत्वम, अतआह न परिस्पन्द इति । काणादा हि उत्क्षेपणादिपञ्चकं स्पन्दात्मकमेव कर्मेच्छन्ति, न चायं तथेति । स्पन्दात्मके तर्हि विष्णुक्रमणादौ कथं कर्तृत्वमत आह न चेति[७५] । उभयोर्व्यतिरे-

क्रिया धात्वर्थमात्रं स्यादन्याधारे ऽपि कर्तृता ॥७५॥
सत्ताज्ञानादिरूपाणां कर्ता तावत्स्वयं पुमान् ।
यो ऽपि भूतपरिस्पन्दस्तत्राऽधिष्ठानतो भवेत् ॥७६॥
तदुद्देशप्रवृत्तेश्च या या देहेन्द्रियैः क्रिया ।
क्रियते पुरुषेणैव सा सा सर्वा कृतो*च्यते ॥७७॥
नैव ह्येषां प्रवृत्तिः स्यात्पुरुषेणाऽपरिग्रहे ।
अस्वातन्त्र्याद्दतो नैषां परिस्पन्दे ऽपि कर्तृता ॥७८॥
तत्कर्मोपार्जितैश्चैतैः क्रियमाणेषु कर्मसु ।
कर्तृता यजमानानामृत्विक्परशुकर्मवत् ॥७९॥

---

कमाह क्रियेति । अन्याधारे ऽपि कर्मणीत्यर्थः । किं पुनरस्पन्दात्मकं कर्म, यत्रात्मा साक्षात्कर्त्ता, तद्दर्शयति सत्तेति[७६] । यागादीनामादिशब्देन ग्रहणमिति ।

ननु भूताश्रये स्पन्दकर्मणी, कथमात्मनः कर्तृत्वं, न ह्यकुर्वन्कर्ता, ऽत आह यो ऽपीति । आत्माऽधिष्ठितानि हि भूतानि स्पन्दन्ते मृतावस्थायां विपर्ययदर्शनात्, तेनाऽधिष्ठानद्वारमात्मनः कर्तृत्वमिति । यद्वोद्देश्यो ऽस्य व्यापार इत्याह तदुद्देशेति[७७] । यदा ह्यात्मा भूतादिपरिस्पन्दमुद्दिशति तदैव तानि परिस्पन्दन्ते, अतो युक्तं स्पन्दे ऽपि प्रयोजककर्तृत्वमात्मनः, स्वतन्त्रकर्तृत्वं तु भूतानामेवेति, तदा स्वतन्त्रत्वमप्यात्मन एव भूतानामस्वातन्त्र्यादित्याह नैव हीति[७८] । यद्वा यदेवेदं धर्माऽधर्माभ्यां भूतेन्द्रियाणामर्जनम् अयमेवात्मनो व्यापारः, अनर्जितानां प्रवृत्त्यभावादित्याह तत्कर्मेति[७९] । ननु परिक्रयबलात्तत्र युक्तं प्र-

---

* सर्पाकृतेति का. सं. पु. ।

यथा परिक्रियाम्नानाद्वात्विग्द्वारा क्रियेष्यते ।
गमनादिविधेस्तद्वद्भूतद्वारत्वमाश्रितम्* ॥८०॥
क्रयो यथात्मनो नास्ति गमनादि तथैव हि ।
विधीयते च तेनात्र परद्वारा ऽस्य कर्तृता ॥८१॥
यथा वा देवदत्तस्य च्छेदने काष्ठसंश्रिते ।
कर्तृत्वमेवं पुसः स्याच्छरीरगमनादिषु ॥८२॥

———

योजकत्वेनैव कर्तृत्वं, स्पन्दे तु कथमत आह यथेति[८०] । एतदेवो-पपादयति क्रयो यथेति[८१] ।

ननु यस्य व्यापारं धातुराह सकर्त्तेति स्मरणाद् धातूक्त-क्रियासमवायित्वमेव कर्तृत्वम्, अतः कथमन्यसमवेतेन कर्मणा ऽन्य-स्य कर्तृत्वमत आह यथेति[८२] ।

ननूद्यमननिपातनं छेदनं तच्च देवदत्ताश्रयमेव, नोद्यमननिपतन-मात्रे सति द्विधाभवनं छेदनमुच्यते, अतो द्विधाभवनफलावच्छेदे-नैव तस्य छेदनत्वम्, एवं चेदाकृतिन्यायेन द्विधाभवनमेव वाच्य-मित्यापन्नं, तच्च काष्ठाश्रयं, न च धातूक्तव्यापाराधारत्वं कर्तृत्वं, किं तु प्रत्ययोपात्तभावनासमवायित्वं, यस्य व्यापारं धातुराहेति यस्य व्यापारस्याख्यातोक्तं धातुरवच्छिनत्तीत्यर्थः । आख्यातं च क चिद्धात्वर्थसमानाश्रयं व्यापारमाह, यथा विक्लिद्यन्ति तण्डुला इति । क चिदन्याश्रयं यथा रोचन्ते मोदका इति, रोचन्तइतीच्छावचना-द्धातोरुत्पन्नमाख्यातमिष्यमाणगतं व्यापारमाह, क चिदुभयं पचति देवदत्तः पचन्ति तण्डुला इति ।

---

* आश्रितामिति का. सं. पु. ।

व्यापारान्तरतस्तत्र कर्तृत्वं चेदिहापि नः ।
सङ्कल्पसत्त्ववत्त्वाभ्यां* पुमानिष्टः प्रयोजकः ॥८३॥
साधारण्येन कर्तृत्वं सत्त्ववत्त्वेन कर्मसु ।
सङ्कल्पनैः पुनर्भेदात् प्रतिकर्मास्य कर्तृता ॥८४॥
'न च सर्वत्र तुल्यत्वं स्यात्प्रयोजककर्म्मणाम् ।
चलनेन ह्यसिं योद्धा प्रयुङ्क्ते च्छेदनं प्रति ॥८५॥
सेनापतिस्तु वाचैव भृत्यानां विनियोजकः ।
राजा सन्निधिमात्रेण विनियुङ्क्ते कदा चन' ॥८६॥
तस्मादचलतोऽपि स्याच्चलने कर्तृताऽऽत्मनः ।
यथैवाऽभिद्यमानस्य देवदत्तस्य भेत्तृता ॥८७॥

---

ननु युक्तं द्वैधीभावफलाऽऽख्यातोपात्तोद्यमननिपतनव्यापारयोगाद्देवदत्तस्य कर्तृत्वम्,आत्मनस्तु कथमित्याशङ्कामनुभाष्य परिहरति व्यापारेति[८३] । तदेव विभज्य द्वेधा दर्शयति साधारण्येनेति[८४] । सत्ताव्यापारेण सर्वक्रियासाधारणं कर्तृत्वं संकल्पप्रयत्नादिभिस्तु प्रतिकर्म व्यवस्थितमिति ।

ननु देवदत्तवदात्मनश्चलनात्मको व्यापारो नास्तीति कथमस्य भूतक्रियासु प्रयोक्तृत्वम्, अत आह न चेति[८५] द्वयेन । तस्माद्देवदत्तवत्परसमवेतेऽप्यात्मनः कर्तृत्वं सिद्धमित्युपसंहरति तस्मादिति[८७] । अथाप्यवश्यं चलनव्यापारेण प्रयोक्तुर्भवितव्यं, सोऽप्य-

---

* खल्वबन्धाभ्यामिति ३ पु. पा. ।

'कर्मान्तरैर्यदा दानं स्वव्यापारः स एव वा ।
भूतक्रियासु पुंसः स्यात्' 'तानि भूतान्तरैः पुनः ॥८८॥
तानि भूतान्तरेभ्यश्चेत्येवमादिर्न विद्यते'* ।
कर्मक्षयात्त्वनात्मीयैः कृतं कर्म न लिम्पति ॥८९॥
अन्वारम्भणमानादावौदुम्बर्यादिवर्त्तिनि ।
स्वरूपाऽसम्भवाद्यष्टुः शरीरेणैव कर्तृता ॥९०॥

---

स्येवात्मन इत्याह कर्मान्तरेति[८८] त्रिपादेन । प्राग्भवीयभूतपरिस्पन्दात्मकं यदात्मनः कर्म तदुपात्तेष्वेवैहिकेषु भूतेषु वर्त्तमानेषु तेनैव स्पन्देनास्ति प्रयोक्तृत्वं पुंस इति ।

प्राग्भवीयभूतव्यापारे ऽपि तर्हि कथं कर्तृत्वमत आह तानीति त्रिपादेन । तान्यपि हि ततःपूर्वतरभूतपरिस्पन्दनिर्मितानि तान्यपि हि तथेत्यनादिरेव संसारः । ननु देहेन क चित् स्पन्दे साक्षादात्मनां कर्तृत्वं, साक्षात्कर्तृत्वाधीनं चान्यत्र तद्द्वारं कर्तृत्वमतः कथमात्मनः कर्तृत्वं स्यात्,सत्यं, यदि स्पन्दद्वारमेव सर्वत्र कर्तृत्वं स्यात्संकल्पादिकं तु यत्साक्षादात्मकर्तृकं तदूद्वारेण भूतपरिस्पन्दे ऽपि स्थिते कर्तृत्वे तदूद्वारेण भूतान्तरस्पन्देषु सम्भवति कर्तृत्वम्; एवं पूर्वपूर्वभूतस्पन्दद्वारम् उत्तरोत्तरभूतस्पन्देषु कर्तृत्वमिति ।

यद्यनात्मभूतैरपि भूतैः कृतं कर्म पुरुषं बध्नाति ततो ऽनात्मीयैरपि कृतं प्रक्षीणकर्माणमपि पुमांसं लिम्पेत्, तत्र मोक्षाऽनुपपत्तिरत आह कर्मेति[८९] । न ह्यनात्मीयभूतकृतेष्वस्य साक्षाद्वा प्रयोक्तृत्वेन वा कर्तृत्वमुक्तं,तत्रोदाहरणमाह अन्वारम्भणेति[९०] । एतदेव द-

---

* इत्यादिरेवं न विद्यते इति १ पु. पा. ।

तस्माद्यथा ऽऽकृतौ शास्त्रं प्रवृत्तं व्यक्तिमाश्रयेत् ।
तथा पुंसि प्रवृत्तस्य भूतेन्द्रियसमाश्रयः ॥११॥
परैरभिगतान्* पूर्वमात्महेतून्निरस्यति ।
नेत्येतावदवच्छेद्यं विधर्म्माण इमे यतः ॥१२॥
अयात्र† देहभावित्वं कार्श्यादेरपि दृश्यते ।
अथाऽवस्थान्तरं तत्र तथा मृत्युरपीष्यताम् ॥१३॥
एतावानिह भेदः स्याच्छरीरे दृढएव या ।
प्राणाद्यपगतिस्तत्र निमित्तं न प्रतीयते ॥१४॥

---

दृष्टान्तनिदर्शनेनोपसंहरति तस्मादिति[११] । यथा ऽऽकृतेः साधनत्वं विहितमपि व्यक्तिद्वारं तथा ऽऽत्मनो देहद्वारमिति ।

भाष्यकारेण "प्राणादिभिरेनमुपलभामह"‡ इति वैशेषिकादिसंमता हेतव उपन्यस्ताः, तत्र प्रयोजनमाह परैरिति[१२] । तेषु ह्यनिरस्तेषु शिष्यास्तेष्वहंप्रत्यये च सामान्यदृष्टयो भवेयुरिति ।

"ननु शरीरमेव प्राणित्यपानिति चे"§ति चोद्यस्योत्तरं "न प्राणादयः शरीरगुणविधर्माण"|| इति, तद्विच्छिद्य व्याख्येयमित्याह नेत्येतावदिति । विच्छिन्नस्योत्तरस्यार्थमाह विधर्माण इति ।

वैधर्म्यं चाऽयावद्देहभावित्वमुक्तं भाष्ये, तदाक्षिपति अयात्रेदिति[१३] । अथ स्थौल्याद्यवस्थान्तरं तत्रास्तीत्युच्यते तथा ऽत्रा-

---

* अपिहितानिति ३ पु. पा. । † अयाचेदिति १ पु. ।
‡ शा. भा. पृ. १८ प. २० ।
§ शा. भा. पृ. १८ प. २२ । || शा. भा. पृ. १८ प. २३ ।

'गुणो द्रव्यविनाशाद्वा विनाशमुपगच्छति ।
गुणान्तरोपपाताद्वा* तस्मादुत्कृत्य नाश्यते ॥९५॥
न तावत्तद्द्वयं मृत्यौ सर्वस्यैवोपलभ्यते ।
अविनष्टशरीरस्य प्राणादिश्चाऽपगच्छति' ॥९६॥
तस्मान्न देहधर्म्मत्वं प्राणादेरिति गम्यते ।
तस्मिन् दृष्टे ऽप्यसद्भावात् स्रग्विलेपनगन्धवत् ॥९७॥

---

पि मृत्युरिवाऽवस्थान्तरमस्त्येवेत्याह अथेति । परिहरति एतावानिति[९४] । दृढे तदवस्थे शरीरे या प्राणाद्यपगतिः सा शरीरगुणत्वे प्राणादीनं निर्निमित्तैव स्यात् । ननु मृत्युर्निमित्तं, कोयं मृत्युर्नाम, नन्वसौ प्राणाद्यपगम एव, तस्यैव निमित्तमान्वष्यते,तच्च नास्तीति। कथं नास्त्यत आह गुण इति द्वयम[९५] । तस्मादुत्कृत्येति । द्रव्यादुद्धृत्य तदनुच्छेदेनेत्यर्थः। मृत्युः प्राणाद्यपगमः, तत्रान्यतरदपि निमित्तं नास्तीत्यर्थः ।

तदेवमुपपादितं देहाऽधर्मत्वं प्रयोगेण दर्शयति तस्मादिति[९७] । मा भूद्देहधर्मः, तथापि कथमात्मलिङ्गत्वं, वायोर्ह्यूर्ध्वाऽधोगतिविशेषः प्राणाऽपानशब्दाभ्यामुच्यते, स च वायुधर्मः कथमात्मलिङ्गमुच्यते, तिर्यग्गमनशीलस्य वायोर्नाऽकस्मादूर्ध्वाऽधोगतिः संभवतीति तद्धेतुः प्रयत्नो ऽनुमीयते, प्रयत्नश्च गुणत्वाद् गुणिनमनुमापयति स चात्मेति ।

"सुखादयश्च स्वयमवगम्यन्ते,रूपादय इव शरीरगुणाः परेणापी"†ति भाष्यमयुक्तं, प्राणाऽपानयोरप्यन्तर्वर्त्तिनोः परेणाऽनवगमात्केन विशे-

---

* उपघाताद्वेति २ पु. पा. ।

† शा. भा. पृ. १८ प. २९ ।

बहिर्वृत्तित्वमप्यस्ति प्राणादेरिति गम्यते ।
परेन्द्रियैः, सुखादिस्तु नान्तरत्वात्प्रतीयते ॥९८॥
प्रहृष्टवदनत्वादिलिङ्गगम्यं सदैव हि ।
अन्तःस्थितेर्न दृष्टिश्चेत् पाटिते ऽप्यनुपग्रहात् ॥९९॥
अन्तःशरीरे रूपादि पाटितस्यो*पलभ्यते ।
न सुखादि,रतोऽस्याऽसौ न मनोबुद्धिवद् गुणः ॥१००॥
गुणत्वादाश्रितत्वं हि सुखादेः स्याद् रसादिवत् ।
य आश्रितः† स आत्मेति ब्रुवाणस्यैतदुत्तरम् ॥१०१॥

---

षेण सुखाद्युपन्यासो, ऽत आह बहिर्वृत्तित्वमिति[९८] । यदि नेन्द्रियैर्गम्यते, केन तर्ह्यवगम्यते, ऽत आह प्रहृष्टेति[९९] ।

शङ्कते अन्तःस्थितेरिति। परिहरति पाटिते ऽपीति । नेत्यध्याहार इति । एतदेव विवृणोति अन्तरिति दिरन्तेन[१००] । एतदेव प्रयोगेण दर्शयति अत इति । तथापि कथमात्मसिद्धिरत आह गुणत्वादित्यात्माऽन्तेन[१०१] ।

एवं सुखादीनां शरीरगुणत्वनिराकरणेन शरीरादन्यस्मिन्नात्मनि वैशेषिकादिमतेन साधिते ज्ञानमात्रात्मवादी त्वाह, "कुत एष संप्रत्यय"‡ इत्यादिना, तस्यार्थमाह इतीति । ज्ञानविशेषा हि सुखादयः, ज्ञानं स्वतन्त्रं न कस्य चिदन्यस्य गुणः, अतो नाऽन्यस्तद्वानस्ति, यतः शरीरस्य तद्वत्ताऽनुपपत्तेरात्मा सिद्ध्यतीति ।

---

* रूपादिरितरस्येति ३ पु. पा. ।

† यदाश्रित इति का. पा. ।

‡ शा. भा. पृ. १९ प. ३ ।

गुणानां परतन्त्रत्वाद् गुणवाननुमीयते ।
सिद्धे गुणत्वे तत् त्वस्मान् प्रत्यसिद्धं सुखादिषु॥१०२॥
भेदेन किमुपन्यस्ता तुल्यन्यायेच्छया स्मृतिः ।
उभयं न ह्यदृष्टे ऽर्थे वासनातश्च सिद्ध्यति ॥१०३॥
'उपलब्धिमनाश्रित्य स्मृत्यैवेच्छोपजायते ।
उपलब्धिसमानो ऽस्याः कर्ता नैकान्ततो भवेत्॥१०४॥
उपलब्ध्यनुसारेण स्मृत्यात्मा पुनरिष्यते ।
समानस्तेन कर्ता ऽस्ति तदर्थं पुनरुच्यते' ॥१०५॥

---

एवं सुखादीनां लिङ्गत्वं निराकृत्य इच्छालिङ्गत्वमाशङ्कितम्, इच्छा हि नाऽदृष्टे ऽन्यदृष्टे वा संभवति अतिप्रसङ्गात्, तदियमुपलब्धिसमानकर्तृका सती ज्ञानाऽतिरिक्तं स्थायिनमात्मानमुपकल्पयतीति, तत्रोत्तर'मनुपपन्नमिति नः क्व संप्रत्यय"* इति। यदा हि स्थिरः कर्त्ता न दृष्टः तदा यथादर्शनमन्योपलब्धे वासनावशात्तत्संततिजन्यस्यान्यस्येच्छा भवति, नाऽन्यसंततिजन्यस्येति व्यवस्था भविष्यतीति ।

पुनः स्मृतेर्लिङ्गत्वमाशङ्क्य तथैव निराकृतं, तदाक्षिपति भेदेनेति[१०३] ।

तुल्यन्यायतामेव दर्शयति उभयमिति । नाऽदृष्टे ऽन्यदृष्टे वा संभवति अतिप्रसङ्गादिति यच्चोद्यं तदुभयोस्तुल्यं वासनातः सिध्यति व्यवस्थेत्युत्तरमपि तुल्यमिति । परिहरति उपलब्धिमिति[१०४] द्वयेन । स्मृतिविषया हीच्छा, सेयमन्तरेणाप्युपलब्धिसमानकर्तृतां स्मृतिव्यवस्थयैव व्यवस्थां लभते, स्मृत्यात्मा पुनरुपलब्ध्य-

---

* न्या. भा. पृ. २० प. १३ ।

तत्रापि तु समानायां सन्ततौ वासना यतः ।
तस्मात् सत्यपि भिन्नत्वे स्मरणं व्यवतिष्ठते ॥१०६॥
हेतुष्वेवं परोक्तेषु प्रतिषिद्धेषु संप्रति ।
अहंप्रत्ययविज्ञेयः स्वयमात्मोपपाद्यते ॥१०७॥
अहं यामीत्यहंशब्दः शरीरार्ऽथः प्रयुज्यते ।
गन्तृत्वात्तस्य, न ह्यात्मा गमनं प्रतिपद्यते ॥१०८॥
स्मरणप्रत्यभिज्ञाने भवेतां वासनावशात् ।
अन्याऽर्थविषये, ज्ञातुः प्रत्यभिज्ञा तु दुर्लभा* ॥१०९॥

---

नुसारेणैव भवन् अवश्यं समानं कर्तारं गमयति, अन्यथा व्यवस्थाऽनुपपत्तिरित्यनेन विशेषेण पुनरुपन्यास इति ।

कथं तर्हि स्मृतेरपीच्छावदनिराकरणम्, अत आह तत्रापीति[१०६]।
"अन्येद्युर्दृष्टे परेद्युरहमिदमदर्शमिति भवति प्रत्यय"† इति सिद्धान्तभाष्यं, तस्यार्थमाह हेतुष्विति[१०७] ।

अत्र चोद्यभाष्यं "परत्रांप्यहंशब्दो भक्त्या दृश्यते, अहमेव पुत्रोऽहमेवाऽसौ देवदत्त"‡ इत्यादि, तत्राऽहं गच्छामीत्यत्र कथं परगोचरत्वमहंशब्दस्येत्यत आह अहमिति[१०८] ।

अत्र परिहारभाष्यं "न वयमहमितीमं शब्दं विज्ञानाऽतिरिक्ते स्थायिनि विज्ञातरि हेतुत्वेनोद्दिशामः, किं तर्हि शब्दाद् व्यतिरिक्तं प्रत्यभिज्ञाप्रत्यय"§मिति, तदयुक्तं, स्मृतिवदेव हि प्रत्यभिज्ञा ऽपि वासनावशादेवोपपन्ना नैकान्ततः शक्नोति पूर्वापरकालाऽवस्थायिनं विज्ञातार-

---

* दुर्बलेति १ पु. पा. । † शा. भा. पृ. २१ प. ९ ।
‡ शा. भा. पृ. २१ प. १३ । § शा. भा. पृ. २१ प. १४ ।

अहं वेद्मीत्यहं बुद्धिर्ज्ञातारमधिगच्छति* ।
तत्र स्याद् ज्ञातृविज्ञानं तदाधारो ऽथ वा पुमान् ॥११०॥
कृतं भूतेन्द्रियाणां च चैतन्यप्रतिषेधनम् ।
समस्तव्यस्तसङ्घातविवेकपरिणामिनाम् ॥१११॥
साङ्ख्यादिभि,रशुद्धत्वात्सङ्घातात्संनिवेशतः† ।
मृतवच्च शरीरत्वाद्भूतत्वाद्बाह्यभूतवत् ॥११२॥

---

मुपस्थापयितुम,अत आह स्मरणेति[१०९] । यद्यर्थान्तरविषयया स्मृत्या प्रत्यभिज्ञया चाऽर्थापत्त्या विज्ञातारं कल्पयेम ततो वासनावशादेवोपपत्तिरुच्येत, ज्ञातृप्रत्यभिज्ञा त्वियमुच्यते भाष्यकारेण वयमेव ह्यो वयमेवाद्येति, तेन ज्ञातृरूपेण प्रत्यभिज्ञारूपेणाहंप्रत्ययेन ज्ञानादन्यस्य स्थिरस्य ज्ञातुः सिद्धिरिति ।

कथं पुनरहंप्रत्ययेन ज्ञातुः स्थायित्वम, अत आह अहमिति [११०] । ज्ञातैवाऽहंप्रत्ययस्य विषयः, तद्यद्यहंमतिर्ज्ञानालम्बना ऽतस्तदेव ज्ञातृ, अथास्याऽविषयो ज्ञानाधारो ऽन्यः ततः स एव ज्ञाता, तत्र ज्ञानस्य क्षणिकत्वेन प्रत्यभिज्ञाहंप्रत्ययविषयत्वाऽनुपपत्तेरन्यस्य ज्ञातुः सिद्धिरिति ।

ननु शरीरविषयत्वं कस्मान्न भवति, तदेव युक्तम, अहं स्थूलो ऽहं कृशा इति कार्श्यादिसामानाधिकरण्यादत आह कृतमिति भि[१११]-न्तेन । समस्तानामाग्नेयादीनामिव संहतानां, व्यस्तानां सौर्यादीनामिवेतरेतरनिरपेक्षाणां संघातस्य समुदायस्य विवेकपरिणामिनां

---

* अभिगच्छतीति १ पु. पा. ।

† संघातासंनिवेशत इति ३ पु. पा. ।

चेतनत्वे हि* सर्वेषां न सम्बन्धः परस्परम् ।
समत्वादेकचैतन्ये ऽन्यस्याऽङ्गत्वं विरुध्यते ॥११३॥
सङ्घातसन्निवेशौ च न स्तः पारार्थ्यवर्जितौ ।
भोक्ता च चेतनः कश्चिदस्तीत्यत्राऽविरुद्धता ॥११४॥

---

भूतान्तरेभ्यो विवेकेन देहात्मना परिणतानामिति । तमेव प्रतिषेधे दर्शयति अशुद्धत्वादिति । अशुद्धत्वं त्रिगुणात्मकत्वं बीभत्सानिमित्तत्वं वा, अत्र शरीरत्वातिरिक्तेषु चतुर्षु बाह्यभूतवदिति दृष्टान्तः शरीरत्वे तु मृतवदिति ।

किं चैवं भूतचैतन्यवादी वक्तव्यः, किं सर्वाणि चेतयन्ते, किं वैकमिति, पूर्वस्मिन् पक्षे सर्वेषां समत्वादसंबन्धः स्यादित्याह चेतनत्वइति समत्वा[११३]दन्तेन । एकचैतन्ये त्वितरेण विना ऽपि लोष्टादावपि पृथिव्यादिकस्य चैतन्यं स्यान्न हि तस्य चैतन्ये अन्यदपेक्षणीयं, शरीरं तु पञ्चस्वपि गतमित्याह एकेति । तदयं प्रयोगः, येयं शरीरगता भूतान्तरस्पृष्टा पृथिवी सा न चेतयते पृथिवीत्वाल्लोष्टवदिति, तथा जलादावपि दर्शयितव्यमिति । प्रयोगान्तरमाह संघातेति[११४] । शय्यादौ संघातत्वं संनिवेशत्वं च पारार्थ्येन व्याप्तं दृष्टं शरीरस्यापि पारार्थ्यमनुमापयतीति ।

तथापि कथं तस्याऽचैतन्यमस्य वा कथं चैतन्यमत आह भोक्तेति । स्वयंचेतनस्य हि स्वयमेव भोक्तृत्वात् पारार्थ्यं विरुध्येत,अतो ऽन्यः कश्चिच्चेतनो भोक्तेति । विस्तरेण शरीरचैतन्यं शास्त्रदीपिकायामेव निरस्तमिति ।

---

* चेतनत्वेनेति ३ पु. पा. ।

यदि स्याद् ज्ञानमात्रं च क्षणिकं ज्ञातृ तत्र वः ।
न भवेत्प्रत्यभिज्ञानं पूर्वज्ञातरि संप्रति ॥११५॥
ज्ञातवानहमेवेदं पुरेदानीं च वेद्म्यहम् ।
'तस्य ज्ञानक्षणः को नु विषयः परिकल्प्यताम् ॥११६॥
पूर्ववृत्ते हि विषये ज्ञातवानिति सम्भवेत्* ।
जानामीति न सत्यं स्यान्नेदानीं वेत्त्यसौ यतः ॥११७॥
यदीदानीन्तनो ग्राह्यो जानामीत्युपपद्यते ।
ज्ञातवानित्यदो ऽसत्यं नैवाऽज्ञासीदयं यतः ॥११८॥
उभयग्राह्यतायां तु द्वयमप्यनृतं भवेत् ।
न ह्येतौ ज्ञातवन्तौ वा जानीतो वा ऽधुना पुनः' ॥११९॥
सन्तानो न च तद्ग्राह्यो द्वैरूप्यस्याप्यसम्भवात् ।
ज्ञातवान्न ऽह्यसौ पूर्वमवस्तुत्वान्न वा ऽधुना १२०॥
सामान्यं न च किं चित्ते ज्ञातृ पूर्वाऽपरक्षणे ।

---

स्थिते शरीरस्याऽचेतनत्वे ज्ञानस्य ज्ञातृत्वे प्रत्यभिज्ञाऽनुपपत्तिरित्याह यदीति[११५]। कीदृशं पुनः प्रत्यभिज्ञानमिति तत्स्वरूपं दर्शयति ज्ञातवानिति[११६] । तस्य ज्ञानक्षणविषयत्वाऽसंभवं विकल्पपूर्वकं विवृणोति तस्येति सार्द्धत्रयेण। संतानविषयत्वमपि न संभवतीत्याह संतान इति[१२०]। स्थायित्वे ऽर्थक्रियाया असंभवात् अवस्त्वेव, क्षणिकत्वे तु ज्ञानवदेव प्रत्यभिज्ञाऽनुपपत्तिरिति। न च ज्ञानत्वसामान्यं

---

* संमतामिति १ पु. पा. ।

सादृश्यात्प्रत्यभिज्ञा चेन्न स्यादसदृशेषु* सा ॥१२१॥
गामहं ज्ञातवान् पूर्वमश्वं जानाम्यहं पुनः ।
अथ ज्ञातृत्वसामान्यं† तत्स्याद्देहान्तरेष्वपि ॥१२२॥
तत्र सर्वेण विज्ञाते भवेदहमिति स्मृतिः ।
एकसन्तानजे चापि स इति स्यात् क्षणे मतिः॥१२३॥
यथा देहान्तरज्ञाने घटादौ वा बहिः स्थिते ।
ज्ञातरि प्रत्यभिज्ञां च वासना कर्तुमर्हति ॥१२४॥
नाऽतस्मिन् स इति ज्ञानं न ह्यसौ भ्रान्तिकारणम् ।
न चाऽहंप्रत्ययो भ्रान्तिरिष्टो बाधकवर्जनात् ॥१२५॥

---

विषयः,तस्य भवतामभावादित्याह सामान्यमिति[१२१]। तद्विषयश्चाऽहं-प्रत्ययः संतानान्तरे ऽपि स्यात्, तत्रापि ज्ञानत्वसंभवादिति। भिन्नत्वे ऽपि पूर्वापरज्ञानयोः सादृश्यादेकत्वभ्रम इति चेन्न, विसदृशेष्वपि दर्श-नादित्याह सादृश्यादिति। अस्ति च विसदृशेष्वहमंशस्य प्रत्यभिज्ञे-त्याह गामिति[१२२]। तत्रापि ज्ञानशब्दवाच्यतया ऽस्त्येव सादृश्य-मिति चेत्, ततो ऽतिप्रसङ्गः स्यादित्याह अथेति। यदि सत्यपि सा-दृश्ये संतानान्तरे स इत्येव प्रत्ययो भवति नाहमिति, तथा सत्येक-संतानान्तरवद् घटादिबहिरर्थवच्च स इत्येव स्यादित्याह एकेति[१२३]।

ननु सत्यप्येकस्मिन्विज्ञातरि वासनावशादेव प्रत्यभिज्ञा तथा चेद्भिन्नेष्वपि समानसंततिजेषु ज्ञानक्षणेषु तद्वशादेवास्तु, न च सा संतानान्तरे ऽस्तीति नातिप्रसङ्गो, ऽत आह ज्ञातरीति[२४]। स्मृतिहेतु-र्हि संस्कारो वासना, सा ऽनुभूते ऽर्थे स्मृतिं जनयतीति युक्तं, न

---

* विसदृशेष्विति पाठान्तरम् : † ज्ञातृत्वसादृश्यमिति ३पु. पा.।

ज्ञातुरन्यश्च विषयस्तस्य न स्यात्स्वभावतः ।
अहंप्रत्ययविज्ञेयो ज्ञाता नः सर्वदैव हि ॥१२६॥
गुरुः स्थूलः कृशो वा ऽहमिति देहे ऽपि या मतिः ।
भ्रान्तिः सा, भेदरूपं हि गुरु मे तदितीष्यते* ॥१२७॥
इदं ममेदृशं चक्षुर्मनो मे भ्रान्तमित्यपि ।
इन्द्रियेष्वपि भेदेन व्यवहारश्च दृश्यते ॥१२८॥

---

त्वसौ भ्रान्तिहेतुः, येनाऽतस्मिंस्तद्ग्रहो ऽनया स्यादिति । भ्रान्तित्वमप्ययुक्तमित्याह न चेति[125] ।

ननु कार्श्यादिसामानाधिकरण्याद्देहविषयो ऽहंप्रत्ययो, ऽत आह ज्ञातुरिति[126] । स्वभावो ऽयमहंप्रत्ययस्य यद् ज्ञातृविषयत्वं, सर्वदैव तत्र ज्ञातुरवभासात्, न च देहस्य ज्ञातृत्वं सम्भवतीति न तद्विषयत्वमिति । कथं तर्हि कार्श्यादिसामानाधिकरण्यम्, अत आह गुरुरिति सा[127]ऽन्तेन । देहात्मनोरभेदभ्रमाद्देहगतं कार्श्यादिकमात्मन्यध्यस्यतीति । भ्रान्तित्वे कारणमाह भेदेति । गुरु मे शरीरं तनु मे शरीरमित्यस्मदर्थाद्भेदेन शरीरं परामृश्यतइति । भेदपरामर्शादेवेन्द्रियाणामप्यस्मदर्थाद्भेदात्सिद्धमज्ञातृत्वमित्याह इदमिति[128] ।

ननु कृशो ऽहमित्यभेदो ऽपि परामृश्यते, कृशं मे शरीरं तनु मे शरीरमिति भेदो ऽपि, तदिहाऽभेदो भ्रान्तो भेदस्तु परमार्थ इति

---

* ईक्ष्यते इति का. पा. ।

अज्ञातृत्वस्य* सिद्धत्वाद् विरोधाद्भेदवत्यपि ।
प्रत्यासत्तिनिमित्तस्तु स्यादभेदमतिर्भ्रमः ॥१२९॥
ममात्मेति मतिर्भेदव्यपदेशेन या ऽऽत्मनः ।
तत्राऽवस्थात्मना भेदं ज्ञानस्याश्रित्य कल्पना ॥१३०॥
'ममेत्येतस्य मुख्यार्थो नात्मनो ऽन्यः प्रतीयते ।
तेनाऽसौ भेदहेतुः स्या'द्भेदश्च ज्ञानहेतुकः ॥१३१॥
ये चेहाऽज्ञातनानात्वास्तेषां देहेष्वहं मतिः ।
तत्राप्यात्माऽभिमानेनेत्यहंबुद्धिर्ध्रुवा ऽऽत्मनि ॥१३२॥

———

कथमवगम्यते; ऽत आह अज्ञातृत्वस्येति[१२९]। शरीरस्य त्वज्ञातृत्वं सिद्धम्, अतस्तस्य ज्ञातृगोचराऽहंप्रत्ययगोचरत्वविरोधाद् ज्ञातुर्भिन्ने ऽपि शरीरे तत्संसर्गकृतो ऽयमभेदभ्रम इति ।

ननु मम शरीरमितिवन्ममात्मेत्यपि भेदव्यपदेशो ऽस्ति, तथा हि व्यपदिशन्ति नायमर्थो ममात्मना ज्ञात इति, इतश्चाप्यात्मनो ऽन्यदात्मान्तरं प्रसज्येत,अत आह ममेति[१३०]। ज्ञानं हि कथं चिद् अवस्थारूपेणात्मनो भिन्नत्वान्ममेति भेदेन व्यपदिश्यते, न तदेवात्माऽभेदविवक्षयात्मेति, अतो नाऽऽत्मान्तरप्रसङ्ग इति ।

केचित्त्वस्मिन् प्रयोगे शरीरमेव ममेति व्यपदिश्यतइति मन्यन्ते, तत्त्वयुक्तमित्याह ममेति[१३१] पादत्रयेण । ज्ञातृवचनस्य ममशब्दस्य नात्मनो ऽन्यो मुख्यो ऽर्थो ऽस्ति, तेनासाऽवेव पूर्वभेदव्यपदेशस्य हेतुरिति ।

कस्मात्पुनरात्मान्तरमेव नेष्यते, अत आह भेद इति । ज्ञानहेतुको हि भेदो न व्यपदेशमात्रात्सिद्ध्यति, न चेह ज्ञातृज्ञानशरीरे-

---

* अज्ञातत्वस्येति ३ पृ. पा. ।

ये तु विज्ञातनानात्वास्ते देहेष्वनहंकृताः ।
जानाम्यहमितीदं तु ज्ञानं नैव निवर्त्तते ॥१३३॥
तन्निवृत्तौ न तेषां स्याद्ध्यानं शिष्योपदेशने ।
प्रवृत्तिर्दृश्यते सा च, तेनाऽऽत्मा तैः प्रतीयते ॥१३४॥
शास्त्रादावर्द्धविज्ञाते यद्यहं ज्ञातवा*निति ।
नाऽवगच्छेत्ततः सर्वः प्रवर्तेताऽऽदितः पुनः ॥१३५॥

न्यो वस्त्वन्तरं प्रतीयते, अतो नात्मभेद इति । इतश्च शरीरे ऽहंमानो भ्रान्तिरित्याह ये चेति[१३२] । तेषामपि हि ज्ञातृत्वाभिमानेनैव देहे ऽहंप्रत्ययः, ते हि देहमेव ज्ञातारं मन्वानास्तत्राऽहंमानं कुर्वन्ति, तेनाऽविवादमस्य ज्ञातृगोचरत्वमिति । शरीरगोचरत्वं भ्रान्तिरेवेत्याह तत्रेति ।

ये तु श्रवणमननादिभिर्ज्ञातुर्देहस्य च व्यक्तं नानात्वं जानन्ति तेषां देहे ऽहंमतिर्निवर्ततइत्याह ये त्विति[१३३] । ननु ज्ञातर्यप्यहंमानो निवर्ततएव, योगिनामहंकारममकारौ ह्यनात्मन्यात्मभ्रान्त्यभिमानावेव, अत आह जानामीति । योगिनामप्यहमिति जानामीति चोभयमपि ज्ञानं न निवर्त्ततइति । कारणमाह तन्निवृत्ताविति[१३४] । समानविषयबुद्धिधारैव ध्यानमुपासनमिति चोच्यते, न च स्वात्मन्यहंबुद्धेरन्या बुद्धिः सम्भवति, अतो ऽस्ति योगिनामप्यहंमानः, तथा जानामीत्येवमात्मानमनवगच्छतः कथं शिष्योपदेशे प्रवृत्तिः, दृश्यते च योगीश्वरस्यापि भगवतो वासुदेवस्याऽर्जुनोपदेशे प्रवृत्तिरहंमानश्च अहं सर्वस्य जगत इत्यादिभिरिति योगिभिरप्यात्मा ज्ञाता प्रतीयतइति ।

---

* श्रुतवानिति का. पा. ।

'तेनाऽस्मात्प्रत्यभिज्ञानात्सर्वलोकाऽवधारितात् ।
नैरात्म्यवादलाभः स्या'देते च प्रतिहेतवः ॥१३६॥
ह्यस्तनाहंमतिग्राह्यो ज्ञाता ऽद्याप्यनुवर्त्तते ।
अहंप्रत्ययगम्यत्वादिदानीन्तनबोद्धृवत् ॥१३७॥
एष वा ह्यो* भवेज्ज्ञाता ज्ञातृत्वात्तत एव वा ।
ह्यस्तनज्ञातृवत्, तेषां प्रत्ययानां च साध्यता† ॥१३८॥
एकसन्तानसम्बन्धिज्ञात्रहंप्रत्ययत्वतः ।
ह्यस्तनाऽद्यतनाः सर्वे तुल्यार्थाश्चैकबुद्धिवत् ॥१३९॥
वेदादेवाऽऽत्मनास्तित्वं यो नाम प्रतिपद्यते ।
विरोधं वा ऽऽत्मना ब्रूयात्तं प्रति ब्राह्मणाऽभिधा॥१४०॥

---

एवं तावदस्ति स्वात्मनः प्रत्यभिज्ञा, परेषामपि चेष्टाविशेषादात्मप्रत्यभिज्ञाऽव्याप्तावसावनुमीयतइत्याह शास्त्रादाविति[१३५] ।

तदेवं सर्वजनीनात्मप्रत्यभिज्ञानान्नैरात्म्यवादस्य जीवच्छरीरं निरात्मकं शरीरत्वान्मृतशरीरवदित्यादेर्बाधः स्यादित्याह तेनेति[१३६] त्रिपादेन । प्रतिहेतवश्च सन्तीत्याह एतइति ज्ञातृव[१३८]दन्तेन । तत एवाऽहंप्रत्ययगम्यत्वादिति। प्रयोगान्तरमाह एकेति[१३९]। एकसंतानसंबन्धिनो ऽहंप्रत्यया एकज्ञातृविषया इति प्रतिज्ञेति ।

भाष्यकारेणाऽविनाशी वा अरे ऽयमात्मेति ब्राह्मणमुपन्यस्तं, तदयुक्तं, न ह्यनेन नास्तिकाः प्रतिबोध्यन्ते, ऽत आह वेदादिति[१४०] ।

---

* बाह्य इति २ पु. पा. ।

† साध्यतामिति १ पु. पा. ।

अन्यथाऽनुपपत्तेश्च विधिनात्मन्यपेक्षिते ।
अस्तित्वद्योतनादेतैरर्थाऽऽक्षिप्तसमर्थनम् ॥१४१॥
शान्तायां वाच्यशक्तायामात्मा केन प्रकाश्यते ।
आत्मनैव प्रकाश्यो ऽयमात्मा ज्योतिरितीरितम् ॥१४२॥
अग्राह्य इति सामान्यात्सर्वेणेति* प्रतीयते ।
आत्मज्योतिष्ट्ववचनात्परैरित्यवतिष्ठते† ॥१४३॥

---

यो वेदवादी शिष्यो, यो वा विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवाऽनु विनश्यति न प्रेत्य संज्ञा ऽस्तीति भूतचैतन्याभिधानाद्, वेदविरोधमात्मनो मन्यते, तत्प्रतिबोधनाय ब्राह्मणाऽभिधानमिति ।

न केवलमुपनिषद्वचनादेवात्माऽस्तित्वम्, अग्निहोत्रादिविधयो ऽपि हि नित्यं भोक्तारमन्तरेणाऽनुपपद्यमानास्तमर्थाद् द्योतयन्त्येव, तमेव तूपनिषदो गहनतया विस्पष्टीकर्त्तुं श्रुत्यादिभिरभिदधतीत्याह अन्यथेति[१४१] ।

भाष्यकारेण "यदि विज्ञानादन्यदस्ति विज्ञातृ विज्ञानमपास्य तन्निदर्श्यताम्"‡मिति चोदयित्वा "स्वसंवेद्यः स संभवति, नासावन्येन शक्यते द्रष्टुम्, अशक्यत्वाच्च नासावपि शक्यते निदर्शयितु"§मिति परिहृत्यास्मिन्नर्थे ब्राह्मणमुपन्यस्तं, शान्तायां वाचि किं ज्योतिरेवायं पुरुष आत्मा ज्योतिः सम्राडिति होवाचेति; तद्व्याचष्टे शान्तायामिति[१४२]।

"परेण न गृह्यतइत्यत्रापि ब्राह्मणं भवति, अगृह्यो न हि गृह्यतइति परेण न गृह्यतइत्येतदभिप्रायमेतद् भवति, कुतः, स्वयं ज्योतिष्ट्ववचना"‖दिति भाष्यार्थमाह अग्राह्य इतीति[१४३] ।

---

* परेणेति पाठान्तरम् । † अवधार्यते इति पाठान्तरम् ।

‡ शा. भा. पृ. २२ प. ७ ।

§ शा. भा. पृ. २२ प. १ । ‖ शा. भा. पृ. २२ प. २० ।

अर्थादेवार्थबुद्धिर्या सा शब्दैर्नोपमोच्यते ।
सादृश्यबोधनं शब्दैरुपमानाऽऽगमौ पुनः ॥१४४॥
आत्मज्ञानाऽविनाभूतदृष्टचेष्टानिरूपणात् ।
परेषामात्मविज्ञानमनुमानादुदाहृतम् ॥१४५॥
सदसन्नाशयनाशात्मपरिकीर्तनमूढया ।
चोदितः पूर्वपक्षो ऽयमिति सिद्धान्तमब्रवीत् ॥१४६॥

---

केन पुनरुपायेनाऽयमन्यस्मै कथ्यतइत्यत्रापि स एष नेति नेतीति ब्राह्मणमुपन्यस्य यत्तु परः पश्यतीत्यादिना च तद् व्याख्याय पुनरुपमानाद्वोपदिश्यते यादृशं भवानात्मानमुपलभते तमहमपि तादृशं पश्यामीति भाष्यं, तदयुक्तं, सदृशादर्थात्सदृशान्तरे बुद्धिरुपमानम्,इदं तु प्रसिद्धसाधर्म्यात्साध्यसाधनं नैयायिकोक्तमागमाद् बहिर्भूतमित्युक्तम्, अत आह अर्थादिति[१४४] । सत्यं तच्छुद्धं मुख्यमुपमानम्, इदं तु शाब्दमपि सादृश्यविषयत्वादुपमानमित्युक्तमिति ।

ननु परात्मन्यवगते तत्सादृश्येनात्मोपदिश्यते, तदवगतिरेव कुतो, ऽत आह आत्मेति[१४५] । यदसौ पुरुष इत्यादिना भाष्येण शास्त्रादावर्द्धविज्ञातइत्यत्र चैतदनुमानमुदाहृतमिति ।

यत्तु पूर्वपक्षे भूतचैतन्यार्थे ब्राह्मणमुपन्यस्तं विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवाऽनु विनश्यतीति, तत्परिहरति सदसदिति[१४६] । श्रुतिरेव ह्यस्य वाक्यस्याऽन्यार्थतां दर्शयतीति । तथा हि, पूर्वमजराऽमृतत्वमभिधाय विज्ञानघन इत्यादिना विनाशित्वानुकीर्तनात्सदसदूपकीर्तनाच्च संमूढया मैत्रेय्या पूर्वापरविरोधाख्यः पूर्वः पक्षो याज्ञवल्क्यं प्रति चोदितः, अत्रैव मा भगवान्मोहान्तमपीपदत् विरुद्धाऽभिधानात् एवं पूर्वपक्षश्चोदित इति कृत्वा सिद्धान्तविरोधपरिहारं या-

'अविनाशी स्वरूपेण पुरुषो या तु नाशिता ।
मात्राणां साऽधिकाराणां' भूतादीनामसंज्ञिता ॥१४७॥
इत्याह नास्तिक्यनिराकरिष्णु-
रात्माऽस्तितां भाष्यकृदत्र युक्त्या ।

---

ज्ञवल्क्यो ऽविनाशी वा ऽरे ऽयमात्मा ऽनुच्छित्तिधर्मा मात्राऽसंसर्गस्त्वस्य भवतीत्यन्तेनाऽब्रवीदिति ।

सिद्धान्तश्रुतिं व्याचष्टे अविनाशीति[१४७] पादत्रयेण । नित्य एवायमाविनश्वरः पुरुषः, नित्यस्यापि तु मात्रादिसंसर्गो विनाशीति कृत्वा तदभिप्रायं तान्येवाऽनु विनश्यतीति विनाशवचनम् । एतदुक्तं भवति, विज्ञानघन इति ज्ञानशक्तिस्वभावस्यात्मनो ऽभिधानं न ज्ञानमात्रस्य, स च भूतेभ्यः समुत्थितो मुक्तस्तान्येव भूतान्यनु विनश्यति, मोक्षकाले तस्य मात्राशब्दवाच्यैरिन्द्रियैरधिकारशब्दवाच्याभ्यां धर्माधर्माभ्यां संबन्धनाशात्तेनात्मना पुरुषो विनष्टो भवतीत्यर्थः । गौणं वा विनष्टत्वं प्रमाणागोचरत्वाद्विनष्ट इव भवतीत्यर्थः । न प्रेत्य संज्ञास्तीति भूतेभ्यः प्रेतस्य मुक्तस्य कारणाभावान्न ज्ञानमस्तीत्यर्थः । प्रकरणार्थमुपसंहरति भूतादीनामिति । भूतेन्द्रियविज्ञानानामसंज्ञित्वमचैतन्यम्, अन्यस्तु तेभ्यो नित्यश्चेतन इति ।

ननु प्रतिपादितो ऽप्यात्मनः शरीरादिविवेको न दृढरूपेण हृदये ऽवतिष्ठते, अहं स्थूलो ऽहं गच्छामीति शरीरएव बलादहंमानो भवति, तदत्र को ऽभ्युपायः, येनाऽभिप्रेतविविक्तात्मबोधो निश्चलो दृढो भवति, अत आह इत्याहेति[१४८] । नित्यात्मसत्तामात्रेणैव वेदप्रामाण्यसिद्धे-

दृढत्वमेतद्विषयश्च बोधः*

प्रयाति वेदान्तनिषेवणेन ॥१४८॥

इत्यात्मवादः ॥

---

अथ शब्दाऽधिकरणम् ।

**कर्मैके तत्र दर्शनात् ॥ ६ ॥**

यद्यनित्यत्वपक्षेऽपि शब्दादर्थोऽवगम्यते ।

अनादिर्व्यवहारश्च नित्यत्वं किं नु साध्यते ॥१॥

---

स्तन्मात्रमिह प्रतिपादितं, दार्ढ्यार्थिभिस्तु वेदान्तविहितेष्वेव श्रवण-मनननिदिध्यासनादिषु यतितव्यमिति ।

इति श्रीपार्थसारथिमिश्रकृतौ न्यायरत्नाकरे आत्मवादः समाप्तः ॥

**इति पञ्चमं सूत्रम् ।**

---

अथ शब्दाऽधिकरणम् ।

**कर्मैके तत्र दर्शनात् ॥ ६ ॥**

प्रयोजनाभावेनाऽधिकरणारम्भमाक्षिपति **यदीति**[१] । वेदप्रामाण्याय हीदं नित्यत्वप्रतिपादनम्, असत्यपि च नित्यत्वे तत्सिद्ध्यति, यदि ह्यसति नित्यत्वे शब्दादर्थप्रतीतिर्न स्याद् यदि वा समयापेक्षा ततोऽनवबोधकत्वात्समयकारिपुरुषापेक्षया च न स्यात्प्रामाण्यं, यदा त्वनित्यादपि शब्दादनित्यत्ववादिनामिवार्थप्रतीतिः सिध्यति शब्दव्यवहाराऽनादितथा च न पुरुषस्य क्व चित्स्वातन्त्र्यं तदा किं नित्यत्वसाधनेन, सम्बन्धनित्यत्वं न सिध्यतीति चेन्मा सैत्सीदनित्येऽपि तस्मिन् पुरुषस्वातन्त्र्याभावादेव प्रामाण्यसिद्धेरिति ।

---

* विषयप्रबोध इति २ पु. पा. ।

सत्यमिच्छन्ति ते ऽप्येवं न्यायस्तत्र परीक्ष्यते ।
न पराऽभ्युपगत्यैव प्रामाण्यमवतिष्ठते ॥२॥
यदा हि क्षणिकः शब्दो न शक्तो ऽर्थावधारणे ।
युक्त्या ऽवधार्यते तत्र निर्मला वेदधीर्भवेत् ॥३॥
निर्मूलैरपि विज्ञानैर्दृष्टार्थेषु भवेद् गतिः ।
श्रुतिमात्राश्रयत्वात्तु धर्मो दौःस्थित्यमाश्रितः* ॥४॥
अनादिव्यवहारत्वमादिमद्वस्तुसंश्रयम् ।
प्रत्याख्येयं, घटत्वादिजातौ व्यक्तिभ्रमो हि सः ॥५॥
स्थिते कूटस्थनित्यत्वे व्यवहारस्य नित्यता ।
कूटस्थेन विनैतेन न तस्याऽऽलम्बनं भवेत् ॥६॥

---

परिहरति सत्यमिति[२] । सत्यमनित्यत्ववादिनो ऽपि शब्दादर्थ-प्रतीतिमिच्छन्ति,न च तदिच्छामात्रेणासौ सिद्ध्यति, न्यायेन त्वस्माद्वर्थप्रतीतिः सिध्यति नेति निरूप्यमिति ।
तमेव न्यायं निरूपयति यदा हीति[३] । न हि क्षणिकस्य सम्बन्ध-ग्रहणं संभवति, तदभावे ऽपि प्रत्यायकत्वे ऽवश्यं समयापेक्षा ऽङ्गीकर्तव्या, तदनपेक्षायां वा नेत्रादिवत् प्रथमश्रवणे ऽपि प्रत्याययेत्, अतः शब्दस्यार्थप्रत्यायकत्वाऽसंभवाद् निर्निमित्तैव वेदार्थप्रतीतिः स्यादिति।
कथं तर्हि लोके शब्दादर्थप्रतीतिरत आह निर्मूलैरिति[४]। व्यवहाराऽनादित्वमसति शब्दनित्यत्वे ऽनुपपन्नमित्याह अनादीति[५] ख्येय-मन्तेन । नन्वादिमद्भिरपि घटादिभिरनादिरुदकाहरणादिर्दृष्टो व्यवहारः, अत आह घटत्वादीति । एतदेव दर्शयति स्थितइति[६] ।

---

* आगत इति ३ पु. पा. ।

प्रसिद्धत्वादृते सर्वो व्यवहारो हि नेष्यते ।
तस्माद्वेदप्रमाणार्थं नित्यत्वमिह साध्यते ॥७॥
परस्पराऽविनाभावादनित्यकृतकत्वयोः ।
कारणं द्वयसिद्ध्यर्थं किं चित्कस्य चिदुच्यते ॥८॥
नानादेशाऽवगम्यत्वाद्युगपत्तुल्यबुद्धिभिः ।
अस्माभिः, कृतकः शब्दो भवेदक्षरलेख्यवत् ॥९॥

---

कथमित्याह प्रसिद्धत्वादिति[१] । उदकाहरणाय क्षिप्रं घटमाजिहीर्षता ऽवश्यं तस्य तत्सामर्थ्यमवगन्तव्यं, न चाऽभिनवस्य सामर्थ्यज्ञानं संभवति, तदवश्यं तज्जातीयानां तत्सामर्थ्यमवगम्याऽभिनवस्यापि तयैव जात्या सामर्थ्यमनुमाय व्यवहर्त्तव्यं, तदिह सास्नादिमदर्थप्रतिपादनाय गोशब्दमभिनवमुच्चारयता केन चिदुपलक्षणेन तत्प्रतिपादकत्वमवगन्तव्यम, न तावच्छब्दत्वेन, अश्वादिशब्दानामप्युच्चारणप्रसङ्गात्, न च गोशब्दत्वं नामाऽवन्तरसामान्यमस्तीत्युक्तमिति । उपसंहरति तस्मादिति ।

सूत्रकारेण कर्मत्वं कृतकत्वपर्यायं शब्दस्य प्रतिज्ञाय तत्र दर्शनाद् "अस्थाना*दि"त्यादयो हेतवो दर्शिताः, तत्राऽस्थानादिति हेतुर्विनाशाख्याऽनित्यत्वस्याऽकृतकत्वान्न कृतकत्वप्रतिज्ञया संगच्छते; भाष्यमप्यनित्यः शब्द इति सौत्रस्य कृतकत्वस्य न व्याख्यात्वेन संगच्छते; ऽत आह परस्परेति[१] । यदेवानयोरेकस्य कस्य चित्साधनत्वेनोच्यते तदेव व्याप्त्येतरदपि साधयद् द्वयसिद्ध्यर्थं भवति, तेनाऽस्थानादिति भवत्येव कृतकत्वस्य हेतुः, भाष्यमप्यनित्यत्वद्वारेण कृतकत्वप्रतिज्ञार्थमेवेति ।

---

* जै सू. अ. १ पा. १ सू. ७ ।

यौगपद्योपलम्भाद्वा भेदो भेदाच्च कार्यता ।
अविभुत्वे हि युगपन्नैको नाना ऽवगम्यते ॥१०॥
कार्त्स्न्येन चाऽवगम्यत्वादेकदेशे घटादिवत् ।
शब्दस्याऽविभुता तस्मादन्यता ऽस्य मुखान्तरे ॥११॥
एकः सन्नेकदेशस्थो यदैकेन प्रयुज्यते ।
तदा वक्त्रन्तरे न स्यादेकवक्तृमुखादिवत् ॥१२॥

---

"सत्त्वान्तरे च यौगपद्यात्*" दिति सूत्रं, तस्यार्थं प्रयोगेण दर्शयति नानेति । युगपन्नानादेशे ऽवगमादित्येतावानेव हेतुः तुल्यबुद्धिभिरिति चाऽनुवादमात्रं, तुल्यबुद्धिभिरपि गम्यमानः कृतक एव न नित्य इति । अथ वा भेदप्रसाधनद्वारेणायं हेतुः कृतकत्वं साधयति न साक्षादित्याह यौगपद्येति[१०] । नन्वनैकान्तिको यौगपद्योपलम्भो भेदे, गोत्वादिसामान्यस्याऽऽकाशस्य चानेकत्र युगपदुपलभ्यमानस्यापि भेदाऽभावादत आह अविभुत्वइति[११] । सविशेषणो ऽयं हेतुरित्यर्थः ।

नन्वसिद्धमविभुत्वमत आह कार्त्स्न्येनेति[११] ताऽन्तेन । गगनं हि तत्तदुपाधिपरिच्छिन्नमेव प्रदेशेषु गृह्यते न कार्त्स्न्येन, सामान्यस्यापीदमेव कार्त्स्न्यं यः सर्वव्यक्त्यनुरागः, न चैतस्यैकैकत्र तथा ऽवगतिः, एकैकव्यक्त्यनुरक्तप्रतीतेः, अतो युक्तं तयोर्विभुत्वं, शब्दस्य त्वेकैकत्र कार्त्स्न्येनाऽवगमाद् घटवदविभुत्वमिति । उपसंहरति तस्मादिति । युगपदनेकवक्त्रुच्चारितस्य गकारस्य नानात्वम्, अविभुत्वे सति युगपन्नानादेशे ऽवगमात् घटवदिति ।

---

* जै. सू. अ. १ पा. सू. ९ ।

कार्यत्वे स्यात्क्रियाभेदात्फलभेदः प्रतिक्रियम् ।
तेनैकबुद्धिः सादृश्यात्स्फुटे ऽन्यत्वे ऽवकल्पते ॥१३॥
नित्यत्वे त्वेकबुद्धेः* स्यान्न किं चिद्भ्रान्तिकारणम् ।
कामं देशा इति न्यायात्तच्चैकत्वं विरुध्यते ॥१४॥

---

एकत्वे वा नानादेशो ऽवगमः स्यादित्याह एक इति[१२]। एको हि युगपदेकत्रैव देशे ऽवतिष्ठते, ततश्चैकेन प्रयुज्यमानस्तन्मुखे ऽवस्थितो मुखान्तरे न स्यात्, यथा तदेव मुखं मुखान्तरइति । कृत्रिमत्वे तु युक्तो नानादेशोपलम्भ इत्याह कार्यत्वइति[१३]। कथं तर्हि प्रत्यभिज्ञा, ऽत आह तेनेति । ज्वालादाविवेत्यभिप्रायः ।

भवतु यौगपद्योपलम्भाद्भेदः, कथं तु भेदात्कार्यता, भिन्ना एव गकारा नित्या भवन्तु, अत्राह नित्यत्वइति[१४]। न भेदे नित्यत्वं संभवति, भेदे हि सत्येकबुद्धेः सादृश्यादिवशेन भ्रान्तित्वं वक्तव्यं स्यात्, न च नित्यत्वे भ्रान्तिकारणमस्याः शक्यं वक्तुं, नित्यत्वहानिप्रसङ्गात्, तथा च वक्ष्यति "अपि चैकरूप्ये सति देशभेदे च कामं देशा एव भिन्नाः स्युः न तु शब्द" इति, तस्मान्नित्यत्वे सत्यवश्यमेकत्वं स्यात्, तच्च नानादेशोपलम्भेन विरुद्धं, प्रत्यभिज्ञा तु सादृश्यादप्युपपन्नेत्युक्तं, ततो भिन्ना एव गकाराः, नानादेशोपलम्भाद् भेदाच्च प्रत्यभिज्ञाया भ्रान्तित्वं तद्भ्रान्तित्वाच्च शब्दस्य कार्यता, तदिदं "नानादेशेषु युगपच्छब्दमुपलभामहे तदेकस्य नित्यस्याऽनुपपन्नमसति विशेषे नित्यस्य नानेकत्वम्"† इत्यनेन भाष्येणोक्तम्। अयं च भाष्यार्थः। तदेकस्य नित्यस्याऽनुपपन्नमिति, एकस्येति हेतुर्नित्यो ह्ययमेकं स्या-

* बुद्धिरिति का. पा. ।

† शा. भा. पृ. २९ प.१८ ।

न च व्यञ्जकभेदेन देशभेदोपलम्भनम् ।
प्रदीपैर्भिन्नदेशस्थैर्न भिन्नो व्यज्यते घटः ॥१५॥
व्योमाऽनवयवं चैषां ध्वनीनामाश्रयो मतम् ।
सव्यङ्ग्यानामतः सर्वैर्व्यक्तिरेकत्र ते भवेत् ॥१६॥
वस्त्वन्तरविकार्यत्वात्स्मृतिसादृश्यसाधितात् ।
इकारादेरनित्यत्वं दधिक्षीरगुडादिवत् ॥१७॥

---

देकत्वे चाऽनुपपन्नं नानादेशोपलम्भनमिति । कथं पुनर्नित्यस्यैकत्वं, नित्या एव बहवो गकारा भवन्त्वित्याशङ्क्योक्तमसति विशेषे नित्यस्य नाऽनेकत्वमितिविशिष्टरूपस्य गकारस्य नित्यत्वपक्षे नानेकत्वं सम्भवति, तथा सत्यविशेषबुद्धेरप्रामाण्यापत्तेः, तदप्रामाण्ये च नित्यत्वहानिरिति ।

ननु नानादेशोपलब्धिरपि व्यञ्जकध्वनिदेशभेदादेवोपपन्ना, ऽत आह नचेति[१५]। कारणमाह प्रदीपैरिति । असिद्धश्च व्यञ्जकानां देशभेद इत्याह व्योमेति[१६]। न हि व्योम्नः स्वतो ऽवयवशो वा भेदो ऽस्ति, इति ।

न परं व्यञ्जकानां, व्यङ्ग्यानामपि शब्दानां भवन्मते स एव देशो, ऽतः सर्वैरेकत्रैव शब्दो ऽभिव्यज्यते, भिन्नाश्रयसमवाये सति स्यादपि कथं चिद्गोत्वादिवन्नानादेशेषु यौगपद्यं, न त्वसावस्तीत्याह सव्यङ्ग्यानामिति । अस्मत्पक्षे तु वायवीयः शब्दो वाय्ववयवदेशत्वाद्भिन्नदेशो भवतीति युक्तमिति ।

" प्रकृतिविकृत्योश्च"* इति" सूत्रार्थे प्रयोगेण दर्शयति वस्त्वन्तरेति ।हेतुसिद्ध्यर्थं च भाष्यकारेण स्मृतिः सादृश्यं चोक्त-

---

* जै. सू. अ. १ पा. १ सू. १० ।

हेतुवृद्ध्यनुसारित्वात्कार्यता ऽस्य घटादिवत् ।
न हि दीपसहस्रे ऽपि व्यञ्जके वर्द्धते घटः ॥१८॥
अनैकान्तिकता तावद्धेतूनामिह कथ्यते ।
प्रयत्नाऽनन्तरा* दृष्टिर्नित्ये पि न विरुध्यते ॥१९॥
तस्मात्तत्रैव दृष्टत्वादन्यत्राऽदृष्टकल्पना ।
प्रागूर्वाऽनुपलब्धी† चेद्धेतुत्वेन विवक्षिते ॥२०॥

---

म, इको यणचीति स्मृतिरिकारसादृश्यं यकारस्य वक्ष्यतइति । तदिदं स्मृतिसादृश्यसाधितादित्यनेन दर्शितमिति ।

"वृद्धिश्च कर्तृभूम्ना ऽस्य"‡ इति सूत्रार्थ माह हेतुवृद्धीति[१८] । मृत्पिण्डादिकारणाऽल्पत्वमहत्त्वाऽनुसारिणो हि घटादेस्तत्कार्यत्वं दृष्टमिति । व्यञ्जकवृद्ध्या वृद्धिरिति चेत् तत्राह न हीति ।

"समं तु तत्र दर्शनम्"§ इत्यादेः सूत्रषट्कस्य तात्पर्यमाह अनैकान्तिकतेति[१९] । तावच्छब्देनाऽसिद्धतापि वक्ष्यतइति । तेन दूषणद्वयमनेन षट्केन कथ्यते इति ।

प्रयत्नानन्तरदर्शनादित्यस्य तावदनैकान्तिकत्वं दर्शयति प्रयत्नेति । दर्शनं हि तत्र सत्तां गमयति न कालान्तरे निषेधति, तेन विपक्षे ऽपि कालान्तरे सत्त्वसम्भवात्तत्र दर्शनमनैकान्तिकमिति ।

मा भून्निषेधः, सत्ता तु कालान्तरे कथम्, अत आह तस्मादिति[२०] । यस्मात्कालान्तरे सत्त्वमनिषिद्धं तस्मात्तत्रैवानन्तरकाले सप्रत्यभिज्ञानेन प्रत्यक्षेण दृष्टत्वादन्यत्रापि काले प्रत्यक्षेणाऽदृष्टस्यापि सद्भावस्य कल्पना शक्यतइति ।

---

* अनन्तरामिति का. पा. । † अनुपलब्ध्योति का. पा. ।

‡ जै. सू. अ. १ पा. १ सू. ११ । § जै.सू.अ.१ पा. १ सू. १२ १७।

'जात्यौलूक्यस्य, सांख्यस्य, चैतन्येनाऽऽत्मवर्तिना ।
शाक्यस्यापि त्वनैकान्तः क्षणिकव्यतिरेकिभिः ॥२१॥
प्रतिसंख्याऽप्रतिसंख्यानिरोधव्योमभिस्त्रिभिः' ।
बुद्धिपूर्वे विनाशे हि प्रतिसंख्यानिरोधधीः ॥२२॥
अबुद्धिपूर्वकस्तेषां निरोधो ऽप्रतिसंख्यया ।
तौ च द्वावप्यनाशित्वादिष्टावकृतकावपि ॥२३॥

---

शङ्कते प्रागिति । परिसंख्यारूपेण तत्रैव दर्शनादित्येवं प्रागूर्ध्वाऽनुपलब्धेर्हेतुत्वमिति । तथाप्यनैकान्तिकमित्याह जात्येति[२१] सार्द्धेन । शब्दत्वजातिरपि प्रागूर्ध्वं च न दृश्यते, अतो वैशेषिकस्य तावदनैकान्तिकत्वं, सांख्यस्यापि नित्यमात्मचैतन्यमुन्मीलनोच्चारणादिप्रयत्नानन्तरं चक्षुरादिभिः रूपाद्याकारेण प्रकाशे महदाख्यायां बुद्धावाहिते ऽभिव्यज्यते न प्रागूर्द्ध्वं वा, सुषुप्त्यादौ सतो ऽपि चैतन्यस्याऽनभिव्यक्तेः, अस्ति हि तदा ऽपि चैतन्यं, तद्धि पुंसः स्वरूपं, न हि स्वरूपमपहाय पुंसो ऽवस्थानं सम्भवति, अतश्चैतन्ये ऽनैकान्तिकत्वं, शाक्यस्यापि "बुद्धिबोध्यं त्रयादन्यत्संस्कृतं क्षणिकं चत"दिति पर्युदासान्नित्यत्वाऽभिमतैः प्रतिसंख्यानिरोधादिभिरनैकान्तं इति ।

कः पुनः प्रतिसंख्यानिरोधः को वा इतर इति तत्स्वरूपं दर्शयति बुद्धीति[२२] । बुद्धिपूर्वो मुद्गराऽभिघातैर्घ्रभिव्यङ्ग्यः, कुड्यनिपाताद्यभिव्यङ्ग्यस्त्वबुद्धिपूर्व इति । कथं पुनस्तयोरकृतकत्वमत्राह तौ चेति[२३] । कृतकता हि विनाशित्वव्याप्या घटादिषु दृष्टा, तच्च विनाशित्वनिरोधाभ्यां निवर्तमानं स्वव्याप्यां कृतकतामपि निवर्त्तयतीति ।

आहुः स्वभावसिद्धं हि ते विनाशमहेतुकम् ।
हेतुर्यस्य विनाशोऽपि तस्य दृष्टो ऽङ्कुरादिवत् ॥२४॥
विनाशस्य विनाशस्तु नास्ति तस्मादकृत्रिमः ।
'भवति ह्यग्निसम्बन्धात्काष्ठादङ्गारसन्ततिः ॥२५॥
मुद्गरादिहताच्चापि कपालं जायते घटात् ।
स्वाभाविको विनाशस्तु जातमात्रप्रतिष्ठितः' ॥२६॥
सूक्ष्मः सदृशसन्तानवृत्तेरनुपलक्षितः ।
यदा विलक्षणो हेतुः पतेत्सदृशसन्ततौ ॥२७॥
विलक्षणेन कार्येण स्थूलो ऽभिव्यज्यते तदा ।
तेनाऽसदृशसन्तानो हेतोः सञ्जायते यतः ॥२८॥

---

कथमकारणकस्य विनाशस्य सिद्धिः, अत आह आहुरिति[२४] । स्वाभाविको घटादीनां विनाशः, ते हि स्वहेतुभ्यो विनश्वरा एव जाताः। जनित्वैव प्रध्वंसन्ते, किमत्र कारणेनेति। अनाश्रित्वादिति हेतुं विवृणोति हेतुरिति ।

किमिदानीं मुद्गरप्रहारादिरकिंचित्करः, नेत्याह भवतीति[२५] सार्द्धेन। सर्वं हि कारणं सदृशकार्यजननस्वरसं विलक्षणकारणोपनिपाते तु विसदृशं जनयति, तेन मुद्गराभिघातो ऽपि विसदृशोत्पत्तौ उपयुज्यते न विनाशे, स हि स्वाभाविको जातमात्र, एव घटादाववस्थित इति। किमिति तर्हि नोपलभ्यते, ऽत आह सूक्ष्म-इति[२७] । कदा तर्ह्यसावुपलभ्यते, अत्राह यदेति ।

कथं तर्हि मुद्गराऽभिघातस्य विनाशजनकत्वं लौकिका मन्यन्ते, अत्राह तेनेति[२८] । तेनाऽक्रियमाणमपि प्रागनुपलभ्यमानं तदन-

तेनैवाऽक्रियमाणो ऽपि नाशो ऽभिव्यज्यते स्फुटः ।
स मुद्गरप्रहारादिप्रयत्नानन्तरीयकः ॥२९॥
यस्मादकृतको दृष्टो, हेतुः स्याद् व्यभिचार्यतः* ।
'आकाशं†मपि नित्यं सद्यदा भूमिजलावृतम् ॥३०॥
व्यज्यते तदपोहेन खननोत्सेचनादिभिः ।
प्रयत्नाऽनन्तरं ज्ञानं तदा तत्रापि दृश्यते ॥३१॥
तेनाऽनैकान्तिको हेतुर्यदुक्तं तत्र दर्शनात्' ।
अथ स्थगितमप्येतदस्त्येवेत्यनुमीयते ॥३२॥
शब्दो ऽपि प्रत्यभिज्ञानात्प्रागस्तीत्यवगम्यते ।
कूपपूरणयत्नेन खं तिरोधीयते यदा ॥३३॥

---

न्तरमेवोपलभमानास्तत्कृतं मन्यन्त इति । ततश्च सिद्धं हेतोरनैकान्तिकत्वमित्याह स मुद्गरेति[२९] । व्योम्ना ऽनैकान्तिकत्वं विवृणोति आकाशमिति[३०-३१] द्वयेन । खननोत्सेचनादिभिस्तदपोहेनेत्यन्वय इति ।

तत्र किं चिदाशङ्कते अथेति[३२] । न च सर्वगतस्य क चिदप्यभावः सम्भवति, सर्वगतत्वं चानणुत्वे सति द्रव्यत्वात्कालवदिति । परिहरति शब्दो ऽपीति[३३] ।

अस्थानादित्यस्यानैकान्तिकत्वप्रदर्शनार्थं सूत्रम् "सतः परमदर्शनं विषयानागमा"‡दिति, तद् व्याचष्टे कूपेति । कथमित्याह

---

* अयमिति का. पा. । † प्रकाशमिति १ पु. पा. ।

‡ जै. सू. अ. १ पा. १ सू. १८ ।

आस्थानादित्ययं हेतुस्तदा ऽनैकान्तिको भवेत् ।
आकाशधीप्रबन्धो हि तदा तस्मिन्न तिष्ठति ॥३४॥
तिरोहिताऽनभिव्यक्तेः शब्दबुद्धिप्रबन्धवत् ।
शब्दस्यैवाऽनवस्थानादिति हेतुं वदेद्यदि ॥३५॥
असिद्ध एव वक्तव्यस्ततो ऽभिव्यक्तिवादिना ।

---

आकाशेति[३४] । किमिदमप्रत्यक्षाकाशस्य तिरोधानं नाम, नाप्रत्यक्षमाकाशम्,अपरोक्षावभासादप्रत्यक्षस्य तस्य सिद्धिरपि दुर्लभा प्रमाणान्तराऽसम्भवात्, शब्दलिङ्गकमनुमानं प्रमाणं, शब्दो हि गुणः, स च गुणिनमनुमापयतीति चेत्; न, गुणत्वाऽसिद्धेः, सत्यपि गुणत्वे वायुगुणत्वान्नाप्रसिद्धस्य गुणिनो ऽनुमानं, वायौ हि श्रोत्रं प्राप्ते शब्द उपलभ्यते, यथा हि चम्पकद्रव्ये घ्राणसंनिकृष्टे गृह्यमाणस्य गन्धस्य तद्गुणत्वं तथा शब्दस्यापि वायुगुणत्वं वेदितव्यम् । अथ वा वायुरेव ताल्वादिस्थानसंयोगात्तत्तच्छब्दगुणको निष्पद्यते, तस्मिन् श्रोत्रं प्राप्ते संयुक्तसमवायसन्निकर्षेण शब्दो गृह्यते, सत्यपि चानित्यधर्मत्वे शब्दस्य नाऽनित्यता भविष्यति, गोत्वादिवच्छुक्लादिगुणवच्च तेषामपि हि नित्यत्वमुपरिष्टाद्वक्ष्यति, तत्सिद्धं नाकाशस्यानुमानं संभवतीति । प्रत्यक्षमेवाकाशं, नीरूपस्याप्यपरोक्षावभासान्नाऽनुपपन्नं प्रत्यक्षत्वम् । एवं दिक्कालयोरपि प्रत्यक्षता समर्थनीया, तयोरप्यपरोक्षावभासात्प्रमाणान्तराऽसंभवाच्च । तदुपपन्नमतिरोधानवचनमिति ।

शङ्कते शब्दस्येति[३५] । निराकरोति असिद्ध इति[३६] । विकल्पनीयं चेदं, कृतकत्वं किं यत्किंचित्कारणजन्यत्वम् , उत यद्व्यापारा-

तद्व्यापारकृतत्वे ऽपि* व्यङ्ग्यैर्मूलोदकादिभिः ॥३६॥
कृतकत्वे ऽपि तेषां हि नोत्पत्तिः खननादिना ।
न चोच्चारणतो ऽन्याऽस्ति शब्दस्योत्पादिका क्रिया॥३७॥
निबन्धर्यसतीत्येवं विशिष्टे ऽपि, तथैव नः† ।
अबन्धाः स्युर्यदैतेषा‡मबोधो हेत्वभावतः ॥३८॥
व्यञ्जकाऽभावतः शब्दे ऽप्यबोधो बधिरादिवत् ।
तस्यैव वा निबन्धृत्वे भवेद्धेतोरसिद्धता ॥३९॥

---

नन्तरमुपलभ्यते तत्कृतत्वमिति ?, यत्किं चित्कारणजन्यत्वे तावत्प्रयत्नानन्तर्यमप्रयोजकमुक्तं च शब्दत्वादिना ऽनैकान्तिकत्वं, तद्व्यापारजन्यत्वे तु मूलोदकादिभिरनैकान्तिकत्वमित्याह तद्व्यापारेति ।
कथमित्यत आह कृतकत्वे इति[१७]।

यदा चोच्चारणजन्यत्वं न सिद्ध्यति तदा कृतकत्वमात्रमपि तस्य न सिद्ध्यत्येव कारणान्तराऽभावादित्याह न चेति । सविशेषणो ऽयं हेतुः प्रतिबन्धकाभावे ऽपि प्रागूर्ध्वमनुपलम्भादिति, मूलोदकादीनां तु मृत्तिकादिप्रतिबन्धो ऽस्तीति नाऽनैकान्तिकत्वमत्राह निबन्धरीति[१८] । एवमपि तैरेव मूलोदकादिभिरनैकान्तिक इति । कथमित्यत्राह अबन्धा इति । अप्रतिबन्धा अपि ते दीपाद्यभावान्नोपलभ्यन्त इति ।

नन्वस्तु हि स्वभावादप्रतिबद्धस्यापि मूलोदकादेरग्रहणं, शब्दस्य तु कथमत आह व्यञ्जकेति[१९] । यद्वा व्यञ्जकाऽभावस्यैव प्रति-

---

* व्यापारकृतत्वे वा इति २ पु. पा. † तैरिति का. पा. ।
‡ अनिबन्धात् सदा तेषामिति पाठान्तरम् ।

अथ पूर्वाऽपराऽसत्त्वं हेतुस्तत्राप्यसिद्धता ।
सन्नेव साधनाऽभावाच्छब्दो नैवोपलभ्यते ॥४०॥
क्षणिकं साधन चाऽस्य बुद्धिरप्यनुवर्तते ।
मेघाऽन्धकारशर्वर्यां विद्युज्जनितदृष्टिवत् ॥४१॥

---

बन्धकत्वादसिद्धो ऽयं प्रतिबन्धकाभावे अनुपलम्भादिति हेतुरित्याह तस्यैवेति । अथ नाऽनुपलब्धिर्हेतुः किं त्वसत्त्वं, तदसिद्धमित्याह अथेति[४०] । कथमित्यत आह सन्नेवेति ।

यदा तर्हि व्यञ्जकं लब्धं तदा किं न चिरमुपलभ्यते, ऽत आह क्षणिकमिति[४१] । वायवीया हि ध्वनयो ऽभिव्यञ्जकाः, ते च श्रोत्रं प्राप्यैवाऽन्यतः प्रयाताः, शब्दबुद्धिरपि तदनुवर्त्तिनी मेघाऽन्धकारइव विद्युज्जनिता घटादिबुद्धिर्न चिरमनुवर्त्तते । किमिदमन्धकारशर्वर्यामिति, तमउच्छ्रितायां यामिन्यामित्यर्थः । किमिदं तमो नाम, द्रव्यगुणकर्मनिष्पत्तिवैधर्म्याद्भाऽभावस्तम इति काश्यपीयाः, तथा तु नीलबुद्धिर्निर्निमित्ता स्यात्, अभावस्य नीलिमाऽभावात्, न चाऽसतो नीलिम्नः किं चिद्ग्राहकं स्मारकं वा ऽस्ति, आलोकाऽदर्शनमात्रेण तु तद्भ्रमो भवंस्तच्छून्यभागे ऽपि स्यात्, अतो द्रव्यान्तरमिदं वायुवन्नीलिमगुणं, वायुररूपः स्पर्शवान्, इदं चाऽस्पर्शं रूपवदित्येतावान्विशेषः । अथ वा यएते पार्थिवास्त्रसरेणवो वातायनविवरेषु दृश्यमानाः सर्वतो भ्रमन्ति तेषां ये नीलगुणकाः तद्गतमिदं नीलरूपं गृह्यमाणं गुणान्तराणां द्रव्यान्तराणां च तदन्तरालस्य चाऽग्रहणाद्व्याप्ताखिलब्रह्माण्डवच्चकास्ति, नीलरूपग्रहणे चाऽऽलोकापेक्षा नास्तीति दर्शनबलादभ्युपगम्यते । नन्वेवं गवादिगतमपि नीलरूपमन्धकारे गृह्येत, केन चोक्तं नेति, तत्तु गोरग्रहणात्तद्गतत्वेन न लक्ष्यते, सर्वमेव नीलरूपं तदा गृह्यते, प्रभायां तु प्रभारूपेण गृ-

यथा घटादेर्दीपादिरभिव्यञ्जक इष्यते ।
चक्षुषो ऽनुग्रहादेवं ध्वनिः स्याच्छ्रोतृसंस्कृतेः ॥४२॥
न च पर्यनुयोगो ऽत्र केनाऽऽकारेण संस्कृतिः ।
उत्पत्तावपि तुल्यत्वाच्छक्तिस्तत्राप्यतीन्द्रिया ॥४३॥
नित्यं कार्योऽनुमेया च शक्तिः किमनुयुज्यते ।
तद्भावभावितामात्रं प्रमाणं तत्र गम्यते ॥४४॥

---

ह्यमाणेन यानि ग्रहणायोग्यसूक्ष्मद्रव्याश्रितानि नीलरूपाणि तान्यभिभूतानि न गृह्यन्ते, निमीलिते तु नेत्रे प्रभारूपाऽग्रहणादनभिभूतानि गृह्यन्ते, निमीलितनेत्रस्यापि कियन्त्यपि चाक्षुषाणि तेजांसि शुक्तिच्छिद्रादिवन्निःसरन्त्येव यैर्नीलरूपं गृह्यते, वस्त्वन्तराणि तु न ताघद्भिर्गृह्यन्ते, जात्यन्धानामुद्धृतनेत्राणां च यद्यन्धकारदर्शनं नास्ति ततो न किं चिद्वक्तव्यम्।अथ त्वस्ति, ततस्तेषामपि सन्ति कानि चित्तेजांसीति कार्यबलादेव कल्प्यते, न हि कारणकल्पनाभयात्कार्यमपह्नोतुं युक्तं, सर्ववस्पतूलब्धीनामपह्नवप्रसङ्गात्, तत्कारणान्यपि ह्यीन्द्रियाणि कल्प्यान्येवेत्यास्तां तावत् ।

कीदृशं पुनर्ध्वनीनामभिव्यञ्जकत्वं, तद्दर्शयति यथेति[४२] । तेजसश्चाक्षुषस्याऽऽप्यायनाऽनुग्रहं कुर्वन्प्रदीपो यथा चाक्षुषाणां घटादीनां व्यञ्जको भवति तथा ध्वनयो ऽपि श्रोत्रसंस्कारं कुर्वन्तः शब्दस्याऽभिव्यञ्जका भविष्यन्तीति ।

केन तर्हि रूपेणैषां संस्कारकत्वं, न हि संस्कारजननाऽनुगुणं किं चिद्रूपं ध्वनिषु दृश्यते, ऽत आह न चेति[४३] । कारणमाह उत्पत्ताविति । यो ऽपि ध्वनीनामन्यस्य वा कारणस्य शब्दोत्पादकत्वमिच्छति तस्यापि कारणगतं शक्त्याख्यमतीन्द्रियमेव रूपमिति । तथापि किं नाऽनुयुज्यते, ऽत आह नित्यमिति[४४] । कार्याऽनुगतं रू-

अतो ऽतीन्द्रिययैवैते शक्त्या शक्तिमतीन्द्रियाम् ।
इन्द्रियस्याऽऽदधानाः स्युः शब्दाऽभिव्यक्तिहेतवः॥४५॥
व्यञ्जको नाऽन्यजातिश्चेच्छ्रोत्रं शब्दस्य ते कथम् ।
पार्थिवानां घटादीनां प्रदीपादिश्च तैजसः ॥४६॥
आत्मादिसंप्रयोगे च कार्यैः स्यात्तुल्यजातिता ।
जातिर्या का चिदिष्टा चेत्सा नो ऽत्रापि भविष्यति॥४७॥
उपलब्धिनिमित्ताच्च नाऽन्यद् व्यञ्जकमुच्यते ।
तस्माद्यथोपलब्धत्वात्स जातिव्यञ्जको भवेत् ॥४८॥

---

पमित्येतावत् शक्तेः रूपम्,अतीन्द्रियत्वान्न रूपान्तरमिदमिति शक्यं दर्शयितुमिति ।

किं पुनर्ध्वनीनां शक्तिसद्भावे प्रमाणमत आह तद्भावेति । उपसंहरति अत इति[४५] ।

चोदयति व्यञ्जक इति[४६]। गन्धादीनां सजातीयमेव व्यञ्जकं दृष्टं, पार्थिवं घ्राणं गन्धेन गन्धान् व्यनक्ति, आप्यं रसनं रसेन रसान्, तैजसं चक्षू रूपेण रूपाणि, वायवीयं त्वगिन्द्रियं स्पर्शेन स्पर्शान्, न च वायवीयानां ध्वनीनां शब्देन सजातीयत्वं, न च शब्दस्तेषां गुणः, येन स्वगुणेन शब्देन शब्दाऽभिव्यक्तिरिति । परिहरति श्रोत्रमिति । श्रोत्रं हि स्वरूपेणैव स्वसमवेतं शब्दं गृह्णाति न शब्देन, व्यङ्ग्यशब्दव्यतिरेकेण शब्दान्तराऽभावात्,न च श्रोत्रस्य शब्देन सजातीयत्वमस्तीति । उदाहरणान्तरमाह पार्थिवानामिति । सत्तादिरूपेण तुल्यजातीयत्वे ध्वनिशब्दयोरपि तुल्यमित्याह जातिरिति[४७] । ननु दीपादिष्वेव व्यञ्जकत्वप्रसिद्धिः, कथमात्मादिसंप्र-

तथा तदविनाभावाद्विजातीयो भविष्यति ।
वायवीयाऽनभिज्ञत्वात्ताल्वादिस्थाऽभिमानतः ॥४९॥
अनभिव्यञ्जकत्वार्थमाहोपरतयोरपि ।
वायवीयधियैवोक्तं न नूनमिति चोत्तरम् ॥५०॥
अभिघातवचस्तः प्रागेवं गूढधियावुभौ ।
यदि शब्दमितीहापि त्रेधाऽभिव्यक्तिसंभवः ॥५१॥

---

योगेण व्यभिचारः, अत आह उपलब्धीति[४८] । उपसंहरति त-स्मादिति ।

भाष्यकारेण संयोगविभागयोरभिव्यञ्जकत्वमुक्त्वा शङ्कितम् "उपरतयोः संयोगविभागयोः शब्दः श्रूयतइति चे"*दिति, तदयुक्तं वायवीययोः संयोगविभागयोरुपरमाऽसिद्धेरत आह वायवीयेति[४९] ।

"न नूनमुपरमन्ती"†त्युत्तरभाष्यं वायवीयाभिप्रायमेव, मूढाभिप्रायस्य वचनमित्याह वायवीयेति[५०] ।

एवं "यदि शब्द"‡मित्यतः प्रभृति "प्रागभिघातेन ही"§त्यस्माद् ग्रन्थाद् गूढाभिप्रायावेव पूर्वोत्तरपक्षवादिनावित्याह अभिघातेति[५१]। कथं पुनर्गूढाभिप्रायत्वं गम्यते, अप्राप्ताश्चेदित्यादिना संयोगविभागानामप्राप्तौ पूर्वपक्षिणा दोषापादनात्, वायवीयज्ञाने हि तेषां प्राप्तत्वादनवकाशश्चोद्यस्य स्यात्, उपरमचोद्यपरिहारस्यापि अभिघातवाक्यएव स्पष्टीकरणात् । ननु न हि ते प्रत्यक्षा इति वायवीयाभिप्रायः सिद्धान्तिना विवृत एव, न, ताल्वादिसंयोगविभागानामपि कार्यसामर्थ्यरूपेणाऽप्रत्यक्षत्वोपपत्तेरिति ।

---

* शा. भा. पृ. २६ प. १४ । † शा. भा. पृ. २६ प. १४ ।
‡ शा. भा. पृ. २६ प. १७ । § शा. भा. पृ. २७ प. ९ ।

सा हि स्याच्छब्दसंस्कारादिन्द्रियस्योभयस्य वा ।
तत्र सर्वैः प्रतीयेत शब्दः संस्क्रियते यदि ॥५२॥
निर्भागस्य विभोर्न स्यादेकदेशे हि संस्क्रिया ।
न चाऽस्याऽऽधारभेदेन संस्कारनियमो भवेत् ॥५३॥
यतः शब्दो निराधारो व्योमाऽऽत्मादिवदेव च ।
'अथाप्याकाशमाधारस्तत्राऽनवयवे ऽसति ॥५४॥
न स्यात्प्रदेशसंस्कारः' कृत्स्नशब्दमतेरपि ।
न हि सामस्त्यरूपेण यावद्व्योम व्यवस्थितः ॥५५॥

---

यदि शब्दमित्यादेश्चोद्यभाष्यस्यार्थमाह यदीति । शब्दसंस्कारपक्षे तावद् दूषणमाह तत्रेति[५२] । सर्वगतो ऽयं नित्यत्वपक्षे शब्दः, तदसौ संस्कृतः सर्वैः पुरुषैः श्रूयेत, कृतकत्वे तु प्रादेशिकत्वान्नायं दोष इति ।

स्यादेतत्, यः शब्दप्रदेशो ध्वनिभिः संस्कृतः स दूरवर्त्तिना श्रोत्रेणाऽप्राप्तः कथं ते शब्दं शृणुयुरिति, अत आह निर्भागस्येति[५३] । नन्वाधारद्वारो ऽस्य ध्वनिभिः संस्कारः, अतो य एवाधारः संस्कृतः तत्समीपगतैरेव पुरुषैर्गृह्यते न दूरस्थैः, अत आह न चास्येति । सत्यप्याधारे तद्भेदो नास्त्येव, यतो व्यवस्था स्यादित्याह अथापीति[५४] पादत्रयेण । न ह्याकाशस्य स्वरूपतो ऽवयवतो वा भेदो ऽस्तीति । इतश्च न प्रदेशसंस्कार इत्याह कृत्स्नेति[५५] । एतदेव विवृणोति न हीति ।

तदेवं सब्दसंस्कारपक्षे सर्वेषां दूरस्थानामपि शब्दोपलब्धिः स्या-

शक्यते सकलो बोद्धुमेकदेशेन संस्कृतः ।
आकाशश्रोत्रपक्षे च विभुत्वात्प्राप्तितुल्यता ॥५६॥
दूरभावे ऽपि शब्दानामिति ज्ञानं प्रसज्यते ।
श्रोत्रस्य चैवमेकत्वं सर्वप्राणभृतां भवेत् ॥५७॥
तेनैकश्रुतिवेलायां शृणुयुः सर्वएव ते ।
तस्याऽनवयवत्वाच्च न धर्मोऽधर्मसंस्कृतः ॥५८॥
नभोदेशो भवेच्छ्रोत्रं व्यवस्थाद्वयसिद्धये ।
वैशेषिकादिसिद्धान्तेष्वेवं तावत्प्रसज्यते ॥५९॥
कापिले ऽपि विभुत्वेन श्रोत्रादेरियमेव दिक् ।
सकृच्च संस्कृतं श्रोत्रं सर्वशब्दान् प्रबोधयेत् ॥६०॥

---

दित्युक्तम्, एतदेव श्रोत्रसंस्कारपक्षे ऽप्यापादयति आकाशेति[५६]। ये ह्याकाशं श्रोत्रमित्याचक्षते तन्मते तावत् श्रोत्रं विभुत्वाद् दूरवर्त्तिभिरपि ध्वनिभिः प्राप्तत्वात् संस्कृतमेवेति स्यादेव सर्वेषां शब्दज्ञानम्, इतिशब्दो हेताविति । स्वपक्षे तु कर्णशष्कुल्या एव श्रोत्रत्वान्नायं प्रसङ्ग इति । किं चास्मिन्पक्षे श्रोत्रमपि सर्वपुंसामप्येकं स्यात्, आकाशस्यैकत्वात् ,तत्रैकस्य शब्दश्रवणवेलायामितरे ऽपि सर्वे संस्कृतश्रोत्रत्वात् शृणुयुरेव शब्दमित्याह श्रोत्रेति ।

ननु धर्माऽधर्मोपगृहीतो नभोभागः श्रोत्रं, न सर्वमाकाशं, भागभेदाच्च संस्कारव्यवस्था श्रवणव्यवस्था च द्वयं सिद्ध्यति, अत आह तस्येति[५८] । उपसंहरति वैशेषिकेति[५९] । सांख्यपक्षे ऽप्याहंकारिकत्वादिन्द्रियाणाम् अहंकारस्य सर्वगतत्वादनवयवत्वाच्चायं दोषः समान इत्याह कापिले ऽपीति[६०]। दोषान्तरमपि श्रोत्रसंस्कारे दर्श-

घटायोन्मीलितं चक्षुः पटं न हि न बुध्यते ।
एतदेव प्रसङ्क्तव्यं विषयस्यापि संस्कृतौ ॥६१॥
समानदेशवर्तित्वात्संस्कारो ऽप्यविशेषतः ।
स्थिरवायूपनीत्या च संस्कारो ऽस्य भवन् भवेत्॥६२।
दृष्टं वा ऽऽवरणापाये तद्देशान्योपलम्भनम् ।
संस्कृताऽसंस्कृतत्वे च शब्दैकत्वे न सिद्ध्यतः ॥६३॥
एकाऽवस्थाऽभ्युपेतौ वा सर्वैर्ज्ञायेत वा न वा ।
प्रत्येकाऽभिहता दोषाः स्युर्द्वयोरपि संस्कृतौ ॥६४॥
तेन प्रादेशिकं ज्ञानं न कृतत्वाद्विना भवेत् ।
उत्तरं श्रोत्रसंस्काराद्भाष्यकारेण वर्णितम् ॥ ६५ ॥

---

यति सकृदिति । नित्यत्वात् सर्वगतत्वाच्च सर्वदैव हि सर्वे शब्दाः सर्वेषु श्रोत्रेषु सन्निहिताः, कृतकत्वे त्वेकशब्दसमये शब्दान्तराणामसत्त्वादुपपन्नमश्रवणमिति ।

न चाऽभिसंधिभेदाद्व्यवस्था सिद्ध्यतीति वाच्यमित्याह घटायेति[६१] । इममेव दोषं श्रोत्रविषयशब्दसंस्कारे ऽप्यतिदिशति एतदिति । कथमित्याह समानेति[६२] । इतश्चाऽविशेष इत्याह स्थिरेति । ततः किमित्याह दृष्टमिति[६३] । यदि ह्यदृष्टरूपः संस्कारः स्यात्ततः स्यादपि कदा चिद्व्यवस्था, स्थिरवाय्वपनये तु संस्कारे तस्यैकरूपत्वान्न कथं चिद् व्यवस्थासिद्धिरिति ।

भवतु वा कथं चित् शब्दभेदे संस्कारव्यवस्था, न ह्येकस्मिन् शब्दे सा संभवति, विरुद्धत्वादित्याह संस्कृतेति । ततः किमित्याह एकेति[६४]। द्वयसंस्कारे ऽपि दोषद्वयमपि समुच्चित्य दर्शयितव्यमित्या-

तद्भेदाच्छ्रुतिभेदश्च प्रतिश्रोतृ व्यवस्थितः ।
नाऽवश्यं श्रोत्रमाकाशमस्माभिश्चाऽभ्युपेयते ॥ ६६ ॥
न चाऽनवयवं व्योम जैनसांख्यनिषेधतः ।
तेनाऽऽकाशैकदेशो वा यद्वा वस्त्वन्तरं भवेत् ॥ ६७ ॥
कार्याऽर्थापत्तिगम्यं नः श्रोत्रं प्रतिनरं स्थिरम् ।
यद्यपि व्यापि चैकं च तथापि ध्वनिसंस्कृतिः ॥ ६८ ॥

---

ह प्रत्येकेति । पूर्वपक्षमुपसंहरति तेनेति[६५]। यदेतत् क चिदेव कस्य चिच्छब्दस्य श्रवणं तन्न नित्यत्वे ऽवकल्पतइति ।

"यस्याप्यभिव्यञ्जन्ति तस्याप्येष न दोष"*इत्यादिपरिहारभाष्यं, तस्यार्थमाह उत्तरमिति । श्रोत्रभेदाच्च संस्कारव्यवस्थापनात् श्रवणभेदव्यवस्था ऽपि युक्तैवेत्याह तद्भेदादिति[६६] । नन्वाकाशस्य श्रोत्रत्वात्कथं श्रोत्रभेदो, ऽत आह नावश्यमिति । यद्यप्याकाशं श्रोत्रं, तस्य त्वनवयवत्वं जैनसांख्यैर्निराकृतं, ते ह्यत्रेदमत्रेदमिति भागाऽवग्रहात्सावयवमेवाऽऽकाशमास्थिषतेत्याह न चेति[६७] ।

यदि सावयवमेवाऽऽकाशं यदि वा नाऽऽकाशं श्रोत्रं, द्वेधा ऽपि किं सिद्ध्यत्यत आह तेनेति । कर्णशष्कुल्या एव किं चित्सामर्थ्यं शब्दग्रहणाऽनुगुणमर्थापत्त्या कल्प्यते, तत्खल्वाकाशादिश्रोत्रपक्षे ऽप्यवश्यं कर्णशष्कुलीगतमेव कल्पनीयं, वातादिदूषिते तस्मिन् बधिरादेः शब्दश्रवणाऽभावात्,अस्ति हि तस्याप्याकाशमिति ।

भवतु वा ऽनवयवं सर्वगतमेवाकाशं सर्वेषां श्रोत्रं, तथापि ध्वनिसंस्कारस्याऽधिष्ठानगामित्वादधिष्ठानानां च भेदादसंकरसिद्धिरित्याह यद्यपीति[६८] ।

---

* शा. भा. पृ. २६ प. २२ ।

अधिष्ठानेषु सा यस्य तच्छब्दं प्रतिपत्स्यते ।
अथाऽपीन्द्रियसंस्कारः सो ऽप्यधिष्ठानदेशतः ॥ ६९ ॥
शब्दं न श्रोष्यति श्रोत्रं तेनाऽसंस्कृतशष्कुलि ।
अप्राप्तकर्णदेशत्वाद्ध्वनेर्न श्रोत्रसंक्रिया ।
अतो ऽधिष्ठानभेदेन संस्कारनियमस्थितिः ।
नन्वेकस्मिन्नधिष्ठाने लब्धसंस्कारमिन्द्रियम् ॥७१॥
बोधकं सर्वदेहेषु स्यादेकेन्द्रियवादिनः ।
पुंसां देहप्रदेशेषु विज्ञानोत्पत्तिरिष्यते ॥ ७२ ॥

---

नन्वेवमधिष्ठानसंस्काराऽङ्गीकारान्न श्रोत्रसंस्कारः समर्थितः स्यादत आह अथापीति[६९] । श्रोत्रस्यैवाऽयमधिष्ठानद्वारेण संस्कार इति असंस्कृतकर्णशष्कुलीकस्य न शब्दश्रवणमिति । नन्वधिष्ठानद्वारः संस्कारो ऽपि किं न दूरस्थैः क्रियेतेत्यत्राह अप्राप्तेति[७०]। प्राप्य हि ध्वनयः संस्कुर्वन्ति, न दूरस्था शष्कुली तैः प्राप्ता, अतो न तद्द्वारः श्रोत्रसंस्कार इति ।

अत्र चोदयति नन्विति[७१] । यदि ह्येकमेव सर्वेषां श्रोत्रं तदेकस्मिन्नप्यधिष्ठाने संस्कृते लब्धसंस्कारमेवेति सर्वदेशवर्त्तिनां पुंसामतिदूरवर्त्तिनामपि शब्दं बोधयेदिति ।

परिहरति पुंसामिति[७२] । ज्ञानाङ्गं हि संस्कारः, प्रधानं ज्ञानं, प्रधानदेशत्वं चाङ्गानां,स्वदेहप्रदेशे च पुंसां ज्ञानमुत्पद्यते,नान्यत्र,अतो देहान्तरवर्त्ती संस्कारो न देहान्तरे ज्ञानमुत्पादयति, स हि तत्र विगुणः प्रधानवैदेश्यात्, किं पुनः प्रधानसादेश्यस्याङ्गत्वे प्रमाणं, दर्शनमेव, न ह्यधिष्ठानान्तरे संस्कृते ऽन्यत्र ज्ञानमुत्पद्यतइति ।

तेन प्रधानवैदेश्याद्विगुणा सा तु संस्कृतिः ।
निष्प्रदेशो ऽपि चात्मा नः कात्स्न्र्येन च विदन्नपि॥७३॥
शरीरएव गृह्णातीत्येवमुक्ते न दुष्यति ।
एकत्वे ऽपि यथा ऽऽकाशं द्रव्यैः साऽवयवैः पृथक्॥७४॥
संसर्गभेदं लभते संस्काराऽसंस्कृती तथा ।
व्योम्नो ऽनवयवव्याप्तिसद्भावे ऽपि भुवि स्थितान्॥७५॥

---

नन्वात्मनः प्रदेशाऽभावात् कथं देहप्रदेशे विज्ञानमित्युच्यते, न हि प्रदेशगतं पुंसां ज्ञानमत आह निष्प्रदेश इति[७३] । यद्यप्यनवयव आत्मा कात्स्न्र्येनैव ज्ञानाश्रयः, नावयवशः, तथापि शरीरएव गृह्णाति तत्रापि ह्यसौ कात्स्न्र्येनैव विद्यतइति ।

तदेवमधिष्ठानसंस्काराश्रयणेन तद्भेदाद्व्यवस्थोक्ता, संप्रत्याकाशस्यापि संस्कारे सिद्ध्यत्येव व्यवस्थेत्याह एकत्वइति[७४] । एकस्यापि ह्याकाशस्याऽनवयवस्यापि यथा क चिदेव घटसंसर्गः क चित् पटसंसर्गः क चिद्वाऽसंसर्ग इत्यसंकरसिद्धिः,एवं कर्णशष्कुल्यवच्छेदो ऽपि तस्य क चिदेव सर्वत्र न संकीर्यते, तदसंकरादेव च तदवच्छिन्नरूपस्याऽपि श्रोत्रस्य भेदः, तद्भेदाच्च संस्कारव्यवस्थेति ।

घटादिसंसर्गो वा ऽनवयवं व्यापकमाकाशमाश्रितः कथमव्यापकः, अत आह व्योम्न इति[७५] । यद्यपि व्यापकं व्योम घटादयस्त्वव्यापकाः, व्याप्तिर्हि नाम सर्वसम्बन्धिभिरनागतैश्च सम्बन्धः, न च घटादेरयमस्ति, अतो न ते व्यापकाः, संसर्गस्तु ह्याश्रयत्वाद् घटादीननुरुध्यमानो न व्यापको भवतीति ।

एवं चेदमपि न वक्तव्यम्, आकाशस्य श्रोत्रत्वेन तस्य सर्वान्प्रत्यविशेषात् न कश्चिद् बधिरः स्यादिति, न ह्याकाशमात्रं श्रोत्रं किं त-

द्व्याश्रयत्वं न संसर्गो घटादीननुरुध्यते ।
बाधिर्यादिव्यवस्थानमनेनैव च हेतुना ॥ ७६ ॥
तदेवाऽभोग्यमन्यस्य धर्माऽधर्मवशीकृतम् ।
यथा तत्र वसन्नेव स्वामित्वादवरोपितः ॥ ७७ ॥
न भोगं लभते तद्वद्बधिरो ऽन्यत्र शृण्वति ।
'श्रोत्रशब्दाऽऽश्रयाणां च न नामाऽवयवाः स्वयम्॥७८॥
न चैकदेशवृत्तित्वं तथाऽप्येतन्न दुष्यति ।
व्यञ्जकानां हि वायूनां भिन्नाऽवयवदेशता' ॥ ७९ ॥

---

हि धर्माऽधर्मोपगृहीतविशिष्टशक्त्युपेतकर्णशष्कुल्यवच्छिन्नम्, अतो यस्य तादृशी कर्णशष्कुली नास्ति धर्माऽधर्मलोपेन कर्णशष्कुल्योर्वाताद्युपहतत्वात्,तस्य सदप्याकाशं तदनवच्छिन्नत्वादभोग्यमिति स बधिरो भविष्यतीति, तदाह बाधिर्यादीति[७६] ।

नन्वनुपहतशष्कुलीके ऽपि देहे बधिरात्मा वसति सर्वगतत्वादतस्तद्देहस्वामिवत् किं न शब्दं शृणोत्यत आह यथेति[७७] । न हि तद्देहनिवासमात्रेण भोगो भवति, ग्रामादिस्वामिनामिव तत्र वसतामपि स्वामित्वादवरोपितानामिति ।

तदेवं श्रोत्रसंस्कारे अधिष्ठानभेदाद् व्यवस्था समर्थिता,ध्वनिभेदादपि सम्भवति व्यवस्थेत्याह श्रोत्रेति[७८] सार्द्धेन । श्रोत्रसंस्कारस्यैवेदमपि समाधानं, तत्तु शब्दतदाश्रययोरपि तुल्यमिति तद्ग्रहणं, शब्दस्याश्रयद्वारो ऽपि संस्कारः पूर्वमुपक्षिप्त इति तद्ग्रहणमेतन्न दुष्यतीति,सर्वोपलम्भदोषो नास्तीति, ध्वनयो हि सावयवाः प्रादेशिकाश्च, तत्संसर्गः संस्कारः श्रोत्रस्य शब्दस्य तदाश्रयस्य आकाशस्य वा विभोरपि प्रादेशिक इति न दूरस्थानां श्रवणमिति ।

जातिभेदश्च तेनैव संस्कारो व्यवतिष्ठते ।
अन्यार्थं प्रेरितो वायुर्यथा ऽन्यं न करोति वः ॥८०॥
तथा ऽन्यवर्णसंस्कारशक्तो नाऽन्यं करिष्यति ।
अन्यैस्ताल्वादिसंयोगैर्वर्णो नाऽन्यो यथैव ते ॥८१॥
तथा ध्वन्यन्तराऽऽक्षेपो न ध्वन्यन्तरसारिभिः ।
तस्मादुत्पत्त्यभिव्यक्त्योः कार्यार्थापत्तितः समः ॥८२॥
सामर्थ्यभेदः सर्वत्र, स्यात् प्रयत्नविवक्षयोः ।
विषयस्यापि संस्कारे तेनैकस्यैव संस्कृतिः ॥८३॥

---

यदुक्तं 'सकृच्च संस्कृतं श्रोत्रं सर्वशब्दान् प्रबोधयेदिति, तत्राह जातीति[८०] । शब्दोपलब्धिव्यवस्थां दृष्ट्वा तद्बलेन प्रतिवर्णं संस्कारहेतुभूता ध्वनिजातिभेदाः कल्प्यन्ते, तत्संयोग एव श्रोत्रस्य संस्कारो न स्थिरवाय्वपनयः, येनातिप्रसङ्गः स्यादिति ।

तुल्या चेयं ध्वनिजातिकल्पना कार्यवादिनामपीत्याह अन्यार्थमिति । वर्णान्तराऽनुगुणः श्रोत्रसंस्कारो ऽन्यवर्णसंस्कार इति । अथ ताल्वादिसंयोगविभागः शब्दस्य कारणं न वायवीय इत्युच्यते, तथापि तुल्यतैवाऽऽवयोरित्याह अन्यैरिति[८१]। वर्णान्तराऽनुगुणश्रोत्रसंस्कारजनकध्वनिप्रेरणसमर्थैस्ताल्वादिसंयोगैर्ध्वन्यन्तराणामाक्षेपः प्रेरणं न क्रियतइति । उपसंहरति तस्मादिति[८२] सर्वत्रा[८३]-ऽन्तेन । सर्वत्रेति श्रोत्रतत्संस्कारेषु ध्वनिषु ताल्वादिषु च पक्षद्वये ऽपि सामर्थ्यकल्पना तुल्येति ।

एवमेव ताल्वादिसंयोगहेतुभूते प्रयत्नविशेषे तद्धेतुभूते च विवक्षाभेदे तुल्यत्वं दर्शयितव्यमित्याह स्यादिति । यत्पुनः श्रोत्रसं-

नरैः सामर्थ्यभेदाच्च न सर्वैरवगम्यते ।
'यथैवोत्पद्यमानोऽयं न सर्वैरवगम्यते ॥८४॥
दिग्देशादिविभागेन सर्वान् प्रति भवन्नपि ।
तथैव यत्समीपस्थैर्नादैः स्याद्यस्य संस्कृतिः ॥८५॥
तैरेव श्रूयते शब्दो न दूरस्थैः कथं चन' ।
द्वयसंस्कारपक्षे तु मृषा दोषद्वये वचः ॥८६॥
येनाऽन्यतरवैकल्यात्सर्वैः सर्वो न गृह्यते ।
सर्वलोकप्रसिद्धां च विवक्षाऽनुसृतां श्रुतिम् ॥८७॥

---

स्कारदूषणं शब्दसंस्कारे ऽतिदिष्टम्, एतदेव प्रसङ्गव्यं विषयस्यापि संस्कृताविति तस्य परिहारो ऽपि तद्वदेव ध्वनिजातिभेदाश्रयणेन कर्त्तव्य इत्याह विषयस्येति ।

यत्तु शब्दः संस्कृतः सर्वगतत्वात्सर्वैः श्रूयेतेत्युक्तं, तत्राह नरैरिति[८४] । एतदेव दृष्टान्तेनोपपादयति यथेति द्वयेन। यथा ह्यनित्यत्वे शब्दरूपं प्रादेशिकं तथा नित्यत्वे ऽपि तस्य संस्कारः प्रादेशिक एव, नादा हि प्रादेशिकाः स्वदेशावच्छिन्नमेव तस्य विभोरपि संस्कारं कुर्वन्ति न व्यापकम्, अतः समीपस्थानामेव श्रोत्रेण संस्कृतः शब्दप्रदेशः प्राप्तो नान्येषामिति नातिप्रसङ्ग इति ।

उभयसंस्कारे ऽपि न कश्चिद्दोष इत्याह द्वयेति[८६] । कथमित्याह येनेति[८७] । श्रोत्रसंस्कारवैकल्यान्न सर्वैः पुरुषैः श्रूयते, शब्दसंस्कारवैकल्याच्च न सर्वः शब्दः समुच्चितयोर्द्वयोः कारणत्वात्, प्रत्येककारणत्वे हि दोषद्वयं स्यादिति ।

अनुगच्छद्भिः*रेकान्तात्कार्यो मार्गः परीक्षकैः ।
'तत्र ये तावदिच्छन्ति प्राक्संयोगविभागतः ॥८८॥
शब्द उत्पद्यते तस्मादन्यस्तत्सदृशः पुनः ।
तदनन्तरदेशे ऽन्यस्तादृगन्यस्ततः परः ॥८९॥
वीचीतरङ्गवृत्त्यैवमन्त्यः श्रोत्रेण गृह्यते' ।
अदृष्टकल्पना तस्मिन्पक्षे बह्वी प्रसज्यते ॥९०॥
शब्दभेदे न तावन्नः प्रज्ञाभेदः प्रवर्त्तते ।
आरम्भकत्वं शब्दस्य निष्क्रियस्याऽप्रमाणकम् ॥९१॥

---

भाष्यकारेणा"ऽभिघातेन ही"त्यादिना शब्दश्रवणमार्गो दर्शितः, वैशेषिकादिभिस्तु मार्गान्तरं, तत्र भाष्यकारेणोक्त एव युक्तो नान्य इत्याह सर्वलोकेति । सर्वो हि लोक एकमेव शब्दं परस्मै श्रावयितुं विवक्षति, न तु शब्दान्तरं श्रावयितुं शब्दान्तरं विवक्षति, तेनेयं विवक्षानुसारिणी शब्दश्रुतिः, विवक्षितस्यैव श्रवणं नान्यस्येति तामनुगच्छद्भिरनतिक्रामद्भिरेव परीक्षकैर्मार्गो दर्शयितव्यः, शब्दसन्ताने त्वन्य एव शब्दो वक्त्रा विवक्ष्यते श्रोत्रा चाऽन्यः श्रूयतइति न विवक्षामनुसृता श्रुतिरनुगता स्यादिति ।

कल्पनागौरवमप्यस्मिन्पक्षे स्यादिति दर्शयितुं तमेव तावत् पक्षमनुभाषते तत्रेति[१] द्वयेन । वैशेषिकास्त्वाहुः, संयोगाद्वा विभागाद्वा शब्दाद्वा शब्दनिष्पत्तिरिति, प्रथमं, भेरीदण्डसंयोगाद् वेणुदलविभागाद्वा शब्दो निष्पद्यते, स च वीचीसन्तानवत्समानजातीयान् सर्वतः सन्तनोति, तेषु च सन्तन्यमानेषु स्वदेशप्राप्तः शब्दः श्रोत्रेण गृह्यतइति ।

---

* अनुगृह्णद्भिरिति २ पु. पा. ।

देशान्तरगतं कार्यं नाऽमूर्तस्याऽनभिघ्नतः ।
देशेयत्तानिमित्तं च नाऽऽरम्भनियमं प्रति ॥९२॥
न च दिङ्नियमे हेतुरनुवातगतेस्तथा ।
सदृशं वा सजातिं वा करोतीति च दुष्करम् ॥९३॥
आरम्भसर्वदिक्कत्वे न च हेतुः प्रतीयते ।
निरन्वयैर्विनश्यद्भिर्न चाऽत्यन्ताऽसतां क्रिया ॥९४॥

---

तदिदमदृष्टकल्पनागौरवादयुक्तमित्याह अदृष्टेति[९०] । कथमित्याह शब्देति[९१] । शब्दाऽनेकत्वमेव तावददृष्टमिति । आरम्भकत्वं तु न केवलमदृष्टं प्रमाणविरुद्धं च, निष्क्रियत्वादित्याह आरम्भेति । अरुणादीनां हि द्रव्यद्वारं कारकत्वं न साक्षादिति देशान्तरकार्यारम्भकत्वं सुतराममूर्त्तस्याऽभिघातमकुर्वतो ऽनुपपन्नमित्याह देशान्तरेति[९२] । या चेयमारम्भनियमं प्रति देशेयत्ता नाऽतिदूरमारभतइति न तस्याः किंचिन्निमित्तमुपलभ्यते,अन्तिमो ऽपि हि शब्दः शब्दान्तरमारभेताऽविशेषादित्याह देशेति । यश्चायं नियमो न चतुर्दिशं दूरे ऽपि शब्दश्रवणं तथा नाऽधस्तादुपरिष्टाच्च या चानुवातं दूरादुपलब्धिः तत्रापि न कश्चिद्धेतुरस्तीत्याह न चेति[९३]। इदमपरमदृष्टकल्पनं सदृशमिति ।

वीचीसन्तानेव चैकदिक्क एव शब्दसंतानः स्यान्न सर्वदिक्क इत्याह आरम्भेति[९४] । किं च, कार्यकारणयोर्मृदादिरूपेणेतरेतराऽपत्तिर्दृष्टा, शब्दे तु निरन्वयविनाशिभिः कथमत्यन्ताऽसतां क्रियेत्याह निरन्वयैरिति[९५] । निरस्तप्रायश्चाऽयं शब्दसंतानो ज्ञानसंतानवि-

ज्ञानसन्तानवच्चैषां सन्तानो नाऽवकल्पते ।
वेगवत्सक्रियत्वाभ्यां तरङ्गाणां तु युज्यते ॥९५॥
कार्यदेशान्तराऽऽरम्भो यावद्वेगञ्च तत्क्रिया ।
आरम्भप्रतिबन्धो ऽस्य न च कुडयादिभिर्भवेत् ॥९६॥
न ह्यमूर्त्तस्य सद्भावो मूर्तमध्ये विहन्यते ।
न च कुडयादिभिर्व्योम नाश्यते सार्यते ऽपि वा॥९७॥
न तिरोधीयते तस्मात्कुडयमध्ये ऽपि तद् ध्रुवम् ।
'आकाशं तत्र न स्याच्चेत्कुडयस्थानं विरुध्यते ॥९८॥
तन्मध्याऽवयवानां च' न हि तिष्ठति ते घने ।

---

राकरणन्यायेनेत्याह ज्ञानेति[९५] ।

यत्तु वीचीसंतानवदित्युक्तं, तत्राह वेगवदिति । सक्रियत्वा-दभिघातकारणत्वाद्वेगवत्त्वाच्च यथाक्रममारम्भः, स च देशान्तरे यावद्वेगं चेत्युपपन्नमिति । अयं चाऽपरो दोष इत्याह आरम्भे-ति[९६] । कारणमाह न हीति[९७] ।

नन्वाकाशगुणः शब्दः कथमसत्याकाशे कुड्यमध्ये स्यादत आह न चेति । यत्र हि कुड्यं संचीयते तत्र प्राक्तावदस्त्याकाशं, तच्च कुड्येन न विनाश्यते, नित्यत्वान्नाशोत्सारणे, तिरोधानमात्रमपि न क्रियते,सत्यपि कुड्ये प्रदेशान्तरे व्योमोपलम्भात्;व्योमस्वरूपाभिप्रायं चेदमतिरोधानं, कुड्यप्रदेशे त्वस्त्येव तिरोधानमतो ऽस्त्येव कुड्यम-ध्ये ऽप्याकाशमिति ।

अथ कुड्यनिष्पत्तेः प्रागपि न तत्राऽऽकाशमस्ति किं तु मूर्त्ता-न्तरमेवेत्युच्यते, ततस्तत्र कुड्यस्य तदवयवानां च स्थितिरेव न

अथाऽऽवृत्यात्मकद्रव्यसंयोगरहितं नभः ॥९९॥
शब्दोत्पादं बिभर्तीति तत्र न्यायो न कश्चन ।
अन्यथाप्युपपन्नत्वान्नाऽर्थापत्त्यैतदिष्यते ॥१००॥
न प्रमाणान्तरं चेयं प्रमाणद्वयवादिनाम् ।
संबन्धाऽनुपलब्धेश्च नाऽनुमानेन कल्पना ॥१०१॥
ब्रूयात्सामान्यदृष्टं चेद्भवेद्धेतोर्विरुद्धता ।
सजातीयकरः शब्दो गुणत्वाच्चेन्द्रियादिवत् ॥१०२॥
अशब्दारम्भकस्तद्वत्स्याददेशान्तरे तथा ।

---

स्यादित्याह आकाशमिति पादत्रयेण । कारणमाह न हीति[९९] । अथ सदप्याकाशं मूर्तद्रव्यरहितं शब्दं बिभर्त्ति न तत्संसृष्टमिति कल्प्यते, तदप्रमाणकमित्याह अथेति ।

प्रमाणं च शब्दारम्भे न किं चित्संभवति, न तावदर्थापत्तिः, शाब्दश्रवणस्य वक्ष्यमाणन्यायेनाऽप्युपपत्तेरित्याह अन्यथेति[१००] । प्रमाणद्वयवादिनां चाऽयुक्तमर्थापत्त्यभिधानमित्याह नेति[१०१] । अनुमानमिति चेत्, न, क्व चिदप्यदृष्टेन दृष्टारम्भेण सह कस्य चिल्लिङ्गस्य संबन्धाऽदर्शनादित्याह संबन्धेति ।

अत्र किं चिदाशङ्कते ब्रूयादिति[१०२] । दूषयति भवेदिति । सामान्यदृष्टं विवृणोति सजातीयेति । विरुद्धतां विवृणोति अशब्देति । ततश्च धर्मस्वरूपं तद्विशेषं च विरुन्ध्यात्, ननु एवंरूपस्यापि रूपाऽनारम्भकत्वं रसादिवदनुमीयेत, केन चोक्तं नेति,

'यत्र ह्यवयवा देशे पटादीनां व्यवस्थिताः* ॥१०३॥
तत्रैव तद्गुणाः सर्वे तदारब्धो ऽवयव्यपि ।
तद्गुणाश्चापि तद्देशास्तेनैषामेकदेशता ॥१०४॥
तद्वदाद्या पृथग्देशाः शब्दाः सर्वे भवन्ति हि' ।
शब्दं नारभते शब्दः शब्दत्वादन्त्यशब्दवत् ॥१०५॥
एवं विभागसंयोगौ तद्भावादन्ययोगवत् ।
जैनकापिलनिर्दिष्टं शब्दश्रोत्रादिसर्पणम् ॥१०६॥
साधीयो ऽस्मात्,तदप्यत्र युक्त्या नैवाऽवतिष्ठते ।
'शब्दस्याऽगमनं तावददृष्टं परिकल्पितम् ॥१०७॥

---

तन्तुगुणा एव हि तन्तुषु पटीभूतेषु पटगुणतां भजन्ते, न गुणान्तरबुद्धिस्तत्रास्तीत्यसकृदुक्तमिति । विशेषविरुद्धत्वं विवृणोति यत्र हीति[१०३-१०४] द्वयेन । सप्रतिसाधनश्चाऽयं हेतुरित्याह शब्दमिति[१०५] । संयोगविभागयोरप्यशब्दारम्भकत्वं तन्त्वादिसंयोगविभागवदित्याह एवमिति[१०६] ।

तस्माद्वैशेषिकपक्षाज्जैनसांख्यपक्षावेव युक्तावित्याह जैनेत्यस्मा[१०६]-दन्तेन । आदिशब्देन श्रोत्रवृत्तेरुपासनं, तयोर्हि पक्षयोर्धर्मिणः प्रसिद्धस्याऽऽगमनमात्रं कल्प्यं न त्वनेकशब्दकल्पनामिति । तावपि त्वस्मिन्मीमांसासिद्धान्ते परिपन्थिनि न युक्तावेवेत्याह तदपीति । तत्र शब्दाऽऽगमनस्य तावदयुक्ततामाह शब्दस्येति सार्द्धेन । जैनैर्हि शब्दस्याऽऽगमनं, परिमाणं, स्पर्शः, तेषां चाऽभिभवः, स्पर्शवत्त्वे ऽपि च त्वगिन्द्रियाऽग्राह्यत्वं, सूक्ष्माश्च भागाः पुद्गलरूपाः कल्पिताः, तच्च सर्वमदृष्टमिति ।

---

* अवस्थिता इति ३ पु. पा. ।

मूर्तिस्पर्शादिमत्त्वं च तेषामभिभवः सताम् ।
त्वगग्राह्यत्वमन्ये च भागाः सूक्ष्माः प्रकीर्तिताः' ॥१०८॥
तेषामदृश्यमानानां कथं च रचनाक्रमः ।
कीदृशाद्रचनाभेदाद्वर्णभेदश्च जायते ॥१०९॥
द्रवत्वेन* विना चैषां संश्लेषः कथ्यते कथम् ।
आगच्छतां† च विश्लेषो न भवेद्वायुना कथम् ॥११०॥
लघवो ऽवयवा ह्येते निबद्धा न च केन चित् ।
वृक्षाद्यभिहतानां च विश्लेषो लोष्टवद्भवेत् ॥१११॥
एकश्रोत्रप्रवेशे च नाऽन्येषां स्यात् पुनः श्रुतिः ।
न चाऽवान्तरवर्णानां नानात्वस्यास्ति कारणम् ॥११२॥

---

भागैश्चाऽदृश्यमानैः कथमवयवी शब्दो रच्यतेत्याह तेषामिति[१०९] । संश्लेषो ऽप्यनुपपन्न इत्याह द्रवत्वेनेति[११०] । यद्यपि कथं चित् सक्तुमुष्टिवत्संश्लेषः स्यात्तथापि तद्वदेव वायुसंश्लेषाद् विश्लेषः स्यादित्याह आगच्छतामिति । कारणमाह लघव इति[१११] । दोषान्तरमाह वृक्षेति । अन्यदप्याह एकेति[११२] । एको हि शब्दो युगपदुच्चारितः कथमन्यत्र प्रविशेदिति ।

अथैकस्मिन्नप्युपचरिते तमनु बहवो निष्पन्नाः सर्वतो गच्छन्तीत्युच्यते, तत्राह न चेति । उच्चारणमेव हि शब्दनिष्पत्तिकारणं, तच्चैकविषयमिति कथं बहूनां निष्पत्तिरिति । अथैक एव शा-

---

* द्रव्यत्वेनेति १ पु. पा. ।

† अगच्छतामिति १ पु. पा. ।

न चैकस्यैव सर्वासु गमनं दिक्षु युज्यते ।
श्रोत्राऽगमनपक्षे च तन्न वृत्तिश्च गच्छति ॥११३॥
तददृष्टद्वयं तस्य, दूरस्थेन च विक्रिया ।
प्राप्तिः सर्वगतत्वाच्चेत्तुल्या दूरगतेष्वपि ॥११४॥
विक्रियाऽविक्रिये तत्र सर्वैः स्यातां न भेदतः ।
असम्बद्धविकारित्वमपीष्टं तत्र पूर्ववत् ॥११५॥

---

व्दः सर्वतो गच्छतीत्यत्राह न चेति[११३] । न तावद्युगपद्गमनं संभवति, पर्यायेण तु गमने दूरसमीपस्थयोरपि द्वयोरभितः स्थितयोर्युगपद्ग्रहणं न स्यादिति ।

सांख्यपक्षं दूषयति श्रोत्रेति । दृष्टविरुद्धं त्वदृष्टकल्पनं चास्मिन्नपि पक्षे स्यादिति । कथमित्याह तन्नेति । तत्तावत् श्रोत्रं न गच्छति, कर्णशष्कुल्यास्तावत् विस्पष्टैवाऽनागतिः, अत एव तदवच्छिनत्तीति चेत्, का पुनरियं वृत्तिर्नाम, शब्दादिविषयसंनिभो विकारः, विषया हि प्रथममिन्द्रियेषु स्वाकारं विकारमालोचनवृत्त्यादिपदपर्यायमादधति, सा च वृत्तिर्विषयदेशमागत्य विषयाकारं प्रकाशमध्यवसायाख्यं महदाख्यायां बुद्धावादधाति, तस्मिन्नाहिते तस्यां चैतन्यमभिव्यज्यते, ऽत आह वृत्तिरिति तस्या[११४]ऽन्तेन । वृत्तिश्चाऽस्ति सा च गच्छतीति द्वयमप्यदृष्टमेवंवादिन इति ।

यच्चेदमसंबद्धेनैव विषयेणेन्द्रिये विकाराधानं, तदप्ययुक्तमित्याह दूरस्थेनेति । शङ्कते प्राप्तिरिति । विभुत्वादहंकारस्य तन्मयानीन्द्रियाण्यपि तथेत्यस्ति प्राप्तिरिति । दूषयति तुल्येति । ततः किमित्याह विक्रियेति[११५] । अथाऽसत्यपि संबन्धे विकारः स्यात्,

असम्बन्धसमानत्वे नासन्नो हि विशिष्यते ।
अमूर्ता श्रोत्रवृत्तिश्च न मूर्तेन विहन्यते ॥११६॥
तत्र व्यवहितः शब्दः किमर्थं नोपलभ्यते ।
श्रोत्रस्य विक्रियायां च नेयत्ताया नियामकम् ॥११७॥
'नाऽनुवातादिभिस्तस्य वृत्तेश्च प्रेरणं भवेत् ।
अनुवातं विहन्येत' प्रतिवातं च सा व्रजेत् ॥११८॥
तद्गतं ह्यनुवातत्वं स्यान्न शब्दगतं तदा ।
येषां त्वप्राप्त एवाऽयं शब्दः श्रोत्रेण गृह्यते ॥११९॥
तेषामप्राप्तितुल्यत्वं दूरव्यवहितादिषु ।
तत्र दूरसमीपस्थग्रहणाऽग्रहणे समे ॥१२०॥

---

तथापि स एव दोष इत्याह असंबद्धेति । तदेव विवृणोति असंबन्धेति[११६] ।

कुड्यादिप्रतिबन्धश्चाऽमूर्त्तत्वाद्वृत्तेरनुपपन्न इत्याह अमूर्त्तेति । शब्देन चाऽसंबद्धेन श्रोत्रे विक्रियमाणेन देशेनायं नियमो दृश्यते, कदा चित्केषां चित् दूरे ऽपि श्रवणात्, एवं चातिदूरे ऽपि श्रवणं स्यादित्याह श्रोत्रस्येति[११७] । अनुवातेन श्रोत्रस्य वृत्तेर्वा प्रेरणं न स्यात्प्रत्युत विघात एव शब्दगतेनानुवातेन वृत्तेः स्यादित्याह नानुवातेति[११८]पादत्रयेण । किं च प्रतिवातमेव शब्दमासाद्य वृत्तिर्दूरं गच्छेदित्याह प्रतिवातमिति । कारणमाह तद्गतमिति[११९] ।

अप्राप्यकारीन्द्रियवादिनः शाक्यान् प्रत्याह येषामिति । ततः किमित्याह तत्रेति[१२०] ।

स्यातां न च क्रमो नापि तीव्रमन्दादिसम्भवः ।
तस्माच्छ्रोत्रियदृष्टापि कल्पनेयं परीक्ष्यताम्* ॥१२१॥
प्रयत्नाऽभिहतो वायुः कोष्ठ्यो यातीत्यसंशयम् ।
स संयोगविभागौ च ताल्वादेरनुरुध्यते ॥१२२॥
वेगवत्त्वाच्च सोऽवश्यं यावद्वेगं प्रतिष्ठते ।
तस्याऽऽत्माऽवयवानां च स्तिमितेन च वायुना ॥१२३॥

---

एवं मार्गान्तराणि दूषयित्वा भाष्यकारीयं मार्गं परीक्षितुमारभते तस्मादिति[१२१]। तत्र यत्तावदुक्तम् "अभिघातेन हि प्रेरिता वायव" इति, तत्प्रत्यक्षासिद्धं न कल्पनीयमित्याह प्रयत्नेति[१२२] । स च शब्दविशेषव्यक्तौ ताल्वादिस्थानविशेषसंयोगमनुरुध्यते, स्थानविशेषवशेन शब्दविशेषोपलम्भादित्याह स संयोगेति । यावद्वेगमभिप्रतिष्ठन्तइत्येतदपि वेगवत्त्वादेव वायूनां शरादिवत् क्लृप्तमेवेत्याह वेगवत्त्वादिति[१२३] ।

यदपि स्तिमितानि वाय्वन्तराणि प्रतिबाधमानाः सर्वतोदिक्कान् संयोगविभागानुत्पादयन्तइति, तत्र तावत् क्लृप्तकल्पनेत्याह तस्येति । किमिदं स्तिमितेनेति, स्थिरेणेत्यर्थः, कथं पुनर्वायोः स्थिरत्वं, सदागतिरिति हि तं समाचक्षते, सत्यं, सूक्ष्मत्वात्तु पदार्थान्तराण्यचालयन् स्थिर इव भवतीति स्थिराभिधानम्। किं पुनरस्य सद्भावे प्रमाणं, नाऽसति तस्मिन् व्यजनादिचालने वायूपलम्भसम्भवः, न हि तत्राऽसौ जन्यते, निरुपादानकार्यनिर्माणाऽसम्भवात्,पार्थिवस्य च वायूपादानत्वाऽयोगात्,व्यस्तास्तु वाय्ववयवा व्यजनेन संह-

---

* निरीक्ष्यतामिति २ पु. पा. ।

संयोगा विप्रयोगाश्च जायन्ते गमनाद् ध्रुवम् ।
कर्णव्योमनि स प्राप्तः शक्तिं श्रोत्रे नियच्छति ॥१२४॥
तद्भावे शब्दबोधाच्च संस्कारो ऽदृष्ट इष्यते ।
उत्पत्तिशक्तिवत् सो ऽपीत्यधिकं नो न किञ्चन॥१२५॥
तथैव तद्विशेषो ऽपि विशिष्टग्रहणाद्भवेत् ।
शब्दोत्पत्तेर्निषिद्धत्वादन्यथाऽनुपपत्तितः ॥१२६॥
विशिष्टसंस्कृतेर्जन्म ध्वनिभ्यो ऽध्यवसीयते ।
तद्भावभाविता चात्र शक्त्यस्तित्वाऽवबोधिनी ॥१२७॥

---

न्यमाना युक्तमुपलभ्यन्तइति । एतावत्त्विहाऽदृष्टमित्याह कर्णेति[१२४]। किं पुनस्तत्र प्रमाणं, तद्दर्शयति तद्भावइति[१२५] ।

नन्वेवमप्यदृष्टकल्पना ऽस्त्येवाऽत आह उत्पत्तीति । उत्पत्तिशक्तिरपि कल्प्यैव भवतां, वयं तु संस्कारं कल्पयाम इति न किं चिदधिकमिति । ननु प्रतिशब्दं संस्कारविशेषः कल्प्यः, अत आह तथैवेति[१२६] । तुल्यमिदमपि भवतां प्रतिशब्दमुत्पादकभेदकल्पनादिति । नन्वेवमविशेषे किमिति संस्कारविशेषोत्पत्तिरेवाङ्गीक्रियते न शब्दविशेषोत्पत्तिरत आह शब्देति । प्रागनुपजातपश्चादुपजातशब्दोपलम्भाऽनुपपत्त्या ऽवश्यं कल्पनीये कस्मिंश्चित्प्रत्यक्षया शब्दोत्पत्तेर्निषेधात् संस्कारकल्पनैव युक्तेति ।

भवतु संस्कारः, ध्वनीनां तज्जननशक्तौ किं प्रमाणम्, अत आह तद्भावेति[१२७] । यथा हि श्रोत्रस्य शब्दग्रहणशक्तिस्तद्भावभावात् तथा ध्वनीनामपि तत एव श्रौत्रसंस्कारशक्तिस्तत्र कल्प्यते ।

श्रोत्रशक्तिवदेवेष्टा बुद्धिस्तत्र हि संहृता ।
'कुडयादिप्रतिबन्धो ऽपि युज्यते मातरिश्वनः ॥१२८॥
श्रोत्रदेशाऽभिघाते ऽपि तेन तीव्रप्रवर्तिना ।
तस्य च क्रमवर्तित्वात् क्षयि*वेगाऽऽत्मसंपदः ॥१२९॥
संस्कारक्रमतीव्रत्वमन्दतादिनिमित्तता' ।
'इममेव च संस्कारं शब्दग्रहणकारणम् ॥१३०॥
के चित्तु पण्डितंमन्याः श्रोत्रमित्यभिमन्वते ।
संज्ञासञ्चारणाच्चैषां बहुमानः स्वचेतसि ॥१३१॥
मुधैषां बहुमानो ऽयं वस्त्वनुत्पाद्य किं चन' ।
ध्वनिजन्याद्धि संस्काराच्छ्रोत्रं नाऽन्यत्प्रदर्शितम्॥१३२॥

---

बुद्धिस्तत्र हि संहृतेति[१२८]। येयं संस्कारकरणकल्पनायां प्रवृत्ता बुद्धिः सा तत्रैव ध्वनिशक्तिकल्पनायामुपसंहृतेति। दृष्टानुगुण्यं चास्य पक्षस्येत्याह कुडयादीति द्वयेन। क्षयिणी हि तस्य वेगसंपदात्मसंपच्च दूरे, अतो दूरमपि श्रवणम,आदिशब्दोपात्तं चातिदूरवर्त्तिनामश्रवणम, अनुवातं च दूरादुपलम्भनं, तिर्यक्पवनशीलत्वाच्च चतुर्दिशं दूरे श्रवणं, नाधस्तादुपरिष्टाच्चेत्येतदपि युक्तमिति।

अत्र भर्तृमित्रो वदति, न श्रोत्रं नाम किंचित्, तस्य च ध्वनिजन्यः संस्कार इति द्वयं कल्प्यम,आदौ ध्वनिजन्यः संस्कार एव श्रोत्रं, तदुपन्यस्योपालभते इममिति[१३०] द्वयेन। नन्वस्त्येव वस्तूत्पत्तिः द्वयोरकल्पनात्कथं संज्ञासंचारमात्रत्वम, अत आह ध्वनीति[१३२]। न हि ध्वनिजन्यात्संस्कारादन्यत् श्रोत्रं भाष्यकारेण द-

---

* क्षयेति २ पु. पा. ।

तं मुक्त्वा श्रोत्रशब्देन किं दृष्टमधिकं च तैः ।
एवंजातीयकानर्थान् फलेन प्रतिपादितान् ॥१३३॥
लोकः संस्कारशब्देन सामान्येनैव जल्पति ।
श्रोत्रशब्दो विशेषेण तत्राऽविज्ञातसङ्गतिः ॥१३४॥
सिद्धं स्वार्थं परित्यज्य नाऽभिधानेन वर्तते ।
आदावपरिभाष्यत्वं भाष्यकारो यदब्रवीत् ॥१३५॥
पदार्थेषु भवेत्तेषां तदतिक्रमणं फलम् ।
संस्कारव्यतिरिक्ते च सर्वलोकस्य वस्तुनि ॥१३६॥

---

र्शितं, चाऽक्लृप्तं कल्पितं, कर्णशष्कुली वा तदवच्छिन्नो वा नभोभागः श्रोत्रं, तच्च क्लृप्तमेव, संस्कारमात्रं त्वदृष्टं कल्पितं भवता, तत्रैव श्रोत्रसंज्ञां संचारयता किमर्थाधिक्यं कृतमिति ।

संज्ञासंचारे वा को दोषो, ऽत आह एवमिति[133] । यत्खल्वतीन्द्रियकार्यकल्प्यमागन्तुकं रूपं तत्कर्मज्ञानादिजन्यसंस्कारसाधारणेन संस्कारशब्देन लोको ऽभिधत्ते न तु संस्कारविशेषस्य साक्षादभिधायकं किं चिदस्तीति । श्रोत्रशब्दो ऽपि संस्कारमात्रवचन इति चेत्, तत्राह श्रोत्रेति[134] । विशेषेणेति । विशिष्टविषयो हि श्रोत्रशब्दो, नाऽसौ संस्कारसामान्ये ज्ञातसम्बन्धः, संस्कारान्तरेष्वप्रयोगात्, अतो नाऽसौ लोकप्रसिद्धं कर्णशष्कुल्यादि परित्यज्य संस्कारमभिधत्त इति ।

न केवलं लोकविरोधः, भाष्यविरोधश्चैवंवादिनामित्याह आदाविति[135] । नकेवलमप्रसिद्धार्थकल्पनं प्रसिद्धहानिरपीत्याह सं-

श्रोत्रशब्दः प्रसिद्धः सन् स्वाच्छन्द्येनाऽपनीयते ।
इन्द्रियाणामभिव्यक्तिर्गर्भस्थस्यैव देहिनः ॥१३७॥
प्राक्कार्यादागमैः सिद्धा तत्प्रद्वेषेण* लङ्घ्यते ।
न च शब्दाऽर्थसम्बन्धः कर्तुं योग्यः कथं चन ॥१३८॥
क्षणिकश्रोत्रपक्षे च सो ऽवश्यं कृतको भवेत् ।
संस्कारे तुल्यमेतच्चेन्न संस्कारान्तरस्थितेः ॥१३९॥
संस्कारशब्दवाच्या हि केचिद्वर्षशतान्यपि ।
ध्रियन्ते तेन तच्छब्दसम्बन्धो न विनश्यति ॥१४०॥

---

स्कारेति[१३६] । आगमविरोधश्च स्यादित्याह इन्द्रियाणामिति[१३७]। प्राक्कार्याच्छब्दोपलब्धिलक्षणाद् गर्भस्थस्य पञ्चमे मासि इन्द्रियाणि जायन्तइति। श्रुतितत्प्रद्वेषेणेति, आगमप्रद्वेषेणेति । सिद्धान्तविरोधमपि दर्शयति न चेति[१३८] । क्षणिको हि ध्वनिजन्यः संस्कारः, कथं तेन श्रोत्रशब्दस्याऽकृत्रिमः सम्बन्धः स्यात्, न हि तत्र लोकप्रसिद्धिरस्तीति ।

परस्त्वगृहीताऽभिप्रायः शङ्कते संस्कारइति[१३९] । संस्कारशब्दे ऽपि तुल्यमेतदिति । परिहरति नेति । तदेव विवृणोति संस्कारेति । किमिदं वर्षशतानीति, न ह्येतावतापि नित्यः सम्बन्धः, सत्यं, किं त्वविशेषार्थमिदं व्यक्तेः स्थायित्वमुक्तम्,अस्ति हि सर्वसंस्कारेषु कार्ययोग्यत्वं नामैकं रूपं, तेन संस्कारशब्दस्य नित्यः सम्बन्धः सिद्ध्यतीति ।

---

* सा प्रद्वेषेणेति २ पु. पा. ।

श्रोत्रशब्दः पुनः पूर्वं संस्कारादुत्तरत्र तु ।
एकदेशनिबद्धे हि सर्वदा ऽर्थे प्रतिष्ठितः ॥१४१॥
शक्यं च ध्रियमाणत्वमिन्द्रियत्वात्त्वगादिवत् ।
वक्तुं श्रोत्रस्य तेनात्र क्षणिकोत्पत्त्यसंभवः ॥१४२॥
यदि च ध्वनिसम्पर्काच्छ्रोत्रमेवोपजायते ।
बधिरस्यापि तज्जन्म किमर्थं नोपलभ्यते ॥१४३॥
यद्यस्य नास्ति तत्तस्य सुतरां जननक्षमम् ।
तस्मादपेक्षितं श्रोत्रं बधिरस्यापि जायताम् ॥१४४॥

---

श्रोत्रशब्दस्यापि तथा ऽस्त्विति चेत्, तत्राह श्रोत्रेति[१४१] । स्यादेवं, यदि ध्वनिजन्यात् संस्कारात् प्रागूर्ध्वं च देहैकदेशे कर्णे श्रोत्रशब्दो लोकेन प्रयुज्यते, अतो ऽस्य क्षणिकसंस्कारवाचित्वं लोकादसिद्धमवश्यं कृत्रिममेव स्यात्, यदि लोकप्रसिद्ध्यभावेन कृत्रिमत्वं किमर्थं तर्हि क्षणिकत्ववचनं, सत्यं,यदि यावत्कर्णसंस्कारो ऽवतिष्ठेत ततस्तत्र प्रयुज्यमानः श्रोत्रशब्दो न संविविच्येत, किं नु संस्कारवचनः किं वा कर्णवचन इति, क्षणिकत्वे च ततः प्रागूर्ध्वं च प्रयोगादतद्वचनत्वं शक्यं निर्णेतुं, तन्निर्णये च तद्वचनत्वं कृतकं स्यादिति सूक्तं 'क्षणिकश्रोत्रपक्षे च सो ऽवश्यं कृतको भवे'दिति।

प्रयोगमप्यक्षणिकत्वे श्रोत्रस्य दर्शयति शक्यमिति[१४२] । नन्वस्त्येव वस्तुन्यपि लाघवं, भवन्तो हि कर्णसमवायिनीं स्थिरां शक्तिमिच्छन्ति पुनश्च संस्कारं, वयं तु संस्कारमात्रम्, अत आह यदि चेति[१४३] । सत्यं, सा त्ववश्याङ्गीकर्त्तव्या, संस्कारमात्रेण हि शब्दश्रवणं बधिरस्यापि स्यादिति। ननु तस्य श्रोत्रं नास्ति, सत्यम्, अत एव तज्जन्यतइत्याह यद्यस्येति[१४४] । उपसंहरति तस्मादिति ।

संस्कारे ऽप्यविशिष्टं चेन्नाऽसावुपहतेन्द्रिये ।
श्रोत्रमाच्छादितं दोषैः संस्कर्तुं ध्वनयो ऽक्षमाः॥१४५॥
उत्पद्यमानपक्षे तु न किं चित्प्रतिबन्धनम् ।
श्रोत्रमाकाशदेशं च भौतिकेन्द्रियवादिनः ॥१४६॥
यमाहुस्तस्य सद्भावः प्राग्ध्वनेः केन वार्यते ।
सिद्धस्य च पदार्थस्य या ऽन्यतः कार्ययोग्यता॥१४७॥
संस्कारशब्दवाच्यत्वात्सा युक्त्या वार्यते कया ।
लोकाऽऽगमप्रसिद्धेषु पदार्थेष्वन्यथा वचः ॥१४८॥
तन्मुधाखेदकारि स्या द्गोविषाणाऽशनोपमम् ।
यदि त्ववश्यं कर्तव्यस्तार्किकोक्तिविपर्ययः ॥१४९॥

---

शङ्कते संस्कारइति[१४५] । संस्कारो बधिरस्यापि जायेतेति । परिहरति नासाविति । तदेव विवृणोति श्रोत्रमिति । आच्छादितमुपहतशक्तिकं तत्र ध्वनयः संस्कुर्वन्ति, शक्त्युद्बोधनमेव हि संस्कारः कथमसत्यां तस्यां स्यादिति । भवतस्तु स्वतन्त्रस्योत्पद्यमानस्य श्रोत्रस्य बधिरे ऽपि नास्ति प्रतिबन्ध इत्याह उत्पद्यमानेति[१४६] । प्रतिबन्धकल्पनायां वा ऽदृष्टकल्पनातो न मुक्तिरिति । तन्त्रान्तरविरुद्धश्चाऽयं पक्ष इत्याह श्रोत्रमिति । लोकविरुद्धमेव प्रकारान्तरेणाह सिद्धस्येति[१४७]। संस्कारशब्दस्य साधारणस्य वाच्यत्वेन प्रसिद्धा शक्तिः, अतः सा तद्वाच्यत्वान्न वारणीयेति ।

ननु को ऽयं दोषः, यत्तन्त्रान्तरविरुद्धाभिधानम्, अत आह लोकेति[१४८] । तन्त्रान्तरे ऽपि यल्लौकिकेन न्यायेन चाऽविरुद्धं तस्याऽन्य-

ततो वेदाऽनुसारेण कार्या दिक्श्रोत्रतामतिः ।
दिशः श्रोत्रमिति ह्येतत्प्रलयेष्वभिधीयते ॥१५०॥
तच्च प्रकृतिगामित्ववचनं चक्षुरादिवत् ।
सूर्यमस्य यथा चक्षुरुक्तं गमयतादिति ॥१५१॥
तेजःप्रकृतिविज्ञानं तथा श्रोत्रं दिगात्मकम् ।
दिक् च सर्वगतैका च यावद्व्योम व्यवस्थिता ॥१५२॥
कर्णच्छिद्रपरिच्छिन्ना श्रोत्रमाकाशदेशवत् ।
'यावांश्च कणभुग्न्यायो नभोभागप्रकल्पने ॥१५३॥

---

थाकरणं वृथैवेति । यदि चावश्यं तन्त्रान्तरविपरीतं विवक्षितम्, एवं वक्तव्यमित्याह यदीति[१४९] । वेदानुसारमेव दर्शयति दिश इति[१५०] । अध्रिगुप्रैषे हि संज्ञप्यमानस्य पशोरङ्गानां प्रलये ऽभिधीयमाने दिशः श्रोत्रमिति वचनेन श्रोत्रस्य दिक्षु प्रलयो ऽभिहित इति। ततः किमित्याह तच्चेति[१५१] ।

चक्षुरादिवदित्येतद्विवृणोति सूर्यमिति । सूर्यमस्य चक्षुर्गमयतादित्येवं तेजोरूपे सूर्ये प्रलीयमानत्वेनोक्तं चक्षुर्यथा तेजःप्रकृतिविज्ञानं तथा श्रोत्रमपि दिशः श्रोत्रमित्युक्तत्वाद्दिगाश्रयं तेजः प्रकृतिकमित्येवंरूपं विज्ञानं यस्येत्यर्थ इति ।

नन्वाकाशवत्सर्वगता एका च दिक्, तस्याः श्रोत्रत्वे दूरवृत्तिनामपि पुंसां श्रोत्रं ध्वनिभिः संस्कृतमिति सर्वेषां शब्दश्रवणं स्यादत्राह दिक्चेति[१५२] । सत्यं दिगेका सर्वगता च, प्रत्यभिज्ञायते हि दिक्स्वरूपमेकं सर्वदेशकालेषु, प्रागादिभेदस्त्वादित्योदयाद्यवच्छेदभेदादप्युपपद्यमानो न दिक्स्वरूपं भेत्तुमलं, तथाप्यसङ्कर इति ।

आकाशदेशवदित्येतद्विवृणोति यावानिति[१५३] पादत्रयेण ।

दिग्भागे तु समस्तो ऽसा'वागमात्तु विशिष्यते ।
तस्माद् दिग्द्रव्यभागो यः पुण्याऽपुण्यवशीकृतः॥ १५४॥
कर्णच्छिद्रपरिच्छिन्नः श्रोत्रं संस्क्रियते च सः ।
तस्मात्स्वतो ऽनवस्थानं परस्ता*दित्यसिद्धता ॥१५५॥
प्रत्ययस्याऽनवस्थानं व्योम्न्यपि स्थगिते ऽस्ति नः ।
न च तस्मिन् विनाशित्वं द्रव्ये ऽद्रव्यात्मके†सति॥ १५६॥
तत्राऽनुमानबुद्धिश्चेच्छब्दे ऽप्यस्तीति गम्यताम् ।
'करोतेर्यच्च कर्मत्वात्कृतकत्वमुदाहृतम् ॥१५७॥
अर्थस्तावदसिद्धो ऽयमभिधानमथोच्यते ।
तत्रापि व्यभिचारित्वं तत्क्रियाजन्म‡वादिनः ॥१५८॥

---

ननु तुल्यत्वे कः पक्षपातो दिङ्मयत्वे,अत आह आगमादिति[१५४] । उपसंहरति तस्मादिति । प्रकृतमस्थानादित्यस्य हेतोरसिद्धिमनैकान्तिकत्वं च यथायथमुपसंहरति तस्मादिति[१५५] । व्योमापि नश्वरमिति चेत्, तत्राह न चेति[१५६]। न ह्यद्रव्यस्य द्रव्यस्य विनाशः संभवति परमात्मादिवदिति ।

शङ्कते तत्रेति[१५७] । इयमेव भवदुक्ता ऽनुमानबुद्धिः स्थगिते व्योम्नि व्यवतिष्ठते, ततः प्रत्ययाऽनवस्थानस्य तत्राऽभावात्कथमनैकान्तिकत्वमिति । परिहरति शब्दे ऽपीति । शब्दे ऽपि प्रत्यभिज्ञानादानुमानिकः प्रत्ययो ऽवतिष्ठतएवेत्यसिद्धः प्रत्ययानवस्थानं हेतुरिति ।

---

* परस्मादिति का.पा. ।

† द्रव्याऽद्रव्यात्मके इति २ पु. पा. ।

‡ जन्येति का. पा. ।

गोमयादावतज्जन्ये ऽप्येष शब्दो हि दृश्यते ।
यथा कथं चिदिष्टं चेत्कार्यत्वं गोमयादिषु ॥१५९॥
तथाप्याकाशमात्रत्वं कुरुष्वेत्यत्र दृश्यते ।
वरणाऽभावमात्रत्वात्कार्यमेवेति चेन्न तत् ॥१६०॥
बौद्धानामपि नाऽभावः स्वयंसिद्धो हि जन्यते ।
मृदां देशान्तरप्राप्तिर्व्यापारफलमत्र हि ॥१६१॥
अनावृत्यात्मकं व्योम नित्यमेव व्यवस्थितम् ।
नित्यस्य करणाऽभावात्प्रयोगे ऽस्मिन्नथोच्यते ॥१६२॥

---

"प्रयोगस्य परम्"*। यत्तु करोतिशब्दादित्युक्तं तद्विकल्प्य दूषयति करोतेरिति द्वयेन। गोमयानि कुर्विति समाहारे ऽपि हि करोत्यभिधानं दृष्टमिति। शङ्कते यथेति[१५९]। कार्यत्वमात्रं प्रतिज्ञातो ऽर्थः, तच्चाऽस्त्येव गोमयादाविति विपक्षत्वाभावान्नाऽनैकान्तिकतेति। परिहरति तथापीति[१६०]।

पुनः शङ्कते वरणेति। वरणाऽभावमात्रमाकाशं न वस्त्वन्तरं, तच्चोद्धरणादिव्यापारजन्यमेवेति। निराकरोति न तदिति। कारणमाह बौद्धानामिति[१६१]। बौद्धानामिदं दर्शनं वरणाऽभावमात्रमाकाशमिति, तेषां त्वभावस्याऽकार्यत्वादस्त्येव विपक्षत्वं, वस्त्वन्तरत्वे च निर्विवादमेव विपक्षत्वमिति। किमर्थस्तर्ह्युद्धरणादिव्यापारः, अत आह अनावृतीति[१६२]। मुख्यं करोत्यभिधानं हेतुः, आकाशे तु प्रसिद्धनित्यत्वे गौणोयमतो नाऽनैकान्तिकत्वमिति चेत्, एवं तर्हि-

---

* जै. सू. अ. १ पा. १ सू. १४ ।

भ्रान्तत्वं गौणता वेति शब्दे ऽप्येवं भविष्यति ।
'प्राग्भागो यः सुराष्ट्राणां मालवानां स दक्षिणः॥ १६३॥
प्राग्भागः पुनरेतषा तेषामुत्तरतः स्थितः ।
तेन सूर्योदितेर्देशौ भिन्नावुभयवासिनाम् ॥१६४॥
दृष्टौ सवितुरेकत्वे ऽप्यतो ऽनैकान्तिको भवेत्' ।
पश्यन्त्येके च यद्देशावुदयास्तमयौ रवेः ॥१६५॥
तावत्येवाऽभिमन्यन्ते परस्तात्तन्निवासिनः ।
न च भिन्ना निरीक्ष्यन्ते तेन नाऽऽदित्यभिन्नता ॥१६६॥
मध्यान्हे सर्वपुंसां स्यादेकं चोपरि* दर्शनम् ।
यो यो गृहीतः सर्वस्मात्पुरतः सवितेक्ष्यते† ॥१६७॥

---

सिद्धो हेतुः, शब्दे ऽपि प्रत्यभिज्ञाऽवगतनित्यत्वे गौण एव करोतिप्रयोग इत्याह नित्यस्येति ।

"आदित्यवद्यौगपद्यम्"‡ । सत्त्वान्तरे च यौगपद्यादिति यदुक्तं, तदनैकान्तिकमित्याह प्राग्भाग इति[१६३] द्वयेन । इतश्चाऽस्ति नानादेशोपलम्भः सवितुरित्याह पश्यन्तीति[१६५] । यस्मिन् खलु वृक्षे पर्वते वा यावद्देशवर्त्तिनि सूर्यस्योदयमस्तं वा के चित्पश्यन्ति तद्देशवासिनो ऽन्ये ततः परस्तात्तावद्दूरे पश्यन्तीति व्यक्तं नानादेशोपलम्भनमिति । भिन्नो भिन्न एवाऽऽदित्य इति चेन्न, योग्यानुपलम्भादित्याह न चेति[१६६] । इतश्चास्ति नानादेशोपलब्धिरित्याह मध्यान्हइति[१६७] ।

---

* एकत्रोपरीति का. पा. ।

† दृश्यते इति का. पा. । ‡ जै. सू. अ. १ पा. १ सू. १९ ।

तदन्तराऽधिकात्मा च भाति तेनाऽग्रतः स्थितः ।
विप्रकृष्टान्तराणां च स्तोकदेशेऽपि दृश्यते ॥१६८॥
सिद्धाभिन्नाऽग्रदेशानां दूरदेशसमानता ।
तत्रापि विप्रकृष्टस्य सन्निध्यध्यासकारिता ॥१६९॥
देशभ्रान्तिर्भवेत्पुंसां तत्तद्देशमपश्यताम् ।
शब्दे तु किंनिमित्तैषा तत्रापि व्यापिताकृता ॥१७०॥

---

किं पुनः कारणं येनैकोऽपि सविता नानादेशेषु दृश्यते, तद्दर्शयति यो य इति । दूरस्थस्य सन्निध्यध्यासकृतो नानादेशभ्रमः । तथा हि, योऽत्र स्थितैरस्माभिर्यावदन्तरालः पर्वतादिः सवितुर्देशत्वेन गृहीतः, तद्गतैरस्माभिस्ततः परस्तात्तावदन्तराले दृश्यते, तथा तद्गतैरपि ततः परस्तात्, अतोऽवगम्यते सर्वेषामग्रतोऽतिदूरे स्थितोऽसौ भिन्नदेशस्थैः सर्वैः पुरुषैस्तत्सन्निध्यध्यासेन नानादेशेषु दृश्यत इति । तदन्तराधिकात्मेति[१६८] । पूर्वं हि पर्वतोऽस्य देशत्वेन गृहीतः, न च पर्वतस्य सवितुश्चान्तरालमवगतं, तद्गतैस्तु तयोरन्तरालं पूर्वान्तरालसमानपरिमाणमधिकं वा गम्यत इति ।

दृष्टं चान्यत्रापि दूरस्थस्यैकस्याऽपि सन्निध्यध्यासेन नानादेशदर्शनम, अतस्तत्राऽनैकान्तिकत्वं हेतोरित्याह विप्रकृष्टेति । यो ह्यादित्यापेक्षया स्तोकदेशः पर्वतादिः तत्रापि विप्रकृष्टान्तराणां पुरुषाणामत एव सिद्धभिन्नाग्रदेशानां दूरदेशसमानता दृश्यते, ये हि पर्वतस्य दशयोजनेषु स्थिताः ये च द्वादशसु ते तावन्मिथो द्वियोजनानन्तरत्वाद्विप्रकृष्टाऽन्तरालाः, तत्र दशयोजनस्थिता यावद्दूरे स्वात्मनो देशे पर्वतं पश्यन्ति द्वादशस्ववस्थिताः स्वात्मनस्तावद्दूरएव स्वात्मदेशे पश्यन्तीति ।

योयो गृहीतः सर्वस्मिन् देशे शब्दो ऽपि दृश्यते* ।
न चाऽस्यावयवाः सन्ति येन वर्त्तेत भागशः ॥१७१॥
शब्दो वर्त्ततइत्येवं तत्र सर्वात्मकश्च सः ।
व्यञ्जकध्वन्यधीनत्वात्तद्देशे तु† स गृह्यते ॥१७२॥
न च ध्वनीनां सामर्थ्यं व्याप्तुं व्योम निरन्तरम् ।
तेनाऽविच्छिन्नरूपेण नाऽसौ सर्वत्र गृह्यते ॥१७३॥

---

चोदयति तत्रेति[१६९] सपादेन । परिहरति तत्रेति[१७०] । व्यापित्वमेव कथमत्राह यो य इति[१७१] । न हि स देशो ऽस्ति यत्रोच्चरितो ऽपि शब्दो न गृह्यते, अतो देशानवच्छेदाद्विभुत्वमिति । यत्तु 'कार्त्स्न्येन चावगम्यत्वादेकदेशे घटादिवच्छब्दस्याविभुत्वमि'त्युक्तं, तत्राह न चेति । यद्यसौ भागशः प्रदेशेषु वर्त्तेत ततो न कार्त्स्न्येन गम्येत, न त्वसौ भागशः प्रदेशेषु वर्त्तते निर्भागत्वादिति । कथं तर्हि वर्त्तते, अत्राह शब्द इति[१७२] । स्वरूपेणैवाऽसौ वर्त्ततइति । तथापि कथं कार्त्स्न्येनाऽवगतिरिति, तत्राह तत्रेति । इदमेव तस्य कार्त्स्न्यं यदुक्ताविकलत्वम्, अतो व्योमादिवदवैकल्येन सर्वत्र वर्त्तमानः सर्वात्मना वृत्तो भवतीति युक्तैवैकैकत्र कार्त्स्न्याऽवगतिरिति ।

ननु सर्वगतः शब्दः किमिति सर्वव्यापितया न गृह्यते, अत आह व्यञ्जकेति । व्यञ्जकदेशे ऽस्य घटादेरिवाऽऽलोकदेशे ग्रहणमिति । ततः किमित्याह न चेति[१७३] । उपसंहरति तेनेति । ननु यद्यपि ध्वनिवशात्प्रादेशिको गृह्यते न सर्वव्यापितया, तथापि

---

* शब्दो हि विद्यते इति का. पा. ।

† देशेषु इति का. पा. ।

ध्वनीनां भिन्नदेशत्वं श्रुतिस्तत्राऽनुरुध्यते ।
अपूरितान्तरालत्वाद्विच्छेदश्चाऽवसीयते ॥१७४॥
तेषां चाऽल्पक*देशत्वाच्छब्दस्याऽविभुता†मतिः ।
गतिमद्वेगवत्त्वाभ्यां ते चाऽऽयान्ति यतो यतः ॥१७५॥
श्रोता ततस्ततः शब्दमायान्तमिव मन्यते ।
सूर्यस्य भिन्नदेशत्वं नन्वेकेन न गृह्यते ॥१७६॥
न नाम सर्वथा तावद्दृष्टा ऽस्याऽनेकदेशता ।
सविशेषणहेतुश्चेत्तथापि व्यभिचारिता ॥१७७॥
दृश्यते भिन्नदेशो ऽयमित्येको ऽपि हि बुध्यते ।
जलपात्रेषु चैकेन नाऽनेकः सवितेक्ष्यते ॥१७८॥

---

कथं देशभेदभ्रान्तिरत आह ध्वनीनामिति[१७४] । व्यापी हि शब्दो यदा भिन्नदेशैर्युगपद्भूतैर्ध्वनिभिरभिव्यज्यते तदा ऽयमपि तत्तद्देशे ऽवगम्यते, ध्वनीनां चाऽपूरिताऽन्तरालत्वाच्छब्दो ऽप्यन्तराले ऽनवगम्यमानो विच्छिन्न इव भासते, अतो युक्ता नानादेशाऽवगतिरिति।

ध्वन्यल्पदेशत्वादेव च शब्दे ऽप्यविभुत्वभ्रान्तिरित्याह तेषामिति[१७५] । यो ऽप्ययमितः शब्द आगच्छतीति प्रत्ययः सो ऽपि ध्वन्यागमननिबन्धन एव, ध्वनयो हि गतिमन्तो वेगवन्तश्च यतो निःसरन्ति ततस्ततः स शब्दमिवायान्तं मन्यते, तदाह गतिमदिति ।

चोदयति सूर्यस्येति[१७६] । परिहरति न नामेति[१७७] । यदि त्वेकेन युगपदुपलम्भादिति सविशेषणो हेतुः, तथाप्यस्त्येव व्यभिचार इत्याह सविशेषणेति । कथमित्याह दृश्यतइति[१७८] ।

---

* अल्पैकेति २ पु. पा. । † शब्दे ऽप्यविभुतेति ३ पु. पा. ।

युगपन्न च भेदस्य प्रमाणं तुल्यवेदनात् ।
आहैकेन निमित्तेन प्रतिपात्रं पृथक् पृथक् ॥१७९॥
भिन्नानि प्रतिबिम्बानि जायन्ते युगपन्मम ।
'अत्र ब्रूमो यदा तावज्जले सौरेण तेजसा ॥१८०॥
स्फुरता चाक्षुषं तेजः प्रतिस्रोतः प्रवर्त्तितम् ।
स्वदेश एव गृह्णाति सवितारमनेकधा ॥१८१॥
भिन्नमूर्ति यथा पात्रं तदा ऽस्याऽनेकता कुतः' ।
ईषन्निमीलिताऽङ्गुल्या यथा चक्षुषि दृश्यते ॥१८२॥
पृथगेको ऽपि भिन्नत्वाच्चक्षुर्वृत्तेस्तथैव नः ।
'अन्ये तु चोदयन्त्यत्र प्रतिबिम्बोदयैषिणः ॥१८३॥

---

एको ऽपि हि इतस्ततो गतस्तत्र तत्राऽऽदित्यं पश्यन्नेवमवगच्छति, नूनमयं नानादेशस्थैस्तत्र तत्र दृश्यतइति ।

अथ पुनरिन्द्रियेण युगपदेकेन पुरुषेण नानादेशोपलम्भादिति हेतुः, अत्राह जलेति युगप[१७९]दन्तेन। ननु नाऽत्र सविता एको दृश्यत, किं तु प्रतिपात्रं भिन्नान्येव प्रतिबिम्बानि, अत आह न चेति । न हि बिम्बात् प्रतिबिम्बस्य भेदो ऽस्ति प्रत्यभिज्ञानात्, नतरां प्रतिपात्रं भेद इति शङ्कां विवृणोति आहेति । केन चिन्मुखबिम्बसन्निधानादिना निष्पन्नानि भिन्नान्येव पृथक् पृथक् गृह्यन्तइति। परिहरति अत्रेति[१८०] द्वयेन । एवमप्युपपत्तौ सत्यां नाऽनेकप्रतिबिम्बाख्यवस्त्वन्तरपरिकल्पनायां प्रमाणमस्ति, यथा पात्रमिति, यावन्ति पात्राणि तावद्भेदमित्यर्थः ।

स एव चेत्प्रतीयेत कस्मान्नोपरि दृश्यते ।
कूपादिषु कुतोऽधस्तात् प्रतिबिम्बेक्षणं भवेत्* ॥१८४॥
प्राङ्मुखो दर्पणं पश्यन् स्याच्चेत्प्रत्यङ्मुखः कथम्' ।
तत्रैव बोधयेदर्थं बहिर्यातं यदिन्द्रियम् ॥१८५
तत एतद्भवेदेवं शरीरे तत्तु बोधकम् ।
'अप्सूर्य†दर्शिनां नित्यं चक्षुर्द्वेधा प्रवर्त्तते ॥१८६॥
एकमूर्ध्वमधस्ताच्च तत्रोर्ध्वांश‡प्रकाशितम् ।
अधिष्ठानाऽनृजुस्थत्वान्नाऽऽत्मा सूर्यं प्रपद्यते' ॥१८७॥
पारम्पर्यार्ऽपितं सन्तमवाग्वृत्त्या तु बुध्यते ।
ऊर्ध्ववृत्तेस्तदेकत्वादवागिव च मन्यते ॥१८८॥

---

इत्थं च नेत्रवृत्तिभेदादेकस्यापि चन्द्रादेरनेकधा दर्शनमित्याह ईषदिति[१८२] । प्रतिबिम्बवादिनां चोद्यमुपन्यस्यति अन्ये त्विति[१८३] द्वयेन । परिहरति तत्रैवेति[१८५] । देहप्रदेशे पुंसो ज्ञानम्, अतो बहिर्गतमपि चाक्षुषं तेजो देह एव बोधयति न बहिर्देहे ऽवबुद्ध्यमानो देहाभिमुख्येनैव चाक्षुषार्थं बुद्ध्यते नान्यथेति । ततः किमित्याह अप्सूर्येति[१८६] सार्द्धेन । एकमेव चक्षुरुत्कण्ठितलम्बमानसर्पवद् द्वेधा वर्त्तते अधस्तादूर्ध्वं च, तत्रोर्द्ध्ववृत्तिप्रकाशितदेहानार्जवान्नात्मा बुध्यतइति ।

कस्मात् तर्हि बुद्ध्यते, अत आह पारम्पर्येति[१८८] । ऊर्ध्ववृत्तिरधोवृत्त्यै समर्पयति सा चात्मनइति । कः पुनरूर्ध्ववृत्तेरधोवृत्त्या सम्बन्धः, येन समर्पयति, अत आह ऊर्ध्वेति । एकस्यैव हि ताव-

---

* प्रतिबिम्बाद्विनेक्षणमिति १ पु. पा. ।

† अमूर्येति १ पु. पा. । ‡ ऊर्ध्वांशमिति का. पा.

अधस्तादेव तेनाऽर्कः साऽन्तरालः प्रतीयते ।
एवं प्राग्भूतया वृत्त्या प्रत्यग्वृत्तिसमर्पितम् ॥१८९॥
बुध्यमानो मुखं भ्रान्त्या प्रत्यगित्यवगच्छति ।
अनेकदेशवृत्तौ वा सत्यपि प्रतिबिम्बके ॥१९०॥

---

शौ, तेनास्योर्द्ध्ववृत्तेस्तया वृत्त्या धर्मिरूपेणैक्यमिति अधोवृत्त्या ऽवबुद्ध्यमानस्तदानुगुण्यादवागिव सूर्यं मन्यतइति । उपसंहरति अधस्तादिति[१८९] । सान्तराल एवोर्ध्ववृत्त्या समर्पित इति । तथावगतिरप्युपपन्नैवेत्याह सान्तराल इति ।

यत्तु प्राङ्मुखो दर्पणं पश्यन् कथं प्रत्यङ्मुखो दृश्यतइत्युक्तं, तत्राह एवमिति । तत्रापि प्रत्यग्वृत्तिप्रकाशितं मुखम् अधिष्ठानाऽनार्जवान्नात्मा प्रतिपद्यते,किं तु प्रत्यग्वृत्तिः प्राग्वृत्त्यै समर्पयति, तथा च समर्पितः प्राग्वृत्त्या बुद्ध्यमानस्तदानुगुण्येन प्रत्यगिति बुद्ध्यते। नन्वत्र दर्पणस्थमेव मुखं गृह्यते न जलपात्रेष्विवाधःसान्तरालं, तत्कस्य हेतोरत्रापि सान्तरालमेव मुखं प्रत्यग्वृत्त्या प्रकाशितं प्राग्वृत्त्यै समर्पितं तथैव ग्रहीतव्यम्,उच्यते, वस्तुस्वभावस्याऽपर्यनुयोज्यत्वाददोषः। तैजसेषु हि दर्पणादिषु तद्गतमेव मुखं गृह्यते, जले तु सान्तरालमिति किमत्र पृच्छ्यतइति ।

उपेत्यापि प्रतिबिम्बं तद्देशभेदं च नानात्वं नास्ति प्रत्यभिज्ञानादित्याह अनेकेति[१९०] ।

भाष्यकारेण "दूरत्वादादित्यस्य देशो नाऽवधार्यते, अतो व्यामोहाद्देशभेदावगतिरेवं शब्दे ऽपि व्यामोहादनवधारणं देशस्य"त्युक्त्वा व्यामोहत्वे कारणं दर्शितं, "यदि श्रोत्रं संयोगविभागदेशमागत्य शब्दं गृह्णीयात् तेनैकदेशता कदा चिदवगम्येत, न तु तत्संयो-

समानबुद्धिगम्यत्वान्नानात्वं नैव विद्यते ।
वक्तृवक्त्रप्रदेशानां भिन्नत्वाद्भिन्नदेशता ॥१९१॥
श्रोत्राऽऽगमनपक्षे स्यात्तद्देशे त्वेकदेशता ।
अधिष्ठानाऽबहिर्वृत्तेरन्यस्मिन् सत्यपीन्द्रिये ॥१९२॥
तद्देशाः कर्णशष्कुल्या गृह्येरन् गमने सति ।
इयं तु वक्त्रनेकत्वे श्रोत्रैकत्वे* च कल्पना ॥१९३॥

---

गदेशमागच्छाति, प्रत्यक्षा हि कर्णशष्कुली तद्देशस्था गृह्यत"† इति, तद्याचष्टे वक्तृवक्त्रप्रदेशानामिति[१९१] । श्रोत्रदेशएव यदा शब्दः श्रूयते तदा तस्यैकत्वादेकस्मिन्नेव देशे परमार्थतः शब्दः श्रूयते, तं तु देशमनवधारयन्तो वक्तृदेशएव शब्दं मन्वानास्तेषां भेदाद्भिन्नदेशतां भ्रान्त्या मन्यन्तइति ।

ननु श्रोत्राऽनागमे यत्कारणं प्रत्यक्षादिकर्णशष्कुली तद्देशस्था गृह्यतइति, तदयुक्तं, न हि तत्स्वरूपं श्रोत्रं किं तु तदवच्छिन्नो नभोभागः, अत आह अधिष्ठानेति[१९२] । किं पुनर्भ्रान्तित्वप्रतिपादनस्य प्रयोजनम्, एकत्वसमर्थनमेव, अनेकदेशसम्बन्धो ह्येकस्याऽनुपपन्नः स्यादेकदेशस्थस्यैव तु भ्रान्त्या ऽनेकदेशत्वाऽवगतिः एकस्याप्यादित्यस्येव नाऽनुपपन्नेति ।

तदिदमाक्षिपति इयमिति[१९३] । येयं श्रोत्राऽनागमेन एकदेशनानादेशप्रतीत्योः पारमार्थिकभ्रान्तित्वकल्पना सा वक्त्रनेकत्वे श्रोत्रैकत्वे च सम्भवति, यदा त्वेको वक्ता बहवश्च श्रोतारः तदा श्रोत्राऽनागमादेव विपर्ययः स्यादेकदेशप्रतीतिरेव भ्रान्तिः नानादेशप्र-

---

* ज्ञानैकत्वे इति ३ पु. पा. ।

† शा. भा. पृ. २८ प. २ ।

वक्तर्येकत्र भिन्नेषु श्रोतृषु स्याद्विपर्ययः ।
तत्र हि श्रोत्रदेशानां भिन्नत्वाद्भिन्नदेशता ॥१९४॥
तदागमे तु वक्त्रैक्यादेकदेशत्वसंभवः ।
ध्वन्यागत्या यदि भ्रान्तिरितरत्रापि सा समा ॥१९५॥
भिन्नव्यञ्जकताल्वादिदेशभेदाद्भविष्यति ।
सूत्रेण युगपद्भावः श्रोत्रैकत्वादुदाहृतः ॥१९६॥

---

तीतिस्तु पारमार्थिकी स्यादिति । कथमित्याह तत्र हीति[१९४] । बहुभिः श्रोतृभिः स्वश्रोत्रदेशेषु शब्दः श्रूयमाणो भिन्नदेश एव परमार्थतः स्यात्, श्रोत्रस्य हि वक्तृदेशं प्रत्यागमे सति तस्यैक्यादेकदेशता स्यात्, न चासावस्ति, तेनैकदेशप्रतीतिरेव भ्रान्तिः स्यादिति ।

सत्यमेकदेशाऽवगतिरपि भ्रान्तिरेव, सर्वगतो हि शब्दो न प्रादेशिकः, स च प्रादेशिकैर्ध्वनिभिरेकस्माद्वक्तृप्रदेशादागच्छद्भिरभिव्यज्यमानस्तद्देशइव भ्रान्त्या ऽवगम्यते इति चेत्, तथा सति इतरत्रापि वक्तृबहुत्वे तुल्यैवैषा ध्वनिनिमित्ता भ्रान्तिः,भिन्ना हि ये ऽभिव्यञ्जका ध्वनयः तेषां ताल्वादिदेशभेदाच्छब्दो ऽपि भिन्नदेश इवाऽवगम्यतइति शक्यं वक्तुं, किं श्रोत्राऽनागमेनापन्यासेनेत्याह ध्वनीति[१९५] । समाधत्ते सूत्रेणेति[१९६] । सत्यं नाऽनैकदेशप्रतीतिः, द्वे अपि भ्रान्ती, तथा त्वेकदेशप्रतीतेर्भ्रान्तित्वमप्रस्तुतत्वान्नोपपद्यते, सूत्रकारेण हि बहुषु वक्तृषु एकस्य श्रोतुर्युगपज्ज्ञानादेशोपलब्धिः पूर्वपक्षहेतुत्वेनोपन्यस्ता, तदनुसारेण भाष्यकारो नानादेशप्रतीतेरेव यदि श्रोत्रमित्यादिना भ्रान्तित्वमुपपादयति ।

नन्वेवमपि ध्वन्यागतिरेव वक्तव्या किं श्रोत्रानागमेन, उच्यते, ध्वन्यागतिर्हि भ्रान्तौ कारणं न तु भ्रान्तित्वे प्रमाणं, यैभवं प्रमाण-

अतस्तदनुसारेण यद्यपीत्यादिकीर्तनम् ।
देशभेदेन भिन्नत्वमित्येतच्चाऽऽनुमानिकम् ॥१९७॥
प्रत्यक्षस्तु स एवेति प्रत्ययस्तेन बाधकः ।
'पर्यायेण यथा चैको भिन्नान् देशान् व्रजन्नपि॥१९८॥
देवदत्तो न भिद्येत तथा शब्दो न भिद्यते ।
ज्ञातैकत्वो* यथैवासौ दृश्यमानः पुनः पुनः ॥१९९॥
न भिन्नः कालभेदेन तथा शब्दो न देशतः' ।
पर्यायादविरोधश्चेद् व्यापित्वादपि दृश्यताम् ॥२००॥

---

मिति चेन्न, तस्य परेषामसिद्धेस्ततस्तत्प्रमाणत्वेन श्रोत्राऽनागतिरुच्यते, न हि स्वदेशस्थं श्रोत्रं शक्नोति भिन्नेषु देशेषु शब्दं ग्रहीतुम्, अतो भ्रान्तमेव नानादेशत्वं न वास्तवं, येन शब्दभेदः स्यात्, एकस्मिन् वक्तर्येकदेशावगतेरपि भ्रान्तित्वे श्रोत्राऽनागतिरेव प्रमाणं, प्रस्तुतत्वात्त्वनेकदेशाऽवगतेरेव भ्रान्तित्वं भाष्ये वर्णितमिति ।

नन्विदं भवतु भ्रान्तं, श्रोतृबहुत्वे तु परमार्थत एव देशभेदात् शब्दस्वरूपमपि घटपटवद्भिद्येत, आकाशदेशत्वे ऽपि तत्प्रदेशभेदाच्चाऽनुपपन्ना नानादेशता, ऽत आह भाष्यकारः, "अपि चैकरूपत्वे सती"†त्यादि, तद् व्याचष्टे देशभेदेनेति[१९७]। सत्यपि देशभेदे प्रत्यक्षप्रत्यभिज्ञयैकरूप्याऽवगमान्न भेदाऽनुमानं सम्भवतीति । कथमेकस्यानेकैर्देशैः सम्बन्ध इति चेन्न, अन्यत्रापि दर्शनादित्याह पर्यायेणेति[१९८] द्वयेन ।

अत्र शङ्कते पर्यायादिति[२००] । न हि स्वतन्त्रस्य कस्य चिदे-

---

* ज्ञानैकत्वे इति ३ पु. पा. ।  † शा. भा. पृ. २८ प. ९ ।

दृष्टसिद्धौ* हि यो धर्मः सर्वथा सोऽभ्युपेयते ।
'वर्णान्तरविकार्यत्वादिति योक्ता विनाशिता ॥२०१॥
उक्ते च हेतुसिद्ध्यर्थं सादृश्यस्मरणे पुनः ।
तत्र स्मृतेरासिद्धत्वं' न ह्येवं पाणिनेर्वचः ॥२०२॥

---

कस्य युगपदनेकदेशसम्बन्धः सम्भवति, सामान्यस्य तु गोत्वादे-र्व्यक्तिपरतन्त्रस्य स्यादपि, प्रत्यभिज्ञा तु ज्वालादाविव सादृश्याद-प्युपपद्यतइत्युक्तमिति। परिहरति व्यापित्वादिति । विच्छिन्ना-ऽनेकदेशसम्बन्धो हि एकस्य न स्याद्, व्यापिनस्तु सर्वत्र सतो गगन-वन्नाऽनुपपत्तिरिति ।

किं पुनः प्रमाणं व्यापित्वे, तद्दर्शयति दृष्टेति[२०१] । यदेतद्युग-पदनेकदेशसम्बन्धित्वं यच्च प्रत्यभिज्ञाऽवगतमेकत्वं तदुभयसिद्ध्यर्थं व्यापित्वमुपेयते, तेनोपपन्नमनेकदेशत्वमेकत्वे ऽपीति । न प्रत्यभि-ज्ञाया भ्रान्तित्वं युक्तं, प्रत्युताऽनित्यत्वपक्षएव बहुभिर्युगपच्छ्रवणमे-कस्य शब्दस्याऽनुपपन्नं, न ह्यप्राप्यग्रहणं सम्भवति, सन्निकृष्टविप्र-कृष्टयोर्युगपद्ग्रहणप्रसङ्गात्,अतः श्रोत्रप्राप्तस्यैव ग्रहणं वक्तव्यं, न चै-कवक्त्रुच्चारितस्यैकस्य शब्दस्य युगपदनेकश्रोत्रप्राप्तिः सम्भवति, स-न्तानपक्षे ऽपि प्रदेशान्तरे कार्यारम्भणं प्रमाणविरुद्धमेव, रूपादि-ष्वदर्शनात्, तद्वरं घटादिष्वदृष्टामप्यभिव्यञ्जकव्यवस्थामाश्रित्य नित्यत्वाङ्गीकरणम्,एवं हि प्रत्यभिज्ञा समर्थिता भवति । तस्मात्स-र्वगतो नित्यः शब्दो ध्वनिवशात्क चित्कदा चिदभिव्यज्यतइति यु-क्तमिति ।

यत्तु यकारादिरूपेण विक्रियमाणत्वादिकारादेरनित्यत्वं वि-कारसिद्ध्यर्थं च ये स्मृतिसादृश्ये उक्ते तत्र स्मृतिस्तावदसिद्धेत्याह वर्णान्तरेति सपादेन । कथमसिद्धिरत्राह न ह्येवमिति[२०२] ।

इकारपरिणामेन यकारः क्रियतामिति ।
सिद्धे शब्दार्थसम्बन्धे तच्छास्त्रं हि प्रवर्त्तते ॥२०३॥
प्रयोगनियमार्थाय न चैवं सिद्धता भवेत् ।
'भिन्नप्रसिद्धयोस्तेन दधि दध्येति शब्दयोः॥२०४॥
आचक्षाणेन साधुत्वं दधीत्यौत्सर्गिकः कृतः ।
अन्वाख्यातुं स्वरूपेण दध्यशब्दं च वेदितुम् ॥२०५॥
स्वशास्त्रे लघुबोधार्थमेकत्वमिव दर्शितम्' ।
तत्राचि परतः सिद्धं* दध्यशब्दं निवर्त्तयन् ॥२०६॥

---

इको यणचीत्यस्य नाऽयमर्थ इति । किमिति नाऽयमर्थो, ऽत आह सिद्धइति[२०३] ।

एवं शास्त्रादावुक्तं सिद्धे शब्दार्थसम्बन्धे नियमार्थं व्याकरणमिति, प्रकृति विकारभावं च ब्रुवता दध्यपदमसिद्धमेव साधितं स्यात्, अतो नायमर्थ इति तद्दर्शनार्थं तत्पातनिकां तावत्करोति भिन्नेति[२०४] सार्द्धेन । स्वतन्त्रसिद्धयोरेव दधिदध्यपदयोः साधुत्वमाचक्षाणेन दधिपदं तावदुत्सर्गरूपेण नामपारायणे पठितं, किमर्थं, तत्स्वरूपस्य तदपवादरूपेणाऽचि परतः संहितायामेव लोकसिद्धस्य दध्यशब्दस्य साधुत्वमन्वाख्यातुमिति ।

नन्वेवं स्वातन्त्र्ये दध्यपदमपि स्वरूपेणैव पठितव्यम, अपवादरूपेण तु तद्वचनाद्दधिपदस्याऽयमेकदेशविकारो न पदान्तरमत आह स्वशास्त्रइति[२०६] । स्वरूपेण हि सर्वेषामिगन्तानां यणन्तानां पाठे गौरवं स्यादव्यवस्थया च सर्वेषां साधुत्वं स्यात्,अतो लाघवार्थमचि परतः संहितायामेव यणन्तानां साधुत्वमन्यत्र चेगन्तानामिति व्यवस्थार्थं चैकत्वमिव दर्शितमिति ।

---

* तत्रापि परतः सिद्धमिति ३ पु. । परतासिद्धमिति २ पु. पा. ।

दधीति शास्त्रतः प्राप्तः सोऽयं तेनैव वार्यते ।
इक्प्रयोगप्रसङ्गे तु यण् साधुरिति गम्यते ॥२०७॥
परमार्थस्तु नैवाऽस्मिन् विकारो ऽभूत्कदा चन ।
केवलं यत्तु सादृश्यं तदनैकान्तिकीकृतम् ॥२०८॥
कुन्दे दध्यविकारे ऽपि तत्सादृश्यं हि दृश्यते ।
नास्ति सर्वात्मना तच्चेच्छब्दे ऽपि स्थानमात्रकम्॥२०९
तेनैतयोरसिद्धत्वान्मूलहेतोरसिद्धता ।
कारणाऽनुविधायित्वं यच्चाऽल्पत्वमहत्त्वयोः ॥२१०॥
तदसिद्धं, न वर्णोहि वर्धते न पदं क्व चित् ।
वर्णान्तरजनौ तावत्तत्पदत्वं विहन्यते ॥२११॥

---

सूत्रतात्पर्यं दर्शयति तत्रेति । तेनैव शास्त्रेणाऽपोद्यतइति । अपवादस्वरूपं सौत्रं दर्शयति इक्प्रयोगेति[२०७] । परमार्थतस्तु नास्त्येव विकार इत्याह परमार्थ इति[२०८] । स्मृत्यभावे च केवलं सादृश्यमवशिष्यते, तच्च भाष्यकारेणाऽनैकान्तिकीकृतमित्याह केवलमिति ।

ननु दधिकुन्दयोर्न सर्वात्मना सादृश्यं, तत्कथमनैकान्तिकत्वम्,एवं तर्ह्यसिद्धो हेतुः, इकारयकारयोः सर्वात्मना सादृश्याऽभावादित्याह नास्तीति[२०९] । यदा च स्मृतिसादृश्ययोरसिद्धिस्तदा तदधीनसिद्धेर्मूलेहतोः प्रकृतिविकारभावस्याप्यसिद्धिरित्याह तेनेति[२१०] ।

अपदं हि भवेदेतद् यदि वा स्यात् पदान्तरम् ।
वर्णो ऽनवयवत्वात् तु वृद्धिह्रासौ न यच्छति ॥२१२॥
व्योमादिवदतो ऽसिद्धा वृद्धिरस्य स्वरूपतः ।
अथ ताद्रूप्यविज्ञानं हेतुरित्यभिधीयते ॥ ११३ ॥
तथापि व्यभिचारित्वं शब्दत्वे ऽपि हि तन्मतिः ।
व्यक्त्यल्पत्वमहत्त्वे च यद् यथा ऽनुविधीयते॥२१४॥
तथैवाऽनुविधानार्थं† ध्वन्यल्पत्वमहत्त्वयोः ।
'व्यङ्ग्यानां चैतदस्तीति लोके ऽप्यैकान्तिकं न तत् २१५
दर्पणाऽल्पमहत्त्वे ऽपि दृश्यते ऽनुपतन्मुखम् ।
न स्यादव्यङ्ग्यता तस्य तत्क्रियाजन्यता ऽपि वा'॥२१६॥

---

वृद्धिश्च कर्तृभूम्ना ऽस्ये*त्यस्यासिद्धिकथनार्थं सूत्रं नादवृद्धिपरेति† । तद्व्याचष्टे कारणेति । कथं पदस्याऽवृद्धिसिद्धिरित्यत आह वर्ण इति[२११]। अथ विहतैं तत्पदत्वे किं तद्भवति, अत्राह अपदमिति[२१२]। वर्णस्याऽवृद्धिं प्रयोगेण दर्शयति वर्ण इति। मा भूद्वस्तुतो वृद्धिः, अस्ति तावद् वृद्धिज्ञानं, तन्मात्रं चात्र हेतुः, ततो ऽनैकान्तिकत्वमित्याह अथेति[२१३] । तदेव विवृणोति व्यक्तीति[२१४]। इतश्चानैकान्तिकत्वमित्याह व्यङ्ग्यानामिति[२१५] सार्द्धेन।

---

* जै. सू. अ. १ पा. १ सू ११ ।
† जै सू. अ. १ पा. १ सू. १७ ।

न चाऽस्योच्चारणादन्या विद्यते जनिका क्रिया ।
यथा महत्यां खातायां मृदि व्योम्नि महत्त्वधीः ॥२१७॥
अल्पायामल्पधीरेवमत्यन्ताऽकृतके सति ।
तेनाऽत्रैवं परोपाधिः शब्दवृद्धौ मतिभ्रमः ॥२१८॥
न च स्थूलत्वसूक्ष्मत्वे लक्ष्येते शब्दवृत्तिनी* ।
बुद्धितीव्रत्वमन्दत्वे महत्त्वाऽल्पत्वकल्पना ॥२१९॥
सा च पट्वी† भवत्येव महातेजःप्रकाशिते ।
मन्दप्रकाशिते मन्दा घटादावपि सर्वदा ॥ २२० ॥

---

तत्क्रिया, दर्पणाऽवेक्षणक्रियेति ।

नन्वेवमुच्चारणक्रियाजन्यतैव शब्दस्य न स्यात, क्रियान्तरजन्यता तु मुखादिवत्किं न भवति, अत्राह न चेति[२१७] । किं चात्यन्ताऽकृतके ऽपि व्योमन्यस्त्येव व्यञ्जकाऽनुविधायिनी महत्त्वाऽल्पत्वबुद्धिरित्याह यथेति । व्योमवद् व्यञ्जकोपाधिकृतो वृद्धिभ्रम इत्याह तेनेति[२१८] । किं च वृद्धिरपि शब्दवृद्धौ नास्त्येवेत्याह न चेति[२१९]। ननु बहुभिरुच्चार्यमाणे ऽस्त्येव वृद्धिप्रतीतिरत्राह बुद्धीति । वक्तृबहुत्वे ऽल्पत्वे च बुद्धेस्तीव्रता मन्दता च भवतीति । तीव्रता तावत्साधारणाऽसाधारणबहुतरधर्माऽवगतिः, तद्विपर्यये मन्दता, तावता च बहुत्वाऽल्पत्वप्रतीतिर्भ्रम इति । तीव्रमन्दता च बुद्धेर्व्यञ्जकवशादपि दृष्टेति न तया शब्दस्य कृतकता सिद्ध्यतीत्याह सा चेति[२२०]।

---

* वर्तिनी इति ३ पु. पा. ।　　† बह्वीति २ पु. पा. ।

एवं दीर्घादयः सर्वे ध्वनिधर्मा इति स्थितम् ।
'नादो वायुगुण*स्तद्वान् वायुर्वा यदि कल्प्यते॥२२१॥
वर्णानां श्रोत्रगम्यत्वान्न च ये श्रोत्रगोचराः ।
तत्राऽवर्णात्मकः शब्दः शङ्खादेः श्रूयते कथम्'॥२२२॥
ध्वनीनां श्रोत्रगम्यत्वं तस्मात्केचित् प्रचक्षते ।
मारुतप्रेरितास्ते च कुर्वन्ति श्रोत्रसंस्कृतिम् ॥ २२३ ॥
वर्णव्यक्तौ च दृष्टत्वात्तेषां नाऽदृष्टकल्पना ।
अन्ये तु वर्णयन्त्यत्र पूर्वोक्तध्वनिवादिनः ॥२२४॥

---

ननु नित्यस्य सर्वगतस्य च कथं दीर्घादिविभागस्तत्राह एवमिति[221] । स्फोटे स्थितमिति ।

भाष्यकारेण हि वायवीयाः संयोगविभागाः शब्दमभिव्यञ्जयन्तो नादशब्दवाच्या इत्युक्तं, तदाक्षिपति नाद इति सार्द्धेन । यदि वायवीयाः संयोगविभागाः संयोगविभागविशिष्टो वा वायुरेव नादः, न तु शब्दविशेषः, ततो वर्णाऽतिरिक्तस्य नादात्मकस्य शब्दस्याऽभावाद् वर्णानामेव श्रौत्रता स्यान्न नादस्य, वायोरश्रावणत्वात् , ततश्च शङ्खादिनादानां श्रवणं न स्यादिति । परिहरति ध्वनीनामिति[223]।

नन्वेवं ध्वनीनां शब्दाऽभिव्यञ्जकत्वमिति सिद्धान्तोऽपि हीयेत, वायवोऽभिव्यञ्जकास्ते च न ध्वनयो, ऽत्राह मारुतेति । न वायवोऽभिव्यञ्जकाः, किं तु वायुगुणभूता ध्वन्याख्याः शब्दा वायुना सह ताल्वादिभिः प्रेरिताः श्रोत्रं संस्कुर्वन्तः शब्दस्य व्यञ्जका इति ।

ननु वर्णोच्चारणवेलायां ते न श्रूयन्ते, तत्कथं तत्रैषामभिव्यञ्जकत्वम्, अत्राह वर्णेति[224] । अस्त्येव वर्णोच्चारणेऽपि ध्वन्युपलब्धिः

---

* नादा वायुगुणा इति २ पु. पा. ।

मरुतामत्र नानात्वाद्घोषश्रुत्युपपादनम् ।
तत्र ताल्वादिसंयोगविभागैः प्रेरिताः स्फुटम् ॥२२५॥
व्यञ्जन्ति वर्णमन्ये तु शब्दत्वं सर्ववर्णभाक् ।
वर्णसर्वगतत्वात्तु नाऽऽपद्येत निराश्रयम् ॥ २२६ ॥
न च पर्यनुयोगः स्यात् क्व वर्णे व्यक्तिरित्ययम् ।
एतएव च ते पूर्वमुक्ता बोधाऽनुवर्त्तिनः ॥ २२७ ॥

---

सर्वजनीना, तथा च दूरादधीयानेषु वर्णानशृण्वन्तो ऽपि ध्वनिमात्रं शृण्वन्ति, ते च ताल्वादिसंयोगविशेषलाभे वर्णान् व्यञ्जन्ति, स्वयं चोपलभ्यन्ते, शङ्खभेर्यादिध्वनयस्तु केवलं स्वयमेवोपलभ्यन्ते, श्रोत्रेषु च ध्वनिषु तद्विशेषवशादेव द्रुतादिभेदो ऽपि सुकर इति ।

भाष्योक्तवायवीयध्वनिवादिनस्तु ध्वन्याख्यशब्दाऽभावे ऽपि वायुनानात्वादेव शङ्खादिघोषश्रवणमुपपादयन्ति, इत्याह अन्ये त्विति । तदेव दर्शयति तत्रेति[२२५] । नन्वनाश्रया जातिः कथं व्यज्यते, तत्राह वर्णेति[२२६] । न च वाच्यं, शङ्खादिभिर्व्यज्यमानं शब्दत्वं कस्मिन्वर्णे व्यज्यतइति, सर्ववर्णानां नित्यत्वात्सर्वगतत्वाच्चेत्याह न चेति[२२७] ।

नन्वेवं ध्वनीनामश्रौत्रत्वात्कथमेकस्मिन् वर्णे द्रुतादिवृत्तिभेदाऽवसायो, ऽत्राह एतइति । अश्रौत्रैरपि तैर्यथाबोधमनुवर्तयद्भिर्वृत्तिभेदसिद्धिः तथा स्फोटवादे दर्शितमिति । तत्पुनरिदं नाऽतीव चित्तमनुरञ्जयति, कथं हि वीणापणवादिध्वनिषु विलक्षणेषु श्रूयमाणेषु शब्दत्वमेवैकं श्रूयतइति शक्यं वक्तुं, व्यञ्जकभेदात्तु तद्भेदसमर्थने गकारे उकारादिभेदो ऽपि तथा स्यात्, तत्र वर्णानामप्यह्नवः स्यात्,

येषां* प्रचयनानात्वाद्वृत्तिभेदः प्रतीयते ।
यद्वा जात्यन्तरं सन्तु सर्वथा कार्यहेतुकम् ॥ २२८ ॥
त्वत्पक्षवद् ध्वनीनां नः शक्तिभेदप्रकल्पनम् ।
दर्शनस्य परार्थत्वं यदि नाम प्रतीयते ॥ २२९ ॥

---

अथ तेषां भेदप्रतीतौ बाधकाभावान्नौपाधिकत्वं, तुल्यं शङ्खादिघोषेष्वपत्यित्राह यद्वेति[२२८] ।

भवतु वर्णत्ववद्ध्वनित्वं नाम शब्दत्वाऽवान्तरभेदः, तद्भेदाश्च गकारादिवत् पारमार्थिकाः सन्तु, तेषां तु श्रौत्रत्वात्तत्संपर्कवशादेव वर्णेषु साऽनुनासिकनिरनुनासिकोदात्ताऽनुदात्तादिभेदाऽवभासोऽपि सुकरोऽस्तु, न कश्चिद्दोषः सर्वथा शब्दाऽनित्यत्वपक्षे, तद्योयं कार्यभेदः क चिद्वर्णोपलब्धिः क चिच्च नादमात्रोपलब्धिः तद्बलेन ध्वनीनां शक्तिभेदकल्पने के चिद् वर्णान्व्यञ्जन्ति के चिन्नेति। ध्वनयस्तु वायवो वा शब्दजातिभेदो वा नाऽत्राभिनिवेशः । शब्दपक्षे च तस्याऽमूर्त्तस्य वृद्ध्यसम्भवान्नादवृद्धीति सूत्रेण नादशब्देन नादगुणका वायवो लक्ष्यन्ते तल्लक्षणत्वव्याख्यानार्थमेवेदं भाष्यं "संयोगविभागाश्च नादशब्दवाच्या"† इति ।

अत्र सिद्धान्तसूत्रम्। नित्यस्तु स्याद्दर्शनस्य परार्थत्वादिति‡। तदिदं नैयायिका दूषयन्ति, शब्दो ह्यत्र नित्यतया पक्षीक्रियते, न च तद्धर्मः पारार्थ्यं, दर्शनधर्मत्वात्, अतोऽसिद्धोऽयं हेतुः, स्वरूपेण सिद्धस्यापि पक्षधर्मतया हेतुत्वात्, तद्धर्मत्वाऽसिद्धौ असिद्धता भवत्येव, तदाह दर्शनस्येति[२२९] । यदि परम्परया सम्बन्धेनापि पक्षधर्मता परार्थदर्शनत्वात् इति वा बहुव्रीहिणा पक्षधर्मत्वमेव स-

---

* तेषामिति २ पु. पा. ।

† शा. भा. पृ. २९ प. ३ । ‡ जै. सू. अ. १ पा. १ सू. १८ ।

शब्दस्य किमिहाऽऽयातं येन नित्यो ऽभ्युपेयते ।
अनित्येष्वपि दृष्टत्वाद्दीपज्वालाघटादिषु ॥ २३० ॥
परार्थदर्शनत्वस्य धर्मत्वे ऽपि न हेतुता ।
विना साधर्म्यदृष्टान्ताद्विरुद्धो* वा भवेदयम् ॥२३१॥
नित्यानामप्रयोगित्वमणूनामपि दृश्यते ।
अर्थप्रत्यायनं चैष जन्मनैव करिष्यति ॥ २३२ ॥
विना ऽपि स्थास्नुरूपेण संयोगादीन् यथा क्रिया ।
पूर्वाऽऽलोचनमेतस्य भूतस्मृत्या च कर्मवत् ॥ २३३ ॥
तस्मान्न विनियोज्यत्वात् प्रागस्तित्वं घटादिवत् ।
प्रकाशितं यथा चार्थं तेजसा केन चित्पुरा ॥ २३४ ॥

---

ऽभवतीति उच्यते तथाप्यनैकान्तिकत्वमित्याह अनित्येष्विति[२३०]। न तावदत्र दर्शनपदाऽभिधेयोच्चारणपारार्थ्यं हेतुः, असाधारणत्वात्, किं तु पारार्थ्यप्रयोगमात्रं, तच्चाऽनैकान्तिकमिति । यद्वा घटादिष्वनित्येष्वेव दृष्टत्वान्नित्येषु च परमाणुष्वदृष्टत्वाद्विरुद्धो ऽयं हेतुरित्याह विनेति[२३१] ।

नन्वस्थायी सन्निर्व्यापारः कथमर्थं प्रत्याययति, अत आह अर्थेति[२३२] । ननु पूर्वदृष्टशक्त्यालोचनेनैव कारणं कार्यसिद्धौ व्यापार्यते, तस्याऽनालोचितशक्तेः कथं व्यापारः? अत आह पूर्वेति[२३३]। यथा हि क्रियान्तरस्य घटान्तरस्य वा सामर्थ्यमालोच्याऽभिनवक्रियानिर्माणम्, एवमिहापीति । उपसंहरति तस्मादिति[२३४]। ना-

---

* विरोध इति २ पु. पा. ।

न वा* भूयो ऽपि बुध्यन्ते शब्दादपि तथा भवेत् ।
दर्शनस्य परार्थत्वे यदसिद्ध्यादि चोद्यते ॥ २३५ ॥
तत्काष्ठदहनो वह्निरब्दाहार्थं नियुज्यते ।
अनुमानप्रयोगे हि वक्तुमित्यादि† युज्यते ॥२३६॥
अर्थापत्तिरियं चोक्ता पक्षधर्मादिवर्जिता ।
यदि नाशिनि नित्ये वा विनाशिन्येव वा भवेत् ॥२३७॥
शब्दे वाचकसामर्थ्यं, ततो दूषणमुच्यताम् ॥
फलवद् व्यवहाराऽङ्गभूताऽर्थप्रत्ययाऽङ्गता ॥ २३८ ॥
निष्फलत्वेन शब्दस्य योग्यत्वादवधार्यते ।
परीक्ष्यमाण‡स्तेनास्य युक्त्या नित्यविनाशयोः ॥२३९॥

---

ऽगृहीतसम्बन्धस्य ज्ञापकत्वं धूमादावदर्शनादिति चेत्, तत्राह प्रकाशितमिति । समाधत्ते दर्शनस्येति[२३५] । कथमित्याह अनुमानेति[२३६] ।

अर्थापत्तौ हि द्वावेव दोषौ, अन्यथाऽप्युपपत्तिरन्यथैवोपपत्तिश्च, तदिहापि यद्यनित्यत्वे ऽप्यर्थप्रत्यायकत्वमुपपद्येताऽनित्यत्वएव वा ततो दूषणं स्यान्न तु तदस्तीत्याह यदीति[२३७] ।

ननु मा भूदर्थप्रत्यायनं, तथापि किमित्यनित्यता न भवति, अत आह फलवदिति[२३८] । फलवतो गवानयनादिव्यापारस्याऽङ्गभूतो ऽर्थप्रत्ययस्तत्फलत्वेनैव फलवान्, शब्दस्योच्चारणसंस्कारभाजः स्वयमफलस्य फलवत्प्रत्ययाङ्गता ऽवगम्यतइति । ततः किमित्याह परीक्षमाण इति[२३९] । अर्थप्रत्ययाङ्गस्य शब्दस्य स एव

---

* नवादिति का. पु. । † तत्त्वसिद्ध्यादि इति का. पु. ।

‡ परीक्षमाण इति ३ पु. पा. ।

स धर्मो ऽभ्युपगन्तव्यो यः प्रधानं न बाधते ।
न ह्यङ्गाऽङ्गाऽनुरोधेन प्रधानफलबाधनम् ॥ २४० ॥
युज्यते नाशिपक्षे च तदेकान्तात् प्रसज्यते ।
न ह्यदृष्टाऽर्थसंबन्धः शब्दो भवति वाचकः ॥ २४१ ॥
तथा चेत् स्यादपूर्वो ऽपि सर्वः सर्वं प्रकाशयेत् ।
संबन्धदर्शनं चाऽस्य नाऽनित्यस्योपपद्यते ॥ २४२ ॥
संबन्धज्ञानसिद्धिश्चेद् ध्रुवं कालान्तरास्थितिः ।
अन्यस्मिन् ज्ञातसंबन्धे न चान्यो वाचको भवेत् ॥२४३॥

---

धर्मः स्वाङ्गत्वेन ग्रहीतव्यो यश्च प्रधानमर्थप्रत्ययं न बाधतइति । कारणमाह न हीति[२४०] । अर्थप्रत्ययाङ्गभूतस्य शब्दस्य यदङ्गमनित्यत्वं तदनुरोधेन यत्तत्प्रधानं शब्दः, तत्फलस्याऽर्थप्रत्ययस्य बाधनमयुक्तमिति । तथापि कथं नाऽनित्यत्वमत्राह नाशीति[२४१] । कथमित्याह न हीति । किमित्यवाचकः, अत आह तथा चेदिति[२४२]। सम्बन्धज्ञानं च न क्षणिकस्य सम्भवतीत्याह सम्बन्धेति ।

ननु कियन्तं चित्कालमवतिष्ठन्तां शब्दा, यावत्सम्बन्धदर्शनं तस्य व्यवहारश्च सम्भवति, नैतावता नित्यत्वसिद्धिरत आह सम्बन्धेति[२४३] । एतच्चाऽनपेक्षत्वसूत्रे* वक्ष्यतीति । नन्वन्यस्यैव गोशब्दस्य सम्बन्धं गृहीत्वा ऽन्यस्मादर्थं प्रत्येष्यामो, नावश्यमेकस्यैव स्थायित्वमत आह अन्यस्मिन्निति । एवं ह्यव्यवस्था स्यादिति ।

---

* जै. सू. अ. १ पा. १ सू. २१ ।

गोशब्दे ज्ञातसंबन्धे नाऽश्वशब्दो हि वाचकः ।
अथाऽन्यो ऽपि स्वभावेन कश्चिदेवाऽवबोधकः ॥२४४॥
तत्राऽनिबन्धने न स्यात्को ऽसाविति विनिश्चयः ।
यतः प्रत्यय इत्येवं व्यवहारो ऽवकल्पते ॥२४५॥
श्रोतृणां स्यादपीत्थं तु वक्तृणां नाऽवकल्पते ।
अज्ञात्वा कमसौ शब्दमादावेव विवक्षति ॥ २४६ ॥
जानाति चेदवश्यं स पूर्वं तेनाऽवधारितः ।
तेजः प्रत्यक्षशेषत्वान्न तत्त्वे पि प्रकाशकम्* ॥२४७॥

---

शङ्कते अथेति[२४४] । स्वभावादेव व्यवस्थासिद्धिरिति । दूषयति तत्रेति[२४५] । पुनः शङ्कते यत इति । यतः प्रतीतिर्दृश्यते स एव बोधको नेतर इति व्यवस्था सिद्ध्यतीति । परिहरति श्रोतृणामिति[२४६] । कथं नाऽवकल्पते; अत आह अज्ञात्वेति । वक्ता ह्यादावेव प्रागेव प्रत्ययाच्छब्दमुच्चारयन् केन चिह्नेन कं शब्दं विवक्षतीति ।

यदि तु वक्ता जानाति असौ शब्दो ऽमुमर्थं प्रत्याययिष्यतीति, ततो नूनमनेनासौ तत्प्रत्यायनसामर्थ्येन प्रागवधृत इति अनित्यत्वाऽनुपपत्तिरित्याह जानाति चेदिति[२४७] ।

यत्तु तेजोवदित्युक्तं, तत्राह तेज इति । शब्दस्तु न तथा, बालानामपि प्रतीतिप्रसङ्गादित्यर्थवत्सादृश्यादर्थावगम इति चेदिति

---

* प्रकाशनमिति २ पु. पा. ।

सदृशत्वात् प्रतीतिश्चेत्, तद्वारेणाप्यवाचकः ।
कस्य चैकस्य सादृश्यात्कल्प्यतां वाचको ऽपरः ॥२४८॥
अदृष्टसङ्गतित्वेन सर्वेषां तुल्यता यतः ।
अर्थवान् पूर्वदृष्टश्चेत्तस्य तावान् कुतः क्षणः ॥२४९॥
द्विस्त्रिर्वा ऽनुपलब्धो हि नाऽर्थवान् संप्रतीयते ।
अप्रतीताऽन्यशब्दनां तत्काले ऽसावनर्थकः ॥२५०॥

---

भाष्यं, तस्यार्थमाह सदृशत्वादिति[२४८] । शब्दान्तरे गृहीतसम्बन्धे ऽर्थवति शब्दान्तरं तत्सादृश्यात्तत्त्वेन भ्रान्त्यवगतं तदर्थं प्रत्याययतीति । परिहरति तद्वारेणेति । कारणमाह कस्येति । चशब्दो हेतौ, इदं च "न हि कश्चिदर्थवा"*नित्यनेन भाष्येणोक्तमिति । एतदेवोपपादयति अदृष्टेति[२४९] । शङ्कते अर्थवानिति । निराकरोति तस्येति । अवसराऽभावमेव दर्शयति द्विस्त्रिरिति[२५०] ।

स्यादेतत्, यद्यपि सकृदुपलब्धो नार्थवान् तथापि येन व्युत्पत्तिकाले ऽन्ये गोशब्दाः श्रुता अस्य चरमशब्दो ऽर्थवान् भवति, तदूर्ध्वं च प्रतीतिकाले शब्दस्तत्सादृश्यात्प्रत्याययतीति, तदयुक्तम्, एवं हि य एव कस्य चिच्चरमश्श्रुतो ऽर्थवान् स्यात् श्रुतशब्दान्तरस्य स एवाऽश्रुतशब्दान्तरस्याऽन्यस्य प्रथमश्रुतत्वादनर्थकः स्यादिति विरुद्धमापद्येतेत्याह अप्रतीतेति ।

अथ त्वर्थवानेवाऽसौ स त्वर्थो ऽश्रुतशब्दान्तरैः सामग्रीवैकल्यान्नाऽवगम्यते,तथा सति प्रतीतिकालस्यापि शब्दस्य मुख्यार्थवत्त्वसम्भवान्न सादृश्येन वाचकत्वं स्यात्सो ऽपि कस्य चिद् व्युत्पत्तिका-

---

* शा. भा. पृ. २९ प. १२ ।

100

स एवान्यश्रुतीनां स्यादर्थवानिति विस्मयः ।
अथाऽस्यविद्यमानो ऽपि कैश्चिदर्थो न गम्यते*॥२५१॥
तत्तुल्यमुत्तरस्येति किं सादृश्येन वाचकः ।
अनर्थकत्वमस्य स्यादथाऽनन्यश्रुतीन् प्रति ॥२५२॥
पूर्वस्मिन्नपि तत्सत्त्वात् सर्वोऽनर्थकता भवेत् ।
अर्थवत्सदृशत्वेन यो वा श्रुतवतां मतः ॥२५३॥
मुख्यो ऽसावश्रुतीनां स्यात्, तदेकत्वे न युज्यते ।
सम्बन्धाऽकरणे युक्तिस्तदुक्तमिति कथ्यते ॥२५४॥

---

लवर्त्ती चरमश्रुतश्च स्यात्, तदाह अथेति[२५१] । अथ त्वसावश्रुतशब्दान्तरैरर्थवत्त्वेनाऽग्रहणादनर्थक एव, ततो न कश्चिदर्थवान् स्यात् । ततः पूर्वो ऽर्थवानिति चेन्न, तस्याऽप्यश्रुतशब्दान्तरैरर्थवत्त्वाऽग्रहणाच्चरमश्रुतवदेवाऽऽनर्थक्यान्न कस्य चिदर्थवत्त्वं मुख्यं सिध्येदित्याह अनर्थकत्वमिति[२५२] । अथ वा व्युत्पत्तिकालदृष्टः शब्दो मुख्यो ऽर्थवान्, प्रतीतिकालस्तु तत्सादृश्याद् गौण इति वदतो विरुद्धमापद्येत । एवं ह्येक एव शब्दः श्रुतार्थवच्छब्दान्तरस्य गौणः, अश्रुताऽर्थवच्छब्दस्य मुख्यः स्यात्, न चैकस्य मुख्यत्वं गौणत्वं च युक्तं, तदाह अर्थवदिति[२५३] ।

"कस्य चिदेकस्य जगदादिवर्त्तिनः कृत्रिमो भविष्यति सम्बन्ध"† इति चोद्यस्योत्तरं भाष्यं "तदुक्त"‡मिति, तद् व्याचष्टे सम्बन्धेति[२५४]। या ऽसौ सम्बन्धाऽकरणे युक्तिः सर्वशब्देष्वप्रसिद्धार्थेषु सम्बन्धकार-

---

* गृह्यते इति ३ पु. पा. ।

† शा. भा. पृ. २९ प. १३ ।

‡ शा. भा. पृ. २९ प. १३ ।

शब्दाऽनित्यत्वपक्षे ऽपि विशेषेण स दुष्करः ।
'शब्दं तावदनुच्चार्य सम्बन्धकरणं कुतः ॥२५५॥
न चोच्चारित*नष्टस्य सम्बन्धेन प्रयोजनम् ।
तेनाऽसम्बद्ध्य नष्टत्वात् पूर्वस्तावदनर्थकः' ॥२५६॥
उत्तरो ऽकृतसम्बन्धो विज्ञायेताऽर्थवान् कथम् ।
शब्दोच्चारणसम्बन्धकरणव्यावहारिकाः ॥२५७॥
क्रियाः क्रमस्वभावत्वात् कः कुर्याद्युगपत्क चित् ।
देशकालादिभेदानां पुसां शब्दान्तरश्रुतेः ॥२५८॥

---

णमप्यशक्यमिति सैवेयमत्र परामृष्टेति । क्षणिकशब्दपक्षे तु विशेषतो ऽशक्यमित्याह शब्देति[२५५] । तदेव दर्शयति शब्दमिति सार्द्धेन । तेन सर्वाद्यस्तावच्छब्दः सम्बन्धमगत्वैव नष्टत्वादनर्थकः, ततश्च तदुत्तरेषामर्थवत्साहश्याऽभावात्स्वयं चाऽकृतसम्बन्धत्वान्नाऽर्थवत्ता सिध्यतीत्याह उत्तरेति[२५७] ।

मा भूदनुच्चरितस्योच्चरितनष्टस्य वा सम्बन्धकरणम्, उच्चार्यमाणस्य तु क्रियतां, व्यवहारो ऽपि तदैव क्रियतइति नाऽऽनर्थक्यमिति चेत्; तदशक्यमित्याह शब्देति। यद्यपि जगदादौ कश्चिच्छब्दः कृतसम्बन्धः स्यात्तथापि देशकालान्तरवर्त्तिनां पुंसां नाऽसौ सिध्येत्, शब्दान्तरमेव ते शृण्वन्ति न जगदाद्यं, तदसिद्धौ च तत्साहश्याऽसिद्धेः कथं तेषामर्थप्रतीतिरित्याह देशेति[२५८] । क्षणिकत्वे च श-

---

* उच्चरितेति २ पु. पा. ।

पूर्वं कृत्रिमसम्बन्धे ऽप्येकः शब्दो न सिध्यति ।
सम्बन्धकथने ऽप्यस्य स्यादेवैषा निराकृतिः* ॥२५९॥
नष्टाऽसां†द्वर्त्तमानेषु नाऽऽख्यानस्य हि संभवः ।
अर्थवान् कतरः‡ शब्दः श्रोतुर्वक्ता च कथ्यताम्॥२६०॥
यदा पूर्वश्रुतं शब्दं नाऽसौ शक्नोति भाषितुम् ।
'न तावदर्थवन्तं स ब्रवीति सदृशं वदेत् ॥२६१॥
नार्थवत्सदृशः शब्दः श्रोतुस्तत्रोपपद्यते ।
अर्थवद्ग्रहणाऽभावा'न्न चाऽसावर्थवान् स्वयम् ॥२६२॥
वक्तुः श्रोतृत्ववेलायामेतदेव प्रसज्यते ।
एवं च सर्ववक्तॄणां न शब्दः कश्चिदर्थवान् ॥२६३॥

---

ब्दस्य सम्बन्धकरणवत् कथनमप्यनुपपन्नमेवेत्याह सम्बन्धेति[२५९] । तामेव दर्शयति नष्टेति[२६०] । विशेषतस्त्वनुपपन्नं कथनमित्याह अर्थवानिति । यो हि वक्त्रा पूर्वमर्थवत्त्वेन ज्ञातः तमतीतत्वाद्वक्तुमशक्नुवन् कतरं शब्दं ब्रूयात्, किमर्थवन्तम् उतार्थवत्सदृशमिति, द्वेधाऽपि नोपपद्यतइत्याह न तावदिति[२६१] सपादेन । न चाऽभिनवमेवाऽर्थवत्तया वदतु, इति वाच्यं, तस्यार्थवत्त्वेनाऽनवगमादित्याह न चेति[२६२] । वक्तुरपि श्रोतृत्ववेलायामेतदेव दर्शयितव्यमित्याह वक्तुरिति[२६३] । ततश्च न कस्य चिदपि कश्चिच्छब्दो ऽर्थवान् सि-

---

* एषैव निराकृतिरिति २ पु. पा. ।

† नष्टसदिति ३ पु. पा. ।

‡ अथवा कतर इति ३ पु. ।

भवेद्यद्यपि संबन्धः सर्गादौ कस्य चित्कृतः ।
तस्मिन्नबुद्धे नैव स्यादेकस्मात्सदृशे मतिः ॥२६४॥
अथ तत्कालजैः पुम्भिस्तस्मिन् शब्दे ऽवधारिते ।
प्रवृत्तेरनुमीयेत तत्सादृश्यपरम्परा ॥२६५॥
तत्र सम्बन्धमार्गेण पूर्वोक्तेन प्रसज्यते ।
स्मार्यं तन्मूलसादृश्यं तदधीनाऽर्थनिश्चयात् ॥२६६॥
'वस्तुन्युत्पत्तिभिन्ने च दूरादारभ्य कल्पितम् ।
स्तोकस्तोकविशेषेण सादृश्यं विप्रकृष्यते ॥२६७॥

---

ध्यति यत्सादृश्यादर्थप्रतीतिरित्याह एवमिति । जगदादिभूतस्तु शब्दः प्रजापतिना कृतसम्बन्धः स्यादर्थवान्, तस्य त्वद्यतनैरस्माभिरनवगमान्न तत्सदृशतया ऽद्यतनाः शब्दा ज्ञायेरन्, अतो नाऽर्थप्रतीतिः स्यादित्युक्तमेवेत्याह भवेदिति[२६४] ।

शङ्कते अथेति[२६५] । आदिकालभुवः पुरुषास्तं शब्दं विदित्वा तत्सदृशेभ्यो ऽर्थं प्रतिपन्नाः, ततो ऽर्वाञ्चो ऽपि तस्य सदृशेभ्य इतरेभ्य इत्येवं सादृश्यपरम्परा ऽद्य यावत्प्रवृत्ता, वयं त्वीदृशीं परम्परामर्थप्रतीत्यैव कल्पयामः, न ह्यसत्यामर्थवत्सादृश्यपरम्परायां क्षणिकानां शब्दानामर्थप्रत्यायकत्वं सम्भवतीति । दूषयति तत्रेति[२६६] । ईदृशी ह्यर्थवत्सादृश्यपरम्परा प्रतिपत्तृभिः स्मर्येतेति तदधीनत्वादर्थनिश्चयस्य तदस्मरणाच्च नेयमस्तीति निश्चीयते । किं च, स्वभावविलक्षणेषु वस्तुषु सत्यामपि सादृश्यपरम्परायां स्तोकस्तोकभेदेनैव दूरस्थस्य मूलसादृश्यमत्यन्तमेव नश्येत्ः, विशेषतस्तु शब्दे स्तोकविशेषादेवाऽर्थोऽन्यत्वं भवति, स्वरभेदादेव बहुव्रीहितत्पुरुषार्थभेदात्, किं पुन-

स्वरव्यञ्जनमात्रादिभेदाच्छब्दे विशेषतः’।
शालामालाऽबलावेलाशीलेत्यादिप्रकल्पनात् ॥२६८॥
सादृश्यात् प्रतिपत्तौ* च भ्रान्तिज्ञानं प्रसज्यते।
धूमे दृष्टे ऽग्निसम्बन्धे बाष्पादिव कृशानुधीः ॥२६९॥
एवमस्त्विति चेद् ब्रूयान्नैतद्बाधकवर्जनात्।
तावता सिद्धमिति चेच्छब्दाऽभेदो ऽपि सिध्यति॥२७०॥
तथा भिन्नमभिन्नं वा सादृश्यं व्यक्तितो भवेत्।
एवमेकमनेकं वा नित्यं वा ऽनित्यमेव वा ॥२७१॥
भिन्नत्वैकत्वनित्यत्वे जातिरेव प्रकल्प्यते।
अभेदाऽनित्यनानात्वे पूर्वोक्तेनैव तुल्यता ॥२७२॥

---

व्यंऽञ्जनमात्राक्रमादिभेदादित्याह वस्तुनीति सार्द्धेन। अत्रैवोदाहरणमाह शालेति[२६८]।

दोषान्तरमपि सादृश्यादर्थप्रतीतौ दर्शयति सादृश्यादिति[२६९]। भवत्विति चेत्, न, बाधाऽभावादित्याह एवमिति[२७०]। शङ्कते तावतेति। सादृश्यनिबन्धनस्यापि ज्ञानस्य बाधकऽभावादेवाऽभ्रान्तत्वसिद्धेः कथं भ्रान्तत्वाऽऽपादनमिति। परिहरति शब्देति। सत्यमभ्रान्तं, तद्वदेव तु शब्दैकत्वमप्यभ्रान्तमेव, तस्यापि प्रत्यभिज्ञाऽवगतस्य बाधाऽभावात्, तद्भ्रान्तित्वे वा ऽर्थज्ञानमपि कारणदोषादेव भ्रान्तं स्यादिति।

किं च, सादृश्यमपि विकल्पनीयमित्याह तथेति[२७१]। तत्र दूषणमाह भिन्नत्वेति[२७२]। गत्वादिजातिश्च निराकृतेति। पक्षान्त-

---

* सादृश्याप्रतिपत्ताविति ३ पु. पा.।

व्यक्त्यनन्यस्तथैकं च सादृश्यं नित्यमिष्यते ।
व्यक्तिनित्यत्वमापन्नं तथा सत्यस्मदीहितम् ॥२७३॥
न चाऽवयवसामान्यरूपा सदृशता तव ।
वर्णाऽभेदे हि सा सिध्येन्न चाऽभेदस्त्वयेष्यते ॥२७४॥
गोशब्दत्वादिगत्वादि पूर्वमेव निराकृतम् ।
वर्णव्यक्तय एव स्युर्नित्यास्तेनाऽवबोधकाः ॥२७५॥
गोशब्दे ऽवस्थिते ऽस्माकं तदशक्तिजकारिता ।
गाव्यादेरपि गोबुद्धिर्मूलशब्दाऽनुसारिणी ॥२७६॥

---

रं दूषयति अभेदेति । पूर्वोक्तशब्दक्षणिकत्वेन तुल्यता, ततश्च तद्वदेव दोष इति । पक्षान्तरं दूषयति व्यक्तीति[२७३] । किं चाऽवयवसामान्यनिबन्धनं सादृश्यं, न च तद्वर्णानां सम्भवति निरवयवत्वात्, न च पदानां, तदवयवानां वर्णानां प्रतिपदं भिन्नत्वेनाऽवयवसामान्याऽभावादित्याह न चेति । मा भूत्सादृश्यं, गत्वगोशब्दत्वादिजातेस्तु वाचकत्वं भविष्यति, गोत्वादेरिव वाच्यत्वं न दोक्ष्यति किंचिदत आह गोशब्देति[२७५] । उपसंहाति वर्णेति ।

"यथा गावीशब्दात्सास्नादिमत्प्रत्ययस्याऽनिवृत्तिस्तद्वद्भविष्यती"*-ति चोद्यस्योत्तरं भाष्यं "गोशब्दं तत्रोच्चारयितुमिच्छे"†ति,तद्व्याचष्टे गोशब्दे इति[२७६]। अवस्थितो हि गोशब्दो ऽस्माकं न क्षणिकः, ततश्च तस्मिन्नर्थवति या गाव्यादेर्गोबुद्धिः सा मूलभूतं गोशब्दमेवाऽनुसृत्य भवति तज्जनितैवेति, यावत्तदशक्तिजकारिता हि सा तत्सा-

---

* शा. भा. पृ. २९ प. १९ ।

† शा. भा. पृ. २९ पृ. १६ ।

स्यात् सादृश्यनिमित्ता चेद्गौरशब्दादपि ध्रुवम् ।
तेनाऽव्यावृत्तिरिष्टा ऽत्र गोशब्दादेव सा हि धीः॥२७७॥
नन्वानुपूर्व्यनित्यत्वादनित्यो वाचको भवेत् ।
पदं वाचकमिष्टं हि क्रमाऽधीना च तन्मतिः ॥२७८॥
वर्णाः सर्वगतत्वाद्धो न स्वतः क्रमवृत्तयः ।
अनित्यध्वनिकार्यत्वात् क्रमस्याऽतो विनाशिता॥२७९॥
पुरुषाऽधीनता चास्य तद्विवक्षावशाद्भवेत् ।
वर्णानां नित्यता तेन निष्फला परमाणुवत् ॥२८०॥
यथा सत्यणुनित्यत्वे घटे तद्रचनात्मके ।
न नित्यतैवं वर्णेषु नित्येषु पदनाशिता ॥२८१॥

---

दृश्यनिबन्धनेति । कथमित्याह स्यादिति[२७७]। नाऽशक्तिजत्वाऽवगमेन गोशब्दविवक्षामेवाऽनुमाय तत एव जायमाना गोबुद्धिर्युक्तं यन्न व्यावर्ततइति ।

चोदयति नन्विति[२७८]। कथं क्रमाऽनित्यत्वे वाचकाऽनित्यत्वमत आह वर्णा इति[२७९]। देशतः कालतो वा क्रमो भवति, न च सर्वगतानां नित्यानां च स्वतः स संभवति। कुतस्तर्हि तेषु क्रमो, ऽत आह अनित्येति । ध्वनयो हि क्रमवर्त्तिनः क्रमेण शब्दानभिव्यञ्जयन्तः स्वीयं क्रमं वर्णेष्वपि दर्शयन्तीति ।

स्यादेतत्, अनित्यत्वे ऽपि पुरुषस्वातन्त्र्याऽभावान्नाऽप्रामाण्यमिति, तत्राह पुरुषेति[२८०] । पुरुषो हि यथाविवक्षं क्रममाचरन् कथमस्वतन्त्रः स्यादित्युपसंहरति वर्णानामिति । तदेव विवृणोति

न च क्रमाद्विना वर्णा विज्ञाताः प्रतिपादकाः ।
क्रमस्यैव पदत्वं वस्तस्मादेवं प्रसज्यते ॥२८२॥
पदं वर्णाऽतिरिक्तं तु येषां स्यात् क्रमवर्जितम् ।
तेषामेवाऽर्थवत्येषा शब्दानित्यत्वकल्पना ॥ २८३ ॥
न तावदानुपूर्व्यस्य पदत्वं नः प्रसज्यते* ।
न हि वस्त्वन्तराऽऽधारमेतद्दृष्टं प्रकाशकम् ॥२८४॥
द्वये सत्यपि तेनात्र विज्ञेयो ऽर्थस्य वाचकः ।
वर्णाः किं नु क्रमोपेताः किं नु वर्णाऽऽश्रयः क्रमः॥२८५॥
क्रमः क्रमवतामङ्गमिति किं युक्तिसाध्यता ।
धर्ममात्रमसौ तेषां न वस्त्वन्तरमिष्यते ॥ २८६ ॥
इत्थं प्रतीयमानाः स्युर्वर्णास्तेनाऽवबोधकाः ।
न च क्रमस्य कार्यत्वं पूर्वसिद्धपरिग्रहात् ॥२८७॥

---

यथेति[२८१] । किं च, क्रम एव वाचको न तद्विशिष्टा वर्णास्तेन व्यक्तं वाचकाऽनित्यत्वमित्याह । न चेति[२८२] ।

स्फोटपक्षे नित्यत्वस्याऽर्थवत्त्वं दर्शयति पदमिति[२८३] । परिहरति न तावदिति[२८४] । कारणमाह न हीति । तेन द्वये ऽप्यवश्यंभाविनि सति गुणप्रधानमात्रं विचिन्त्यमित्याह द्वयइति[२८५] । अत्र निर्णयमाह क्रम इति[२८६] । कथ न युक्त्यपेक्षेत्यत्राह धर्ममात्रमिति । उपसंहरति इत्थमिति[२८७] ।

---

* पदमित्याद्यर्धत्रयं त्रुटितं का. स. पु. १ पु. च ।

'वक्ता न हि क्रमं कंचित्स्वातन्त्र्येण प्रपद्यते ।
यथैवाऽस्य परैरुक्ति*स्तथैवैनं विवक्षति ॥ २८८ ॥
परो ऽप्येवमतश्चास्य संबन्धवदनित्यता ।
तेनैवं व्यवहारात्स्यादकौटस्थ्ये ऽपि† नित्यता' ॥२८९॥
यत्नतः प्रतिषेध्या नः पुरुषाणां स्वतन्त्रता ।
वर्णानामपि नन्वेवमकौटस्थ्ये ऽपि सेत्स्यति ॥२९०॥

---

भवत्वेवं, तथापि क्रमस्य पुरुषकार्यत्वात्तद्विशिष्टवाचकस्यापि पौरुषेयत्वमेवाऽत आह न चेति । एतदेव विवृणोति वक्तेति[२८८] सार्द्धेन । कथं पुनरवगम्यते सर्वे परोक्तप्रकारमेव क्रमं विवक्षन्ति न तु कश्चिदपि स्वातन्त्र्येणेति, तत्रोत्तरं सम्बन्धवदिति । कर्त्तुरकरणादित्यर्थः ।

नन्वसत्यपि स्वातन्त्र्ये पुरुषकार्यता तावत् क्रमस्यास्तीति तद्विशिष्टस्यापि वाचकस्य कथं नित्यता, अत आह तेनेति । न कूटस्थनित्यतां वाचकस्य ब्रूमः, किं तु व्यवहारादेवाऽस्य नित्यत्वम्, अनिदंप्रथमत्वमिति यावत्, गकारौकारविसर्जनीयानाम् एतेषामेवेदृशेनैव क्रमेण व्यवहारः प्रयोगो ऽनिदंप्रथम इति पदस्याऽनिदंप्रथमत्वं नित्यत्वं, न वर्णवत् कूटस्थनित्यत्वमिति ।

नन्वेवमपि पुरुषकार्यता तावदस्तीति तदधीनप्रामाण्यमेव शाब्दं स्यादत्राह यत्नत इति[२९०] । स्वातन्त्र्ये हि पुरुषस्य तदायत्तं प्रामाण्यं भवति,न पारतन्त्र्ये, न ह्यस्माभिरुच्चार्यमाणानामपि मनुबुद्धादिवाक्यानामस्मद्गुणदोषवशेन प्रामाण्यमप्रामाण्यं वा भवतीति ।

---

* उक्त इति १ पु. पा. ।

† अकौटिल्ये ऽपीति का. पा. ।

नित्येषु सत्सु वर्णेषु व्यवहारात् क्रमोदयः ।
घटादिरचना यद्वन्नित्येषु परमाणुषु ॥ २९१ ॥
तदभावे हि निर्मूला रचना नाऽवधार्यते ।
अणुकल्पाश्च वर्णांशा न सन्तीत्युपपादितम् ॥२९२॥
'परैरुक्तान्* ब्रवीमीति विवक्षा चेदृशी ध्रुवम्† ।
तथा च नित्यतापत्ति'र्न चाऽन्यच्चिह्नमस्ति वः ॥२९३॥

---

चोदयति वर्णानामिति । वर्णानामपि व्यवहारादेवाऽनिदंप्रथमतामात्रमस्तु, किं कूटस्थनित्यतयेति । परिहरति नित्येष्विति[२९१] । व्यवहारः क्रियाप्रयोगो ऽनुष्ठानमिति पर्यायाः, तदिह वर्णेषु नित्येषु सत्सु तानेवोपादाय प्रयोगविशेषेण शक्यते क्रमविशेषो निष्पादयितुं, परमाणुभिरिव घटादीति ।

वर्णाऽभावे तु किंमूला रचना, न हि निरुपादानं कार्यरचनं सम्भवतीत्याह तदभावइति[२९२] । वर्णावयवमूलेति चेन्न, तेषां स्फोटे निराकृतत्वादित्याह अणुकल्पा इति ।

ननु ताल्वादिसंयोगविभागवशेनैव वर्णरचना सम्भवति विनापि वर्णाऽवयवैरत आह परैरिति[२९३] पादत्रयेण । सम्भवत्येवं रचना, तथापि न वर्णेष्वपूर्वरचना सम्भवति परोक्तानेव ब्रवीमीति तेषु वक्तुर्विवक्षा श्रोतुश्च पूर्वश्रुतमेव शृणोमीति, तेन द्वयोः प्रत्यभिज्ञानान्नित्यत्वं वर्णानां नाऽपूर्वरचनमिति ।

---

* परेणोक्तानिति १ पु. पा. ।

† ध्रुवेति २ पु.

तज्जातीयत्वसादृश्ये निषिद्धे, यत्तु संभवेत् ।
शब्दत्वेन सजातित्वं तुल्यं शब्दान्तरेषु* तत् ॥२९४॥
जात्या यथा घटादीनां व्यवहारोप†लक्षणम् ।
तथैव चाऽऽनुपूर्व्यादेर्जातिद्वारेण सेत्स्यति ॥ २९५॥
ताल्वादिजातयस्तावत् सर्वपुंसां‡ व्यवस्थिताः ।
वक्ता तावद्ध्वनींस्ताभिरुपलक्ष्य निरस्यति ॥२९६॥

---

नन्वेवं प्रत्यभिज्ञाक्रमे तद्विशिष्टे च पदरूपे ऽप्यस्त्येवेति तयोरपि कूटस्थनित्यतैव स्यादत्राह न चेति । वर्णेषु नित्येषु तैरेव चिह्नभूतैरभिन्नैः शक्यं क्रमादेरप्यौपाधिकमेकत्वमवगन्तुं, प्राच्ये हि गोपदे गकारः प्रथमं तदनन्तरं चौकारः, एवमेवाऽद्यतने ऽपि गोपदस्यैवमुपाध्येकत्वादेव स्वरूपभेदे ऽपि सम्भवति प्रत्यभिज्ञानं, वर्णेषु तु नान्यदस्ति चिह्नं यदेकत्वात्प्रत्यभिज्ञा स्यादिति । तत्रापि गत्वं सादृश्यं वा प्रत्यभिज्ञानिबन्धनमिति चेत्, तत्राह तज्जातीयेति[२९४] । जातिः स्फोटे निराकृता, सादृश्यं चानन्तरमिति।

ननु शब्दत्वमस्ति, सत्यं, तत्तु सर्वशब्दसाधारणं न गकारादिस्वरूपगोचरस्य प्रत्यभिज्ञाविशेषस्याऽऽलम्बनं सम्भवतीत्याह यत्त्विति ।

नन्वेवंविधकार्यनिर्माणम् एकविधेनैव कारणेनोपलक्ष्य कर्त्तव्यं, यथा मृत्तन्त्वादिजातीयैः कारणैर्घटपटादिकार्यनिर्माणमुपलक्ष्यते, तद्विहाप्येवंविधेन कारणेनैवंविधं क्रमरचनं सम्भवतीत्यालोचयितव्यं, तदत्र केनैकैकरूपेण कारणेन पूर्वदृष्टक्रमतुल्यस्य क्रमान्तरस्य निर्माणमुपलक्ष्यतामत आह जात्येति[२९५] । अस्त्येवात्र कारणेष्वे-

---

* शब्दान्तरे ऽपीति ३ पु. ।
† व्यवहारो ऽपीति ३ पु. ।
‡ पुंसीति का. पु. ।

तेषां च जातयो भिन्नाः शब्दाऽभिव्यक्तिहेतवः ।
यावद्वर्णं प्रवर्तन्ते व्यक्तयो वा तदन्विताः ॥२९७॥
तत्र ताल्वादिसंयोगविभागक्रमपूर्वकम् ।
ध्वनीनामानुपूर्व्यं स्याज्जात्या चोभयनित्यता ॥२९८॥
यथैव भ्रमणादीनां भागैर्जात्या च लक्षितैः* ।
क्रमाऽनुवृत्तिरेवं स्यात्ताल्वादिध्वनिवर्णभाक् ॥२९९॥

---

का जातिः, तया च क्रमदीर्घादिव्यवहारोपलक्षणं सम्भवतीति । तदेव दर्शयति ताल्वादीति[२९६] । ध्वनिप्रेरणं तावत् ताल्वादिजातिभिरेवोपलक्ष्य क्रियतइति । ध्वनिजातयश्च भिन्नाः तद्विशिष्टा वा व्यक्तयस्ताल्वादिजातिभिरुपलक्ष्य प्रेरिताः सर्वभेदानभिव्यञ्जन्तीत्याह तेषामिति[२९७] ।

भवत्वेवं, क्रमस्य किमायातमित्याह तत्रेति[२९८] । ताल्वादिसंयोगविभागक्रमवशेन तत्प्रेरितानां ध्वनीनामपि क्रमो भवति, द्वये च ताल्वादयो ध्वनयश्च जात्या नित्याः, तेन गकारौकारविसर्जनीयानां क्रममिच्छन् तदभिव्यञ्जकानां ध्वनिजातीयानां तत्तदनुरूपेण क्रमेण प्रेरणं चिकीर्षुस्ताल्वादिजातीयानां स्थानानां संयोगविभागौ क्रमेणाऽऽरभतइति ।

ननु स्वाश्रयमेव जातिरुपलक्षयति, ताल्वादिसमवेतया तु जात्या कथमतदाश्रयः क्रमः शक्यते लक्षयितुम्, अत आह यथैवेति[२९९] । चिततिविशेषयुक्ता बहवः पूर्वाऽपरीभूतक्रियाक्षणा भ्रमणमुच्यते, तेषां च क्रमाऽनुवृत्तिर्यथा भ्रमणभागक्रियाक्षणसमवेतया क्रियात्वजात्या लक्ष्यते तथा ताल्वादिध्वनिवर्णभागे ऽपि क्रमाऽनुवृत्तिः ता-

---

* जात्या ऽभिलक्षिता इति ३ पु. ।

व्यक्तीनामेव वा सौक्ष्म्याज्जातिधर्मोऽवधारणम् ।
तद्वशेन च वर्णानां व्यापित्वे ऽपि क्रमग्रहः ॥३००॥
एवं ध्वनिगुणान् सर्वान्नित्यत्वेन व्यवस्थितान् ।
वर्णा अनुपतन्तः स्युरर्थभेदाऽवबोधिनः ॥३०१॥
आनुपूर्वी च वर्णानां ह्रस्वदीर्घप्लुताश्च ये ।
कालस्य प्रविभागास्तैर्जायन्ते ध्वन्युपाधयः ॥६०२॥
कालश्चैको विभुर्नित्यः प्रविभक्तो ऽपि गम्यते ।
वर्णवत्, सर्वभावेषु व्यज्यते केन चित्क चित ॥३०३॥

---

ल्वादिजात्यैव शक्योपलक्षयितुम। भागैर्जात्या चेति, जात्युपलक्षितैर्भ्र-मणभागैः क्रमोपलक्षणमित्यर्थः। मा वा भूवन् ध्वनिजातयः, तद्व्यक्त-य एव तु प्रतिवर्णं भिन्ना जातिवन्नित्याः सत्यः क चित्कदा चित्ता-ल्वादिक्रमेण प्रेर्यन्ते इत्याह व्यक्तीनामिति[३००] ।

एवं ताल्वादीनां ध्वनीनां च क्रममुपपाद्य तन्निमित्तं वर्णक्रमं दर्शयति तद्वशेनेति । उपसंहरति एवमिति[३०१] । सर्वानिति, क्रमदीर्घत्वादीनिति ।

संप्रति कूटस्थतामेव क्रमस्य मतान्तरेण दर्शयितुमाह आनुपूर्वीति[३०२] । पौर्वापर्यं हि क्रमः, चिरक्षिप्रात्मकं च दीर्घादिरूपं, पूर्वापरचिराक्षिप्रप्रत्ययाश्च कालालम्बनास्तेन ध्वनिभिर्वर्णेषु पूर्वाऽपरभागेन व्यज्यमानः काल एव क्रम इति । ततः किमित्याह काल इति[३०३] ।

यद्येकः कालः, कथं तर्हि पूर्वाऽपरेण रूपेण विभक्तो भासते, अत्राह प्रविभक्त इति वदन्तेन। यथा हि वर्णो नित्यः सर्वगतो ऽपि दीर्घादिरूपेण विभक्तो भासते ध्वन्युपाधिवशात्, तथा कालो

वर्णेषु व्यज्यमानस्य तस्य प्रत्यायनाङ्गता* ।
अन्यत्रापि तु सद्भावात्तत्स्वरूपस्य नित्यता ॥३०४॥
तस्मान्न पदधर्मोऽस्ति विनाशी कश्चिदीदृशः ।
तेन नित्यं पदं सिद्धं वर्णनित्यत्ववादिनाम् ॥३०५

---

ऽपि स्वयमभिन्नोऽपि आदित्यस्य गतिक्रियोपाधिवशाद्भिन्नो भासतइति ।

ननु नाऽयं स्वातन्त्र्येण गम्यते, ततः किमस्य सद्भावे प्रमाणं, कथं विभुत्वं नित्यत्वं च, विभक्तरूपावगतस्य च किंप्रमाणमेकत्वे, ऽत आह सर्वेति । सत्यं, न स्वातन्त्र्येण गम्यते, भावेषु गृह्यमाणेषु तद्विशेषणतया केन चित्पूर्वत्वेनाऽपरत्वेन वा ऽऽकारेण क चिद्भावे गृह्यते इदं पूर्वमिदमुत्तरमिति प्रत्ययो भावमात्रमनालम्बमानो वस्त्वन्तरमवस्थापयति स कालः, स च सर्वेषु भावेषु व्यवहितविप्रकृष्टेष्वतीताऽनागतप्रत्युत्पन्नेषु च व्यज्यतइति विभुत्वनित्यत्वसिद्धिः, विभक्तस्वरूपो भासमानोऽपि कालरूपेणैकेन प्रत्यभिज्ञाप्यतइति नाऽप्रमाणकमेकत्वं, सति चैकत्वे विभागस्यौपाधिकत्वेनाऽप्युपपत्तेर्न स्वाभाविकत्वम्,उपाधयश्च विनष्टवर्त्तमानाऽनागताः सूर्यादिक्रिया इति तद्वशेन काले ऽप्यतीतादिविभागः, क्षिप्रत्वं चाल्पक्रियावच्छेदाद्बहुक्रियावच्छेदाच्चिरत्वमिति ।

यदि सर्वभावेषु व्यज्यते किमिति तर्हि भावान्तरेष्वपि नार्थं प्रत्याययति, अत्राह वर्णेष्विति[३०४] । स्वरूपं त्वन्यत्रापि विद्यतइति नित्यमेवेत्याह अन्यत्रापीति । उपसंहरति तस्मादिति[३०५] । ईदृश इत्यर्थप्रत्ययाङ्गमित्यर्थः ।

यदा च वर्णनित्यत्ववादिनां पदस्यापि व्यवहारनित्यत्वमेवं च यदुक्तं 'वर्णानां नित्यता तेन निष्फला परमाणुव'दिति, तत् परि-

---

* तस्याऽर्थप्रत्ययाऽङ्गतेति २ पु.

परधर्मे ऽपि चाङ्गत्वमुक्तमश्वगजादिवत् ।
नित्यतायां च सर्वेषामर्थापत्तेः प्रमाणता ॥३०६॥
पदे ऽनवयवे चापि व्यञ्जकैः क्रमवृत्तिभिः ।
पुरुषाऽधीनतायां च* न प्रामाण्यं† प्रसज्यते ॥३०७॥
वाक्येषु दृष्टमेतच्च तन्निर्भागत्ववादिनाम् ।
अन्यथाऽनुपपत्त्या तत्सर्वथा‡ पदनित्यता ॥३०८॥
परार्थदर्शनार्थत्वं येनायं प्रतिपद्यते ।
स धर्मो ह्यनुमानाय§ सम्बन्धाऽपेक्षितोच्यते॥ ॥३०९॥

---

हृतमित्याह तेनेति । ननु ध्वनिधर्माः क्रमादयः कथं वर्णानामर्थे प्रत्याययतामङ्गं भवन्ति, अत्राह परधर्मइति[३०६] । किं पुनः क्रमादीनां व्यवहारनित्यत्वे प्रमाणम्, अत्राह नित्यतायामिति । पूर्वोक्ता ह्यर्थापत्तिर्वाचकरूपस्यैव नित्यत्वं कल्पयति न वर्णस्वरूपमात्रस्येति ।

यत्तु वर्णाऽतिरिक्तनिरवयवपदवादिनामेवेदं नित्यत्वमर्थवदिति, तदयुक्तं, तेषामपि क्रमवद्ध्वनिव्यङ्ग्यत्वात्, स्फोटस्यास्त्येव पुरुषाऽधीनत्वं तद्दोषात्प्रामाण्यं तुल्यमित्याह पदे इति[३०७] । तथा च वाक्येष्वनवयवेष्वपि पुरुषगुणदोषाऽपेक्षया प्रामाण्यमप्रामाण्यं च दृष्टमित्याह वाक्येष्विति[३०८] । तेन तन्मते ऽपि पदेषु च वेदवाक्येषु सत्पुरुषस्वातन्त्र्याभावादेव न तदधीनं प्रामाण्यमिति वक्तव्यं, तच्चाऽस्मन्मते ऽपि तुल्यमिति सूत्रार्थमुपसंहरति अन्यथेति ।

---

* पुरुषाऽधीनतातो ऽर्थे इति २ पु. । † प्रमाणमिति २ पु. पा.
‡ अतः सर्वथेति २ पु. § वानुमानायेति २ पु. ।
॥ अपेक्षितो यत इति २ पु. ।

न साधनप्रयोगोऽयं सूत्रकारेण रच्यते ।
वृत्तिकारेण चाऽर्थस्तु योग्यो द्वाभ्यां निरूपितः ॥३१०॥
अत्रोच्यते स्थिरः शब्दो धूमगोत्वादिजातिवत् ।
सम्बन्धाऽनुभवाऽपेक्षसामान्या*ऽर्थाऽवबोधनात्॥३११॥
अन्याऽपोहनसारूप्यजातिलिङ्गत्वकल्पने ।
विशेषाणामलिङ्गत्वात् सर्वसामान्यनित्यता ॥३१२॥
स्ववाक्यादिविरोधो वा परार्थत्वेन कथ्यते ।
'प्रतिज्ञोच्चार्यते सर्वा साध्याऽर्थप्रतिपत्तये ॥३१३॥
न चाऽनित्या ब्रवीत्येषा स्वार्थमित्युपपादितम् ।
तेनाऽर्थप्रत्ययाऽऽपन्नान्नित्यत्वान्नाशबाधनम्' ॥३१४॥

---

तदेवं सूत्रमर्थापत्त्यभिप्रायमिति वर्णितं, शक्यते त्वनुमानाऽभिप्रायमपि वर्णयितुमित्याह परार्थेति[३०९] । सम्बन्धाऽपेक्षया हि शक्यते स्थिरत्वमनुमातुं, तत्सूचनार्थं चेदं परार्थदर्शनार्थत्वमुच्यते, तद्धि तया विना ऽनुपपन्नं शक्नोति तां सूचयितुमिति । तदेव विवृणोति न साधनेति[३१०] । यो ऽनुमानप्रयोगं सूचयितुं योग्यः परार्थदर्शनं नामार्थः सो ऽयं सूत्रकारभाष्यकाराभ्यां निरूप्यते न तु साधनमिति। अत्र त्वस्मदीये ग्रन्थे प्रयोग उच्यतइत्याह अत्रेति[३११] । धूमत्वमग्नेर्गमकं गोत्वं विषाणित्वस्येति । ननु साध्यहीनो दृष्टान्तो, जातिवादिनामेव हि धूमत्वादिकं नित्यं नान्येषाम्,अत्राह अन्याऽपोहनेति[३१२]। परोक्ताऽनुमानदूषणार्थमेवेदं सूत्रमित्याह स्ववाक्येति[३१३] । एवं हि

---

* अपेक्षं सामान्येति ३ पु. ।

अर्थाभिधानसामर्थ्यमभ्युपेत्य च साधयेत्* ।
पूर्वोऽभ्युपगतेनापि† नाशित्वं बाधते परः ॥३१५॥
आर्थप्रतीतिसामर्थ्यैः प्रतिशास्त्रमुपाश्रितैः ।
आगमेनाऽ‡पि नाशित्वं बाध्यते सर्ववादिनाम् ॥३१६॥
सर्वलोकप्रसिद्ध्या च बाधः पूर्वोक्तया दिशा ।
अनुमानविरोधो ऽपि प्रागुक्तेनैव हेतुना ॥३१७॥
प्रत्यक्षेण विरुद्धत्वं संख्याभावे ऽभिधास्यते ।
'वक्तव्यश्चैष कः शब्दो नाशित्वेन प्रसाध्यते ॥३१८॥

---

परैरनुमानमुक्तम्, अनित्यः शब्दो जातिमत्त्वे सत्यैन्द्रियकत्वात्पटवदिति, तदिह स्ववाग्विरोधं तावद्दर्शयति प्रतिज्ञेति सार्द्धेन । यदिदं प्रतिज्ञया पक्षस्याऽभिधानमनेनैवाऽर्थाच्छब्दस्य नित्यत्वमापन्नं, क्षणिकत्वेऽर्थप्रत्यायकत्वाऽयोगात्, तदनेन प्रतिज्ञायाः स्वार्थोऽभिधानेनैव साध्यार्थस्याऽनित्यत्वस्य बाध इति । पूर्वाऽभ्युपगमविरोधं दर्शयति अर्थेति[३१५] । साधनं हि वदता ऽवश्यम् अर्थप्रत्यायकत्वं शाब्दानामुपगतम्, अनित्यत्वे च तद्बाधा स्यादिति । अभ्युपगताऽऽगमविरुद्धश्चायं पक्ष इत्याह अर्थेति[३१६] । सर्वलोकप्रसिद्धिविरुद्धश्चायम्, अनित्यत्वे पूर्वोक्तन्यायेन लोकप्रसिद्धप्रत्यायकत्वबाधादित्याह सर्वलोकेति[३१७] । अपरमपि दोषद्वयमाह अनुमानेति ।

स्वयमिदानीं दोषान्तराणि दर्शयिष्यन् धर्मिणं तावद्विकल्पयति वक्तव्य इति[३१८] द्वयेन। सत्त्वरजस्तमःस्वभावः सांख्यानाम्,आर्हतानां

---

* साधनमिति २ पु. ।

† अभ्युपगतेनैवेति २ पु. ।  ‡ आगमैरिति २ पु. ।

त्रिगुणः पौद्गलो वा ऽयमाकाशस्याऽथ वा गुणः ।
वर्णादन्यो ऽथ नादात्मा वायुरूपो ऽर्थवाचकः॥३१९॥
पदवाक्यात्मकः स्फोटः सारूप्याऽन्यनिवर्त्तने ।
एतेषामस्त्वनित्यत्वं नाऽस्माकं तेषु नित्यता ॥३२०॥
अप्रसिद्धविशेष्यत्वमाश्रयाऽसिद्धहेतुता ।
अथाऽस्मदिष्टः पक्षः स्याद्द्वयमेतत्समं तव ॥३२१॥
शब्दमात्रमथोच्येत शब्दत्वं च तथा सति ।
अनित्यं तच्च सर्वेषां नित्यमिष्टं विरुध्यते ॥३२२॥
यत्किञ्चिदिह सामान्यं नित्यं सर्वेण कल्प्यते ।
अनित्यत्वे हि नैतत्स्याद्व्यापि व्यक्तिषु कासु चित्॥३२३॥

---

पुद्गलारब्धः, काणादानामाकाशगुणो नादात्मा शङ्खादिविषयः, शिक्षाकारस्य वायुरूपो ऽर्थवाचकः, अर्थवाचकरूपेण शब्दात्मना परिणतो वायुरिति यावत्, स्फोटश्च द्विविधो वैयाकरणाऽभिमतः, सारूप्यान्यनिवर्त्तने च सांख्यसौगताऽभिमते, इति । एषु पक्षेषु सिद्धसाध्यतेत्याह एतेषामिति[३२०] । एतेषु चाऽप्रसिद्धविशेष्यत्वमाश्रयाऽसिद्धहेतुकत्वं चाऽनुमानस्य स्यादित्याह अप्रसिद्धेति[३२१] । इदं च दोषद्वयं नादाऽतिरिक्तेषु द्रष्टव्यं, न हि नादस्य प्रत्यक्षसिद्धस्याऽसिद्धिः, न शब्दत्वाऽतिरिक्तो नादो ऽस्तीति चेन्न, निरस्तत्वात्, अपि चाऽस्तु शब्दत्वमेव नादः, तथापि तस्यास्तित्वात्कथमसिद्धिः, किं च, एवं सिद्धसाध्यता ऽप्यनुपपन्ना स्यात्, न शब्दत्वस्यानित्यत्वं सिद्धमिति ।

अस्मदिष्टे तु शब्दे प्रतिवादिनामिदं दोषद्वयं स्यादित्याह अथेति । यदि त्वविवक्षितविशेषं शब्दमात्रं धर्मीक्रियते ततो मा-

व्यक्तयः शब्दशब्देन न शक्यन्ते च भाषितुम् ।
तासां जात्यतिरेके च पूर्वोक्ते एव दूषणे ॥३२४॥
आश्रयाऽनतिरेके तु जाताविव विरोधिता ।
अप्रसिद्धविशेष्यत्वं स्यात् परेषां च पूर्ववत् ॥३२५॥
अनित्यत्वं च नाशित्वं यद्वा*त्यन्तिकमुच्यते ।
ततो ऽस्मान्प्रति पक्षः स्यादप्रसिद्धविशेषणः ॥३२६॥

---

शब्दस्यापि सामान्यवचनत्वात्तदनित्यत्वे ऽभ्युपगमविरोधः स्यादित्याह शब्देति[३२२] । तदभ्युपगममेव दर्शयति यत् किं चिदिति[३२३] । सारूप्याऽपोहजात्यात्मकमित्यर्थः । कारणमाह अनित्यत्वइति । किं च, शब्दत्वसामान्यं पक्षो व्यक्तिर्वा, सामान्ये तावदभ्युपगमविरोधो दर्शितः, व्यक्तयस्तु शब्दशब्देनाऽनभिधेयत्वादनुपात्ता इत्यनुपात्तविशेष्यः पक्षः स्यादित्याह व्यक्तय इति[३२४] ।

भवतु वा कथं चिल्लक्षणयोपादानं, तथापि विकल्पनीयं, किं जातेरत्यन्तभिन्नाः पक्षीक्रियन्ते उताऽभिन्ना इति, पूर्वस्मिन् पक्षे ऽस्माकमप्रसिद्धविशेष्यत्वमाश्रयासिद्धता च हेतोरित्याह तासामिति । अभिन्नत्वे तु जातिवदेव पूर्वाऽभ्युपगमविरोधः, जातेर्हि नित्यत्वाभ्युपगमे तदभिन्नानां व्यक्तीनामपि बलान्नित्यत्वमभ्युपगतमित्याह आश्रयेति[३२५] । भिन्नाऽभिन्नत्वे तु तथाऽप्रसिद्धविशेष्यत्वाऽऽश्रयाऽसिद्धी स्याताम् 'अथास्मदिष्टः पक्षः स्या'ऽदित्यत्रोक्तवदित्याह अप्रसिद्धेति ।

धर्ममप्यनित्यत्वं विकल्प्य दूषयति अनित्यत्वमिति[३२६] । न-

---

* यदेति २ पु. ।

यथा कथञ्चिदिष्टा चेदनित्यव्यपदेश्यता ।
अनभिव्यक्त्यवस्थातः सा ऽभिव्यक्त्यात्मनेष्यते ॥३२७॥
ऐकान्तिकविकल्पे च व्यतिरेकविनाशयोः ।
पूर्वोऽभ्युपगमेनापि विरोधः सांख्यजैनयोः ॥३२८॥
प्रत्यक्षैन्द्रियकत्वादेरौलूक्यानामसिद्धता ।
अनेकशब्द*कल्प्यत्वादाद्यमध्यमवेषु च ॥३२९॥
अन्त्यशब्दे ऽपि पक्षे स्यादाश्रयाऽसिद्धता मम ।
सर्वशब्देषु साध्येषु हेतुरव्यापकस्तव ॥३३०॥

---

हि निरन्वयविनाशो ऽस्माकं क्व चिदस्तीति । कथं चिन्नाशे सिद्ध-साधनमित्याह यथेति[३२७] । अभिव्यक्त्यात्मना हि शब्दविनाशिता ऽस्त्येवाऽनन्तरमेवाऽनभिव्यक्त्यवस्थोपजननादिति ।

सांख्यजैनयोश्चैकान्तिकव्यतिरेकविनाशप्रतिज्ञायामभ्युपगमविरोधो ऽपि स्यात्, सांख्यस्याऽवस्थान्तरापत्तिमात्रविनाशाऽभ्युपगमात्, जैनस्यापि स्याद्वादिनो ऽनैकान्तिकवादाश्रयणादित्याह ऐकान्तिकेति[३२८] ।

हेतुमिदानीं दूषयति प्रत्यक्षेति[३२९] । वैशेषिकनैयायिका ह्यनेकान् शब्दान् सन्ततिरूपेण कल्पयन्ति, ते यद्याद्यमध्यमान् शब्दान् पक्षीकुर्युः ततस्तेषामप्रत्यक्षत्वादसिद्धो हेतुरिति। अन्तिमे तु अस्माकं विशेष्याऽसिद्धिराश्रयाऽसिद्धहेतुना च स्यात्, न ह्यस्माकमन्तिमो नाम शब्दो ऽस्तीत्याह अन्त्येति[३३०] । अविशेषेण तु सर्वशब्दपक्षक-

---

* शक्तीति १ पु. पा. ।

सामान्यैर्व्यभिचारश्च जातिमत्त्वे सतीति चेत् ।
तथाप्यसिद्ध*मस्माकं तद्वत्त्वं व्यतिरिक्तया ॥३३१॥
अनन्यया† तु तद्वत्ता तवाऽसिद्धेत्यहेतुता ।
अथाऽनुवृत्तिव्यावृत्तिहेतुना युज्यते मतुप् ॥३३२॥
तथाप्यस्त्येव तद्वत्ता तेषां सामान्यबुद्धितः ।
गोत्वादिष्वपि सामान्यं सामान्यमिति‡ नो मतिः॥३३३॥

---

रणे भागाऽसिद्धो हेतुराद्यमध्यमेष्वव्याप्तेरित्याह सर्वेति । दोषान्तरमाह सामान्यैरिति[३३१] । जातिमत्त्वे सतीति विशेषणे ऽप्यस्त्येव व्यभिचार इत्यनुषङ्गेणाह जातिमत्त्वइत्यप्यन्तेन । गोत्वादीनामपि सत्तायोगादस्त्येव जातिमत्त्वमिति ।

जातिमत्त्वमपि विकल्प्य दूषयति असिद्धमिति । व्यभिचारपरिहाराय विशेषणान्तरं शङ्कते अथेति[३३२] । येन धर्मेण भावो भावान्तरेषु केषु चिदनुवर्त्तते केभ्यश्चिद् व्यावर्त्तते स धर्मो ऽनुवृत्तिव्यावृत्तिहेतुरित्युच्यते, यथा द्रव्यगुणकर्माऽवान्तरसामान्यानि घटत्वे, न हि घटो घटान्तरेष्वनुवर्त्तते पटादिभ्यश्च व्यावर्त्तते, तथा गकारादिः शब्दः शब्दत्वेन शब्दान्तरेष्वनुवर्त्तते रूपादिभ्यश्च व्यावर्त्तते; तदेष प्रयोगः, अनित्यः शब्दः, अनुवृत्तिव्यावृत्तिहेतुमत्त्वे सत्यैन्द्रियकत्वाद् घटवदिति । न चैवं सत्तायोगिभिर्गोत्वादिसामान्यैर्व्यभिचारः, सत्ताया महासामान्यस्य केवलाऽनुवृत्तिहेतुत्वादिति । परिहरति तथापीति[३३३] । गोत्वादीनामपि सामान्यबुद्धिविषयत्वादस्त्येवा-

---

* तथार्थसिद्धमिति ३ पु. पा. । † अनन्यथेति ३ पु. ।
‡ गोत्वादिष्वपि सर्वेषु सामान्यमितीति ३ पु. ।

व्यावर्त्तते विशेषेभ्यः सेति शब्देन तुल्यता ।
नित्यत्वं चाऽनुगाम्येषामनित्येभ्यो निवर्त्तितम् ॥३३४॥
अथाऽत्र गौणमिथ्यात्वे स्यातां वर्णेषु ते समे ।
योगीन्द्रियाऽवगम्यैश्च व्यभिचारो ऽणुभिस्तव ॥३३५॥
नित्यानामपि तेषां हि प्रत्यक्षत्वादिसंभवः ।
अथ स्यात्तन्निवृत्त्यर्थमस्मदादिविशेषणम् ॥३३६॥
अहंप्रत्ययविज्ञेयैरात्मभिर्व्यभिचारिता ।
लिङ्गशब्दाद्यभावेन मनस्संयोगहेतुकम् ॥३३७॥

---

ऽनुवृत्तिव्यावृत्तिहेतुमत्त्वमिति । एतदेव विवृणोति गोत्वादिष्विति । यः खलु सामान्यबुद्धिशब्दयोरालम्बनत्वेनाऽऽकृतिवादे दर्शितो धर्मो भिन्नेष्वेकस्य वृत्तिर्नाम तेन गोत्वादिकं सामान्यं सामान्येष्वनुवर्तते विशेषेभ्यश्च व्यावर्ततइति अस्त्येवाऽनुवृत्तिव्यावृत्तिहेतुभूतोपाधिमत्ता गोत्वादीनामिति ।

धर्मान्तरमपि दर्शयति नित्यत्वमिति[३३४] । अथ सामान्येषु सद्वस्त्वं गौणं मिथ्या चेत्युच्यते तच्छक्यं वाङ्मात्रेण शब्दे ऽपि वक्तुम्, इत्यसिद्धता हेतोरित्याह अथेति[३३५] । अथोपाधिनिवृत्त्यर्थमवान्तरजातिमत्त्वं सतीत्युच्यते ततः परमाणुभिः पृथिवीत्वाद्यवान्तरसामान्ययोगिभिर्व्यभिचार इत्याह योगीति । तदेव विवृणोति नित्यानामिति[३३६] ।

शङ्कते अथेति । दूषयति अहमिति[३३७] । ननु चाऽऽत्मा प्राणादिलिङ्गगम्यः शब्दगम्यो वा, नैन्द्रियकः, तत्राह लिङ्गेति । अहं-

प्रत्यक्षं चैतदेकान्तात् सुखादाविव कल्प्यते* ।
बाह्येन्द्रियाऽवगम्यत्वमथ कुर्याद्विशेषणम् ॥३३८॥
तथापि व्यभिचार्येव जातीनां जातिमत्तया ।
एकाऽर्थसमवायेन जातिर्जातिमती हि वः ॥३३९॥
आधारत्वमथोच्येत नाऽमूर्ता ऽऽधीयते ह्यसौ ।
समवायं यदि ब्रूयास्त्वदीयः सो ऽपि वारितः ॥३४०॥
अभेदवृत्तिं ब्रूयाश्चेज्जातीनामपि सेष्यते ।
क्लेशश्च नित्यवैधर्म्ये कृतो बहुविशेषणैः ॥३४१॥

---

बुद्धिगम्यो ऽयं, न च तत्समये सर्वदा लिङ्गाद्यनुसंधानमस्ति, दर्शितं हि प्राणादीनामलिङ्गत्वं मानसप्रत्यक्षगम्यत्वं चाऽऽत्मवादे, शब्दश्चाऽविनाशी चेत्यादिः शरीरादिविवेके प्रमाणं न स्वरूपमिति ।

पुनरपि विशेषणान्तरं शङ्कते बाह्येति[३३८] । निराकरोति तथापीति[३३९] । एतदेव विवृणोति एकार्थेति । गोत्वादीनामपि ह्यस्ति पृथिवीत्वाद्यवान्तरसामान्यैरेकार्थसमवायसम्बन्धात्तद्वत्त्वमिति ।

शङ्कते आधारत्वमिति[३४०] । गकारादिर्हि शब्दत्वस्याऽवान्तरजातेराधारः, न तथा गोत्वादीति । परिहरति नेति । जातिरमूर्ता न क्व चिदाधीयते, अतो ऽसिद्धं गकारस्य जात्याधारत्वमिति ।

शङ्कते समवायमिति । निराकरोति त्वदीय इति । पुनः शङ्कते अभेदेति[३४१] । परिहरति जातीनामिति । अस्ति हि वृक्षत्वशिंशपात्वादीनां द्रव्यरूपेण सत्तारूपेण वा परस्पराऽभेद इति ।

---

* कल्पते इति २ पु. पा. ।

स्वशब्देनैव तान्युक्त्वा* तेभ्यो ऽन्यत्वं वरं कृतम् ।
एवञ्च शक्यते वक्तुं नित्यता ऽप्यम्बरादिवत् ॥३४२॥
तद्भिन्ना ऽनित्यवृक्षादिव्यतिरिक्तत्वहेतुका ।
केवलैन्द्रियकत्वे ऽपि सांख्यबौद्धप्रकल्पिते ॥३४३॥
जात्या साधितयेदानीं व्यभिचारः प्रतीयते† ।
'असिद्धे पक्षधर्मत्वे यथैव प्रतिवादिनः ॥३४४॥

---

तदेवमनेकविशेषणोपादाने ऽपि शब्दस्य नित्यवैधर्म्योऽसिद्धेः स्वशब्देनैव नित्यानुपादाय तेभ्यो ऽन्यत्वादित्युच्यताम्, अनित्यः शब्दः उभयसिद्धनित्यव्योमादिव्यतिरेकादिति, तदाह क्लेश इति । भवतु तर्हि तथेति चेत्तत्राह एवमिति[३४२] । नित्यः शब्दः, उभयसिद्धाऽनित्यवृक्षादिव्यतिरेकात्, व्योमवदिति । सेयं प्रकरणसमा नाम जातिरिति ।

यदि सादृश्याऽपोहसामान्यवादिनौ सांख्यबौद्धौ जातेरभावात्तत्राऽनैकान्तिकत्वं नास्तीति मत्वा निर्विशेषणमेवैन्द्रियकत्वं ब्रूयातां ततः तयोरपीदानीमाकृतिवादे जातेः साधितत्वादस्त्येव तया व्यभिचार इत्याह केवलेति[३४३] ।

ननु साधितायामपि जातौ तयोरसंप्रतिपत्तेः कथं व्यभिचारो, ऽत आह असिद्धे इति [३४४] द्वयेन । मा भूत्तयोः संप्रतिपत्तिः, प्रतिवादिनस्तु मीमांसकस्य सा ऽस्त्येव प्रत्यक्षा चेति तत्र व्यभिचारो दूषणमेव, प्रतिवादिबोधनार्थं हि साधनं, तस्य त्रीणि लक्ष-

---

* तामुक्तेति २ पु. पा. ।

† इदमर्धत्रयं त्रुटितं १ पु. ।

न हेतु र्लभ्यते, तद्वदन्वयव्यतिरेकयोः ।
तत्र यद्यप्यसिद्धा स्याज्जातिः साधनवादिनः ॥३४५॥
तावत्तथाप्यहेतुत्वं यावत्सा न निराकृता' ।
कार्या चैन्द्रियकत्वे ऽपि किं वस्त्विति निरूपणा ॥३४६॥
व्यक्त्यनन्यत्वनानात्वभेदाऽभेदेषु च स्फुटा ।
तत्राऽसाधारणाऽसिद्ध*साध्यहीनसपक्षताः ॥३४७॥

---

णानि, पक्षधर्मत्वं, सपक्षान्वयो,विपक्षव्यतिरेकश्च, तत्र प्रतिवादिनः पक्षधर्मत्वाऽसिद्धौ यथा न हेतुत्वं सिद्ध्यति तथा सपक्षाऽन्वयविपक्षव्यतिरेकयोरसिद्धयोर्न सिद्ध्यत्येव हेतुत्वम्,अतो न यावन्मीमांसकसंमता जातिर्निराकृता तावत् ततो विपक्षाद्धेतोर्व्यतिरेकाऽसिद्धेर्न हेतुत्वमिति ।

किं चेदमैन्द्रियकत्वमपि कीदृशमिति विकल्पनीयमित्याह कार्येति[३४६] । किं स्वाश्रयेभ्यो ऽन्यदनन्यद्वा, प्रत्याश्रयभिन्नमभिन्नं, वा सर्वत्रैकरूपं वेति । तत्र दूषणमाह तत्रेति[३४७]। एतेषु विकल्पेषु आद्यो विकल्पो येन वादिना ऽङ्गीकृतः तं प्रति यथाविकल्पमसाधारण्यम्, असिद्धिः, साध्यहीनसपक्षता दोषा वक्तव्याः, तथा हि, यदि तावद्यक्तिभ्यो ऽन्यत्तदपि प्रतिव्यक्ति भिन्नं ततस्तस्य शब्दाऽतिरेकेणाऽन्यत्र क चिदप्यभावाद्गन्धवत्त्ववदसाधारणत्वं, व्यक्त्यन्यत्वे चाऽस्माकमसिद्धिरनन्यत्वं तु भवतामसिद्धं, यदि तु व्यक्तिभ्यो ऽनन्यत्सर्वत्र चैकरूपमित्युच्यते ततः पूर्वानुयायिनस्तस्य नित्यत्वात् तदभिन्नस्य घटादेर्नित्यत्वमेवाऽऽपन्नमिति साध्यहीनता दृष्टान्तस्येति ।

---

* सिद्धेरिति ३ पु. पा. ।

विकल्पिताऽनुसारेण वक्तव्या वाद्यपेक्षया ।
विरुद्धाऽव्यभिचारित्वं वक्ष्यमाणैश्च हेतुभिः ॥३४८॥
'केवलाऽऽकाशवर्त्तित्वा*दौलूक्यस्य विभुत्ववत् ।
तथा च श्रोत्रगम्यत्वाच्छब्दत्ववदिति स्थितिः† ॥३४९॥
प्रागुक्तेन विभुत्वेन व्योमवच्चास्य नित्यता' ।
सपक्षो ऽपि‡ विकल्प्यो ऽत्र श्रुत्यर्थे साध्यहीनता ॥३५०॥
व्यक्तिलक्षणपक्षेऽ पि जात्यन्याऽनन्यकल्पना ।
अन्यत्वे धर्म्यसिद्धिर्नो ऽनन्यत्वे ऽपि परान्§ प्रति॥३५१॥
अविशेषे|| ऽपि नाऽनित्यं न नित्यं वस्तु तन्मम ।
अंशो ह्येतस्य जात्याख्यो नित्यो ध्वंसीतरो मतः ॥३५२॥

---

दोषान्तरमाह विरुद्धेति[३४८]। तानेव दर्शयति केवलेति[३४९] सार्द्धेन । घटादिसंयोगैरनैकान्तिकत्वं मा भूदिति केवलग्रहणम । आकाशे हि शब्दस्य परिसमाप्यवृत्तिर्न तत्र चाऽन्यत्र च व्यासज्येति ।

दृष्टान्तमपि विकल्प्य दूषयति सपक्ष इति[३५०]। घटत्वं श्रुत्यर्थः, तच्च नित्यमिति। व्यक्तिलक्षणामपि विकल्प्य दूषयति व्यक्तीति[३५१]। यदि तु श्रौतलाक्षणिकांशविशेषमनुपादाय संमुग्धमेव वस्तु दृष्टान्त इत्युच्यते, तत्राह अविशेषे इति[३५२]। कथमित्याह अंश इति। ततश्च न तेन दृष्टान्तेन शब्दस्यैकान्तिकमनित्यत्वं सिध्यतीति ।

---

* गामित्वादिति २ पु. पा. ।

† स्थितमिति २ पु. पा. ।

‡ चेति २ पु. ।

§ परमिति २ का. पा. ।

|| अविनाशे इति २ पु. पा. ।

'अनित्यता विकल्प्याऽत्र, नाशश्चेत् साध्यहीनता ।
ममाऽन्यथा तु भवता'मित्येषा दूषणोक्तिदिक् ॥३५३॥
सर्वेण शब्दरूपं च वाचकं नित्यमिष्यते ।
तत्स्वरूपे विवादस्तु* वर्णास्तत्र च साधिताः ॥३५४॥
सम्बन्धनित्यतायाः किं शब्दाऽधिकरणेऽभिधा ।
तादर्थ्याच्छब्दचिन्तायाः सैव ह्यत्राऽऽधिकारिकी॥३५५॥

---

दृष्टान्तेऽप्यनित्यतां विकल्प्य दूषयति अनित्यतेति[३५३] पादत्रयेण । विनष्टो हि घटो द्रव्यरूपेण सामान्यरूपेण वाऽवतिष्ठतइत्यात्यान्तिको विनाशः, कथं चिन्नाशस्तु तवाऽसिद्ध इत्युसंहरति इतीति।

किं च, सर्ववादिनामविवादं वाचकरूपस्य नित्यत्वं, तत्स्वरूपमात्रं तु विप्रतिपन्नम्, अनित्यशब्दवादिनोऽपि हि अत्यन्तसारूप्याऽपोहरूपं नित्यमेव वाचकं मन्यन्ते, अत्यन्तसारूप्यं गत्वादिकं च यदा निराकृतं तदा वर्णस्वरूपमेव नित्यं सिद्धं भवति, सिद्धेऽपि तस्मिन् परोक्ताऽनित्यत्वहेतुपरिहारमात्रार्थमिदमधिकरणमित्याह सर्वेणेति[३५४] ।

सर्वत्र यौगपद्यात्†।"गोशब्द उच्चरिते सर्वगवीषु युगपत् प्रत्ययो भवति अत आकृतिवचनः शब्दो, न चाऽऽकृत्या शब्दस्य संबन्धः शक्यते कर्त्तु"‡मिति भाष्यं सम्बन्धनित्यतामेव प्रतिपादयति संबन्धेति ।

तत्र कश्चित्समाधत्ते तादर्थ्यादिति । संबन्धनित्यतैव हि महा-

---

* विसंवाद इति ३ पु. पा. ।

† जै. सू. अ. १ पा. १ सू. १९ ।

‡ शा. भा. पृ. २९ प. २१ ।

यद्वा सम्बन्धनित्यत्वद्वारेयं शब्दनित्यता ।
साध्यते, न विनष्टे हि शब्दे तन्नित्यता भवेत् ॥३५६॥
अनित्यानां हि नित्यात्मा यः सम्बन्धः प्रतीयते ।
आश्रयाणामनुच्छेदान्न क चित्स विरुध्यते* ॥३५७॥
न चाऽनुच्छेदरूपेण गोशब्दानामिह स्थितिः ।
न चैषां गम्यते भेदस्तेनैकस्यैव नित्यता ॥३५८॥
कृत्रिमत्वे च† सम्बन्धस्तत्प्रयोगाऽप‡वर्जनात् ।
तदेकव्यक्तिनिष्ठत्वान्नैव सार्वत्रिको भवेत् ॥३५९॥

---

प्रकरणे प्रकृता, शब्दनित्यत्वमपि हि तदङ्गत्वेनैव चिन्तितं, तस्मिन्समाप्ते प्रकृतायामेव संबन्धनित्यतायां युक्त्यन्तरमुच्यते, अतो नाऽसंगतिरिति । तदिदमयुक्तमसमाप्तत्वाच्छब्दचिन्तायाः, ततः पक्षान्तरमाह यद्वेति[३५६] । ननु विनश्वराणामपि व्यक्तीनां जातिसंबन्धो नित्यो दृष्टो, ऽत्राह नित्यानामिति[३५७] । बहुव्यक्त्याश्रयं तत्र संबन्धनित्यत्वं, ता ह्यनुच्छेदरूपेण सर्वदा सन्त्येवेति । न चैव मिह संभवतीत्याह न चेति[३५८] । कारणमाह न चेति । चशब्दो हेताविति ।

भवतु संबन्धनित्यतया शब्दनित्यत्वं, सैव तु कथमित्यत आह कृत्रिमत्वइति[३५९] । यदा हि न कश्चिदपि शब्दः केन चिदप्यर्थेन संबद्धः तदा ऽङ्गुल्या ऽर्थं निर्दिश्य संबन्धः क्रियते, अङ्गुलीप्रयो-

---

* निरुध्यते इति का. पा. ।

† अपीति १ पु. ।

‡ प्रयोगो ऽपेति २ पु. पा. ।

पार्थिवद्रव्यसत्तादिलाङ्गूलत्वादिसङ्करात् ।
विना प्रयोगभूयस्त्वं न स्याद्गोत्वाऽवधारणा* ॥३६०॥
तस्मादकृत्रिमः शब्दो न कदा चिद्विनश्यति ।
नित्येन नित्यसम्बन्धादाकाशपरमाणुवत् ॥३६१॥
यद्वा सम्बन्धनित्यत्वं सूत्रे ऽस्मिन्नैव वर्ण्यते ।
शब्दनित्यत्वमात्रे ऽपि† भाष्यं ह्येतस्य युज्यते ॥३६२॥
संमुग्धाऽनेकसामान्य‡विषयो हि सकृच्छ्रुतः ।
निष्कृष्टस्वार्थवाचित्वं शब्दो न प्रतिपद्यते ॥३६३॥

---

गश्चैकव्यक्तिनिष्ठ इति तत्प्रयोगो ऽपवृक्तः, संबन्धो ऽप्येकव्यक्तिनिष्ठो न सार्वत्रिकः स्यात्, तत्र न सर्वगवीषु प्रत्ययः सिद्ध्येदिति ।

अथापि जातिमेव निर्दिश्य संबन्धः क्रियते तथापि बहुजातिसंनिधानान्न सकृच्छ्रवणे जातिनिर्धारणमित्याह पार्थिवेति[३६०] । एव मुपपादितं संबन्धनित्यत्वद्वारं शब्दनित्यत्वं प्रयोगेण दर्शयति तस्मादिति[३६१] ।

स्वमतेनेदानीं सूत्रार्थमाह यद्वेति[३६२] । शब्दनित्यत्वमेवात्रोच्यते न संबन्धनित्यत्वमिति ।

कथं तर्हि भाष्यमित्यत आह शब्देति । भाष्यार्थं दर्शयति संमुग्धेति§[३६३] । कर्तुमिति च भाष्ये कथनं ग्रहणं वोच्यते न विना

---

* अवधारणा दिति का. पा. । अवधारणं २ पु. ।

† मात्रे तु इति ३ पु. पा. ।

‡ संस्थानैकत्वसामान्ये इति ३ पु. पा. ।

§ संस्थानेतीति प्रतीकाकारः ३-४ पु. । एवमेव मूले ऽपि पाठद्वैविध्यं दृश्यते ।

'बहुभिः श्रवणैरेष प्राणित्वादीनि वर्जयेत् ।
शुक्लादिगमनादीनि सास्नालाङ्गूलतादि च ॥३६४॥
शाबलेयादिखण्डादिव्यक्तीश्च स्वनिबन्धनाः ।
निष्कृष्टगोत्ववाचित्वं चिरेण प्रतिपद्यते' ॥३६५॥
तावत्कालं स्थिरं चैनं कः पश्चान्नाशयिष्यति ।
अनपेक्षत्वसूत्रेण* तच्चैतत्साधयिष्यते ॥३६६॥
क्रियावतामभेदे हि क्रियावृत्तिषु कृत्वसुच् ।
तत्प्रयोगाद् ध्रुवं तस्य शब्दस्याऽऽवर्त्तते क्रिया ॥३६७॥

---

प्रयोगबाहुल्येन सकृच्छ्रुतस्य निष्कृष्टस्वार्थसार्थवाचित्वं कथयितुं ग्रहीतुं वा शक्यमिति भाष्यार्थ इति ।

"नित्ये खलु गोशब्दे"† इत्यादिभाष्यार्थमाह बहुभिरिति[३६४] द्वयेन। स्वनिबन्धना इति[३६५]। व्यक्तीनां शब्दभात्के निवन्धनं तज्जातीयेषु सर्वेषु चाऽप्रयोगात् न स्वरूपमतस्तासामनभिधेयतेति ।

नन्वेवमपि स्थायित्वमात्रं सिद्ध्यति न नित्यत्वमत्राह ताबदिति । तच्चाऽनपेक्षत्वसूत्रे वक्ष्यतइत्याह अनपेक्षत्वेति ।

संख्याऽभावात्‡ । "अष्टकृत्वो गोशब्द उच्चारित इति हि वदन्ति नाष्टौ गोशब्दा"§ इति भाष्यं, तस्याऽभिप्रायमाह क्रियावतामिति[३६७]। योयं क्रियाभ्यावृत्तिगणने विहितः कृत्वसुच्प्रत्ययः स च क्रियावतामभेदे भवति, तेन कृत्वसुच्प्रत्ययप्रयोगात्तस्यैव पूर्वोच्चरितकृत्वसुच्कस्य पुनरुच्चारणमनुवर्ततइति ।

---

* जै. सू. अ. १ पा. १ सू. २१ ।
† शा. भा. पृ. २९ प. २५ । ‡ जै. सू. अ. १ पा. १ सू. २० ।
§ शा. भा. पृ. ३० प. ४ ।

पुनः प्रयोगविज्ञानं न हि शब्दान्तरे भवेत् ।
तस्यां च* शब्दसंख्यायामष्टाविति भवेच्छ्रुतिः ॥३६८॥
भुक्तवन्तो ऽष्टकृत्वो ऽद्य ब्राह्मणा इति दृश्यते ।
द्रव्यभेदे ऽप्यनेकान्तं मत्वा† ऽऽह किमतो यदि ॥३६९॥
तस्मात्तत्परिहाराय प्रमाणान्तरमुच्यते ।
प्रत्यभिज्ञानमेतेन प्रयोगेणोपलक्षितम् ॥३७०॥
कृत्वसुच्चापि नैवायं व्यभिचारीति गम्यते ।
यतः प्रयुज्यते चैकब्राह्मणत्वाविवक्षया ॥३७१॥

---

कथमुच्चारणावृत्तौ शब्दाऽभेदसिद्धिरित्यत आह पुनःप्रयोगेति[३६८] । गोशब्दोच्चारणस्य ह्यत्रावृत्तिरुच्यते, सा कथं शब्दान्तरत्वे स्यादिति । शब्दभेदे ह्यष्टौ गोशब्दा इति स्यात्, न च तथा दृश्यतइत्याह तस्यां चेति ।

"किमतो यद्येव"‡मिति भाष्यार्थमाह भुक्तवन्त इति[३६९] । अनेन वचनेन गम्यते प्रत्यभिजानन्तीति । परिहारभाष्याभिप्रायमाह तस्मादिति[३७०] । नायं कृत्वसुच्प्रत्ययप्रयोगः स्वरूपेणैव शब्दाऽभेदस्य लिङ्गतयोच्यते येनाऽनैकान्तिकत्वमुच्यते, किं तु प्रायेण प्रत्यभिज्ञासाहचर्यं कृत्वसुच्प्रत्ययस्यास्तीति तदुपलक्षणार्थो ऽयं कृत्वसुजुपन्यास इति । यद्वा कृत्वसुजपि न व्यभिचारीत्याह कृत्वसुजि-

---

* सत्यां चेति २ पु. पा. ।

† गत्वेति २ पु. पा. ।

‡ शा. भा. पृ. ३० प. ९ ।

प्रमाणं प्रत्यभिज्ञानं दृढेन्द्रियतयोच्यते ।
इतरो ऽसिद्धतामाह सादृश्याद् ग्राह्यदूषणात् ॥३७२॥
'नित्यं सदृश एवेति यत्र रूढा मतिर्भवेत् ।
स इति प्रत्यभिज्ञानं भ्रान्तिस्तत्राऽवकल्पते ॥३७३॥
इह नित्यं स एवेति विज्ञानं जायते दृढम्' ।
तदा ऽस्तित्वाऽधिकत्वाच्च प्रामाण्यं तस्य साधितम् ॥३७४॥

---

ति[३७१] । कथमित्याह यत इति । ननु स्वसंवेद्यमेव प्रत्याभिज्ञानं, किमत्र कृत्वसुजुपलक्षणेनाऽत आह प्रमाणमिति[३७२] । सत्यमात्मीयं प्रत्यभिज्ञानं स्वसंवेद्यं, तस्य तु कारणदोषाशङ्कानिराकरणाय सर्वजनीनत्वं साधयितुं कृत्वसुच्प्रयोगः, तदुक्तं भाष्यकारेण "वयं तावत्प्रत्यभिजानीमः, न नः करणदौर्बल्यमेवमन्ये ऽपि प्रत्यभिजानन्ती"*ति ।

"अन्यत्वे ऽपि सति सादृश्येन व्यामूढाः स इति वक्ष्यन्ती"†ति भाष्यार्थमाह इतर इति । इन्द्रियदोषनिमित्ता हि भ्रान्तिः सर्वव्यापितया निराक्रियेत, विषयदोषनिबन्धना तु सर्वेषामपि स्यादेवाऽतो ऽसिद्धं प्रत्यभिज्ञायाः प्रामाण्यमिति ।

"तन्न, न हि ते सदृश इति प्रतिपद्यन्ते किं तर्हि स"‡ इति परिहारभाष्यं, तस्याऽभिप्रायमाह नित्यमिति[३७३] सार्द्धेन । नन्वेवमसत्यपि भ्रान्तित्वे गृहीतग्राहित्वात् अप्रामाण्यं प्रत्यभिज्ञायाः, तत्राह तदेति[३७४] ।

---

* शा. भा. पृ. ३० प. ६ ।

† शा. भा. पृ. ३० प. ९ ।

‡ शा. भा. पृ. ३० प. १० ।

नित्यप्रसङ्गद्वारेण स्पष्टयोरप्यनित्ययोः ।
प्रत्यभिज्ञानसद्भावादनैकान्तिकतोच्यते ॥३७५॥
न प्रत्यक्षे इति त्वेतदसंबद्धमिवोत्तरम् ।
यतो नाऽत्र परेणोक्ता प्रत्यक्षत्वेन नित्यता ॥३७६॥
प्रत्यक्षत्वाद् घटादीनां मा प्रसाङ्क्षीद्धि नित्यता ।
अतीन्द्रियत्वान्मा भूच्च व्योमादेरप्यनित्यता ॥३७७॥

---

"बुद्धिकर्मणी अपि हि ते प्रत्यभिज्ञायेते, ते अपि हि नित्ये प्राप्नुत"* इति चोद्यभाष्यमयुक्तं, न हिनित्यत्वे ऽपि बुद्धिकर्मणोः शब्दनित्यत्वं दूषितं भवति अनित्यत्वं वा साधितं भवति । तदिदं सिद्धान्तान्तरदूषणं नाम निग्रहस्थानम्, अत आह नित्येति[३७५] । नित्यत्वदूषणमेवेदं प्रत्यभिज्ञानस्याऽनैकान्तिकत्वाऽऽपादनादिति ।

"न हि ते प्रत्यक्षे"† इति परिहारभाष्यमाक्षिपति नेति[३७६]। कथमित्याह यत इति । न परं मोक्ता, किं त्वयुक्ता चेत्याह प्रत्यक्षत्वादिति[३७७] । प्रत्यक्षत्वेन हि नित्यत्वं साधयतो घटादिभिर्व्यभिचारः स्यादिति ।

यदि चाऽप्रत्यक्षत्वमनित्यत्वव्याप्तं स्यात्ततो नित्यत्वसम्भावनाय प्रत्यक्षत्वमुच्येत, न तु तदस्तीत्याह अतीन्द्रियत्वादिति । किं च, यदि चोद्यवादिना बुद्धिकर्मणोर्नित्यत्वमेव स्वरूपेण साधितं स्यात् ततस्तद्दूष्येत, अनैकान्तिकता तु प्रत्यभिज्ञायास्तेनोक्ता, सा च

---

* शा. भा. पृ. ३० प. १३ ।
† शा. भा. पृ. ३० प. १४ ।

न च नित्ये स्वरूपेण तेनोक्ते बुद्धिकर्मणी ।
या त्वनैकान्तिकत्वोक्तिः सा तथैवाऽवतिष्ठते ॥३७८॥
न तयोः प्रत्यभिज्ञानमेतदेव किलोच्यते ।
प्रत्यक्षत्वानिषेधेन प्रत्यक्षेण हि तद्भवेत् ॥३७९॥
तेन हेतोरभावो ऽयं विपक्षाऽनुज्ञयो*च्यते ।
हेतुं चाप्यभ्यनुज्ञाय विपक्षो नेति कथ्यते ॥३८०॥
साध्यं नित्यस्वरूपं चेदेतयोः प्रत्यभिज्ञया† ।
तत्राऽसम्बद्धता वाच्या योक्ता पङ्क्तिवने प्रति ॥३८१॥
प्रत्यभिज्ञाननित्यत्वे या ऽप्येषा ऽनवधारणा ।
अनादराय, न ह्यस्मात् प्रकृतं मम दुष्यति ॥३८२॥

---

नित्यत्वे दूषिते ऽपि सुतरां प्रतिष्ठितैव भवति, अनित्ययोरेव तयोः प्रत्यभिज्ञादर्शनात्, अतो नेदमुत्तरं युक्तमित्याह न चेति[३७८] ।

तन्नैकदेश्याह न तयोरिति[३७९] । प्रत्यक्षनिबन्धनैव प्रत्यभिज्ञा, अतः प्रत्यक्षत्वनिषेधेन प्रत्यभिज्ञैव निषिध्यतइति । तन्निषेधे च विपक्षवृत्त्यभावान्नाऽनैकान्तिकत्वं भवतीत्याह तेनेति[३८०] ।

"अथ प्रत्यक्षे नित्ये एवे"‡ति भाष्याऽभिप्रायमाह हेतुमिति । तदेवमनैकान्तिकत्वं परिहृतं, यदि तु नित्यत्वस्वरूपमेव सिषाधयिषितं तन्निग्रहस्थानमित्याह साध्यमिति[३८१] ।

यत्त्विदमनास्थावचनं, "न हि ते प्रत्यक्षे यदि ते प्रत्यक्षे नित्ये एवे"-ति, तत्राभिप्रायमाह प्रत्यभिज्ञानेति[३८२] रायाऽन्तेन । अनादरं

---

* विपयानुज्ञयेति २ पु. पा. । † प्रत्यभिज्ञयोरिति का. पा. ।

‡ शा.भा. पृ. ३० प. १४ ।

'व्यक्तिरूपेण वा येन नाशित्वं बुद्धिकर्मणोः ।
न तत्र प्रत्यभिज्ञानं, घटबुद्धौ हि नाऽश्व*धीः॥३८३॥
येन तु प्रत्यभिज्ञानं शक्तिजात्यात्मना ऽनयोः ।
तेन नित्यत्वमेवेष्टं कथं चित्सर्ववादिनाम्' ॥३८४॥
एवं तु प्रत्यभिज्ञानं वाचोक्तं क्लिष्टया ऽनया ।
न च शक्यं निराकर्त्तुं सर्वलोकप्रसिद्धितः ॥ ३८५ ॥
येन नाम प्रमाणेन ग्रहणं बुद्धिकर्मणोः ।
तेनैव प्रत्यभिज्ञान†नित्यत्वं किं न सिद्ध्यति॥३८६॥

---

दर्शयति न हीति । व्यवस्थितविषयमेव चेदं प्रत्यक्षनित्यत्वयोः सहत्ववचनमित्याह व्यक्तीति[३८४] द्वयेन । शक्त्यात्मनेति, प्रमेयप्रकाशनसामर्थ्यरूपेणेत्यर्थः ।

तदिदमेकदेशिमतं निराकरोति एवं त्विति[३८५] । प्रत्यभिज्ञानं हि निषेधन् विस्पष्टमेव न ते प्रत्यभिज्ञायेते इति ब्रूयात्प्रत्यक्षशब्देन तु तदभिधानं क्लिष्टमतो न ग्रन्थाऽऽनुगुणं प्रत्यभिज्ञानिराकरणमिति । न च युक्तमित्याह न चेति । अस्ति हीयमपि गौरियमपीतिवदयमपि वेद अयमपि अयमपि चलत्ययमपीति बुद्धिकर्मणोः प्रत्यभिज्ञेति ।

केन पुनः प्रमाणेन तयोः प्रत्यभिज्ञानम्, अत्राह येनेति[३८६]। विशेषविषयं तदेवेदमिति ज्ञानं प्रत्यभिज्ञानं, न च तदनुमानं संभवति, तस्य सामान्यमात्रविषयत्वादिति चेन्न, विशेषविषयस्यापि अनुमानस्य दर्शनात्, स्वरविशेषेण हि कुड्याद्यन्तर्हितो देवदत्तो ऽनुमीयते ।

---

* नास्येति २ पु. पा. ।

† मात्रप्रत्यभिज्ञानादिति ३ पु. पा. ।

वाङ्मात्रात् प्रत्यभिज्ञानं शक्यं शब्देऽपि* भाषितुम् ।
प्रत्यभिज्ञाऽनपेक्षेण न प्रत्यक्षेण किं चन ॥ ३८७ ॥
'रूपशब्दाऽविभागाच्चेत्यत्रैतत्साधयिष्यते ।
प्रत्यक्षनित्यं कर्मेति' तेनैषाऽत्रोपवर्णना ॥ ३८८ ॥
'नाऽस्माभिः प्रत्यभिज्ञानं नित्यसाधनमिष्यते† ।

---

तदेवं विशेषविषयैव प्रत्यभिज्ञा, कथं तर्हि सामान्यस्य गोत्वस्य सर्वपिण्डाऽनुयायिनः प्रत्यभिज्ञया सिद्धिः, अथाऽपरोक्षरूपं तदिदमिति ज्ञानं प्रत्यभिज्ञा, नैव गृहीतग्रहणं प्रत्यभिज्ञानं परोक्षमपरोक्षं वा, भवत्वेवं परिभाषा तथापि गृहीतग्रहणमेव स्थायितोपयोगि, तच्चानुमानेऽप्यस्तीति सिध्यत्येव बुद्धिकर्मणोर्नित्यत्वम् मा भूत्प्रत्यभिज्ञा समाख्या। स्यान्मतं, नित्यपरोक्षे बुद्धिकर्मणी कार्यानुमेये, कार्यं च कारणसत्त्वमेव गमयति न प्राक्कलितमेवेति, तदयुक्तम्, एकविधं हि पटादिकार्यमेकेनैव तन्त्वादिना जन्यमानं दृष्टम्, अतः संयोगविभागयोरपि शक्यं सामान्यात्मना विशेषात्मना चैकरूपमेव कारणं कल्पयितुमिति नित्यत्वसिद्धिरिति ।

तदेवमस्ति तयोरपि प्रत्यभिज्ञा, वाङ्मात्रेण तु तदभाववचने शब्देऽपि दर्शयितुं शक्यमित्यत आह वाङ्मात्रेति[३८७] । यदि तु प्रत्यक्षमात्रं निषिध्यते, न प्रत्यभिज्ञा, तदनर्थकमेवाऽनैकान्तिकत्वस्याऽपरिहारादित्याह प्रत्यभिज्ञेति ।

विशेषतश्च प्रत्यक्षानित्यत्वनिराकरणं कर्मणि न युक्तं, स्वतन्त्रविरोधादित्याह रूपेति[३८८] पादत्रयेण । तेनाऽस्य व्याख्यानस्या-

---

* अपेति २ पु. पा ।

† उच्यते इति २ पु. पा. ।

आनित्यवादिनस्त्वेषा प्रत्यक्षेण विरुद्धता ॥ ३८९ ॥
तेनाऽनैकान्तिको नायं सिद्धान्तान्तरदूषणम् ।
धीकर्मणोरपि किं नैवमनित्यत्वं निवार्यते ॥ ३९० ॥
तदुच्यते विनाशित्वमनुमानात्प्रतीयते ।
शब्दे प्रत्यक्षगम्ये च तेन बाधो बलीयसा ॥ ३९१ ॥
धीकर्मप्रत्यभिज्ञानान्नित्यता त्वानुमानिकी ।
तादृशी नाशिता ऽपीति न स्यात् तत्र बलाऽबलम् ॥ ३९२ ॥
न हि ते इति तेनाऽऽह' यद्वा हेतोर्विशेषणम् ।
प्रत्यक्षं, श्रौत्रता चेयं हेतुः शब्दत्ववत्कृतः ॥ ३९३ ॥

---

ऽनुपपत्तेरेवं व्याख्यातव्यमित्याह तेनेति । तामेव दर्शयति नास्माभिरिति[३८९-३९२] सपादैश्चतुर्भिः । यदेतद्बुद्धिकर्मणोः प्रत्यभिज्ञया नित्यत्वप्रसञ्जनं कृतं, तन्न तावदनैकान्तिकत्वार्थं घटते, न ह्यस्माभिः प्रत्यभिज्ञा शब्दनित्यत्वे लिङ्गमुक्ता, येनाऽनैकान्तिकत्वमुच्येत, अनित्यत्वस्य तु प्रत्यभिज्ञाप्रत्यक्षविरोधो ऽयमुक्तः, न च प्रत्यक्षस्याऽनैकान्तिकत्वं दूषणं, सिद्धान्तान्तरदूषणमात्रं तु स्यात्, बुद्धिकर्मणोरपि प्रत्यभिज्ञानान्नित्यत्वं स्यादिति, तत्रेदमुत्तरं निग्रहस्थानमुपेक्ष्योच्यते, न शब्दवत्तयोर्नित्यत्वं, शब्दस्य ह्यानुमानिकीं नित्यतां बाधित्वा प्रत्यक्षेण नित्यता स्थापिता, बुद्धिकर्मणोस्तु स्वयमानुमानिकयोर्नित्यत्वमनित्यत्वं च द्वयमानुमानिकमिति बलाऽबलविशेषाऽभावान्नैकान्ततो नित्यत्वमित्यभिप्रेत्य हि "न ते प्रत्यक्षे" इत्युक्तमिति ।

व्याख्यान्तरमाह यद्वेति क्ष[३९३]मन्तेन । लिङ्गत्वे ऽपि प्रत्यभिज्ञाया नानैकान्तिकत्वं प्रत्यक्षेण विशेषणात्, न हि धीकर्मणोः

यत्कर्माऽतीन्द्रियाऽऽधारं तदप्रत्यक्षमुच्यते ।
अप्रत्यक्षेति बुद्धिश्च शून्यवादे निरूपिता ॥ ३९४॥
प्रत्यक्षद्रव्यवर्त्तिन्यो दृश्यन्ते याः पुनः क्रियाः ।
तासां वर्णवदेवेष्टं नित्यत्वं प्रत्यभिज्ञया ॥ ३९५ ॥
व्यञ्जकाऽभावतश्चासां सन्तताऽनुपलब्धिता* ।
यदेवोत्पादकं वः स्यात्तदेव व्यञ्जकं मम ॥३९६॥

---

प्रत्यक्षत्वमत्रेति भाष्यार्थः, प्रत्यक्षप्रत्यभिज्ञा ऽपि घटादिभिर्व्यभिचरतीति चेन्न, स्थायित्वमात्रसाधनादिति । यद्वा श्रोत्रप्रत्यक्षत्वमत्र हेतुः, तद्धि शब्दत्वदृष्टान्तेन शक्नोति नित्यत्वं साधयितुमित्याह श्रौत्रेति । नन्वयमपि वायुधर्मभूतैर्ध्वनिभिर्व्यभिचरत्येव, न, भूतावयवधर्मध्वन्यन्यत्वे सतीति विशेषणात्, आह च

हेतुरेव ह्यसौ स्पष्टो नित्यत्वस्योपलभ्यते ।
भूताऽवयवधर्माख्यध्वन्यन्यत्वविशेषितः ॥ इति ।

यत्तु कर्मणः प्रत्यक्षत्वात्कथमप्रत्यक्षाभिधानमित्युक्तं, तत्राह यत्कर्मेति[३९४] । परमाण्वाद्याश्रितकर्माऽभिप्रायमिदमप्रत्यक्षत्वाभिधानमिति । बुद्धेश्चाप्रत्यक्षत्वं साधितमेवेत्याह अप्रत्यक्षेति ।

प्रत्यक्षद्रव्यवर्त्तिनीनां तु क्रियाणां शब्दवदेव प्रत्यक्षत्वं नित्यत्वं चेष्टमेवेति तदभिप्रायमथ प्रत्यक्षे नित्ये एवेति भाष्यमित्याह प्रत्यक्षेति[३९५] । स्थिते च प्रत्यक्षेषु नित्यत्वे ऽतीन्द्रियेष्वपि नित्यतैव भवति स्वभावाऽपरित्यागात्ततश्चाऽप्रत्यक्षवचनमुपक्रममात्रमिति ।

यदि तु नित्याः किमिति नित्यं नोपलभ्यन्ते, ऽत्राह व्यञ्जकेति[३९६] । किं पुनरासामभिव्यञ्जकं, तद्दर्शयति यदेवेति । नोदनाऽभिघातादिकमेवाऽभिव्यञ्जकमिति ।

---

* लभ्यतामिति २ पु. पा. ।

तत्र* शब्दत्वकर्तृत्वे नित्ये अपि सती यथा ।
न नित्यमुपलभ्येते तथा मे बुद्धिकर्मणी ॥३९७॥
यथा वा शक्तिसद्भावे कुतश्चित्कारणादृते ।
न कार्याण्युप† जायन्ते तथा ऽभिव्यक्तिरिष्यताम् ॥३९८॥
'व्यक्तिभ्यो ऽन्यतया तावत्कर्म क्लेशेन कल्प्यते‡ ।
पुनर्जातिसहस्राणां तद्भेदे क्लिष्टकल्पना ॥३९९॥
तत एकत्वनित्यत्वप्रत्येकसमवायिताः ।
वृत्तिश्च विप्रकीर्णेषु कर्मभागेषु नाशिषु' ॥४००॥
एकत्वाच्चलनादीनां तस्मादेकात्मिका मतिः ।
प्रयत्नाऽऽश्रयनानात्वाद्बुद्धिभेदः प्रवर्त्तते ॥४०१॥

---

व्यञ्जकाऽभावात्संततानुपलम्भे दृष्टान्तमाह तत्रेति[३९७]। नन्वभिव्यक्तिरेव कस्मात्सर्वदा न भवति, तदाश्रयस्य द्रव्यस्य तदभिव्यक्तिशक्तिः सर्वदा ऽस्त्येवाऽत आह यथेति[३९८]। सहकारिवैकल्यादुत्पत्तिवदेवाऽभिव्यक्तिरपि न सर्वदा भवतीति।

ननु तुल्यत्वे किमित्युत्पत्तिरेव कर्मभेदानां नेष्यते, प्रत्यभिज्ञा हि जात्यालम्बनापि सम्भवति, अत्राह व्यक्तिभ्य[३९९] इति द्वयेन ।

द्रव्यादेव तावत्क्रियादेर्भेदः सौगतेषु परिपन्थिषु क्लेशलभ्यः, तत्र पुनरुत्क्षेपणत्वादिजातिः तद्व्यक्तिश्च, तासु च तासां प्रत्येकं वृत्तिः, तथापि पुनर्गवादिवैलक्षण्येन कर्मभागेषु बहुषु युगपद्भाविषु भ्रमणत्वदीनां वृत्तिं कल्पयतो ऽतिक्लेश इत्युपसंहरति एकत्वादिति[४०१]।

---

* न चेति का. पा. । † अभीति ३ पु. पा. ।
‡ कथ्यते इति ३ पु. पा. ।

नैव ह्यत्रापि विच्छिन्नाः शाबलेयादिपिण्डवत् ।
कर्मव्यक्तीर्विजानीमः कल्पयेम द्वयं यतः ॥४०२॥
शीघ्रमन्दादिभेदे ऽपि स्यात्प्रयत्नादिभेदतः* ।
व्यक्तिद्वारो यथा जातेर्व्यक्तेर्वा जनने यथा ॥४०३॥
'बुद्धीनामपि चैतन्यस्वाभाव्यात्पुरुषस्य नः ।
नित्यत्वमेकता चेष्टा' भेदस्तु विषयाऽऽश्रयः ॥४०४॥

---

कथं तर्हि बुद्धिभेदो, ऽत्राह प्रयत्नेति । प्रयत्नभेदाद्भेदमुदाहरिष्यति, देवदत्तश्चलति यज्ञदत्तश्चलतीत्याश्रयभेदाद्भेद इति ।

किमित्येवमौपाधिकभेदाश्रयणम्, अत्राह नैवेति[४०२] । यथैव हि वर्णे द्रुताद्युपाधिमवधीर्य स्वरूपभेदः शाबलेयादिवन्नास्ति तथा ऽत्रापीति ।

प्रयत्नभेदनिबन्धनं भेदमुदाहरति शीघ्रेति[४०३] । समानं चेदमौपाधिकभेदाद्भेदाश्रयणं कर्मभेदवादिनो ऽपीत्याह व्यक्तीति । यथा च व्यक्तावुत्पन्नायामभिव्यज्यमानां जातिमुत्पन्नां मन्यन्ते तथा कर्मापीत्याह व्यक्तेरिति । कीदृशी पुनः कर्मणो ऽभिव्यक्तिः, द्रव्यसम्बन्धनमिति ब्रूमः, क्रिया हि जातिवदेव यस्मिन् द्रव्ये तादात्म्यं समवायं वा सम्बन्धं प्रतिपद्यते तत्रैव गृह्यते, अतः सम्बन्धनमेवाऽभिव्यक्तिः, तत्कारणं चाभिव्यञ्जकं, यच्च कर्मणो विनाशकं संयोगविभागाख्यं कार्यं तदपि कर्मणो द्रव्यसम्बन्धमेव विनाशयति नास्य स्वरूपमिति ।

बुद्धेरिदानीं नित्यत्वमुपपादयति बुद्धीनामिति[४०४] पादत्रयेण । बुद्धिः चैतन्यं चितिशक्तिः पुंसः स्वाभाविकत्वान्नित्यमेकं च-

---

* प्रयत्नविभागत इति २ पु. पा. ।

स्वरूपेण यथा वह्निर्नित्यं दहनकर्मकः ।
उपनीतं दहत्यर्थं दाह्यं नान्यन्न चाऽन्यथा ॥४०५॥
यथा वा दर्पणः स्वच्छो यथा च स्फटिको ऽमलः ।
यद्यन्निधीयते योग्यं तच्छायां प्रतिपद्यते ॥४०६॥
तथैव नित्यचैतन्याः पुमांसो देहवृत्तयः ।
गृह्णन्ति करणाऽऽनीतान् रूपादीन्, धीरसौ मता*॥४०७॥
तेनोपनेतृसम्बन्धभाङ्गित्वाद्भङ्गिनी मतिः ।
न नित्यं दाहको वह्निर्दाह्याऽसन्निधिना यथा ॥४०८॥

---

ति । कथं तर्हि गोबुद्धिरश्वबुद्धिरिति भेदो, ऽत्राह भेद इति । विषयशब्देन विषयभेदेनाऽनुमीयमानभेदश्चितिशक्तिकार्यभूतः पुंसो ज्ञानाख्यो विकार उच्यते, तस्याऽनुमेयत्वं शून्यवादे वर्णितं, तद्भेदाद्भेदाऽवभास इति ।

यदि नित्यचैतन्यः पुमान् किमिति सर्वं सर्वदा न जानाति किमस्येन्द्रियादिभिरत आह स्वरूपेणेति दीन[४०५—४०७]न्तेन । न हि शक्तिरस्तीत्येतावता सर्वदा कार्यं कर्त्तव्यं, शक्तस्यापि सहकारिसंनिध्यपेक्षाऽवलम्बनेन कार्यकरणक्रमोपपत्तेरिति ।

ननु भाष्ये बुद्धेरेव नित्यत्वमुच्यते न तच्छक्तेरत्राह धीरिति । चैतन्यमेव भाष्ये बुद्धिशब्देनोच्यतइति ।

ननु विषयान्तरसंचारे पूर्वा मतिर्भङ्गिनी गम्यते, तत्र कथं नित्यत्वमत आह तेनेति[४०८] । विषयोपनेतॄणां चक्षुरादिकरणानां यो व्यापारस्तद्भङ्गात्तन्निमित्तो ऽप्यात्मविकारो भज्यतइति भङ्गबुद्धिर्न

---

* मत इति का. पा. ।

तत्र बोधात्मकत्वेन प्रत्यभिज्ञायते मतिः ।
घटहस्त्यादिबुद्धित्वं तद्भेदाल्लोकसंमतम् ॥४०९॥
सैवेति नोच्यते बुद्धिरर्थभेदाऽनुसारिभिः ।
न चाऽस्य प्रत्यभिज्ञानमर्थभेदे ऽनुपाश्रिते ॥४१०॥
एतन्मनसि कृत्वा ऽऽह नित्ये एवेति भाष्यकृत् ।
एतयैव दिशा वाच्या शुक्लादेरपि नित्यता ॥४११॥

---

पुंश्चैतन्यभङ्गादिति। अत्रैव दृष्टान्तमाह न नित्यमिति । न हि तावता दहनशक्तिरनित्येति। ननु प्रत्यभिज्ञैवाऽसिद्धा, न घटबुद्धौ परबुद्धिः प्रत्यभिज्ञायते, ऽत आह तत्रेति[४०९] । विषयोपरागाऽवधीरणे ऽस्त्येव प्रत्यभिज्ञेति । भेदाऽवभासस्तु विषयकृत इति उक्तमवेत्याह घटेति ।

यदि विषयभेदे ऽपि बोधरूपं प्रत्यभिज्ञायते किमिति सैवेयं बुद्धिरिति न तद्वृत्तेन परामृश्यते, अत्राह सैवेति[४१०] । विषयभेदेनोद्भूतेन सतोप्यभेदस्याऽविभागात्पुरुषाऽभेदाऽभिप्राया नैवं व्यपदिशन्तीति,तदभिभवे ऽस्त्येव प्रत्यभिज्ञेत्याह न चेति ।

तदेवं प्रत्यक्षद्रव्याश्रितकर्माभिप्रायं चैतन्याभिप्रायं च "अथ प्रत्यक्षे नित्ये एवे"ति भाष्यमित्याह एतदिति[४११] । ननु चैतन्यस्याप्रत्यक्षत्वात्कथं प्रत्यक्षवचनं, सत्यं, चितिशक्तिरप्रत्यक्षा, अत्र तु चैतन्यस्वभावः प्रमातैव लक्षणया बुद्धिशब्देनोच्यते, स च प्रत्यक्षो नित्यश्च, तस्य ज्ञानाख्यो विकारो ऽप्रत्यक्षो ऽनित्यश्चेति, तदभिप्रायं पूर्वभाष्यम् । तदेवं भाष्यार्थः, यत्पूर्वपक्षवादिना बुद्धिकर्मणोर्नित्यत्व-

संसर्गमात्रभेदेन* स्यात्तत्रापि हि भेदधीः ।
स्वरूपं तु तदेवेति को जातिं कथयिष्यति† ॥४१२॥
क चिद्द्रव्येण संसर्गः क चिन्न स्याद गुणान्तरैः ।
शुक्लादेस्तेन भिन्नत्वं सिद्धं भासुरधूसरैः ॥४१३॥
ज्वालादेः क्षणिकत्वे ऽपि प्रत्यभिज्ञेति चेन्न तत् ।
तत्रापि प्रत्यभिज्ञेयं सामान्यं नित्यमेव नः ॥४१४॥

---

प्रसञ्जनं कृतं तद्यदि ज्ञानरूपविकाराऽभिप्रायं तदयुक्तं तस्याऽप्रत्यक्षत्वात्, अथ चितिशक्तिस्वभावपुरुषाऽभिप्रायं स नित्य एवेति ।

धीकर्मप्रसङ्गेनेदानीं शुक्लादिगुणानामपि नित्यत्वैकत्वे दर्शयति एतयेति । कथं तर्ह्ययमपि शुक्लो ऽयमपीति भेदबुद्धिर्भिन्नाश्रयसंसर्गादित्याह संसर्गेति[४१२] । स्वरूपाऽभेदे च तत एव प्रत्यभिज्ञोत्पत्तेर्न गुणत्वरूपत्वाऽतिरेकेण शुक्लत्वादिजातिः कल्पनीयेत्याह स्वरूपमिति । यो ऽप्ययमतिशुक्लो ऽयमीषच्छुक्ल इति भेदः सो ऽपि संसर्गभेदादेवेत्याह क चिदिति[४१३] । केवलद्रव्यसंसर्गेऽतिशुक्लं नीलादिसंसर्गे त्वीषदिति । यदपि धूसरस्वच्छभासुरेषु पार्थिवाऽऽप्यतैजसेषु द्रव्येषु शुक्लस्य वैलक्षण्यं तदपि तेनैव भिन्नजातीयद्रव्यसंसर्गभेदेनेत्याह शुक्लादेरिति । सत्यपि च भास्वराद्यवान्तरभेदे शुक्लस्य प्रतिद्रव्यं तद्व्यक्तिभेदो जातिभेदश्च निष्प्रमाणकः, न हि पटद्वये शुक्लगुणस्याऽऽश्रयभेदमन्तरेण स्वरूपभेदो मृग्यते, शाबलेयादिष्विव गोत्वस्येति ।

---

* भेदमात्रेणेति ३ पु. पा. ।

† कल्पयिष्यतीति ३ पु. पा. ।

भेदबुद्धिस्तु यत्रांशे स्यात् केन चिदुपाधिना ।
तत्र नः* प्रत्यभिज्ञानं भेदबुद्ध्यैव वारितम् ॥४१५॥
'ह्यस्तनोच्चारितस्तस्माद्गोशब्दो ऽद्यापि विद्यते ।
गोशब्दज्ञानगम्यत्वाद्यथोक्तो ऽद्यैष† गौरिति ॥४१६॥

---

शङ्कते ज्वालादेरिति[४१४]। परिहरति न तदिति । कारणमाह तत्रापीति । सामान्यविषया प्रत्यभिज्ञा भवतोपन्यस्ता, विशेषविषया वा, सामान्यं तावद्भिन्नवर्त्तिवर्त्तिनीष्वपि ज्वालास्वनपायित्वान्नित्यमेवेति ।

यत्र तु व्यक्त्यंशे केन चित्प्रकारेण भेदबुद्धिस्तत्र तयैव प्रत्यभिज्ञा बाध्यते, शब्दे तु नैवं बाधकमस्तीत्याह भेदेति[४१५] । कुतः पुनर्ज्वालाभेदबुद्धिरवयवविशरणेन पूर्वस्याऽवयविनो विनष्टत्वात्, न ह्यविशीर्णेषु ज्वालाऽवयवेषु प्रभा संभवतीति तद्विशरणं कल्प्यते, विशीर्णाऽवयवस्य क्षणे ऽवश्यं ज्वालान्तरेणोत्पत्तव्यमिति भेदसिद्धिः, प्रत्यभिज्ञा तु सादृश्यादपि संभवति, तथा च यत्र पूर्वज्वालां निर्वाप्य ज्वालान्तरमारोप्यते तत्रापि नाशोत्पादाऽनभिज्ञानानां पात्रैक्ये सति प्रत्यभिज्ञा दृश्यते, ततस्तद्वदत्रापि सादृश्यनिबन्धनैव प्रत्यभिज्ञेति गम्यते, शब्दे तु नैवं भेदे प्रमाणमनन्यथासिद्धमस्तीति स्वरूपैक्यनिबन्धनैव प्रत्यभिज्ञेति वैषम्यमिति ।

एवमुपपादिते शब्दनित्यत्वे प्रयोगानारचयति ह्यस्तनेति[४१६]-

---

* तदिति २ पु. पा. ।

† अद्यैवेति का पा. ।

ह्यो वा ऽऽसीदेष गोशब्दः पूर्वोक्तेनैव हेतुना ।
यद्वा गोत्वाऽभिधायित्वं वाच्यो हेतुर्द्वयोरपि ॥४१७॥
गोशब्दबुद्ध्या ह्यस्तन्या गोशब्दो ऽयं प्रकाशितः ।
गोशब्दविषयत्वेन यथैवाऽद्यप्रसूतया ॥४१८॥
इयं वा तं* विजानाति तद्धेतोः पूर्वबुद्धिवत् ।
उभे वा ऽप्येकविषये भवेतामेकबुद्धिवत् ॥४१९॥
देशकालादिभिन्ना वा समस्ता गोत्वबुद्धयः ।
एकगोशब्दजन्याः स्युर्गोधीत्वादेकबुद्धिवत् ॥४२०॥
गोशब्दबुद्धयो ऽप्येवमेकगोशब्दगोचराः ।
गोशब्दविषयत्वेन कल्प्यतामेकबुद्धिवत्' ॥४२१॥
गोशब्दत्वानिषेधाच्च नाऽत्र स्यात्सिद्धसाध्यता ।
घटादेरेकताऽऽपत्तौ जात्येष्टं सिद्धसाधनम् ॥२२॥

---

[४२१] षड्भिः ।'देशकालादिभिन्ना वे'त्यत्र गोशब्दोत्था गोत्वबुद्धयो धर्मिण्यो गोशब्दोत्थगोधीत्वं च हेतुरिति । न च गोशब्दत्वेनैकत्वात्सिद्धसाधनं वाच्यं, तस्य स्फोटे निषिद्धत्वादित्याह गोशब्देति[४२२] ।

यस्त्वेवमेव घटादेरपि नित्यत्वमेकत्वं च साधयति ह्यस्तनो घटो ऽद्याप्यनुवर्त्तते घटबुद्धिगम्यत्वादद्यतनघटवदिति, तं प्रति जात्यंशेन सिद्धसाधनं वक्तव्यमित्याह घटादिरिति । व्यक्त्यंशक-

---

* तदिति ३ पु. पा. ।

व्यक्तीनामेकताऽऽपत्तिं कुर्यांश्चिदनया दिशा ।
तस्य दृष्टविरुद्धत्वं वाच्यं सर्वप्रमाणकम् ॥४२३॥
ये ऽपि स्थूलविनाशानामन्यथाऽनुपपत्तितः ।
कल्पयन्त्यन्तरा सूक्ष्मं विनाशित्वं प्रतिक्षणम् ॥४२४॥
ते ऽपि क्षणिकनाशित्वादधिकां स्थूलनाशिताम् ।
शब्दानामविजानन्तो न शक्ता नाशिसाधने ॥४२५॥
क्षणभङ्गो घटादीनां वार्यस्तैरेव साधनैः ।
तथैव प्रत्यभिज्ञानाद् यावद्दृष्टं न बाधते ॥४२६॥

---

त्वं सर्वप्रमाणविरुद्धं सर्वव्यक्तिभेदस्य तैस्तैः प्रमाणैर्दर्शनादित्याह व्यक्तीनामिति[४२३] ।

"ये ऽपि सर्वेषां भावानां प्रतिक्षणं विनाशमिच्छन्ति ते ऽपि शब्देन शक्नुवन्ति वदितुम्, अन्ते हि क्षयदर्शनात्ते मन्यन्ते, न च शब्दस्यान्तो नापि क्षयो लक्ष्यत"*इति भाष्यार्थमाह ये ऽपीति[४२४]। येन पथा स्थूलनाशेन सूक्ष्मविनाशसिद्धिस्तथा दर्शितं, 'विनाशस्य विनाशस्तु नास्ति तस्मादकृत्रिम ' इत्यत्रेति ।

किमिदानीं स्थूलनाशिनां घटादीनामिष्टमेव क्षणिकत्वं, नेत्याह क्षणभङ्ग इति[४२६] । ह्यस्तनो घटो ऽद्याप्यस्ति घटत्वादद्यतनघटवदित्यादिभिः शब्दोक्तैरेव साधनैः क्षणभङ्गनिवारणमिति । तथा प्रत्यभिज्ञया ऽपि तन्निवारणमित्याह तथैवेति । ननु मुसलाऽभिहतेन घटेन हेतुरनैकान्तिकः, तस्यापि त्ववस्थानसाधने दृष्टविरोधः स्याद् आह यावदिति । ततश्चैवं वक्तव्यं, ह्यस्तनो घटो ऽद्याप्य-

---

* शा. भा. पृ. ३१ प. ५ ।

साधनं तु ब्रुवाणस्य दीपज्वालादिदर्शनात् ।
पर्वोक्तेनैव मार्गेण प्रत्यक्षादिविरुद्धता ॥४२७॥
पूर्वक्षणविनाशे च कल्प्यमाने निरन्वये ।
उत्तरस्याऽनिमित्तत्वादुत्पत्तिर्नोपपद्यते ॥४२८॥
अत्यन्ताऽसन्नसौ तस्मिन्न तावद्व्यापृतिक्षमः ।
स्वयं चाऽभावदष्टत्वात्* कस्मिन्काले करिष्यते ॥४२९॥
'नाशोत्पादसमत्वे ऽपि नैरपेक्ष्यात् परस्परम् ।
न कार्यकारणत्वे स्त'स्तद्व्यापाराऽननुग्रहात् ॥४३०॥

---

स्ति निष्प्रयत्नत्वे ऽवयवविश्लेषाऽभावे च सत्यद्ययावत्स्थूलनाशाऽनाक्रान्तत्वात् दृश्यमानघटवदिति ।

यस्तु सत्त्वात् ज्वालादिवत् क्षणिकत्वं साधयति तस्य प्रत्यभिज्ञाप्रत्यक्षाविरोधः पूर्वोक्तेनाऽनुमानेन चेत्याह साधनमिति[४२७] । निरस्तश्चायं क्षणभङ्गः शास्त्रदीपिकायामिति ।

यदपि सौगतैः स्थायिनो ऽर्थक्रियाकारित्वं न संभवतीत्युक्तं, तदपि विपरीतमित्याह सर्वेति[४२८] । सर्वक्षणिकत्वे हि पूर्वस्मिन् घटक्षणे निरन्वयनष्टे परस्य निरुपादानत्वादुत्पत्तिर्न स्यादिति ।

कथं निरन्वयविनष्टस्याऽनुपादानत्वं, तन्त्वादयो हि निरन्वयविनष्टाः पटादेरुपादानमस्मन्मते, ऽत्राह अत्यन्तेति[४२९] । पूर्वस्यात्यन्ताऽनुत्पन्नस्य न तावदुत्तरोत्पत्तिर्व्याप्रियते नाऽनुत्पन्नो विनष्टो वा, तदनन्तरक्षणे च तस्य नाशः परस्य चोत्पाद, इत्युच्येताऽत्राह नाशेति[४३०] पादत्रयेण । कथं नैरपेक्ष्यमित्याह तद्व्यापारेति । न हि

---

* दृष्टत्वादिति का. पा. ।

न ह्यलब्धात्मकं वस्तु पराऽङ्गत्वाय कल्पते ।
न विनष्टं, न च स्थानं तस्य कार्यकृतिक्षमम् ॥४३१॥
जायमानं च गन्धादि घटरूपे विनश्यति ।
तत्कार्यं नेष्यते यद्वत्तथा रूपान्तराण्यपि ॥४३२॥
तस्मात् प्राक्कार्यनिष्पत्तेर्व्यापारो यत्र* दृश्यते ।
तदेव कारणं तस्य न त्वानन्तर्यमात्रकम्† ॥४३३॥

---

नाशोत्पादसमत्वे पूर्वव्यापाराऽनुग्राह्यत्वमुत्तरस्येति । एतदेव दर्शयति न हीति[४३१] । लब्धात्मकस्य ह्यात्मलाभोत्तरकाले ऽङ्गत्वं परोत्पत्तौ, न त्वात्मलाभकाले एव; कारणाऽधीना हि क्रिया कथं कारणेन तुल्या स्यात्, उत्तरकाले च विनष्टत्वान्न व्यापारः, व्यापारक्षणस्थानाऽभ्युपगमे वा क्षणिकत्वहानिरिति ।

न व्यापाराधीनं कारणत्वं, किं तु पूर्वक्षणवर्त्तित्वमिति चेन्न, अतिप्रसङ्गादित्याह जायमानमिति[४३२] । उपसंहरति तस्मादिति[४३३]। कर्मादीनां तु संयोगादिकार्ये जन्मैव व्यापार इत्यवगन्तव्यं, तस्य तदौपयिकत्वं पूर्वाऽपरीभावनियमादवगम्यते, पूर्वक्षणजन्मनस्तूत्तरोत्पत्त्यौपयिकत्वमप्रमाणकं, पौर्वापर्य्यमात्रात्तु तदौपयिकत्वमतिप्रसङ्गि, तन्नियमस्तु भवतां न संभवति, भूयोदर्शनाऽपेक्षित्वात्, सर्वक्षणिकत्वे च न कस्य चिदपि केन चित्सामान्यतो विशेषतो वा भूयः साहित्यं शक्यते द्रष्टुमिति न कार्यकारणतेति ।

---

* यस्येति का. पा. ।

† मात्रत इति का. पा. ।

ज्वालादेरपि नाशित्वं नैव सिद्धं प्रतिक्षणम् ।
लघवो ऽवयवास्तत्र यान्ति देशान्तरं लघु ॥४३४॥
'प्रभूतं वर्त्तिदेशे हि तेजस्तिष्ठति पिण्डितम् ।
तत्र यावद्व्रजत्यूर्ध्वं तावज्ज्वालेति गम्यते ॥४३५॥
ततो ऽपि यदतिक्रम्य याति तत् स्यात् प्रभात्मकम्' ।
ततः परं तु यद्याति तत् सौक्ष्म्यान्नाऽवधार्यते ॥४३६॥
उत्तराऽवयवै रुद्धे मार्गे पूर्वे न यान्ति च ।
यथोत्तरे विमुञ्चन्ति पूर्वे यान्ति तथा तथा ॥४३७॥

---

यदि न क्षणिकस्य कार्यारम्भकत्वं, कथं तर्हि ज्वाला प्रभामारभते, ऽत्राह ज्वालादेरिति[४३४] । न ज्वालायाः क्षणिकत्वं, त्रिचतुरक्षणाऽवस्थायित्वादिति । नन्वियं निरन्वयविनाशिनी यतो निरुपादाना प्रभा न निष्पत्तिं लभते, सा ह्यवयवात्मना प्रभायामप्यनुवर्त्ततएवेत्याह लघव इति । लघु, शीघ्रमित्यर्थः । एतदेव दर्शयति प्रभूतमिति[४३५] सार्द्धेन । यद्यविनष्टमेव तेजो ज्वालातो निर्गत्य प्रभामारभते ततः प्रभातो ऽपि परस्तादविनष्टमेव निर्गच्छेत्, न च तथा दृश्यते, तत्राह ततः परमिति । परतो ऽपि गच्छत्येव न विनश्यति, अतिसूक्ष्मत्वान्न दृश्यतइति ।

ननु भवत्वविनष्टं, तथापि किमिति गच्छति, तत्रैवाऽवतिष्ठताम्, अत्राह उत्तरेति[४३७] । उत्तरशब्देनोर्द्ध्वगतानां पूर्वशब्देनाऽधोदेशादागच्छतामभिधानमिति । ननु विरलानि प्रभायां तेजांसि, तेषु तिष्ठत्स्वप्युत्तरेषां तत्र संक्रान्तिः सम्भवत्येव, अतः कथं निर्गमनकल्पना, ऽत आह संक्रान्ताविति । सत्यं संभवति, किं तु स्थितेषु

संक्रान्तावपि तेनैषां तृणादौ वृद्ध्यसम्भवः ।
शब्दे वृद्ध्याद्यभावो ऽपि ध्वनिशैघ्र्येण जायते ॥४३८॥
शरीरे यौवनाद्याप्तिः परिणामाच्च सेत्स्यति ।
तथा हि सन्निवेशादि प्रत्यभिज्ञायते जनैः ॥४३९॥
तत्राऽन्याऽनन्यवृत्तीनामनेकान्तस्वभावतः ।
उत्पत्तिस्थिति*नाशानां विरोधः प्राङ्निराकृतः ॥४४०॥

---

पूर्वैरुत्तरेषु वा गतेषु सान्द्रतेजोज्वालेव तृणादिकं दहेत्, न च स्थिति-रपि सम्भवति, गत्वरत्वात्तेजसामिति ।

तेजोवदेव ध्वनीनामपि शीघ्रगत्वात्पुनः पुनरुच्चार्यमाणो ऽपि हि शब्दे वृद्ध्यनवभासः पूर्वध्वनिषु श्रोत्राग्निर्गतेषु उत्तरेषामागमा-दिति प्रसङ्गाद्दर्शयति शब्दे इति[४३८] ।

ननु शरीरस्य क्षणिकस्यापि प्रत्यभिज्ञा दृष्टा, तस्य हि बाल्य-यौवनाद्यवस्थास्तावदागमाऽपायिन्यो दृश्यन्ते, ताश्च शरीराऽभिन्नाः, भेदे हि घटादिव पटः शरीरात् पृथगुपलभ्येरन्, अभेदे ऽपि तद्वदेव शरीरस्यापि प्रतिक्षणमुत्पत्तिविनाशधर्मिणः स्थित्यनुपपत्तेः क्षणिक-त्वम्, अत आह शरीरइति[४३९] । परिणाममात्रेणापि यौवनाद्यव-स्थाभेदसम्भवान्न स्वरूपभेद इति ।

यस्त्ववस्थाभेदादेव तद्वतो ऽपि भेदमातिष्ठते तस्य प्रत्यभिज्ञा-विरोध इत्याह तथेति । यस्त्ववस्थातद्वतोरभेदादवस्थावदेव त-द्वतो ऽपि नाशोत्पादावित्युक्तं, तत्राह तत्रेति[४४०] ।

स्यादेवं, यद्येकान्ततो ऽवस्थातद्वतोरभेदः स्यात्, अनेकान्तस्व-

---

* स्थानेति ३ पु. पा. ।

एकसन्तानसम्बन्धात् प्रत्यभिज्ञानकल्पना ।
ज्ञानसन्ततिमार्गेण वार्यो ऽन्यत्वाद्यसम्भवात्॥४४१॥
एवं स्थितस्य शब्दस्य श्रुतिकालात् क्षणान्तरे ।
संभाव्यते विनाशित्वं न भूयो ऽन्येन हेतुना ॥४४२॥
यथा शस्त्रादिभिर्भेदाज्जरया वा पटादयः* ।
नङ्क्ष्यन्तीत्यवगम्यन्ते नैवं शब्दे ऽस्ति† कारणम्॥४४३॥

---

भावत्वे च अन्याऽनन्यभूतयोरवस्थातद्वतोर्वर्तमानानामुत्पत्तिस्थितिविनाशानां को विरोध इति ।

यत्तु क्षणभङ्गवादिभिरुक्तं, संतानैकत्वादेव घटादिषु प्रत्यभिज्ञा ऽवकल्पत इति, तत्राह एकेति[४४१] । न हि सन्तानस्य संतानिभ्यो ऽन्यत्वमनन्यत्वं वा सम्भवति इत्युक्तमिति ।

"अनपेक्षत्वात्‡ इति" सूत्रं व्याचष्टे एवमिति[४४२] । यदा प्रत्यभिज्ञया शब्दस्य श्रवणकालस्याऽभावान्नित्यत्वमतिक्रम्य कालान्तरे ऽप्यवस्थानं साधितं तदा स्वारसिके नाशे निरस्ते हेत्वन्तरस्य नाशकस्याऽभावान्नित्यत्वमेव सिद्धं भवतीति । हेत्वन्तराऽभावमेव दर्शयति यथेति[४४३] ।

ननु यदा वायवीयो ऽवयविद्रव्यविशेषः शब्दस्तदा ऽस्य पटादिवदेवाऽवयवसंयोगविशेषविनाशात्सम्भवत्येव विनाश इत्याशङ्कानिराकरणार्थं सूत्रं "प्रख्याभावाच्च योगस्येति§" तद् व्याचष्टे

---

* घटादय इति २ पु. पा. ।

† शब्दो ऽस्तीति २ पु. पा. ।

‡ जै. सू. अ. १ पा. १ सू. २१ ।

§ जै. सू. अ. १ पा. १ सू. २२ ।

शब्दो यथा पौद्गलिको निषिद्धः
स्याद्वायवीयस्य स एव मार्गः ।
तस्मादनिर्धारितहेतुमार्गः
सर्वत्र साक्षाद्भवतीति नित्यः ॥ ४४४ ॥

इति शब्दनित्यताधिकरणम् ॥

---

अथ वाक्याऽधिकरणम् ।

पदार्थपदसम्बन्धनित्यत्वे साधिते ऽपि वः ।
नैव वेदप्रमाणत्वं वाक्यार्थं प्रति सिध्यति ॥ १ ॥

---

शब्द इति[४४४]। पौद्गलिकः, पुद्गलाख्यवर्णपरमाण्वारब्धः, स यथा निरस्तस्तेनैव न्यायेन शब्दस्याऽवयवयोगो निराकर्त्तव्य इति ।

अधिकरणार्थमुपसंहरति तस्मादिति । यतो ऽस्य हेतुर्नास्त्युच्चारणस्याऽभिव्यञ्जकत्वात्, यतश्च भागा न सन्ति यतश्च सर्वदेशे साक्षाद्भावादपरोक्षीभावात्सर्वगतस्तस्माद्व्योमादिवन्नित्य इति ॥

इति श्रीपार्थसारथिमिश्रविरचिते न्यायरत्नाकरे शब्दनित्यताधिकरणं समाप्तम् ।

—:o:—

अथ वाक्याऽधिकरणम् ।

उत्पत्तौ वा ऽवचनाः स्युरर्थस्याऽतन्निमित्तत्वात् ॥२४॥

इति पूर्वपक्षसूत्रम् ।

अस्यार्थः । उत्पत्तिरित्यौत्पत्तिकं ब्रूमः, शब्दलक्षणया यथा द्यावोरिति द्यावापृथिव्योरिति वक्ष्यते द्यावोस्तथेति चेदित्यत्र चकारो ऽप्यर्थे, तदयमर्थो भवति, प्रकृतानां शब्दार्थसम्बन्धानामौत्पत्ति-

कत्वे ऽपि वेदवाक्यार्थस्य धर्मस्याऽवचनाः, अप्रतिपादकाः, अप्रमाणमिति यावत्। वर्णपदादीनां प्रत्येकसमुदायविकल्पितानां वाक्यार्थप्रत्ययं प्रति हेतुभावाऽनुपपत्तेः। न च पदार्थानां तन्निमित्तभावो, ऽसम्बन्धात्, तदिदमुक्तम् अर्थस्यातन्निमित्तत्वादिति। तन्त्रेण चेदमर्थपदं वाक्यार्थपदार्थयोः पूर्वाऽपराभ्यां सम्बन्ध्य व्याख्येयम्। एवमेतदर्थमस्य सूत्रस्य दर्शयितुं भाष्यं "यद्यप्यौत्पत्तिको नित्यः शब्दः संबन्धश्च तथापि न चोदनालक्षणो ऽर्थो धर्म"* इति।

अस्यार्थः, यद्यप्याकृतिग्रन्थशब्दाऽधिकरणसम्बन्धपरिहारेषु पदार्थपदसम्बधानां नित्यत्वमुक्तं तथापि यद्वाक्यार्थे वेदानां प्रामाण्यमभिहितं तन्न सिद्ध्यति, वक्ष्यमाणप्रकारेण तत्प्रतिपत्तौ मूलाऽभावात्, अनिमित्तायाश्च प्रतीतेरुत्पन्नाया अपि प्रतिभावदप्रामाण्यात्, अतः सो ऽयं शब्दनित्यत्वप्रतिपादनप्रयासो ऽनर्थक एव। सो ऽयं मूलाभावात्पुनराक्षेपः। ननु न पदार्थनित्यत्वं क्व चित्साधितम्, आकृतिग्रन्थे हि सद्भावमात्रमाकृतेरुक्तं न नित्यता, भाष्यकारेणापि यद्यप्यौत्पत्तिकः शब्दः सम्बन्धश्चेत्येतावदेवोक्तं न पदार्थनित्यता कीर्त्तिता, ऽतः किं पदार्थनित्यताऽनुभाषणेन। अत्रोच्यते, शब्दनित्यताप्रतिपादनन्यायेनाऽऽकृतेरपि नित्यत्वं प्रतिपादितमेव, प्रत्यभिज्ञानेन हि शब्दस्य नित्यतोक्ता, तच्चेदमाकृतेरपि समानमेव, भवति हि दृष्टैकव्यक्तेरपरदर्शने स एवाऽयमिति निश्चयः, अतो यदैव प्रत्यक्षसामर्थ्येनाऽऽकृतिः साधिता तदैव तद्बलेनाऽस्या नित्यत्वमुक्तमेवेति सूक्तं 'पदार्थपदसम्बन्धनित्यत्वे साधिते ऽपि च' इति।

"उत्पत्तौ वा ऽवचनाः स्युरर्थस्याऽतन्निमित्तत्वादिति" पूर्वपक्षसूत्रं, तद् व्याचष्टे पदार्थेति। यागादेर्हि स्वर्गसाधनत्वं धर्मः, स च वाक्यार्थो नैकैकेन पदेनोच्यते, न च वाक्यार्थे सम्बन्धग्रहणं कस्य चिदस्ति, सम्बन्धग्रहणाऽनपेक्षे च तत्प्रतिपादने प्रथमश्रवणे

* शा. भा. पृ. ३२ प. ८।

'पदानि गमयेयुस्तं प्रत्येकं संहतानि वा ।
व्यतिरिक्तो ऽथ वा शब्दः, पदार्था वा ऽपि पूर्ववत् ॥२॥
तत् प्रमाणं स्मृतीनां च तथा सम्बन्धतद्धियाम् ।
प्रत्येकं संहतत्वेन तद्वदेव विकल्पनम् ॥३॥
अदृष्टसङ्गतित्वेन सर्वेषामनिमित्तता' ।
अन्यः प्रतीतो न ह्यन्यं गमयिष्यत्यसङ्गतम् ॥४॥
अप्रतीतश्च सम्बन्धो नाप्यसत्त्वाद्विशिष्यते ।
न चाऽविज्ञायमानस्य सद्भावो ऽपि* प्रमाणवान् ॥५॥
वाक्यवाक्यार्थयोर्नापि वस्तुत्वमुपपद्यते ।
स्पष्टं पदतदर्थाभ्यामन्याऽनन्याऽनिरूपणात् ॥ ६ ॥

---

ऽपि प्रतीतिः स्यादतो निर्मूलो वाक्यार्थप्रत्ययः सामयिको वेत्यप्रामाण्यं धर्मे वेदस्येति व्यर्थमेव पदपदार्थसम्बन्धनित्यत्वप्रतिपादनमिति ।

निर्मूलत्वमेव दर्शयितुं यावत्संभवं मूलानि विकल्प्य निराकरोति पदानीति[२] सार्द्धद्वयेन । नन्वदृष्टसङ्गतीन्यपि चक्षुरादीनि रूपादि बोधयन्त्येवाऽत आह अन्य इति[४]। चक्षुरादि हि स्वसत्तामात्रेण बोधकं, यस्तु प्रतीतः सन्नर्थान्तरं बोधयति धूमादिर्नास्याऽसंगतस्य बोधकत्वम् इति । अस्त्येव वाक्यार्थेन पदादीनां संबन्ध इति चेत्तत्राह अप्रतीत इति । प्रतीतसबन्धस्यैव हि धूमादेरग्न्यादिबोधकत्वं दृष्टमिति । निष्प्रमाणकं चास्याऽप्रतीतस्य सम्बन्धस्य सत्त्वमित्याह न चेति[५] ।

---

* अत्रेति २ पु. पा. ।

न तावदवगम्येते कैश्चित्तद्व्यतिरेकतः ।
यौगपद्याऽगृहीतेश्च समुदायौ न सिध्यतः ॥ ७ ॥
न सत्तायौगपद्यस्य व्यवहाराऽङ्गतेष्यते* ।
सर्वनित्यतया मा भूद्विशेषाऽनवधारणम् ॥ ८ ॥
ज्ञानानां क्रमवर्त्तित्वाद्यौगपद्ये ऽप्यसंभवः ।
तेन तत्समुदायो ऽपि न वाक्यार्थः प्रतीयते ॥९॥

---

ननु चोदनालक्षणो ऽर्थो धर्म इत्युक्तं, चोदना च वाक्यमेवाऽतो वाक्यमेव वाक्यार्थप्रतीतेर्मूलमिति किं मूलान्तरैर्निराकृतैरत आह वाक्येति । सत्त्वे ऽपि तावदगृहीतसम्बन्धत्वान्नवाक्यं वाक्यार्थप्रतिपत्तेर्निमित्तं, सत्ता ऽपि तयोर्नास्त्येवेति । तत्राऽव्यतिरेके तन्मात्रापातात्स्पष्टं दूषणम् । व्यतिरेकं दूषयति न तावदिति[७] । एवं च मूलाऽभावात्प्रमेयाऽभावाच्च दुरभ्रष्टं वाक्यार्थाऽवगतेः प्रामाण्यमिति । नन्वस्त्येव व्यतिरेकः, पदसमुदायो हि वाक्यं, पदार्थसमुदायश्च वाक्यार्थः, अत आह यौगपद्येति । युगपद्भाविनामेव वृक्षादीनां समुदाय इति ।

नन्वसत्यपि ग्रहणयौगपद्ये सत्तायौगपद्यादेव समुदायो भविष्यत्यत आह न सत्तेति[८] । कथमित्याह सर्वेति । सर्वाणि पदानि नित्यत्वादेकवाक्यतां गच्छेयुः, तथा पदार्थो वाक्यार्थतां, न चैवमस्ति, अवान्तरवाक्यवाक्यार्थव्यवहारश्च न सत्तायौगपद्येन सिद्ध्येदिति । तेन ज्ञानयौगपद्यमेव वक्तव्यं, न तु तदस्तीत्याह ज्ञानानामिति[९] । सत्तायौगपद्ये सत्यपि ज्ञानानां न सम्भवो ऽसाहित्य-

---

* व्यवहारेण नेष्यते इति का. पा. ।

'सम्बन्धपूर्वकत्वं च वाक्यवाक्यार्थयोः स्थितम् ।
स्वतन्त्रेषु हि वाक्यत्वं कदा चिन्नोपलक्ष्यते* ॥१०॥
सम्बन्धश्चाऽनपेक्षत्वात् कस्य चिन्नाऽवकल्पते' ।
पदानि तावद्वर्णा वा स्वरूपैर्न कदा चन ॥ ११ ॥
अनर्थकेष्वदृष्टत्वादपेक्षन्ते परस्परम् ।
न चाऽनुच्चारितः शब्दः शक्नोत्यन्यमपेक्षितुम् ॥१२॥
यौगपद्यं तु नास्त्येव न चोच्चार्य तिरोहितः ।
अपेक्षणे ऽपि सम्बन्धो नैव कश्चित् प्रतीयते ॥१३॥

---

मिति । तत्सिद्धं न पदार्थसमुदायो वाक्यार्थ इत्याह तेनेति । किं च, न समुदायमात्रं वाक्यं वाक्यार्थो वा, गौरश्वः पुरुषो हस्तीत्यत्रापि प्रसङ्गात्,तेन संवद्धानि पदानि पदानां वा सम्बन्धो वाक्यं, सम्बद्धाश्च पदार्थाः पदार्थसम्बन्धो वा वाक्यार्थ इति वक्तव्यं, न च सम्बन्धः सम्भवतीत्याह सम्बन्धेति[१०] सार्द्धेन ।

तत्र पदानां तावदनपेक्षतां दर्शयति पदानीति[११] । उपमार्थो वाशब्दः, अर्थनिबन्धना हि पदानामपेक्षा, न स्वस्वरूपनिबन्धना, अनर्थकेष्वप्रतिपादितार्थेषु प्रथमश्रवणादौ वर्णवदपेक्षाऽभावादिति । इतश्चाऽनपेक्षत्वमित्याह न चेति[१२] । भवतु वा ऽपेक्षा, सम्बन्धस्तु न कथं चिन्मिथः पदानामेकवाक्यताहेतुभूतो ऽस्ति, यदर्थमपेक्षाऽङ्गीकरणमित्याह अपेक्षणइति[१३] । नन्वस्त्येकार्थसमवायो, ऽत आह

---

* नोपलक्षितमिति ३ पु. पा. ।

कार्यकारणसंयोगसमवायादिलक्षणः ।
एकाऽर्थसमवाये ऽपि सर्वेषां व्योम्नि तुल्यता ॥१४॥
तत्रोक्ताऽनुक्तयोग्यादेर्न विशेष्येण* सङ्गतिः ।
'एककार्यनियोगो ऽपि व्यङ्ग्ये जन्ये ऽथ वा भवेत्॥१५॥
व्यङ्ग्यास्तावत् पृथग्भूताः पदार्थाः पदभेदतः ।
तथा तद्विषया ऽप्येतैर्बुद्धिर्नैका ऽपि जायते ॥१६॥
या तु स्वाविषया बुद्धिः प्रतिशब्दमसावपि' ।
न चैकज्ञानजननं भिन्नैस्तैः क्रमवर्त्तिभिः ॥१७॥
न चाऽवयवशो बोधादैक्यं वाक्यतदर्थयोः ।
न चाऽवयवबुद्धीनां भ्रान्तित्वं बाधकादृते ॥१८॥

---

एकार्थेति[१४] । ततः किमित्यत आह तत्रेति[१५] ।

एककार्यकरत्वं पदानां सम्बन्ध इति चेत्, तद्विकल्प्य दूषयति एकेति द्वयेन । ननु यद्यपि पदार्थज्ञानानि शब्दज्ञानानि च प्रतिपदार्थं प्रतिशब्दं च भिन्नानि, तथाप्यस्त्येवैकं वाक्यज्ञानं वाक्यार्थज्ञानं वा पदार्थानां कार्यमत आह न चेति[१७] । न हि सम्भवत्ययुगपद्भुवामेककार्यजननं, किं चाऽसति पदाऽतिरिक्ते वाक्ये कथं तज्ज्ञानमेषां कार्यं स्यात्, वाक्यार्थो ऽप्येको निराकृत इति न तदपेक्षया ऽप्येषां सम्बन्ध इति ।

ननु प्रत्यस्तमितपदवर्णविभागमेकरूपमेव वाक्यं, किमत्र पदानां सम्बन्धेन, तथा वाक्यार्थो ऽपि निर्भाग एवाऽत आह न चेति[१८]। गम्यते हि वाक्यवाक्यार्थयोरवयवशो भेद इति ।

---

* विशेष्येतेति का. पा. ।

एकनिर्भागताबुद्धेरसत्याः सत्यता कथम् ।
अनुरागव्यवच्छेदौ बुद्धीनां न च सिद्ध्यतः ॥१९॥
क्षणिकत्वादतो* ऽर्थत्वं नेष्टं संसर्गभेदयोः ।
यदि ध्रियेत गोबुद्धिः शुक्लबुद्धिजनिक्षणे ॥२०॥
ततो ऽन्याभ्यो निवर्त्तेत संसृज्येत तथा ऽनया ।
संसर्गो न च बुद्धीनां संयोगादेरसंभवात् ॥२१॥

---

यस्तु भागानपन्हुत्य निर्भागत्वमङ्गीकरोति तस्य निष्पन्नानामवयवबुद्धीनामबाधितानां भ्रान्तित्वं बाधितायाश्च निर्भागैकबुद्धेः प्रामाण्यमङ्गीकर्त्तव्यं स्यान्न चैतद्युक्तमित्याह न चेति ।

एवं तावदसम्बन्धात्पदानां वाक्यत्वं निराकृतम्, इदानीमसंबन्धादेव वाक्यार्थमपि निराकरोति अनुरागेति[१९] । परस्पराऽनुरागो व्यवच्छेदो वा सम्बन्धः स्यात्, सो ऽपि पदानां पदार्थानां वा, न तावद् बुद्धीनां, क्षणिकत्वादतो न संसर्गव्यवच्छेदयोः संसृष्टव्यवच्छिन्नानां वाक्यार्थत्वमिति । एतदेव विवृणोति यदीति[२०] । गौः शुक्ल इत्यत्र गोशब्दजनिता बुद्धिः सर्वगवीषु शुक्लकृष्णादिषु प्रसृता यदि शुक्लशब्दजनितशुक्लबुद्धिजननं यावद् ध्रियेत ततस्तया संसृज्येताऽन्याभ्यो वा कृष्णादिव्यक्तिबुद्धिभ्यो व्यवच्छिद्येत, न तु सा ध्रियते, क्षणिकत्वादिति ।

ध्रियतां वा, तथापि को बुद्ध्योः संसर्गः, न तावत्संयोगो, द्रव्यधर्मत्वात्, नापि समवायो,द्वयोरप्यात्मसमवायित्वादित्याह संसर्ग इति[२१]। एकार्थसमवाय इति चेद्, घटहस्त्यादिबुद्धीनामप्येकवाक्यार्थता स्या-

---

* ऋते इति का. पा. ।

एकाऽऽत्मवृत्तिता तुल्या घट*हस्त्यादिधीष्वपि ।
तथा निरन्तरोत्पत्तिर्नाऽऽकाङ्क्षा वा ऽत्र शब्दवत् ॥२२॥
क्षणिकाऽयुगपद्भावे का बुद्धिः काममपेक्षते† ।
अत एव विशिष्टा धीस्ताभिर्नैकोपजन्यते‡ ॥२३॥
यतः कल्प्येत सर्वासां संसर्गस्तदपेक्षया ।
न च संसर्गविच्छेदनिर्भासो ऽन्तः प्रकाल्पितः ॥२४॥

---

दित्याह एकेति[२२]। निरन्तरोत्पत्तिः संसर्ग इति चेत्, सा ऽपि घट-हस्त्यादिबुद्धिषु तुल्येत्याह तथेति ।

निराकाङ्क्षत्वादपि बुद्धीनां पदवदेव न सम्बन्ध इत्याह नाकाङ्क्षेति । निराकाङ्क्षत्वमेव दर्शयति क्षणिकेति[२३] । ननु सर्वाभिः पदार्थबुद्धिभिरन्ते परस्परविशिष्टसमस्तपदार्थविषया बुद्धिरेका जनयितव्या ऽस्ति, तज्जननमेवाऽऽसां मिथः संसर्गस्तज्जननाय चाऽऽकाङ्क्षापि भवत्येवाऽत आह अत एवेति । क्षणिकत्वादेवाऽयौगपद्यादित्यर्थः ।

ननु निर्भासेते गोशुक्लादिबुद्धीनां मिथः संसर्गव्यवच्छेदौ, कथमपलपितुं शक्येते, अत आह न चेति[२४] । यद्यप्यस्त्ययं निर्भासः, स तु स्वप्नादिवदप्रमाणम्, अन्तःकल्पितत्वात्स्वांशालम्बनत्वादित्यर्थः। यद्यपि संसर्गविच्छेदात्मको निर्भासो ऽर्थरूपेण बाह्यवद् व्यतिरिक्तालम्बन इवाऽवभासते तथापि बुद्धीनां संसर्गविच्छेदयोरसम्भवात् स्वात्मालम्बनो ऽयं न संसर्गविच्छेदयोः प्रमाणमिति ।

---

* हयेति पाठान्तरम् ।

† अपेक्षतामिति २ पु. पा. ।

‡ नैवोपजन्यते इति २ पु. पा. ।

बाह्याऽऽभासो ऽथ रूपेण प्रमाणं स्वप्नवद्भवेत् ।
न च कालत्रयोपेतबाह्यार्थाऽसंभवे सति ॥२५॥
प्रवर्तेतापि* विज्ञानं न चाऽस्मिन् बाह्यसंभवः ।
अनुत्पन्ने ऽपि तेनाऽस्मिन्नुत्पन्नपरिकल्पना ॥२६॥
अर्थसंसर्गदृष्ट्या वा संसर्गो ऽत्र प्रकल्प्यते ।
बुद्ध्योर्न तावदेवं स्याद्विशेषणविशेष्यता २७॥
तथैव शब्दतद्बुद्ध्योर्विशेषात्प्रत्ययसंभवात् ॥
तावानेव हि गोशब्दः शुक्लशब्दे ऽपि कीर्तिते ॥२८॥

---

यद्वा नास्त्येवाऽयं निर्भास इत्याह न चेति[२५] । स्वांशालम्बनत्वं हि निराकृतं विज्ञानवादे, सर्वत्र देशकालान्तरस्थितबाह्यालम्बनत्वप्रतिपादनात्, न च बुद्धीनां संसर्गः कालत्रये ऽपि सम्भवतीति नास्त्येव तज्ज्ञानमिति । तेनाऽनुत्पन्ने ऽपि बुद्धिसंसर्गज्ञाने भ्रान्त्यैव तदुत्पत्तिकल्पनेत्याह अनुत्पन्ने इति[२६] । अथोत्पत्तिर्न शक्यतेऽपह्नोतुं, तत एवं वक्तव्यमित्याह अर्थेति[२७] । अर्थानां हि गोशुक्लादीनां दृष्ट एव संसर्गः, तमेतद्विषयासु बुद्धिष्वपि कल्पयित्वा ऽयं बुद्धिसंसर्गाऽवभासः प्रवर्त्तत इति । उपसंहरति बुद्ध्योरिति ।

इदमेव शब्दतद्बुद्ध्योरपि वाक्यत्वनिराकरणायाऽतिदिशति तथेति[२८] । विशेषाऽऽधायकं विशेषणं, न चेह संसर्गेण व्यवच्छेदेन वा विशेषाऽऽधानं संभवतीति । असंभवमेव दर्शयति तावानिति । पूर्वं सम्बन्धाऽसम्भवात् पदानां वाक्यत्वं निराकृतम्, इदानीं तु विशेषाऽनाधायकत्वादिति विशेष इति ।

---

* प्रवर्तते चेति २ पु. पा. ।

पूर्वसत्त्वे ऽपि* तावत्ता तस्यैवं तद्धियोरपि ।
विशेषणविशेष्यत्वं न स्याच्छुक्लत्वगोत्वयोः ॥२९॥
न तयोरनुरागो हि नाऽवच्छेदः परस्परम् ।
गोत्वेन न हि शुक्लत्वं गोत्वं वा तेन रज्यते ॥३०॥
अन्योन्यात्मन्यसद्भावाद्व्यक्त्यङ्गत्वाद्† द्वयोरपि ।
व्यक्तिश्चेदनुरज्येत ताभ्यां तत्रापि शब्दयोः ॥३१॥

---

एवं तावदर्थबुद्धीनां संसर्गव्यवच्छेदनिराकरणेन मिथो विशेषणविशेष्यत्वं निराकृतं, पदार्थानामिदानीं निराकरोति विशेषणेति[२९] । कारणमाह न तयोरिति[३०] । जातिपदार्थपक्षे गोशब्देन गोत्वमात्रमभिहितं, शुक्लपदं तु तदेकवाक्यभूतं तस्यैव शुक्लगुणाऽनुरागं प्रतिपादयतीति संसर्गो वाक्यार्थः, तदेकत्वाच्च पदानामेकवाक्यता । व्यक्तिपदार्थपक्षे तु गोशब्देनैव शुक्लकृष्णादिव्यक्तिषु सर्वास्वभिहितासु शुक्लपदं शुक्लसंसर्गं प्रतिपादयदपि तत्परत्वे सत्यानर्थक्यात् कृष्णादिव्यवच्छेदेनैव विशेषणं भवतीति । भेदो वा वाक्यार्थः, प्रथमपक्षे त्वार्थिकः कृष्णादिव्यवच्छेदः। तदिदं द्विविधमपि विशेषणविशेष्यत्वपदाऽभिधेययोर्जातिगुणयोर्मिथो ऽनुरागव्यवच्छेदाऽभावादनुपपन्नमिति । एतदेवोपपादयति गोत्वेनेति । अनुरागाऽसम्भवे च तन्निबन्धनो व्यवच्छेदो ऽपि न सम्भवत्येवेति ।

असत्यपि तयोः परस्पराऽनुरागे व्यक्तिरेका ताभ्यामनुरज्यमाना वाक्यार्थो भविष्यतीति चेन्न, तस्याः शब्देनाऽप्रतिपाद्यमानाया वाक्यार्थत्वाऽसम्भवात्तदसम्भवादेव च शब्दयोरपि नैकवाक्यता सिध्यतीत्याह व्यक्तिरिति[३१] ।

---

* पूर्वशब्दे ऽपीति का. पा. । † व्यक्तिगत्वादिति पाठान्तरम् ।

न परस्परसम्बन्धः* स्यादतद्गोचरौ हि तौ ।
शब्दैरनुच्यमाने हि सत्यप्येकाश्रये ऽर्थतः ॥३२॥
शब्दानां नैव सम्बन्धः पृथिवीस्थगवाश्ववत्† ।
एकार्थसमवाये ऽपि रूपाद्यैर्नैव सङ्गतिः ॥३३॥
न चैकव्यक्तिवृत्तित्वे प्रमाणं गोत्वशुक्लयोः ।
सम्बन्धादेतयोस्तत्र स्यादेकव्यक्तिकल्पना ॥३४॥
तदेकत्वाच्च सम्बन्ध एवमन्योन्यसंश्रयम् ।
न चात्र पदमस्त्यन्यद्येनैकव्यक्तिधीर्भवेत् ॥३५॥

---

नन्वप्रतिपाद्यमाना ऽप्यस्ति तावदेका जातिगुणयोराश्रयभूता व्यक्तिः, अतः सिद्ध्यति वाक्यवाक्यार्थयोरैक्यमत आह शब्दैरिति[३२]।

ननु नाऽऽश्रयमात्रं वाक्यार्थं ब्रूमः, किं तु यत्र शब्दाऽभिधेययोः समवायः स वाक्यार्थः, तदेकत्वाच्च वाक्यैकत्वम्,अत आह एकार्थेति[३३] । अस्ति हि रूपरसयोरेकार्थसमवायः, तथापि रूपं रस इत्यनयोर्नैकार्थ्यमेकवाक्यता वा न दृष्टेति । दूषणान्तरमाह न चेति[३४] । भिन्नाश्रयत्वमपि सम्भवतीति कुतस्तदेकत्वनिबन्धनः पदसम्बन्ध इति । पदसम्बन्धादेव तु व्यक्त्येकत्वकल्पनायामितरेतराश्रयमित्याह सम्बन्धादिति ।

न च शाबलेयादिपदं व्यक्तिवचनमिह श्रूयते, यदेकां व्यक्तिं प्रतिपादयेदित्याह न चेति[३५] । श्रूयमाणमपि शाबलेयत्वाद्याका-

---

* संसर्ग इति २ पु पा. ।

† गजाश्वेति २ पु. पा.

न चाऽस्याः पदवाच्यत्वं* वाच्यत्वे ऽपि न चैकता ।
गम्यमानस्य चैकत्वात् सम्बन्धो यदि कल्प्यते ॥३६॥
पार्थिवत्वाद्यभेदेन किं न स्याद् घटवृक्षयोः ।
शुक्लश्रुत्या न गोत्वादिः कृष्णादिभ्यो निवर्त्यते ॥३७॥
स्वभावतो ऽवबोधश्च तद्वशान्नाऽपसर्पति ।
कृष्णाद्यपोहनं वाच्यं शुक्लशब्दस्य यद्यपि ॥३८॥

---

रवचनत्वान्न व्यक्तिं वदतीत्याह न चेति[३६] । यद्यपि कथं चि-च्छबलाया अपत्ययोः संभवादित्याह वाच्येति ।

तदेवमेकाश्रयत्वमप्रमाणकं, सत्यपि तस्मिन्नैकवाक्यता सिध्य-तीत्युक्तम् । मा भूदेकाश्रयत्वेनैकवाक्यता, गम्यमानैकतया तु भविष्य-ति, गम्यते हि गोशुक्लपदाभ्यामभिधेयद्वारेणैका व्यक्तिरिति चेन्न, अने-कत्वस्यापि व्यक्तीनां संभवात् । उपेत्याप्याह गम्यमानस्येति । गम्यते हि घटवृक्षशब्दाभ्यामेकं पार्थिवत्वं द्रव्यत्वं चेति ।

एवं तावदनुरागस्तन्निबन्धनश्च व्यवच्छेदो निराकृतः, संप्रत्यु-पेत्यापि संसर्गं व्यवच्छेदं निराकरोति शुक्लेति[३७] । श्रुते ऽपि शु-क्लपदे दृश्यतएव कृष्णादिषु गोत्वमिति ।

ननु नार्थस्य निवृत्तिं ब्रूमः, किं तु बुद्धेरत आह स्वभावत इति[३८] । बुद्धिरप्यर्थस्वभावाऽनुसारिणी नाऽनिवृत्तेर्थे निवर्त्तते, श्रु-ते ऽपि हि शुक्लपदे भवत्येव कृष्णादिषु गोबुद्धिरिति ।

---

* न चास्यापदवाचित्वमिति ३ पु. पा. ।

तथापि गोगतत्वे ऽस्य प्रमाणं नैव सन्निधिः ।
एतद्विषय* एवेति यावच्छब्देन नोच्यते ॥३९॥
तावत्सर्वमशाब्दं स्यात्† स्वातन्त्र्येणाऽध्यवस्यतः ।
सन्निधेरनुमीयेत तादृशं वचनं यदि ॥४०॥
पुनः सन्निध्यधीनैव तस्यैतद्विषयाऽर्थता ।
तत्रापि शब्द‡क्लृप्तिश्चेदनवस्था भवेदियम् ॥४१॥

---

यद्वा एवं व्याख्या, श्रुतिस्वभावाद्भवन्ती बुद्धिर्न शुक्लपदेनैक-वाक्यतावशेन कुतश्चिदपवर्त्तते, श्रुतिर्हि वाक्याद्बलीयसी, कृष्णा-द्यपोहवचनत्वे हि शुक्लपदस्य व्यवच्छेदो ऽपि श्रौतः स्यान्न तु तद-स्ति । तदिदं "नन्वेव"मित्यादिचोद्यपूर्वकं "कथमिव गौरिति वा ऽश्व इति वे"त्यादिना "कृष्णादिनिवृत्तिः शब्दार्थ" इत्येवम-न्तेन भाष्येणोक्तम्§ । एवं हि शुक्लश्रुतिजनिता ऽपि गुणबुद्धिर्न गो-पदैकवाक्यतया ऽश्वादिभ्यो व्यावर्त्तते, व्यावृत्त्यभावे च नियतवा-क्यार्थाऽप्रतीतिर्न वाक्यार्थे शब्दस्य प्रामाण्यमिति ।

उपेत्याह कृष्णादीति । कृष्णाद्यपोहमात्रं हि श्रुत्यर्थस्तस्य तु गोगतत्वं पदसंनिधिलक्षणवाक्यात्, तच्च दुर्बलत्वान्न प्रमाणमिति । यदि तु गोविषयं कृष्णाद्यपोहनमिति कश्चिच्छब्दो वदेत्स्यादपि तद्वि-षयता, तदभावे तु स्वातन्त्र्येणैव गोगतत्वमध्यवस्यतो ऽशाब्दमेव स्यादित्याह एतदिति[३९] ।

शङ्कते सन्निधेरिति[४०] । परिहरति पुनरिति[४१]। कल्प्यमा-नस्यापि सामान्यविषयत्वादेतद्विषयत्वं संनिधिकृतमेवेति तत्रापि पुनः शब्दं कल्पयतो ऽनवस्थेत्याह तत्रापीति ।

---

* विषयमिति २ पु. पा. । † तावत् स एव शब्दार्थ इति का. पा. ।
‡ शक्तीति का. पा. । § शा. भा. पृ. ३२ प. १२ ।

षट्प्रमाणाऽतिरिक्तत्वात्तस्मात्सान्निध्यनाश्रयः ।
सम्बन्धकारणं नापि षष्ठी गव्युपलभ्यते* ॥४२॥
सत्यामपि तु सम्बन्धः श्रौतस्तावन्निराकृतः ।
गम्यमानस्य चाऽर्थस्य नैव दृष्टं विशेषणम् ॥४३॥
शब्दान्तरैर्विभक्त्या वा धूमो ऽयं ज्वलतीतिवत् ।
संसर्गे चापि भेदे वा वाक्यार्थे परिकल्पिते ॥४४॥
तस्य यावत्पदार्थत्वान्नैकवाक्यत्व†संभवः ।
पदार्थव्यतिरेकश्च नास्ति संसर्गभेदयोः ॥४५॥

---

यत एवं संनिधिलक्षणं वाक्यं श्रुतिविरोधान्न शब्दार्थ विशेषे ऽवस्थापयति ततो नाऽस्य शब्दे ऽन्तर्भावः, प्रत्यक्षाद्यन्तर्भावस्त्वनाशङ्क्य एवातो ऽप्रमाणत्वादनादर्त्तव्यमेवेत्याह षट्प्रमाणेति[४२] । वाक्यन्यायेनैव लिङ्गादीनामर्थपाठादीनां च प्रामाण्यं निरस्तं वेदितव्यम् । असति च संनिधेः प्रामाण्ये कृष्णादिनिवृत्तिवदेव शुक्लगुणस्य गोगतत्वमप्रमाणमेवेति ।

यदि तु गोशब्दे ऽपि षष्ठी श्रूयेत ततः श्रौत एव सम्बन्धः स्यान्न चाऽसावस्तीत्याह सम्बन्धेति । यत्र तर्हि गौः शुक्ल इति प्रयुज्यते तत्र सम्बन्धः स्यान्नेत्याह सत्यामिति[४३] । न हि श्रौतयोर्जातिगुणयोरपोह्योर्वा मिथः संबन्धो ऽस्तीति । यदि त्वश्रुता ऽपि गम्यते तावद्व्यक्तिरतस्तस्या एव शुक्लसंबन्धः षष्ठ्या प्रतिपाद्यते, गुणो ऽपि तयैव संबध्यते, तत्राह गम्यमानस्येति । न हि धूम इत्येकत्वं ज्वलनक्रिया वा अग्नेर्विशेषणमिति ।

दोषान्तरमपि संसर्गभेदयोर्वाक्यार्थत्वे दर्शयति संसर्गइति[४४] ।

---

* उपलक्ष्यते इति १ पु. । † नैकवाक्यार्थेति का. पा. ।

न च वस्त्वन्तराऽऽरम्भः पदार्थैस्तदनुग्रहात् ।
न हि जातिगुणैः किं चित्कार्यमारभ्यते बहिः ॥४६॥
तदभावे ऽवबोधश्च जातो ऽपि स्वप्नवन्मृषा ।
सतामेव विशेषाणां संनिधेर्यो ऽपि मन्यते ॥४७॥
वाक्यार्थत्वमभिव्यक्तौ तस्यापि तदनेकता ।
प्राक्सत्त्वे च कुतस्तेषां प्रमाणं प्रत्ययैर्विना ॥४८॥

---

व्यतिरेकाऽव्यतिरेकविकल्पाऽक्षमौ चेमावित्याह पदार्थेति[४५] । यद्युच्येत पदार्थैरेव संसर्गभेदाऽनुगृहीतैर्वाक्यार्थो नाम वस्त्वन्तरं तन्तुभिरिव पट इति, तदपि संसर्गभेदनिराकरणेनैव निराकृतमित्याह न चेति[४६] । न च तादृशं वस्तु बहिर्वाक्यार्थज्ञानं पृथक्कृत्य प्रमाणान्तरेणोपलभ्यतइत्याह न हीति ।

मा भूत्प्रमाणान्तरवाक्यात्तावदवबोधो जायते, अत आह तदभावइति[४७] । प्रमाणान्तराऽभावादेवाऽभावे निश्चिते जातो ऽपि बोधो मृषेति ।

यस्तु वदति, पदाभिधेयानां जातिगुणानामेव मिथः संसर्गाः साक्षात्सम्भवन्ति न व्यक्तिद्वारा, तेपि संसर्गविशेषाः प्रागपि सन्त एव प्रमाणान्तरेणाऽप्रतिपन्नाः पदसंनिधिरूपाद् वाक्यादभिव्यक्ता वाक्यार्थतयोच्यन्तइति; तन्मते ऽपि बहुपदेषु वाक्येषु वाक्यार्थोऽनेकत्वं स्यादेव, प्रत्येकं पदार्थानां पदार्थान्तरसंसर्गादित्याह सतामिति । निष्प्रमाणकं च प्राक्सत्त्वमित्याह प्रागिति[४८] ।

ननु वाक्यमेव प्रमाणं, न ह्यसतां वाक्यात्प्रतीतिः सम्भवति, न हि वाक्यं तेषां जनकम्, अस्तु तर्हि सत्त्वमप्रतीतेषु तेषु न वस्तुस-

न चैषां वस्तुसत्त्वं च तत्पदे ऽस्तित्वकारणम् ।
एवमाद्याऽन्त्यसर्वेषां पृथक्संघातकल्पने ॥४९॥
अन्योन्याऽनुग्रहाऽभावात् पदानां नास्ति वाक्यता ।
आद्यं यदि पदं सर्वैः संस्क्रियेत विशेषतः ॥५०॥
ततस्तदेव वाक्यं स्यादन्यश्च द्योतको गणः* ।
एवमन्त्येषु† सर्वेषु पृथग्भूतेष्ववस्थितम् ॥५१॥

---

त्तामात्रेण पदानां प्रयोगः सम्भवतीत्याह न चेति[४९] । ये ऽपि वैयाकरणैरुक्ता वाक्यविकल्पाः—

आख्यातं शब्दसंघातो जातिः संघातवर्त्तिनी ।
एको ऽनवयवः शब्दः क्रमो बुद्ध्यनुसंहतिः ।
पदमाद्यं पृथक् सर्वं पदं सापेक्षमित्यपि ।
वाक्यं प्रति मतिर्भिन्ना बहुधा न्यायदर्शिनाम् ॥ इति;

तान्निराकरोति एवमिति[४९]। अन्त्यपदवाक्यत्वं परैरनुपन्यस्तमपि सम्भवादुपन्यस्यते, तदनन्तरं हि वाक्यार्थः प्रतीयते, यत्तावदाद्यस्यान्त्यस्य सर्वेषां वा प्रत्येकं मिथो ऽनुग्रहाऽपेक्षया संघातस्य वा वाक्यत्वकल्पनं तदयुक्तमितरेतराऽनुग्रहाऽसम्भवादिति ।

अनुग्रहाऽसम्भवमेव दर्शयति आद्यमिति[५०] । न ह्याद्यस्येतरैरनुग्रहः कश्चिद्दृश्यते, न स सम्भवत्ययौगपद्यादिति । तथा ऽन्त्यस्य सर्वेषां वा संहतानां पृथग्भूतानां वा नास्त्यनुग्रह इत्याह एवमिति[५१] ।

---

* गुण इति २ पु. पा. ।

† अन्येष्विति ३ पु. पा. ।

स्वतन्त्रेषु हि वाक्यत्वं कथं चिन्नोपलक्षितम् ।
स्फोटजातिनिषेधश्च स्यात्पदस्फोटजातिवत् ॥५२॥
वार्यः पदक्रमो वाक्यं यथा वर्णक्रमः पदम् ।
बुद्ध्या न चोपसंहर्तुं क्रमो निष्कृष्य शक्यते ॥५३॥
पदान्येव हि तद्वन्ति वर्तन्ते श्रोत्रबुद्धिवत् ।
तावत्स्वेव पदेष्वन्यः क्रमो ऽन्यश्च प्रतीयते ॥५४॥
तत्र यावत्क्रमं भेदो वाक्यार्थस्य प्रसज्यते ।
पदान्तरस्य पारार्थ्यादाख्यातं यो ऽपि मन्यते ॥५५॥
वाक्यं प्राधान्ययोगेन वाक्यार्थं चापि भावनाम् ।

---

मा भूत्तदनुग्रहस्तथापि किमिति वाक्यत्वं न भवत्यत आह स्वतन्त्रेष्विति[५२] । एवं च व्यस्तोच्चारितानां गौरश्व इत्यादीनां च वाक्यत्वं स्यादिति । 'एको ऽनवयवः शब्द' इति च 'जातिः संघातवर्त्तिनी'ति च निराकरोति स्फोटेति । 'क्रमो बुद्ध्यनुसंहति'रित्येतन्निराकरोति वार्य इति[५३] । बुद्ध्यनुसंहतिश्च क्रमस्याऽसिद्धेत्याह बुद्ध्येति । कथमित्याह पदानीति[५४] । किं च, वर्णक्रमस्य पदत्वं युज्येतापि, स ह्यर्थप्रतीत्यौपयिकः क्रमान्तरे ऽर्थप्रतीत्यभावात्, पदक्रमस्य तु वाक्यार्थप्रत्ययाऽनौपयिकस्य कथं वाक्यत्वम्, औपयिकत्वे वा क्रमभेदे वाक्यार्थभेदः स्यादित्याह तावत्स्विति ।

संप्रत्याख्यातवाक्यपक्षमनुभाषते पदान्तरस्येति[५५] । प्राधा-

---

* बुद्धिवदिति का. पु. ।

तत्रापि न बहिर्वस्तु क्रियाकारकसङ्गतिः ॥५६॥
न कारकाणामन्योन्यं न क्रियाणां प्रतीयते ।
उखाया*मोदनं काष्ठैर्देवदत्तः पचेदिति ॥५७॥
द्रव्याणां तावदेतस्मिन्न सम्बन्धः परस्परम् ।
अत्यन्तभेदनिष्पन्नषष्ठ्यभावाऽनपेक्षणैः ॥५८॥
तृतीयाद्यपहारेण संनिधेरपि बाधनात् ।
काष्ठादीनां च सम्बन्धः क्रियया न स्वरूपतः ॥५९॥

---

न्ययोगश्चाऽऽख्यातस्य प्रधानार्थप्रतिपादनात् । भावनामिति । पदार्थान्तराऽनुरक्तामिति द्रष्टव्यमिति । तदिदं निराकरोति तत्रापीति[५६]। तदाकारज्ञानोत्पत्तौ सत्यामपि न बहिर्वस्तुरूपा संगतिरस्ति, तदभावे च न वाक्यवाक्यार्थत्वमिति । असंगतिमेव दर्शयितुमुदाहरणमाह उखायामिति[५७] । तदिह द्रव्याणां तावदसम्बन्धं दर्शयति द्रव्याणामिति[५८] । कारणमाह अत्यन्तेति । वस्तुतस्तावदेषां सम्बन्धो नास्ति, भिन्नत्वेन तादात्म्याऽभावान्निष्पन्नत्वेन च कार्यकारणभावाऽभावात्; यद्यपि वस्तुतः कश्चित्सम्बन्धः स्यात्तथापि न तस्य वाक्येन प्रतिपादनं सम्भवति षष्ठ्यभावात्, निष्पन्नत्वादेव च न तेषां परस्पराकाङ्क्षा ऽस्ति, तदभावादेव वचनशब्दानामर्थनिबन्धनत्वात् शब्दाकाङ्क्षायाः, निराकाङ्क्षाणां च कथं संबन्ध एकवाक्यतेति । षष्ठ्यभावे ऽपि संनिधानात्संबध्यतइति चेन्न, संनिधिबाधेन कारकविभक्तिभिः क्रियासंबन्धाऽवगमादित्याह तृतीयादीति[५९] ।

---

* उपायामिति ३ पु. पा. ।

आर्द्रादिधर्मकैः पाकस्तैः कृतो न हि दृश्यते ।
शक्तिः कारणमिष्टा चेदमूर्ता सापि निष्क्रिया ॥६०॥
शक्तैरपि च तैः पाकस्तिष्ठद्भिर्नैव साध्यते* ।
ज्वलनादिमुखेनाथ तेषां पाकेन सङ्गतिः ॥६१॥
तथापि कर्मणा कर्म न साध्यमिति दुर्लभम् ।
भिन्नाऽर्थसमवेतत्वान्न च सम्बन्धसंभवः ॥६२॥

---

भवतु तर्हि क्रिययैव संबन्धो, ऽत आह काष्ठादीनामिति । कथमित्याह आर्द्रादीति[६०] । संबन्धाऽभावे च तृतीयादिभिस्तद्बुद्धिरुपजाता ऽपि न प्रमाणमिति शङ्कते शक्तिरिति । न चार्द्राणां शक्तिरस्तीति व्यभिचार इति । दूषयति अमूर्त्तेति । द्रव्यमेव शक्तिविशिष्टं कारकमिति चेत्, तदपि व्यभिचार्येवेत्याह शक्तैरिति[६१] ।

शङ्कते ज्वलनादीति । निराकरोति । तथापीति[६२] । यदि हि ज्वलनकर्म पाकस्य साधनं स्यात्ततस्तद्द्वारेण काष्ठान्यपि साधनानि स्युः, न तु तदस्ति, न तावत् ज्वलने पाकः समवेतो, यतः पाकस्य ज्वलनं समवायिकारणं स्यादिति ।

नाप्यसमवायिकारणं, कार्यभूतेन पाकेन तत्कारणभूतेन वा देवदत्तेन सह ज्वलनस्याऽग्निसमवेतस्यैकार्थसमवायाऽभावादित्याह भिन्नार्थेति । तर्हि निमित्तकारणं स्यात्, अस्त्वेवं, न ह्येतावता का-

---

* साधक इति का. पु. ।

न चाऽन्यकारकोत्पाद्ये कारकं कारकान्तरम् ।
ज्वलनादीनि कुर्वन्ति न च स्युः पाकसाधनम् ॥६३॥
अपाकसाधनानाञ्च कुतस्तेनैकवाक्यता ।
ज्वलनादिगता पाके शक्तिश्चेदुपचर्यते ॥६४॥
कर्तृत्वात्तत्र काष्ठादेः कारणादि च दुर्लभम् ।
मुख्यं कारकवैचित्र्यमलब्धं ज्वलनादिषु ॥६५॥
कथं नु पाकवेलायामुपचारेण लभ्यते ।
स्वव्यापारे च काष्ठादेः करणत्वाद्यसंभवः ॥६६॥
विक्लिद्यन्ति ज्वलन्तीति बिभ्रतीति च दर्शनात् ।
न चैषां पाकवेलायां व्यापारान्तरमिष्यते ॥६७॥

---

ष्ठानां पाके कारकत्वं सेत्स्यतीत्याह न चेति[६३] । कथं हि ज्वलनसाध्यः पाकः काष्ठसाध्यः स्यात्, काष्ठादीनि ज्वलनभरणाविक्लेदनादीनि कुर्वन्ति कथं पाकसाधनं स्युरिति । मा भूवन्निति चेत्तत्राह अपाकेति[६४] ।

शङ्कते ज्वलनादीति । दूषयति कर्तृत्वादिति[६५] । एतदेव विवृणोति मुख्यमिति । मुख्यपूर्वो ह्युपचारो, न च ज्वालनभरणादिषु स्वव्यापारेषु काष्ठादीनां करणाऽधिकरणादिरूपं कारकवैचित्र्यमस्ति, तत्कथं पाके उपचर्येतेति ।

वैचित्र्याऽभावमेव ज्वलनादिषु दर्शयति स्वव्यापारइति[६६] । मा भूत् ज्वलनादिषु वैचित्र्यं व्यापारान्तरं चैषां पाकवेलायामिति, तत्र मुख्यमेव कारकत्वे वैचित्र्यमस्तीति तदुपचारः पाके सिद्ध्यतीति

एकप्रयोगवत्, तेन कर्तृतैव प्रसज्यते ।
पचिना चाऽनुपात्तेषु ज्वलनादिष्वसङ्गतिः ॥६८॥
न हि सद्भावमात्रेण तानि सम्बन्धकारणम् ।
न च शब्दान्तरैरेषामुपादानमतः पचिः ॥६९॥
देवदत्तक्रियावाची न स्यात् काष्ठादिसङ्गतः ।
सर्वव्यापारवाची चेत् पचिरिष्टस्तथा सति ॥७०॥
कर्तृत्वमेव काष्ठादेरापन्नं देवदत्तवत् ।
धातुनोक्तक्रिये नित्यं कारके कर्तृतेष्यते ॥७१॥

---

चेत्तत्राह न चेति[६७—६८] वदन्तेन । प्रयोगो व्यापारः । यथा ह्येकैकशो ज्वलनादिव्यापारं कुर्वतां काष्ठादीनां न व्यापारान्तरमस्ति, तथा संहतानामपि पाकवेलायां नास्त्येवेति । तेन ज्वलनादिषु कर्तृत्वादुपचारे ऽपि कर्तृतैव पाके स्यादित्याह तेनेति ।

भवतु ज्वलनद्वारः पाकसंबन्धः काष्ठादेः, स तु शब्देन प्रत्याययितुं न शक्यते ज्वलनस्याऽशाब्दत्वादित्याह पचिनेति । न ह्यप्रतीते ज्वलने तद्द्वारः संबन्धः शक्यः प्रत्याययितुमित्याह न हीति[६९] । न च काष्ठादिशब्दैरपि ज्वलनादेरुपादानमस्ति, तेन देवदत्तव्यापारवचनस्य पचेः काष्ठादिशब्दानां चाऽर्थसंबन्धमप्रतिपादयतां नैकवाक्यता स्यादित्याह न चेति । अथ ज्वलनादिकमपि पचिरेवाऽभिदधीत ततः काष्ठादीनामपि कर्तृत्वमेव स्यात् न करणादित्वमित्याह सर्वेति[७०] । कारणमाह धातुनेति[७१] ।

न धातूक्तव्यापारत्वं कर्तृत्वं यतः काष्ठादीनामपि स्यात्, किं त्वन्यदेव प्रत्ययोपात्तभावनासंबन्धित्वमिति चेन्न; तत्संबन्धस्य सर्वे-

सर्वेषां भावनासाम्ये न ह्यन्यत् कर्तृलक्षणम् ।
काष्ठादीनि पचन्तीति विवक्षा या च दृश्यते ॥७२॥
सा ऽपि नैवोपपद्येत यद्यन्यत् कर्तृलक्षणम् ।
एकधातुगृहीतानां न चास्त्यङ्गप्रधानता ॥७३॥
न कारकं ततः कर्त्ता प्राधान्याऽभिहितक्रियम्* ।
अतः समप्रधानानामभिधा सदसत्त्वयोः ॥७४॥

---

षामविशेषादित्याह सर्वेषामिति[७२] । ननु न तत्संबन्धमात्रं कर्तृत्वं, किं तर्ह्यन्यदेव तत्समवायित्वं, तच्च देवदत्तस्यैवेत्युच्यते, ततः काष्ठादीनि पचन्तीति सर्वेषां कर्तृत्वनिर्देशः कदा चिदपि न स्यादित्याह काष्ठादीनीति । नन्वस्तु धातूक्तव्यापारत्वं कर्तृत्वं, तत्तु सविशेषणं, यस्य व्यापारं प्राधान्येन धातुराह स कर्त्ता, प्राधान्यं च देवदत्तव्यापारस्य, अतो देवदत्तस्यैव कर्तृत्वमत आह एकेति[७३] । न ह्येकः शब्दो युगपदेव कस्य चिद् गुणत्वं कस्य चिच्च प्राधान्यं वक्तुमर्हति, वैरूप्यात्, अतो नेदं लक्षणमिति ।

तदेवं समप्राधान्ये स्थिते यदि सर्वेषां पचिना ऽभिधानमस्ति ततः काष्ठैः स्थाल्यां देवदत्त इति कारकवैचित्र्यं न स्यात्; अथ नास्ति, ततः काष्ठादीनि पचन्तीति कारकैक्यं काष्ठादेश्च पचिना वाक्यैक्यं न स्यात्, सेयमुभयतस्पाशा रज्जुरित्याह अत इति[७४]। अथ धातुर्देवदत्तव्यापारं कदा चिदुपादत्ते कदा चित्तु सर्वव्यापारं विवक्षावशात्तेनोपपन्नं वैचित्र्यमैक्यं च, यदा देवदत्तव्यापारवचनं तदा ज्वलनादेः

---

* प्राधान्याहितसत्क्रियमिति का. पु. ।

क्व चित्कारकवैचित्र्यं क्व चिदैक्यं न युज्यते ।
प्रत्ययेनापि नैवात्र ज्वलनादिपरिग्रहः ॥७५॥
कर्तृमात्रं त्वसौ ब्रूयादथ वा तद्गतां क्रियाम् ।
तस्मान्न पचतीत्यत्र काष्ठादेरस्ति सङ्गतिः ॥७६॥
सर्वत्र न च धात्वर्थः प्रत्ययार्थेन युज्यते ।
'भावना प्रत्ययार्थो हि धात्वर्थानां च तां प्रति* ॥७७॥
साध्यसाधनयोग्याना†मुपादानं च धातुभिः ।
साध्यत्वं पाकमित्येवं पाकेनैव च साधनम् ॥७८॥

---

प्रत्ययेनोपादानात् न काष्ठादेरसङ्गतिरित्युच्यते, तत्राह प्रत्ययेनेति[७५]। वैयाकरणानां कर्तृवचनो मीमांसकानां भावनावचन इति । तस्मात् ज्वलनादेरनुपादानात् न तद्द्वारा काष्ठादिशब्दानां पचतिनैकवाक्यता स्यादित्याह तस्मादिति[७६] ।

एवं क्रियाकारकयोः कारकाणां च मिथः सङ्गतिर्निरस्ता, क्रिययोरिदानीं धातुप्रत्ययवाच्ययोर्निरस्यति सर्वत्रेति[७७] । कथमित्याह भावनेति[७७-७८]द्वयेन । भावनासम्बन्धो हि साध्यतया साधनतया वा स्यान्न च द्वेधा ऽपि सम्भवति, साध्यसाधनवाचिन्योर्द्वितीयातृतीययोः पचतीत्यत्राऽश्रवणादिति ।

निरस्तो धात्वर्थस्य भावनान्वयः कारकान्वयश्च, विध्यन्वयमि-

---

* संप्रतीति २ पु. पा. ।

† योगानामिति का. पु. ।

पचित्येतेन* रूपेण नैको ऽप्यंशः प्रतीयते' ।
'विधिभावनयोश्चैकप्रत्ययग्राह्यताकृतः† ॥७९॥
धात्वर्थात् प्रथमं तावत्सम्बन्धो ऽध्यवसीयते ।
विधाववसिते तत्र केवले भावनात्मनि ॥८०॥
पश्चात्सम्बध्यमानो ऽपि न धात्वर्थो विधीयते' ।
विध्यहीनप्रवृत्तेश्च न स कार्यः श्रुतो ऽपि सन्‡ ॥८१॥
एवं कारकविध्यन्तविधानस्याप्यसंभवः§ ।
विध्यन्तत्वं प्रयाजादेर्निषेद्धव्यमसङ्गतम् ॥८२॥

---

दानीं निराकुर्वन् धात्वर्थस्य तावन्निराकरोति विधीति[७९-८१] द्वयेन । न हि सकृदुच्चरितस्य विधिप्रत्ययस्य श्रौताऽनेकव्यापारसम्भवः, तद्यदि धात्वर्थान्वितां भावनां विदध्यात्,|| प्रागेव तु धात्वर्थान्वयाद् भावनां केवलां विदधन्ननुपपत्त्यभावान्नालं पश्चाद्भावनया सम्बध्यमानमपि धात्वर्थं प्रत्ययो विधातुमिति । मा विधायि, तथाप्यभिहितत्वात्पदश्रुत्या च भवनायां विनियुक्तत्वात् तस्याप्यनुष्ठानं सिध्यत्येवाऽत आह विधीति[८१] । विध्यधीना हि प्रवृत्तिर्नाऽभिधानविनियोगमात्राऽधीनेति ।

यदा चैवं समानपाठोपात्तस्यापि धात्वर्थस्याऽविधानं तदा पदान्तरगतस्य सोमादेः कारकस्य वाक्यान्तरगतस्य च प्रयाजादिविध्यन्तस्य दूरापास्तं विधानमित्याह एवमिति[८२] ।

---

* पचित्यनेनेति ३ पु. पा. । † कृतेति ३ पु. पा. ।
‡ स इति ३ पु. पा. । § असङ्गतेरिति ३ पु. पा. ।
|| एतदग्रे 'अर्थाद् धात्वर्थमपि विदध्यात्' इत्यधिकं ३ पु. ।

असम्बद्धत्वमेतेषां वाच्यं शुक्लगवादिवत् ।
तत्रार्थलक्षणा का चित्संभवेदपि सङ्गतिः ॥८३॥
वाक्यैरेव त्वसम्बद्धैः सम्बन्धो न प्रकल्प्यते* ।
अतोऽन्योन्याश्रयत्वं स्यादेकमूलाऽप्रसिद्धितः ॥८४॥

---

विधानत्वसङ्गतस्य प्रयाजादेर्विध्यन्तसमाख्यापि निर्निमित्तेत्याह विध्यन्तत्वमिति । एवं भावनासम्बन्धाभ्युपगमेनांशानां विधिसम्बन्धो निराकृतः, भावनासम्बन्धोऽपि तेषां शुक्लगवादिवन्निराकर्त्तव्य इत्याह असम्बद्धत्वमिति[८३] । सोमेन यजेतेति सोमस्य करणत्वमात्रं श्रुतं, तत्तु यागगतमिति नास्ति प्रमाणं, सन्निधेरपि श्रुतिजनिताऽविशेषप्रत्ययविरुद्धस्याऽप्रामाण्यात्, प्रयाजादिसम्बन्धस्तु दूरभ्रष्ट इति ।

किं च, शुक्लो गौरित्यादिषु लोके कर्मार्थलक्षणमिति विशिष्टार्थपरत्वं वाक्योच्चारणस्याऽवगम्य वक्त्रभिप्रायागममुखेन स्यादपि कथंचिदशाब्दस्याप्यर्थस्य वाक्यात्सिद्धिः, वेदे तु प्रयाजाऽऽग्नेयादिसम्बन्धो वाक्यैकप्रमाणको, वाक्यानि चाऽसम्बद्धानि कथं समर्थानां सम्बन्धं प्रतिपादयेयुरतिप्रसङ्गादित्याह तत्रेति । अथ सम्बद्धानि वाक्यानीति चेन्न, अर्थाऽनपेक्षाणां शब्दानां स्वरूपेण सम्बन्धाऽभावात्, ततश्चार्थसम्बन्धनिबन्धनः शब्दसम्बन्धस्तदधीनश्चार्थसम्बन्ध इति इतरेतराश्रयं स्यात्, एकस्याप्यन्यतः सिद्ध्यभावादित्याह अत इति[८४] ।

यदांशत्रयस्याऽसम्बन्धेऽप्यविधानाद्भावनैव विधातव्या तदा तस्यां केवलायां पुरुषस्य प्रवर्तयितुमशक्यत्वात्तया ऽप्यन्वयाऽसम्भ-

---

* असम्बन्धः शब्दानां न प्रकल्पते इति का. पा. ।

एवमंशत्रयाऽसत्त्वाज्जातो निर्विषयो विधिः ।
धात्वर्थकारकाणां तु साक्षान्नैवैष सिध्यति ॥८५॥
विधेर्भावनया रोधात्कर्तुस्तेष्वप्रवर्तनात् ।
क्रियाकारकसम्बन्धमूलत्वात्सर्वसङ्गतिः ॥८६॥
निषेध्या तन्निषेधेन स्वस्वामिपितृबन्धुषु ।
उपसर्गनिपातानां केन चिन्न च सङ्गतिः ॥८७॥
परस्परं त्वसिद्धैव स्वातन्त्र्येण च नामभिः ।
क्रियाविशेषणत्वाच्च विना नैवोपसर्गता ॥८८॥
वाक्यार्थो ऽसत्त्वभूतत्वादेतैर्न च विशिष्यते ।

---

वान्निर्विषयत्वं विधेरित्याह एवमिति[८५] । मा भूद्भावनाद्वारेंशानां विधिः, साक्षादेव तु भविष्यति, अत आह धात्वर्थेति । समानप्रत्ययोपात्तभावनाऽवरुद्धो विधिर्न तावदन्यत्र गच्छति, गतो ऽपि न शक्नोति तानि विधातुं, पुरुषव्यापारविषयत्वात्, तेषां चाऽतद्रूपत्वादिति। एवं क्रियाकारकसम्बन्धनिराकरणात्तन्मूलत्वाच्च सम्बन्धान्तराणां देवदत्तस्य गौरित्यादीन्यपि वाक्यानि नालं वाक्यार्थं प्रतिपादयितुमित्याह क्रियेति[८६] ।

एवं नामाख्यातयोः सङ्गतिर्निरस्ता, संप्रत्युपसर्गनिपातानां निराकरोति उपसर्गेति[८७] । न तावन्नामभिर्मिथो वा सङ्गतिरित्याह परस्परमिति[८८] । कथमित्याह क्रियेति । मिथो नामभिर्वा सम्बध्यमानानामुपसर्गत्वमेव न स्यात्, उपसर्गाः क्रियायोगइति स्मरणादिति। न वाक्यार्थस्याऽयमेवंविध इत्येवं केन चिद्रूपेणाऽनिरूप्यमाणस्य

क्रियाद्वारा ऽथ कल्प्येत सा ऽपि* नाऽकारकात्मनः॥८९॥
असत्त्वभूतमर्थं च नाध्यवस्यति कारकम् ।
विशेषणत्वमप्येषां नैवाऽर्थोऽननुरञ्जनात् ॥९०॥
आनर्थक्याऽन्यत्राचित्वविपरीतप्रसाधनात् ।
प्रलम्बते ऽयमित्यादौ तेषां कश्चिदनर्थकः ॥९१॥
प्रासादादिषु चान्यो ऽर्थो विपरीतः प्रतिष्ठते† ।
येन स्वार्थाऽविरोधेन विशेष उपजन्यते ॥९२॥
विशेषणं तदेवेष्टं न तु यत्स्वार्थनाशकम् ।
आभिमुख्योर्ध्वगत्यादिविशेषो यो ऽवगम्यते ॥९३॥

---

सम्भवत्युपसर्गैर्विशेषणमित्याह वाक्यार्थ इति[८९] । न च धात्वर्थेन क्रियया सङ्गतिः,अकारकत्वादित्याह क्रियेति । कथमकारकत्वमित्यत आह असत्त्वभूतमिति[९०] । नन्वकारकस्यापि विशेषणतया क्रियाऽन्वयो भविष्यत्यत आह विशेषणत्वमिति । अननुरञ्जनमेव दर्शयति आनर्थक्येति[९१] ।

अत्रैवोदाहरणानि दर्शयति प्रलम्बतइति । अथैवमपि किं न विशेषणमत आह येनेति[९२] । यत्र तर्हि नीलोत्पलादिवत्स्वार्थाऽङ्गीकरणेनैवाभिमुख्यादिविशेषो जन्यते तत्र विशेषणं स्यादु गच्छत्युद्गच्छत्यादौ, नेत्याह आभिमुख्येति[९३] । भवतु तर्हि तत्रैव सम्बन्ध

---

* सोपीति ३ पु. पा. ।

† प्रतिष्ठित इति का. पु. पा. ।

तस्यापि कर्तृधर्मत्वान्न धात्वर्थोऽङ्गतेष्यते ।
कर्त्रा च सह सम्बन्धो नोपसर्गस्य विद्यते ॥१४॥
अंशत्रयाऽतिरिक्तत्वान्नापि भावनया सह ।
प्रतिषेधविकल्पादेः सम्बन्धश्च विरुध्यते ॥१५॥
अन्यरूपपरिच्छेदाद्बाह्यवस्त्वर्थवादिनाम् ।
स्वश्रुतेः प्रथमं वस्तु सद्भावेन निरूपितम् ॥१६॥
कथं नञादिभिः पश्चादभावमुपनीयते ।
विरोधश्च तयोः श्रुत्योरस्ति नास्तीति शब्दवत् ॥१७॥

---

इति चेन्न, उपसर्गविरोधादित्याह कर्त्रेति[१४] । न च भावनया ऽपि सङ्गतिरसत्त्वादर्थानाम् अंशत्रयाऽनन्तर्भावादित्याह अंशेति[१५] ।

नञादयस्तु निपातविशेषा येनैव संबन्धुमिष्यते तस्यैवाऽर्थे विरुन्धन्तो न केन चित्सम्बन्धुमर्हन्तीत्याह प्रतिषेधेति । कारणमाह अन्यरूपेति[१६] । ये हि बाह्यमेव वस्तु शब्दार्थं वदन्ति तेषां य एवार्थो घटशब्देन सदात्मना ऽवगतः स एव नञा ऽसदात्मना परिच्छिन्नो, ऽतो नञादयस्तेन विरुध्यन्ते, ज्ञानमात्रशब्दार्थवादिनां तु नायं विरोधः, अर्थनिबन्धनत्वाद्विरोधस्येति । एतदेव विवृणोति स्वश्रुतेरिति । अर्थविरोधे च शब्दयोरपि विरोधादसम्बन्धः स्यादित्याह विरोधइति[१७] । वाशब्दस्तु नञादिभ्यो ऽपि पापीयानित्याह विकल्प इति । किं च, पदार्थपूर्वको वाक्यार्थः, न चोपसर्गनिपातानां गवादीनामिवाऽयमसाविति स्वातन्त्र्येण कश्चिदर्थो ऽवगम्यते यद्द्वारेणैते

विकल्पे पुनरेकस्य शब्दस्यैषा विरोधिता ।
गवादिवच्च नैतेषां स्वतन्त्राऽर्थोऽवधारणम् ॥९८॥
येन तत्पूर्वकं सन्तं वाक्यार्थं यायुरात्मना ।
समुदाये ऽप्यसिद्धत्वाद्येन वक्ष्यत्यहेतुताम् ॥९९॥
गम्यते चेत्यतो ऽवोचत्प्रत्येकाऽशक्तिसिद्धये ।
असम्बन्धात्पदार्थानामिति पूर्वोक्तया दिशा ॥१००॥

---

वाक्यार्थोऽन्वयं गच्छेयुरिति । सर्वोपसर्गनिपातसाधारणदूषणमाह गवादिवदिति[९८] ।

अतः परं भाष्यार्थः । तत्र "गम्यते च पदत्रये उच्चरिते"* इति भाष्यमयुक्तं, एवं हि समुदायस्यैव मूलत्वान्न निर्मूलता सिद्ध्येदत आह समुदाये ऽपीति[९९] । प्रत्येकमूलत्वनिराकरणपरमिदं न स्वार्थपरं, समुदायस्यापि मूलत्वं निराकरिष्यते चेति ।

"न चायं समुदायो ऽस्ति लोके"† इति भाष्यं न तावद्वैदिकसमुदायाभिप्रायं, सर्ववाक्यानां वाक्यार्थमूलत्वनिराकरणपरत्वात्, तेनाऽयमर्थः, नैवंजातीयः समुदायो लोके ऽस्तीति; तच्चेदमयुक्तम्, अस्ति हि लोके गामानयेत्यादिसमुदायो, ऽत आह असम्बन्धादिति[१००] । अर्थसम्बन्धाऽधीना हि पदानां समुदायापत्तिः, अन्यथा गौरश्व इत्यादिष्वपि प्रसङ्गात्, सम्बन्धश्च यदा सर्वप्रकारो निराकृतः तदा सत्त्वेनाऽऽपाततः प्रतिभासमानो ऽपि परमार्थतः सत्त्वेनाऽज्ञायमानत्वादसन्नित्युच्यतइति ।

---

* शा. भा. पृ. ३२ प. ११ ।
† शा. भा. पृ. ३२ प. १३ ।

सन्नप्यज्ञायमानत्वादसन्नित्यभिधीयते ।
ऐकैकश्ये* पदार्थानां वाक्यार्थे व्यभिचारिता ॥१०१॥
प्रागसिद्धेः समस्तानामसाधारणदुष्टता ।
पदार्थानेव वाक्यार्थं यः सामस्त्येन मन्यते† ॥१०२॥
गौरश्वः पुरुषो हस्तीत्यत्राप्यस्य‡ प्रसज्यते ।
व्यस्तस्य यो ऽर्थः शब्दस्य न सामस्त्ये जहाति तम्॥१०३॥

---

नन्व"पदार्थाद्वाक्यार्थावगतिरसंबन्धा"§दिति भाष्यं, तत्राऽसंबन्धमेव विकल्प्य दर्शयति ऐकैकश्ये पदार्थानामिति[१०१] । एकैकशो हि पदार्था बहुवाक्यार्थसाधारणत्वान्न नियमेनैकं विशिष्टमर्थं गमयन्ति, संगतानां तु तद्वाक्यार्थव्यतिरेकेणाऽन्यत्र क्व चिदपि प्रागनवगतानां गन्धवदसाधारणाऽनैकान्तिकतेति ।

"न च पदार्था एव वाक्यार्थ"॥ इति भाष्यं, तस्यार्थमाह पदार्थानिति[१०२] । तेनाऽर्थान्तराऽन्वितरूपो विशेषो वाक्यार्थो न पदार्था एवेति ।

भवत्वेवं, सो ऽपि तु पदार्थ एव, पदं हि केवलोच्चरितं पदार्थस्वरूपमभिधत्ते, पदान्तरसमभिव्याहृतं तु तदर्थान्तराऽन्वितमत आह व्यस्तस्येति[१०३] । यदि हि क्व चिदर्थस्वरूपमभिदध्यात् क्व चिच्च तदुज्झित्वा ऽऽनयनान्वितं, तदप्युज्झित्वा बन्धनाऽन्वितं, न पदार्थं क्व¶

---

* एकैकं चेदिति २ पु. पा. । एकैकश्चेदिति का. पा. ।
† यः समर्थो न मन्यते इति २ पु. पा. ।
‡ अन्यत्रापीति २ पु. पा. । § शा. भा. पृ. ३२ प. १६ ।
॥ शा. भा. पृ. ३२ प. १८ । ¶ कदेति १ – २ पु. पा. ।

तं चोज्झति न विश्रम्भः पदार्थं प्रति लभ्यते ।
तत्र द्वित्रादिसामान्यविज्ञानं केवलं भवेत् ॥१०४॥
अनेकशब्दविज्ञानान्न विशेषाऽवधारणम् ।
'पदार्थाऽसङ्गते ऽर्थे चेद्वाक्यं साक्षात्प्रवर्त्तते ॥१०५॥
पदार्थसंविदस्तत्र न स्याद् दृष्टोपकारिता ।
तेनाऽज्ञातपदार्थो ऽपि बुध्येतैव स्वभावतः' ॥१०६॥
तान् वा ऽनुरुध्यमानस्य कारणं स्युस्तएव ते ।
तत्र चोक्त,मतो नास्ति वाक्यधीमूलसंभवः ॥१०७॥

---

विदाश्वासः स्यात्; अन्वितमेवाऽभिधेयमिति चेन्न, केवलोच्चारणे पदार्थस्वरूपाऽवगमात्; स्मरणं तदिति चेत्, न, अनुभूताऽपरामर्शात्, स्मृतिप्रमोषश्चेन्न, पदरूपप्रत्युत्पन्नकारणसद्भावात्; अतः स्वरूपं तावदभिधेयमिति नाऽन्विताभिधानम्। निरस्तं चेदमन्विताऽभिधानं न्यायरत्नमालायां शास्त्रदीपिकायां चेति । तदेवं सामान्यमात्रे पदार्थे स्थिते ऽनेकपदोच्चारणे द्वित्रादिसामान्यज्ञानमेव केवलं स्यान्न वाक्यार्थाऽवधारणमित्याह तत्रेति[१०४] ।

"स्यादेतत्, अप्रयुक्तादपी"* त्यादि "तस्मान्नैतदेव"† मित्यन्तं भाष्यं सुगमम्। पुनश्चोद्यं "ननु पदार्थविद्धि"‡ रित्यादि, तत्रोत्तरं "यदि वाक्ये ऽन्त्यवर्ण"§ इत्यादि, तस्यार्थमाह पदार्थेति[१०५] सार्द्धेन। पदार्थाऽनुरोधेन वा तेषामेव मूलत्वं स्यात्,तच्च निरस्तमित्याह

---

* शा. भा. पृ ३२ प.२१ ।
† शा. भा. पृ. ३३ प. ९ ।
‡ शा. भा पृ. ३३ ९ प. ।
§ शा.भा. पृ. ३३ प. ८ ।

ततश्चार्थाद् भवेल्लोके वेदार्थस्त्वप्रमाणकः ।
समयात् पुरुषाणां वा गुणवृद्ध्यादिवन्मतः ॥१०८॥
निष्कारणो ऽपि सन्नर्थो याज्ञिकैः परिभाषितः* ।
तत्र चोक्तं कथावत्तु संघातात् पौरुषेयता ॥१०९॥
न चाऽऽप्तः पुरुषो ऽत्रास्ति तेन वेदाऽप्रमाणता ।
अत्राऽभिधीयते, यद्यप्यस्ति मूलान्तरं न नः ॥११०॥

---

तानित्युक्त[१०६]मन्तेन । उपसंहरति अत इति । कथं तर्हि लोके गामानयेत्यादिवाक्येभ्यो वाक्यार्थोऽवगतिर्व्यवहारश्चाऽत आह ततश्चेति[१०७] । लोके कर्मार्थलक्षणमिति । वेदार्थस्त्वनन्यप्रमाणकत्वाच्छब्दाऽशक्तौ निष्प्रमाणक एवाऽऽपन्न इत्याह वेदार्थ इति[१०८] । केनचिद्वेदान् कृत्वा ऽस्य वाक्यस्याऽयमर्थ इति एवं समयः कृतो वृद्ध्यादिवत्, ततश्च वाक्यार्थोऽवगतिः पुरुषाणामित्याह समयादिति । तदिदं "तस्मात्कृत्रिमो वाक्यार्थप्रत्यय"† इत्यनेन भाष्येणोक्तमिति ।

"व्यामोहो वे"‡ति भाष्यार्थमाह निष्कारण इति[१०९] ।

"नन्वेव"§मित्यादिभाष्यं प्रागेव व्याख्यातम् । पूर्वोक्ते ऽपि पौरुषेयत्वे ऽनुमानमपि पदसंघातहेतुकं भाष्यकारेणोक्तमित्याह तत्रेति । कथावदिति । नीलोत्पलादिकथनवद्भारतादिवद्वेति । भवतु तर्हि पौरुषेयत्वेनैव प्रामाण्यमत आह न चेति[११०] । न ह्यतीन्द्रिये ऽर्थे पुरुषस्याऽऽप्तिः संभवतीति । पूर्वपक्षमुपसंहरति तेनेति ।

---

* पदार्थेत्यारभ्यैतत्पर्यन्तमर्धसप्तकं त्रुटितं का.पु. । परिपालित इति २पु.पा. ।

† शा.भा. पृ. ३३ १० प. ।

‡ शा. भा. पृ. ३३ प. १० । § शा. भा. पृ. ३३ प. १२ ।

पदार्थानां तु मूलत्वं दृष्टं तद्भावभावतः ।
सत्यं न वाचकं वाक्यं वाक्यार्थस्योपपद्यते ॥१११॥
अन्यथाऽप्युपपन्नत्वाच्छक्तिस्तत्राऽप्रमाणिका ।
'पदएव हि वर्णानां शक्तिः क्लेशेन कल्पिता ॥११२॥
तिरोभावादिह त्वेषां भवेत् क्लेशतरेण* सा ।
बहवश्चाऽनुसंधेया वर्णाश्चिरतिरोहिताः' ॥११३॥

---

सिद्धान्तमाह अत्रेति । यद्यपि प्रत्येकं पदानि संहतानि वा साक्षान्न मूलं तथा जातिः संबन्धज्ञानं सावयवनिरवयववाक्यानि तथापि पदार्थाः पदैः प्रत्यायिताः प्रत्यासत्त्यपेक्षायोग्यत्वसनाथा मूलं भविष्यन्ति, तद्भावे वाक्यार्थप्रत्ययस्य भावादिति ।

यत्तावत्साऽवयवस्य वाक्यस्य पदस्येव साक्षाद्वाक्यार्थवाचित्वं नास्तीत्युक्तं, तदनुमन्यामहइत्याह सत्यमिति[१११] । कारणमाह अन्यथेति[११२] । वाक्यस्य हि वाचकत्वमिच्छता ऽवश्यं वाक्याऽन्त्यवर्णस्य पूर्ववर्णजनितसंस्कारसहितस्य स्मृतिविपरिवर्त्तिनां वर्णानां प्रत्यक्षस्मृतिरूपायां वा चित्रबुद्धौ भासमानानां वाक्यार्थे शक्तिः कल्पनीया, सा च वाक्यार्थप्रतीतेर्वक्ष्यमाणन्यायेन पदार्थेभ्यो ऽप्युपपत्तौ निष्प्रमाणिकेति ।

तत्र स्मृतिविपरिवर्त्तिनां तावद्वाचकत्वं नाऽवकल्पते, पदे ऽपि वर्णानां तिरोहितानां क्लेशेन युगपत्स्मरणमाश्रित्य शक्तिः कल्पिता, वाक्ये तु बहूनां वर्णानामनुसंधानं क्लेशतरेण स्यादित्याह पदइति सार्द्धेन ।

---

* क्लेशान्तरेणेति का. पु. पा. ।

पदार्थेषूपयुक्तानां* पुनर्व्यापारकल्पना ।
पदार्थानां च सामर्थ्यं गम्यमानमपह्नुतम् ॥११४॥
आनन्तर्याद्धि वाक्यार्थस्तद्धेतुत्वं न मुञ्चति ।
एकयैव हि संस्कृत्या कथं कार्यद्वयं भवेत् ॥११५॥
न चैषां पूर्वसंस्कारादन्यो ऽस्तीति प्रतीयते ।
'न चाऽन्त्यवर्णवेलायां तेष्वालोचनसम्भवः ॥११६॥
पदतद्वाच्य†सम्बन्धबुद्धिव्यवधिबाधनात् ।
प्रत्यक्षस्मृतिरूपा ऽतो न तेष्वेका ऽस्ति वाक्यधीः' ॥११७॥

———

पदार्थप्रतिपादने व्यापृतानां वर्णानां पुनर्वाक्यार्थे ऽपि व्यापारागौरवमित्याह पदार्थेष्विति[११४] । न केवलमदृष्टकल्पना, दृष्टहानिश्चेत्याह पदार्थानामिति । कुतः पुनः सामर्थ्यं गम्यते, ऽत आह आनन्तर्यादिति[११५] । वर्णेभ्यो हि पदार्थेषु प्रतीतेषु तदनन्तरं वाक्यार्थः प्रतीयतइति ।

यो ऽपि पूर्ववर्णजनितसंस्कारसहितो ऽन्त्यो वर्णो वाचक इत्येवंप्रकारः पदेषु, सो ऽपि वाक्येषु न सम्भवतीत्याह एकयेति । ननु कार्यदर्शनादेकस्यापि शक्त्यन्तरं संस्कारान्तरं वा किं न कल्प्यते, ऽत आह न चेति[११६] । वाक्यार्थप्रतीतेरप्यन्यथाप्युपपत्तेर्न तत्र प्रमाणमिति ।

न च चित्रबुद्धिरपि वाक्येषु सम्भवतीत्याह न चेति सार्द्धेन । पदे हि वर्णानां विजातीयाऽव्यवधानाद्युज्यते ऽतीतानामन्त्यवर्णप्रत्यक्षवेलायां सर्वेषां स्मरणं, वाक्ये त्वान्तरालिकपदतदर्थसम्बन्धबुद्धिव्यवधानान्न सम्भवति, सर्वेषां स्मृतिविपरिवर्त्तिनां वाचक-

* प्रयुक्तानामिति ३ पु. पा. । † वाक्येति का. पा. ।

तस्माच्च वाक्यनिर्भासा वाक्यं सा धीर्न कल्पते ।
वाक्यमित्यनया बुद्ध्या न चात्मांशः प्रतीयते ॥११८॥
न च वाक्यार्थबुद्ध्येदं शून्यवादे निरूपितम् ।
वाक्यवाक्यार्थयोरैक्ये बाह्याऽऽभ्यन्तरवादिनाम् ॥११९॥
विच्छिन्नभागबुद्धीनां मृषात्वं निष्प्रमाणकम् ।
कल्प्यमाने ऽपि नैवं च वस्तुबुद्धिर्निवर्त्तते ॥१२०॥

---

त्वे ऽपि तुल्यो ऽयं दोषः, अशक्यं च दीर्घतमेषु वाक्येषु सर्वेषां वर्णानां पदानां वा स्मरणम्, असत्यपि च तस्मिन् पदार्थाऽनुसन्धानमात्रेण वाक्यार्थप्रतीतिरुत्पद्यतइति सर्वजनीनम्, अतो न वाक्यं साक्षाद् वाक्यार्थस्य वाचकं; नापि पदानि, यथैकदेशिनो मन्यन्ते, पदार्था वाक्यार्थस्य प्रतिपादकाः, तद्द्वारेण पदानामपि संहतानां लब्धवाक्यव्यपदेशानां तन्मूलत्वमनुमन्यामहइति ।

केचिद्वर्णपदार्थातिरिक्तबाहिर्भूतवाक्याऽभावाद्वाक्याऽऽकारा बुद्धिरेव वाक्यं, तदनन्तरं चाऽनेकजातिगुणद्रव्यक्रियासंसर्गाऽऽभासाज्जायमाना बुद्धिरेव वाक्यार्थो न बाह्यः, पदार्थाऽतिरेकेणाऽनतिरेकेण वा निरूपणाऽसम्भवात्तदपि तस्मादेव वाक्याकारबुद्ध्यभावादनुपपन्नमित्याह तस्मादिति[११८] । निरस्तं च शून्यवादे अर्थाऽनालम्बनत्वं बुद्धीनामित्याह वाक्यमिति ।

ये ऽपि वैयाकरणा बाह्यमेव निर्भागं वाक्यं वाक्यार्थं च मन्यन्ते, ये ऽपि पूर्वोक्तबुद्ध्याकारवादिनः, तेषामपि विभिन्नबुद्धिर्भागबुद्धिश्च वर्णपदतदर्थाभासा विनैव प्रमाणेन मृषा कल्पिता स्यादित्याह वाक्येति[११९] ।

'तेष्वेव च पदार्थेषु* प्रक्लृप्तस्तोकशक्तिषु ।
आवापोद्वापरचनाभेदाद्वाक्येष्वनन्तता ॥१२१॥
स्तोकशक्त्युपपन्ने ऽर्थे बहुशक्त्यप्रमाणता' ।
वाक्यतच्छक्त्यनन्तत्वे नाऽर्थापत्तिरततो भवेत् ॥१२२॥
न चाऽवयवबुद्धीनां सादृश्याद्भ्रान्तिकल्पना ।
'न प्रसिद्धाः पृथग्भूता मुख्या ह्यवयवाः क चित् ॥१२३॥

---

निष्प्रमाणकत्वमेव दर्शयति कल्प्यमानइति । कल्प्यमाने ऽपि हि भवता मृषात्वे वस्तुबुद्धिः भागेषु कस्य चित् कदा चिन्न निवर्त्ततइति। कल्पनागौरवं निर्भागस्य वाक्यस्य वाचकत्वे स्यादित्याह तेष्विति सार्द्धेन। स्तोकैरेव पदैस्तदर्थैश्चाऽनन्तानि वाक्यानि तदर्थाश्चाऽऽरभ्यन्ते, तत्र निर्भागवाक्यवादिना यावदर्थमनन्तानि वाक्यान्यनुपलभ्यमानानि तच्छक्तयश्चाऽनन्ताः कल्प्याः, स्वभाववादिनो ऽपि शक्त्यानन्त्यमदृष्टमेव कल्प्यं, तच्चाऽनुपपन्नं, स्तोकैरेव पदैः क्लृप्तस्तोकार्थशक्तिभिरनन्तानामपि वाक्यार्थानां प्रतीत्युत्पत्तेरिति । उपसंहरति वाक्येति[१२२] ।

वैयाकरणैर्निरवयवत्वे ऽपि वाक्यानामवयवप्रतिभासे ऽवयवप्रत्यभिज्ञायां च सादृश्यं कारणमुक्तं, 'ध्वनयः सदृशात्मानो विपर्यासस्य कारण'मिति, नानाजातीयाऽनेकध्वनिव्यङ्ग्यं हि वाक्यं, ते च ध्वनयः प्रत्येकं वाक्यान्तरव्यञ्जकध्वनिसदृशा, निर्भागस्यापि वाक्यस्य तत्तद्वाक्यसादृश्यं, नरसिंहस्येव केन चिद्भागेन नरसादृश्यं केन चिच्च सिंहसादृश्यं भागशः सम्पादयन्तः सादृश्योपाधिभेदादवयवभेदमिव वाक्ये दर्शयन्ति, ध्वनिसादृश्यादेवाऽवयवानामपि साद-

---

* तेष्वेषु पदेष्वत्रेति ३ पु. पा. ।

नाऽवयव्यन्तरे यस्मात्सर्ववाक्येष्वभागता ।
सतामवयवानां हि स्याद्वा सदृशता न वा' ॥१२४॥
सादृश्यं नरसिंहादौ युक्तं जात्यन्तरे सति ।
तत्र ह्यवयवाः सिद्धाः प्राक्संयोगविभागिनः ॥१२५॥
पाण्यादयो हि विच्छिन्ना दृश्यन्ते नृशरीरतः ।
देहेषु च पृथग्बुद्धिस्तेषु सर्वेषु जायते ॥१२६॥
तत्र तत्सदृशत्वाद्वा तत्सामान्येन वैकता ।
हस्तादिषूपपन्नेति प्रत्यभिज्ञानसम्भवः ॥१२७॥

---

श्यात्प्रत्यभिज्ञा ऽपि भवतीति; तद्दूषयति न चेति[१२३] । कारण-माह न प्रसिद्धा इति सार्द्धेन । यदा हि सर्वेषां वाक्यानां निर्भागत्वं पदवर्णात्मकास्तु भागा न पृथग्भूता वाक्याऽनुस्यूता वा सन्ति, तदा न कस्य चिद्भागशः सादृश्यं, यतो बहुभिः सादृश्याद्व-ह्ववयवमिव वाक्यं प्रतीयेत, अवयवाः प्रत्यभिज्ञायेरन्, सतां हि सद्भिः सादृश्यमसादृश्यं वेति ।

यत्तु नरसिंहवदित्युक्तं, तत्राह सादृश्यमिति[१२५] । अस्ति हि तत्र नरजातिः सिंहजातिश्चेति । ततः किमित्यत आह तत्र हीति । प्रसिद्धाश्च तयोर्जात्योः पाण्यादयो ऽवयवाः संयुक्ता वियुक्ताश्चेति । तदेव विवृणोति पाण्यादय इति[१२६] । सत्सु च तेषु सतां नर-सिंहाख्यजात्यन्तराऽवयवानां तत्सादृश्याद्वा भ्रमात्तत्सजातीयत्वा-द्वा परमार्थत एव युक्तं प्रत्यभिज्ञानमित्याह तत्रेति[१२७] । तद्वदिहा-पि यदि वाक्याऽवयवानां सादृश्यं स्यात्ततश्च तेषां सत्यताऽऽपत्तेर्नि-

तद्वदत्रापि सादृश्यं यदि नामाऽवधार्यते ।
सिद्धे ऽवयवसत्यत्वे मृषा निर्भागकल्पना ॥१२८॥
असता यत्तु सादृश्यमसतः परिकल्प्यते ।
ध्रुवं शशविषाणेन खरशृङ्गस्य तद्भवेत् ॥१२९॥
अथाऽसत्त्वेन सादृश्यमत्राप्यस्तीति मन्यते ।
सर्वत्रैवं समानत्वात्कश्चिन्नाऽसदृशो भवेत् ॥१३०॥
भागश्चित्रे ऽपि कृष्णादिर्दृष्ट एव सदृक्तया* ।
एकदेशश्च मद्ये ऽपि सम्यक्तिक्तरसेषु च ॥१३१॥

---

र्भागत्वाऽनुपपत्तिरित्याह तद्वदिति[१२८] । कथं सादृश्यात्सत्यताऽऽपत्तिरिति चेदत आह असतेति[१२९] ।

शङ्कते अथेति[१३०] । दूषयति सर्वत्रेति । सर्ववाक्यानाम् असदवयवत्वात्सर्वं सर्वेण सदृशाऽवयवं स्यादिति ।

ननु चित्राऽवयवानां पाण्यादीनामसतामेव मिथः सादृश्यं, न हि तत्र पाण्याद्यवयवाः सन्ति, पारिणामिकत्वात्तेषामत आह भाग इति[१३१] । यद्यपि न मुख्याः पाण्यादयश्चित्रे सन्ति तथापि पाण्यादिसंनिवेशाः सन्त्येव चित्रस्य भागाः प्रत्यक्षदृष्टास्तेष्वपि युक्तं यत्कृष्णादिवर्णसामान्यं मिथःसदृशतया भवतीति ।

मदिरायां तर्हि मधुरैकरसायामविद्यमानस्यैव तिक्तरसस्य कथं द्रव्यान्तरगतेन तिक्तरसेन सादृश्यं, द्रव्यान्तरस्य तिक्तरसस्य वा कथमसता तेन सादृश्यम,मत आह एकदेश इति । उभयरसा हि

---

* पृथक्तयेति ३ पु पा. ।

चित्रबुद्धेस्तु नैवास्ति प्रतीतिर्भागशो मम ।
आकाराऽभावतो,ऽर्थो ऽत्र चित्रः साऽवयवः स च॥ १३२॥
तस्मान्न पदवर्णानामसत्त्वात्सदृशी गतिः ।
वाक्यस्यापि न सादृश्यं तत्राऽवयववर्जनात् ॥१३३॥
स्याद्वर्णपदनिष्कृष्टिर्न च वाक्यसदृक्तया ।
तेन न स्यादपोद्धारस्तेषामालम्बनादृते ॥ १३४ ॥

---

मदिरा न केवलं मधुररसा, तेन तस्य रसद्वयस्यैकदेशस्तिक्तरसो मद्यद्रव्ये तिक्तैकरसेषु द्रव्यान्तरेषु सम्यगेवेति युक्तमेव सादृश्यमिति ।

यदपि दर्शितं, चित्रबुद्धिर्निर्भागा ऽपि सभागा प्रतीयते यथा,तथा वाक्ये ऽपि च युक्तं भागानां सादृश्यमिति, तदसिद्धमित्याह चित्रेति तो[१३२]ऽन्तेन । कथं पुनरसत्यां भागप्रतीतौ बुद्धेश्चित्रत्वं, को वा आह तस्याश्चित्रत्वम्, अर्थो हि मधुरादिश्चित्रो न बुद्धिः, अर्थस्य च सभागत्वाद्युक्तं चित्रत्वं, तदेव चाह अर्थ इति । तस्माद्वाक्याऽवयवानां पदवर्णानामविद्यमानत्वान्न मिथः सादृश्यम् ; अत एव वाक्यानामपि नाऽवयवशः सादृश्यमित्याह तस्मादिति[१३३]। अवयवाऽभावादेव च वाक्यानां स्वरूपतो ऽवयवसामान्ययोगात्मकं सादृश्यं न सिद्ध्यतीत्याह वाक्यस्येति ।

यद्यपि कथं चिन्निर्भागस्यापि सादृश्यं स्यात्,तथापि वर्णपदनिष्कर्षस्तावन्न युज्यते, दृश्यते च निष्कर्षो ऽस्मिन्वाक्ये पदमिदमाद्यमिदं मध्यमिदमन्त्यमिदं द्विपदं सूत्रममुष्मात्सूत्रादिदं पदमत्राऽनुवर्तत इत्यादिरित्याह स्यादिति[१३४] ।

न च व्यञ्जकभेदो ऽपि पदवर्णादृते ऽस्ति ते ।
सूक्ष्मत्वादणुकल्पानां ध्वनीनां परिकल्पनात् ॥१३५॥
न च कार्यान्तराऽऽरम्भस्तैस्तादृगुपपद्यते ।
तेनाऽणुमात्रशब्दांशगृहीतिः* केवला भवेत् ॥१३६॥
सतोरपि च नादानां† पृथक्त्वक्रमवत्त्वयोः ।
व्यङ्ग्याऽभावेन नैवैषामभिव्यक्तिः प्रसिध्यति ॥१३७॥

---

यदपि च वाचकानां वाक्यानामनन्तानामनित्यानां च स्वरूपेणाऽन्वाख्यानाऽसम्भवादवयवभूतपदाऽऽवापोद्धारेण व्याकरणप्रक्रियेत्युक्तं, तदप्यवयवाऽभावादेवाऽयुक्तं, न ह्यावाप्योद्धार्यमालम्बनमन्तरेणाऽऽवापोद्धारः सम्भवतीत्याह तेनेति ।

यदपि व्यञ्जका ध्वनयो भिन्नाः क्रमवन्तश्चाऽक्रमे निर्भागे ऽपि वाक्ये पदवर्णाकारां क्रमवर्तीं च मतिमुपजनयन्तीत्युक्तं, तदप्ययुक्तं, व्यञ्जकभेदस्यैवाऽप्रमाणत्वादित्याह न चेति[१३५] । कथमित्याह सूक्ष्मत्वादिति । अतीन्द्रिया हि ध्वनयो न तद्भेदः प्रत्यक्षेण गृह्यते इति ।

अप्रत्यक्षो ऽपि ध्वनिभेदः कल्प्यतइति चेत्, तत्राह अण्विति । व्यङ्ग्याऽधीना हि व्यञ्जककल्पना, व्यङ्ग्यं च निर्भागं सूक्ष्मं वाक्यमिति ध्वनिरप्यणुकल्प एव कल्प्यो न बहवः क्रमवन्त इति ।

यदा चाऽणुकल्पा ध्वनयस्तदा न तैस्तादृक्कार्यनिर्माणं सम्भवति, यन्नानापदवर्णरूपेण क्रमशो ऽभिव्यक्तिस्तेनाऽणुमात्रस्य शब्दस्य ग्रहणं स्यादित्याह न चेति[१३६] । अणुत्वं च सौक्ष्म्यादौपचारिकमिति ।

---

* शब्दानां गृहीतिरिति २ पु. पा. । † शब्दानामिति का. पु. ।

कृत्स्नस्य यौगपद्येन भवेद्वा ऽवगतिर्न वा ।
नैव प्राक्सकलाद्वाक्याद् ग्राह्यं किं चित्तवाऽस्ति हि॥ १३८॥
तदेव सकलं वाक्यं न्यूनमन्यदपेक्ष्य च ।
तद्विरुद्धं, न चाऽभिन्ने न्यूनसाकल्यकल्पना ॥१३९॥
पृथक्प्रसिद्धसद्भावं त्रिपदं च चतुष्पदे ।
नाऽस्तीति यदि कल्प्येत वृक्षो न स्यात्तदा वने ॥१४०॥
पृथक्प्रसिद्धमिथ्यात्वात्स्याद्वाक्यान्तरता यदि ।
वाक्याच्छब्दान्तरत्वं स्यात्तथैव पदवर्णयोः ॥ १४१ ॥

---

ननु प्रेरकाणां प्रयत्नानां भेदात् क्रमवत्त्वाच्चाऽप्रत्यक्षाणामपि ध्वनीनां भेदः, क्रमश्चाऽवश्यंभावी, तत्कथं ध्वनिभेदस्य निष्प्रमाणकत्वम्, अत आह सतोरिति[१३७] । स्यातां नाम ध्वनीनां क्रमभेदौ, तथापि व्यङ्ग्यस्याऽक्रमत्वादभागत्वाच्च नेदृश्यभिव्यक्तिः सिद्ध्यतीति ।

कीदृशी तर्हि स्यादत आह कृत्स्नस्येति[१३८] । कारणमाह नैवेति । ततश्च यथैकस्मिन् गकारे पुनः पुनरुच्चार्यमाणे पुनः पुनरुपजायमाना ऽप्यवगतिरेकरूपैव भवति न नानारूपा, तथा वाक्ये ऽपि स्यादिति । इदमपरं निर्भागत्वे वाक्यस्याऽनुपपन्नमित्याह तदेवेति विरुद्ध[१३९]मन्तेन । पटो भवतीति संपूर्णं वाक्यं रक्तपदाऽपेक्षया तु तदेव न्यूनमित्यनुपपन्नमिति । कथमित्याह न चेति । चशब्दो हेतौ,भागभेदाऽपेक्षं हि न्यूनसाकल्यकल्पनमिति । किं च, पदवर्णानां वाक्येष्वभावमिच्छता वाक्यस्यापि गामानय शुक्लामित्यादेः पृथक्प्रयोगाऽवगतसद्भावस्य देवदत्त गामानय शुक्लामित्यस्मिन्नभावो ऽभ्युपगन्तव्यः,तथा चेद् वृक्षस्यापि वने ऽभावः स्यादित्याह पृथगिति[१४०]।

तस्माद्यथा महावाक्ये लघूनामनिराक्रिया ।
तथैव पदवर्णानां नाऽसत्त्वं वाक्यबुद्धिषु* ॥ १४२ ॥
केवलस्याऽऽप्रयोगाच्चेन्महदर्थे लघोरपि ।
अल्पार्थे तत्प्रयुक्तं चेत् स्वार्थे तद्वत्पदानि नः ॥ १४३॥
यद्यपि व्यवहाराऽङ्गं न पूर्वपदवर्णयोः ।
तथा ऽप्यस्त्येव सद्भावस्तन्मात्रे प्रयुयुक्षिते ॥ १४४ ॥

---

चोदयति पृथगिति[१४१] । चतुष्पदे ऽपि त्रिपदं वाक्यान्तरम-स्त्येव, सिद्धं हि तस्य पृथक्प्रयोगवेलायामस्तित्वमिति । दूषयति वाक्यादिति । उपसंहरति तस्मादिति[१४२] ।

शङ्कते केवलस्येति[१४३] । न पदस्य वर्णस्य वा केवलस्य प्र-योगो ऽस्ति, यतो वाक्ये ऽवान्तरवाक्यवत्सद्भावः स्यात्, तदेवं प्र-योगः, पदवर्णविभागो मृषा केवलाऽप्रयोगात्प्रकृतिप्रत्ययविभागवदि-ति; तद्विकल्प्य दूषयति महदिति । यो ऽयमवयवस्य केवलस्या-ऽप्रयोगः स यदि समुदायाऽपेक्षया ततो ऽनैकान्तिक इति ।

स्वार्थाऽपेक्षया तु तत्प्रयोगे पदवर्णयोरपि तत्सद्भावादसिद्धो हे-तुरित्याह अल्पार्थइति । एतच्चापाद्य महावाक्ये ऽवान्तरवाक्य-सद्भावमुच्यते, न तु निर्भागवाक्यवादिनां महावाक्ये ऽवान्तरवा-क्यमस्ति, यदि हि स्याद्वाक्यद्वयादू वाक्यार्थद्वयं स्वतन्त्रं गम्येत, न हि महावाक्यतदर्थयोरवयवत्वेनाऽवान्तरवाक्यं तदर्थो वा वर्त्तते, निर्भागत्वहानिप्रसङ्गादिति ।

---

* दृष्टिष्विति ३ पु. पा. ।

पदार्थमात्रमेवेष्टं* विशेषे ऽवगते क्व चित् ।
पदं प्रयुञ्जते के चिद्वर्णं वाऽर्थसमन्वितम् ॥१४५॥
ग्रन्थाऽध्ययनवेलायां स्वरूपेणा†ऽवधारणम् ।
प्रधानं पदवर्णानां विच्छिन्नानामुपाश्रितम् ॥१४६॥
तदा प्रसिद्धसत्त्वानां नोत्तरत्राऽस्ति साधनम् ।
न हि वाक्यार्थबुद्धौषां रूपं किं चिद्विरुध्यते ॥१४७॥
यद्यप्येषां न सामर्थ्यं केवलानां तदुद्भमे ।
अविरुद्धस्तु सद्भावः कार्योऽशक्तरथाङ्गवत् ॥१४८॥

---

ननु व्यवहाराऽनौपयिकस्य वर्णस्य पदमात्रस्य कथं केवलस्य स्वार्थे प्रयोगो, ऽत आह यद्यपीति[१४४] । यद्यपि व्यवहाराङ्ग त्वचंशभावबाज्ञानं न पदवर्णयोः पूर्णे लभ्यते तथा ऽप्यस्त्येव कदा चित्प्रयोगो यदा तन्मात्रमेव प्रयुयुक्षितमिति ।

कदा पुनरेवं भवत्यत आह पदार्थेति[१४५] । यदा कोऽत्र स्थित इति पृष्टे गौरित्येतावत्प्रयुज्यते तथा का परा देवतेति पृष्टे वर्णमेव केवलमकारं विष्ण्वर्थसमन्वितं प्रयुज्यतइति । किं च, प्रयोगमात्रमेव सद्भावे ऽपेक्षितम्, अस्ति च पदवर्णानामध्ययनवेलायां वाक्याद्विच्छिद्य स्वरूपगतमेव समुच्चारणमित्याह ग्रन्थेति[१४६] । यद्यपि तदा सद्भावो ऽवगतः स तु वाक्यार्थप्रतीतिवेलायां तदनौपयिकतया ऽवबुध्यतइति चेत्, तत्राह तदेति[१४७] । कारणमाह न हीति । कथं पुनः केवलानां कार्यमकुर्वतां सत्त्वमत आह यद्यपीति[१४८] ।

---

* पदार्थमात्रमेवेष्टेतिका. पु. पा. ।

† स्वरूपस्येति का पा. ।

केवलस्याऽप्रयोगित्वं तेनाऽनैकान्तिकीकृतम् ।
कार्याद्दते ऽपि दृष्टिर्या* सा शब्दे ऽप्युपपादिता ॥१४९॥
सद्भावे पदवर्णानां भेदो यः परमाणुवत् ।
सर्वाऽभावस्ततश्चेति सेयं बालबिभीषिका ॥१५०॥
यथा तन्त्वादयः सिद्धाः परमाणुषु सत्स्वपि ।
तथा सत्स्वपि भागेषु न वर्णादि विरोत्स्यते ॥१५१॥

---

तेन केवलानां कार्ये प्रत्ययोगो रथाङ्गेनेवानैकान्तिक इत्याह केवलस्येति[१४९] ।

शङ्कते कार्यादिति । परिहरति सेति ।

यत्पुनः परैरुक्तं, यदि वाक्ये पदे च पदात्मको वर्णात्मकश्च भेदः स्यात् ततो वर्णानामप्यवयवशो भेदः स्यात्, न हि निरवयवस्याऽन्याऽवयवत्वं सम्भवति तन्त्वादिवत्, ततश्चैतद्भागानामपि भागान्तरापत्त्याऽनवस्थानात्सर्वोऽभावः स्यादिति, तदुपन्यस्य दूषयति सद्भावइति[१५०] । परमाणुवदिति । यथा शाक्यैः सर्वाऽभावप्रतिपादनाय परमाणूनामपि षट्केन युगपत्संबन्धात्परमाणोः षडंशतेत्येवं भेदप्रसञ्जनं कृतं तथैवेत्यर्थः ।

कथं बालविभीषिका, ऽत आह यथेति[१५१] । यदेव हि परमाणुभेदाऽऽपादनेन सर्वाऽभावं प्रसञ्जयतां शून्यवादिनामुत्तरं तदेव भवतामपि, यथा च परमाणुषु सत्स्वपि तेषां परैरापादितमंशभेदं परिहृत्य तन्त्वादीनि कार्यद्रव्याणि स्थापितानि तथा सत्स्वपि वर्णेषु तेषां भागभेदं परिहृत्य वर्णादिस्थापनान्न सर्वाऽभाव इति ।

---

* अपि तद्दृष्टिरिति का. पा. ।

किं चित्साऽवयवं दृष्ट्वा न च सर्वं प्रसज्यते ।
घटसाऽवयवत्वे ऽपि न भागः परमाणुषु ॥१५२॥
तदत्र पदवर्णानां भेदं प्रत्यक्षसाधितम् ।
वर्णांशाऽनुपपत्त्या कः शक्नुयादपबाधितुम् ॥५३॥
असत्त्वे ये च दृष्टान्ताः प्रकृतिप्रत्ययादयः ।
असिद्धास्ते, यतो लोके तत्सद्भावः प्रतीयते ॥१५४॥

---

कः पुनर्भागभेदस्य परिहारस्तद्दर्शयति किं चिदिति[१५२] । कथमित्याह घटेति । अतो नाऽवश्यं भागान्तरैर्भवितव्यं, पदवद् वर्णानामपि भागो निष्प्रमाणक एव, निर्भागैरपि तैः पदाऽऽरम्भसद्भावात्; परमाणुभागाऽभ्युपगमे वा को दोषः, दृष्टविरोधः, अनन्ताऽवयवे हि कार्यद्रव्यस्य पारिमाणं प्रत्यक्षदृष्टं विरुध्येतेत्युक्तं; विरुध्यताम्, अत एव शून्यता प्रमाणार्थ इति चेत्, तन्निरस्तं शून्यवादे । कथं पुनर्निर्भागस्य परमाणोः प्रतिदिशमवस्थितैश्चतुर्भिः परमाणुभिरुपर्यधोऽवस्थिताभ्यां च परमाणुभ्यां संयोगः, असंयुक्तस्य वा कथं कार्यद्रव्याऽऽरम्भकत्वं, को वा दोषः संयोगे, शक्यते हि निर्भागस्यापि परमाणोः नैरन्तर्येण प्राच्यादिषु दिक्षु परमाण्वन्तरैरवस्थातुमित्यलमतिविस्तरेण ।

तस्मात्तन्त्वादिवत्प्रत्यक्षसिद्धो वर्णपदभेदो न वर्णांशाऽनुपपत्त्या शक्यते बाधितुमित्याह तदत्रेति[१५३] । अत्र बहुभिः संहत्यैककार्यकरणादवयवाऽवयविव्यवहारो घटादिवत्त्ववयव्यारम्भः स्फोटे निराकृत इति । दृष्टान्तो ऽपि साध्यविकल इत्याह असत्त्वे इति[१५४]।

ननु संमुग्धमेव पदं पदार्थस्य वाचकं न तु तत्र प्रकृतिप्रत्ययरूपो ऽवान्तरभेदो ऽस्ति, स तु प्रक्रियामात्रतया वैयाकरणैः कल्पितो न तु

नैव हि प्रक्रियामात्रं शास्त्रतः परिकल्प्यते ।
प्रत्यक्षं ह्येव तद्रूपं वाच्यमप्यन्यवाच्यवत् ॥१५५॥
क्रमेण हि प्रतीयेते प्रकृतिप्रत्ययौ पदे* ।
तदागमे तदर्थोऽपि स्वसंवेद्यः क्रमेण नः ॥१५६॥
अन्वयव्यतिरेकाभ्यामप्यर्थो गम्यते तयोः ।
'अमाद्युपजनाऽपाये वृक्षार्थो ह्यनुगम्यते ॥१५७॥
वृक्षं वृक्षेण चेत्यत्र वृक्षत्वं तावदेव हि ।
कर्मत्वं हीयते पूर्वं करणत्वं च जायते ॥१५८॥
तथा वृक्षं घटं चेति कर्मत्वमनुगम्यते ।
वृक्षत्वं हीयतेऽन्या च घटधीरुपजायते' ॥१५९॥
तत्र योऽन्वेति यं शब्दमर्थस्तस्य भवेदसौ ।
अन्यथाऽनुपपत्त्या हि शक्तिस्तत्राऽवतिष्ठते ॥१६०॥

---

तात्त्विकः,अत आह नैव हीति[१५५] । कारणमाह प्रत्यक्षमिति । एतदेव विवृणोति क्रमेणेति[१५६] । क्रमवतोः प्रकृतिप्रत्ययांशयोः प्रकृत्यागमे शाखादिमतः प्रत्ययागमे च संख्याकारकयोः प्रत्ययादस्ति वाचकविभाग इति ।

तथा अन्वयव्यतिरेकाभ्यामपि तयोरर्थविभागो गम्यतइत्याह अन्वयेति[१५७] । तावेव दर्शयति अमादीति सार्द्धद्वयेन । ततः किमित्यत आह तत्रेति[१६०] । कथमित्याह अन्यथेति ।

---

* यदा इति ३ पु. पा. ।

यत्कूपयूपसूपादौ समाने ऽप्यूपबन्धने ।
नास्त्यर्थोऽनुगमः कश्चित्तन्न शब्दो ऽपराध्यति ॥१६१॥
नाऽन्वयव्यतिरेकाभ्यामपूर्वोर्थोऽवधारणम् ।
संसृष्टे ऽवगते ऽर्थे हि ताभ्यां शक्तिर्नियम्यते ॥१६२॥
तेनाऽनेकात्मकाच्छब्दादनेकार्थोऽवबोधने ।
सिद्धे यदागमे यो ऽर्थः स तस्यैवाऽवधार्यते ॥१६३॥

---

यदि वृक्षं वृक्षेणेत्यादिषु वृक्षांशो ऽनुवर्त्तमानः पृथगर्थः स्याद् वृक्षं घटमित्यादिषु चामंशस्ततः कूपादिष्वप्यूपांशः पृथगर्थः स्यात्, न चैवमिष्टम्, अतो वृक्षमित्यादिष्वपि प्रत्यस्तमितविभागमेव पदमर्थस्याऽभिधायकमिति यत्परैरुक्तं तदनुभाष्य परिहरति यत्कूपेति[१६१] । कथमनपराधः, अत आह नाऽन्वयेति[१६२]। यदि शब्दाऽन्वयव्यतिरेकावपूर्वार्थस्याऽन्वयं व्यतिरेकं च कुर्यातां ततः कूपादावूपशब्दो ऽनुवर्त्तमानो ऽर्थान्वयमकुर्वन्नपराध्येत, न तु शब्दाऽन्वयव्यतिरेकावपूर्वस्यार्थस्य कल्पकौ किं तु अनेकस्मिन्नर्थे संसृष्टे ऽवगते शक्तिनिष्कर्षमात्रमेव ताभ्यां गम्यतइति ।

एतदेव दर्शयति तेनेति[१६३] । वृक्षमित्यत्र शाखादिमान्कर्मत्वं च गम्यते, वृक्षेणेत्यत्र वृक्षांशाऽन्वये शाखादिमानन्वेति, द्वितीयाऽपाये च कर्मत्वाऽपायः, तृतीयोपजने च करणमुपजन्यते, तेन मन्यामहे यदन्वये यस्यान्वयः यस्याऽपाये यस्याऽपायो यदुपजने यस्योपजनः तस्य तत्र शक्तिरिति, न तु शब्दाऽन्वयेनाऽवश्यमर्थान्वयेन भवितव्यमित्यस्माभिरुच्यते, येन कूपादिषु तदभावादुपालभ्यमर्हतीति ।

ननु अन्वयव्यतिरेकाभ्यां कारणत्वं भवति, यदि न स्याद्रवाश्वसमागमादुद्गच्छतो रेणुचक्रस्य तत्पूर्वक्षणवर्त्तिनी पिपीलिकापङ्क्तिः

एवं पिपीलिकापङ्क्ते रेणुचक्राऽन्वये सति ।
गजाऽश्वोपजनाऽपाये ऽप्यतादर्थ्यमशक्तितः ॥१६४॥
अस्त्येव च गजाश्वेषु सामान्यं रेणुकारणम् ।
दृढप्राणिविशेषत्वं समस्तव्यस्त*लक्षितम् ॥१६५॥
दृष्टा पिपीलिकापङ्क्तिः केवला रेणुवर्जिता ।
हस्त्याद्यन्वयिनी तेन न हेतुत्वं प्रपद्यते ॥१६६॥
प्रकृतिप्रत्ययादीनां केवलाऽविनियोगतः ।
यथैवाऽर्थो न दृश्यन्ते तथा चाऽनर्थमप्यदः ॥१६७॥

---

कारणं स्यादत आह एवमिति[१६४] । गवाश्वोपजानाऽपायवेलायां तद्वशादेवोपजनापायौ भजमानेन रेणुचक्रेण सत्यपि यादृच्छिके पिपीलिकापङ्क्तेरन्वये तादर्थ्यं रेणुचक्रकारणत्वं तस्या नास्ति, असामर्थ्यादन्वयव्यतिरेकयोश्चाऽन्यथासिद्धत्वादसामर्थ्यं चाऽसत्यामपि तस्यां रेणुचक्रस्य गवाश्वसमागमे दर्शनात्;अपिशब्दश्च सतीत्येतेन योजनीय इति ।

नन्वेवं गवाश्वयोरप्यकारणत्वं स्यात्, अभावे ऽपि तयोर्गजाद्युपजने रेणुचक्रदर्शनात्, अत आह अस्त्येवेति[१६५] । न केवलमसत्यामपि पिपीलिकापङ्क्तौ दृष्टं, सत्यामपि न दृश्यते,ऽतो हस्त्याद्यन्वये ऽपि न तस्याः कारणत्वमित्याह दृष्टेति[१६६] ।

ननु पिपीलिकापङ्क्तिवदेव न केवलयोः प्रकृतिप्रत्यययोः अर्थप्रत्यायनं दृष्टमिति, अतः कथं तयोः सामर्थ्यमत आह प्रकृतीति[१६७] । न हि तयोः पिपीलिकापङ्क्तिवत्केवलयोर्दर्शनमस्ति, यतो ऽसामर्थ्यं गम्यते, सामर्थ्यं तु सहप्रयुक्तयोरप्यन्वयव्यतिरेकाभ्यां विविच्यतइति।

---

* समस्तव्यक्तीति का. पु. ।

नामाख्यातादिसाकल्यं वैकल्याऽनुगमे सति ।
तदर्थाऽसम्भवो दृष्टः पदवाक्यान्तराश्रयः ॥ १६८ ॥
विप्राऽश्वः पचते यातं राजहस्तिन्यगादिति ।
तथा ऽन्यरूपमन्यादृक् राज्ञा दध्यत्र गामिति ॥१६९॥
'विप्रशब्दौ क चिद् दृष्टावुपसर्गाऽर्थवाचिनौ ।
समुदायस्तथा ऽन्यत्र ब्राह्मणत्वाऽवबोधकः ॥ १७० ॥
अश्व इत्यपि नामेदमाख्यातं लुङि चेदृशम् ।
आख्यातं पचतेशब्दः पच ते इति वा द्वयम् ॥१७१॥
स्त्रीद्वित्वं पुंबहुत्वं वा ते षष्ठ्यथ चतुर्थ्यथ ।
पचते इति सर्वं वा चतुर्थ्यन्तं शतुः पदम् ॥१७२॥
यातं लोण्मध्यमद्वित्वमयातं लङि वा भवेत् ।
कर्तृनिष्ठाद्वितीयान्तं प्रथमान्तं नपुंसकम् ॥ १७३ ॥

---

संप्रति स्फोटवादी पदतद्भावानामन्वयव्यतिरेकाऽभावादेवाऽऽनर्थक्यमापादयति नामेति[१६८] । पदवाक्यान्तराश्रय इति । नामपदमाख्यातपदमित्यादिरूपेण पदान्तरत्वं, पदभेदादेव च वाक्यान्तरत्वम्। असम्भवग्रहणमुपलक्षणं साकल्याऽनुगमे तदर्थाऽनुगमाऽभावादन्वयो नास्ति, वैकल्याऽनुगमे तु सकलस्य पूर्वरूपस्य व्यतिरेकेऽपि तदर्थसम्भवाद्व्यतिरेको ऽपि नास्तीति ।

अन्वयाऽभावोदाहरणानि संक्षिपाति विप्रेति[१६९] । पचते यातमित्यत्र यातमयातमिति द्वेधा ऽवच्छेदं दर्शयिष्यतीति। व्यतिरेकाऽभा-

राजहस्ती समासो वा राजलोणमध्यमो ऽपि वा ।
हस्तिर्नीत्यथ सप्तम्यामथ स्त्रीप्रत्ययान्तरम् ॥ १७४ ॥
अगादिति लुङन्तं स्यादगो वा पञ्चमीपरः ।
तानत्तीत्यथ वा ऽप्येवं क्विबन्तो ऽयं समासभाक्'॥१७५॥
एवमर्थविकल्पेन भेदाऽर्थो नाऽवतिष्ठते ।
निर्भागे वाचके वाक्ये समस्तादस्ति निर्णयः ॥१७६॥
तस्मान्न यो यमन्वेति सर्वदा तेन सो ऽर्थवान् ।
अनर्थकत्वविज्ञानात्तद्रूपे ऽपि पदान्तरे ॥१७७॥
तथा राजा ऽर्थवान् दृष्टो राज्ञेत्यत्र च नास्त्यसौ ।

---

वोदाहरणानि संक्षिपति तथेति। पूर्वाणि विवृणोति विप्रेति[१००-१७५] षड्भिः। अयातमित्यत्र यातशब्दस्य साकल्याऽनुगमे स्वार्थाऽसम्भवः, तथा द्वयोरपि यातमयातमिति पदयोः प्रत्येकमाख्यातनिष्ठाप्रथमाद्वितीयान्तत्वेन त्रेधा विभागे तत्तदर्थव्यभिचारो, राजहस्तीत्यत्र हस्तीत्येतदेव प्रतीकेनोपात्तं स्त्रीप्रत्ययान्तरमिति सम्बुध्यन्तमित्यर्थः ।

तदेवमेकरूपे ऽपि पदे नानार्थविकल्पेन तत्तदर्थाऽनुगमाऽभावः, शब्दभेदानामपि पदानां न कश्चिदर्थो व्यवस्थितः शक्यो निश्चेतुं, तदनिश्चये च तदधीनस्य वाक्यार्थस्याप्यनिश्चयः स्यादित्याह एवमिति[१७६] ।

निर्भागवाक्यवादिनां तु प्रत्यर्थं वाक्यभेदान्नास्ति व्यभिचार इत्याह निर्भागइति । तदुपसंहरति तस्मादिति[१७७] । व्यतिरेकव्यभिचारं विवृणोति तथेति[१७८] । अन्वयव्यभिचारे ऽस्तु नामाऽव-

दधि गौरिति नापीमौ* विज्ञो दध्यत्र गामिति ॥१७८॥
अन्यस्मिञ्ज्ञातसम्बन्धे निषिद्धो ऽन्यश्च वाचकः ।
न च सर्वविकाराणामानन्त्यात्सङ्गतीक्षणम् ॥१७९॥
'तस्मादनर्थकैरेव विना जातिगुणाऽन्वयात् ।
प्रकृतिप्रत्ययाद्यन्तपदभागविवर्जितैः ॥ १८० ॥
वाक्यैरेव विशिष्टो ऽर्थः स्वतन्त्रैः प्रतिपाद्यते ।
भागशः कथितो†पायैरश्वकर्णाऽजकर्णवत्' ॥१८१॥

---

चकत्वमपि, सकले कारणे सति कार्योऽनुत्पत्त्ययोगात्, व्यतिरेकव्यभिचारे तु को दोषः, सम्भवति च पूर्वपदव्यतिरेके पदान्तरादेवाऽर्थावगतिरत आह अन्यस्मिन्निति[१७९] । सत्यमन्यत्र तरुवृक्षादिवत् पदान्तरत्वं यत्पूर्वपदव्यतिरेके ऽपि पदान्तरादेव तदर्थप्रतीतिः स्यात्, तथा हि सति दधिशब्दे ज्ञातसम्बन्धे दध्यत्रेत्यत्राऽर्थप्रतीतिर्न स्यादिति ।

गृह्यतां तर्हि तस्यापि सम्बन्ध इति चेदसत्यपि तस्मिन्नर्थप्रतीतिदर्शनात्, न च सम्भवत्यानन्त्यादित्याह न चेति । तदेवं पदत्वस्य तदेकत्वस्य च पारमार्थिकस्याऽभावात्कल्पनीयमेकत्वमङ्गीकर्त्तव्यम्, एवं च सर्वो ऽयं पदपदार्थविभागः काल्पनिको न वास्तव इत्युपसंहरति तस्मादिति[१८०] द्वयेन । स्वतन्त्रैः पदतद्भागाऽनपेक्षैर्निर्भागैरेव वाक्यैर्जातिगुणक्रियात्मकाऽन्वयाऽप्रतिपादनादनर्थकैर्निर्भाग एव वाक्यार्थः प्रतिपाद्यते, अश्वकर्णपदेनेव वृक्षः, कथं पुनस्तेषा-

---

* नापीष्टे इति ३ पु. पा. ।

† कल्पितेति २ पु. पा. ।

अत्र ब्रूमः पदात्मा न सर्वेष्वेतेषु भिद्यते ।
केन चिद्धर्मभेदेन जरा राजेतिवत् क्रमात् ॥१८२॥
पदावधारणोपायान् बहूनिच्छन्ति सूरयः ।
क्रमन्यूनाऽतिरिक्तत्वस्वरवाक्यस्मृतिश्रुतीः ॥१८३॥
'शेषानर्थान्परिच्छिद्य स्वरूपैर्वाक्यगोचरान् ।
तत्सम्बन्धाऽनुरूपार्थवाचित्वेनाऽन्यानिर्णयः ॥१८४॥

---

मनन्तानां सम्बन्धग्रहणं भागशः कथितोपायैः पदात्मकानां भागानामसतामेव सत्त्वमेकत्वशून्यानां च दधिशब्दप्रभृतीनामेकत्वं कल्पयित्वा यः पदार्थैः सम्बन्धः कथितः तेनोपायभूतेन गृहीतसम्बन्धान्येव वाक्यानि वाक्यार्थं प्रतिपादयन्तीति ।

एवमाक्षिप्ते सत्यन्वयाऽभावं तावत्परिहरति अत्रेति[१८२] । नहि विप्राश्वादिषु तत्पदाऽन्वये सत्येव पदार्थाऽनन्वयः पदान्तरत्वान्नामाख्यातानामिति । कथं पुनर्वर्णात्मकं पदं तद्भेदे भिद्यते, ऽत आह केन चिदिति । नामत्वाख्यातत्वादिधर्मभेदेनेति ।

केन पुनरुपायेनाऽयं धर्मभेदो ऽवगम्यते येन पदभेदाऽवधारणं,तद्दर्शयति पदेति[१८३]। क्रमाऽन्यत्वे न्यूनत्वे वा विकलस्य वाचकत्वाऽभावा*दर्थाऽवगतेरनुपपत्तिः परस्यापि संमतैव, दृष्टान्तार्थं तु तयोर्ग्रहणम, अतिरेके च पदान्तरत्वम 'अवध्यन्तरतस्तत्रे'त्यत्र प्रतिपादयिष्यते, स्वरस्तु बहुव्रीह्यादिनिर्णयोपायतया व्याकरणसिद्ध एव, केवलास्तु वाक्यश्रुतिस्मृतयः परिशिष्यन्ते ।

तत्र वाक्यमुदाहरति शेषानिति[१८४] द्वयेन । पदं हि द्वेधा सम्भवद्धौकुकामः पचतइत्याख्यातं निर्णीयते, पचते दक्षिणां देहीत्यत्र नाम, सो ऽयं पदान्तरैक†वाक्यवशेन निर्णय इति ।

---

* वाचकत्वादिति २ पु. पा. । † नाम धात्वन्तरैकेति २ पु. पा. ।

तत्राऽवधृतनामार्थैराख्याताऽपेक्षणेन तत् ।
आख्याते सति नामत्वं भवेदुभयसंभवे' ॥१८५॥
'यथा च पुरुषाऽऽकारे समाने ऽप्यवगम्यते ।
स्मरणाद् ब्राह्मणत्वादि प्रकृतिप्रत्ययाऽन्वयात् ॥१८६॥
तथा ऽन्वाख्यानभेदेन प्रकृतिप्रत्ययादिभिः ।
नामाख्यातव्यवस्थानं स्मरणेनोपलक्ष्यते' ॥१८७॥
अप्राप्तस्मृत्युपायानां* विवेको ऽयं न जायते ।
अज्ञाते पितृसम्बन्धे तुल्यो ऽसौ ब्राह्मणादिषु ॥१८८॥

---

स्मरणस्येदानीं निर्णयहेतुत्वं दर्शयति यथेति[१८६-१८७]द्वयेन । प्रकृतिप्रत्ययाऽन्वयात्, मातापितृसंबन्धादित्यर्थः । प्रकृतिशब्दो हि कारणवचनः, प्रत्ययशब्दो ऽपि, तत्र प्रकृतिशब्दः स्त्रीलिङ्गो मातरि वर्त्तते, प्रत्ययशब्दः पितरि, यथा मातापितृसंबन्धाऽनुभवनिमित्तात्तत्स्मणात्समाने ऽपि मनुष्यत्वे ब्राह्मणत्वादिकं विविच्यते तथा वैयाकरणप्रवरेण अश्वस्त्वं देवदत्तेत्युक्ते ऽश्व इति पदं संकीर्णलोकप्रयोगमात्रदृष्टाऽश्ववचनतया नामत्वेनापि संभाव्यमानं भूते लुङ् च्लि लुङि जुस्तम्भित्यादिना च्लेरङादेशः श्वयतेर इत्यादिव्याकरणस्मृत्यन्वाख्यानवशात् लुङि मध्यमैकवचनं निर्णीतमाख्यातं निर्णीयते ।

चोदयति अप्राप्तेति[१८८] । परिहरति अज्ञातइति । निरुपायानामवगतिर्न वस्त्वभावं साधयतीति । संप्रति श्रुतिं वि-

---

* श्रुत्युपायानामिति का. पा ।

तथा श्रुत्यैव संदिग्धं किं चिन्निर्णीयते पदम् ।
सामानाधिकरण्येन प्रसिद्धाऽऽख्यातनामभिः ॥१८९॥
नन्वयं न विभागः स्यात् पदजातिमनिच्छतः ।
नामा*ऽऽख्यातमतिग्राह्याः कथं वर्णास्तएव ते ॥१९०॥
केन वा नेष्यते जातिः पदजातचतुष्टये ।
सुप्तिङ्कृत्तद्धिताः सन्ति तथा धात्वादिजातयः॥१९१॥

---

घृणोति तथेति[१८९] । किमिदं श्रुतिरिति, सामानाधिकरण्यमित्यर्थः, तदाह समानेति । यातः पुनरायातीत्यत्राऽऽख्यातसामानाधिकरण्यायात इति कर्तृनिष्ठाप्रथमान्तं नामपदं भवति, यातो देवदत्तयज्ञदत्ताविल्यत्र द्विवचनान्तनामपदसामानाधिकरण्यादाख्यातमिति ।

चोदयति नन्विति[१९०] । यथा हि गवादिपदेषु गोशब्दत्वादिजातिरेकैकस्मिन्वर्णे ऽनुपलम्भादसमवायात्क्रमवर्तिनां च साहित्याऽसंभवाद्गोशब्दाऽवयव्यभावाच्च निराश्रयत्वान्नास्तीत्युक्तं तथा नामत्वाद्यपि सामान्यं भवन्मते नास्ति यद्वाक्यादिभिर्निर्णीयते, वर्णविलक्षणाः कथं नामाख्यातादिविचित्रबुद्धिविषयाः स्युरिति । परिहरति केनेति[१९१] । सन्त्येव नामाख्यातोपसर्गनिपातेषु नामत्वादीनि, तथा पदभागे ऽपि प्रकृत्यंशे धातुत्वप्रातिपदिकत्वे, प्रत्ययांशे ऽपि सुप्तिङ्कृतद्धितत्वादीनि सन्त्येवेति ।

नन्वक्षराण्येव पदमिति वर्णैः सह पदस्यैक्यं प्रतिपादयता भाष्यकारेण वर्णादन्यत्सर्वं निराकृतं, कथं नामत्वाद्यवगम्यते, ऽत आह

---

* नानेति का. पा. ।

पदैक्ये ऽप्यविरुद्धेयमत्यन्ताऽनतिरेकिणी ।
वर्णा एवेति च ग्रन्थे निषिद्धा ऽत्यन्तभिन्नता ॥१९२॥
भ्रमणत्वादिवच्चाऽसौ व्यज्यते क्रमवर्त्तिभिः ।
अन्त्यवर्णे ऽथ वा व्यक्तिः पूर्वसंस्कृत्यपेक्षिणि ॥१९३॥
यद्वा येनैव धर्मेण* व्यङ्क्तुं जात्यन्तरं क्षमाः ।
वर्णाः स्वरूपसाम्ये ऽपि तेनाऽऽख्यातादिबुद्धिषु ॥१९४॥

---

पदैक्यइति[१९२] । अत्यन्तभिन्नस्फोटादिनिराकरणं तत्र कृतं, नामत्वादिजातिस्तु शब्दत्ववदनतिरेकिणी न तत्र निराकृतेति । आश्रयाऽनुपपत्तिं समाधत्ते भ्रमणेति[१९३] । अथाप्यवश्यमेकेनैव† वक्तव्यं तदपि संभवत्येवेत्याह अन्त्येति । गोशब्दत्वं तु संभवत्यप्याश्रये प्रमाणाऽभावादनङ्गीकृतम् । उक्तं हि—

वर्णसामान्यवच्चापि न तत्कल्पनमर्हति ।
वर्णात्मनामभेदाच्च सिद्धा सामान्यधीरपि ॥ इति ।

मा वा भूवन् नामत्वादिजातयस्तथापि न तद्बुद्धीनां निरालम्बनत्वमित्याह यद्वेति[१९४] । कः पुनरसौ धर्मो, ऽर्थविशेषाऽभिधानमेव, पचतेपदस्य हि पदान्तरैकवाक्यतया तत्सम्बन्धाऽनुरूपार्थवाचित्वमेव निर्णीयते, तदधीना चाऽऽख्यातत्वादिबुद्धिः, एवं चेत्तद्वाचित्वमेवाऽऽख्यातत्वादिबुद्धेरालम्बनमस्तु किं जात्यन्तराभ्युपगमेन, कुतश्चाऽनेकशक्तियुक्तस्य पदस्य तत्तच्छक्तिविशिष्टरूपेण तत्तदर्थाऽभिधायित्वं,

---

* रूपेणेति का. पा. ।

† एकत्रैवेति २ पु. पा. ।

वनपङ्क्त्यादिवच्चैषु समुदायेष्वसत्स्वपि ।
भिन्नाऽऽख्यातादिसामान्यव्यवहारो भविष्यति ॥१९५॥
धातुप्रत्ययतद्वाच्यसामान्यानामियं गतिः ।
तद्धिताऽऽख्यातकृद्रूपं नित्यं हि स्मर्यते जनैः ॥१९६॥
न चाऽन्वाख्यानमात्रेण कल्पितं तच्छ्वादिवत् ।
प्रयुज्यते हि यद्रूपं तदुपाये न* तिष्ठति ॥१९७॥

---

शक्तिविशेषस्तु स्वस्ववाक्यश्रुतिस्मृतिभिरभिव्यज्यते ऽक्षादिशब्दानामिवाऽर्थप्रकरणादिभिः, स्फोटवादिना चाऽवश्यमक्षमानयेत्यादिषु वाक्यविशेषाऽभिव्यञ्जनमर्थप्रकरणादिभिराश्रयणीयं, शक्तिविशेषाऽभिव्यक्तिरेव तथा ऽस्तु, न च व्यभिचारः, तच्छक्तिविशिष्टात्मना ऽभिव्यक्तस्य सर्वदैव तदर्थाऽन्वयादिति । अतश्च यद्यपि पचते यातमित्यादिष्वविलक्षण एव वर्णसमुदायो न तु वनपङ्क्त्यादिवज्जङ्गमस्थावरसमुदायभेदस्तथाप्यर्थोपाधिवशादाख्यातादिव्यवहारः सिध्यतीत्याह वनेति[१९५] ।

एवं धात्वादिबुद्धीनामपि क्रियावाचित्वाद्युपाधिरेवाऽऽलम्बनमित्याह धात्विति[१९६] । तद्वाच्यत्वग्रहणं दृष्टान्तार्थं, यागादिषु हि क्रियाशब्दो जातिवचनः, धात्वर्थादिशब्दास्तु धात्वभिधेयतोपाधिका एवेति ।

ननु कृत्रिमसंज्ञामात्रनिबन्धनो ऽयं विभागो न कृत्रिमः, तथा हि, नामकरणे कृदन्तपरिग्रहः तद्धितवर्जनं च स्मर्यते, तच्च स्मरणं मूलान्तराऽभावाद्वेदमूलम्, अतो वेदे ऽप्यस्ति कृदादिव्यवहारः, तथा विभक्तिमुक्त्वा प्रयाजेन वषट्करोतीति विभक्तिव्यवहारो ऽपि वेदे

---

* तद्रूपा येनेति पाठान्तरम् ।

अवध्यग्रहणं यत्तु प्रकृतिप्रत्ययौ प्रति ।
अन्वाख्यानविसंवादादित्येतच्च न दुष्यति ॥१९८॥
तत्र ह्याप्तनरोक्तीनां प्रामाण्यमुपपद्यते ।
यद्वा तुल्यबलत्वेन विकल्पेन मतान्तरम् ॥१९९॥
प्रकृतिः प्रत्ययांशो* वा कश्चित्तावन्न भिद्यते ।
शिष्टे विकरणादौ तु यथेष्टाऽङ्गाऽङ्गिकल्पना ॥२००॥

---

दृश्यते, तथा च नायं विभागः कृत्रिम इति । नापि प्रक्रियामात्रार्थः शकारपकाराद्यनुबन्धवत्कल्पित इत्याह न चेति[१९७] । कारणमाह प्रयुज्यतइति ।

यदि पारमार्थिकः प्रकृत्यादिविभागः, कथं तर्हि प्रकृतिप्रत्यययोरवधिं प्रति विवादः, के चिद्यत्तदेतेभ्यो डावतं स्मरन्ति के चित्तु वतुपमाकारादेशं च अधुना दानीं च, न चेदं पारमार्थिकत्वे घटते, तथा शबादिकं विकरणं प्रकृत्यङ्गं के चित्प्रत्ययाङ्गमत आह अवधीति[१९८] । कथं न दुष्यतीत्यत्राह तत्र हीति[१९९] ।

ननु सम्भावितमूलं वाक्यमाप्तविशेषात्प्रमाणं भवति, न चेहाऽन्यतराऽङ्गत्वाऽवधारणे किं चिन्मूलं सम्भवति, अत आह यद्वेति । विकल्पो ऽपि सिद्धे वस्तुनि न सम्भवत्येवाऽतः परिहारान्तरमाह प्रकृतिरिति[२००] । पूर्वाऽपरभागयोस्तावत्तदागमन्यायादन्वयव्यतिरेकाभ्यां च भेदेनैवाऽर्थाऽभिधायित्वं निश्चितं, मध्यवर्त्तिनस्तु विकरणादेरन्यतराऽङ्गत्वाऽनिर्द्धारणे ऽपि न किं चिद्दुष्यतीति । मा भूर-

---

* प्रकृतिप्रत्ययांश इति का. पा. ।

धूमादावपि वन्ह्यंशे कश्चिदंशो ऽनुमापकः ।
अन्यः साधारणो यद्वत्तद्वदत्र भविष्यति ॥२०१॥
यथा च नित्यरूपत्वान्न तत्रांशान्तरोद्धृतिः ।
तथाऽऽत्राऽऽगमको ऽप्यंशो नित्यत्वे न व्यवस्थितः॥२०२॥
'यत्र प्रत्ययलोपेन प्रकृतिः स्यात् क्विबन्तवत् ।
शुद्धः प्रकृतिलोपेन प्रत्ययो वा ऽधुनादिवत् ॥२०३॥
तन्मात्रस्य द्विशक्तित्वं* तत्र शब्दस्वभावतः ।
वाक्यार्थे तद्धितान्तादिपदसामर्थ्यभेदवत्' ॥२०४॥
एकदेशाऽनुमानेन केचिदाहुर्द्वयार्थताम् ।
अपरे ऽर्थैकदेशेन ब्रुवते ऽन्यार्थलक्षणाम् ॥२०५॥

---

न्यतरस्याप्यङ्गं, यथा धूमादौ धूमवत्त्वमेव गमकं न पाण्डुरत्वम् अग्न्यनग्निसाधारणत्वात् तथा विकरणानामप्यवगत्यनौपयिकमेवास्त्वित्याह धूमादाविति[२०१] ।

यद्येवं विकरणादिकमुद्धृत्य किमिति प्रयोगो न भवति, अत आह यथेति[२०२] । यदि विभागेनैव प्रकृतिप्रत्ययाभ्यामर्थद्वयाऽभिधानं यत्र तर्हि प्रकृतिमात्रं प्रयुज्यते अग्निचिदित्यादौ, यत्र वा प्रत्ययमात्रमधुनेति तत्र कथमर्थद्वयाऽभिधानमत आह यत्रेति[२०३-२०४] द्वयेन ।

मतान्तरद्वयमुपन्यस्यति एकदेशेति[२०५] । प्रकृत्या प्रत्ययस्तेन वा प्रकृतिरनुमीयते,प्रकृत्यर्थे न चाभिहितेन प्रत्ययार्थो लक्ष्यते,तेन च

---

* शक्तत्वमिति ३ पु. पा. ।

तत्त्वयुक्तं यतो नास्ति लक्षणारूपता मतेः ।
मुख्यत्वेनैव बुद्धिर्नः क्विबन्तादिषु जायते ॥२०६॥
लक्षणादिप्रवृत्तिश्च न शास्त्रेणाऽनुगम्यते* ।
तत्सङ्करे च तेनैव वाच्यवाचकनिर्णयः ॥२०७॥
न च तेन सहैतस्य विज्ञाता सहवाचिता ।
लोकप्रयुक्तशब्दार्थो नोपायत्वाच्च मुच्यते ॥२०८॥

---

प्रकृत्यर्थ इति। लक्षणां तावद्दूषयति तदिति[२०६]। इतश्च लक्षणेत्याह लक्षणेति[२०७]। न हि लाक्षणिकी गौणी वा वृत्तिः शास्त्रेणाऽनुगम्यते, अग्निर्माणवक इत्यादावदर्शनादिति। किं च, मुख्यलाक्षणिकादिवृत्तिसंकरे वाचनिकनियमार्थमेव व्याकरणं, कथं तेन लक्षणादिकमनुगम्येतेत्याह तत्संकरइति। भवतु वा ऽनादिप्रवृत्ताया लक्षणावृत्तेरेव षष्ठीसमासादावनुगमस्तथापि नेह लक्षणा सम्भवति, संविद्विरोधादित्युक्तम्, इदं तु स्वारस्यमात्रमिति।

एकदेशाऽनुमानेनेत्येतद्दूषयति न चेति[२०८]। न हि केवलप्रत्ययस्य कदा चिदपि प्रयोगो ऽस्ति, यतस्तेन ज्ञातसाहचर्यात्त्विनोतिस्तमनुमापयेत्, अधुनेति चेदंशब्देन विनैव सर्वदा प्रयुज्यमानः कथमिदंशब्दमनुमापयेदिति।

अथ लोकप्रयोगाऽभावे ऽपि किं प्रत्ययो ऽन्वाख्याने दृष्टत्वात्त्विनोतिना ऽनुमितो ऽर्थं प्रतिपादयतीति उच्यते, तत्राह लोकेति। लोकप्रयुक्तस्यैव हि शब्दस्याऽर्थो वाक्यार्थोपायतामनुभवति न त्वा-

---

* प्रवृत्तिश्च लक्षणार्थेना ऽनुगम्यते इति ३ पु. पा. ।

आख्यातप्रत्ययेनापि सहाऽसावुपलक्षितः ।
कामं तदीयमप्यर्थं गमयेद्*नुमानतः ॥२०९॥
तावत्यंशे न कल्प्यौ च प्रकृतिप्रत्ययौ पुनः ।
स एवार्थद्विशक्तित्वे वरं क्लेशः समाश्रितः ॥२१०॥
निर्ज्ञातपरिमाणस्य स्मरणाऽनुगमादिना ।
नानात्वं कल्पयित्वाऽस्य कः शक्तिं कल्पयिष्यति॥२११॥
दध्यत्रेति यदन्यादृक्पदं पूर्वाऽवधारितात् ।
केचिदाहुस्तदेवेदमजानन्तर्य†दूषितम् ॥२१२॥

---

ख्यानगतस्य कदा चिदप्यर्थं प्रतिपादयतो ऽर्थवत्त्वाऽभावादिति । किं च, चिन्वन्त्वित्यादौ प्रयोगे चिनोतिराख्यातेन सह दृष्ट इति आख्यातमपि तेनाऽनुमीयेत, तेन तदर्थो ऽपि विध्यादिरग्निचिदित्यत्र प्रयोगे प्रतीयेतेत्याह आख्यातेति[२०९] ।

के चित्तु तावत्येव प्रकृतिप्रत्ययविभागं कल्पयन्ति, तदप्ययुक्तमित्याह तावतीति[२१०] । शब्दविभागकल्पनाया यः क्लेशः स वरं श्रुतस्यैकस्यैव शब्दस्याऽर्थद्वयशक्तावाश्रित इति । कथमित्याह निर्ज्ञातेति[२११] । शक्तिनानात्वं ह्यवश्यंभावि, तन्मात्रेणोपपत्तौ शब्दनानात्वमप्रमाणकमिति । व्यतिरेकव्यभिचारमनुभाष्य परमतेन परिहरति दध्यत्रेति[२१२]। नाऽत्र तत्पदस्य तादृग्रूपव्यतिरेकः,तादृगेव

---

* गमयतीति २ पु. पा. ।

† इदमानन्तर्येणेति २ पु. पा. ।

प्रत्यभिज्ञायते तद्धि स चाऽर्थः संप्रतीयते ।
इकारे तु यविज्ञानमकारपरसंहिते ॥२१३॥
अथ वा ऽऽत्मीयसिद्धान्ताद्यकारत्वे ऽस्य सत्यपि ।
दधिवाच्यार्थ*सामर्थ्यं लक्षणादवगम्यते ॥२१४॥
तथा ह्यश्रुतदध्यत्रो लक्षणाऽनुगमाद्विना ।
व्युत्पन्नदधिशब्दो ऽपि दध्यत्रेति न बुध्यते ॥२१५॥
विकाराऽऽनन्त्यतो यस्तु सम्बन्धज्ञप्त्य†सम्भवः ।
लक्षणात्तद्विदुक्तेर्वा नातिक्लेशो भविष्यति ॥२१६॥

---

तु पदमिति । तत्त्वे प्रमाणमाह प्रत्यभिज्ञायतइति[२१३] । कः पुनर्दोषो येनेदक्ताऽवगतिरत आह इकारइति । इकारान्तमप्यकारेण परेण संहितादोषाद्यकारान्तमिव भ्रान्त्या ऽवगम्यतइति ।

स्वमतेन परिहरति अथ वेति[२१४] । परमार्थत एवायं यकारः पदान्तरमेवेदं न तु तदेवाऽन्यादृशं गम्यते, पदान्तरस्यैव तु पदान्तरसमानार्थत्वमिति इको यणचीति लक्षणादवगम्यते, अनेन हीकारस्थाने यकारोच्चारणं संहितायां भवतीत्युच्यते, तेनेकारान्तपदसमानार्थत्वमस्य कथितं भवतीति । ननु प्रत्यभिज्ञायते तदेवेदमिति, अतः कथं पदान्तरत्वे प्रमाणमत आह तथा हीति[२१५] । तत्पदत्वे हि लक्षणाऽनुगममनादृत्यैव दधि इत्यत्र व्युत्पन्नो दध्यत्रेत्यत्रार्थं बुध्येत, न त्वेवम्, अतो नास्त्येव प्रत्यभिज्ञानम्, अर्थप्रतीतिरपि लक्षणतः सम्बन्धग्रहणादेव न तु कालपनिकैकत्ववशादिति ।

---

* वाक्यार्थेति का. पा. ।

† क्लृप्तीति पाठान्तरम् ।

कियत्पदमिति ज्ञानं यत्तु तत्र न जायते ।
स्वरान्तं व्यञ्जनान्तं वा न चाऽज्ञाते ऽर्थनिर्णयः ॥२१७॥
तदुच्यते पदच्छेदे तदपभ्रंशतां व्रजेत् ।
संहिताविषये चास्य स्मर्यते साधुशब्दता ॥२१८॥
एतस्मिंस्तु प्रतीमो ऽर्थमगृहीताऽवधावपि ।
तेनाऽवच्छिद्यमाने* ऽपि पदे भेदो ऽर्थभेदतः ॥२१९॥
ज्ञायते चाऽवधिस्तत्र व्यञ्जनाऽन्तो न तुच्यते† ।
दधिशब्दाऽवबोध्यत्वान्नित्यं नित्यसमासवत्‡ ॥२२०॥

---

यच्चाऽऽनन्त्यात्संबन्धग्रहणं न सम्भवतीत्युक्तं, तदनुभाष्य परिहरति विकारेति[२१६] । यदि पदान्तरमिदं ततः किं यदिदं पदमिति विभिद्य कथ्यते, न चाऽज्ञातपरिमाणादर्थोऽवगतिः सम्भवति, अतो दध्यत्रेति सर्वमिदमेकं पदं न भेद इति । तत्तावदनुभाषते कियदिति[२१७] । परिहरति तदुच्यतइति[२१८] । किमित्यत्राऽपभ्रंशता, ऽत आह संहितेति । चशब्दो हेताविति । कथं तर्ह्यविभक्तस्याऽज्ञाताऽवधेरर्थवत्त्वमत आह एतस्मिन्निति[२१९] । यद्यप्यवधिर्न गृह्यते तथाप्येतस्मादेव पदान्तरादवध्यर्थाऽवगमादर्थवत्त्वमिति ।

तेनाऽसत्यपि विच्छेदे ऽर्थभेदात्पदसिद्धिरित्याह तेनेति । इदं प्रौढिमात्रं, ज्ञायतएवाऽवधिर्न तु विभिद्योच्चार्यते, संहितायामेव साधुत्वाद्विभिद्यमानस्याऽसाधुत्वप्रसङ्गात् । यथा कुम्भकारादिसमासे न कदाचिदुत्तरपदं विभिद्योच्चार्यते, विग्रहवेलायां कुम्भं करोतीति पदान्तरैणैवाऽर्थकथनमेवमिहाप्यसंहितायां दधिपदमेव नित्यं प्र-

---

* तेनापि च्छिद्यमाने इति ३ पु. पा. ।

† ननूच्यते इति ३ पु. पा. । ‡ सत्यसमासवदिति २ पु. पा. ।

एतेन राजराज्ञादि*शब्दानां दत्तमुत्तरम् ।
किंचिदंशसमानं हि तदर्थं तत्पदान्तरम् ॥२२१॥
यत्तु ब्राह्मणवस्त्रादौ ब्राह्मणार्थो न गम्यते ।
अवध्यन्तरतस्तत्र† तत्पदान्तरजृम्भितम् ॥२२२॥
उत्सर्गस्याऽपवादेन बाधः कस्य न संमतः ।
तद् ब्राह्मपदमुत्सृष्टं बाध्यते ऽन्याऽवधौ पदे ॥२२३॥
तत्त्वेनाऽवधिमुत्कृष्य यद्युच्येत पदान्तरम् ।
केन स्वार्थो ऽस्य वार्येत देवदत्तादिशब्दवत् ॥२२४॥

---

योक्तव्यमित्याह ज्ञायतइति[२२१] । न च पदान्तरेण तदर्थप्रतीतौ पूर्वस्याप्यवाचकत्वं सम्भवति, अनेकस्याप्येकत्र कारणत्वं तरुवृक्षादिशब्दवद् व्रीहियवादिवच्चेति । राजाराज्ञादिपदेष्वेवमेव गतिरित्याह एतेनेति[२२१] । तदेव दर्शयति किं चिदिति ।

यत्तु ब्राह्मणकम्बलपदे ब्राह्मणशब्दस्य सकलस्याऽन्वये ऽपि तदर्थो नाऽवगम्यतइति परैरुक्तं, तदनुभाष्य परिहरति यत्त्विति[२२२]। अवध्यन्तरे ऽपि तत्पदमविकलमस्तीति । कथं तदर्थो नाऽवगम्यते, ऽत आह उत्सर्गस्येति[२२३] । प्राच्यस्य पदरूपस्याऽवध्यन्तरमपवादकमिति ।

यदा त्ववध्यन्तरमपास्य तत्त्वेन प्राच्यरूपेण पदान्तरमुच्चार्यते तदा स्वार्थमभिधत्तएवेत्याह तत्त्वेनेति[२२४] । यत्र तर्ह्यश्वकर्णादाव-

---

* राजराजादीति ३ पु. पा. । † तत्रेति पाठान्तरम् ।

एवमेवाऽश्वकर्णादौ समुदायप्रसिद्धितः ।
वार्यते ऽवयवस्याऽर्थो वृक्षाद्यर्थोऽवधारणात् ॥२२५॥
अर्थप्रकरणाऽधीनबाधितस्वार्थयोरपि ।
समस्तव्यस्तयोर्भूयः स एवाऽर्थः प्रतीयते ॥२२६॥
गोशुक्लादिपदानां तु समस्तव्यस्तभाविनाम् ।
स्वार्थहानिर्न दृष्टेति काऽऽनर्थक्यं भविष्यति ॥२२७॥
पदार्थोऽनुगतश्चैष वाक्यार्थो* गम्यते सदा ।
न विशिष्टार्थता तस्माद्वाक्यस्वातन्त्र्यसाधिनी॥२२८॥

---

न्यूनाऽनधिकमेव पदद्वयं तत्र किं वाजिकर्णयोरनभिधानमत आह एवमिति[२२५] । समुदायप्रसिद्धिरपि ह्यवयवप्रसिद्धेरुत्सर्गस्यैवा-ऽपवादो बाधिकेति ।

यद्येवं न कदा चिदवयवेन पृथगर्थता स्यात्, सर्वदैव समुदाया-र्थेन बलीयसा बाधात्, अत आह अर्थेति[२२६] । अर्थप्रकरणग्रहणं समुदायप्रसिद्धेरप्युपलक्षणार्थं, समुदायार्थो वा ऽर्थशब्देनोच्यते, अर्थप्रकरणाऽधीनेन श्रोत्रा बाधितस्वार्थयोरपि न सर्वदा तद्बाधः; तथा हि । अश्वमानय कर्णं विध्यतीत्यादौ व्यस्तप्रयोगे तावन्नाऽवयवा-र्थयोः किं चिद्बाधकमस्ति, समस्तप्रयोगे ऽप्यश्वकर्णं परिमार्ष्टीत्या-दौ प्रमाणान्तरवशेन समुदायाऽर्थबाधादवयवाऽर्थनिर्णयः सिद्ध्यतीति।

तदेवं व्यभिचारिणामपि नाऽऽनर्थक्यम्, अव्यभिचारिणां तु भूयसां गवादीनां दूरापास्तमित्याह गोशुक्लेति[२२७] ।

भवन्त्वर्थवन्ति पदानि, तानि तु पदार्थमात्रप्रतिपादकानि न विशिष्टरूपमलं वाक्यार्थमवबोधयितुमिति, तत्प्रतिपादनाय स्वतन्त्रं

---

* शब्दार्थ इति का. पा. ।

न विमुञ्चन्ति सामर्थ्यं वाक्यार्थेषु पदानि नः ।
तन्मात्राऽवसितेष्वेषु पदार्थेभ्यः स गम्यते ॥२२९॥
अशाब्दे चापि वाक्यार्थे न पदार्थेष्वशाब्दता ।
वाक्यार्थस्येव नैतेषां निमित्तान्तरसम्भवः ॥२३०॥
सम्बद्धमेव चैते ऽर्थं गमयन्त्यविनाभुवम् ।
सामान्यं स्वविशेषेण* विना न ह्युपपद्यते ॥२३१॥

---

पदाऽनपेक्षं निर्भागं वाक्यं वाचकं कल्प्यतइति चेत्, तत्राह पदार्थेति[२२८] । पदार्थाऽन्वयरूपेणैव हि वाक्यार्थो ऽवगम्यते, अतो न तेनापि स्वतन्त्रवाक्यसिद्धिरिति ।

मा भून्निर्भागं वाक्यं, सभागमेव तु भागप्रतिपादितपदार्थसंवित्सहायं तदन्वयरूपस्य वाक्यार्थस्य वाचकमस्त्विति चेत्तत्राह न विमुञ्चन्तीति[२२९] । पदानामेव वाक्यार्थे सामर्थ्यान्न वाक्यस्य सामर्थ्यं कल्प्यमिति । कथमित्याह तन्मात्रेति । नास्ति पदानामेव सामर्थ्यमिति ।

नन्वेवमवसितव्यापारेषु पदेषु पश्चात्पदार्थेभ्यो गम्यमानो वाक्यार्थो ऽशाब्दः स्यादत आह अशाब्दे इति[२३०] । कथमित्याह वाक्यार्थस्येति । सति तेषां शाब्दत्वेन द्वारेणास्ति वाक्यार्थस्यापि शब्दप्रतिपाद्यत्वं, तथा च तत्परत्वाच्च शब्दानां शाब्दत्वं सिध्यति, वाक्यार्थे हि शब्दानां तात्पर्यं, न पदार्थेषु, तेषां प्रमाणान्तरसिद्धत्वात्, अतो यद्यप्यभिधाव्यापारः पदार्थेष्वेव पर्यवसितः तथापि तात्पर्यव्यापृतेरपर्यवसिताया वाक्यार्थपर्यन्तत्वात्तात्पर्ये शब्दस्य प्रामाण्यात्सिध्यति शब्दे प्रमेयतया वाक्यार्थस्य शाब्दत्वमिति ।

---

* विवेकेनेति का. पा. ।

न चाऽनुमानमेषा धीस्तन्मात्रेण प्रसज्यते ।
प्रतिज्ञार्थैकदेशत्वात्पदार्थानां ह्यलिङ्गता ॥२३२॥
पदार्थैरनुरक्तो ऽसौ वाक्यार्थः संप्रतीयते ।
नाऽऽत्मना गमयन्त्येनं विना, धूमो ऽग्निमत्त्ववत् ॥२३३॥
पक्षधर्मत्वमेतेषां वाक्यार्थे न च गम्यते ।
'न हि देशादिवत्पूर्वं निष्पन्नः स प्रतीयते ॥२३४॥

---

यत्तूक्त'मन्यः प्रतीतो न ह्यन्यं गमयिष्यत्यसंगत'मिति, तत्राह संबन्धमिति[२३१] । अविनाभावमेव दर्शयति सामान्यमिति । तदिदं "पदानि ह्यमूनी"* त्यादिना " विशिष्टार्थसंप्रत्ययश्च वाक्यार्थे"† इत्येवमन्तेन भाष्येणोक्तमिति ।

यद्येवमनुमानमेवेदं स्यादत आह न चेति[२३२] । कथ मित्याह प्रतिज्ञार्थेति । यदि तावत्पदार्था एव वाक्यविशिष्टतया पक्षीक्रियन्ते तएव हेतवस्ततश्च प्रतिज्ञार्थैकदेशतेति । न च यथा धूमविशेषे पक्षे धूमसामान्यस्य हेतुत्वं तथेह संभवतीति । तत्र धूमसामान्यमात्मनः पृथग्भूतेनैव विशेषेणाऽन्वितमग्निं गमयति, पदार्थेषु सामान्यरूपाः स्वात्मानमेव विशेषरूपवाक्यार्थान्वितं गमयन्तीत्यस्त्येव प्रतिज्ञार्थैकदेशतेत्याह पदार्थैरिति[२३३] ।

अथ वाक्यार्थमेव पक्षीकृत्य पदार्थानां हेतुत्वमुच्येताऽत आह पक्षेति[२३४] । कारणमाह न हीति । पदार्थेभ्य एव हि तत्संसर्गो-

---

* शा. भा. पृ. ३२ प. १४ । † शा. भा. पृ. ३४ प. १९ ।

असत्त्वभूतमेनं हि प्रतिपद्यामहे ततः ।
क्रियाकारकसंसर्गविशिष्टः प्रागसौ कुतः' ॥२३५॥
धर्मिण्यनवबुद्धे च न तद्धर्मोऽवधारणम् ।
न च प्राग्बोधकं किं चिद्वाक्यार्थस्योपपद्यते ॥२३६॥
अवबुद्धे तु वाक्यार्थे यदि तद्धर्मता भवेत् ।
विज्ञाते ऽर्थे ततः किं नु प्रमेयमवशिष्यते ॥२३७॥
अन्वयश्च पदार्थानां न वाक्यार्थैरपेक्ष्यते ।
सर्वस्मिन्नेव सुज्ञानो भूतभावितिरोहिते ॥२३८॥
अन्यवाक्यार्थसम्बन्धज्ञानाच्चाऽन्यो न गम्यते ।
अन्यत्वाच्च पदार्थानां ते चे*न्नाऽन्यार्थधीर्भवेत् ॥२३९॥

र्थात्मा वाक्यार्थो गम्यते न ततः प्रागिति । ततः किमित्याह धर्मिणीति[२३६] । अथाऽन्यत एव वाक्यार्थमवगम्य तद्धर्मत्वं पदार्थानां गम्येत, तन्न, अन्यस्य बोधकस्याऽभावादित्याह न चेति । किं चाऽवगते वाक्यार्थे पश्चात्पक्षधर्मता न तज्ज्ञानाङ्गं स्यादित्याह अवबुद्धे इति[२३७] । संप्रत्यन्वयं निराकरोति अन्वय इति[२३८] । अगृहीताऽन्वयोपि ह्यत्यन्ताऽपूर्वमेव वाक्यार्थं पदार्थेभ्यो ऽवगच्छत्येवेति ।

न च शक्यं सर्वैर्वाक्यार्थैः संबन्धग्रहणमित्याह सर्वस्मिन्निति। न च वाक्यार्थान्तरेण संबन्धं गृहीत्वा वाक्यार्थान्तरमनुमातुं शक्यम्, अतिप्रसङ्गादित्याह अन्येति[२३९] । किं चाऽन्येषामपि पदार्थानां वाक्यार्थान्तरेण प्राक् संबन्धो ऽवगतो नाऽमीषां, ये संप्रत्यपूर्वं वाक्यार्थं बोधयन्ति, अतो नाऽनुमानं सम्भवतीत्याह अन्यत्वादिति।

* न चेदिति २ पु. पा. ।

सामान्यदृष्टक्लृप्तौ वा लभ्यते न विशेषधीः ।
वाक्यार्थाऽवगतिः सर्वा त्वसाधारणगोचरा ॥२४०॥
असम्बन्धप्रतीतेश्च प्रामाण्यमुपपादितम् ।
सर्वलोकप्रसिद्धा च प्रतिपत्तिरिह स्फुटा ॥२४१॥
यत्र क्व चन विज्ञातान् पदार्थान् प्रतिपद्य हि ।
दूरदेशादिवार्तासु नाऽऽप्तोक्ते धीर्विहन्यते ॥२४२॥

---

यदि तु त एव वा पदार्था नाऽन्ये, ततो न वाक्यार्थोऽप्यन्यो गम्येतेत्याह ते चेदिति । ननु सामान्येन पदार्थानां पदार्थत्वसामान्याद्वाक्यार्थेनाऽन्वयोऽनुमीयेत, तथा चाऽन्वयः पक्षधर्मता च सिध्यति, न च प्रतिज्ञार्थैकदेशेनापि भविष्यति, पदार्थविशेषाणां पक्षत्वात्, तद्धर्मस्य पदार्थत्वसामान्यस्य हेतुत्वादत आह सामान्येति[२४०] । न हि वाक्यार्थविशेषेण पदार्थत्वसामान्यस्याऽन्वयोऽस्तीति। मा भूदिति चेत्,तत्राह वाक्यार्थेति। यत्तु 'संबद्धमेव चैतेऽर्थं गमयन्त्यविनाभुव' इत्युक्तं, तद्वाक्यार्थमात्राऽभिप्रायं न तद्विशेषाऽभिप्रायमित्यविरोध इति ।

नन्वेवमसंबद्धेभ्यः पदार्थेभ्यः तदवगतिरप्रमाणं स्यादत आह असंबन्धेति[२४१]। संबन्धस्य प्रमाणत्वं स्थितं, किं वेश्वराज्ञयेत्युक्तमिति । नन्वस्तु जातायाः प्रतीतेः अप्रामाण्यं, तज्जननमेव त्वसति संबन्धेऽनुपपन्नमत आह सर्वेति । सर्वजनीना प्रतिपत्तिः संबन्धाऽभावान्नाऽपह्नवमर्हतीति। प्रसिद्धमेव च बुद्धिजन्मनः प्रामाण्यं दर्शयति यत्रेति[२४२] ।

आप्तवादाऽविसंवादादत्र चेदनुमानता ।
निर्णयस्तावता सिध्येद्बुद्ध्युत्पत्तिर्न तत्कृता ॥२४३॥
अन्यदेव हि सत्यत्वमाप्तवादत्वहेतुकम् ।
वाक्यार्थश्चाऽन्य एवेति ज्ञातः पूर्वतरं ततः ॥२४४॥
तत्र चेदाप्तवादेन सत्यत्वमनुमीयते ।
वाक्यार्थप्रत्ययस्यात्र कथं स्यादनुमानता ॥२४५॥

---

शङ्कते आप्तेति[२४३] । परिहरति निर्णय इति । आप्तवादस्याऽनादरेणैव पदार्थेभ्यो वाक्यार्थबुद्धौ जातायामप्रामाण्याशङ्का निवर्त्तते, न प्रामाण्यस्थापनमात्रमाप्तवादत्वेन क्रियते किं तु तत्कृता बुद्ध्युत्पत्तिरिति । न चैवं बुद्ध्युत्पत्तिः, सैव तस्याः सत्यत्वमित्याह अन्यदिति[२४४] । सति वाक्यत्वे सत्यत्वस्याऽऽनुमानिकत्वे ऽपि न बुद्ध्युत्पत्तेरानुमानिकत्वमित्याह तत्रेति[२४५] ।

ननु बुद्ध्युत्पत्तिरप्याप्तवादत्वलिङ्गादेव सम्भवति, तथा हि, आप्तस्य गोपदरचनमर्थान्तरसास्नादिमद्बुद्धिपूर्वकं दृष्टतामनुमापयति, सा चाऽर्थव्याप्ता तज्ज्ञानं जनयति । यद्वा विनैव बुद्ध्यनुमानेनाऽऽकाङ्क्षासन्निधियोग्यत्वे सति पदार्थत्वात् मिथोऽन्वयो ऽनुमीयेतेत्यत आह जन्मेति[२४६] । स्यादेवं, यदाप्तस्यैवाऽवगताऽऽप्तभावस्य च वाक्यादर्थप्रतीतिः स्यात्, सा त्वनाप्तस्याऽनवगताऽऽप्तभावस्य च वाक्यादुदीयते, न च वाक्यमात्रस्य बुद्धिपूर्वतया व्याप्तिरस्ति यतो बुद्ध्यनुमानद्वारा ऽर्थप्रतीतिः स्यादनाप्तस्यान्यथासंविदानस्याप्यन्यथा वाक्यरचनादर्शनात् । यदप्याकाङ्क्षासन्निधियोग्यत्वे सति पदार्थत्वादिति, तदनाप्तवाक्येनैवेयं वाक्यार्थधीरिति ।

जन्म तुल्यं हि बुद्धीनामाप्ताऽनाप्तगिरां* श्रुतौ ।
जन्माऽधिकोपयोगी च नाऽनुमायास्त्रिलक्षणः ॥२४६॥
शब्दप्रामाण्यनिर्णीत्यै पदार्थेभ्यो यथेष्यते ।
अत्यन्ताऽदृष्टवाक्यार्थप्रतिपत्तिस्तथोच्यते ॥२४७॥
भावनावचनस्तावत् तां स्मारयति लोकवत् ।
अन्वयव्यतिरेकाभ्यां प्रत्ययार्थस्तु सेष्यते ॥२४८॥
कैश्चि,दन्यैस्तु धात्वर्थस्तत्सामीप्योपकारतः ।
अपरैः समुदायार्थस्तत एव हि गम्यते ॥२४९॥

---

ननु सत्यत्वं तावल्लौकिकं, तावता च किमित्यनुमानं न भवत्यत आह जन्मेति । त्रिलक्षणलिङ्गजन्यादिधीरनुमानं, न चेयं तज्जन्या, पदार्थैरेवाऽगृहीतसम्बन्धैरियं जन्यते, अतः प्रमाणान्तरमेव शाब्दमिति ।

संप्रति यथा शब्दाऽभिहिताः पदार्थाः सम्बन्धमनपेक्ष्यैव वाक्यार्थे प्रतिपादयन्तो लोकवेदसाधारण्येनैव शब्दस्य प्रमाणान्तरत्वमापादयन्ति तथा दर्शयितुमारभते शब्देति[२४७] । तत्र एतत्तावदविवादमित्याह भावनेति[२४८] । कः पुनरसावत आह अन्वयेतिचि[२४९]दन्तेन । यजते पचतीत्यादावाख्यातप्रत्ययाऽन्वये भावनाऽन्वयाद्यागपाकशब्दाऽन्वये चाऽऽख्यातप्रत्यय एव भावनावचन इति ।

मतान्तरमुपन्यस्यति अन्यैरिति । धातुरेवाऽऽख्यातप्रत्ययसंनिध्यनुगृहीतशक्तिर्भावनां वक्तीति । अपरे त्वन्यतराऽभावे ऽप्यभावात्समुदायार्थतामाहुरित्याह अपरैरिति ।

---

* गिरेति २ पु. पा. ।

पाकादौ यन्न दृष्टाऽसौ भवत्यादौ* तथैव च ।
विवेकफलमन्दत्वात् पचत्यादौ यथेष्टता ॥२५०॥
सा साध्यसाधनोपायसामान्याऽर्थोऽवधारणात् ।
अन्यलभ्यं विशेषांशं यं कं चिदभिकाङ्क्षति ॥२५१॥
कामाऽवगतसाध्यत्वः स्वर्गः काङ्क्षति भावनाम् ।
तत्र संनिधियोग्यत्वात्सम्बन्धः कल्प्यते तयोः॥२५२॥
ततः सा क्लृप्तसम्बन्धा साधनांशमपेक्षते ।
धात्वर्थोऽसाधनं किं चिन्नाऽनुष्ठानं हि सिद्ध्यति ॥२५३॥

---

अन्वयव्यतिरेकाभ्यां प्रत्ययार्थत्वमुक्तं, तत्राह पाकादाविति[२५०]। यथा हि पाकादिषु सत्यपि धातौ प्रत्ययव्यतिरेके भावनाव्यतिरेकः तथाऽस्तिभवतिविद्यतिषु सत्यप्याख्यातप्रत्यये पचादिधातुव्यतिरेके भावना न प्रतीयते, अतः समुदायार्थेनेति ।

कः पुनरत्र निर्णयः, अत आह विवेकेति । न चाऽत्र विवेकेन प्रयोजनमिति । सा चेयं भावना स्वर्गकामो यजेतेत्याख्याताऽभिहिता साध्यं साधनमितिकर्त्तव्यतापर्यायं चोपायं सामान्येनाऽऽक्षिप्य तद्विशेषमन्यतोऽपेक्षतइत्याह सा साध्येति[२५१] । तथा स्वर्गोऽपि किमितिकर्मतया ऽवगतः सिद्धे कामनाभावात्साध्यतयाऽवगतो भावनामपेक्षतइत्याह कामेति[२५२] । तयोरेवमाकाङ्क्षायां संनिधियोग्यत्ववशेन मिथोऽन्वयोऽवगम्यतइत्याह तत्रेति ।

तदेवं क्लृप्तसाध्यसम्बन्धा साधनमपेक्षतइत्याह तत इति[२५३] ।

---

* भवत्यादेरिति ३ पु. पा. ।

धातुवाच्यश्च यागादिरतृतीयापरो ऽपि सन् ।
स्वभावाद्भावनासक्तः साध्यं किं चिदपेक्षते ॥२५४॥
प्रत्यासत्तिनिमित्तो ऽयं सम्बन्धः कल्प्यते ऽनयोः ।
तं च विस्पष्टमाख्यातुं यागेनेति प्रयुज्यते ॥२५५॥
यथौपगवशब्दार्थं तस्याऽपत्यमितीदृशात् ।
कथयन्ति न चैतस्मिन् षष्ठ्यन्तोपगुसम्भवः ॥२५६॥
न केवलं तृतीयैव करणत्वं नियच्छति ।
प्रमाणान्तरगम्ये ऽपि न किं चिद्विरुणद्धि सा॥२५७॥

---

कारणमाह धात्वर्थेति । अनुष्ठानं भावना, गोदोहनादीनामप्यप्रणयनाद्याश्रयभूतधात्वर्थाऽनुरागाऽपेक्षमेव साधनत्वं न स्वरूपेणेति। यागश्चाऽसत्यामपि तृतीयायां स्वभावादेव भावनया करणत्वेन सम्बद्धो भावनाद्वारेण साध्यं फलमपेक्षते, भावनया हि धात्वर्थसम्बन्धः स्वभावतः शब्दतश्चाप्यवगतः, तस्य चाऽपुरुषार्थस्य साध्यत्वेनाऽसम्भवात् साधनरूपेणाऽवतिष्ठते यागेन कुर्यादिति, तेन किं कुर्यादित्यस्ति साध्याऽपेक्षेत्याह धातुवाच्य इति[२५४]। सत्यां चाऽपेक्षायामासत्तियोग्यत्वाभ्यां स्वर्गयागयोः सम्बन्धः कल्प्यतइत्याह प्रत्यासत्तीति[२५५] । स्वभावसिद्धमेव तत्करणत्वसम्बन्धं स्पष्टीकर्तुं व्याख्यातृणां तृतीयाप्रयोग इत्याह तं चेति । अत्रैव दृष्टान्तमाह यथेति[२५६] ।

यत्तु तृतीयाऽभावान्न करणत्वमित्युक्तं, तत्राह न केवलमिति[२५७] । न हि करणत्वं तृतीयया नियतं यतस्तन्निवृत्त्या निवर्त्तते,

प्रज्ञातकरणत्वे वा धातौ सत्यपि नेष्यते ।
अप्रातिपदिकत्वेन तृतीया यागशब्दवत् ॥२५८॥
अतो या शब्दसामर्थ्यलभ्या करणता यजेः ।
केवलस्याऽप्रयोगित्वात्सा यागेनेति कथ्यते ॥२५९॥
'तथोत्पन्नकथंभावा भावनोपायमात्रके ।
उपायो ऽपि च कर्तव्य*मात्राऽऽकाङ्क्षी नियम्यते॥२६०॥
योग्यत्वसंनिधानाभ्यामन्यथाऽनुपपत्तितः' ।
स च स्ववाक्यलभ्यो वा वाक्यान्तरगतो ऽपि वा॥२६१॥

---

ततः प्रमाणान्तरेणापि करणत्वे ऽवगम्यमाने तृतीया न कं चिद्विरोधमाचरतीति ।

मा विरौत्सीत्, करणवाचिनस्तु यजेः किमिति तृतीया न भवत्यत आह प्रज्ञातेति[२५८] । यथा यागशब्दात् तृतीया भवति नैवमिहेति। ततः सूक्तं विधिशब्दसामर्थ्यसिद्धमेव करणत्वं व्याकर्तुं केवलेन यजिना धातुत्वेन तृतीयामभजमानेन तद्याकरणाऽसम्भवात्कृत्प्रत्ययस्य तृतीयान्तस्य प्रयोग इत्याह अत इति[२५९] । तदेवं लब्धसाधनसम्बन्धा भावना करणोपकारसाधनमुपायमात्रमपेक्षमाणा, प्रयाजाद्युपायश्च भाव्यमात्रापेक्षी योग्यत्वसंनिध्यपेक्षाभिर्मिथः सम्बध्येतेत्याह तथेति[२६०] सार्द्धेन । द्वेधा चाऽसावुपाय इत्याह स चेति[२६१] ।

ननु स्ववाक्यस्थितो रेवतीषु वारवन्तीयं कृत्वा यजेतेत्यादिर-

---

* वक्तव्येति का. पा. ।

प्रकृतिप्रत्ययौ यद्वदपेक्षेते परस्परम् ।
पदं पदान्तरं यद्वद्वाक्यं वाक्यान्तरं तथा ॥२६२॥
करणैः साध्यते किं चिन्नोपायरहितैः फलम् ।
प्रयाजादिविधानं च न च स्यान्निष्प्रयोजनम् ॥२६३॥
प्रयोजनान्तरात्तत्र प्रत्यासत्तेरपेक्षितः ।
फलवद्भावनांशस्थकरणानुग्रहो वरम् ॥२६४॥
एकभावनयोपात्तास्त्रयो ऽप्यंशाः परस्परम् ।
उपकार्योपकारित्वं पश्चादनुभवन्ति ते ॥२६५॥
भावना ऽपेक्षमाणा हि साधनं किं फलस्य मे ।
साधना ऽनुग्रहः को वेत्यनुस्यूतमपेक्षते ॥२६६॥

---

स्तुवाक्यवशाद्यागाङ्गं, वाक्यान्तरगतस्तु कथमत आह प्रकृतीति[२६२] । अपेक्षायां कारणमाह करणैरिति[२६३] ।

ननु विश्वजिद्वत् स्वर्गप्रयोजनवत्त्वात्कथं प्रयाजादेर्निष्प्रयोजनता, ऽत्र आह प्रयोजनान्तरादिति[२६४] । क्रतूपकारो ह्यपेक्षितः, संनिहितश्च स्वर्गो, ऽतो त्र फलवद्भावनांशत्वेनाऽवस्थितस्य करणस्याऽनुग्रह एव तेषां फलम् । एतच्च प्रकरणाऽधिकरणे वक्ष्यत इति ।

ननु भावनासम्बन्धिनामंशानां कथं परस्परसम्बन्धः, परस्परसम्बन्धे वा न भावनासम्बन्धः, स्यात् उभयसम्बन्धे वा वाक्यभेदो, ऽत आह एकेति[२६५] । करणं साध्यस्योत्पत्त्युपकारं करोति, इतिकर्त्तव्यता तु करणस्य फलजननसामर्थ्यमिति । कारणमाह भावनेति[२६६] । साध्याऽन्विता हि भावना साध्याऽनुस्यूतेनैव रूपेण सा-

आकाङ्क्षैवमविच्छेदसिद्धा शुक्लगवादिषु* ।
एकक्रियागृहीतेषु सम्बन्धश्च परस्परम् ॥२६७॥
द्रव्यद्वारेण चैतेषां विशेषणविशेष्यता ।
इतरोपकृतद्रव्यवर्त्तित्वात्तत्र कर्मणि ॥२६८॥
द्रव्यान्तरमनिच्छन्त्या क्रियया च परिग्रहात् ।
एकद्रव्याऽऽश्रयप्राप्तिरिति नाऽन्योन्यसंश्रयम् ॥२६९॥

---

धनमपेक्षते केनेदं फलं कर्त्तव्यमिति, न तु तदाकारप्रहाणेन, तथेत्थंभावमपि साधनाऽनुस्यूतेन कीदृशेन व्यापारेणेदं साधनफलजननसामर्थं स्यादिति । न च वाक्यभेदः, अंशद्वयविशिष्टाया भावनायाः फलं प्रति विधानादिति ।

भावनावच्च गामानय शुक्लामित्यादावानयनस्य जातिसम्बन्धाऽविच्छेदेनैव गुणाऽऽकाङ्क्षा, तत्सम्बन्धाऽविच्छेदेनैव जात्याकाङ्क्षा दर्शयितव्येत्याह आकाङ्क्षेति[२६७]। एवं चांशानामिव जातिगुणयोरेकक्रियाऽन्वितयोर्मिथःसम्बन्धसिद्धिरित्याह एकेति । यत्तु गोत्वशुक्लत्वयोर्न परस्पराऽनुराग इत्युक्तं, तत्राह द्रव्येति[२६८] । एतदेवोपपादयति इतरेति । यद्द्रव्यमवच्छिन्दन्ती जातिरानयनाङ्गं गुणो ऽपि तदेवाऽवच्छिन्दंस्तस्मिन् कर्मणि वर्त्ततइत्येतदेव गुणस्य जातिविशेषणत्वमिति ।

नन्वेकद्रव्यत्वे सिद्धे स्यात्तद्द्वारः परस्पराऽन्वयः, तदेव तु कथं, सम्बन्धादिति चेदुक्तमितरेतराश्रयमत आह द्रव्यान्तरमिति[२६९]। क्रिया हि प्रधानभूता गोत्वशुक्लत्वाभ्यामवरुद्धत्वादन्यजातियमन्यगुणकं च द्रव्यमनिच्छन्ती श्रुतावेव जातिगुणावेकस्मिन् द्रव्ये नियः-

---

* गवादिवदिति का. पा. ।

परस्पराऽनुरागश्च सुतरामुपकारकः ।
अर्थाच्चाऽन्यव्यवच्छेदः, सम्बन्धो ऽतो न दुष्यति॥२७०॥
तत्राऽनैकान्तिकाऽनेकवाक्यार्थोपप्लवे सति ।
अन्योन्यात्मव्यवच्छेदादेकत्र स्थाप्यते मतिः ॥२७१॥

---

च्छतीत्यरुणाधिकरणे वक्ष्यते । किं चैकद्रव्यपरिच्छेदेनैवोभयोः क्रियाऽन्वयोपपत्तावप्रमाणको ऽनेकद्रव्याक्षेप इति ।

इतश्चास्ति नियम इत्याह परस्परेति[२७०] । जातौ विनियुक्तायामस्त्यपेक्षा किंगुणकं द्रव्यमनया परिच्छेत्तव्यमिति, तथा गुणे ऽपि, तदस्यामपेक्षायां परस्परनियमादस्ति महानुपकार इति । सिद्धे च परस्पराऽनुरागे गुणान्तरजात्यन्तरव्यवच्छेदो ऽश्रुतो ऽप्यर्थादेव सिद्धः, न हि शुक्लगुणद्वारेण क्रियाऽन्वयमनुभवतो गोत्वस्य कृष्णादिसंसर्गः सम्भवतीत्याह अर्थादिति । यद्यपि च गोत्वस्वरूपं न कृष्णादिभ्यो व्यावर्त्तते तथापि येयं तद्वाक्यगता गुणान्तराऽसंपृक्तस्यैव गोत्वस्य वृत्तिरयमेवास्य कृष्णादिभ्यो व्यवच्छेद इति ।

क्रियार्थसम्बन्धादेव च पदानामपि सम्बन्धात्सिद्धमेकवाक्यत्वमित्याह सम्बन्ध इति । सिद्धे च व्यवच्छेदे यद्यपि प्रत्येकं पदार्थैरनियमेन बहवो वाक्यार्था उपप्लवन्ते तथापि परस्परव्यवच्छेदादेव सिध्यति नियतैकवाक्यार्थाऽवगतिरित्याह तत्रेति[२७१] । तथा हि, गामानय शुक्लामित्यानयतिरानयनजातिमभिधाय तद्व्यक्तिं गवाश्वशुक्लकृष्णसाधारण्येन लक्षयति, गामित्यपि गोः कर्मत्वमभिधाय तत्कर्मिकां यां कां चित् क्रियां, तथा शुक्लामिति, परस्परसमभिव्याहारात्तु तेषां यैवाऽऽनयनजातीया क्रिया धातुना लक्ष्यते तामेव गोपदं गोकर्मरूपेण प्रतिपादयति, शुक्लपदमपि तामिव शुक्लकर्म-

अतो ऽन्वयाऽतिरेकाभ्यामनुमा नेयमिष्यते* ।
एकार्थैकान्तिकत्वं तदन्यथैवाऽत्र लभ्यते ॥२७२॥
एवं पदार्थवाक्यार्थसंघातैरुपकल्पिताम् ।
विशिष्टां भावनां प्राप्य वृत्तिर्विधिनिषेधयोः ॥२७३॥
यद्यप्यन्यैरसंस्पृष्टां विधिः स्पृशति भावनाम् ।
तथाप्यशक्तितो नाऽसौ तन्मात्रे पर्यवस्यति ॥२७४॥
अनुष्ठेये हि विषये विधिः पुसां प्रवर्तकः ।
अंशत्रयेण चाऽपूर्णां नाऽनुतिष्ठति भावनाम् ॥२७५॥

---

रूपेणेति, एवं सर्वैरेकस्मिन् विशिष्टे प्रतिपादिते क्रिया ऽपि जात्यन्तराद् गुणान्तराच्च व्यवच्छिन्ना, जातिरपि क्रियान्तराद् गुणान्तराच्च, गुणो ऽपि जात्यन्तरात्क्रियान्तराच्चेति सिध्यति नियतैकवाक्यार्थावगतिरिति ।

एवं च यदुक्तम्, 'एकैकश्ये पदार्थानां वाक्यार्थे व्यभिचारिते'ति तदपि न दूषणम्, अनुमाने ह्यव्यभिचाराऽपेक्षा, अत्र तु सत्यपि व्यभिचारे पदसंनिधिलक्षणाद्वाक्यादेव प्रमाणान्तरभूतात्कल्पितेन्द्रियलिङ्गादिविलक्षणशक्तिकादव्यभिचारफलनियतैकार्थप्रतीतिः सिध्यतीति । तत्सिद्धौ किमव्यभिचारेणेत्याह अत इति[२७२] । धात्वर्थकारकाणां न साक्षाद्विधिः संभवतीत्युक्तं, तदनुमन्यामहइत्याह एवमिति[२७३] । भावनामेव विशिष्टां विदधत् प्रत्ययो ऽर्थाद् यागादीन् विदधाति न साक्षादिति ।

यस्तु प्रत्यासत्तिविशेषात्केवले भावनात्मनि पर्यवसितो विधिर्नाऽलं पश्चात्संबध्यमानान् यागादीन्विधातुमित्युक्तं, तत्राह यद्यपीति[२७४] ।

---

* अनुमाने यदिष्यते ३ पु. पा. ।

तस्मात् प्रक्रान्तरूपो ऽपि विधिस्तावत्प्रतीक्षते ।
यावद्योग्यत्वमापन्ना भावना ऽन्यानपेक्षिणी ॥२७६॥
उपसर्गनिपातानां प्रयोगनियमे सति ।
अर्थस्तदागमन्यायात् स्यात् समासपदेष्विव ॥२७७॥
वाचकद्योतकत्वं तु नाऽतीवाऽत्रोपयुज्यते ।
तद्भावाद्वाचकत्वं वा परस्याऽनुग्रहो ऽस्तु वा ॥२७८॥

---

अशक्तिमेव दर्शयति अनुष्ठेयइति[२७५]। योग्यतापि संबन्धकारणं, न चांशत्रयापरिपूर्णा भावना चेतनप्रवर्त्तनात्मकविध्यन्वययोग्येति ।

संबन्धमुपसंहरति तस्मादिति[२७६] । प्रत्यासत्तिविशेषाद्धि विधिभावनयोरन्वयेन भवितव्यम् इत्येतावत्प्रथममवगम्यते, तादृशी चाऽवस्था विधिसंस्पर्श इति विधिप्रक्रम इति चोच्यते, तथा ऽवगतभावनान्वयो ऽपि विधिरयोग्यत्वादविदधद् यावदंशत्रयपरिपूर्णा भवति तावत् प्रतीक्ष्य पश्चात्सर्वांशसंपूर्णामंशान्तराऽनपेक्षिणीं विदधाति; इत्येवं नामाख्यातसंबन्धं दर्शयित्वेदानीमुपसर्गनिपातानां दर्शयति उपसर्गेति[२७७] ।

यत्तावदुक्तं 'गवादिवच्च नैतेषां स्वतन्त्रा ऽर्थावधारणे' ति, नाऽयं दोषः, यद्यपि केवलाप्रयोगादेषामापिङ्गः प्रवया वृक्षः प्लक्षश्चेत्येवमन्यसहितानामेव प्रयोगनियमान्न केवलानामर्थाऽभिधानं तथापि सुबादिप्रत्ययवत् कुम्भकारादिनित्यसमासोत्तरपदवच्च तदागमन्यायादेवार्थवत्त्वं सिध्यति, चकारागमे हि समुच्चयो गम्यते, न ततः प्रागिति । यस्त्वेषां वाचकत्वद्योतकत्वविवादो नाऽसाविहोपयुज्यते, द्वधापि वाक्यार्थोपयोगित्वसिद्धेरित्याह वाचकेति[२७८] । तेन यथेष्टं कल्प्यतामित्याह तद्भावादिति ।

ईषदर्थादयस्तावत् साक्षान्नाम्नैव सङ्गताः ।
अप्रयुक्तक्रियाद्वारा विशेषाधानतोऽपरे ॥२७९॥
आपिङ्गः प्रवयाश्चेति द्वयस्यैतन्निदर्शनम् ।
क्व चित्प्रकृष्टतादीनां भावनोपनिपातिनाम् ॥२८०॥
इतिकर्तव्यतात्वेन प्रतिपत्तिपरिग्रहौ ।
एकार्थसमवायित्वात् कर्तृधर्मोऽपि भावनाम् ॥२८१॥
गमिष्यति, न कर्तॄणां स्वरूपे स हि कीर्त्यते ।
ये त्वन्यार्थविरुद्धार्थधातुशक्त्यवलोपिनः ॥२८२॥

---

यत्तु नैषां क्रियया नाम्ना वा संबन्धः संभवतीत्युक्तं, तत्र निपातास्तावत्केचित्साक्षात्केचिच्च प्रयुक्तक्रियाद्वारेण नाम्नो विशेषणं संभवन्तीत्याह ईषदिति[२७९] । उभयत्रोदाहरणमाह आपिङ्ग इति[२८०] । ईषत्पिङ्गो ह्यापिङ्गः, प्रगतवयाः प्रवया इति ।

क्व चिच्च प्रवयसे दाक्षिणां दद्यादभिक्रामं जुहोतीति प्रकृष्टत्वाऽभिमुखत्वादीनां भावनेतिकर्त्तव्यतात्वेनैव विधानमनुष्ठानं चेत्याह क्व चिदिति ।

यत्त्वाभिमुख्यं कर्तृधर्मो न क्रियया संवध्यतइत्युक्तं, तत्राह एकार्थेति[२८१]। न हि कर्तृरूपाऽङ्गम, अभिक्रमणमानर्थक्याद्धातुसंबन्धे च णमुलो विधानादतः क्रियाङ्गमेवैतदेकार्थसमवायसंबन्धेनेति ।

यत्तु प्रासादः प्रतिष्ठतइत्यादावन्यार्थो विरुद्धार्थश्चोपसर्गो धातोः स्वार्थशक्तिं लोपयन्तः कथं धातुना संवध्यन्तइत्युक्तं, तदनुभाष्य परिहरति ये त्विति[२८२] । नैते विशेषणं किं तु धातुभागसमा एते

तेषां तदङ्गतैवेष्टा धातुभागसमा हि ते ।
प्रशब्देनोपसृष्टस्य तिष्ठतेर्गति*शक्तता ॥२८३॥
न हि प्रशब्दवेलायां गमने जायते मतिः ।
सामान्यतः क्रियाशक्तिः क्लृप्ता धातोः पुरैव तु ॥२८४॥
विशेष एव तत्र स्यादितरस्य द्वये पुनः ।
या च शक्त्यन्तरोद्भूतिरियमेव विशेष्यता ॥२८५॥

---

शब्दान्तरं तिष्ठतेः प्रतिष्ठतिरश्वकर्णशब्दवत्समुदायशक्त्यैव गमने वर्तते, तथापि यद्भेदेनाऽन्वाख्यानं तत्प्रातिष्ठत प्रातिष्ठिपत् इत्यादावडागमः कथं नामप्रशब्दात्परतः स्यादित्येवमर्थम्, एव मभिदधातीत्यादावपि समुदायशक्तिः, तथा प्रलम्बतिरपि लम्बतेः शब्दान्तरं समानार्थं न तु लम्बतेः प्रशब्दो विशेषणमिति ।

द्योतकवादिनस्तु विशेषणत्वमेव मन्यन्ते, तदुपन्यस्यति प्रशब्देनेति[२८३] । तिष्ठतेरेव गतिरर्थः, स तु प्रोपसर्गेणैव द्योत्यतइति । कथं तिष्ठतेर्गत्यर्थता गम्यते, ऽत आह न हीति[२८४] । ननु तिष्ठतिमात्रादपि न गमने मतिर्जायते, ततः कुत एतत्तिष्ठतिवाचकः प्रशब्दो द्योतको न विपरीतम्, अत आह सामान्यत इति । धातूनां सामान्येन क्रियामात्रे शक्तिः क्लृप्तैव, तेन तिष्ठतेर्गमनाख्ये विशेषएव शक्तिकल्पनं, प्रशब्दस्य सामान्ये विशेषे चोभयत्राऽक्लृप्तैव शक्तिः कल्पनीयेति ।

भवतु द्योतकस्तथापि कथं विशेषणत्वमत आह या चेति[२८५] । नन्वियं विशेषणविधा नीलोत्पलादिष्वदृष्टा, तत्र हि सामान्यवचन-

---

* गमीति २ पु. पा. ।

न सामान्याऽपरित्यागी केवलो ऽन्यैर्विशेष्यते ।
उक्तेर्विशेषणं किं चिदुच्यमान*विशेषणम् ॥२८६॥
तेन शक्त्यपवादो ऽयं भवेदर्थोऽपवादवत् ।
तथैव ज्वलनादीनां पाकसम्बन्धितेष्यते ॥२८७॥

---

यथोत्पलशब्दस्य तदत्यागेनैव नीलशब्देन विशेषाऽवस्थामात्रं क्रियते, ऽत आह न सामान्येति[२८६] । कथमित्याह उक्तेरिति । नीलोत्पलादिवचनाऽनयोर्नाऽङ्गाऽङ्गित्वमुभयोःक्रियाङ्गत्वात्, किं तु विशेषणविशेष्यभावमात्रं, तत्र ह्युच्यमानस्योत्पलसामान्यस्य नीलशब्देन विशेषे ऽवस्थानं विशेषणं, वैश्वदेव्यामिक्षेत्यत्र तु तद्धितान्तपदाऽभिधानमेवाऽऽमिक्षापदेनाऽऽमिक्षायामवस्थाप्यते, अतो नैकविध्यमेव विशेषणस्येति ।

भवतु द्वैविध्यं, न त्विह विधाद्वयमपि संभवति, तत्र हि तद्धितान्तपदेनाऽभिधानं प्रागितरसंनिधानादनिष्पन्नं यदेव किं चित्संनिधिमुपनेष्यते तद्विशेष्यत्वेनाऽवगतमामिक्षासंनिधानात्तद्विषयं संभवति, न त्विह तिष्ठतेर्दधातेश्च प्रशब्दाऽभिशब्दाभ्यां प्रागभिधानमनिष्पन्नं विषयाऽपेक्षमास्ते, यस्य प्रशब्देनाऽभिशब्देन च विषयोपस्थानं क्रियेत, अर्थान्तरस्यैव गतिनिवृत्तेर्धारणस्य चाऽभिधानादत आह तेनेति[२८७] । यथाह्यैकविध्यमनाश्रित्य दृष्टत्वाद् द्वैविध्यमपि समाश्रितं तेनैव प्रकारेण तृतीयमपि प्रकारान्तरं शक्त्यपवादरूपमाश्रीयतां, तिष्ठतेर्हि गतिनिवृत्तिर्गतिश्च द्वावर्थौ, दधातेरपि धारणमभिधानं च, तत्राऽनुपसृष्टयोर्गतिनिवृत्तौ धारणे च शक्तिरभिव्यज्यते, प्राऽभ्युपसर्गौ तु तां शक्तिमपोह्य गतावभिधाने च शक्तिमाविर्भावयतः,

---

* उच्यमानमिति ३ पु. पा.

इतिकर्तव्यतांशत्वात् पाके वा तत्फले ऽपि वा ।
ओदने साध्यमाने हि पाकः करणमिष्यते ॥२८८॥
अकृतः सो ऽपि नास्तीति पुनः करणवाञ्छनम् ।
करणं ज्वलनादीनि तस्य काष्ठादि वा तथा ॥२८९॥
इतिकर्त्तव्यताऽऽकाङ्क्षा यावत्करणसंश्रया ।
इतिकर्त्तव्यताप्यन्यदपेक्ष्य करणं भवेत् ॥२९०॥

---

सो ऽयं द्योतकवादिनामभिप्रायो, वाचकपक्षे तु समुदायशक्तिरेवेति।

यत्तु कर्मणः कर्मसाध्यत्वाऽभावान्न ज्वलनादिद्वारेण काष्ठादेः पाकाऽन्वय इत्युक्तं, तत्राह तथैवेति । अनियमे कारणमाह ओदनइति[२८८] । द्वे ह्यत्र भावने, तत्र पाककरणिकौदनभावना तस्यां करणभूतस्य पाकस्य स्वयमनिष्पन्नस्य निष्पत्त्युपकारं कुर्वत् ज्वलनमितिकर्त्तव्यतेति ।

ननु पाके ज्वलनस्यैवाऽऽनन्तर्यात्करणत्वं युक्तं, तत्कथमितिकर्त्तव्यतेत्युच्यते, ऽत आह करणमिति[२८९] । सत्यमेवं विवक्षावशात्काष्ठानामपि सम्भवत्येव, तथा च युक्तं यज्ज्वलनमितिकर्त्तव्यतेति। नन्वलब्धात्मनः पाकस्याऽऽत्मलाभाय युक्ता इतिकर्त्तव्यतापेक्षा, काष्ठानां तु लब्धात्मनां कथमत आह इतिकर्त्तव्यतेति[२९०] । लब्धात्मनामपि स्वकार्यजननायाऽस्त्येवाऽनुग्रहाऽपेक्षेति ।

ननु चौदनभावनायां पाककरणिकायां काष्ठानामितिकर्त्तव्यतात्वं, तत्कथमतेषां करणत्वमत आह इतिकर्त्तव्यतेति । एकस्याऽपेक्षाभेदेन द्वैरूप्यमविरुद्धमिति । ननु ज्वलनं कुर्वतां कथं पाके सा-

ज्वलनादिनिमित्ता ऽतः काष्ठादेः पाकसङ्गतिः ।
कर्मणः कर्मसाध्यत्वं नाऽस्मत्पक्षे विरुध्यते ॥२९१॥
अनात्मसमवेतस्य निमित्तं कर्म हीष्यते ।
ज्वलनादिस्वरूपं च न काष्ठादिभिरीप्सितम् ॥२९२॥
पाकप्रयोजितानां हि तद्वृत्ति*र्नान्तरीयकी ।
कर्तृत्वे ऽपि च काष्ठादेः† पाके स्यात्करणादिता ॥२९३॥

---

अनत्वमत आह ज्वलनादीति[२९१] । साधनसाधनमपि साधनमेव, तथा लोके दर्शनादिति भावः । ननु करणस्य पाकस्य कथं करणैरेव काष्ठैः सम्बन्धः, तर्हि सम्बन्ध्यमानः कर्म स्यात्, ततो द्वैरूप्याद्वाक्यभेदः स्यात्, नैष दोषः, दशापवित्रेण ग्रहं संमार्ष्टीतिवन्मत्वर्थलक्षणाश्रयणादिति ।

यत्तु न कर्मणः कर्मसाध्यत्वमित्युक्तं, तत्राह कर्मण इति । यदेतदस्मत्पक्षे कर्मणः पाकादेर्ज्वलनादिकर्मसाध्यत्वमुच्यते नैतत्किंश्चिद्विरुध्यतइति । कथमित्याह अनात्मेति[२९२] । न ह्यस्माभिः कर्मणः कर्मसमवायित्वं प्रोच्यते, यतः पदार्थचिन्तकैर्विरोधः स्यात्, निमित्तमात्रत्वं तु तेषामप्यभिमतमेवेति ।

नन्वस्तु ज्वलनद्वारेण पाकस्य काष्ठसाध्यत्वं, ज्वलनमपि तु साक्षात्साध्यं किमिति तत्साध्यतया न व्यपदिश्यते, ऽत आह ज्वलनादीति । ईप्सितं साध्यमिति । यदि ज्वलनद्वारं काष्ठानां पाकसाधनत्वं तत्रैषां कर्तृत्वात्पाके ऽपि कर्तृत्वमेव स्यान्न करणत्वमत आह कर्तृत्वइति[२९३] । कथं कर्तुः सतः करणशक्त्याविर्भाव इति

---

* निवृत्तिरिति २ पु. पा. । † तत्रैषामिति का. पा. ।

आविर्भूताऽन्यशक्तित्वादेकत्वे चाप्यपेक्षया ।
ज्वलनादिषु सर्वेषां स्वातन्त्र्यात् कर्तृतेष्यते ॥२९४॥
तत्स्वातन्त्र्याऽवगत्यैव प्रयुङ्क्ते हि प्रयोजकः ।
नियुक्तानां तु तेनैषां करणत्वादिवाच्यता ॥२९५॥
उद्भूतदेवदत्तादिव्यापाराऽभिभवाद्भवेत् ।
यत्र त्वभिभवस्तेषां नैकेनापि विवक्ष्यते ॥२९६॥

---

चेदपेक्षाभेदादित्याह आविर्भूतेति[२९४] । शक्तिद्वयमेवाऽऽपेक्षिकं द- र्शयति ज्वलनादिष्विति ।

स्वातन्त्र्यं कर्तृत्वं, व्यापारसमवायित्वं च स्वातन्त्र्यं, ज्वलनं च काष्ठेषु समवेतमिति तत्र तेषां कर्तृत्वम्, एवं स्थाल्यादीनां सम्भर- णादिष्विति । तेषां च स्वव्यापारेषु स्वातन्त्र्यं ज्ञात्वा प्रयोजको देव- दत्तस्तानि स्वव्यापारेषु नियुङ्क्ते, नियुक्तानां च करणादिरूपकारक- वैचित्र्यं भवतीत्याह तत्स्वातन्त्र्येति[२९५] ।

कथमित्याह उद्भूतेति[२९६] । देवदत्तव्यापारमेव ह्याख्यातमुद्भूत- रूपमुपादत्ते न व्यापारान्तराणि, तेन देवदत्तस्यैवाऽऽख्यातोपात्तव्यापा- रसमवायात्कर्तृत्वमितरेषां त्वनुपात्ताऽभिभूतव्यापाराणां कर्तृव्यापा- पारगोचराणां यथायथं करणत्वादि; यद्यनुपात्तं ज्वलनादि कथं तद्व्या- रः काष्ठानां पाके सम्बन्धः शब्देनोच्यते, को दोषः, न हि यद्यदस्ति तत्सर्वं शब्देनाऽभिधातव्यम्, अतो ज्वलननिमित्तो यः काष्ठानां पा- कसम्बन्धस्तस्मिन् शब्देनाऽनभिधीयमानेऽपि न किंचिदनुपपन्नं, न ह्यनाहृतानि पाकं न साधयन्तीत्याहरणमपि तेषां शब्देनाऽभिधातव्य- मिति ।

काष्ठादीनि पचन्तीति प्रयोगस्तत्र जायते ।
एकशब्दगृहीतेऽपि गुणप्राधान्यमिष्यते ॥२९७॥
आख्यातप्रत्ययोपात्तभावनाकर्तृसंख्यवत् ।
तस्माद् यस्य विवक्ष्येत प्रधानं धातुभिः क्रिया॥२९८॥
स कर्ता गुणभूताऽन्यव्यापारे करणादिता ।
इतिकर्तव्यतांशेन सर्वेषां तेन सङ्गतिः ॥२९९॥

---

कथं तर्हि काष्ठानि पचन्तीति प्रयोगो, ऽत आह यत्र त्विति । आख्यातोपात्तभावनासमवायित्वं कर्तृत्वम, आख्यातं च क चिद्धात्वर्थसमानाश्रयं व्यापारमुपादत्ते, क चिदनियतं, पचेस्तु विक्लित्यादिपर्यायादुत्पन्नः प्रत्ययः प्रायेण देवदत्तव्यापारं विक्लित्यादिविषयमुपादत्ते, तदा च स एव कर्त्ता, काष्ठादीनां तु करणादित्वं, कदा चित्तु समस्तमेव काष्ठादिव्यापारं, तदा च सर्वेषामाख्याताऽभिहितोद्भूतव्यापाराणां केन चिदप्यनभिभवात्कर्तृत्वं भवतीति ।

तदेवमाख्यातोपादानाऽनुपादानाभ्यां कारकैक्यं कारकवैचित्र्यं च समर्थितम, इदानीं तु सर्वव्यापाराणामुपादानमभ्युपगम्याह एकेति[२९७] । यदा हि यस्य व्यापारः प्राधान्येनोपादीयते स कर्त्तेति कर्तृलक्षणं न व्यापारोपादानमात्रं, संभवति चैकशब्दोपात्तस्याऽपि गुणप्राधान्यं भावनाकर्तृसंख्यवदिति । एतदेवोपसंहरति तस्मादिति[२९८] । धातुग्रहणं वैयाकरणाऽभिप्रायं, स्वमते त्वाख्यातेनेति वक्तव्यं, सर्वेषां तु समप्राधान्ये काष्ठादीनि पचन्तीति प्रयोग इति । प्रकरणार्थमुपसंहरति इतिकर्त्तव्यतेति[२९९] ।

अवान्तरक्रियायोगात् प्रधानक्रियया सह।

विकल्पप्रतिषेधादेर्विरोधो न च वस्तुना ॥३००॥

अभावमेव नञ् प्राह वर्तमानादिकालिकम्।

नामधात्वर्थयोगी च निषेधोऽन्यार्थभाग् भवेत् ॥३०१॥

तत्र वस्त्वन्तरोन्मुक्तं वस्त्वेवाऽनुगुणं च तत्।

आख्यातप्रत्ययैर्योगे निवृत्त्यर्थः प्रतीयते ॥३०२॥

तत्र चाऽज्ञातसंदिग्ध*विपरीताऽर्थवारणम्।

---

यत्तु प्रतिषेधविकल्पयोर्विरोधादसंबन्ध इत्युक्तं, तत्राह विकल्पेति[३००]। कथमित्याह अभावमिति[३०१]।

यदेतदुक्तं, 'स्वश्रुतेः प्रथमं वस्तु सद्भावेन निरूपितं, कथं नञादिभिः पश्चादभावमुपनीयत' इति, तद् यदि कारकहेत्वभिप्रायं ततो न युक्तं, न हि नञा वस्त्वभावः क्रियते यतस्तस्य वस्तुना विरोधः स्यात्, किं तु विद्यमानमेवाऽभावं वर्त्तमानमतीतमनागतं वा नञ् प्रवीतीति। विरोधाऽभावमेव विवृणोति नामेति। त्रेधा हि नञो वृत्तिः पर्युदासाऽभावप्रतिषेधैः, तद्यत्राऽब्राह्मणाऽनीक्षणादौ नामधात्वर्थाभ्यां युज्यते तत्र ब्राह्मणेक्षणवस्त्वन्तरपर्युदस्तं क्षत्रियाऽनीक्षणसंकल्पाख्यं वस्त्वेव नञा प्रतिपाद्यते, तच्च वस्त्वन्तरपर्युदसनं वस्त्वन्तरस्याऽनुगुणं, सर्ववस्तूनामितरेतराऽभावात्मकत्वादिति।

यत्राऽऽख्यातसंयोगे नास्ति घटो नाऽऽसीन्न भविष्यतीति वा निवृत्तिः प्रतीयते तत्रापि न वस्त्वभावो नञा क्रियते, किं त्वज्ञानसंशयविपर्ययमात्रनिवारणमित्याह आख्यातेति[३०२]। संदेहनिवारणं

---

* संबन्धेति का. पा.।

अस्ति नास्तीति सन्देहे पाक्षिकाऽस्तित्वबोधनम्॥३०३॥
निवर्त्यते नञा, यद्वा नास्तितैवोच्यते सती ।
अव्युत्पन्नस्य तत्रैव जायते नास्तितामतिः ॥३०४॥
अस्तित्वमानिनः सैव वार्यते विपरीतधीः ।
अपूर्वाऽभावविज्ञानविरोधात् स्वयमेव तु ॥३०५॥
निवर्तते ऽस्तितावुद्धिर्मृगतृष्णादिबुद्धिवत् ।
तच्चैतदनिषेधे ऽपि स्थाण्वादावीदृगेव नः ॥३०६॥
तत्राप्यज्ञातसंदिग्धविपरीताऽर्थबाधनात् ।
'अभावस्य च वस्तुत्वे पुरस्तात्प्रतिपादिते ॥३०७॥

---

विवृणोति अस्तीति[३०३] । यद्वा तन्निवृत्तिरपि न साक्षात्क्रियते किंतु नास्तित्वे कथिते तज्ज्ञानविरोधादस्तिताज्ञानं स्वयमेव निवर्तत इत्याह यद्वेति[३०४] । अज्ञानविपर्ययनिवारणं विवृणोति अव्युत्पन्नस्येति । तत्रेति, नास्तितायामुक्तायामित्यर्थः । कथं नास्तितायामुक्तायां विपर्ययस्य निवृत्तिरत आह अपूर्वेति[३०५] ।

तच्चैतदज्ञानादिनिवारणं प्रमाणान्तरे ऽपि दृष्टमेवाऽतो न कश्चिन्नञो दोष इत्याह तच्चैतदिति[३०६] । स्थाणुप्रत्यक्षेण हि तद्विषयमज्ञानं पुरुषसंदेहविपर्ययौ च निवार्येते इति ।

यदि त्वसत्यपि वस्तुविरोधे ऽनर्थकत्वान्नञो न शब्दान्तरसमभिव्याहारो ऽवकल्पत इत्युच्यते, ऽत आह अभावस्येति[३०७] पादत्रयेण। वस्तुत्वे वा ऽभावस्य तदभिधायिनो नञो घटादिशब्दवन्नाऽऽनर्थक्यमिति । स्यान्मतं, प्राप्तिपूर्वकः प्रतिषेधः, तद्यदि घटस्य सत्ता

घटादितुल्यता तस्य *प्रतिषेधो न चाप्ययम् ।
विधायकैरसंयुक्तो न हि नञ् प्रतिषेधकः ॥३०८॥
अभावकथनं ह्येतन्नाऽवश्यं प्राप्तिपूर्वकम् ।
न च शब्देन सद्भावस्तस्य चाऽर्थस्य बोधितः ॥३०९॥
अस्तित्वाद्यनपेक्षं हि सामान्यं तेन गम्यते ।
अस्तिशब्दप्रयोगोऽपि तेनैवाऽत्रोपपद्यते ॥३१०॥
जातेरस्तित्वनास्तित्वे न च कश्चिद्विवक्षति ।
नित्यत्वाल्लक्ष्यमाणाया व्यक्तेस्ते हि विशेषणे ॥३११॥

---

प्राप्ता कथं प्रतिषिध्यते, न हि विद्यमानस्याऽप्यविद्यमानता संभवतीत्यत आह प्रतिषेध इति[३०८] । कथमित्याह विधायकैरिति ।

ननु समानं प्राप्तिपूर्वकत्वमभावे, ऽत आह अभावेति[३०९] । तेनाऽप्राप्तस्यैव घटस्य यथाऽवस्थिताऽभावकथनं नाऽनुपपन्नमिति । ननु सद्भाववाचिना घटशब्देनाऽभाववाचिनो नञः कथं समभिव्याहारः, न हि विरुद्धार्थयोः समभिव्याहारः सम्भवति, अस्तिनास्तिशब्दयोरिवाऽत आह न चेति ।

स्यादेवं यदि घटशब्देन घटस्य सत्त्वं बोधितं स्यात्, स तु सदसत्त्वसाधारणं घटस्वरूपमात्रमभिधत्ते, तत्स्वरूपं हि प्रादेशिकत्वादनित्यत्वाच्च कचित्कदा चिच्च सत् कचित्कदा चिच्चाऽसदिति । साधारणं सामान्यमिति, सदसत्त्वसाधारणमित्यर्थः । अत एव घटोऽस्तीत्यस्तिशब्दप्रयोगोपपत्तिः, अन्यथा पौनरुक्त्यादित्याह अस्तीति[३१०] ।

ननु जातिः शब्दार्थः, सा च सर्वदाऽस्त्येवेति कथं सदसत्त्वसाधारण्यमत आह जातेरिति[३११] । यतश्चाऽश्रुताया व्यक्तेर्विशेषणं ना-

---

* घटादितुल्यतैव स्यादिति का. पा. ।

तेनात्र न विरोधित्वं श्रुत्या पूर्वोक्तया नञः ।
'यत्राप्यस्तीत्युपादाय प्रयुज्येरन्नञादयः ॥३१२॥
तत्र तस्याऽपवादत्वात्पूर्वज्ञानोपमर्दनम् ।
अस्तित्वं वा सदेवात्र स्मर्यते पूर्वलक्षितम् ॥३१३॥
अभावोत्तरकालं स्याद्विशेषे तद्विवक्षिते' ।

---

स्तीति न श्रुताया जातेरतो ऽपि नञो न घटश्रुत्या विरोध इत्याह तेनेति ।

यत्र तर्हि सत्तामपि शब्देनैवोपादाय पश्चान्नञ् प्रयुज्यते ऽस्ति घटो नास्तीति, तत्र विरोधः स्यादित्यत आह यत्रापीति [३१२] द्वयेन। एवंविधे ऽपि हि प्रयोगे विवक्षात्रयं सम्भवति, घटो नास्तीति घटसत्ता प्रतिपाद्यते, नास्तीति च नास्तित्वं, तत्र च नास्त्येवैकवाक्यत्वं, वाक्यद्वयमेवैतदेकेन बोधितं सत्त्वमितरेणोपमृद्यते, सम्भवति चैकस्य ज्ञानस्याऽपवादकेन ज्ञानान्तरेणोपमर्दः, रजतमिदं न रजतमितिवत्, तस्मादविरोधः ।

अथ वा भ्रान्तिप्रतिपन्नसत्त्वाऽनुवादेन तदुपमर्देनाऽसत्त्वकथनमस्तीत्यवगतो यो घटः स नास्तीति । तथा च नास्ति विरोधः । न हि भ्रान्तिप्रतिपन्नेन सत्त्वेन पारमार्थिकमसत्त्वं विरुध्यते, तदिहाऽर्थद्वये ऽपि तत्र तस्याऽपवादत्वादित्येतद्व्याख्येयम् ।

यद्वा कालभेदविवक्षा, ऽस्तित्वेन प्रागवस्थितो यो घटः सो ऽधुना नास्तीति । एवं पूर्वकाललक्षितमस्तित्वम् अस्तिशब्देन स्मार्यते, तच्च स्मारितं नास्तीत्यनेनाऽभावोत्तरकालं भवति, भाव इतिकर्त्तरि रूपम्, उत्तरकालः सम्बन्धितया यस्याऽस्तित्वस्य न विद्यते तदविद्यमा-

विधिना युज्यते यत्र न हन्यान्न पिबेदिति ॥३१४॥
तत्राऽभावार्थता नैव स्वयं पुंसो रुणद्धि हि ।
'अन्यथैव प्रवर्त्तन्ते भावाऽभावधियो ऽपराः ॥३१५॥

---

नोत्तरकालमित्युच्यते। विशेषे तद्विवक्षित इति, तत्खलु स्मारितमस्तित्वं कालविशेषे विवक्षिते सत्यभावोत्तरकालं भवतीत्यन्वयः। कालभेदाच्च सदसत्त्वयोरविरोध इति ।

विधियोगिनस्तर्हि प्रतिषेधवृत्तेरस्ति विरोधः, प्राप्तिपूर्वको हि प्रतिषेधस्तद्यदि प्रतिषिद्धकारिणः प्राणहननं वा रागादिना प्राप्तं कथं तस्याऽभावः कथ्यते, तस्याऽनुष्ठितस्याऽवश्यंभावी भावः कथं तस्याप्यभावः शक्यते वक्तुम्। यदि तु नाऽनुष्ठास्यते ततः प्राप्त्यभावात्प्रतिषेधाऽनुपपत्तिरिति । सेयमुभयतस्पाशा रज्जुरत आह विधिनेति[३१४]। किमिदमभावार्थता नेति यथावस्थिताऽभावकथनमात्रेण चरितार्थो न भवतीत्यर्थः, किमपरमभ्यधिकं करोति स्वयमेव पुमांसं केशेषु गृहीत्वा चिकीर्षिताद्व्यापारान्निरुन्धन्नभावं व्यवस्थापयति, यदि हि न पास्यते न हनिष्यतइतिवदभावकथनमात्रं कुर्यात्ततो रागादिना पास्यमानस्याप्यपास्यमानत्वं वदन्नयथार्थवादी नञ् स्यात्स तु पुमांसं निरुन्धन् पानाद्यभावमेवाऽऽयुष्मन्तं व्यवस्थापयति संभवति च पानादौ पुंसो वैराग्यजननेन तदभावाऽवस्थापनमित्यविरोधः।

एतदेव सिद्धार्थविषयबुद्ध्यन्तरवैधर्म्येण विधिदृष्टान्तेन चोपपादयति अन्यथेति[३१५] द्वयेन। याः खलु विधिनिषेधाभ्यामन्याः शब्दोत्थाः प्रमाणान्तरोत्था वा ऽभावबुद्धयः, यथा ऽपाक्षीत् नाऽपाक्षीत् पचति न पचति पक्ष्यति न पक्ष्यति अस्ति नास्तीत्यादयः; ता

व्यवस्थितबहिर्वस्तुपरिच्छेदफलात्मिकाः ।
अन्यथाऽनागतोत्पाद्यभावप्रेरणवारिका ॥३१६॥
अन्तःसंकल्पमूलात्मा वृत्तिर्विधिनिषेधयोः' ।
विकल्पो ऽप्यनयोरेव विषयेषु प्रवर्त्तते ॥३१७॥

---

यथावस्थितभावाऽभावात्स्वार्थपरिच्छेदमात्रं कुर्वन्तीत्यतः तत्सद्-सत्त्ववशेन सत्यमिथ्यात्वं भजन्ते, विधिनिषेधयोस्त्वन्यादृशी वृत्तिः अनागते ऽनुत्पन्ने उत्पाद्ये उत्पादनयोग्ये भावे व्यापारे प्रेरिका वारिका च, किं वायूदकादिवत्, यद्येवं कारकहेतुत्वादनयोः प्रामाण्यं न स्यात्स रेव न वायूदकादिवद्वृत्तिः किं त्वन्तःसंकल्पमूलात्मा यथा विधिर्वि-धेयस्य समीहितसाधनतायां प्रमाणीभवन् पुरुषस्य तद्विषयाऽनुष्ठान-संकल्पं जनयित्वा पुरुषेण व्यापारं कारयन्व्यापारस्य कारकहेतुर्भ-वति तथा निषेधो ऽपि निषिद्धस्याऽनिष्टसाधनतां प्रमापयंस्तद्विष-याऽननुष्ठानसंकल्पजननेन तदभावं व्यवस्थापयति, निषेधेषु यदि रागादिप्राप्तं विध्यर्थं कर्त्तव्यताख्यं लिङा ऽनूद्य नञा तन्निषेधनं यदि वा नञर्थस्य निषेधस्य वर्जनस्य लिङा विधिः, द्वेधा ऽपि व्यापा-रस्याऽनिष्टसाधनत्वकल्पनात्संभवत्यननुष्ठानसंकल्पजननेन निवारण-मित्यविरोधः ।

विकल्पस्येदानीमविरोधं दर्शयति विकल्प इति[३१७] । विधि-निषेधयोर्विषये ऽनागतोत्पाद्ये तावद्विकल्पो भवन् प्रेरणेन वारणेन वा वर्तते, अतस्तद्वदेवाऽविरोध इति । ननु विधेः प्रेरणमात्रे निषेधस्य निवारणमात्रे वृत्तिरिति स्यादविरोधः, विकल्पस्त्वेक एव प्रेरणं नि-वारणं च कुर्वन् आत्मनैवाऽऽत्मानं विरुध्यात्, अर्थद्वयकरणाच्च वाक्य-भेदप्रसङ्गः, कथं चाऽनुष्ठानमननुष्ठानं च शक्यं प्रतिपत्तुमत आह

प्राप्तेषु प्रतिषेधार्थमप्राप्तेषु विधित्सया* ।
युगपच्च विरुद्धार्थप्रतिपत्तेरसम्भवः ॥३१८॥
पर्यायेण कदा चित्तु का चिद् वृत्तिर्भविष्यति ।
प्राप्ताऽप्राप्तविकल्पस्तु नैवेष्टो लोकवेदयोः ॥३१९॥
'न विकल्पाऽर्थवाची तु वाशब्दो विषयान्तरे ।
स्थाणुर्वा पुरुषो वेति याति तिष्ठति वेत्ययम् ॥३२०॥
सन्देहकथनार्थः† स्यान्न हि वस्तु विकल्पते'‡ ।
विषये बाह्यएवैवं प्रतिषेधादिसंभवः ॥३२१॥

---

प्राप्तेष्विति[३१८] । दीर्घादिति नित्यतुकि प्राप्ते पदान्ताद्वेति विकल्पः पाक्षिकनिषेधार्थः । अप्राप्तविषयस्त्वरितो वेत्यादिविकल्पः पाक्षिकविध्यर्थ इति । तथापि किमित्याह युगपदिति । सकृदुभयकरणे विरोधो वाक्यभेदश्च स्यात्, विषयभेदेन तु कदा चित्प्रेरणे कदा चिच्च निवारणे, को विरोधः को वा वाक्यभेदः, तथा ऽनुष्ठानमननुष्ठानं च युगपदशक्यं पर्यायेण शक्यमेवेति । प्राप्तविषयस्तु विकल्पो न क चिदस्तीत्याह प्राप्तेति[३१९] । भवत्वेवमनुष्ठेयविषये विकल्पस्याऽविरोधः, सिद्धे तु स्थाण्वादौ व्यवस्थितैकस्वरूपे कथमविरोधो, ऽत आह न विकल्पेति[३२०] सार्द्धेन ।

यत्तु बाह्यार्थवादिनामयं विरोधो न विज्ञानवादिनामित्युक्तं, तदपि विपरीतमित्याह विषयइति[३२१]। यदिदमाख्यातयोगिना नञा भ्रान्तिनिमित्तकाऽस्तिताज्ञानस्य कर्त्तव्यताज्ञानस्य च बाधनमुक्तं

---

* तया सहेति ३ पु. पा. ।

† कथनार्थमिति ३ पु. पा. । ‡ विकल्प्यते इति ३ पु. पा. ।

न हि तत्संभवः कश्चिद् ज्ञाने स्वरसभाङ्गिनि ।
ज्ञानं यत्तावदुत्पन्नं नाऽनुत्पन्नं तदिष्यते ॥३२२॥
विनाशे ऽपि समानत्वं सत्यमिथ्याऽवबोधयोः ।
बाह्यार्थवादिनस्त्वर्थे यज्ज्ञानं* जायते ऽन्यथा ॥३२३॥
तन्मिथ्यात्वोपसंख्यानात् पूर्वबाधादिसंभवः ।
तत्रापि तु न तद्रूपं बाध्यते न च बोध्यते ॥३२४॥

---

तदुभयमपि बाह्यार्थवादिनामिति । कथमित्याह ज्ञानमिति[३२२] । न ह्युत्पन्नस्याऽस्तिताज्ञानस्य कर्त्तव्यताज्ञानस्य च तत्राऽनुत्पत्तिः शक्यते वक्तुमिति । विनाशः क्रियतइति चेत्, तत्राह विनाशे ऽपीति[३२३]। विनाशे हि बाध्यं सत्यज्ञानस्यापि बाध्यता स्यादिति । मत्पक्षे तु संभवति बाधनमित्याह बाह्यार्थेति । मिथ्यात्वमयथार्थत्वमिति । नन्वेवमपि कथं बाधवाचोयुक्तिः, न ह्यत्र किं चिद्बाध्यं पश्यामो, ऽत आह तत्रापीति[३२४] । अत्र तावदिदमेव वक्तव्यम्, अयथार्थत्वस्थापनमेव बाधो, न हि निवर्त्तनमेव बाध इति नियम इति । अथाप्यवश्यं निवर्त्तनेन भवितव्यं तथापि न विज्ञानरूपस्य पूर्वस्योत्तरेण बाधनं बोधनं वा क्रियते, बोधनग्रहणं दृष्टान्तार्थं किं त्वर्थहानादिस्वरूपफलहेतुत्वं पूर्वस्योत्तरेण बाध्यतइति ।

ननु बाह्यस्य वाक्यार्थत्वे तस्यैकत्वादनेकधा प्रतिभानं नोपपद्यते, कस्य चिद्धि स्वर्गकामो यागं कुर्यादिति प्रतिभानं जायते, कस्य चिद्यागेनेति; प्रतिभा त्वेकस्मादपि वाक्याद्वासनासहायतया तथा

---

* तज्ज्ञान मिति ३ पु. पा. ।

अर्थज्ञानादि*रूपात्तु† फलतो विप्रयुज्यते ।
प्रतिभा ऽनेकधा पुंसां यद्यप्यर्थेषु जायते ॥३२५॥
तथापि बाह्य एवार्थस्तस्य वाक्यस्य चेष्यते ।
वाक्यप्रयोजनत्वेन जन्यत्वेनाथ वा यदि ॥३२६॥
उच्यते प्रतिभा ऽप्यर्थो न नः किं चिद्विरुध्यते ।
शब्दाद्युत्थापितैर्ज्ञानैरात्मांशग्रहणाऽक्षमैः ॥३२७॥
यद्बाह्यमाप्यते वस्तु स त्वर्थः पारमार्थिकः ।
प्रत्यक्षव्यतिरिक्तं तु विज्ञानमुपवर्णितम् ॥३२८॥
त्रिकालविषयं यस्मादसंनिधिरदूषणम् ।
अनेकाऽऽकारता या ऽपि शूरभीरुधियं प्रति ॥३२९॥

---

जायतइति युक्तमत आह प्रतिभेति[३२५] । तस्याः प्रतिभाया न्याया-ऽपरिज्ञानेन बहुधा ऽपि जायमानाया बाह्यविषयत्वं शून्यवादे साधित-मेवेति । एतदेव दर्शयति वाक्येति[३२६] । शब्देनाऽक्षादिभिर्वोत्थापि-तं ज्ञानमात्मांशग्रहणाक्षमं बाह्यस्यैव तु प्रापकमित्याह शब्दादी-ति[३२७] ।

यदि बाह्यो वाक्यार्थः कथमसन्निहितेष्वतीतेष्वनागतेषु वाक्येषु वाक्याद् ज्ञानं जायते, ऽत आह प्रत्यक्षेति[३२८] । निरालम्बनवादे व-र्णितमिद'मेष प्रत्यक्षधर्मश्चे'त्यत्रोति । बाह्यस्य प्रमेयत्वे तस्य नियतस्व-भावत्वाद् यदिदमर्जुनादिचरित्रश्रवणं शूराणां हर्षजननं भीरूणां च

---

* हानादीति का. पु. २ पु. पा. ।

† रूपात्तीति २ पु. पा. ।

वासनाऽनुग्रहात् सोक्ता कुणपादिमतेरिव ।
भावनैव च वाक्यार्थः सर्वत्राऽऽख्यातवत्तया ॥३३०॥
अनेकगुणजात्यादिकारकार्थाऽनुरञ्जिता ।
एकयैव तु बुद्ध्या ऽसौ गृह्यते चित्ररूपया ॥३३१॥
पदार्थाऽऽहितसंस्कारचित्रपिण्डप्रसूतया ।
पदार्थपदबुद्धीनां संसर्गस्तदपेक्षया ॥३३२॥

---

भयजननं तन्नोपपद्यते, ऽत आह अनेकेति[३२९]। तस्मान्न प्रतिभा वाक्यार्थ इति ।

कस्तर्हि वाक्यार्थः, न हि बाह्यो वाक्यार्थः, पदार्थेभ्यो ऽन्यस्य तस्याऽनिरूपणादत आह भावनेति[३३०] । शुक्लो गौरित्यादिषु आख्याताऽभावात्कथं भावनाया वाक्यार्थत्वमत आह सर्वत्रेति । तत्राख्यातमध्याह्रियते, अन्यथा वाक्यस्याऽपरिपूर्णत्वादिति । ननु प्रत्ययमात्रस्यार्थो भावना, सा कथमनेकपदार्थाऽङ्कितो वाक्यार्थः स्यादत आह अनेकेति[३३१] । पदार्थान्तराऽनुरक्तरूपेणाऽसौ वाक्यार्थः, न स्वरूपमात्रेण, अतः पदार्था एव पदार्थान्तरान्वयाऽवस्थाभेदभिन्ना वाक्यार्थः, न त्वतो ऽन्यो ऽनन्यो वा, तादृशी च वाक्येनैव प्रतिपाद्यतइति युक्तं वाक्यार्थत्वमिति ।

कया पुनर्बुद्ध्या भावना तादृशी गृह्यते, नाऽगृह्यमाणाया वाक्यार्थत्वं सम्भवति, अत आह एकयेति । ननु तादृशी बुद्धिर्वाक्येन न जन्यते वाक्यस्याऽवाचकत्वात्, पदार्थतद्बुद्धिभिश्चैकैकपदार्थविशिष्टभावनाबुद्धिरेव प्रत्येकं जन्यते, न च क्रमवर्त्तिनां साहित्यं सम्भवतीत्युक्तम, 'अत एव विशिष्टा धीस्ताभिर्नैकोपजन्यत'इत्यत्रा ऽत ह पदार्थेति[३३२] । प्रत्येकं पदजनितपदार्थबुद्धिजन्यविचित्रसंस्कारसमू-

पदव्यवधिना चैषां नाऽसंसर्गो भविष्यति ।
तुल्यकक्षो ह्यसम्बन्धी व्यवधातेति* कीर्त्यते ॥३३३॥
अङ्गत्वात्तु पदैर्न स्यादङ्गिव्यवधिकल्पना ।
एकस्मिंश्च गृहीतेऽर्थे सोपायोऽन्योऽप्यपेक्ष्यते ॥३३४॥
अपेक्षया च सर्वोऽसौ सम्बन्धं प्रतिपद्यते† ।
पदानामपि सम्बन्ध एवं वाक्येषु सिद्ध्यति ॥३३५॥

---

ह्वजन्यायां स्मृतावेकस्या युगपत्संनिहिताः सर्वे पदार्थाः सर्वविशेषणविशिष्टभावनाबुद्धिं जनयन्ति, सम्भवति च क्रमेणाऽप्यवगतानां युगपत्स्मरणमिति स्फोटे वर्णितमिति ।

एवं चैककार्यनिबन्धनः संसर्गः पदार्थानामुपपन्न इत्याह पदार्थेति । ननु च न पदव्यवहितानां पदार्थानां मिथः संसर्गस्तदभावे च तन्निबन्धनः पदसंसर्गोऽपि नाऽवकल्पेतैवाऽत आह पदेति[३३३] । कथमित्याह तुल्यकक्ष इति । पदानि न पदार्थैस्तुल्यकक्षाणि, यतस्तैरसम्बन्धिभिः पदार्था व्यवधीयेरन्, पदार्थानामङ्गत्वात्तेषां, तदाह अङ्गत्वादिति[३३४] । सत्यप्यङ्गत्वे कथं न व्यवधानमत आह एकस्मिन्निति । एकस्मिन् खलु पदार्थे स्वोपायभूतपदसहिते गृहीते परोऽपि सोपाय एवाऽपेक्ष्यतइति । तथापि किमित्याह अपेक्षयेति[३३५] । तेनाऽपेक्षितपदार्थान्तर्गस्य पदस्य नाऽसम्बन्धत्वं व्य-

---

* तुल्यकक्षो ह्यसंबन्धी व्यवधा नेतीति का. पा. ।
† संबन्धः प्रतिपाद्यते इति २ पु. पा. ।

